Digitized by Arya Samaj Foundation Chennai and eGangotri

रत्नभारतीग्रन्थमालायाः दशमं पुष्पम्

श्रीजयादित्यवामनविरचिता

# काशिकावृत्तिः

(हरदत्तमिश्रकृत-पदमञ्जरीव्याख्यया, जिनेन्द्रबुद्धिकृत-काशिकाविवरणपञ्जिकया न्यासापराभिधया चोपेता)

पञ्चमो भागः

संपादकः
डा० श्रीनारायणमिश्रः
प्राध्यापकः
काशीहिन्दुविश्वविद्यालयीयसंस्कृतविभागस्थः



रत्ना पब्लिकेशन्स, वाराणसी
१९८५

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

रत्नभारतीग्रन्थमालायाः नवम पुष्पम्

श्रीजयादित्यवामनविरचिता

# काशिकावृत्तिः

(हरदत्तमिश्रकृत-पदमञ्जरीव्याख्यया, जिनेन्द्रबुद्धिकृत-काशिकाविवरणपञ्चिकया न्यासापराभिधया चोपेता)



## पञ्चमो भागः

संपादकः

डा० श्रीनारायणमिश्रः

प्राध्यापकः

काशीहिन्दूविश्वविद्यालयीयसंस्कृतविभागस्थः



रत्ना पब्लिकेशन्स, वाराणसी

१९८५

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

Ratnabharati Series—9

# KĀŚIKAVṚTTI

OF

## JAYĀDITYA-VĀMANA

**(Along with Commentaries Padamañjarī of Haradatta Miśra and Vivaraṇapañcikā—Nyāsa of Jinendrabuddhi)**

## Part V



*Edited by*

**DR. SRĪNĀRĀYAṆA MIŚRA**
Reader in Sanskrit Department, Faculty of Arts,
Banaras Hindu University.



RATNA PUBLICATIONS, VARANASI
1985

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# प्रस्तावना

इदानीं प्रस्तूयते पञ्चमो भागोऽपि काशिकायाः पदमञ्जरीन्यासोपबृंहितायाः। अयमपि भागः प्रतिबिम्बग्रहणविधिनैव प्रकाशित इति नात्रापि यथावत् संशोधनं विहितमसम्भवात्। यत्र क्वचन सत्यवकाशे तत्कृतं टिप्पण्यां वा निर्दिष्टम्। अन्या अपि सन्त्यत्राशुद्धयो यासां कियतीनां निराकरणं सौकर्याय पाठकानामत्र विधीयते--

पद० ( पृ० २, पं. ७ ) 'निदानभूतस्य' इत्यत्र 'निदानिभूतस्य' इत्युचितम्। पद० ( पृ. २०, पं. २ ) 'मर्त्यकाश्मर्यं.....' इत्यत्र 'मत्यकाश्मर्यं.....' इति पठनीयम्। पद० (पृ०५७, पं० ७) 'उपप्रेतकुशिताश्चेतयध्वम्' इति मुद्रितपाठस्थाने 'उप प्रेत कुशिकाश्चेतयध्वम्' इति पाठ्यम्। इयं हि ऋक् ( ऋ. वे. ३।५३।११ )। अन्यत्रापि बहूनिच्छान्दसान्युदाहरणप्रत्युदाहरणानि मुद्रितान्यशुद्धानि। तेषां संशोधनं यथावसरं करिष्यते।

न्यासे ( पृ० १२१, पं० १-२ ) मुद्रितम्—'स्यल वितर्के—अस्माच्चुरादिणिजन्तात् पचाद्यचि स्यालशब्दोऽन्तोदात्तः।' इति। अत्र 'स्यम वितर्के—न्तोदात्तः' इति पठितव्यम्। अत्र च 'पृषोदरादित्वान्मस्य लः' इत्यंशो भ्रष्टः। व्युत्पत्तिश्चेयं क्षीरस्वामिसम्मतेति प्राह रामाश्रमोऽमरकोश ( २।६।३२ ) टीकायाम् संकेतश्चोपलभ्यते क्षीरस्वामिकृतायाममरटीकायामपि। अतो न्यासकृत्प्रदर्शितेयं निरुक्तिः स्यालशब्दस्य न चिन्त्येति मन्यामहे।

न्यासे ( पृ० १३०, पं० ११-१२ ) 'शण्डापर्कशब्दाविति' इति प्रतीके तद्व्याख्योपसंहारे च 'पर्क' इत्यत्र 'मर्क' इति पाठो युक्तः, तैत्तिरीयसंहितायाम् ( ६।४।१०।१ ) मर्कशब्दस्यैवोपलम्भात्। अत एव मूलपाठोऽप्यस्माभिरेवं परिवर्तितः। अत एव च पदमञ्जर्यां 'मर्क' इत्येव पठितं व्युत्पादितं चेत्यवगन्तव्यम्।

पद० ( पृ० २२५, पं० १० ) '.....मवयवत्वानवयवत्वेन तन्त्रम्।' इति मुद्रितपाठस्थाने '.....म्, अवयवत्वाऽनवयवत्वे न तन्त्रम्।' इति पाठो युक्तः। पद० ( पृ. २५९, पं० ५ ) 'उदकं वज्रमिव भिन्दानो हृदयमसाहिनोदवज्रः' इत्यत्र 'उदकं वज्रमिव' इत्यर्थकथनं विग्रहवाक्येनोदवज्रशब्दस्य, शेषं तु 'भिन्दानो हृदयमसाहि नोदवज्रः' इत्युद्धरणम्। पद० (पृ० २८६, पं० ३) 'सब्रह्मचारीशब्दं' इत्यत्र 'सब्रह्मचारिशब्दं' इति पठनीयम्। पद० ( पृ० ४८७, पं० ४-५ ) 'स्याद्व-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


कार····ग्रहणम्' इति मुद्रितपाठे श्लोकस्य प्रथमद्वितीयतृतीयपादाः लभ्यन्ते-ऽविकलम् । केवलं चतुर्थपादो यथामुद्रितपाठे न लभ्यते । चतुर्थपादस्थाने यन्मुद्रितं तदेवाविकलं प्राप्यते न्यासे । अतः सम्भवति यच्चतुर्थपादोऽपि पदमञ्जर्यां विद्यमानः कथंचिल्लेखकप्रमादाद् गलितः, परस्ताच्चार्थपूर्त्यर्थं न्यासानुसारेण तत्र योजितम् । अत्र पादत्रयं यथा—

स्याद् वकारमकाराभ्यां संयोगस्य विशेषणात् ।
तदन्तविधिरत्रेति········· ······················ ॥ इति ।

पद० ( पृ० ५८३, पं० ५-६ ) 'कोवस्तो मरुतो यतिषृन' इत्यत्र 'को वः स्तोमं····मनुषो यतिष्ठन' इति पठनीयम् ( द्र० ऋ० वे० १०।६३।६ )। पद० ( पृ० ५९०, पं० २-३ ) 'ह्रस्व····सम्भवः' इति वाक्यं पद्यात्मकं प्रतीयते, परन्तु गद्यरूपेण मुद्रितम् । अत्रान्त्यपादद्वयं तु श्लोकात्मकमेव यथामुद्रितमपि । तथा च यद्यस्य पद्यत्वमुरीकर्त्तव्यन्तर्हि प्रथमार्धे किञ्चित् परिवर्त्तनमित्थं कृत्वा श्लोकपूर्तिः कार्या—

नामीति लिङ्गेन ह्रस्वनद्याप इति पञ्चमी ।
अन्यथाऽङ्गनिमित्तस्य नामो नह्यस्ति सम्भवः ॥ इति ।

पद० ( पृ० ६७९, पं० ११-१२ ) 'ग्स्नुप्रत्ययस्य····निवर्तते' इति ग्रन्थः श्लोकरूपोऽशुद्धगद्यरूपेण मुद्रितः । तत्रैवं पाठ उचितः—

ग्स्नुप्रत्ययस्वाऽगित्त्वे हि गप्रश्लेषो न युज्यते ।
कित्त्वेऽपि तिष्ठतेरीत्वमुक्ताद्धेतोर्निवर्त्तते ॥ इति ।

सम्प्रति प्रथमभागे प्रस्तावनायामनिर्दिष्टानामशुद्धीनां विषये किमप्युच्यते—

पद० ( पृ० ४४, पं० २ ) 'ते न जातौ' इत्यत्र 'तेन जातौ' इति पाठ्यम् । पद० (पृ० ६४, पं० ५ ) 'ह्यादेशत्वम्' इत्यत्र 'ह्यादेशत्वात्' इति पाठः श्रेयान् । पद० ( पृ० ७२, पं० २० ) '····प्रक्षुद्रेष्वपि अत्रालो; न्त्यस्ये····' इत्यत्र '····प्रक्षुद्रेष्वपि । अत्रालोऽन्त्यस्ये····' इति पठितव्यम् । पद० ( पृ० ७३, पं० ४ ) '····रसम्भवे बाध्य····' इत्यत्र '····रसम्भवे न बाध्य····' इति युक्तम् प्रतीयते । पद० ( पृ० ९४, पं० ९ ) 'प्रवीणः, प्रतिलोमादि····' इत्यत्र 'प्रवीणप्रतिलोमादि····' इत्युचितम् । पद० ( पृ० १०६, पं० १६-१७ ) 'इत्यग्नी इत्यादौ', 'पचेते इत्यादौ', 'खट्वे इत्यादौ' इत्यत्र सर्वत्र 'इत्यादौ' इत्यतः पूर्वम् 'इति' शब्दः पूरयितव्यः । पद० (पृ० ११५, पं० ४) '····गौणार्थे प्रादुभावो' इत्यत्र '····गौणार्थप्रादुर्भावो' इति युक्तम् । पद० (पृ० १२३, पं० ५ ) 'सर्वेषामनुकरणं' इत्यत्र 'सर्वेषां ग्रहणं'

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



इत्युचितं प्रतीयते। पद० ( पृ० १३८, पं० ३ ) 'प्रागेव; तत·····' इत्यत्र 'प्रागेव तत·····' इति पाठ्यम्। पद० ( पृ० १४८, पं० ८ ) 'उपसर्जनप्रतिषेधाः' इत्यत्र प्रथमान्तः पाठो युक्तः। पद० ( पृ० १५१, पं० १२ ) 'तदभावे दर्शनं' इत्यत्र 'तदभावेऽदर्शनं' इति भवितव्यम्। पद० ( पृ० १५६, पं० ८ ) 'नपुंसकेनास्य' इत्यत्र 'नपुंसके नास्य' इत्युचितम्। पद० ( पृ० १७६, पं० ३० ) '·····मनुसज्यत' इत्यत्र '·····मनुषज्यत' इयि युक्तम्।

पद० ( पृ० २१०, पं० १८ ) '·····च्चातुरर्थिके णिकृत' इत्यत्र '·····च्चातुरर्थिकेऽणि कृते' इति पठनीयम्। पद० ( पृ० २९४, पं० ६ ) 'परोक्षे लिड्च्यते' इत्यत्र परोक्षा लिड्च्यते' इति युक्तम्। न्यासे ( पृ० ३१८, पं० ११ ) 'सर्वत्र' इत्यत्र 'न तत्र' इत्युचितम्। पद० ( पृ० ३२१, पं० ४ ) 'छन्दोमात्रोऽयं' इत्यत्र 'छन्दोमात्रेऽयं' इति पठनीयम्। पद० ( पृ० ३३१, पं० ५ ) '·····न्तोदात्तमेव' इत्यत्र '·····न्तोदात्तत्वमेव' इति युक्तम्। पद० ( पृ० ३३७, पं० १४ ) 'शुल्कः' इति 'शुक्लः' इत्यत्र मुद्रणप्रमादः। पद० ( पृ० ३३८, पं० १६-१७ ) 'प्रत्ययसामान्यव्यभिचारेऽपि' इत्यत्र 'प्रत्ययसामान्याऽव्यभिचारेऽपि' इति युक्तम्। पद० ( पृ० ३३९, पं० २७ ) 'प्रतित्रर्णानामर्थानुपलब्धेः' इत्यत्र 'प्रतिवर्णमर्थानुपलब्धेः' इत्युचितम्। पद० ( पृ० ३४०, पं० २ ) 'अतः संघाता एव तेनार्थवन्तः' इत्यत्र 'अतः संघाता एव, ते नार्थवन्तः' इति प्रतीयते युक्तम्। संघाता एवार्थवन्तः, न ते = वर्णास्तद्घटका इति तात्पर्यम्। अत्रैव पृष्ठे ( पं० १२ ) 'नलोपप्रसंगात्' इत्यत्र 'नलोपाऽप्रसंगात्' इति पाठ्यम्। पद० ( पृ० ३४३, पं० १० ) 'प्रत्ययान्तवदप्रत्यय' इत्यत्र 'प्रत्ययान्तत्वादप्रत्यय' इति पठनीयम्। पद० ( पृ० ३४४, पं० १० ) 'नलोपप्रसंगात्' इत्यत्र 'नलोपाऽप्रसंगात्' इत्युचितम्। तथा च निषेधो व्यर्थः स्यात्, नह्यप्राप्ते निषेधोऽर्थवान् भवतीति तात्पर्यम्। इदमेव पूर्वपृष्ठेऽपि विज्ञेयम्।

पद० ( पृ० ३७८, पं० ६ ) 'संमार्गसंकारो' इत्यत्र 'संमार्गसंस्कारो' इति पाठः, मुद्रणदोषेण सकारो भ्रष्टः। अत्रैव पृष्ठे ( पं० ९ ) '·····धायकतार्थं' इत्यत्र '·····धाय कृतार्थं' इति पठनीयम्। पद० ( पृ० ४३५, पं० ४ ) 'हिंसा स्वभाव·····' इत्यत्र समस्तः पाठो युक्तः। पद० ( पृ० ४६९, पं० २-३ ) 'चेद्ग्रहणमर्थकम्' इत्यत्र 'चेद्ग्रहणमनर्थकम्' इति पठनीयम्। अत्रैव पृष्ठे (पं० १०-११) 'उद्देश ·····निवृत्तये' इति पद्यं गद्यरूपेण मुद्रितम्। पद्यं त्विदम्—

उद्देशप्रतिनिर्देशाल्लब्धे 'यत्स'-ग्रहे पुनः।<br>
तद्ग्रहो वाक्यभेदेन कर्मान्तरनिवृत्तये ॥ इति।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


पद० ( पृ० ४९१, पं० ८ ) 'न भावना' इत्यत्र 'न भावेन' इति पठनीयम् । सर्वं वाक्यं सावधारणमिति न भावमात्रेणेति तदर्थः । पद० (४९७, पं० ६) 'समाविशत्यसंज्ञा' इत्यत्र 'समाविशत्यङ्गसंज्ञा' इति पाठः कार्यः । पद० ( पृ० ५१९, पं० ६ ) 'प्रयोजनभावात्' इत्यत्र 'प्रयोजनाऽभावात्' इति युक्तम् । पद० (पृ० ५२१, पं० ११ ) 'लिङ्गान्नैऽ·····' इत्यत्र 'लिङ्गात् । नैत·····' इति विच्छिद्य पाठोऽर्थबोधसौकर्यार्थिः कार्यः । पद० ( पृ० ५४९, पं० ११ ) 'यदङ्गमाशुषे त्वम्' इत्यत्र 'यदङ्ग दाशुषे त्वम्' ( ऋ० वे० १।१।६ ) इति शुद्धः पाठः ।

पद० ( पृ० ५५०, पं० ११ ) 'घटः पश्यति' इत्यत्र 'घटं पश्यति' इति पाठ उचितः प्रतीयते । अत्रैव पृष्ठे ( पं० १४ ) 'विषयो' इत्यत्र 'विषये' इति पाठो युक्तः । पद० (पृ० ५६८, पं० २-३ ) 'तदेवमाभासोपगमः ···· विवक्षिताः' इति गद्यरूपेण मुद्रितेंशे 'तदेवम्' इत्यतः परं वस्तुतः पद्यमेकं वर्त्तते । तथा च इत्थमध्येयम्—

तदेवम्—

'आभासोपगमो व्यक्तिः सोढृत्वमिति कर्मणः ।
विशेषाः प्राप्यमाणस्य क्रियासिद्धौ विवक्षिताः ॥' इति ।

अत्र मुद्रितपाठे सन्ध्यभावः, सोढत्वमिति चायुक्तः । पद० ( पृ० ५६९, पं० ५ ) 'तत्कथं प्रयुक्तमिति' इत्यत्र 'कथं तत्प्रायुंक्त' इति एतत्सकानार्थकोऽन्यो वा पाठः कल्पनीय एव । पद० (पृ० ५७९, पं० १३ ) 'साधनकर्मा' इत्यत्र 'साधनकर्म' 'साधनं कर्म' इति वा व्यस्तः पाठो युक्तः । अत्रैव पृष्ठे अस्यामेव पंक्तौ 'इह शब्दक्रियाणामिति' इत्यादिसन्दर्भे 'इह' इत्यतः परं किञ्चित् स्खलनं प्रतीयते । तदर्थमत्रेत्थं पाठः कल्पनीयः—

'इह शब्दकर्मेति किं शब्दः कर्म क्रिया येषां ते गृह्यन्त उत शब्दः कर्म कारकं येषां त इति ।' इतः परं 'शब्दक्रियाणामिति चेत् ?' इत्यादिसन्दर्भः स्पष्टो भवति । अत्रैव पृष्ठे ( पं० १६ ) 'अकर्मकत्वादथात्र' इत्यत्र 'अकर्मकत्वादप्यत्र' इति पाठः श्रेयान् । अत्रेत्यस्य शब्दायते इत्यत्रेत्यर्थः । अत्रैव पृष्ठे ( पं० १८ ) 'चेतयत्यादयो हि ज्ञानमात्रवचना' इत्यत्र 'शृणोत्यादयो हि न ज्ञानमात्रवचना इति न' इत्युचितः पाठः । पद० ( पृ० ५८०, पं ५ ) 'पश्यति रूपतकं' इत्यत्र 'पश्यति रूपतर्कः' इति पाठ उचितः । अत्रैव पृष्ठे ( पं० ७ ) 'दोषान्तं भाष्यं' इत्यत्र वाक्यपरिसमाप्तेरुचितत्वेन 'दोषान्तं भाष्यम् ।' इति युक्तः पाठः । एवमत्रैव पृष्ठे ( पं० १२ ) 'जल्पादीनां तूपसंख्यानं कर्त्तव्यमेव' इत्यतः परम् 'सत्येषां पुत्रादिकर्मत्वे । श्लोका-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



दिशब्दविशेषकर्मत्वे तु शब्दकर्मकत्वात् सिद्धिः। दृशेर्ज्ञानसामान्यार्थकत्वे तु बुद्ध्यर्थत्वादेव सिध्यति। चाक्षुषज्ञानविशेषार्थकत्वे तु वचनमावश्यकमेव' इत्याशयकः पाठोऽवश्यकल्पनीयः, इतरथाऽर्थानवबोधात्। इदन्त्ववधेयम्—

पदमञ्जर्यां भाष्यस्य प्रदीपस्य च परस्परमित्थं सम्मिश्रणमुपलभ्यते येनान्तरेण सूक्ष्मेक्षिकां भाष्यप्रदीपयोर्न पदमञ्जरीतात्पर्यावबोधः सुकरः, तदभावे च पाठसंशोधनमप्यसम्भवम्। एतच्च सर्वं तदैव सम्पाद्यं यदि मुद्रणमस्या आयसाक्षरैर्भवेत्। प्रतिबिम्बग्रहणे त्वशक्यमेवेति क्षन्तव्योऽयं जनः।

पद० ( पृ० ५८१, पं० ७-८ ) 'कालकर्मणाकर्मकत्वद्वचनादिति' इत्यत्र 'कालकर्मणामकर्मकवद्वचनादिति' इति पाठः समीचीनः। अत्रैव पृष्ठे ( पं० ९ ) 'तर्ह्यकर्मकवचनाद् भावे' इत्यशुद्धः पाठः 'तर्ह्यकर्मकवद्भावो' इति रूपेण संशोध्यः। अत्रैव पृष्ठे ( पं० १२ ) 'नाप्यविवक्षित....' इत्युत्तरवाक्यम्। अत्र 'नात्राविवक्षित ....' इति पाठः श्रेयान्। अत्रैव पृष्ठे ( पं० १३ ) 'धातवोऽकर्मकाः' इत्यत्र 'धातवस्तेऽकर्मकाः' इत्युचितम्। पद० ( पृ० ५८८, पं० १४ ) 'प्राप्यमनुव्रजेत्' इत्यत्र प्रोथमनुव्रजेत्' इति पाठ्यम्। पद० ( पृ० ६२१; पं० ६ ) 'प्रासिक्रया....' इत्यत्र 'प्रासिक्रिया....' इति पाठः कार्यः। मुद्रणप्रमादादिकारो भ्रष्टः। पद० (पृ० ६३७, पं० ११ ) 'माणवकाधीष्टेत्यभि....' इत्यस्य स्थाने 'माणवकाधीष्वेत्यभि ....' इति पठनीयम्। पद० ( पृ० ६४१, पं० १ ) 'पद्मपत्रशतव्यक्तिभेद' इत्यत्र 'पद्मपत्रशतव्यतिभेद' इति पाठः प्रसिद्ध्यनुरोधी। अन्या अपि सन्त्यशुद्धयोऽत्र यासां संशोधनं यथामति कर्तुं परस्तात् प्रयतिष्यते। अन्ते च—

तन्त्रे स्वतन्त्र इह मन्त्र इवातिगूढे
विद्यावतामपि सतां विषमः प्रवेशः।
धीरास्तदत्र यदिदं गदितं तदेतत्
शब्दाऽनुशासनसतत्त्वबुभुत्सयैव ॥

इति निवेदयति—

संस्कृत-विभाग
का० हि० वि० वि०
वाराणसी।
प्रबोधिनी एकादशी—२०४०

विद्वद्विधेयः—
श्रीनारायणमिश्रः

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# सूत्रसूची



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri





CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri





CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri





CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri





CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri





CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri





CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri





CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri




CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri





CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# अथ षष्ठाध्याये द्वितीयः पादः

## बहुव्रीहौ प्रकृत्या पूर्वपदम् ॥ १ ॥

पूर्वपदग्रहणमत्र पूर्वपदस्थे स्वरे उदात्ते स्वरिते वा वर्त्तते। बहुव्रीहौ समासे पूर्वपदस्य यः स्वरः स प्रकृत्या भवति = स्वभावेनावतिष्ठते, न विकारमनुदात्तत्वमापद्यते। समासान्तोदात्तत्वे हि सति 'अनुदात्तं पदमेकवर्जम्' इति सोऽनुदात्तः स्यादिति समासान्तोदात्तत्वापवादोऽयमारभ्यते।

### पदमञ्जरी

बहुव्रीहौ प्रकृत्या पूर्वपदम्॥ इह यस्य विकारः प्राप्तस्तस्य प्रकृतिभावो विधेयः। न च कृत्स्नस्य पूर्वपदस्य शेषनिघातलक्षणो विकारः प्राप्तः, किन्तु तत्स्थयोरुदात्तस्वरितयोरेव, तस्मात्तयोरेव पूर्वपदशब्दो वर्तते, तदाह—*पूर्वपदग्रहणमित्यादि*। *समासान्तोदात्तत्वे हीत्यादिना* विकारप्राप्तिं दर्शयति। *समासान्तोदात्तत्वापवादोऽयमिति*। नाप्राप्ते तस्मिन्नारम्भात्। ननु च यत्र सामान्यविधिप्रवृत्तिमनपेक्ष्य विशेषविधिप्रवृत्तिस्तत्रापवादत्वम्, यथा—'कर्मण्यण्' 'आतोऽनुपसर्गे कः' इति; इह तु सत्यां विकारप्राप्तौ प्रकृतिभावो विधेयः, विकारप्राप्तिश्च समासस्येत्यस्मिन् प्रवृत्त इति कथं तत्प्रवृत्त्यपेक्षस्तदपवादः, अतः समासस्येत्यस्मिन्प्रवृत्ते प्राप्तस्य शेषनिघातस्यैवायमपवादो युक्तः? नैत-

### न्यासः

बहुव्रीहौ प्रकृत्या पूर्वपदम्॥ पूर्वपदग्रहणमित्यादि। प्रकृतिभावो ह्यत्र तस्य युज्यते विधातुम्, यस्यानुदात्तलक्षणो विकारः प्राप्नोति। न च पूर्वपदस्याज्झल्समुदायस्यासौ प्राप्नोति, किं तर्हि? स्वरितस्य, उदात्तस्य वा। तत्र यदीह पूर्वपदग्रहणं पूर्वपद एव वर्तते, अपार्थकमेवेदं वचनं स्यात्! तस्मात् पूर्वपदस्थे स्वर उदात्ते स्वरिते वा पूर्वपदग्रहणं वर्तत इति विज्ञायते। भवति हि तात्स्थ्यात् ताच्छब्द्यम्, यथा—मञ्चाः क्रोशन्तीति। स्वभावेनावतिष्ठत इति। अनेन प्रकृत्या भवतीत्यस्यार्थमाचष्टे। तमेव वाक्यान्तरेण स्पष्टीकर्तुमाह—न विकारमनुदात्तत्वमापद्यत इति। कथं पुनरनुदात्तलक्षणो विकारः प्राप्नोति, यन्निवृत्तये प्रकृतिभावोऽयमारभ्यते? इत्याह—समासान्तोदात्तत्वे हि सतीत्यादि। समासान्तोदात्तत्वापवादोऽयमिति। नाप्राप्ते तस्मिन्नारम्भात्। कृष्णो मृग इति। कृष्णगुणत्वात्। आद्युदात्त इति। ञित्स्वरेण।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



काष्र्णोत्तरासङ्गाः। कृष्णो मृगः, तस्य विकारः कार्ष्णः, 'प्राणिरजतादिभ्योऽञ्' इत्यञ्प्रत्ययान्तो ञित्स्वरेणाद्युदात्तः।

यूपवलजः। यूपशब्द उणादिषु 'कुसुयुभ्यश्च' इति पप्रत्ययान्तः। तत्र च 'दीर्घः' इति, 'नित्' इति च वर्त्तते, तेनाद्युदात्तः।

ब्रह्मचारिपरिस्कन्दः। ब्रह्मचारिन्शब्दः कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः।

पदमञ्जरी

देवम्; यद्ययं निघातापवादः स्यात्, तत्रैवायं ब्रूयाद्—'अनुदात्तम्पदमेकवर्जम् बहुव्रीहौ पूर्वपदम्' इति। नन्वेवमुच्यमाने समपाद इत्यादौ स्वाभाविकस्यापि पूर्वपदानुदात्तस्य प्रतिषेधप्रसङ्गः, किं कारणम्? 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति तस्मात्समासस्येत्यस्यानन्तरमारभ्यमाणस्तस्यैवायमपवादः। ननु चोक्तम्—'कथं तत्प्रवृत्त्यपेक्षस्तदपवादः' इति? उच्यते; निदानोच्छेदेन निदानिन उच्छेदः शक्यते कर्तुम्, समासान्तोदात्तत्वं च शेषनिघातलक्षणस्य पूर्वपदविकारस्य निदानम्, अतस्तदभावद्वारेण निदानभूतस्य समासान्तोदात्तस्यैवास्मिन् विषयेऽप्रवृत्तिराख्यायते। नन्वेवं नानापदस्वरप्राप्तौ समासस्येत्यस्यारम्भात्तदप्रवृत्तौ द्वयोरपि पूर्वोत्तरपदयोः प्रकृतिस्वरप्रसङ्गः, तथा हि सति 'न बहुव्रीहेः' इति समासान्तोदात्तत्वमेव प्रतिषेधेत्, अस्तु वा समासान्तोदात्तत्वम्, अस्तु वा शेषनिघातः; पश्चात्तु प्रकृत्येत्यनेन स्वरविशेषमुपलक्ष्य स स्वरः पूर्वपदस्य विधीयते, शेषनिघातात्प्राक् पूर्वपदस्य प्रकृत्या यः स्वरस्तत्स्वरकं पूर्वपदं बहुव्रीहौ भवतीति; यदि वा 'प्रकृत्या' इत्यनेनस्वरविशेषे उपलक्षिते सत्ययमर्थो भवति—बहुव्रीहौ पूर्वपदस्य स्वाभाविको यः स्वर आद्युदात्तत्वादिकः स भवतीति, एवं च यथा पूर्वपदस्यादिरुदात्तो भवतीत्युक्तेन समासस्येत्येतत्प्रवृत्त्यपेक्षा, तादृगेतदिति युज्यते तदपवादता।

*कृष्णो मृग इति*। यस्याजिनं कृष्णाजिनमित्युच्यते।

*ब्रह्मचारिन्शब्दः कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्त इति*। तथा चाधीयते—ब्रह्मचारी चरति विषयद्विषाम्। कस्य ब्रह्मचार्यसीत्यादौ णिनिः, पूर्वपदाद्यु-

न्यासः

तत्र चेत्यादि। तत्र 'स्रुवो दीर्घश्च' इति दीर्घग्रहणमनुवर्तते। 'सुयूभ्यां निच्च' इत्यतो निच्चेति च। तेनाद्युदात्त इति। नित्स्वरेण।

कृदुत्तरपदेत्यादि। ब्रह्मचारीति 'व्रते' इति णिनिः, उपपदसमासः। तत्र 'गतिकारकोपपदात् कृत्' इति ब्रह्मचारीतिशब्दः कृत्स्वरेणान्तोदात्तः।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


स्नातकपुत्रः। स्नातशब्दः कन्प्रत्ययान्तो नित्स्वरेणाद्युदात्तः।
अध्यापकपुत्रः। लित्स्वरेणाध्यापकशब्दो मध्योदात्तः।

श्रोत्रियपुत्रः। श्रोत्रियशब्दो नित्त्वादाद्युदात्तः।

मनुष्यनाथः। मनुष्यशब्दः 'तित्स्वरितम्' इति स्वरितान्तः। उदात्तग्रहणं स्वरितग्रहणं चात्रानुवर्त्तते, तेन सर्वानुदात्ते पूर्वपदे विधिरेव नास्तीति समासान्तोदात्तत्वं भवति।

पदमञ्जरी

दात्तत्वं तु न भवति, प्रवृद्धादिषु पाठादाकृतिगणो हि स इष्यते। वृत्तौ तु कृदुत्तरपदप्रकृतिस्वरेणेत्युपलक्षणम्। अपर आह—छन्दसि 'परादिश्च परान्तश्च' इत्यन्तोदात्तत्वम्। वृत्तेस्त्वयमर्थः—ब्रह्मेव चरति ब्रह्मचारीत्युपमानमत्र पूर्वपदम्, ततः किम्? 'उपमानं शब्दार्थप्रकृतावेव' इति नियमात्कृदुत्तरपदप्रकृतिस्वर एव भवतीति। *स्नातकशब्दः कन्प्रत्ययान्त इति*। यावादिषु 'स्नात वेदसमाप्तौ' इति पठ्यते।

'मनोर्जातावञ्यतौ षुक्च', मनुष्यः। यदि तर्ह्ययं प्रकृतिभावः समासान्तोदात्तत्वं बाधते, सर्वानुदात्तेऽपि पूर्वपदे बाधेत, तत्रापि ह्यस्य प्रवृत्तिर्न केनचिद्वार्यते, विशेषविधिश्च प्रवर्तमानः सत्यपि सम्भवे सामान्यविधेर्बाधको भवति, तक्रदानमिव दधिदानस्य? इत्यत आह—*उदात्तग्रहणमित्यादि*। न्यायतोऽप्ययमर्थः सिद्धः, कथं यस्य विकारः प्राप्तस्तस्य प्रकृतिभावो विधेयः, विकारप्राप्तिश्चोदात्तस्वरितयोरेव, अत एव पूर्वमुक्तमुदात्ते स्वरिते वा वर्तत इति।

न्यासः

स्नातकशब्दः कन्प्रत्ययान्त इति। यावादित्वात्। यावादिषु 'स्नात वेदसमाप्तौ' इति पठ्यते। आद्युदात्त इति। नित्स्वरेण।

श्रोत्रियशब्दो नित्त्वादाद्युदात्त इति। 'श्रोत्रियँश्छन्दोऽधीते' इति निपात्यते, तेन नित्स्वरेणाद्युदात्तः।

मनुष्यशब्दस्तित्स्वरितमितीति। 'मनोर्जातावञ्यतौ षुक्च' इति यत्प्रत्ययान्तत्वात्। उदात्तग्रहणमित्यादि। तत्रोदात्तग्रहणम् 'कर्षात्वतो घञोऽन्तउदात्तः' इत्यतोऽनुवर्तते। स्वरितग्रहणमिति। 'तित् स्वरितम्' इत्यतः। ततः किं सिद्धं भवति? इत्याह—तेनेत्यादि। उदात्तस्वरितानुवृत्तेर्ह्येतदेव प्रयोजनम्—यत्रोदात्तः स्वरितो वास्ति तत्रैव यथा स्यात्।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



**समभाग इति समशब्दो हि सर्वानुदात्तः ॥**

पदमञ्जरी

*समभाग इति* । समशब्दः 'सूब्रो डमप्' इति व्युत्पादितः सर्वानुदात्तः । नन्वत्रासत्यपि समासान्तोदात्तत्वे भागशब्दस्य 'कर्षात्वतः' इति अन्तोदात्तत्वात् समभागशब्दोऽन्तोदात्त एव भविष्यति । तस्मादुदाहरणदिगियं दर्शिता, समपाद इत्युदाहर्तव्यम्, पादशब्दो वृषादित्वादाद्युदात्तः ।

किमर्थं पुनरिदमुच्यते ? पूर्वपदप्रकृतिस्वरो यथा स्यात्, समासान्तोदात्तत्वं मा भूदिति, 'नञ्सुभ्याम्' इत्येतन्नियमार्थं भविष्यति—यदि बहुव्रीहावन्तोदात्तत्वं भवति नञ्सुभ्यामेवेति । न चैवं नानापदस्वरप्राप्तौ समासान्तोदात्तत्वविधानान्नियमेन तस्मिन्व्यावर्त्तितेऽपि पूर्वोत्तरपदयोर्द्वयोरपि पर्यायेण प्रकृतिस्वरप्रसङ्गः, 'शितेर्नित्याबह्वच्' इत्यस्य नियमार्थत्वात्—यदि बहुव्रीहावुत्तरपदं प्रकृत्या भवति शितेरेव परमिति ? उच्यते; 'नञ्सुभ्याम्' इत्येष तावन्नियमो नोपपद्यते; अनुदरः, सूदर इत्यादौ 'उदाराश्वेषु क्षेपे' इति पूर्वपदान्तोदात्तस्य प्राप्तस्य बाधनाद्विधिसम्भवात् । 'शितेर्नित्याबह्वच्' इत्येतदपि—शितेर्नित्याबह्वजेवेत्यनेन नियमेन शीतिललाटादिष्वेवोत्तरपदप्रकृतिस्वरं निवर्तयेत्, न चित्रगुप्रभृतिष्वित्यारभ्यमेवैतत् ।

बहुव्रीहिग्रहणं तु शक्यमकर्तुम्; तत्पुरुषे कस्मान्न भवति ? 'तत्पुरुषे तुल्यार्थ' इत्यादिनियमार्थं भविष्यति—तत्पुरुषे तुल्यार्थाद्येवेति, गन्तव्यपण्यमेव वाणिजे, गतादिष्वेवोत्तरपदेषु द्विगावित्यादि । द्वन्द्वे कस्मान्न भवति ? 'राजन्यबहुवचने' इत्येतन्नियमार्थं भविष्यति—द्वन्द्वे भवति राजन्यबहुवचनद्वन्द्व एवेति । अव्ययीभावे कस्मान्न भवति ? 'परिप्रत्युपापावर्ज्यमान' इत्यादि नियमार्थं भविष्यति—परिप्रत्युपापां एवाव्ययीभाव इति । विपरीतस्तु नियमः सर्वत्र न भविष्यति; नानिष्टार्था शास्त्रप्रवृत्तिरिति । एवमप्यसति बहुव्रीहिग्रहणे समासान्तोदात्तस्य पूर्वपदप्रकृतिस्वरस्य चैकविषयत्वाद्विरोधाच्च तुल्यश्वेतः, पञ्चारत्निरित्यादौ पर्यायः प्राप्नोति ? तत्पुरुषादिषु तुल्यार्थादीन्येव पूर्वपदानि प्रकृतिस्वराणि भवन्ति नान्यानि' इत्येव हि नियमः कृतः, न 'तुल्यार्थादिपूर्वपदेषु तत्पुरुषादिषु पूर्वपदप्रकृतिस्वरत्वमेव' इति । अथाप्यगृह्यमाणविशेषत्वादुभयनियमः—तत्पुरुषादिषु तुल्यार्थादीन्येव, तेषु पूर्वपदप्रकृतिस्वरत्वमेवेति; तथा च 'बह्वन्यतरस्याम्' इति वर्तमाने 'दिष्टिवितस्त्योश्च' इति विकल्पो विधीयते,

न्यासः

समशब्दो हि 'सुनोतेर्डमप्' इति डमप्प्रत्ययान्तो व्युत्पाद्यते, तेन धातोष्टिलोपे कृते प्रत्ययस्य पित्त्वात् सर्वानुदात्तो भवति ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्यय-द्वितीयाकृत्याः ॥ २ ॥

तत्पुरुषे समासे तुल्यार्थं तृतीयान्तं सप्तम्यन्तमुपमानवाचि अव्ययं द्वितीयान्तं कृत्यान्तं च यत्पूर्वपदं तत्प्रकृतिस्वरं भवति । तुल्यार्थं — तुल्यश्वेतः । तुल्यलोहितः । तुल्यमहान् । सदृक्छ्वेतः । सदृग्लोहितः । सदृग्महान् । सदृशश्वेतः । सदृशलोहितः । सदृशमहान् । एते 'कृत्यतुल्याख्या अजात्या' इति कर्मधारयाः । तत्र तुल्यशब्दः 'यतोऽनावः' इत्याद्युदात्तः । सदृक्शब्दः 'समानान्ययोश्च' इति क्विन्प्रत्ययान्तः, कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः । सदृशशब्दोऽपि कञन्तो मध्योदात्तः । तुल्यार्थं ।

### पदमञ्जरी

पञ्चदिष्टिः, पञ्चवितस्तिरित्यादौ 'इगन्ते द्विगौ' इति नित्यपूर्वपदप्रकृतिस्वरो मा भूदिति ? तथापि चित्रगुरित्यादौ बहुव्रीहौ पर्यायप्रसङ्गः, ज्ञापकात्सिद्धम्, यदयम् 'द्वित्रिभ्यां पाद्दन्मूर्द्धसु' इति द्विपादित्यादावन्तोदात्तविकल्पं शास्ति, तज्ज्ञापयति—'न बहुव्रीहावन्तोदात्तत्वं पर्यायेण भवति' इति । एवमप्युदात्तविषयमेव ज्ञापकं स्यात्—'बहुव्रीहावन्तोदात्तत्वं पर्यायेण भवति' इति । किञ्च स्यात् ? उदात्तस्वरितयोस्तु पूर्वोत्तरपदस्थयोः पर्यायप्रसङ्गः । न च स्वरिते य उदात्तस्तदाश्रयं ज्ञापकं युज्यते, अचो ह्युदात्तसंज्ञा, न च वर्णैकदेशो गृह्यते । अथ वर्णत्वावर्णत्वकृतं भेदमुत्सृज्योदात्तश्रुतिपरं ज्ञापकं वर्ण्येत, तदा बहुव्रीहिग्रहणं शक्यमकर्तुम् ॥

*तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्या* ॥ *सदृक्शब्दोऽपीत्यादि* । कृदुत्तरपदप्रकृतिस्वरेणेत्येतदपेक्षते ।

### न्यासः

तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः ॥ यतोऽनाव इत्याद्युदात्त इति । 'नौवयोधर्म' इत्यादिना यत्प्रत्ययान्तस्य तुल्यशब्दस्य व्युत्पादितत्वात्—तुलया सम्मितं तुल्यमिति । सदृक्शब्द इत्यादि । 'त्यदादिषु दृशोरनालोचने कञ्च' इत्यत्र 'समानान्ययोश्चेति वक्तव्यम्' इत्युपसंख्यानं कृतम्, तेन सदृक्छब्दः कञन्तः । 'दृग्दृशवतुषु' इति समानस्य सभावः । सदृशशब्दोऽपीत्यादि । कृदुत्तरपद प्रकृतिस्वरेणेत्यपेक्षते ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तृतीया — शङ्कुलया खण्डः शङ्कुलाखण्डः । किरिणा काणः किरिकाणः । शङ्कुपूर्वाल्लातेः 'घञर्थे कविधानम्' इति वा कप्रत्ययान्तः शङ्कुलाशब्दोऽन्तोदात्तः । किरिशब्दोऽपि किरतेः 'कॄगॄशॄपॄकुटिभिदिच्छिदिभ्यश्च' इतीकारप्रत्ययः, किदौणादिकः, तेनासावन्तोदात्तः । तृतीया ।

सप्तमी — अक्षेषु शौण्डोऽक्षशौण्डः । पानशौण्डः । 'अशेर्देवने' इति सप्रत्ययान्तोऽक्षशब्दोऽन्तोदात्तः । पानशब्दो ल्युडन्तो लित्स्वरेणाद्युदात्तः । सप्तमी ।

उपमान — शस्त्रीश्यामा । कुमुदश्येनी । हंसगद्गदा । न्यग्रोधपरिमण्डला । दूर्वाकाण्डश्यामा । शरकाण्डगौरी । 'उपमानानि सामान्यवचनैः' इति समासः । शस्त्रीशब्दो ङीष्प्रत्ययान्तोऽन्तोदात्तः । कुमुशब्दोऽपि कौ मोदते इति मूलविभुजादित्वात्कप्रत्ययान्तः, 'नब्विषयस्यानिसन्तस्य' इति वाऽऽद्युदात्तः । हंसशब्दः 'वृतॄवदिहनिकमिकषिभ्यः सः' इति सप्रत्ययान्तः । न्यग्रोहतीति न्यग्रोधः, पचादित्वाद् अच्प्रत्ययान्तः, तस्य 'न्यग्रोधस्य च केवलस्य' इति निपातनाद् हका-

पदमञ्जरी

कुमुदशब्दोऽपीत्यादि । तत्र यदा कप्रत्ययान्तस्तदा थाथादिस्वरेणान्तोदात्तः, तथा च 'अनुदात्तस्य च यत्रोदात्तलोपः' इत्यत्र कुमुद्वानित्युदाहृतम्, उक्तं च—कुमुदादयोऽन्तोदात्ता इति । यदा त्वव्युत्पन्नं तदा 'नब्विषयस्यानिसन्तस्य' इत्याद्युदात्त इत्युक्तम् । अपर आह—जलजे नपुंसकविषयः कुमुदशब्दः; यस्तु वानरविशेषे कुमुदशब्दः स पुंल्लिङ्गः, तत्रेह जलजवाच्युदाहृतः, 'अनुदात्तस्य च' इत्यत्र तु वानरवचन इति ।

न्यासः

इकारः प्रत्यय इति । तत्र 'अच इः' इत्यत इकारप्रत्ययानुवृत्तेः । किदिति । 'भुजेः किच्च' इत्यतः किद्ग्रहणानुवृत्तेः ।

सप्रत्ययान्तोऽक्षशब्द इति । 'अशेर्देवने' इत्यत्र 'वृतॄवदिहनिकमिकषिभ्यः सः' इत्यतः सप्रत्ययानुवृत्तेः ।

नब्विषयस्येति । नपुंसकलिङ्गविषयस्येत्यर्थः । मध्योदात्तत्वञ्चेति । न्यग्रोधस्य च केवलस्येति । निपातनादित्यनेन सम्बन्धः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



रस्य धकारः, मध्योदात्तत्वं च। दूर्वाकाण्डशरकाण्डशब्दौ षष्ठीतत्पुरुषावुत्तरपदाद्युदात्तौ। उपमान।

अव्यय — अब्राह्मणः। अवृषलः। कुब्राह्मणः। कुवृषलः। निष्कौशाम्बिः। निर्वाराणसिः। अतिखट्वः। अतिमालः। एतान्यव्ययान्याद्युदात्तानि।

※ अव्यये नञ्कुनिपातानामिति वक्तव्यम् ※। इह मा भूत् — स्नात्वाकालक इति। अव्यय।

पदमञ्जरी

*दूर्वाकाण्डशरकाण्डशब्दावित्यादि*। आद्यप्राप्तिप्रदर्शनमेतत्, 'षट् च काण्डादीनि' इत्युत्तरपदाद्युदात्तत्वेन तत्र भाव्यम्।

*नञ्कुनिपातानामिति*। निपातत्वादेव सिद्धे नञ्ग्रहणम् अकरणिरित्यादौ परस्यापि कृत्स्वरस्य बाधनार्थम्। तथा चाव्यथीत्यत्रापि कृता सह निर्दिष्टो यत्र नञ्, तत्रापि नञ एव स्वरो भवति; तथा विभक्तिस्वरान्नञ्स्वरो बलीयान् भवति। कुग्रहणं तु चादिषु पाठाभावात्, पठितव्यस्त्वसौ, अन्यथाऽव्ययसंज्ञा न स्यात्; स्वरादिष्वपि पाठाभावात्। *स्नात्वाकालक इति*। मयूरव्यंसकादिरयम्। यद्येवम्, स तत्रैवान्तोदात्तः पठिष्यते ? एवमपि परिगणनं कर्तव्यम्, सामिकृतम्, स्वयन्धौतमित्यादौ प्रकृतिस्वरो मा भूदिति। इह कस्मान्न भवति— परमं कारकं परमकारकम्, परमेण कारकेण परमकारकेण, परमे कारके परमकारके इति ? न हि विशेषणसमासः प्रथमान्तानामेवेति नियमोऽस्ति। तेन द्वितीयाद्यन्तं पूर्वपदमिति चोद्यम्। परिहारस्तु लक्षणप्रतिपदोक्तपरिभाषया तृतीयादीनां

न्यासः

अब्राह्मण इति। नञ्समासः। कुब्राह्मण इत्यादौ 'कुगतिप्रादयः' इति। एतान्यव्ययान्याद्युदात्तानीति। 'निपाता आद्युदात्ताः' इति वचनात्, एषाञ्च निपातत्वात्। तत्र नञ्कुशब्दयोः 'चादयोऽसत्त्वे' इति चादिषु पाठान्निपातत्वम्, निरतिशब्दयोस्तु 'प्रादयः' इति, तयोः प्रादिषु पाटात्।

अव्यय इत्यादि। अव्यये पूर्वपदे प्रकृतिभावे कर्तव्ये नञ्प्रभृतीनामेव भवतीत्येतदर्थरूपं व्याख्येयम्। तत्रेदं व्याख्यानम्—'चङ्यन्तरस्याम्' इत्यतोऽन्यतरस्यांग्रहणमनुवर्तते, सा च व्यवस्थितविभाषा, तेन नञ्कुनिपातानामेव भविष्यतीति। स्नात्वाकालक इति। मयूरव्यंसकादित्वात् समासः। 'क्त्वातोसुन्कसुनः' इति पूर्वपदस्याव्ययत्वम्।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


द्वितीया — मुहूर्त्तसुखम् । मुहूर्त्तरमणीयम् । सर्वरात्रकल्याणी । सर्वरात्रशोभना । 'अत्यन्तसंयोगे च' इति द्वितीयासमासः । मुहूर्त्तशब्दः पृषोदरादिरन्तोदात्तः । सर्वरात्रशब्दोऽप्यच्प्रत्ययान्तः । द्वितीया ।

कृत्य — भोज्योष्णम् । भोज्यलवणम् । पानीयशीतम् । हरणीयचूर्णम् । भोज्यशब्दो ण्यदन्तोऽन्तस्वरितः । पानीयहरणीयशब्दयोः 'उपोत्तमं रिति' इति ईकार उदात्तः ॥

## वर्णो वर्णेष्वनेते ॥ ३ ॥

'प्रकृत्या पूर्वपदम्', 'तत्पुरुषे' इति च वर्त्तते । वर्णं वर्णवाचि पूर्वपदं वर्णवाचिष्वेवोत्तरपदेषु एतशब्दवर्जितेषु परतस्तत्पुरुषे समासे प्रकृतिस्वरं भवति । कृष्णसारङ्गः, लोहितसारङ्गः । कृष्णकल्माषः, लोहितकल्माषः । 'कृषेर्वर्णे' इति कृष्णशब्दो नक्प्रत्ययान्तोऽन्तोदात्तः । लोहितशब्दोऽपि 'रुहे रश्च लो वा' इतीतन्प्रत्ययान्त आद्युदात्तः ।

वर्ण इति किम् ? परमकृष्णः ।

वर्णेष्विति किम् ? कृष्णतिलाः । अनेत इति किम् ? कृष्णैतः । लोहितैतः ॥

### पदमञ्जरी

प्रतिपदं यः समासस्तत्रायं स्वरः । अयं तु विभक्तिविशेषमनुपादाय विशेषणसमास इति ॥

*वर्णो वर्णेष्वनेते* ॥ 'अनेते' इति प्रतिषेधाद्बहुवचननिर्देशाच्चोत्तरपदे स्वरूपग्रहणं न भवति, तत्साहचर्यात्पूर्वपदेऽपि । *कृष्णशब्दो नक्प्रत्ययान्तोऽन्तोदात्त इति* । फिषि तु 'कृष्णस्यामृगाख्या चेत्' ति छन्दस्यन्तोदात्तत्वम्, अन्यत्राद्युदात्तत्वं व्यवस्थितम् ॥

### न्यासः

मुहूर्तसुखमित्यादौ 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । सर्वरात्रशब्दोऽप्यच्प्रत्ययान्त इति । सर्वा च रात्रिश्चेति 'पूर्वकालैक' इत्यादिना समासे 'अहःसर्वैक' इत्यादिनाच्प्रत्ययविधानात् ॥

वर्णो वर्णेष्वेनेते ॥ रुहे रश्च लो वेतीति । अत्र 'हृश्याभ्यामितन्' इतीतनोऽनुवर्तनात् । परमकृष्ण इति । अत्र समासान्तोदात्तत्वमेव ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## गाधलवणयोः प्रमाणे ॥ ४ ॥

प्रमाणवाचिनि तत्पुरुषे समासे गाध, लवण – इत्येतयोरुत्तरपदयोः पूर्वपदं प्रकृतिस्वरं भवति। शम्बगाधमुदकम्। अरित्रगाधमुदकम्। तत्प्रमाणमित्यर्थः। गोलवणम्। अश्वलवणम्। यावद् गवे दीयते तावदित्यर्थः। षष्ठीसमासा एते। तत्र 'शमेर्बन्' इति बन्प्रत्ययान्तत्वाच्छम्बशब्द आद्युदात्तः। अरित्रशब्दः 'अर्त्तिलूधूसू' इतीत्रप्रत्ययान्तो मध्योदात्तः। गोशब्दो डोप्रत्ययान्तोऽन्तोदात्तः। अश्वशब्दः 'अशूप्रुषि'[1] इति क्वन्प्रत्ययान्त आद्युदात्तः। प्रमाणम् = इयत्तापरिच्छेदमात्रमिह द्रष्टव्यम्, न पुनरायाम एव। स्वरव्यङ्ग्यं च प्रमाणविशेषविषयत्वमेतेषाम्।

प्रमाण इति किम्? परमगाधम्। परमलवणम्॥

## दायाद्यं दायादे ॥ ५ ॥

पदमञ्जरी

*गाधलवणयोः प्रमाणे* ॥ *शम्बगाधमिति*। 'गाधृ प्रतिष्ठायाम्', गाध्यत इति गाधः, अर्द्धर्चादिः, इयत्तायाः परिच्छित्तिः = *इयत्तापरिच्छेदः*। क्रियाशब्दोऽत्र प्रमाणशब्दो गृह्यते, न त्वायाममाने रूढ इत्यर्थः॥

*दायाद्यं दायादे* ॥ दातव्यो दायः = भागः,अंश इत्यर्थः। दायमादत्ते दायादः,

न्यासः

गाधलवणयोः प्रमाणे॥ शम्बगाधमिति। गाध्यत इति गाधः, 'गाधृ प्रतिष्ठालिप्सयोः', अर्धर्चादित्वात् पक्षे नपुंसत्वम्। अर्तिलूधूसू इति। अनेन सूत्रैकदेशेन 'अर्तिलूधूसूखनसहचर इत्रः' इत्येतत्सूत्रमुपलक्ष्यते। मध्योदात्त इति। प्रत्ययस्वरेण। अशू प्रुषीति। 'अशूप्रुषिलटिकणिघटिविशिभ्यः क्वन्' इति सूत्रमुपलक्षयति। ननु चायामः = प्रमाणम्, 'आयामस्तु प्रमाणं स्यात्' इति वचनात्; न च शम्बगाधमित्यादिस्तत्पुरुषः प्रमाणवाची, किं तर्हि, इयत्तावाची? इत्याह—प्रमाणमित्यादि। इयतो भाव इयत्ता, सा परिच्छिद्यते येन स इयत्तापरिच्छेदः, स एवात्र प्रमाणं वेदितव्यम्; न पुनरायाम एव। तत् कथम्? प्रमीयतेऽनेनेति प्रमाणमिति क्रियाशब्दोऽत्र प्रमाणशब्दो गृह्यते, न तु रूढिशब्दः; लक्ष्यानुरोधात्। तेन येनेयत्ता परिच्छिद्यते तत् सर्वं प्रमाणम्। स्वरव्यङ्ग्यं चेति। अस्य स्वरे योऽयं प्रकृतिभावो विधीयते तेन व्यङ्ग्यं द्योत्यमित्यर्थः। एतेषामिति। शम्बगाधादीनाम्॥

दायाद्यं दायादे॥ दायः = भागः, अंश इत्यर्थः। दायमादत्त इति दायादः।

१. सम्पूर्णोणादिसूत्रोद्धरणं न्यासविरुद्धम्, एकदेशोद्धरणमेवातो युक्तम्।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


तत्पुरुषे समासे दायादशब्द उत्तरपदे दायाद्यवाचि पूर्वपदं प्रकृतिस्वरं भवति। विद्यादायादः। धनदायादः। 'संज्ञायां समजनिषद' इति विद्याशब्दः क्यप्प्रत्ययान्तः। 'उदात्तः' इति च तत्र वर्त्तते, तेनायमन्तोदात्तः। 'कॄपॄवृजिमन्दिनिधाञ्भ्यः क्युः' इति बहुलवचनात् केवलादपि धाञः क्युप्रत्ययः, तेन धनशब्दः प्रत्ययस्वरेणाद्युदात्तः।

अथ विद्यादायाद इति केन षष्ठी? 'स्वामीश्वराधिपतिदायाद' इति। यद्येवम्, 'प्रतिपदविधाना च षष्ठी न समस्यते' इति समासप्रतिषेधः प्राप्नोति? एवं तर्हि शेषलक्षणैवात्र षष्ठी, तस्यास्तु सप्तमी विधीयमाना बाधिका मा विज्ञायीति पुनरभ्यनुज्ञायते।

दायाद्यमिति किम्? परमदायादः। अत्र समासान्तोदात्तत्वमेव भवति॥

पदमञ्जरी

'मूलविभुजादित्वात्कः', दायादस्य भावो दायाद्यम्। किं पुनस्तत्? दायस्यादानं तत्सम्बन्धो वा। इह तु लक्षणयाऽऽदीयमाने दाय एव दायाद्यशब्दो वर्तते।

*अथेत्यादि*। वक्ष्यमाणोऽभिप्रायः। तमेवाविष्करोति—*यद्येवमिति*। *शेषलक्षणैवेति*। सामान्यलक्षणैवात्र षष्ठी, न प्रतिपदमित्येवशब्दस्यार्थः। यदि शेषलक्षणैवात्र षष्ठी, किमर्थं पुनस्तत्र विधानम्? इत्याह—*तस्यास्त्विति*। सप्तमी तावद्विधेया, अप्राप्तत्वात्। तत्र यदि सैव विधीयेत, ततोऽसौ विशेषविहितत्वात्

न्यासः

मूलविभुजादित्वात् कः। दायादस्य कर्म दायाद्यम्। किं पुनस्तत्? दाय एव। स हि दायादिरादीयमानः कर्म भवति। उदात्त इति च तत्र वर्तत इति। 'मन्त्रे वृष' इत्यादेः सूत्रात्। ननु च निपूर्वः सूत्रे धातुरुदात्तः, तत् कथं केवलाद् भवति? इत्याह—बहुलवचनादित्यादि। अथेत्यादि। वक्ष्यमाणोऽभिप्रायः। येनाभिप्रायेण पृष्टवांस्तमाविष्कर्तुमाह—यद्येवमित्यादि। यदि 'स्वामीश्वराधिपति' इत्यादिना षष्ठी विधीयते। सप्तम्येव हि विधातव्या, न षष्ठी, तस्याः 'शेषे' इत्येव सिद्धत्वात्? इत्यत आह—तस्यास्त्वित्यादि। यदि सप्तम्येव विधीयते, ततोऽसौ विशेषविहितत्वात् षष्ठ्या बाधिका विज्ञायेत, न त्वेवं विज्ञायेतेति पुनरनयैव शेषलक्षणषष्ठ्यभ्यनुज्ञायते, न त्वपूर्वा विधीयते। तेनाप्रतिपदविहितत्वाद् भवत्येव समासः। परमदायाद इति। अत्र पूर्वपदं पूजावाचि, न दायाद्यवाचि॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## प्रतिबन्धि चिरकृच्छ्रयोः ॥ ६ ॥

तत्पुरुषे समासे चिरकृच्छ्रयोरुत्तरपदयोः प्रतिबन्धिवाचि पूर्वपदं प्रकृतिस्वरं भवति । गमनचिरम् । गमनकृच्छ्रम् । व्याहरणचिरम् । व्याहरणकृच्छ्रम् । गमनव्याहरणशब्दौ ल्युडन्तौ, तयोर्लित्स्वरः । गमनं च यच्चिरं चेति विशेषणसमासोऽयम्, मयूरव्यंसकादिर्वैष द्रष्टव्यः । गमनं हि कारणविकलतया चिरकालभावि कृच्छ्रयोगि वा प्रतिबन्धि जायते ।

प्रतिबन्धीति किम् ? मूत्रकृच्छ्रम् ॥

## पदेऽपदेशे ॥ ७ ॥

अपदेशः = व्याजः, तद्वाचिनि तत्पुरुषे समासे पदशब्द उत्तरपदे

### पदमञ्जरी

षष्ठ्या बाधिका विज्ञायेत, मैवं विज्ञायीति पुनः सैव शेषलक्षणा षष्ठ्यभ्यनुज्ञायते, न त्वपूर्वा विधीयत इत्यर्थः ॥

*प्रतिबन्धि चिरकृच्छ्रयोः* ॥ कार्यसिद्धिं प्रतिबध्नातीति *प्रतिबन्धि*, आवश्यके णिनिः । *विशेषणसमास इति* । ननु च सामानाधिकरण्ये सति स भवति, न चेह तदस्ति; गमनशब्दस्य गतिवाचित्वात् चिरशब्दस्य च कालवाचित्वात् ? नैष दोषः; चिरकालभाविनि गमनेऽत्र चिरशब्दो वर्तते । *मयूरव्यंसकादिर्वैष इति* । गमनमत्र विशेष्यम्, तद्विशेषणे तु चिरकृच्छ्रे, अतो विशेष्यस्य पूर्वनिपातार्थं मयूरव्यंसकादित्वमेष्टव्यमिति भावः । पूर्वपदस्य प्रतिबन्धिवाचित्वमुपपन्नयति । *गमनं हीत्यादि* । कारणवैकल्याद्धि चिरकालभावि गमनं कृच्छ्रयोगि च, कृच्छ्रम् = दुःखम , तद्योगि च कार्यसिद्धेः प्रतिबन्धि जायते ॥

पदेऽपदेशे ॥ उच्चारः = पुरीषक्रिया ॥

### न्यासः

प्रतिबन्धि चिरकृच्छ्रयोः ॥ कार्यसिद्धिं प्रतिबध्नाति विहन्तीति प्रतिबन्धि । ताच्छील्य आवश्यके वा णिनिः । विशेषणसमासे कृत इति । ननु च विशेषणसमासः सामानाधिकरण्ये भवति; न चेदं सामानाधिकरण्यम्, कथं पुनरत्र पूर्वपदं प्रतिबन्धि भवति ? इत्याह—गमनमित्यादि । अचिरकालभाविनि गमने कार्यसिद्धिर्निष्पद्यते । कृच्छ्रयोगि चेति । कृच्छ्रम् = दुःखम्, तद्योगिनि गमने गन्ता प्राप्यमर्थं दुःखेनाभिहन्यमानो न प्राप्नोति । तस्माच्चिरकालभावि कृच्छ्रयोगि वा यद् गमनं तत् कार्यसिद्धेः प्रतिबन्धि जायते ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


पूर्वपदं प्रकृतिस्वरं भवति । मूत्रपदेन प्रस्थितः । उच्चारपदेन प्रस्थितः । मूत्रशब्दः 'सिचिमुच्योष्ट्रूच' इति ष्ट्रन्प्रत्ययान्तः, मूत्रयतेर्वा घञन्त आद्युदात्तः । उच्चारशब्दोऽपि घञन्तः 'थाथघञ्क्ताजबित्रकाणाम्'[1] इत्यन्तोदात्तः । विशेषणसमासोऽयम्, मयूरव्यंसकादिर्वा ।

अपदेश इति किम् ? विष्णोः पदं विष्णुपदम् ॥

## निवाते वातत्राणे ॥ ८ ॥

निवातशब्दे उत्तरपदे वातत्राणवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति । कुट्येव निवातं कुटीनिवातम् । शमीनिवातम् । कुड्यनिवातम् । वातस्याभावो निवातम्, अर्थाभाव इत्यव्ययीभावः । निरुद्धो वातोऽस्मिन्निति वा निवातमिति बहुव्रीहिः । तत्र कुड्यादिहेतुके निवाते कुड्यादयो वर्तमानाः समानाधिकरणेन निवातशब्देन सह समस्यन्ते । कुटी-शमीशब्दौ गौरादिङीषन्तावन्तोदात्तौ । कुड्यशब्दोऽपि 'कवतेर्यत् डकिच्च' इति यत्प्रत्ययान्त आद्युदात्त इत्येके । ड्यक्प्रत्ययान्तोऽन्तोदात्त इत्यपरे ।

वातत्राण इति किम् ? राजनिवाते वसति । सुखं मातृनिवातम् । निवातशब्दोऽयं पार्श्ववाची रूढिशब्दः, तत्रोभयत्र षष्ठीसमासः ॥

### पदमञ्जरी

*निवाते वातत्राणे* ॥ *ड्यक्प्रत्ययान्तोऽन्तोदात्त इत्यपरे इति* । 'कवतेर्ड्यक्' इति सूत्रमधीयते । डकारस्येत्संज्ञा न भवति; गुणप्रतिषेधार्थात्ककारानुबन्धात् ॥

### न्यासः

पदेऽपदेशे ॥ व्याज इति । छद्मेत्यर्थः । मूत्रपदेनेति । मूत्रव्याजेनेत्यर्थः । ष्ट्रन्प्रत्ययान्त इति । 'सिविमुच्योष्टेरूच' इत्यत्र ष्ट्रन्नित्यस्यानुवृत्तेः । मूत्रयतेरिति । 'मूत्र प्रस्रवणे' । उच्चारशब्दोऽपि घञन्तः । थाथादीत्यादि । घञन्तत्वात् ॥

निवाते वातत्राणे ॥ कुड्यादिहेतुक इत्यादि । कुड्यादिहेतुके वर्तन्ते; कार्ये कारणोपचारात् । भवति कारणे कार्योपचारः, यथा—'सर्वमिदं पुरातनं कर्म भुज्यते' इति । कवतेरिति । 'कु शब्दे' । आद्युदात्त इति । 'यतोऽनावः' इत्यनेन । ड्यक्प्रत्ययान्तोऽन्तोदात्त इत्यपर इति । ते 'कवतेर्ड्यक्' इति सूत्रमधीयते ॥

---

१. क्वचिद् 'जबित्रकाणाम्' इति नास्ति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


## शारदेऽनार्तवे ॥ ९ ॥

ऋतौ भवमार्तवम्। अनार्तववाचिनि शारदशब्दे उत्तरपदे तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। रज्जुशारदमुदकम्। दृषत्शारदाः सक्तवः। शारदशब्दोऽयं प्रत्यग्रवाची, तस्य नित्यसमासः, अस्वपदविग्रह इष्यते। सद्यो रज्जूद्धृतमुदकं प्रत्यग्रमनुपहतं रज्जुशारदमुच्यते। रज्जुशब्दः 'सृजेरसुम् च' इति उप्रत्ययान्त आदिलोपश्च। 'धान्ये नित्' इति च तत्र वर्त्तते, तेनाद्युदात्तः। दृषत्-शब्दः 'दृणातेः षुग् ह्रस्वश्च' इति अदिक्प्रत्ययान्तोऽन्तोदात्तः।

अनार्त्तव इति किम्? परमशारदम्। उत्तमशारदम्। शरदि ऋतुविशेषे भवं यत्तदिह शारदम्॥

## अध्वर्युकषाययोर्जातौ ॥ १० ॥

अध्वर्युं, कषाय — इत्येतयोर्जातिवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। प्राच्याध्वर्युः। कठाध्वर्युः। कलापाध्वर्युः।

### पदमञ्जरी

*शारदेऽनार्तवे*॥ उदाहरणे रज्जूद्धृते रज्जुशब्दो दृषत्पिष्टेषु दृषच्छब्दः, ततः कर्मधारयेऽस्वपदविग्रहः। 'सृजेरसुम् च' इत्यत्र 'स्कन्देः सलोपश्च' इत्यतः सलोप इति वर्तते, तेन सृजेरन्त्यादचः परोऽयमसुम्, सलोपे यणादेशेऽसुमः सकारस्य जश्त्वे च रज्जुरिति भवति॥

### न्यासः

शारदेऽनार्तवे॥ रज्जुशारदम्, दृषच्छारदमेति। योगविभागात् समासः। शारदशब्दोऽयं प्रत्यग्रवाचीति। प्रत्यग्रम् = अभिनवम्, अचिरकालभावीत्यर्थः। एतेन नानार्थवाचित्वं शारदशब्दस्य दर्शयति। नित्यसमास इति। महाविभाषायाः प्रकृतायां व्यवस्थितविभाषात्वात्। अनुपहतमिति। रजोभिः। अनुपहतत्वं तु सद्य उद्धृतत्वात्। उप्रत्ययान्त इति। 'सृजेरसुम् च' इत्यत्र 'भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्य उः' इत्यत उकारप्रत्ययानुवृत्तेः। आदिप्रत्ययान्त इति। 'दृणातेः षुग् ह्रस्वश्च' इत्यत्र 'शृदृभसोऽदिः' इत्यतोऽदिप्रत्ययानुवृत्तेः।

परमशारदमिति। शरदि भवं शारदम्। 'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्' इति सूत्रेणोत्पन्नोऽयं शब्दः॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



एते समानाधिकरणसमासा जातिवाचिनो नियतविषयाः । तत्र प्राच्यशब्दो यत्प्रत्ययान्त आद्युदात्तः । कठशब्दः पचाद्यचि व्युत्पादितः, ततः कठेन प्रोक्तमिति 'वैशम्पायनान्तेवासिभ्यश्च' इति णिनिः, तस्य 'कठचरकाल्लुक्' इति लुक् । कलापिना प्रोक्तमिति 'कलापिनोऽण्' तस्मिन् 'इनण्यनपत्ये' इति प्रकृतिभावे प्राप्ते 'नान्तस्य टिलोपे सब्रह्मचारिपीठसर्पिकलापिकौथुमितैतिलिजाजलिलाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणामुपसंख्यानम्' इति टिलोपः । तदेवं कलापशब्दोऽन्तोदात्तः । सर्पिर्मण्डकषायम् । उमापुष्पकषायम् । दौवारिककषायम् । षष्ठीसमासव्युत्पादिता रूढिशब्दा एते । तत्र सर्पिर्मण्डशब्दः, उमापुष्पशब्दश्च षष्ठीसमासावन्तोदात्तौ । दौवारिकशब्दोऽपि 'द्वारे नियुक्तः' इति ठकि सत्यन्तोदात्त एव ।

जाताविति किम् ? परमाध्वर्युः । परमकषायः ॥

## सदृशप्रतिरूपयोः सादृश्ये ॥ ११ ॥

सदृश, प्रतिरूप – इत्येतयोरुत्तरपदयोः सादृश्यवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति । पितृसदृशः । मातृसदृशः । पितृ-

### पदमञ्जरी

*अध्वर्युकषाययोर्जातौ* ॥ *नियतविषया इति*। वरणविशेषनियता इत्यर्थः ॥

*सदृशप्रतिरूपयोः सादृश्ये*[1] ॥ सदृशग्रहणमनर्थकम् ; तृतीयासमासवचनात् । सदृशशब्देन तृतीयासमास उच्यते—'पूर्वसदृशसमोनार्थ' इति, तत्र तृतीयापूर्व

### न्यासः

अध्वर्युकषाययोर्जातौ ॥ जातिवाचिनो नियतविषया इति । नियतो विषयो येषामिति विग्रहः । नियतविषयत्वं तु जातिविशेषत्व एव वर्तमानत्वात् । अध्वर्युप्रभृतीनाम् 'गोत्रञ्च चरणैः सह' इति चरणत्वाज्जातित्वम् । यत्प्रत्ययान्त इति । 'द्युप्रागपागुदक्प्रतीचो यत्' इति । कठशब्दः पचाद्यचि व्युत्पादित इति । 'कठ कृच्छ्रजीवने' इत्यस्मात् । तदेवमिति । यस्मादेवं कालापशब्दोऽणन्तः, तस्मात् प्रत्ययस्वरेणान्तोदात्तः । ठकि सत्यन्तोदात्त इति । 'कितः' इत्यनेन ॥

सदृशप्रतिरूपयोः सादृश्ये ॥ पितृसदृश इति । 'तुल्यार्थैः' इत्यादिना षष्ठी,

१. मुद्रितपुस्तके 'सदृशप्रतिरूपयोर्जातौ' इति सूत्रप्रतीकं प्रमादजम् । ( प्र० सं० सं० )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


मातृशब्दावुणादिष्वन्तोदात्तौ निपातितौ ।

षष्ठीसमासार्थं च सदृशग्रहणमिह तदलुकि षष्ठ्याः प्रयोजयति:—दास्याः सदृशः, वृषल्याः सदृश इति । अत्र दासी-वृषलीशब्दयोरन्तोदात्तत्वाद् 'उदात्तयणो हल्पूर्वात्' इति विभक्तिरन्तोदात्ता । पितृप्रतिरूपः । मातृप्रतिरूपः ।

पदमञ्जरी

पदं प्रकृतिस्वरं भवतीत्येव सिद्धमत आह—*षष्ठीसमासार्थं चेति* । तुल्यार्थयोगे षष्ठ्यपि विधीयते, तत्र यदा तस्याः षष्ठ्याः समासः क्रियते, तदापि यथा स्यादित्येवमर्थं सदृशग्रहणम् । ननु चानभिधानात्षष्ठीसमासो न भविष्यति; त्रैशब्द्यं हि नः साध्यम्—मातुः सदृशः, मात्रा सदृशः, मातृसदृश इति; एतच्च विनापि षष्ठीसमासेन सिद्ध्यत्येव ? अत आह—*इहेत्यादि* । अलुकि सति रूपविशेषस्य विद्यमानत्वादवश्यकर्तव्यः षष्ठीसमासः, तदर्थं चेह सदृशग्रहणं कर्तव्यम् । यद्येवम्, तृतीयासमासे सदृशग्रहणं न कर्तव्यम्, षष्ठीसमास एवास्तु ? यत्र तर्हि षष्ठ्यर्थो नास्ति तदर्थं तत्र सदृशग्रहणम्, यथा—विद्यया सदृशो विद्यासदृश इति । न ह्यत्र षष्ठ्यर्थोऽस्ति, किन्तु तृतीयार्थः, विद्यया हेतुना सदृश इत्यर्थः, अन्यो देवदत्तादिरत्र प्रतियोगी । अपर आह—तृतीयासमासोऽप्यलुकि प्रयोजयति—मनसः संज्ञायां मनसासदृश इति । *अत्रेत्यादि* । 'दृशि दर्शनस्पर्शनयोः', 'दंशेष्टो न आ च' इति टप्रत्ययः, नकारस्य चाकारः, टित्त्वान्ङीप्,

न्यासः

तृतीया च, 'पूर्वसदृश' इत्यादिना समासः । पितृमातृशब्दावुणादिष्वन्तोदात्तौ निपातिताविति । 'नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृपितृदुहितृ' इत्यत्र ।

अथ सदृशग्रहणं किमर्थम्, यावता मातृसदृशः पितृसदृश इत्यत्र 'तत्पुरुषे तुल्यार्थ' इत्येव सिद्धम् ? इत्यत आह—षष्ठीसमासार्थञ्चेत्यादि । तुल्यार्थे हि प्रयोगे षष्ठ्यपि विधीयते । तत्र यदा मातृसदृश इति षष्ठीसमासः क्रियते, तदपि यथा स्यादित्येवमर्थं सदृशग्रहणम् । सति त्वस्यारम्भे तृतीयासमासेऽपि सदृशग्रहणं कर्तव्यमित्य आह - इहेत्यादि । दास्याः सदृशः, वृषल्याः सदृश इति । अत्र 'षष्ठ्या आक्रोशे' इत्यलुकि कृते षष्ठीसमासस्तत्सदृशग्रहणं प्रयोजयति; अलुकि सति रूपविशेषस्य विद्यमानत्वात् । यदि षष्ठीसमासार्थं सदृशग्रहणमिह क्रियते, तृतीयासमासो न कर्तव्यः; विशेषाभावात् ? नैतदस्ति; तत्रापि हि कर्तव्य एव यत्र षष्ठ्यर्थो नास्ति तदर्थः, यथा—विद्यया सदृशो विद्यासदृश इति, न ह्यत्र षष्ठ्यर्थो विद्यते, किं तर्हि ? तृतीयार्थः विद्यया हेतुना सदृश इत्यर्थः । अत्रेत्यादि । तत्र दासीशब्दस्य ङीबुदात्त-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सादृश्ये इति किम्? परमसदृशः। उत्तमसदृशः। समासार्थोऽत्र पूज्यमानता, न सादृश्यम्॥

## द्विगौ प्रमाणे ॥ १२ ॥

द्विगावुत्तरपदे प्रमाणवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति। प्राच्यसप्तशमः[1]। गान्धारिसप्तशमः। सप्त शमाः प्रमाणमस्येति मात्रच उत्पन्नस्य 'प्रमाणे लो द्विगोर्नित्यम्' इति लुक्। प्राच्यश्चासौ सप्तशमश्चेति प्राच्यसप्तशमः। प्राच्यशब्द आद्युदात्तः। गान्धारिशब्दः कर्दमादित्वादाद्युदात्तः, मध्योदात्तो वा।

द्विगाविति किम्? व्रीहिप्रस्थः। प्रमाण इति किम्? परमसप्तशमः॥

पदमञ्जरी

यस्येतिलोपः, 'अनुदात्तस्य च यत्रोदात्तलोपः' इति ङीप उदात्तत्वम्। वृषलशब्दाज्जातिलक्षणो ङीष्॥

*द्विगौ प्रमाणे*॥ 'कर्दमादीनाञ्च' इत्यत्र मकरकुम्कुटपारेवतेत्यादेः सूत्रादादिग्रहणमनुवर्तते। 'अथ द्वितीयं प्रागीषात्' इत्यतो द्वितीयग्रहणम्। *परमसप्तसममिति*। समाहारे द्विगुः, पात्रादित्वान्नपुंसकत्वम्, मूलोदाहरणे तु तद्धितार्थे द्विगुरुत्तरपदम्॥

न्यासः

निवृत्तिस्वरेणान्तोदात्तार्थः। 'दशि सेवने' इति 'दंशेष्टनौ न आ च' इति टप्रत्ययान्तो नकारस्य चाकारादेशः। 'टिड्ढाणञ्' इति ङीप्, यस्येतिलोपः, 'अनुदात्तस्य च यत्रोदात्तलोपः' इत्युदात्तत्वम्। वृषलीशब्दः 'जातेरस्त्रीविषयात्' इति ङीषन्तोऽन्तोदात्तो भवति प्रत्ययस्वरेण॥

द्विगौ प्रमाणे॥ प्राच्यसप्तशम इति। षष्ठीसमासः प्राच्यशब्द आद्युदात्त इति। यत्प्रत्ययान्तत्वात् 'यतोऽनावः' इति। गान्धारिशब्दः कर्दमादित्वादाद्युदात्तो मध्योदात्तो वेति। 'कर्दमादीनाञ्च' इत्यत्रादिग्रहणं चानुवर्तते, तत्र यदादेरुदात्तो विधीयते तदाऽऽद्युदात्तो भवति; यदा तु द्वितीयस्य तदा मध्योदात्तः।

व्रीहिप्रस्थ इति। षष्ठीसमासः। परमसप्तशम इति। सप्तानां शमानां समाहारः सप्तशमम्। मूलोदाहरणे तु तद्धितार्थे द्विगोरुत्तरपदत्वम्॥

१. मुद्रितपदमञ्जर्यां समशब्दो दन्त्यादिः, न्यासे पुनस्तालव्यादि:, स एव युक्तः; 'शमस्तु चतुरङ्गुलः' इति यादवकोशप्रामाण्यात्। ( प्र० सं० सं० )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


## गन्तव्यपण्यं वाणिजे ॥ १३ ॥

वाणिजशब्द उत्तरपदे तत्पुरुषे समासे गन्तव्यवाचि पण्यवाचि च पूर्वपदं प्रकृतिस्वरं भवति । मद्रवाणिजः । काश्मीरवाणिजः । गान्धारिवाणिजः । मद्रादिषु गत्वा व्यवहरन्तीत्यर्थः । सप्तमीसमासा एते । तत्र मद्रशब्दो रक्प्रत्ययान्तत्वादन्तोदात्तः । काश्मीरशब्दोऽपि पृषोदरादिषु मध्योदात्तः । गान्धारिशब्दः कर्दमादिषु पठ्यते, तत्र 'कर्दमादीनां वा' इति पक्षे आद्युदात्तो भवति, द्वितीयो वा ।

पण्य – गोवाणिजः । अश्ववाणिजः । गोशब्दोऽन्तोदात्तः । अश्वशब्द आद्युदात्तः ।

गन्तव्यपण्यमिति किम् ? परमवाणिजः । उत्तमवाणिजः ॥

## मात्रोपज्ञोपक्रमच्छाये नपुंसके ॥ १४ ॥

मात्रा, उपज्ञा, उपक्रम, छाया – एतेषूत्तरदेषु नपुंसकवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति । भिक्षामात्रं न ददाति याचितः । समुद्रमात्रं न सरोऽस्ति किञ्चन ।

मात्रशब्दोऽयं वृत्तिविषय एव तुल्यप्रमाणे वर्त्तते । तत्र भिक्षायास्तुल्यप्रमाणमित्यस्वपदविग्रहः षष्ठीसमासः । तत्र भिक्षाशब्दः 'गुरोश्च

### पदमञ्जरी

*गन्तव्यपण्यं वाणिजे* ॥ वणिगेव वाणिजः, प्रज्ञादित्वादण् । *सप्तमीसमासा एत इति* । 'सप्तमी' इति योगविभागात् । गोवाणिजादयस्तु षष्ठीसमासाः ॥

*मात्रोपज्ञोपक्रमच्छाये नपुंसके* ॥ फिषिति आदिमेन योगेन *शान्तनवीयं*

### न्यासः

गन्तव्यपण्यं वाणिजे ॥ गमनीयम् = गन्तव्यम् । पण्यम् = व्यवहर्तव्यमिति । मद्रवाणिज इति । मद्रेषु यो व्यवहरति स एवमुच्यते । सप्तमीसमास इति । 'सप्तमी' इति योगविभागात् । रक्प्रत्ययान्तत्वादिति । 'स्फायितञ्चि' इत्यादिना मदे रकं विधाय व्युत्पादितत्वात् ॥

मात्रोपज्ञोपक्रमच्छाये नपुंसके ॥ तुल्यप्रमाणं वर्तत इति । तुल्यं प्रमाणं यस्येति विग्रहः । अस्वपदविग्रह इति । स्वपदविग्रहः कस्मान्न भवति ? तादृशं हि वाक्यं कर्तव्यं यथा समासार्थः प्रतीयते । भिक्षामात्रमिति । अस्य च भिक्षायास्तुल्यप्रमाण-


CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



हलः' इत्यप्रत्ययान्तोदात्तः। समुद्रशब्दोऽपि फिषि 'पाटलापालङ्काम्बा-सागरार्थानाम्' इत्यन्तोदात्त एव।

उपज्ञा – पाणिनोपज्ञम् अकालकं व्याकरणम्। व्याड्युपज्ञं दुष्करणम्। आपिशल्युपज्ञं गुरुलाघवम्। षष्ठीसमासा एते। तत्र पाणिनोऽपत्यमित्यणन्तः पाणिनशब्दः प्रत्ययस्वरेणान्तोदात्तः। व्याडिरिञन्तत्वादाद्युदात्तः। तद्वदापिशलिः।

उपक्रम – आढ्योपक्रमं प्रासादः। दर्शनीयोपक्रमम्। सुकुमारोपक्रमम्। नन्दोपक्रमाणि मानानि। एतेऽपि षष्ठीसमासा एव। तत्रैत्यैनं ध्यायन्तीत्याढ्यः। 'घञर्थे कविधानम्' इति कप्रत्यय आङ्पूर्वाद् ध्यायतेः पृषोदरादित्वाद् ह्रस्य ढत्वम्। तदयमाढ्यशब्दस्थाथादिस्वरेणान्तोदात्तः। दर्शनीयशब्दो रित्त्वादुपोत्तमोदात्तः। सुकुमारशब्दो 'नञ्सुभ्याम्' इत्यन्तोदात्तः। नन्दशब्दः पचाद्यचि व्युत्पादितः। उपज्ञोपक्रमान्तस्य तत्पुरुषस्य नपुंसकलिङ्गता 'उपज्ञोपक्रमं तदाद्याचिख्यासायाम्' इति।

छाया – इषुच्छायम्। धनुश्छायम्। इषुशब्दः 'इषेः किच्च' इत्युप्रत्ययान्तः, तत्र च 'धान्ये नित्' इति वर्त्तते, तेनाद्युदात्तः। धनुःशब्दोऽपि 'नब्विषयस्यानिसन्तस्य' इत्याद्युदात्त एव। इषूणां छायेति षष्ठीसमासः। 'छाया बाहुल्ये' इति नपुंसकलिङ्गता।

नपुंसक इति किम्? कुड्यच्छाया॥

पदमञ्जरी

चतुष्कं सूत्रमुपलक्षयति। तत्र समुद्रशब्दः सागरार्थत्वादन्तोदात्तः॥

न्यासः

मित्येषोऽर्थः। न चायं स्वपदविग्रहेण शक्यः प्रतिपादयितुम्; मात्रशब्दस्य तुल्यप्रमाणवृत्तित्वात्। स हि समास एव तुल्यप्रमाणे वर्तते, न वाक्ये। अत एवोक्तम्—मात्रशब्दोऽयं वृत्तिविषय इत्यादि। वृत्तिरिह समासवृत्तिरेव विषयः। अप्रत्ययान्तोऽन्तोदात्त इति। टापा सहैकादेश उदात्तेनोदात्तत्वात्।

उप्रत्ययान्त इति। 'इषेः किच्च' इत्यत्र 'भृमृशी' इत्यादेः सूत्रादुप्रत्ययानुवृत्तेः॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सुखप्रिययोर्हिते ॥ १५ ॥

सुख, प्रिय – इत्येतयोरुत्तरपदयोर्हितवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति । गमनसुखम् । वचनसुखम् । व्याहरणसुखम् । सुख ।

प्रिय – गमनप्रियम् । वचनप्रियम् । व्याहरणप्रियम् ।

समानाधिकरणसमासा एते । तत्र सुखप्रियशब्दौ तद्धेतावायत्यां प्रीतिकरे वर्तेते । तद्धि हितं यदायत्यां प्रीतिं करोति । गमनादिषु ल्युडन्तेषु लित्स्वरः ।

हित इति किम् ? परमसुखम् । परमप्रियम् ॥

प्रीतौ च ॥ १६ ॥

प्रीतौ गम्यमानायां सुख, प्रिय – इत्येतयोरुत्तरपदयोस्तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति । ब्राह्मणसुखं पायसम् । छात्त्रप्रियोऽनध्यायः । कन्याप्रियो मृदङ्गः ।

सुखप्रिययोः प्रीत्यव्यभिचारादिह प्रीतिग्रहणं तदतिशयप्रतिपत्त्य-

पदमञ्जरी

*सुखप्रिययोर्हिते* ॥ *समानाधिकरणसमासा एते इति* । गमनादीनां विशेषणत्वात्पूर्वनिपातं मन्यते । अथ तु सुखप्रिययोर्विशेषणत्वं तदा मयूरव्यंसकादित्वमेष्टव्यम् । *आयत्यामिति* । परिणामे, आगामिकाले, भाविकाल इति यावत् ॥

*प्रीतौ च* ॥ इह तु 'सुखप्रिययोः' इत्येतावत्सूत्रं कृत्वा 'हिते च' इति वक्तव्यम्, तत्राद्ये सूत्रे सुखप्रिययोः प्रीत्यव्यभिचारादेव प्रीतौ गम्यमानायां भविष्यति ? तत्राह—*सुखप्रिययोरित्यादि* । ब्राह्मणशब्दोऽणन्तः । छात्त्रशब्दः 'छत्त्रा-

न्यासः

सुखप्रिययोर्हिते ॥ तत्र सुखप्रियशब्दावित्यादि । तच्छब्देन सुखप्रिययोः प्रत्यवमर्शः, तयो सुखप्रिययोः हेतुरायत्याम् = जन्मान्तरे प्रीतिकरः । तत्र सुखप्रियशब्दौ वर्तेते । किं कारणमेवं व्याख्यायते ? इत्याह—तद्धि हितमित्यादि । हि तथा चेत्यर्थः । तत्पुरुषे प्रकृतिभावोऽयं विधीयते । एष हि तत्पुरुषो हितवाची भवति, यदि सुखप्रियशब्दावुत्तरपदे हितहेतौ वर्तेते ।। हितञ्च किम् ? यदायत्यां प्रीतिं करोति । कथं पुनः सुखप्रियशब्दौ तद्धेतौ वर्तेते ? कारणे कार्योपचाराद्, यथा— नड्वलोदकं पादरोग इति ॥

प्रीतौ च ॥ अथ प्रीतौ चेतीदं ग्रहणं किमर्थम्, यावता सुखप्रिययोः प्रीत्यव्यभिचारात् । एवं प्रीतौ गम्यमानायां भविष्यति ? इत्यत आह—सुखप्रिययोः प्रीत्ये-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



र्थम् । ब्राह्मणच्छात्त्रशब्दौ प्रत्ययस्वरेणान्तोदात्तौ । कन्याशब्दः स्वरितान्तः ।

प्रीताविति किम् ? राजसुखम् । राजप्रियम् ॥

स्वं स्वामिनि ॥ १७ ॥

स्वामिन्शब्द उत्तरपदे तत्पुरुषे समासे स्ववाचि पूर्वपदं प्रकृतिस्वरं भवति । गोस्वामी । अश्वस्वामी । धनस्वामी । अश्वधनगवां कथित एव स्वरः ।

स्वमिति किम् ? परमस्वामी ॥

पत्यावैश्वर्ये ॥ १८ ॥

पतिशब्द उत्तरपदे ऐश्वर्यवाचिनि तत्पुरुषे पूर्वपदं प्रकृतिस्वरं भवति । गृहपतिः । सेनापतिः । नरपतिः । धान्यपतिः । 'गेहे कः' इति प्रकृतिस्वरेणान्तोदात्तो गृहशब्दः । सह इनेन वर्त्तते इति 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इति सेनाशब्द आद्युदात्तः । 'नॄ नये' एतस्माद 'ऋदोरप्' इति अप्प्रत्ययान्त आद्युदात्तो नरशब्दः । धान्यमन्तःस्वरितम् ।

पदमञ्जरी

दिभ्यो णः' इति णप्रत्ययान्तः । *कन्याशब्दः स्वरितान्त इति* । 'तिल्यशिक्यमर्त्यकाश्मर्यधान्यकन्याराजन्यमनुष्याणामन्तः' इति फिषि पाठात् ॥

*पत्यावैश्वर्ये* ॥ *धान्यमन्तःस्वरितमिति* । अनन्तरपठितेन फिट्सूत्रेण । गवादीनां तु पूर्वमेव स्वरकथनम् ॥

न्यासः

त्यादि । प्रीतिग्रहणमन्तरेणापि सिद्धे सुखप्रिययोः प्रीत्यव्यभिचाराद् यदिह प्रीतिग्रहणं क्रियते, तदतिशयिता या प्रीतिस्तस्यां यथा स्यादित्येवमर्थम् । ब्राह्मणच्छात्त्रशब्दौ प्रत्ययस्वरेणान्तोदात्ताविति । ब्राह्मणशब्दोऽणन्तः । छात्त्रशब्दः 'छत्रादिभ्यो णः' इति णप्रत्ययान्तः । कन्याशब्दः स्वरितान्त इति । अघ्न्यादिषु तथा भूतस्यैव पाठात् ।

राजसुखं राजप्रियमिति । अत्र यद्यपि सुखप्रिययोः प्रीत्यव्यभिचारित्वात् प्रीतिर्गम्यते, तथाप्यतिशयेन या प्रीतिः सा न गम्यत इति भवति प्रत्युदाहरणम् ॥

स्वं स्वामिनि ॥ पत्यावैश्वर्ये ॥ धान्यमन्तःस्वरित इति । ण्यदन्तत्वात् तित्स्वरेण ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



ऐश्वर्यमिति किम् ? ब्राह्मणो वृषलीपतिः। वृषल्या भर्तेत्यर्थः ॥

नभूवाक्चिद्दिधिषु ॥ १९ ॥

पतिशब्द उत्तरपदे ऐश्वर्यवाचिनि तत्पुरुषे समासे भू, वाक्, चित्, दिधिषू – इत्येतानि पूर्वपदानि प्रकृतिस्वराणि न भवन्ति। पूर्वेण प्राप्तः स्वरः प्रतिषिध्यते। भूपतिः। वाक्पतिः। चित्पतिः। दिधिषूपतिः। षष्ठीसमासा एते समासस्वरेणान्तोदात्ता भवन्ति ॥

वा भुवनम् ॥ २० ॥

पतिशब्द उत्तरपदे ऐश्वर्यवाचिनि तत्पुरुषे समासे भुवनशब्दः पूर्वपदं वा प्रकृतिस्वरं भवति। भुवनपतिः। पूर्वपदप्रकृतिस्वरपक्षे आदिरुदात्तः। 'रञ्जेः क्युन्' इति वर्त्तमाने 'भूसूधूभ्रस्जिभ्यश्छन्दसि' इति क्युन्प्रत्ययान्तो भुवनशब्द आद्युदात्तो व्युत्पादितः।

कथं भुवनपतिरादित्य इति ? 'उणादयो बहुलम्' इति बहुलवचनाद्भाषायामपि प्रयुज्यते ॥

आशङ्काबाधनेदीयस्सु संभावने ॥ २१ ॥

'प्रकृत्या पूर्वपदम्', 'तत्पुरुषे' इति वर्त्तते। आशङ्क, आबाध, नेदी-

पदमञ्जरी

*न भूवाक्चिद्दिधिषु* ॥ भूवादीनां समाहारद्वन्द्वे नपुंसकह्रस्वत्वम्, अत्र पूर्वपदप्रकृतिस्वरप्रतिषेधाद् वृत्तिकारेण पूर्वपदानां स्वरो व्याख्यातः। तत्रादितस्त्रयः क्विबन्ताः। 'अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषूः' इति कूप्रत्ययान्तो दिधिषूशब्दो निपातितः ॥

*वा भुवनम्* ॥ भुवनशब्दो भाषायां बहुलवचनात्साधुः ॥

*आशङ्काबाधनेदीयस्सु सम्भावने* ॥ 'शकि शङ्कायाम्', 'बाधृ विलोडने',

न्यासः

वृषल्या भर्तेत्यर्थ इति। वृषल्याः कामयितेति यावत् ॥

न भूवाक्चिद्दिधिषु ॥ 'भुवः संज्ञान्तरयोः' इति क्विपा भूशब्दो धातुस्वरेणान्तोदात्तः। एवं वाक्शब्दः, वच। 'क्विब्वचिप्रच्छि' इत्यादिना क्विप्। चिदिति। 'चिती संज्ञाने' इत्यस्माद् 'अन्येभ्योऽपि दृश्यते' इति क्विप्। 'नृतिशृध्योः कूः' इत्यधिकृत्य 'अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषूः' इति दिधिषूशब्दः कूप्रत्ययान्तोऽन्तोदात्त इति ॥

वा भुवनम् ॥ आशङ्काबाधनेदीयःसु सम्भावने ॥ 'शकि शङ्कायाम्' इत्येत-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



यस्—इत्येतेषूत्तरपदेषु सम्भावनवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति । अस्तित्वाध्यवसायः[1] = सम्भावनम् । गमनाशङ्कं वर्त्तते । गमनमाशङ्क्यते इति सम्भाव्यते । वचनाशङ्कम् । व्याहरणाशङ्कम्[2]।

आबाध – गमनाबाधम् । वचनाबाधम् । व्याहरणाबाधम् । गमनं बाध्यत इति सम्भाव्यते ।

नेदीयस् – गमननेदीयः । व्याहरणनेदीयः । गमनमतिनिकटतरमिति सम्भाव्यते ।

सम्भावन इति किम् ? परमनेदीयः । पूर्वपदानि ल्युडन्तान्युक्तस्वराणि ॥

## पूर्वे भूतपूर्वे ॥ २२ ॥

पूर्वशब्दे उत्तरपदे भूतपूर्ववाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति । आढ्यो भूतपूर्वं आढ्यपूर्वः । पूर्वशब्दो वृत्तिविषये भूतपूर्वे वर्त्तते तत्र, 'विशेषणं विशेष्येण' इति समासः । मयूरव्यंसकादिर्वा द्रष्टव्यः । दर्शनीयपूर्वः । सुकुमारपूर्वः ।

### पदमञ्जरी

आङ्पूर्वाभ्यां कर्मणि घञ् । अतिशयेनान्तिको नेदीयः, 'अन्तिकबाढयोर्नेदसाधौ' । अस्तित्वाध्यवसायः = अस्तित्वनिश्चयः । गमनाशङ्कादयो विशेषणसमासाः, मयूरव्यंसकादयो वा ॥

*पूर्वे भूतपूर्वे ॥ आढ्यो भूतपूर्व इति ।* यः पूर्वमाढ्य आसीत्स एवमुच्यते ।

### न्यासः

स्माद् 'गुरोश्च हलः' इत्यकारप्रत्ययः । केचित्तु घञन्तस्य शङ्काशब्दस्य ग्रहणमिति वर्णयन्ति । 'बाधृ लोडने' इत्यस्मादाङ्पूर्वाद् घञि आबाधः । अत्यर्थमन्तिकं नेदीयः । अन्तिकशब्दस्य 'अन्तिकबाढयोर्नेदसाधौ' इतीयसुनि परतो नेदादेशः । अस्तित्वाध्यवसाय इति । अस्तित्वनिश्चय इत्यर्थः । गमनाशङ्कमिति । षष्ठीसमासः । क्रियाविशेषणत्वान्नपुंसकलिङ्गम्, लोकाश्रयत्वाद्वा लिङ्गस्य ॥

पूर्वे भूतपूर्वे ॥ आढ्यो भूतपूर्व इति । यः पूर्वमाढ्य आसीत् स एवमुच्यते ।

---

१. 'अस्तित्वनिश्चयः' इति पाठान्तरम् मौलिकम् तत्रागुरुम्।

२. 'व्याकरणशङ्कम्' इति क्वचित् पठ्यते ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


भूतपूर्वं इति किम् ? परमपूर्वः । उत्तमपूर्वः । अत्र परमश्चासौ पूर्वश्चेति समासः, न तु परमो भूतपूर्वं इति । तथा च सत्युदाहरणमेव भवति ॥

सविधसनीडसमर्यादसवेशसदेशेषु सामीप्ये ॥ २३ ॥

सविध, सनीड, समर्याद, सवेश, सदेश – इत्येतेषूत्तरपदेषु सामीप्यवाचिनि तत्पुरुषे समासे पूर्वपदं प्रकृतिस्वरं भवति । मद्रसविधम् । गान्धारिसविधम् । काश्मीरसविधम् । मद्रसनीडम् । गान्धारिसनीडम् । काश्मीरसनीडम् । मद्रसमर्यादम् । गान्धारिसमर्यादम् । काश्मीरसमर्यादम् । मद्रसवेशम् । गान्धारिसवेशम् । काश्मीरसवेशम् । मद्रसदेशम् । गन्धारिसदेशम् । काश्मीरसदेशम् । पूर्वपदान्युक्तस्वराणि ।

पदमञ्जरी

*अत्रेत्यादि* । *परमश्चासौ पूर्वश्चेति* । सोऽयं वाक्यार्थः पूज्यमानतालक्षणः, तस्मिन्निह प्रत्युदाहरणे समास इत्यर्थः । *न त्विति* । *परमो भूतपूर्व इति* । योऽयं वाक्यार्थः पूर्वं परम आसीदित्येवंरूपः, न तस्मिन् तत्र समास इति यावत्, किं कारणम् ? इत्याह—*तथा चेति* । चो ह्यर्थे ॥

*सविधसनीडसमर्यादसवेशसदेशेषु सामीप्ये* ॥ उदाहरणेषु षष्ठीसमासः, मद्रादीनां पूर्वमेव स्वर उक्तः ॥

न्यासः

समासे गम्यमानार्थत्वाद् भूतशब्दो न प्रयुज्यते, यथा—दध्योदन इत्यत्रोपसिक्तशब्दः ।

परमपूर्व इति । अत्र 'सन्महत्' इत्यादिना समासः । अत्र परमश्चासौ पूर्वश्चेति समास इति । इतिकरणोऽर्थनिर्देशार्थः । परमश्चासौ पूर्वश्चेति योऽयं वाक्यार्थः पूज्यमानतालक्षणः, तस्मिन्निह प्रत्युदाहरणे समास इत्यर्थः । न तु परमो भूत इति । तुशब्दोऽवधारणे । परमो भूतपूर्व इति योऽयं वाक्यार्थः परमपूर्वकाललक्षणः, तस्मिन्नेवात्र समास इत्यर्थः । किं कारणम् ? इत्याह—तथा चेत्यादि । चशब्दो हि हीत्यर्थे । अयं समासो न भवति । एवं सत्युदाहरणमेवेदं भवति, न प्रत्युदारणम्; पूर्वशब्दस्य भूतपूर्ववाचित्वात् । यस्तु प्रायेण पुस्तकेषु पाठोऽत्र परमश्चासौ भूतपूर्वश्चेति विग्रहो न तु परमो भूतपूर्व इति; स प्रमादपाठो वेदितव्यः; वाक्यद्वयेऽपि भूतपूर्वयोर्गम्यमानत्वात् ॥

सविधसनीडसमर्यादसवेशसदेशेषु सामीप्ये ॥ सह विधया सविधः, 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः, 'वोपसर्जनस्य' इति सहस्य सभावः । एवं सनीडादिष्वपि बहुव्रीहिभावश्च वेदितव्यः । मद्रसविधमित्यादयः षष्ठीसमासाः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


सविधादीनां सह विधयेत्येवमादिका व्युत्पत्तिरेव केवलम्। समीपवाचिनस्त्वेते समुदायाः। मद्राणां सविधम् = समीपमित्यर्थः।

सामीप्य इति किम्? सह[1] मर्यादया वर्त्तते समर्यादं क्षेत्रम्। देवदत्तस्य समर्यादं देवदत्तसमर्यादम्। सविधादिष्विति किम्? देवदत्तसमग्रा ॥

## विस्पष्टादीनि गुणवचनेषु ॥ २४ ॥

विस्पष्टादीनि पूर्वपदानि गुणवचनेषूत्तरपदेषु प्रकृतिस्वराणि भवन्ति। विस्पष्टकटुकम्। विचित्रकटुकम्। व्यक्तकटुकम्। विस्पष्टलवणम्। विचित्रलवणम्। व्यक्तलवणम्। विस्पष्टं कटुकमिति विगृह्य 'सुप्सुपा' इति समासः।

विस्पष्टादयो ह्यत्र प्रवृत्तिनिमित्तस्य विशेषणम्। कटुकादिभिश्च

### पदमञ्जरी

*विस्पष्टादीनि गुणवचनेषु* ॥ *विस्पष्ट इति*। 'स्पश बाधनस्पर्शनयोः' इत्यस्य निष्ठायाम् 'वा दान्त' इत्यादिना स्पष्टशब्दो निपातितः, विशब्देन गतिसमासः। 'चित्र चित्रीकरणे' चुरादिः, तस्मादेरच्, विशेषेण चित्रं विचित्रम्, प्रादिसमासः। 'चिती संज्ञाने', विगतं चितमस्य विचित्तः, 'अञ्जू व्यक्त्यादिषु', तस्य विपूर्वस्य निष्ठाया गतिस्वरः, तत्रेकारस्य यो यण् स उदात्तयण् भवति।

### न्यासः

ननु च सह विधयेत्येवमादावर्थे सविधादयः शब्दा व्युत्पाद्यन्ते, तत् कथमेषां सामीप्ये वृत्तिः? इत्याह—सह विधयेत्येवमादिकेत्यादि। आदिशब्देन सह नीडेन सह मर्यादयेत्येवमादीनां ग्रहणम्। एवकारोऽवधारणार्थोऽभिधेयव्यवच्छेदं करोति—व्युत्पत्तिनिमित्तमेव, नाभिधेयमिति। समीपवाचिनस्त्वेत इति। अत्रापि तुशब्दोऽवधारणार्थ एव। समीपवाचिन एव, न तु सह विधयेत्येवमादिवाक्यार्थवाचिन इति ॥

विस्पष्टादीनि गुणवचनेषु ॥ विस्पष्टकटुकमिति। कटुशब्दात् संज्ञायां कन्। सुप्सुपेति समास इति।

अथ 'विशेषणं विशेष्येण बहुलम्' इति विस्पष्टकटुकमित्यत्र विगृह्य कस्मात् कर्मधारय एव न क्रियते? इत्याह—विस्पष्टादयो ह्यत्रेत्यादि। कर्मधारयो हि सामानाधिकरण्ये सति भवति, न चेह सामानाधिकरण्यमस्ति। तस्माद् विस्पष्टादयोऽत्र

---

१. क्वचित् 'सह' इति नास्ति।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


शब्दैर्गुणवद् द्रव्यमभिधीयते इत्यसामानाधिकरण्यम्, अतो नास्ति कर्मधारयः।

विस्पष्टशब्दः 'गतिरनन्तरः' इत्याद्युदात्तः, विचित्रशब्दोऽप्यव्ययस्वरेण। विचित्तशब्दमन्ये पठन्ति, सोऽपि बहुव्रीहिस्वरेणाद्युदात्त एव। व्यक्तशब्दः 'उदात्तस्वरितयोर्यणः 'स्वरितोऽनुदात्तस्य' इत्यादिस्वरितः।

ये चात्रापरे पठ्यन्ते, तत्र सम्पन्नशब्दस्थाथादिस्वरेणान्तोदात्तः। पटु-पण्डितशब्दौ प्रत्ययस्वरेणान्तोदात्तौ। कुशलशब्दः कृत्स्वरेणान्तो-

पदमञ्जरी

*सम्पन्नशब्दस्याथादिस्वरेणेति*। गतिस्वरस्तु न भवति, किं कारणम्, 'कर्मणि' इति तत्रानुवर्तते, अयं तु कर्तरि क्तः। *पटुपण्डितशब्दौ प्रत्ययस्वरेणेति*। अन्तोदात्त इत्यपेक्षते। यदेकवचनान्तं प्रकृतम्, तस्य वचनविपरिणामं कृत्वाऽन्तोदात्ताविति सम्बन्धः कर्तव्यः। पाटयतेः 'फलिपाटिनमिजनीनां गुक्पटिनाकिधश्च' इत्युप्रत्ययः, पटिश्चादेशः, इकार उच्चारणार्थः, पटुः। 'पडि गतौ', निष्ठा, पण्डितः।

न्यासः

कटुकादेः शब्दस्य यत् प्रवृत्तिनिमित्तं कटुकत्वादि तस्य विशेषणम्, न तद्वतो द्रव्यस्य। कटुकादिभिश्च शब्दैः कटुकस्यास्तिलक्षणो यस्यास्ति तद्गुणवद् द्रव्यमभिधीयते। ततो वैयधिकरण्ये नास्ति कर्मधारयः। तस्माद् यथोक्तेन विधिना समासोऽत्र कर्तव्यः।

विस्पष्ट इति। 'स्पश बाधनस्पर्शनयोः' इत्यस्य निष्ठायाम् 'दस्तस्पष्टच्छन्नज्ञप्ताः' इति स्पष्टशब्दो निपातितः, तस्य विशब्देन गतिसमासः। विचित्रशब्द इत्यादि। 'चित्र चित्रीकरणे', चुरादिः, तस्माद् घञ्, विशेषेण चित्रं विचित्रम्, प्रादिसमासः। अव्ययस्वरेणेति। 'तत्पुरुषे तुल्यार्थ' इत्यादिना विहितेन। अव्ययं पुनरत्र विशब्दः, तस्य च 'निपाता आद्युदात्ता' इत्याद्युदात्तत्वम्। विचित्तशब्दमिति। 'चिती संज्ञाने' इत्यस्य निष्ठायां चित्तम्। विगतं चित्तमस्येति बहुव्रीहिः। बहुव्रीहिस्वरेणेति। 'बहुव्रीहौ प्रकृत्या' इति विहितेन। व्यक्तशब्द इत्यादि। अञ्जेर्विपूर्वस्य निष्ठायां गतिस्वर उदात्तः, तत्रेकारस्य स्थाने यो यण् स उदात्तयण् भवति, ततः परस्यकारस्यानुदात्तस्य स्वरितः। सम्पन्नशब्द इत्यादि। पदेः सम्पूर्वस्य निष्ठायां सम्पन्नशब्दः कर्तरि चेति। पटुपण्डितशब्दौ प्रत्ययस्वरेणेति। अन्तोदात्तग्रहणमेकवचनान्तं यत् प्रकृतं तस्य विपरिणामं कृत्वाऽन्तोदात्ताविति सम्बन्धः कर्तव्यः। पाटयतेः 'फलिपाटिनमिमनिजनीनां गुक् पटिनाकिधश्च' इत्युप्रत्ययः, पटिशब्दश्चादेशः – पटुः। 'पडि गतौ', अस्मान्निष्ठायां पण्डितः। कुशल इति। कुशाँल्लातीति 'ला दाने' इत्यस्माद् 'आतोऽनुपसर्गे कः' इति कः, उप-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



दात्तः। चपलशब्दश्चित्स्वरेणान्तोदात्तः, 'चुपेरच्चोपधायाः' इत्यत्र हि चिदिति वर्तते। निपुणशब्दस्थाथादिस्वरेणान्तोदात्तः, पुणेरिगुपधलक्षणः कप्रत्ययोऽयम्।

विस्पष्टादीनीति किम्? परमलवणम्। उत्तमलवणम्। गुणवचनेष्विति किम्? विस्पष्टब्राह्मणः।

विस्पष्ट। विचित्र। व्यक्त। सम्पन्न। कटु। पण्डित। कुशल। चपल। निपुण। विस्पष्टादिः॥

## श्रज्यावमकन्पापवत्सु भावे कर्मधारये॥ २५॥

श्र, ज्य, अवम, कन् – इत्येतेषु पापशब्दवति चोत्तरपदे कर्मधारये समासे भाववाचि पूर्वपदं प्रकृतिस्वरं भवति। गमनश्रेष्ठम्। गमनश्रेयः। ज्य – वचनज्येष्ठम्, वचनज्यायः। अवम – गमनावमम्, वचनावमम्। कन् – गमनकनिष्ठम्, गमनकनीयः। पापवत् – गमन-

### पदमञ्जरी

कुशान् लातीति कुशलः, 'ला आदाने'। *चपलशब्दश्चित्स्वरेणेति*। अन्तोदात्त इत्यपेक्षते। *चिदिति वर्तत इति*। 'वृषादिभ्यश्चित्' इत्यतः। *निपुणशब्द इत्यादि*। पूर्ववत्सम्बन्धः। 'पुण कर्मणि शुभे'॥

*श्रज्यावमकन्पापवत्सु भावे कर्मधारये*॥ उदाहरणेषु मयूरव्यंसकादित्वाद्विशे-

### न्यासः

पदसमासः, 'गतिकारकोपपदात् कृत्' इत्युत्तरपदप्रकृतिस्वरः। चपलशब्दश्चित्स्वरेणेति। अन्तोदात्त इत्यपेक्षते। कथमयमन्तोदात्तश्चित्स्वरेण? इत्याह—'कलस्तृपश्च' इत्यतः कलप्रत्ययेऽनुवर्तमाने 'चुपेरच्चोपधायाः' इति 'चुप मन्दायां गतौ' इत्यस्मात् कलप्रत्ययान्तो व्युत्पाद्यते। तत्र 'वृषादिभ्यश्चित्' इत्यतश्चिद्ग्रहणमनुवर्तते। तेन चित्स्वरेणान्तोदात्तः। निपुणशब्द इत्यादि। अन्तोदात्तं इति। प्रकृतेन सम्बन्धः। पुणेरिति। 'पुण कर्मणि शुभे' इत्यस्मात् 'इगुपधज्ञाप्रीकिरः कः' इति कप्रत्ययः॥

श्रज्यावमकन्पापवत्सु भावे कर्मधारये॥ गमनश्रेष्ठमिति। 'ल्युट् च' इति ल्युट् विशेषणसमासः। अतिशयेन प्रशस्यः श्रेयः। इष्ठनीयसुनोः 'प्रशस्यस्य श्रः' इति श्रादेशः। वचनज्येष्ठमिति। अत्रापि तयोरेव प्रत्यययोः परतः प्रशस्यशब्दस्य ज्यादेशः। गमनकनिष्ठम्, गमनकनीय इति। इष्ठनीयसुनोः परतो युवशब्दस्याल्पशब्दस्य च 'युवाल्पयोः कनन्यतरस्याम्' इति कनादेशः। ननु च 'श्रज्यकनाम्' इति कथम्? इति-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पापिष्ठम् ; गमनपापीयः । ल्युडन्तान्येतानि पूर्वपदानि लित्स्वरेणाद्युदात्तानि ।

श्रज्यकनामादेशानां ग्रहणमिति सामर्थ्यात्तद्वदुत्तरपदं गृह्यते ।

श्रादिष्विति किम् ? गमनशोभनम् । भाव इति किम् ? गम्यतेऽनेनेति गमनम्, तत् श्रेयो गमनश्रेयः । कर्मधारये इति किम् ? गमनं श्रेयो गमनश्रेयः ॥

## कुमारश्च ॥ २६ ॥

कुमारशब्दः पूर्वपदं कर्मधारये समासे प्रकृतिस्वरं भवति । कुमारश्रमणा । कुमारकुलटा । कुमारतापसी । कुमारशब्दोऽन्तोदात्तः ।

अत्र केचिल्लक्षणप्रतिपदोक्तपरिभाषया 'कुमारः श्रमणादिभिः' इत्यत्रैव समासे स्वरमेतमिच्छन्ति । केचित्पुनरविशेषेण सर्वत्रैव कर्मधारये ॥

### पदमञ्जरी

ष्यस्य पूर्वनिपातः । इष्ठेयसुनोः 'प्रशस्यस्य श्रः', 'ज्य च', 'युवाल्पयोः कनन्यतरस्याम्' । *पापिष्ठ इति* । 'विन्मतोर्लुक्' ।

*कुमारश्च* ॥ *कुमारश्रमणेति* । लिङ्गविशिष्टपरिभाषया कुमारीशब्दस्य समासे पुंवद्भावः । 'कुमार क्रीडायाम्' इत्यस्मात्पचाद्यच्, कुमारः । *केचित्पुनरित्यादि* । चकारो ह्यत्र क्रियते, अस्यैव विधेः समुच्चयार्थः ॥

### न्यासः

करणे हेतौ । यस्माच्छ्रज्यकनामिहादेशानां ग्रहणं ते चाजादौ प्रत्यये प्रशस्यादीनां विधीयन्त इति केवलानामसम्भवः । तस्मात् सामर्थ्यात् तद्वदुत्तरपदं गृह्यते ॥

कुमारश्च ॥ कुमारश्रमणेति । 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति । कुमारीशब्दोऽत्र समस्यते । एवं हि श्रमणाशब्देन स्त्रीलिङ्गेन सामानाधिकरण्यमुपपद्यते; नान्यथा । कुमारशब्दोऽन्तोदात्त इति । 'कुमार क्रीडायाम्' इत्यस्मात् पचाद्यचि व्युत्पादितत्वात् ।

केचित् पुनरित्यादि । कथं पुनर्लक्षणप्रतिपदोक्तपरिभाषायां सत्यामविशेषेणेति लभ्यते ? एवं मन्यते—चकारोऽत्र क्रियते । सचास्यैव विधेः समुच्चयार्थः । तेन सर्वत्राविशेषेण भवति । एवं हि समुच्चयो भवति, नान्यथेति । ये तु 'कुमारः श्रमणादिभिः' इत्यत्रैव समासमिच्छन्ति, ते पूर्वविध्यपेक्षया चकारमिह समुच्चयार्थं वर्णयन्ति ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## आदिः प्रत्येनसि ॥ २७ ॥

'कर्मधारये' इति वर्त्तते। प्रतिगत एनसा, प्रतिगतमेनो वा यस्य स प्रत्येनाः। तस्मिन्नुत्तरपदे कर्मधारये कुमारस्यादिरुदात्तो भवति। कुमारप्रत्येनाः।

'उदात्तः' इत्येतदत्र सामर्थ्याद्विदितव्यम्। पूर्वपदप्रकृतिस्वर एव ह्ययमादेरुपदिश्यते ॥

## पूगेष्वन्यतरस्याम् ॥ २८ ॥

पूगाः = गणाः, तद्वाचिन्युत्तरपदे कर्मधारये समासे कुमारस्यान्यतरस्यामादिरुदात्तो भवति। कुमारचातकाः। कुमारलोहध्वजाः। कुमारबलाहकाः। कुमारजीमूताः।

चातकादयः पूगशब्दाः, तेभ्यः 'पूगाञ्ञ्यो ग्रामणीपूर्वात्' इति ञ्यः प्रत्ययः, तस्य 'तद्राजस्य बहुषु' इति लुक्। अत्र यदाऽऽद्युदात्तत्वं न भवति, तदा 'कुमारश्च' इति पूर्वपदप्रकृतिस्वरत्वमेके कुर्वन्ति। ये तु तत्र प्रतिपदोक्तस्य ग्रहणमिच्छन्ति तेषां समासान्तोदात्तत्वमेव भवति ॥

### पदमञ्जरी

*आदिः प्रत्येनसि* ॥ *प्रतिगत एनसेति*। 'अवादयः कुष्टाद्यर्थे तृतीयया' इति तत्पुरुषः। द्वितीये तु विग्रहे बहुव्रीहिः। कथं पुनरन्तरेणोदात्तग्रहणमुदात्तस्वरो लभ्यते? इत्याह—*उदात्त इत्येतदिति*। सामर्थ्यमेव दर्शयति। *पूर्वपदेति*। प्रकृत्येति हि वर्त्तते, तत्रैवमभिसम्बन्धः—पूर्वत्र कुमारशब्दे प्रकृतिभावेन यः स्वरः स्थापितः सोऽत्रादेर्भवतीति ॥

### न्यासः

आदिः प्रत्येनसि ॥ प्रतिगत एनसेति। अनेन 'अवादयः कुष्टाद्यर्थे तृतीयया' इति तत्पुरुषत्वं प्रत्येनःशब्दस्य दर्शयति। प्रतिगतमेनो वा यस्येति। अनेन बहुव्रीहित्वम्। कुमारप्रत्येना इति। 'अत्वसन्तस्य चाधातोः' इति दीर्घः।

ननु च नेह सूत्र उदात्तग्रहणमस्ति, तत् कथमुदात्तस्वरो लभ्यते? इत्याह—उदात्त इत्येतदिहेत्यादि। किं पुनस्तत्सामर्थ्यम्? इत्याह—पूर्वपदेत्यादि। न हि प्रकृतिस्वरादन्य एव स्वर उच्यते। किं तर्हि? प्रकृतिस्वर एव; यतः प्रकृत्येति वर्तते। तत्रैवमभिसम्बन्धः क्रियते—प्रकृतिभावेन कुमारशब्दस्य यः स्वरः प्राप्तः स आदेर्भवतीति। एवञ्च सामर्थ्यादुदात्तो लभ्यते। स एव हि कुमारशब्दस्य प्रकृतिभावेन स्वरः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


## इगन्तकालकपालभगालशरावेषु द्विगौ ॥ २९ ॥

इगन्त उत्तरपदे कालवाचिनि कपाल, भगाल, शराव – इत्येतेषु च द्विगौ समासे पूर्वपदं प्रकृतिस्वरं भवति । इगन्त – पञ्चारत्निः । दशारत्निः । पञ्चारत्नयः प्रमाणमस्य दशारत्नयः प्रमाणमस्येति तद्धितार्थे द्विगुः, 'प्रमाणे लो-द्विगोर्नित्यम्' इति मात्रचो लोपः । इगन्त ।

काल – पञ्चमास्यः । दशमास्यः । पञ्च मासान्भृतो भूतो भावी वेति तद्धितार्थे द्विगोर्यप् । पञ्चवर्षः । दशवर्षः । 'वर्षाल्लुक् च' इति ठञो लुक् । काल ।

कपाल – पञ्चकपालः । दशकपालः । कपाल ।

भगाल – पञ्चभगालः । दशभगालः । भगाल ।

शराव – पञ्चशरावः । दशशरावः ।

'संस्कृतं भक्षाः' इति तद्धितार्थ एते समासाः 'द्विगोर्लुगनपत्ये' इति कृताण्प्रत्ययलोपा द्रष्टव्याः ।

इगन्तादिष्विति किम् ? पञ्चभिरश्वैः क्रीतः पञ्चाश्वः दशाश्वः । द्विगाविति किम् ? परमारत्निः । परमशरावः ।

### पदमञ्जरी

*इगन्तकालकपालभगालशरावेषु द्विगौ ॥ कृताण्प्रत्ययलोपा इति ।* कृतोऽण्प्रत्ययलोपो येषां ते तथोक्ताः । *द्विगाविति किं परमशराव इति ।* षष्ठीसमासोऽयम् ।

### न्यासः

पूगेष्वन्यतरस्याम् ॥ इगन्तकालकपालभगालशरावेषु द्विगौ ॥ तद्धितार्थे द्विगोर्यबिति । 'मासाद्वयसि' इत्यनुवर्तमाने 'द्विगोर्यप्' इति यप् । ठञो लुगिति । प्राग्वतीयस्य । पञ्चकपाल इति । पञ्चसु कपालेषु संस्कृतः पुरोडाश इति 'संस्कृतं भक्षाः' इत्यण् , तस्य 'द्विगोः' इत्यादिना लुक् ।

एते समासा इति । पञ्चकपाल इत्येवमादयो दशशरावपर्यन्ताः । कृताण्प्रत्ययलोपा इति । कृतोऽण्प्रत्ययलोपो येषां ते तथोक्ताः । पञ्चदशशब्दावत्र 'न्रः संख्यायाः' इत्याद्युदात्तौ ।

पञ्चाश्व इति । तद्धितार्थे समासः । 'आर्हादगोपुच्छ' इत्यादिना ठक् । 'अध्यर्धपूर्व' इत्यादिना लुक् । पञ्चशराव इति । पञ्च शरावाण्यस्मिन्निति बहुव्रीहिः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


पञ्चारत्न्यो दशारत्न्य इति च यण्गुणयोर्बहिरङ्गलक्षणयोरसिद्धत्वात् स्थानिवद्भावाद्वा द्विगुस्वर इगन्तलक्षणः प्रवर्त्तते ॥

बह्वन्यतरस्याम् ॥ ३० ॥

बहुशब्दः पूर्वपदमिगन्तादिषूत्तरपदेषु द्विगौ समासेऽन्यतरस्यां प्रकृतिस्वरं भवति । पूर्वेण नित्ये प्राप्ते विकल्पः । बहुरत्निः । बहुमास्यः । बहुकपालः । बहुभगालः । बहुशरावः । बहुशब्दोऽन्तोदात्तः, तस्य प्रकृतिस्वरे कृते यत्र यणादेशस्तत्र 'उदात्त-

पदमञ्जरी

यम् । बहुव्रीहौ तु पूर्वपदप्रकृतिस्वरेण भाव्यमेव । इगन्तप्रकृतिस्वरत्वे यण्गुणयोरुपसंख्यानम्—पञ्चारत्न्यो दशारत्न्यः, यण्गुणयोः कृतयोरिगन्ते द्विगावित्येष स्वरो न प्राप्नोति ? इत्यत आह—*यण्गुणयोरित्यादि* । प्राक्सुबुत्पत्तेः स्वरो भवन्नन्तरङ्गः, यण्गुणौ तु सुबपेक्षत्वाद्बहिरङ्गौ । *स्थानिवद्भावाद्वेति* । न चात्र स्वरविधौ न स्थानिवत्त्वम्; अलोपाजादेशत्वात् । *पञ्चारत्न्य इति* । छान्दसोऽयं प्रयोगः । तत्र 'जसि च' इति गुणो न भवति; 'जसादिषु छन्दसि वा वचनम्' इति वचनात् ॥

*बह्वन्यतरस्याम्* ॥ *बहुशब्दोऽन्तोदात्त इति* । 'कुर्भ्रश्च' इति वर्तमाने 'लङ्घिबंह्योर्नलोपश्च इति कुप्रत्यये व्युत्पादितत्वात् ॥

न्यासः

अथेह कथं भवति—पञ्चारत्न्यो दशारत्न्यो इति, यावता यणादेशे कृते गुणे च नात्रेगन्तमुत्तरपदम् ? इत्याह—पञ्चारत्न्य इत्यादि । यद् यण्गुणौ झलादौ विभक्तौ परत इति ताविह बहिरङ्गौ, स्वरस्त्वन्तरङ्गः; प्राग् विभक्त्युत्पत्तेर्भावात्, 'असिद्धं बहिरङ्गमन्तरङ्गे' । तेन पञ्चारत्न्य इत्यत्रापि द्विगुस्वर इगन्तलक्षणः प्रवर्तते । स्थानिवद्भावाद्वेति । 'अचः परस्मिन् पूर्वविधौ' इति पूर्वस्वरे कर्तव्यो यो गुणः स्थानिवद्भावेनेगन्तलक्षणः प्रवर्तते । ननु च स्वरविधौ 'न पदान्त' इत्यादिना स्थानिद्भावः प्रतिषिध्यते ? नैतदस्ति; 'स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवत्' इत्युक्तत्वात्, नचैवमिको यण्गुणौ लोपाजादेशौ । पञ्चारत्न्य इति अरत्निशब्दोऽत्र 'कृदिकारादक्तिनः', 'सर्वतोऽक्तिन्नर्थादित्येके' इति बह्वादिषु पाठान् ङीषन्तः । इहापि पूर्ववत् तद्धितार्थे द्विगुः, मात्रचस्तु लोपः ॥

बह्वन्यतरस्याम् ॥ पूर्वेणेगन्तादिषूत्तरपदेषु बहुशब्दस्यापि नित्यं प्रकृतिस्वरे प्राप्ते विकल्पोऽयमुच्यते । बहुरत्निरिति । पूर्ववत् समासादि । बहुमास्य इति । पूर्ववद् यप् । बहुकपालादयः समासाः, इहापि 'संस्कृतं भक्षाः' इत्यत्रापि तद्धितार्थे कृतेऽण्प्रत्ययलोपा द्रष्टव्याः । बहुशब्दोऽन्तोदात्त इति । स हि 'कुर्भ्रश्च' इत्यनुवर्तमाने 'बहि-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


स्वरितयोर्यणः स्वरितोऽनुदात्तस्य' इत्येष स्वरो भवति ॥

दिष्टिवितस्त्योश्च ॥ ३१ ॥

दिष्टि — वितस्ति, इत्येतयोरुत्तरपदयोर्द्विगौ समासे पूर्वपदमन्यतरस्यां प्रकृतिस्वरं भवति । पञ्चदिष्टिः । पञ्चवितस्तिः । दिष्टिवितस्त्योः प्रमाणे, तेनात्र मात्रचो लुक् ॥

सप्तमी सिद्धशुष्कपक्वबन्धेष्वकालात् ॥ ३२ ॥

सप्तम्यन्तं पूर्वपदं सिद्ध, शुष्क, पक्व, बन्ध — इत्येतेषूत्तरपदेषु प्रकृतिस्वरं भवति, सा चेत्सप्तमी कालान्न भवति । सांकाश्यसिद्धः । काम्पिल्यसिद्धः । सांकाश्य-काम्पिल्यशब्दौ ण्यप्रत्ययान्तावन्तोदात्तौ । फिषि तु 'सांकाश्यकाम्पिल्यनासिक्यदार्वाघाटानामन्तः पूर्वं वा' इति पठ्यते, तत्र पक्षे मध्योदात्तावपि भवतः ।

शुष्क — ऊकशुष्कः । निधनशुष्कः । ऊकशब्दो बहुलवचनादवतेः कक्प्रत्ययान्तोदात्तः । निधनशब्दो निधाञः क्युप्रत्यये मध्योदात्तः ।

पदमञ्जरी

*सप्तमी सिद्धशुष्कपक्वबन्धेष्वकालात् ॥ ण्यप्रत्ययान्तावित्ति ।* वुञ्छणादिषु 'सङ्काशादिभ्यो ण्यः' । अवतेः कक्प्रत्ययः, 'ज्वरत्वर' इत्यादिनोठ्, ऊकः । कुम्भ-

न्यासः

महि वृद्धौ' इत्यस्मात् 'लङ्घिवंह्योर्नलोपश्च' इति कुप्रत्ययं विधाय व्युत्पाद्यते, तेन प्रत्ययस्वरेणान्तोदात्तः । यत्र यणादेश इति । बह्वरत्निरित्यत्र ॥

दिष्टिवितस्त्योश्च ॥ अबह्वर्थोऽयमारम्भः । पञ्चदिष्टिरिति । पञ्चारत्निरित्यनेन तुल्यम् ॥

सप्तमीसिद्धशुष्कपक्वबन्धेष्वकालात् ॥ साङ्काश्यसिद्ध इति । 'सिद्धशुष्कपक्वबन्धैश्च' इति समासः । साङ्काश्यकाम्पिल्यशब्दौ ण्यप्रत्ययान्तत्वादिति । 'वुञ्छण्' इत्यादिना सङ्काशादिलक्षणं चातुरर्थिकप्रत्ययं विधाय व्युत्पादितत्वात् ।

ऊकशब्द इत्यादि । 'कृदाधारार्चिकलिभ्यः कः' इत्यधिकृत्य 'सृवृभूशुषिमुषिभ्यः कक्' इति कक्प्रत्ययः किद् विधीयमानोऽवतेरपि भवतीति । तेनोकशब्दः कक्प्रत्ययान्तः । 'ज्वरत्वर' इत्यादिना वतेरूठ् । निधनशब्दो निधाञः क्युप्रत्यये मध्योदात्त इति । निधनशब्दोऽयम् 'कृपृवृजिमन्दिनिधाञः क्युः' इति क्युप्रत्ययान्तो व्युत्पादितः । तेन 'गतिकारकोपपदात् कृत्' इति कृदुत्तरपदप्रकृतिस्वरे कृते मध्योदात्तो

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


पक्व—कुम्भीपक्वः । कलशीपक्वः । भ्राष्ट्रपक्वः । कुम्भीकलशीशब्दौ ङीषन्तावान्तोदात्तौ । भ्राष्ट्रशब्दः ष्ट्रन्प्रत्ययान्त आद्युदात्तः ।

बन्ध — चक्रबन्धः । चारकबन्धः । चक्रशब्दोऽन्तोदात्तः । चारकशब्दो ण्वुलन्त आद्युदात्तः ।

अकालादिति किम् ? पूर्वाह्णसिद्धः । अपराह्णसिद्धः । सप्तमीश्वरः कृत्स्वरेण[1] बाधितः पुनरयं विधीयते ॥

**परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु ॥ ३३ ॥**

परि, प्रति, उप, अप — इत्येते पूर्वपदभूता वर्ज्यमानवाचिनि अहरवयववाचिनि रात्र्यवयववाचिनि चोत्तरपदे प्रकृतिस्वरा भवन्ति । परित्रिगर्त्तं वृष्टो देवः । परिसौवीरम् । परिसार्वसेनि ।

पदमञ्जरी

कलशशब्दाभ्यां जातिलक्षणो ङीष्, भ्राष्ट्रशब्दो भ्रस्जेष्ट्रनि वृद्धौ च व्युत्पादितः । चक्रशब्दः 'कृञः को द्वे च' ।

*सप्तमीस्वर इत्यादि* । 'तत्पुरुषे तुल्यार्थ' इत्यादिना सप्तम्यन्तस्य यः प्रकृतिभावः परत्वात्*थाथादिस्वरेण बाधित इति* । यत्र तु *कृत्स्वरेण बाधित इति* पाठः, तत्र कृदन्तस्य यः स्वरः थाथादिलक्षणस्तेनेत्यर्थः ॥

*परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु* ॥ *परित्रिगर्त्तमिति* । त्रिगर्त्तान्वर्जयित्वे-

न्यासः

भवति । क्वचित् क्युनिप्रत्ययान्त इति पाठः । सप्तम्येकवचने 'इकोऽचि विभक्तौ' इति नुमं कृत्वा शब्दरूपापेक्षया नपुंसकलिङ्गं वेदितव्यम् । क्युरित्येतस्मिन् शब्दरूपे प्रत्ययसंज्ञक इत्यर्थः । कुम्भीकलसीशब्दौ ङीषन्ताविति । तेनान्तोदात्ताविति भावः । ङीषन्तता तु 'जातेरस्त्रीविषयाद्' इत्यादिना विहितेन ङीषा वेदितव्या । भ्राष्ट्रशब्दः ष्ट्रन् प्रत्ययान्त इति । 'ष्ट्रन् इति वर्तमाने 'भ्रस्जिगमिनमिहनिविश्यशां वृद्धिश्च' इति ष्ट्रन्प्रत्ययान्ततया व्युत्पादितत्वात् । चक्रशब्दोऽन्तोदात्त इति । 'कृञः के द्वे च' इति कप्रत्ययान्तत्वेन व्युत्पादितत्वात् । चारकशब्दो ण्वुलन्तः । तेन लित्स्वरेणाद्युदात्तः । सप्तमीस्वर इत्यादि । 'तत्पुरुषे' इत्यादिना सप्तम्याः प्रकृतिभावेन यः स्वरो विधीयते स परत्वात् 'थाथघञ्' इत्यादिना विहितेन स्वरेणान्तोदात्तेन बाधितः, तेन पुनर्विधीयते ॥

परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु ॥ परित्रिगर्तमिति । अत्र त्रिगर्तशब्दो

१. 'थाथादिस्वरेण' इति प्रसिद्धः पाठः पदमञ्जरीमते ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रति – प्रतिपूर्वाह्णम् । प्रत्यपराह्णम् । प्रतिपूर्वरात्रम् । प्रत्यपररात्रम् ।

उप – उपपूर्वाह्णम् । उपापराह्णम् । उपपूर्वरात्रम् । उपापररात्रम् ।

अप – अपत्रिगर्त्तं वृष्टो देवः । अपसौवीरम् । अपसार्वसेनि ।

'निपाता आद्युदात्ताः' 'उपसर्गाश्चाभिवर्जम्' इति आद्युदात्तानि पूर्वपदानि ।

तत्पुरुषे बहुव्रीहौ च सिद्धत्वादव्ययीभावार्थोऽयमारम्भः । तत्रापपरी वर्जने वर्त्तेते इति तयोरेव वर्ज्यमानमुत्तरपदम्, नेतरयोः । अहोरात्रावयवा अपि वर्ज्यमाना एव तयोर्भवन्तीति न पृथगुदाह्रियते ।

पदमञ्जरी

त्यर्थः । 'अपपरी वर्जने' इति कर्मप्रवचनीयसंज्ञा, 'पञ्चम्यपाङ्परिभिः' इति पञ्चमी । 'अपपरिबहिरञ्चवः पञ्चम्या' इत्यव्ययीभावः । सौवीरादयोऽपि जनपदविशेषाः । *प्रतिपूर्वाह्णमिति* । 'लक्षणेनाभिप्रती आभिमुख्ये' इत्यव्ययीभावः । *उपपूर्वाह्णमिति* । 'अव्ययं विभक्ति' इत्यादिना सामीप्ये । किं पुनः कारणमपपर्योरेव वर्ज्यमानमुदाहृतम्, नेतरयोः ? तत्राह—*तत्रेति* । अथाहोरात्रावयवा अपि इतरयोरपपर्योः कस्मान्नोदाह्रियन्ते ? अत आह—*अहोरात्रावयवा अपीति* ।

न्यासः

वर्ज्यमानमुत्तरपदं त्रिगर्त्तान् वर्जयित्वेत्यर्थः । 'अपपरी वर्जने' इति परेः कर्मप्रवचनीयसंज्ञा । 'पञ्चम्यपाङ्परिभिः' इति तद्योगेन पञ्चमी । 'अपपरिबहिरञ्चवः पञ्चम्या' इति तदन्तेनाव्ययीभावः । परिसार्वसेनीति । सार्वसेनिशब्दे न समासः ।

पूर्वाह्णमिति । 'लक्षणेनाभिप्रती आभिमुख्ये' इत्यव्ययीभावः ।

उपपूर्वाह्णमिति । 'अव्ययं विभक्ति' इत्यादिना सामीप्ये ।

अपत्रिगर्तमिति । परित्रिगर्तमित्यनेन तुल्यम् ।

तत्पुरुषे बहुव्रीहौ चेत्यादि । 'तत्पुरुषे तुल्यार्थ' इत्यादिना पर्यादीनामव्ययत्वात् सिद्धम् । बहुव्रीहौ 'बहुव्रीहौ प्रकृत्या' इत्यादिना तेनाव्ययीभावे यथा स्यादित्येवमर्थोऽयमारम्भः । किं पुनः कारणमपपर्योरेव वर्ज्यमान उदाहरणम्, न तु प्रत्युपयोः ? इत्याह—तत्रेत्यादि । तत्र तेषु पर्यादिषु मध्येऽपपरिशब्दावेव वर्ज्यमाने वर्तेते । तेन तस्मात् तयोरेव वर्ज्यमानमुत्तरपदम् । अतस्तयोरेवात्रोदाहरणमुपन्यस्तमित्यभिप्रायः । अथा-



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



वर्ज्यमानाहोरात्रावयवेष्विति किम् ? प्रत्यग्नि शलभाः पतन्ति । परिवनमित्यत्र 'वनं समासे' इत्येतद्भवति ॥

### राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिषु ॥ ३४ ॥

राजन्यवाचिनां बहुवचनान्तानां यो द्वन्द्वोऽन्धकवृष्णिषु वर्त्तते तत्र पूर्वपदं प्रकृतिस्वरं भवति । श्वाफल्कचैत्रकरोधकाः । शिनिवासुदेवाः । श्वाफल्कशब्दः, चैत्रकशब्दश्च 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' इति

पदमञ्जरी

*परिवनमित्यत्रेति* । 'परिप्रत्युपापा' इत्यस्यावकाशः—परित्रिगर्तमिति, 'वनं समासे' इत्यस्यावकाशः—प्रवणमिति; परिवनमित्यत्र 'वनं समासे' इत्येतद्भवति विप्रतिषेधेन । अपवादत्वं चात्र हेतुः, न विप्रतिषेधः । 'समासस्य' इत्येव सिद्धे वनस्य पुनर्वचने एतत्प्रयोजनम्—येऽन्ये तदपवादास्तद्बाधनार्थम् । सर्वथैवाव्ययस्वरं बहुव्रीहिस्वरं च बाधते, एवमिदमपि बाधिष्यते ॥

*राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिषु* ॥ *श्वाफल्कचैत्रकरोधका इति* । प्रमादपाठोऽयम् । अत्र त्रिपदे हि द्वन्द्वे यत्सर्वमपेक्ष्य पूर्वपदं तस्यैव भवति, ततश्च चैत्रकशब्दस्य स्वरवचनमनुपपन्नं स्यात्, तस्मात् *श्वाफल्कचैत्रकाश्चैत्रकरोधका* इति पाठः । एकस्तु चैत्रकशब्दो लेखकैः पुनरुक्तिशङ्कया त्यक्तः । *शिनिशब्द*

न्यासः

होरात्रावयवा अपि तयोरेवापपर्योः कस्मान्नोदाह्रियन्ते ? इत्याह – अहोरात्रावयवा अपीत्यादि । वर्ज्यमानार्थयोरेवापपर्योः प्रयोग इति । यावत् किञ्चिदुत्तरपदं तेन सर्वेणैव वर्ज्यमानेन भवितव्यम्; अन्यथा तयोर्वर्ज्यमानार्थता न स्यात् । तस्मादहोरात्रावयवा अपि तयोर्वर्ज्यमानयोरेव भवन्ति । तेन त्रिगर्तादिभ्यो वर्ज्यमानेभ्यः पृथङ् नोदाह्रियन्ते ।

प्रत्यग्नीति । पूर्ववदाभिमुख्येऽव्ययीभावः । परिवनमित्यत्रेत्यादि । 'परिप्रत्युपापा वर्ज्यमान' इत्यस्यावकाशः—परित्रिगर्तमिति, 'वनं समासे' इत्यस्यावकाशः—प्रवणमिति; परिवनमित्यत्र 'वनं समासे' इत्येतद् भवति विप्रतिषेधेन ॥

राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिषु ॥ राजन्यवाचीनि यान्यसमस्तानि बहुवचनान्तानि तदवयवको यो द्वन्द्वः स राजन्यबहुवचनद्वन्द्व इत्युक्तः । श्वाफल्कचैत्रकरोधका इति । श्वाफल्काश्च चैत्रकाश्च रोधकाश्चेति द्वन्द्वः । तत्र रोधकशब्दमपेक्ष्य चैत्रकशब्दस्य पूर्वपदत्वम्, चैत्रकशब्दमपेक्ष्य श्वाफल्कशब्दस्य, तयोरपि प्रकृतिभावः । अत एव तयोर्द्वयोरपि स्वरं दर्शयितुमाह—श्वाफल्कशब्दश्चैत्रकशब्दश्चेत्यादि ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अणन्तावन्तोदात्तौ। शिनिशब्द आद्युदात्तः, स तदपत्येष्वभेदेन वर्त्तते।

राजन्य इति किम्? द्वैप्यहैमायनाः। द्वीपे भवा[1] इति 'द्वीपादनुसमुद्रं यञ्'। हैमेरपत्यं युवा हैमायनाः। अन्धकवृष्णय एते, न तु राजन्याः। राजन्यग्रहणमिहाभिषिक्तवंश्यानां क्षत्त्रियाणां ग्रहणार्थम्। एते च नाभिषिक्तवंश्याः।

### पदमञ्जरी

*आद्युदात्त इति*। 'शिङो निन् ह्रस्वश्च' बहुलवचनात्। *तदपत्येष्विति*। यद्यपि शिनिशब्द इति प्रकृतम्, तथापि शब्दस्यापत्यास्यासम्भवाच्छिनेः क्षत्त्रियस्यैव यान्यपत्यानि तेष्वित्यर्थः। *अभेदेन* = अभेदोपचारेण।

ननु च 'राज्ञोऽपत्ये जातिग्रहणम्' इति वचनाद् राजन्यशब्दः क्षत्त्रियजातिवचनः, ततश्च द्वैप्यभैमायना इत्युक्तं प्रत्युदाहरणं नोपपद्यते, तेषामपि क्षत्त्रियत्वाद्? अत आह—*राजन्यग्रहणमित्यादि*। अन्धकवृष्णीनां क्षत्त्रियत्वाव्यभिचाराद् राजन्यग्रहणमुक्तविशेषपरिग्रहार्थमिति भावः॥

### न्यासः

शिनिशब्द आद्युदात्त इति। स हि 'वीज्याज्वरिभ्यो निः' इति निप्रत्ययेऽनुवर्तमाने 'वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्' इति विधीयमाने शीङोऽपि भवति। बहुलवचनाद् ह्रस्वत्वञ्च तत एव। तेनाद्युदात्तो भविता नित्स्वरेण। तदपत्येष्विति। तस्य शिनेः क्षत्त्रियस्य यान्यपत्यानि तेष्वित्यर्थः। अभेदेनेति। उपचारेणेत्यर्थः।

हैमायना इति। 'यञिञोश्च' इति फक्। ननु च राजन्यशब्दोऽयं क्षत्त्रियजातिवचनः, तथा चोक्तम्—'राज्ञोऽपत्ये जातिग्रहणम्' इति राजन्यो भवति क्षत्त्रियश्चेत्' इति। यश्चान्धकवृष्णिषु वर्तते द्वन्द्वः स तु क्षत्त्रियवाचिनामेव भवति; अन्धकवृष्णीनां क्षत्त्रियत्वात्। ततश्च द्वैप्यहैमायना इत्ययुक्तं प्रत्युदाहरणम्। अयमपि हि राजन्यवाचिनामेव द्वन्द्वः; अन्धकवृष्णिषु वर्तमानत्वादित्यत आह—अन्धकवृष्णय इत्यादि। 'अन्धकवृष्णिषु' इत्येतावतैव क्षत्त्रियग्रहणे सिद्धे यद्राजन्यग्रहणं क्रियते, तस्यैतत् प्रयोजनम्—विशिष्टा येऽभिषिक्तवंश्यास्तेषां ग्रहणं यथा स्यादित्येवमर्थम्। विद्यया जन्मना वा प्राणिनामेकलक्षणः सन्तानः = वंशः, इह तु जन्मना य एकलक्षणः सोऽभिप्रेतः, तत्र भवो वंश्यः, दिगादित्वाद् यत्। तत्रैतत् स्यात्। द्वैप्यहैमायना अप्यभिषिक्तवंश्या एव क्षत्त्रियाः? इत्यत आह—एते चेत्यादि।

---

१. 'द्वैप्याः' इत्यधिकं क्वचित्।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



बहुवचनग्रहणं किम्? सङ्कर्षणवासुदेवौ। द्वन्द्व इति किम्? वृष्णीनां कुमारा वृष्णिकुमाराः। अन्धकवृष्णिष्विति किम्? कुरुपञ्चालाः॥

संख्या॥ ३५॥

द्वन्द्वसमासे संख्यावाचि पूर्वपदं प्रकृतिस्वरं भवति। एकादश। द्वादश। त्रयोदश। 'इण्भीकापाशल्यतिमर्चिभ्यः कन्' इति नित्त्वादाद्युदात्त एकशब्दः। त्रेस्त्रयस् आदेशोऽन्तोदात्तो निपात्यते॥

आचार्योपसर्जनश्चान्तेवासी॥ ३६॥

आचार्योपसर्जनान्तेवासिनां यो द्वन्द्वस्तत्र पूर्वपदं प्रकृतिस्वरं भवति। आपिशलपाणिनीयाः। पाणिनीयरौढीयाः। रौढीयकाश-

पदमञ्जरी

*सङ्ख्या*॥ *एकादशेति*। 'सङ्ख्याया अल्पीयस्याः' इत्येकशब्दस्य पूर्वनिपातः, 'प्रागेकादशभ्यो छन्दसि' इति निपातनाद्दीर्घः। *द्वादशेति*। 'द्व्यष्टनः सङ्ख्यायाम्' इत्यात्वम्॥

*आचार्योपसर्जनश्चान्तेवासी*॥ आचार्य उपसर्जनं यस्य स आचार्योपसर्जनः, अन्ते वसतीत्यन्तेवासी, 'शयवासवासिष्वकालाद्' इत्यलुक्। गौणश्चायं निर्देशः। द्वन्द्वस्य यान्यवयवपदानि तान्याचार्योपसर्जनवचनत्वादन्तेवासिवाचित्वाच्च तथोच्यन्ते। तदवयवद्वन्द्वोऽप्यवयवधर्मेण तथोच्यते। पाणिनिशब्दादिञ् न भवतीति पूर्वमेवोक्तम्। रौढिशब्दादपि न भवति; 'न द्व्यचः प्राच्यभरतेषु' इति निषेधात्।

न्यासः

सङ्कर्षणवासुदेवाविति। सङ्कर्षणश्च वासुदेवश्चेत्येकवचनान्तयोरयं द्वन्द्वः। वृष्णिकुमारा इति। तत्पुरुषोऽयम्। कुरुपञ्चाला इति। अत्र सर्वमस्ति, तथाप्यन्धकवृष्णिग्रहणान्न भवति; तत्रावृत्तेः॥

संख्या॥ एकादश इति। एकश्च दश चेति द्वन्द्वः। द्वादश इति। 'द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः' इत्यात्त्वम्॥

आचार्योपसर्जनश्चान्तेवासी॥ आचार्य उपसर्जनं प्रधानं यस्य स तथोक्तः। अन्ते वसतीत्यन्तेवासी। गौणश्चायं निर्देशः। द्वन्द्वस्य यान्यवयभूतानि तान्याचार्योपसर्जनवाचीनि। तस्मादन्तेवासिवाचित्वाच्चाभिधेय उपचारेण तान्याचार्योपसर्जनान्तेवासिशब्दाभ्यामुच्यन्ते। तदवयवोऽपि द्वन्द्वावयवधर्मेणाचार्योपसर्जनान्तेवासीति

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


कृत्स्नाः। अपिशलस्यापत्यमापिशलिराचार्यः, 'अत इञ्', तेन प्रोक्तमापिशलम्, 'इञश्च' इत्यण्, तदधीयते येऽन्तेवासिनस्तेऽप्यापिशलाः, 'प्रोक्ताल्लुक्' इति तस्य तद्धितस्याध्येतरि विहितस्य लुक् क्रियते। आपिशलेर्वा छात्रा आपिशला इत्युभयथाप्याचार्योपसर्जनश्चान्तेवासी भवति।

आचार्योपसर्जनग्रहणं द्वन्द्वविशेषणार्थम् – सकलो द्वन्द्व आचार्योपसर्जनो यथा विज्ञायेत, इह मा भूत् – पाणिनीयदेवदत्तौ।

आचार्योपसर्जन इति किम्? छान्दसवैयाकरणाः। अन्तेवासीति किम्? आपिशलपाणिनीये शास्त्रे॥

पदमञ्जरी

*आचार्योपसर्जनग्रहणं द्वन्द्वविशेषणमिति*। न पूर्वपदविशेषणम्। प्रथमा तु सप्तम्यर्थे द्रष्टव्या। किमर्थं पुनर्द्वन्द्वविशेषणं विज्ञायते? इत्याह—*सकलो द्वन्द्व इति*। *इह मा भूदिति*। पूर्वपदविशेषणे त्वत्रापि स्यात्॥

न्यासः

चोच्यते। आपिशलिराचार्य इति। 'अत इञ्'। आपिशलेरेव वा छात्रा आपिशला इति। पूर्ववदण्। उभयथेत्यादि। उभयप्रकारेणापि व्युत्पत्तावाचार्योपसर्जनश्चान्तेवासी भवति। तथा हि—उभयत्र शिष्या एव प्रधानभूता एवमुच्यन्ते, आचार्यस्तु तद्विशेषणत्वादुपसर्जनीभूतः। आपिशलशब्दोऽणन्तत्वात् प्रत्ययस्वरेणान्तोदात्तः। पाणिनिना प्रोक्तमिति 'वृद्धाच्छः', 'तदधीते' इत्यण्, तस्य लुक्। पाणिनीयशब्दः प्रत्ययस्वरेण मध्योदात्तः।

पाणिनीयरौढीया इति। रोढस्यापत्यं रौढिः, 'अत इञ्', रौढेराचार्यस्यच्छात्रा इति 'इञश्च' इत्यणः प्राप्तस्य 'न द्व्यचः' इति प्रतिषेधे कृते 'वृद्धाच्छः'। अथ वा—रौढिना प्रोक्तं रौढीयम्, 'ततश्च तदधीते' इत्यण्, तस्य पूर्ववल्लुक्—रौढीयाः। रौढीयशब्दोऽपि पूर्ववन्मध्योदात्तः। काशकृत्स्नेन प्रोक्तमित्यण्, तदधीयते काशकृत्स्नाः, पूर्ववदणो लुक्।

छान्दसवैयाकरणा इति। भवत्ययमन्तेवासिना द्वन्द्वः, न त्वाचार्योपसर्जनः। अत्र ह्यन्तेवासिन एव छान्दसवैयाकरणाभ्यामुच्यन्ते, न त्वाचार्योपसर्जनीभूताः। छन्दोऽधीयतेच्छान्दसाः, व्याकरणमधीयत इति वैयाकरणाः। तत्र ते च यत आचार्यादधीयते तस्यान्तेवासिनः। आपिशलपाणिनीये शास्त्र इति। आपिशलिना प्रोक्तमापिशलम्। पाणिनिना प्रोक्तं पाणिनीयम्। यत्र शास्त्रं प्राधान्येनोच्येत तत्र प्रत्ययस्य

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## कार्तकौजपादयश्च ॥ ३७ ॥

कार्तकौजपादयो ये द्वन्द्वास्तेषु पूर्वपदं प्रकृतिस्वरं भवति। प्रकृतिस्वरपूर्वपदाः कार्तकौजपादयो भवन्ति। विभक्त्यन्तानां पाठो वचनविवक्षार्थः। चकारो द्वन्द्वाधिकारानुवृत्त्यर्थः। कार्तकौजपौ। कृतस्यापत्यम्, कुजपस्यापत्यम् – इत्यणन्तावेतौ।

सार्वर्णिमाण्डूकेयौ। सार्वर्णिरिञन्तः।

अवन्त्यश्मकाः। अवन्तेरपत्यानि बहूनि तन्निवासो जनपदोऽवन्तयः। तथा अश्मकाः।

### पदमञ्जरी

*कार्तकौजपादयश्च ॥ प्रकृतिस्वरपूर्वपदा इति*। प्रकृतिशब्दः स्वाभाविके वर्त्तते, प्रकृतिः = स्वाभाविकः स्वरो येषां तानि प्रकृतिस्वराणि, एवंविधानि पूर्वपदानि येष्विति बहुव्रीहिः। *कृतस्यापत्यम्, कुजस्यापत्यमिति*। *अणन्तावेताविति*। ऋषिवाचित्वादाभ्यामण्। उत्तरपदस्य व्युत्पत्तिप्रदर्शनं प्रासङ्गिकम्, पूर्वपदस्यैव तु स्वरसिद्धये प्रदर्शनीयम्। माण्डूकेयशब्दः 'ढक्च मण्डूकात्' इति ढगन्तः।

*अवन्त्यश्मका इति*। अवन्तिशब्दोऽन्तोदात्तः, तस्मात् 'वृद्धेत्कोसलाजादाञ्ञ्यङ्', तस्य तद्राजत्वाद्बहुषु लुक्, अवन्तीनां निवासो जनपदः, चातुरर्थिकस्याणो जनपदे लुप्। अश्मकशब्दात् 'साल्वावयव' इत्यादिना ञ्ञ्, लुगादि पूर्ववत्।

### न्यासः

विधानादाचार्यः प्रधानभूतः; तद्विशेषणत्वात्। आचार्यत्वं तस्येह शास्त्रापेक्षम्। न ह्याचार्यतान्तेवास्यपेक्षैव भवति, अपि तु शास्त्रापेक्षापि ॥

कार्तकौजपादयश्च ॥ अणन्तावेताविति। तेन प्रत्ययस्वरेणान्तोदात्ताविति भावः। उत्तरत्राप्यणन्तस्यान्तोदात्तता वेदितव्या।

सौवर्णिरिञन्त इति। ञित्स्वरेणाद्युदात्त इत्यभिप्रायः। एवमुत्तरत्रापीञन्तस्याद्युदात्तता वेदितव्या। माण्डूकेयशब्दः 'ढक् च मण्डूकात्' इति ढगन्तः।

अवन्तेरित्यादि। अवन्तेरपत्यानि बहूनीति 'वृद्धेत्कोशलाजादाञ् ञ्यङ्' इति ञ्यङ्, तस्य 'तद्राजस्य' इत्यादिना लुक्। अवन्तीनां निवासो जनपदः 'तस्य निवासः' इति चातुरर्थिकोऽण्। तस्य 'जनपदे लुप्' इति लुप्। अवन्तयः, तथाश्मका इति। यथावन्तय इति कृतस्तथाश्मका इत्यत्रापि। अत्र क्षत्रियवाचिनो जनपदवाचिन शब्दाः। तद्धितेऽपत्येषु यो बहुषूत्पद्यते तदन्ताच्च निवासे चातुरर्थिकः।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


पैलश्यापर्णेयाः । युवद्वन्द्वोऽयम् । पीलाया अपत्यं पैलः, तस्यापत्यं युवेति 'अणो द्व्यचः' इति विहितस्य फिञः 'पैलादिभ्यश्च' इति लुक् । श्यापर्णशब्दो बिदादिः, तस्यापत्यं स्त्री श्यापर्णी, तदपत्यं युवा श्यापर्णेयः । बहुवचनमतन्त्रम् , तेन पैलश्यापर्णेयावित्यत्रापि भवति ।

कपिश्यापर्णेयाः । कपिरन्तोदात्तः, तस्यापत्यम्, बहुत्वे 'कपिबोध्रादाङ्गिरसे' इत्युत्पन्नस्य यञः 'यञञोश्च' इति लुक्, तेनात्र बहुत्वमाश्रीयत एव ।

शैतिकाक्षपाञ्चालेयाः । शितिकाक्षो नाम ऋषिः, तस्यापत्यमिति ऋष्यण् , तदपत्ये यूनि य इञ् तस्य 'ण्यक्षत्त्रियार्षञितो यूनि' इति लुक् । पाञ्चालस्यापत्यं स्त्री पाञ्चाली, तदपत्यं युवा पाञ्चालेयः । अत्रापि बहुवचनमविवक्षितमिति शैतिकाक्षपाञ्चालेयावित्यत्रापि भवति ।

पदमञ्जरी

*श्यापर्णीति* । 'शार्ङ्गरवाद्यञो ङीन्' ।

*कपिरन्तोदात्त इति* । प्रातिपदिकस्वरेण, 'कमु कान्तौ' क्तिच्, पृषोदरादित्वादत उत्वम् ।

न्यासः

तस्य लुप् कृतः । तथाश्मका इत्यत्रापि । एतावन्मात्रमतिदिश्यते । अश्मकस्यापत्यानि बहूनि, 'साल्वावयव' इत्यादिनेञ्, तस्य लुक् पूर्ववत्, तेषां निवासेऽण्, तस्य पूर्ववल्लुप् । अवन्तिशब्दो घृतादित्वादन्तोदात्त इत्येके । चित्स्वरेणेत्यपरे, ते हि 'भुवो झिच्' बहुलवचनादवतेरपि झिज् भवतीति वर्णयन्ति ।

युवद्वन्द्वोऽयमिति । युवसंज्ञकप्रत्ययान्तयोरयं द्वन्द्व इत्यर्थः । पैल इति । 'पीलाया वा' इत्यण् । श्यापर्णशब्दो बिदादिरिति । तेन ततोऽपत्यविवक्षायामञ् भवतीति भावः । स्त्रीति । 'शार्ङ्गरवाद्यञो ङीन्' । श्यापर्णेय इति 'स्त्रीभ्यो ढक्' । बहुवचनमतन्त्रमिति । अविवक्षितत्वात् । तेनेत्यादिना बहुवचनाविवक्षायाः फलं दर्शयति ।

कपिरन्तोदात्त इति । प्रातिपदिकस्वरेण । तेनेत्यादि । यस्मात् कपिशब्दोऽयं लुगन्तः, तेन बहुवचनमत्राश्रीयत एव । ऋष्यणिति । 'ऋष्यन्धक' इत्यादिना । यूनि य इञिति । 'अत इञ्' इत्यनेन । पाञ्चालीति । 'जनपदशब्दात् क्षत्रियादञ्' इत्यञ् । तदन्तात् पूर्ववन् ङीप् । पाञ्चालेयीति । पूर्ववड् ढक् । एवं वार्चलेयीत्यत्रापि ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



कटुकवार्चलेयाः। कटुकस्यापत्यमिति 'अत इञ्', तस्य 'बह्वच इञः प्राच्यभरतेषु' इति बहुषु लुक्। वर्चलाया अपत्यं वार्चलेयः।

शाकलशुनकाः। शकलस्यापत्यं शाकल्यः, तस्य छात्राः शाकलाः। 'कण्वादिभ्यो गोत्रे' इत्यण्। शुनकस्यापत्यमिति 'बिदादिभ्योऽञ्' तस्य बहुषु लुक्। शाकलशणकाः इति केचित्पठन्ति। तेषां शणकशब्दादुत्पन्नस्येञः 'बह्वच इञः प्राच्यभरतेषु' इति बहुषु लुक्।

शुनकधात्रेयाः। धात्र्या अपत्यं धात्रेयाः। शणकबाभ्रवाः। बभ्रोरपत्यं बाभ्रवः।

आर्चाभिमौद्गलाः। ऋचाभेन प्रोक्तमधीयते आर्चाभिनः। वैशम्पायनान्तेवासित्वाद् णिनिः। मुद्गलः कण्वादिः, तदपत्यस्य छात्रा मौद्गलाः।

कुन्तिसुराष्ट्राः। कुन्तेः सुराष्ट्रस्य चापत्येषु बहुषु तन्निवासे वा

पदमञ्जरी

कुन्तिशब्दोऽन्तोदात्तः, अवन्तिवत्कुन्तयः। शोभनं राष्ट्रमस्य सुराष्ट्रः, तस्यापत्यानि बहूनि 'जनपदशब्दात्क्षत्रियादञ्', लुगादि पूर्ववत्। 'चिति स्मृत्याम्', क्तिच्, कुन्तिवच्चिन्तयः।

न्यासः

शाकल्य इति। गर्गादित्वाद् यञ्। शाकल्यशब्दो ञित्स्वरेणाद्युदात्तः।

शणकबाभ्रवा इति। शणं करोतीति 'कै गै शब्दे' इत्यस्माद् धातोः 'आतोऽनुपसर्गे कः', तेन प्रत्ययस्वरेण शणकशब्दोऽन्तोदात्तः। बाभ्रव इति। 'ओर्गुणः'।

आर्चाभिन इति। प्रोक्तार्थे णिनिः, तस्मादध्येतर्यण्, तस्य 'प्रोक्ताल्लुक्' इति लुक्। एवमुत्तरत्रापि प्रोक्तप्रत्ययान्तादध्येतृप्रत्ययस्य लुग् वेदितव्यः। मुद्गलः कण्वादिरिति। गर्गाद्यन्तर्गणः। तदपत्यस्येति। मौद्गल्यस्य। मौद्गला इति। मौद्गल्यशब्दात् 'कण्वादिभ्यो गोत्रे' इत्यण्, 'यस्येति च' इत्यकारलोपः। 'आपत्यस्य च तद्धितेऽनाति' इति यकारस्य। आर्चाभिशब्दः प्रत्ययस्वरेणान्तोदात्तः।

कुन्ते सुराष्ट्रस्येत्यादि। 'कमु कान्तौ' इत्यस्मात् पूर्ववत् क्तिच्, बहुलवचनादुत्वम्। कुन्ति शोभनं राष्ट्रमस्येति सुराष्ट्रः। कुन्तेरपत्यानि बहूनि 'वृद्धेत्कोशलाजादाञ्ञ्यङ्'; सुराष्ट्रस्यापत्यानि बहूनि, जनपदशब्दादिनाण्, तयोः 'तद्राजस्य' इत्यादिना बहुषु लुक्। ततः कुन्तीनां निवासो जनपदः, 'तस्य निवासः' इति चातुरर्थिकोऽण्, तस्य 'जनपदे लुप्' इति लुप्। कुन्तयश्च सुराष्ट्राश्च कुन्तिसुराष्ट्राः। एवं कुन्तेः सुराष्ट्रस्य चापत्येषु बहुषु तन्निवासे जनपदद्वन्द्वादयं भवति। कुन्तिशब्दश्चित्स्वरे-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


जनपदे द्वन्द्वोऽयम्। कुन्तिचिन्तिशब्दावन्तोदात्तौ। चिन्तिसुराष्ट्राः। कुन्तिसुराष्ट्रवत्।

तण्डवतण्डाः। पचाद्यच्प्रत्ययान्तावन्तोदात्तावेतौ गर्गादिषु पठ्येते। तत्रापत्यबहुत्वे यञो लुक् क्रियते।

गर्गवत्साः। अत्रापि अपत्यबहुत्वे यञो लुक्।

अविमत्तकामविद्धाः। अविमत्तशब्दो नञ्स्वरेणाद्युदात्तः। द्वयोरप्येतयोरपत्येषु बहुषु इञः 'बह्वच इञः प्राच्यभरतेषु' इति लुक् क्रियते।

बाभ्रवशालङ्कायनाः। बभ्रोरत्यं बाभ्रवः। 'शलङ्कु शलङ्कं च' इति शालङ्कायनः। बाभ्रवदानच्युताः। दानच्युतशब्दादिञः 'बह्वचः' इति लुक्।

पदमञ्जरी

'तडि ताडने', तण्डः, तस्मादेवावपूर्वाद्वतण्डः, 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इत्यकारलोपः। 'मदी हर्षे', विपूर्वात् क्तः; 'न ध्याख्या' इत्यादिना नत्वाभावः, न विमत्तोऽविमत्तः।

*शलङ्कु शलङ्कं चेति*। नडादिष्वेतत्पठ्यते। बभ्रोरपत्यं बाभ्रवः, अण्। दानाच्च्युतो दानच्युतः, तदपत्यमपि दानच्युत एव। कटशब्दः पचाद्यजन्तः,

न्यासः

णान्तोदात्तः। चिन्तिसुराष्ट्रा इति। चिन्तिशब्दोऽप्यन्तोदात्त एव। सोऽपि 'चिति स्मृत्याम्' इत्यस्मात् क्तिच्प्रत्ययान्तः। केचिदवन्तिकुन्तिशब्दौ 'क्तिच्क्तौ च संज्ञायाम्' इति क्तिच्प्रत्ययान्तौ व्युत्पादयन्ति।

पचाद्यच्प्रत्ययान्ताविति। 'तडि ताडने' इत्यस्मात् केवलादवपूर्वाच्च पचाद्यच्। 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इत्यवशब्दाकारस्य लोपः। यञो लुक् क्रियत इति। 'यञञोश्च' इति।

अविमत्तकामविद्धा इति। 'मदी हर्षे' इत्यस्माद्विपूर्वान्निष्ठा—विमत्तः, न विमत्तोऽविमत्त इति। 'तत्पुरुषे तुल्यार्थ' इत्यादिना पूर्वपदस्य प्रकृतिभावे कृते नञ्स्वरेणाद्युदात्तः। बह्वच इति। अनेन सूत्रैकदेशेन 'बह्वच इञः प्राच्यभरतेषु' इत्येतत् सूत्रमुपलक्षयति। शलङ्कु शलङ्कञ्चेति। नडादिष्वेतत् पठ्यते। अस्यायमर्थः—शलङ्कुशब्दः फकमुत्पादयति शलङ्कादेशञ्चापद्यत इति।

बाभ्रवदानच्युता इति। बभ्रोरपत्यं बाभ्रवः, अणन्तः। दानच्युतशब्दादिञो

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


कठकालापाः । कठेन प्रोक्तमधीयते कठाः, वैशम्पायनान्तेवासित्वाद् णिनिः, तस्य 'कठचरकाल्लुक्' । कलापिना प्रोक्तमधीयते कालापाः, 'कलापिनोऽण्' इत्यण्प्रत्ययः, तस्मिन् 'इनण्यनपत्ये' इति प्रकृतिभावे प्राप्ते 'नान्तस्य टिलोपे सब्रह्मचारिपीठसर्पि' इत्यादिनोपसंख्यानेन टिलोपः ।

कठकौथुमाः । कुथुमिना प्रोक्तमधीयते इति 'प्राग्दीव्यतोऽण्', तत्र पूर्ववत् टिलोपः ।

कौथुमलौकाक्षाः । लोकाक्षेण प्रोक्तमधीयते लौकाक्षाः, लौकाक्षस्य वाऽपत्यं लौकाक्षिः, तस्य छात्त्रा लौकाक्षाः ।

स्त्रीकुमारम् । स्त्रीशब्दोऽन्तोदात्तः ।

मौदपैप्पलादाः । मुदस्यापत्यं मौदिः, तस्य छात्त्रा मौदाः । तथा पैप्पलादाः । मौदपैप्पलादा इति द्विः पठ्यते, तस्य प्रयोजनम् — पक्षे समासान्तोदात्तत्वमेव यथा स्यादिति ।

वत्सजरत् । वत्सश्च जरच्च, वत्सशब्दोऽन्तोदात्तः ।

पदमञ्जरी

लोकोऽक्षि यस्य स लोकाक्षः, तस्यापत्यं लौकाक्षिः, तस्य छात्त्रा लौकाक्षाः ।

*स्त्रीकुमारमिति* । समाहरद्वन्द्वः ।

'मुद हर्षे', इगुपधलक्षणः कः, मुदः; पिप्पलमत्तीति पिप्पलादः, 'कर्मण्यण्' । वदेः सः, वत्सः, 'जीर्यतेरतृन्', जरन्, तयोः समाहारद्वन्द्वः ।

न्यासः

बह्वचो लुगिति पूर्ववत् । कठकालपा इति । कठशब्दः पचाद्यचि व्युत्पादितत्वादन्तोदात्तः । लोकाक्षस्यापत्यं लौकाक्षिः । तस्यच्छात्त्रा लौकाक्षाः । स्त्रीकुमारमिति । 'स्त्यायतेड्ट्', तदन्तात् 'टिड्ढाणञ्' इति ङीप्, तत्र प्रत्ययस्वरेणान्तोदात्ताकारस्य 'यस्येति च' इति लोपः, 'अनुदात्तस्य च यत्रोदात्तलोपः' इति ङीप उदात्तत्वे कृते स्त्रीशब्दो ह्युदात्तः ।

तस्य च्छात्त्रा मौदा इति । 'इञश्च' इत्यण् । तथा पैप्पलादा इति । पिप्पलादस्यापत्यं पैप्पलादिः, तस्य च्छात्त्राः पैप्पलादाः ।

वत्सजरदिति । 'वृतृवदिहनिकमिकषिभ्यः सः' इति वदेः सः, अनेन वत्सशब्दोऽन्तो-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


सौश्रुतपार्थवाः । सुश्रुतस्य पृथोश्च छात्राः । 'प्राग्दीव्यतोऽण्' । जरामृत्यु । याज्यानुवाक्ये । यजेर्ण्यत् । 'यजयाच' इति कुत्वाभावः । 'तित्स्वरितम्' इत्यन्तस्वरितः । अनुवाक्येति वचेरनुपूर्वाद् ण्यत् । आचार्योपसर्जनान्तेवासिनामिह पाठः प्रपञ्चार्थः ॥

महान् व्रीह्यपराह्णगृष्टीष्वासजाबालभारभारत-
हैलिहिलरौरवप्रवृद्धेषु ॥ ३८ ॥

'प्रकृत्या पूर्वपदम्' इति वर्त्तते, 'द्वन्द्वे' इति निवृत्तम् । महानित्येतत्पूर्वपदं व्रीहि, अपराह्ण, गृष्टि, इष्वास, जाबाल, भार, भारत, हैलिहिल, रौरव, प्रवृद्ध – इत्येतेषूत्तरपदेषु प्रकृतिस्वरं भवति । महाव्रीहिः । महापराह्णः । महागृष्टिः । महेष्वासः । महाजाबालः । महाभारः । महाभारतः । महाहैलिहिलः । महारौरवः । महाप्रवृद्धः ।

महच्छब्दोऽन्तोदात्तः, तस्य प्रतिपदोक्तो यः समासः 'सन्महत्परमोत्तमोत्कृष्टाः' इति, तत्रैव स्वरः । तेनैषां षष्ठीसमासेऽन्तोदात्त एव भवति – महतो व्रीहिः महद्व्रीहिरिति ।

पदमञ्जरी

'षिद्भिदादिभ्योऽङ्', जरा । 'भुजिमृङ्भ्यां युक्त्युकौ', मृत्युः ॥

*महान् व्रीह्यपराह्णगृष्टीष्वासजाबालभारभारतहैलिहिलरौरवप्रवृद्धेषु* ॥ *महच्छब्दोऽन्तोदात्त इति* । 'वर्तमाने पृषद्बृहन्महत्' इत्यत्र तथा निपातनात् । *तस्येत्यादि* । एतच्च लक्षणप्रतिपदोक्तपरिभाषया लभ्यते ।

यद्येवम्, प्रवृद्धग्रहणमनर्थकम्, 'कर्मधारयेऽनिष्ठा' इति वक्ष्यमाणेनैव सिद्धत्वात्, 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' इति प्रवृद्धशब्दस्यापि क्तान्त-

न्यासः

दात्तः, 'जीर्यतेरतृन्' । जरत्, तयोर्द्वन्द्वः । सौश्रुतपार्थवा इति । सुश्रुतस्य छात्राः सौश्रुताः । पृथोश्छात्राः पार्थवा इति । उभयत्र 'तस्येदम्' इत्यण् ।

जरामृत्यु इति । जृषित्येतस्मात् 'षिद्भिदादिभ्योऽङ्' इत्यङ्, जरा, तस्य प्रत्ययस्वरेणान्तोदात्तत्वम् । म्रियते। 'भुजिमृङ्भ्यां युक्त्युकौ' इति त्युक्, मृत्युः ॥

महान्व्रीह्यपराह्णगृष्टीष्वासजाबालभारभारतहैलिहिलरौरवप्रवृद्धेषु ॥ महच्छब्दोऽन्तोदात्त इति । 'वर्तमाने पृषद्बृहन्महत्' इत्यन्तोदात्तस्य तस्योणादिषु निपातनात् । अथेह कस्मान्न भवति—महतो व्रीहिर्महद्व्रीहिः ? इत्यत आह—तस्येत्यादि । एतच्च

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

'कर्मधारयेऽनिष्ठा' इत्ययमपि श्रेण्यादिसमासे विधिरिति प्रवृद्ध-शब्द इह पठ्यते ॥

क्षुल्लकश्च वैश्वदेवे ॥ ३९ ॥

'क्षुल्लक' इत्येतत्पूर्वपदम्, महांश्च, वैश्वदेव उत्तरपदे प्रकृतिस्वरं भवति । क्षुल्लकवैश्वदेवम् । महावैश्वदेवम् । क्षुधं लातीति क्षुल्लः । तस्मादज्ञातादिषु प्रागिवात्के ऽन्तोदात्तः क्षुल्लकशब्दः ॥

उष्ट्रः सादिवाम्योः ॥ ४० ॥

उष्ट्रशब्दः पूर्वपदं सादिवाम्योरुत्तरपदयोः प्रकृतिस्वरं भवति । उष्ट्रसादि । उष्ट्रवामि । उष्ट्रशब्द उषेः ष्ट्रन्प्रत्ययान्त आद्युदात्तः । कर्मधारयोऽयम्, षष्ठीसमासो वा ॥

गौः सादसादिसारथिषु ॥ ४१ ॥

गोशब्दः पूर्वपदं साद, सादि, सारथि – इत्येतेषूत्तरपदेषु प्रकृति-

पदमञ्जरी

त्वाद् ? अत आह—*कर्मधारयेऽनिष्ठेत्ययमपीति* । तत्रापि लक्षणप्रतिपदोक्तपरिभाषया क्तान्तेन प्रतिपदोक्तो यः कर्मधारयस्तस्य ग्रहणमित्यर्थः ॥

*क्षुल्लकश्च वैश्वदेवे* ॥ *क्षुधं लातीति क्षुल्लः* । 'आतोऽनुपसर्गे कः', 'तोर्लि' इति परसवर्णः ॥

*उष्ट्रः सादिवाम्योः* ॥ *उष्ट्रशब्दः ष्ट्रन्प्रत्ययान्त इति* । 'उष दाहे' इत्येतस्मात् 'ष्ट्रन्' इति वर्तमाने 'उषिखनिभ्यां कित्' इत्येवं व्युत्पादितत्वात् ॥

न्यासः

लक्षणप्रतिपदोक्तपरिभाषया लभ्यते । अथ किमर्थं प्रवृद्धशब्द इह पठ्यते, यावता निष्ठान्तोऽसौ, तत्र 'कर्मधारयेऽनिष्ठा' इति वक्ष्यमाणेनैव सिद्धम् ? इत्यत आह—कर्मधारयेऽनिष्ठेत्यादि । तयैव हि परिभाषया 'श्रेण्यादयः कृतादिभिः' इति तेन प्रतिपदोक्तेनायं समासः । तत्र 'कर्मधारयेऽनिष्ठा' इत्यनेन प्रकृतभावस्याविधिः । न च महाप्रवृद्ध इत्ययं प्रतिपदोक्तेन निष्ठान्तेन कर्मधारयः; तत्र यदि प्रवृद्धशब्दोऽत्र न पठ्यते, तत्र परतः प्रकृतिभावो न स्यात् । तस्मात् तस्येह पाठः क्रियते । योगश्चायं समासस्वरस्यापवादः ॥

क्षुल्लकश्च वैश्वदेवे ॥ क्षुधं लातीति क्षुल्ल इति । 'आतोऽनुपसर्गे कः' इति कप्रत्ययः । 'तोर्लि' इति परसवर्णः ॥

उष्ट्रः सादिवाम्योः ॥ 'सर्वधातुभ्यः ष्ट्रन्' इत्यस्मात् ष्ट्रन्नित्यनुवर्तमाने 'उषिखनिभ्यां कित्' इत्येवं व्युत्पादित्वात् ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



स्वरं भवति । गोः सादः गोसादः । गां सादयतीति वा गोसादः । गोः सादिः गोसादिः । गोसारथिः ॥

**कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपा पारेवडवा तैतिलकद्रूः पण्यकम्बलो दासीभाराणां च ॥ ४२ ॥**

कुरुगार्हपत, रिक्तगुरु, असूतजरती, अश्लीलदृढरूपा, पारेवडवा, तैतिलकद्रू, पण्यकम्बल – इत्येते समासास्तेषां दासीभारादीनां च पूर्वपदं प्रकृतिस्वरं भवति । कुरूणां गार्हपतं कुरुगार्हपतम् । 'कृग्रो-रुच्च' इति कुरुशब्दः कुप्रत्ययान्तोऽन्तोऽदात्तः ।

पदमञ्जरी

*गोः सादसादिसारथिषु ॥ गोसाद इति* । सदेर्घञ्, ततः षष्ठीसमासः । *गां सादयतीति वेति* । सदेर्ण्यन्तात्कर्मण्यण् , तस्मादेव णिनिः—गोसादी । अत्र सादसादिनोः कृत्स्वरस्यापवादः, सारथौ तु समासस्वरस्य ॥

*कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपा पारेवडवा तैतिलकद्रूः पण्य-कम्बलो दासीभाराणां च ॥* अत्र *कुरुगार्हपतेत्येवमादयः पण्यकम्बलपर्यन्ताः* सप्त समासाः । तत्रादितो द्वावविभक्तिकौ, इतरे प्रथमैकवचनान्ताः । सा च प्रथमा सुब्व्यत्ययेन षष्ठ्याः स्थाने द्रष्टव्या । *दासीभाराणामिति* । बहुवचन-निर्देशादाद्यर्थो व्याख्यायते ।

'कुर्भ्रश्च,' 'कृग्रो रुच्च'—कुरुः, 'वृजी वर्जने', निदित्यधिकारे इगुप-

न्यासः

गौः सादसादिसारथिषु । गोः साद इत्यनेन वाक्यशेषेण गोसादशब्दस्य षष्ठी-समासत्वं दर्शयति । गां सादयतीति चेति । एतेनाप्युपपदसमासत्वम्; सदेर्विशर-णार्थत्वात् गोशब्दे कर्मण्युपपदे कृते गोसाद इति भवति । गोशब्दः 'गमेर्डोस्' इति डोस्प्रत्ययान्तत्वात् प्रत्ययस्वरेणान्तोदात्तः ॥

कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपा पारेवडवा तैतिलकद्रूः पण्य-कम्बलो दासीभाराणाञ्च ॥ अत्र कुरुगार्हपत इत्येवमादयः पण्यकम्बलपर्यन्ताः समस्ताः । तत्र कुरुगार्हपत-रिक्तगुरु-इत्येतावविभक्तिकौ । इतरे तु असूतजरतीत्येव-मादयः प्रथमैकवचनान्ताः । सा च प्रथमा सुब्व्यत्ययेन षष्ठ्याः स्थाने वेदितव्या । दासीभाराणामिति बहुवचनं गणस्य सूचनार्थम् । अत एवाह— दासीभारादीना-ञ्चेति । कुरुशब्दः कुरुप्रत्ययान्त इति । 'कुर्भ्रश्च' इत्यतः 'कु' इत्यधिकृत्य 'कृग्रो-रुच्च' इति कुप्रत्ययान्तत्वेन व्युत्पादितत्वात् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



❀ कुरुवृज्योर्गार्हपत इति वक्तव्यम् ❀। वृजीनां गार्हपतं वृजिगार्हपतम्। वृजिशब्द आद्युदात्तः।

रिक्तो गुरुः रिक्तगुरुः। 'रिक्ते विभाषा' इति पूर्वपदमाद्युदात्तम्, अन्तोदात्तं वा। असूता जरती असूतजरती। अश्लीला दृढरूपा अश्लीलदृढरूपा। अश्लीलशब्दो नञ्समासत्वादाद्युदात्तः। श्रीरयं-स्यास्ति तत् श्लीलम्, सिध्मादेराकृतिगणत्वाल्लच्। कपिलकादित्वाच्च लत्वम्। अश्लीलदृढरूपेति हि संस्थानमात्रेण शोभना निःश्रीका लावण्यविरहितोच्यते।

पदमञ्जरी

धात्विः—वृजिः, फिषि तु 'इगन्तानाञ्च द्व्यषाम्' इति पक्षेऽन्तोदात्तः। तस्यार्थः—जनपदशब्दानामिति वर्तते, 'अन्तः पूर्वो वा' इति च, जनपदवाचिनामिगन्तानां द्व्यचामादिरुदात्तो भवति अन्तो वा—काशयः, चेदयः। एतेन कुरुशब्दो व्याख्यातः।

रिक्तपूर्वादयः कर्मधारयाः। श्रीर्यस्यास्तीति श्रीशब्दो लावण्यवचनः। *कपिलकादित्वाल्लत्वमिति*। 'कृपो रो लः' इत्यत्रैतद्वक्ष्यते। *श्रीर्यस्यास्ति तच्छ्लीलशब्देनोच्यत इति*। एतदेवोपपादयति—*अश्लीलदृढरूपेति हीति*। *संस्थानमात्रेण शोभनेति*। कुब्जत्वादीनामभावात्, दृढत्वाच्च संस्थानस्य। मात्र-

न्यासः

कुरुवृज्योर्गार्हपत इति वक्तव्यमिति। कुरुवृजिशब्दयोर्गार्हपतशब्द उत्तरपदे प्रकृतिभावो भवतीत्येदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—कुरुशब्दस्य तावत् कुरुगार्हपत इति सूत्र एवोपादानाद् भविष्यति। वृजिशब्दस्यापि चकारस्येहानुक्तसमुच्चयार्थत्वादिति। वृजिशब्द आद्युदात्त इति। वृजेरिन्। 'इगुपधात् किच्' इत्येवं व्युत्पादितत्वात्।

रिक्तगुरुरिति। रिक्तगुरुशब्दस्य समानाधिकरणसमासतां दर्शयति। एवम् असूता जरतीत्यनेनाप्यस्यासूतजरतीशब्दस्य। अश्लीला दृढरूपेत्यनेनाश्लीलदृढरूपशब्दस्य। न सूतेत्यसूताशब्दोऽपि नञ्स्वरेणाद्युदात्तः। एवमश्लीलाशब्दोऽपि। न श्लीलाऽश्लीला। सिध्मादेराकृतिगणत्वाल्लजिति। 'सिध्मादिभ्यश्च' इति 'प्राणिस्थादातो लजन्यतरस्याम्' इत्यतो लजित्यस्यानुवृत्तेः। कपिलकादित्वाच्च लत्वमिति। 'कृपो रो लः' इत्यत्र 'कपिलकादीनाञ्चोपसंख्यानम्' इति लत्वस्योपसंख्यानात्। कथं पुनर्ज्ञायते—श्रीर्यस्यास्ति तच्छ्लीलशब्देनोच्यते? इत्याह—अश्लीलदृढरूपेत्यादि।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पारेवडवेव पारेवडवा। निपातनादिवार्थे समासो विभक्त्यलोपश्च। पारशब्दो घृतादित्वादन्तोदात्तः। तैतिलानां कद्रूः तैतिलकद्रूः। तितिलिनोऽपत्यं छात्त्रो वा तैतिल इत्यणन्तः।

पण्यकम्बलः। पण्यशब्दो यदन्तत्वादाद्युदात्तः।

❀ पण्यकम्बलः संज्ञायामिति वक्तव्यम् ❀। अन्यत्र पणितव्ये

पदमञ्जरी

शब्दव्यावर्त्यं दर्शयति—*निःश्रीकेति*। अस्यैवार्थं विस्पष्टीकरोति—*लावण्यरहितेति*।

*तितिलिनोऽपत्यमिति*। तिलशब्दान्मत्वर्थीय इनिः, पृषोदरादित्वात्तिशब्दस्य द्विर्वचनम्। तत्र यदापत्येऽर्थेऽण् तदा 'नस्तद्धिते' इति टिलोपः, यदा तु छात्त्रे तदा 'नान्तस्य टिलोपे' इत्यादिनोपसङ्ख्यानेन टिलोपः। ये तु तत्र तैतिलिशब्दं पठन्ति, तेऽत्रापि तैतिलिनोऽपत्यमिति विगृह्णन्ति, पृषोदरादित्वेनैव च रूपसिद्धिः। पण्यशब्दः 'अवद्यपण्य' इति यदन्तः 'यतोऽनावः' इत्याद्युदात्तः।

*पण्यकम्बलः संज्ञायामिति*। नियतप्रमाणस्य नियतमूल्यस्य कम्बलस्यैषा संज्ञा।

न्यासः

न श्लीलमश्लीलमिति अश्लीलशब्दस्यार्थः प्रतिषिध्यते। तत्र यदि श्लीलशब्दस्य श्रीर्यस्यास्ति स इत्यर्थो न स्यादश्लीलदृढरूपेत्यत्र निःश्रीका नोच्येत, उच्यते च, ततो ज्ञायते श्रीमद्वस्तु श्लीलशब्देनोच्यत इति। संस्थानमात्रेण शोभनेति। दृढत्वाच्च संस्थानस्य। श्रीरहितत्वाच्च संस्थानमात्रेण शोभना। मात्रशब्दः श्रीमत्ताया व्यवच्छेदकः। लावण्यरहितेत्यनेन निःश्रीकेत्यस्यार्थं विस्पष्टीकरोति।

पारे वडवेव पारेवडवेति। केन पुनरत्र समासः? न हीवार्थे समासस्य किञ्चिल्लक्षणमस्ति। अथापि कथञ्चित् समासः स्याद्। एवमपि 'सुपो धातुप्रातिपदिकयोः' इति विभक्तिलोपः कस्मान्न भवति? इत्याह – निपातनादेवेत्यादि। तितिलिनोऽपत्यमिति। एतेनापत्यार्थे तितिलिन्शब्दात् तद्धितोत्पत्तिमिह दर्शयति। छात्त्रा वेति। तितिलिन इत्यपेक्षते। एतेनापि 'तस्येदम्' इत्यत्रार्थे तैतिला इति। पूर्ववदुपसंख्यानाट्टिलोपः। यदन्तत्वादिति। 'अवद्यपण्य' इति यदन्तस्य निपातनात्। आद्युदात्त इति। 'यतोऽनावः' इत्यनेन।

पण्यकम्बलः संज्ञायां वक्तव्यमिति। पण्यकम्बलशब्दः संज्ञायां पूर्वपदप्रकृतिस्वरो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—'पूगेष्वन्यतरस्याम्' इत्यतो मण्डूकप्लुतिन्यायेनान्यतरस्यांग्रहणमनुवर्तते, सा च व्यवस्थितविभाषा। संज्ञायामेव पण्यकम्बलशब्दः पूर्वपदप्रकृतिस्वरो भवति, नान्यत्रेति। अन्यत्र समा-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



कम्बले समासान्तोदात्तत्वमेव। प्रतिपदोक्ते हि कृत्यानां समासे 'द्वितीया कृत्या' इत्येष विहितः स्वरितः।

दास्या भारो दासीभारः। देवहूतिः। देवजूतिः। देवसूतिः। देवनीतिः। अन्तोदात्तं पूर्वपदम्। वसुनीतिः। वसुशब्द आद्युदात्तः। 'शृस्वृस्निहित्रप्यसिवसि' इत्यत्र हि 'धान्ये नित्' इति वर्त्तते। ओषधिः। ओषो धीयतेऽस्यामिति 'कर्मण्यधिकरणे च' इति किप्रत्ययः। ओषशब्दो घञन्तत्वादाद्युदात्तः। चन्द्रमाः – 'चन्द्रे मोऽसिः' इत्यसि-प्रत्ययान्तोऽयम्। चन्द्रशब्दस्तु रक्प्रत्ययान्तत्वादन्तोदात्तः।

पदमञ्जरी

*समासान्तोदात्तत्वमेवेति*। ननु च पण्यशब्दस्य कृत्यप्रत्ययान्तत्वात् 'तत्पुरुषे तुल्यार्थ' इति पूर्वपदप्रकृतिस्वरेण भाव्यम्? अत आह—*प्रतिपदोक्ते हीति*। 'कृत्यतुल्याख्या अजात्या' इति यः कृत्यसमासः प्रतिपदोक्तः, तत्रैव स स्वरः। अयं तु 'विशेष्येण' इति सामान्यलक्षणविहितः; कम्बलशब्दस्य जातिशब्दत्वात्। 'कृत्यतुल्याख्या अजात्या' इत्येतद्धि गुणक्रियावाचिनामनियते पूर्वनिपातप्रसङ्गे कृत्यान्तस्य पूर्वनिपातार्थम्, न तु जातिप्रतिषेधार्थम्। अजात्येति तु वचनं न्यायसिद्धार्थानुवाद एवेति स्थितिः। 'चन्द्रे माङो डिच्च' इति, मिथुनेऽसिः, पूर्ववच्च सर्वमित्यसिंप्रत्ययः प्रकृतः। चन्द्रशब्द उपपदे 'माङ् माने' इत्यस्मादसिप्रत्ययो भवति डिच्च, डित्त्वाट्टिलोपः, चन्द्रमिव मीयते *चन्द्रमाः*।

न्यासः

सान्तोदात्तत्वमेवेति। ननु च पण्यशब्दोऽयं कृत्यप्रत्ययान्तः, 'तत्पुरुष' इत्यादिना तस्मिन् पणितव्ये पूर्वपदस्य प्रकृतिस्वरेणैव भवितव्यम्, तत् कथं समासान्तोदात्तत्वम्? इत्याह—प्रतिपदोक्ते हीत्यादि। 'कृत्यतुल्याख्या अजात्या' इति यः कृत्यसमासः प्रतिपदोक्तः, तत्र 'द्वितीया कृत्या' इति पूर्वपदस्य प्रकृतिभावो विहितः। न चायं प्रतिपदोक्तः समासः। 'विशेषणं विशेष्येण' इति सामान्येन विहितत्वात्। कुत एतत्? कम्बलशब्दस्य जातिशब्दत्वाद्। द्वितीया कृत्या इत्यनेन सूत्रैकदेशेन 'तत्पुरुषे तुल्यार्थ' इत्यादिकं सूत्रमुपलक्ष्यते।

दासीभार इति। दासीशब्दः पूर्वमुक्तस्वरः। देवहूतिरिति। पचाद्यजन्तत्वादन्तोदात्तः। ओषशब्दो घञन्तत्वादिति। 'उष दाहे' इत्यस्य घञि व्युत्पादितत्वात्। चन्द्रे 'माङो डित्' इत्यसिप्रत्ययान्तोऽयम्। 'मिथुनेऽसिः पूर्ववच्च सर्वम्' इति इत्यतोऽसिप्रत्ययस्यानुवृत्तेः। चन्द्रशब्दस्तु रक्प्रत्ययान्तत्वादिति। 'स्फायितञ्चि'

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



यस्य तत्पुरुषस्य पूर्वपदप्रकृतिस्वरत्वमिष्यते, न च विहितम्, स सर्वो दासीभारादीषु द्रष्टव्यः ॥

## चतुर्थी तदर्थे ॥ ४३ ॥

चतुर्थ्यन्तं पूर्वपदं तदर्थं उत्तरपदे तदभिधेयार्थं यत्तद्वाचिन्युत्तरपदे प्रकृतिस्वरं भवति। तदिति चतुर्थ्यन्तस्यार्थः परामृश्यते। यूपदारु। कुण्डलहिरण्यम्। यूपशब्द आद्युदात्तः। 'कुसुयुभ्यश्च' इत्यत्र निदिति वर्त्तते। कुण्डलशब्दोऽपि 'वृषादिभ्यश्चित्' इति कलप्रत्ययान्तोऽन्तोदात्तः। रथदारु। वल्लीहिरण्यम्। रथशब्द आद्युदात्तः। 'हनिकुषि' इत्यादिना क्थन्प्रत्ययः। वल्लीशब्दो ङीषः स्वरेणान्तोदात्तः।

तदर्थं इति किम्? कुबेरबलिः। प्रकृतिविकारभावे स्वरोऽयमिष्यते ॥

### पदमञ्जरी

चन्द्रमिति रजतम्, अमृतं च। चन्द्र इति वा मीयते चन्द्रमाः। चन्द्रशब्दस्तु 'स्फायितञ्चि' इत्यादिना रक्प्रत्ययान्तः।

*यस्य तत्पुरुषस्येत्यादिना* दासीभारादेराकृतिगणत्वं दर्शयति ॥

*चतुर्थी तदर्थे* ॥ तस्मै इदं तदर्थम्, तच्छब्देन चतुर्थ्यन्तार्थ उच्यते, यदाह—*तदभिधेयार्थं यदिति*। तस्य चतुर्थ्यन्तस्य यदभिधेयं तदर्थमित्यर्थः। रमन्तेऽस्मिन्स्थिता इति रथः, 'हनिकुषिनीरमिकशिभ्यः क्थन्', 'अनुदात्तोपदेश' इत्यनुनासिकलोपः, वल्लीशब्दो गौरादिङीषन्तः।

*तदर्थं इति किम्, कुबेरबलिरिति*। अत्र तादर्थ्यस्य भावाद् गोसुखमिति प्रत्युदाहार्यं मन्यन्ते। *प्रकृतिविकारभावे स्वरोऽयमिष्यत इति*। समासप्रकरण

### न्यासः

इत्यादिना सूत्रेण रक्प्रत्ययान्तत्वेन व्युत्पादित्वात्। स सर्वो दासीभारादिषु द्रष्टव्य इति। दासीभारादेराकृतिगणत्वात् ॥

चतुर्थी तदर्थे ॥ तदर्थं इति। तस्मै इदम्, चतुर्थ्यन्तम्, तस्य योऽर्थस्तदर्थ इत्यर्थः। कथं पुनर्यूपशब्द आद्युदात्तः? इत्याह—कुयुभ्यामित्यादि। 'पानीविषिभ्यः पः' इत्यतः 'पः' इत्यनुवर्तमाने 'कुयुभ्याञ्च' इति यूपशब्दः पप्रत्ययान्तो व्युत्पाद्यते। तत्र सुयुभ्यां निच्च' इत्यतो निदिति वर्तते, तेनाद्युदात्तो भवति। दीर्घत्वं तु 'सुवो दीर्घश्च' इत्यतो दीर्घग्रहणानुवृत्तेः। कलप्रत्ययान्त इति। 'वृषादिभ्यश्चित्' इत्यत्र 'कलस्तृपश्च' इत्यतः कलप्रत्ययानुवृत्तेः। रथशब्द आद्युदात्त इति। 'हनिकुषिनीरमि-



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## अर्थे ॥ ४४ ॥

'चतुर्थी' इति वर्तते । अर्थशब्द उत्तरपदे चतुर्थ्यन्तं पूर्वपदं प्रकृतिस्वरं भवति । मात्रे इदं मात्रर्थम् । पित्रर्थम् । देवतार्थम् । अतिथ्यर्थम् । मातृपितृशब्दावन्तोदात्तावुणादिषु निपातितौ । देवताशब्दो लित्स्वरेण मध्योदात्तः । अतिथिरिति 'अतेरिथिन्' इतीथिन्प्रत्ययान्तः ।

तदर्थविशेषा एव दारुहिरण्यादयो भवन्ति, न त्वर्थशब्दवाच्यं सामान्यमित्यतदर्थार्थोऽयमारम्भः ।

केचित्पुनराहुः – ज्ञापकार्थमिदम्, एतदनेन ज्ञाप्यते—पूर्वो विधिः प्रकृतिविकृत्योः समासे भवति । अश्वघासः, श्वश्रूश्वसुरमित्यत्र सत्यपि तादर्थ्ये न भवति ॥

### पदमञ्जरी

एवैतत्सम्यगुपपादितम्, अत्रापि ज्ञापकं वक्ष्यति ॥

अर्थे ॥ *तदर्थविशेषा एव दारुहिरण्यादयो भवन्तीति* । दारुहिरण्यादयो विशेषा एव तदर्था भवन्तीत्यर्थः । तादर्थ्यं हि तच्छेषभावः, स च विशेषाणामेव भवति, न सामान्यस्येति मन्यते ।

*केचित्पुनरित्यादि* । त एवं मन्यन्ते —'नेयं राजाज्ञा-विशेषा एव तदर्था इति, तेन सामान्यवाचिन्यप्यर्थशब्दे पूर्वेणैव सिद्धम्' इति । *अश्वघास इति* । ननु च 'तदर्थेन प्रकृतिविकारभावे समासः' इत्युक्तम्, 'अश्वघासादयः षष्ठीसमासाः' इति च ? एवं मन्यते—यदात्र प्रकृतिविकारभावे स्वर इति स्थितम्, तदाश्वघासादौ चतुर्थीसमासेऽपि न दोष इति । *श्वश्रूश्वशुरमिति* । 'विभाषा सेना' इत्यादिना नपुंसकत्वम् ॥

### न्यासः

काशिभ्यः कथन्' इति कथन्प्रत्ययान्तत्वात् । वल्लीशब्दो ङीषः स्वरेणान्तोदात्त इति । ङीष्प्रत्ययस्तु गौरादित्वाद् वेदितव्यः । प्रकृतिविकारभाव इत्यादि । कथं पुनः सामान्येनोच्यमानः प्रकृतिविकारभावे लभ्यते ? पूर्ववदन्यतरस्यांग्रहणानुवृत्तेः । तस्य च व्यवस्थितविभाषात्वाद् वक्ष्यमाणज्ञापकात् ॥

अर्थे ॥ मातृपितृशब्दावन्तोदात्ताविति । नप्तृनेष्टृ' इत्यादौ तृजन्तयोस्तयोर्निपातितत्वात् । लित्स्वरेण मध्योदात्त इति । 'देवात् तल्' इति तल्प्रत्ययान्तत्वात् । किमर्थं पुनरेतत्, न 'चतुर्थी तदर्थे' इत्येवं सिद्धम्, अर्थशब्दोऽपि तदर्थमेवोत्तरपदं भवति ? इत्याह तदर्थविशेषा एवेत्यादि । एवं मन्यते –अर्थशब्दोऽपि वृत्तौ

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## क्ते च ॥ ४५ ॥

क्तान्ते चोत्तरपदे चतुर्थ्यन्तं पूर्वपदं प्रकृतिस्वरं भवति । गोहितम् । अश्वहितम् । मनुष्यहितम् । गोरक्षितम् । अश्वरक्षितम् । वनं तापसरक्षितम् । अश्वशब्द आद्युदात्तः, मनुष्यशब्दोऽन्तस्वरितः, परिशिष्टपूर्वपदमन्तोदात्तम् । गोभ्यो रक्षितमिति 'सम्प्रदाने चतुर्थी' ॥

## कर्मधारयेऽनिष्ठा ॥ ४६ ॥

कर्मधारये समासे क्तान्त उत्तरपदेऽनिष्ठान्तं पूर्वपदं प्रकृतिस्वरं भवति । श्रेणिकृताः । ऊककृताः । पूगकृताः । निधनकृताः । श्रेणिशब्द

### पदमञ्जरी

क्ते च ॥ *गोभ्यो रक्षितं दीयत इति सम्प्रदाने चतुर्थीति* । अथ तादर्थ्ये चतुर्थ्यां को दोषः ? 'चतुर्थी तदर्थे' इत्येव स्वरस्य सिद्धत्वात् । नैतदस्योदाहरणमुपपद्यते, कथम् ? 'प्रकृतिविकारभावे स्वरः' इत्युक्तम्, न चात्र प्रकृतिविकारभावः ? सत्यम्; समासविधौ तु रक्षितग्रहणस्येदं प्रयोजनं दर्शितम् ॥

*कर्मधारयेऽनिष्ठा* ॥ 'श्रिञ् सेवायाम्', औणादिके निन्प्रत्यये श्रेणिः, 'मुदि

### न्यासः

विशेषवाची भवतीति । युक्तञ्चैतत् । तदा मात्रर्थमित्युक्ते मात्रादिभ्यो व्यावृत्तरूपं विशिष्टमेव मात्रर्थं वस्तु प्रतीयते । अश्वघास इत्यादिना ज्ञापकस्य प्रयोजनं दर्शयति ॥

क्ते च ॥ अश्वशब्द आद्युदात्त इति । क्वन्प्रत्ययान्तत्वात् । मनुष्यशब्दोऽन्तस्वरित इति । 'मनोर्जातावञ्यतौ षुक् च' इति यत्प्रत्ययान्तत्वात् । परिशिष्टमन्तोदात्तमिति । तत् पुनर्गोशब्दः, तापसशब्दश्च । तत्र 'गमेर्डोस्' इति डोस्प्रत्ययान्तत्वाद् गोशब्दः प्रत्ययस्वरेणान्तोदात्तः । तापसशब्दोऽप्यण्प्रत्ययान्तत्वात् । स हि 'तपःसहस्राभ्यां विनीनी', 'अण् च' इत्यण्प्रत्ययान्तो व्युत्पद्यते । अथ गोरक्षितमिति कथमिदमस्योदाहरणम्, यावता गोभ्यो रक्षितमिति तादर्थ्ये चतुर्थी, तत्र हि योगत उत्तरपदेन भवितव्यम् ? इत्यत आह—गोभ्यो रक्षितमित्यादि ! न ह्यत्र गवार्थं रक्षित इत्येषोऽर्थो विवक्षितः, किं तर्हि ? गोभ्यो रक्षितं दीयते इत्येतदध्याहार्यम् । तस्मात् सम्प्रदान एषा चतुर्थी, तत् कुतस्तादर्थ्यम् ! ॥

कर्मधारयेऽनिष्ठा ॥ श्रेणिकृता इत्यादि । 'श्रेण्यादयः कृतादिभिः' इति समासः । श्रेणिशब्द आद्युदात्त इति । नित्स्वरेण । स हि 'वीज्याज्वरिभ्यो निः' इत्यतो निरिति वर्तमाने 'वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्' इत्येवं व्युत्पाद्यते,

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



आद्युदात्तः। ऊकपूगशब्दावन्तोदात्तौ। निधनशब्दोऽयं मध्योदात्तः।

कर्मधारय इति किम्? श्रेण्या कृतं श्रेणिकृतम्। अनिष्ठेति किम्? कृताकृतम्॥

## अहीने द्वितीया॥ ४७॥

अहीनवाचिनि समासे क्तान्त उत्तरपदे द्वितीयान्तं पूर्वपदं प्रकृतिस्वरं भवति। कष्टश्रितः। त्रिशकलपतितः। ग्रामगतः। कष्टशब्दोऽन्तोदात्तः। त्रीणि शकलान्यस्येति त्रिशकलः[1], बहुव्रीहिस्वरेणाद्युदात्तः। ग्रामशब्दो नित्स्वरेणाद्युदात्तः।

अहीन इति किम्? कान्तारातीतः। योजनातीतः।

### पदमञ्जरी

ग्रो गग्गौ', बहुलवचनात्पूङोऽपि गक्—पूगः। *कृताकृतमिति*। 'क्तेन नञ्विशिष्टेनानञ्' इति समासः। अनिष्ठेत्यनुच्यमानेऽत्रैव स्यात्, अयं हि क्तसंशब्देन विहितत्वाच्छ्रेण्यादिसमासादपि प्रतिपदोक्तः॥

*अहीने द्वितीया*॥ हीनम्=त्यक्तम्। *अहीनवाचिनि समास इति*। पूर्वपदद्वारेण समासस्याहीनवाचित्वम्।

### न्यासः

तेनाद्युदात्तः। पूगशब्दोऽन्तोदात्त इति। 'मुदि ग्रोर्गग्गौ' इति बहुलवचनात् पूङोऽपि गक्। तेन प्रत्ययस्वरेणान्तोदात्तः।

कृताकृतमिति। कृतश्च तदकृतं चेति 'क्तेन नञ्विशिष्टेनानञ्' इति समासः। एकदेशस्य कृतत्वात् कृतम्, तदैवैकदेशस्याकृतत्वादकृतम्॥

अहीने द्वितीया॥ हीनम्=त्यक्तम्, न हीनमहीनम्। कष्टशब्दोऽन्तोदात्त इति। क्तप्रत्ययान्तत्वात् प्रत्ययस्वरेण। 'कृच्छ्रगहनयोः कषः' इतीट्प्रतिषेधः। बहुव्रीहिस्वरेणाद्युदात्त इति। त्रिशब्दो हि प्रातिपदिकस्वरेणान्तोदात्तः। तत्र 'बहुव्रीहौ प्रकृत्या' इति प्रकृतिस्वरे कृते बहुव्रीहिस्वरेण त्रिशकलशब्द आद्युदात्तः। ग्रामशब्दोऽपि आद्युदात्त एव। तथा ह्यसौ 'अर्तिस्तुसुहुसृधुक्षि' इत्यतो मन्प्रत्ययेऽनुवर्तमाने 'अवतेष्टिलोपश्च' 'ग्रसेरा च' इति मन्प्रत्ययान्तो व्युत्पाद्यते। कान्तारातीत इति। कान्तारमतीतवान्, त्यक्तवानित्यर्थः। कान्तारातीतशब्दोऽत्र हीनशब्दवाची।

---

१. 'त्रिशकलशब्दः' इत्यधिकं क्वचित्।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


* द्वितीयानुपसर्गं इति वक्तव्यम् *। इह मा भूत् – सुखप्राप्तः, दुःखप्राप्तः। सुखापन्नः, दुःखापन्नः।

'अन्तः', 'थाथ' इत्यस्यापवादोऽयम्॥

## तृतीया कर्मणि ॥ ४८ ॥

कर्मवाचिनि क्तान्त उत्तरपदे तृतीयान्तं पूर्वपदं प्रकृतिस्वरं भवति। अहिहतः। वज्रहतः। महाराजहतः। नखनिर्भिन्ना। दात्रलूना[1]। 'आङि श्रिहनिभ्यां ह्रस्वश्च' इति अहिरन्तोदात्तो व्युत्पादितः। केचिदाद्युदात्तमिच्छन्ति। वज्रो रक्प्रत्ययान्तः। महाराजष्टच्प्रत्ययान्तः। नास्य खमस्तीति 'बहुव्रीहौ नकुलनख' इति नखशब्दो

### पदमञ्जरी

*द्वितीयानुपसर्गं इति वक्तव्यमिति*। अहीनग्रहणमपनीय अनुपसर्गग्रहणं कर्तव्यम्, व्यापकत्वादित्यर्थः। *इह मा भूदिति*। इहापि मा भूदित्यर्थः। अनुपसर्गग्रहणे चेह क्रियमाणे प्रवृद्धादिषु खट्वारूढशब्दो न पाठ्यः; आरूढशब्दस्य सोपसर्गत्वात्। एतत्स्वराभावे थाथादिस्वरेणैवान्तोदात्तस्य सिद्धत्वात्॥

*तृतीया कर्मणि*॥ अयमपि थाथादिस्वरापवादः। *अहिरन्तोदात्त इति*। आङ्पूर्वाद्धनो डिप्रत्ययः, आङश्च ह्रस्वः। आहन्ति परान्, आहन्यते परैरिति वा अहिः। *केचिदिति*। ते तत्रोदात्तग्रहणमनुवर्तयन्ति, तथा च—अहन्नहिम्,

### न्यासः

द्वितीयानुपसर्गं इति वक्तव्यमिति। द्वितीयान्तमनुपसर्गे क्तान्ते प्रकृतिस्वरं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानं त्विहापि तस्यैवान्यतरस्यांग्रहणस्यानुवृत्तिं व्यवस्थितविभाषात्वं चाश्रित्य कर्तव्यम्॥

तृतीया कर्मणि॥ 'तत्पुरुषे तुल्यार्थ' इत्येव सिद्धे पूर्वपदप्रकृतिस्वरे च कृत्स्वरेण थाथादिस्वरेण बाधिते तत्प्रतिपादनार्थं वचनम्। अहिहत इति। 'कर्तृकरणे कृता बहुलम्' इति समासः। अहिरन्तोदात्तो व्युत्पादित इति। आङ्पूर्वाद्धन्तेः 'बनिघसिभ्यामिण्' इति वर्तमाने 'वातेर्डिच्च' इति डिदिति च 'आङिश्रिहनिभ्यां ह्रस्वश्च' इत्यनेनाहिरिणन्तो व्युत्पादितः। केचिदाद्युदात्तमिच्छन्तीति। ते 'समाने ख्यः स चोदात्तः' इत्युदात्तग्रहणमप्यनुवर्तयन्ति। रक्प्रत्ययान्त इति। 'स्फायितञ्चि' इत्यादिना रक्प्रत्ययान्तत्वेन व्युत्पादितत्वात्। महाराजष्टच्प्रत्ययान्त इति। 'राजाहःसखिभ्यष्टच्'

१. 'दारुलूना' इति पाठान्तरम्।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


निपातितः । तेन 'नञ्सुभ्याम्' इत्यन्तोदात्तः । दात्रशब्दः 'दाम्नीशस' इति ष्ट्रन्प्रत्ययान्तः ।

कर्मणीति किम्? रथेन यातो रथयातः । गत्यर्थत्वात्कर्तरि क्तः ॥

गतिरनन्तरः ॥ ४९ ॥

'क्ते', 'कर्मणि' इति वर्त्तते । कर्मवाचिनि क्तान्त उत्तरपदे गतिरनन्तरः पूर्वपदं प्रकृतिस्वरं भवति । प्रकृतः । प्रहृतः ।

अनन्तर इति किम्? अभ्युद्धृतः । समुद्धृतः । समुदाहृतः । व्यवहितस्य गतेरयं स्वरो न भवति । अनन्तरे पुनरिष्यते ।

पदमञ्जरी

अहिरिव भोगैरिति आद्युदात्तमधीयते ॥

*गतिरनन्तरः* ॥ 'अनन्तरः' इति पुंल्लिङ्गनिर्देशाद् गतिशब्दः क्तिजन्तः, निपातनाच्चानुनासिकलोपः । *प्रकृतः, प्रहृत इति* । अत्र समासान्तोदात्तत्वम्, अव्ययपूर्वपदप्रकृतिस्वरत्वम्, कृत्स्वरः, थाथादिस्वरः, इत्येतेषु प्राप्तेषु पूर्वपदप्रकृतिभावो विधीयते ।

*व्यवहितस्य गतेरयं स्वरो न भवतीति* । ननु च निर्दिष्टग्रहणमानन्तर्यार्थम्, प्रत्ययग्रहणपरिभाषया च हृतशब्दस्क्तान्तः, तत्कथं क्तान्ते परतो विधीयमानो व्यवहितस्य प्रसज्यते? कृद्ग्रहणपरिभाषाया क्तान्तेऽनुप्रवेशादुच्छब्दस्य प्रसङ्ग इति चेत्, यद्येवम्, क्रियमाणेऽप्यनन्तरग्रहणे स्यात्, उद्धृतशब्दः क्तान्तस्तस्यानन्तर एव गतिरिति? नैष दोषः, अनन्तरग्रहणसामर्थ्याद्धातोरनन्तरो गतिराश्रयिष्यते । नन्वेवमप्यत्र परत्वाद् 'गतिर्गतौ' इति निघातो भविष्यति, सति च तस्मिन् उदात्तस्वरिताधिकारादेव पूर्वपदप्रकृतिस्वरस्याप्रसंग

न्यासः

इति ष्ट्रन्प्रत्ययान्तत्वात् । दात्रलूना इति । 'धः कर्मणि ष्ट्रन्' इत्युनुवर्तमाने 'दाम्नीशस्' इत्यादिना ष्ट्रन्प्रत्ययान्तो दात्रशब्दो व्युत्पाद्यते, तेनाद्युदात्तः । सर्वत्र 'तयोरेव कृत्यक्तखलर्थाः' इति कर्मणि क्तः ॥

गतिरनन्तरः ॥ प्रकृत इति । 'कुगतिप्रादयः' इति समासः । प्रादयोऽभिवर्जिता आद्युदात्तगणे निपात्यन्ते, तेन प्रशब्द आद्युदात्तः । अभ्युद्धृत इति । अत्राभिशब्दस्यानन्तरस्य न भवति; अत्रोच्छब्दस्य क्तान्तेन समासं कृत्वा पश्चादभिशब्दस्योद्धृतशब्देन समासः कर्तव्यः । अथ वा—'कुगतिप्रादयः' इत्यत्र सुब्ग्रहणस्य निवर्तितत्वादनेकस्यापि समासो भवति । समुदाहृत इति । अत्रापि समुदोरन्तरयोर्न भवति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

पदमञ्जरी

इति व्यवहितनिवृत्त्यर्थमनन्तरग्रहणं न कर्तव्यम्? अनन्तरप्राप्त्यर्थं तु। तत्र च यत्रैक एव गतिस्तत्र नार्थोऽनेन। यत्र त्वनेको गतिस्तत्रासौ न प्राप्नोति, तदनन्तर इत्यनेनानेकगतिसमवधानेऽनन्तरस्य प्राप्यते; अन्यथाऽभ्युद्धृतमित्यत्रोद्धृतशब्दस्य कृद्ग्रहणपरिभाषया क्तान्तत्वे सति समासान्तोदात्तत्वे तदपवादे च कृत्स्वरे तदपवादस्थाथादिस्वरः प्राप्नोति। ननु च यथा प्रथमे समासे गतिस्वरेण बाधितस्य थाथादिस्वरस्य पुनर्द्वितीये समासे प्राप्तिः, तथा तदपवादो गतिस्वरोऽप्यनेन पुनर्भविष्यति? नैतदेवम्; अपूर्वपदत्वात्। 'कुगतिप्रादयः' इत्यत्र निष्क्रान्तादौ पदकार्यप्रवृत्तये सुबित्यनुवर्तनीयम्, तत्रैकत्वस्य विवक्षितत्वात्सुबन्तसमुदायस्य चासुबन्तत्वान्न द्वयोर्युगपत्समासो लभ्यत इति क्रमेणासौ विधेयः। 'गतिकारकोपपदानाम्' इत्यनेनाप्युत्तरपदस्य प्राक् सुबुत्पत्तेः समास उच्यते, न पूर्वपदस्यापि; निष्क्रान्तचर्मकारादौ पदकार्यस्यासिद्धिप्रसङ्गात्। अत उच्छब्दस्य पूर्वं समासः, पश्चादुद्धृतशब्देनाभिशब्दस्य, ततश्चाभिशब्द एव पूर्वपदं नोच्छब्द इति पूर्वपदस्य गतेः प्रकृतिस्वरो विधीयमानोऽपूर्वपदस्योदो न स्याद्। अतः कक्षान्तरप्राप्तमपि थाथादिस्वरं बाधित्वाऽपूर्वपदस्याप्यनन्तरस्य वाक्यभेदेन प्रकृतिभावो यथा स्यादित्येवमर्थमनन्तरग्रहणम्। तदाह—*अनन्तरे पुनरिष्यत इति*।

यद्येवम्, कारकपूर्वेऽतिप्रसङ्गः, दूरादागतो प्राप्तो देवदत्तेनेत्यत्राप्यागतशब्देन 'स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन' इति समासे कृते तस्यामवस्थायां थाथादिस्वर इष्यते, तमपि बाधित्वाऽपूर्वपदस्याप्युद एव स्वरः प्राप्नोति? नैष दोषः; थाथादिसूत्रे गतिग्रहणं निवर्तिष्यते, ततः किम्? प्रकृतमित्यादौ कृत्स्वरस्यैव प्राप्तत्वात्तस्यैव गतिस्वरापवादः, न तु थाथादिस्वरस्य प्रसङ्गः, तत्र स एव भविष्यति। अभ्युद्धृतमित्यादौ तु यत्र कक्षान्तरेऽपि कृत्स्वर एव प्राप्तस्तत्रापि स एव भविष्यतीति; ततश्चापूर्वपदार्थमनन्तरग्रहणमपि न कर्तव्यं भवति। कथम्? उद्धृतशब्दे गतिस्वरे प्रवृत्ते पश्चादभिशब्दस्य समासे कृते 'गतिर्गतौ' इति इति निघाते चोदात्तस्वरिताधिकाराद् गतिरित्यस्य पूर्वपदप्रकृतिभावस्याप्रवृत्तौ समासस्वरापवादः कृत्स्वरो भवन् कृद्ग्रहणपरिभाषयोद्धृतशब्दस्य कृदन्तत्वात्तत्स्वर उच्छब्दोदात्तत्वमेव भविष्यति। यदि थाथादिसूत्रेण गतिग्रहणं निवर्त्तिष्यते, प्रभेद इत्यत्र कृत्स्वरेण घञो ञित्त्वाद्धातोरुदात्तत्वं स्याद्, अन्तोदात्तत्वं चेष्यते। एवं तर्ह्यनुवर्तते गतिग्रहणम्, क्तेन तु न सम्बध्यते, तत्कथं थाथादिसूत्रात् क्तग्रहणमपनीय पृथक्कर्तव्यम्? तत्र च गतिग्रहणं निवर्त्तिष्यते।

एवमपि विशुष्क इत्यादौ यत्र कर्तरि क्तान्तमुत्तरपदम् 'शुष्कधृष्टौ' इत्या-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


कारकपूर्वस्य तु सति शिष्टत्वात् थाथादिस्वर एव भवति—दूरादागत इति।

पदमञ्जरी

दिना चाद्युदात्तम्? तत्र कृत्स्वरे सत्युत्तरपदमाद्युदात्तं स्यादन्तोदात्तं चेष्यते। अतः कृद्ग्रहणेनापि गतिग्रहणमवश्यं सम्बन्धनीयम्, ततश्च पूर्वोक्तदोषप्रसङ्गः, तत्राह—*कारकपूर्वस्य त्विति*। अयमभिप्रायः—अनन्तरशब्दोऽयमनन्तरमपेक्ष्य प्रवर्तते, तत्र च 'अनन्तरो गतिः' इत्युक्ते अननन्तरोऽपि गतिरेव प्रतीयते; सन्निधानात्। ततश्चापूर्वपदार्थमप्यनन्तरग्रहणं गतिद्वयसमवधान एवानन्तरस्य प्रकृतिस्वरत्वं प्रापयतीति दूरादागत इत्यादौ न दोष इति।

अथ वा—'कारकाद्दत्तश्रुतयोरेवाशिषि' इत्यत्र कारकादिति विभज्यते, तत्र च क्तग्रहणमनुवर्तते, 'अन्तोदात्तः' इति 'गतिः' इति च, कारकात्परं क्तान्तमुत्तरपदमन्तोदात्तं भवतीत्यर्थः। तत्र दूराद् गत इत्यादौ थाथादिसूत्रेणैवान्तोदात्तत्वस्य सिद्धत्वाद् दूरादागत इत्यादौ 'गतिरनन्तरः' इत्यनन्तरग्रहणेनैवापूर्वपदार्थेन प्राप्तस्य गतिस्वरस्यापवादः कारकादित्ययं योगो ज्ञायते। यद्येवम्, अनन्तरग्रहणं न कर्तव्यम्, कथम्? असत्यनन्तरग्रहणे दूरादागतः, अभ्युद्धृत इत्यादौ सर्वत्र द्वितीये समासे कृते सतिशिष्टस्थाथादिस्वर एव प्राप्तः, ततश्च कारकादित्ययं योगो नियमार्थो भवति। तत्र च गतिग्रहणमनुवर्तयितव्यम्, ततश्चात्रायमर्थः—कारकादेव परं सगतिकं क्तान्तमुत्तरपदमन्तोदात्तमिति। ततश्चाभ्युद्धृत इत्यादौ नियमेन थाथादिस्वरे व्यावर्तिते कृत्स्वरो भवन् कृद्ग्रहणपरिभाषयोद्धृतादेः कृदन्तत्वात्तस्यैव यः स्वर आद्युदात्तत्वं स एव भविष्यति। ननु च विपरीतोऽपि नियमः सम्भाव्येत—कारकात्परं सगतिकमेवेति, ततश्च पूर्वाह्णशुष्क इत्यत्र थाथादिस्वरे कृत्स्वरेण 'शुष्कधृष्टौ' इत्याद्युदात्तत्वं श्रूयेत? नैष दोषः; आचार्यप्रवृत्तिर्ज्ञापयति—न विपरीतो नियम

न्यासः

कारकपूर्वस्य त्वित्यादि। दूरादागत इत्यत्राङो गतिसमासे कृते सत्यनेन प्रकृतिस्वरः, तत उदात्तो भवति। ततो दूरादागत इति 'स्तोकान्तिक' इत्यादिना पञ्चमीसमासः, तस्मिन् कृते 'गतिकारकोपपदात् कृत्' इति वर्तमाने 'थाथघञ्' इत्यादिनोत्तरपदस्यान्तोदात्तत्वं विधीयते। स च गतिस्वरे सति विधीयत इति शिष्टत्वेन स एव भवति। 'पञ्चम्याः स्तोकादिभ्यः' इत्यलुक्।

अथ कथं समुद्धृत इत्यादि प्रत्युदाहरणमुपपद्यते, यावता 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' इति गतिरिह निष्ठाग्रहणेनैव गृह्यते, एवञ्चानन्तर एव समुद्धृत

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


अनन्तरग्रहणसामर्थ्यादेव 'कृद्ग्रहणे गतिकारकपूर्वस्यापि' इत्येतन्नाश्रीयते ।

कर्मणीत्येव — प्रकृतः कटं देवदत्तः । थाथादिस्वरापवादो योगः ॥

तादौ च निति कृत्यतौ ॥ ५० ॥

तकारादौ च तुशब्दवर्जिते निति कृति परतो गतिरनन्तरः

पदमञ्जरी

इति, यदयम् 'दत्तश्रुतयोरेवाशिषि' इत्याह । न हि विपरीते नियमे कारकात्परयोर्दत्तश्रुतयोरन्यस्य वा क्तान्तस्योत्तरपदस्यान्तोदात्तत्वं प्रसक्तम् । अतो नार्थोऽपूर्वपदार्थेनानन्तरग्रहणेन । एवं तर्हि व्यवहितनिवृत्त्यर्थमेवानन्तरग्रहणम, ननु चोक्तम्—परत्वाद् 'गतिर्गतौ' इति निघाते कृते उदात्तस्वरिताधिकारादेव प्रकृतिभावस्याप्रसङ्गः' इति ? यत्र तर्हि 'गतिर्गतौ' इति निघातो नास्ति तत्र प्रसङ्गः । क चासौ नास्ति ? पादादौ । वक्ष्यति हि 'आ पादपरिसमाप्तेरपादादावित्यधिकारः' इति, तथा च उपप्रेतकुशिताश्चेतयध्वमिति पादादावुपशब्दं गतिपरमपि उदात्तमधीयते, तथाभ्युद्धृतमिति यदाभिशब्दः पादादौ वर्तते तदा निघाताभावादनेन व्यवहितस्यापि गतेः प्रकृतिभावः स्यात् ? नैतदस्ति; यावता प्रत्ययग्रहणपरिभाषया हृतशब्दः क्तान्तः, नोद्धृतशब्दः । एवं तर्ह्येतद् ज्ञापयति— कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणं भवतीति ।

ननु कृद्ग्रहणे गतिपूर्वस्य ग्रहणं ज्ञापितम्, कारकपूर्वस्य तु कथम् ? उच्यते; पूर्वाचार्यैस्तावदेषा परिभाषा व्युत्पादिता, इहाप्यनन्तरग्रहणेनैकदेशद्वारेण कृत्स्न एव परिभाषार्थो ज्ञाप्यते । यदि कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणं भवति, कथं समुद्धृत इति प्रत्युदाहरणम्, यावता उद्धृतशब्दः क्तान्तः, तस्य चानन्तर एव सम् ? इत्यत आह—*अनन्तरग्रहणसामर्थ्यादिति* । इह व्यवहितनिवृत्तिफलेनानन्तरग्रहणेन परिभाषाया ज्ञापनादन्यत्रैतत्फललाभ इति भावः ।

*प्रकृतः कटमिति* । 'आदिकर्मणि क्तः कर्तरि च' इति कर्तरि प्रत्ययः ॥

न्यासः

इत्यत्र सम्शब्दः, समुदाहृत इत्यत्रापि समुच्छब्दौ ? इत्यत आह—अनन्तरग्रहणसामर्थ्यादिति । अनन्तरग्रहणेन ह्येवमर्थः क्रियते—समुद्धृतमित्यादौ मा भूदिति । यदि परिभाषेयमिहाश्रीयेत, तदा हि उद्धृत इत्यादौ गतिरनन्तर एवेति व्यावर्त्याभावादनन्तरग्रहणमपार्थकं स्यात् ।

प्रकृतः कटं देवदत्त इति । 'आदिकर्मणि क्तः कर्तरि च' इति कर्तरि हि क्तप्रत्ययः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


प्रकृतिस्वरो भवति । प्रकर्ता । प्रकर्तुम् । प्रकृतिः । 'प्रकर्ता' इति तृन्नन्तः । कृत्स्वरबाधनार्थं वचनम् ।

तादाविति किम् ? प्रजल्पाकः । नितीति किम् ? प्रकर्त्ता । तृजन्तः ।

कृद्ग्रहणमुपदेशे ताद्यर्थम् । इहापि यथा स्यात् – प्रलपिता, प्रलपितुमिति ।

अताविति किम् ? आगन्तुः ॥

पदमञ्जरी

*तादौ च निति कृत्यतौ* ॥ *प्रजल्पाक इति* । 'जल्पभिक्ष' इति षाकन् । इह गतेः स्वरो विधीयते, क्रियायोगे च गतिसंज्ञा, धातुश्च क्रियावाची, धातोश्च द्वये प्रत्ययाः—कृतस्तिङश्च, तत्र तिङन्ते पूर्वपदस्यासम्भवात्कृदन्तादेव भविष्यति, नार्थः कृद्ग्रहणेन ? इदं तर्हि प्रयोजनम्—यथा तादिग्रहणं कृद्विशेषणं विज्ञायते तकारादौ निति कृतीति; अन्यथा नितीत्यनेन प्रत्ययग्रहणपरिभाषया तदन्तस्योपस्थानात्तस्यैवोत्तरपदस्य तकारादित्वं विशेषणं स्यात् । ततश्चेहैव स्यात्—प्रतरिता, प्रतरितुमिति; इह न स्यात्—प्रकर्त्ता, प्रकर्त्तुम् ।

नैतदस्ति प्रयोजनम्, क्रियमाणेऽपि कृद्ग्रहणे अनिष्टं शक्यं विज्ञातुम्—तकारादावुत्तरपदे निति कृतीति, अक्रियमाणेऽपि चेष्टम् निद्यस्तकारादिस्तदन्त उत्तरपदेति; ततश्च यथा 'उतश्च प्रत्ययात्' इत्यत्रासंयोगपूर्वग्रहणेनोकारो विशेष्यते न प्रत्ययः, तथेहापि नित एव विशेषणं तादिग्रहणं भविष्यतीति ? अत्राह—*कृद्ग्रहणमुपदेशे ताद्यर्थमिति* । अयमभिप्रायः—कृद्ग्रहणेन कृत्संज्ञाप्रवृत्तिकाले यस्तादिस्तत्रेति । किमेवं सति सिद्धं भवति ? तत्राह—*इहापीति* । असति

न्यासः

तादौ च निति कृत्यतौ ॥ प्रकर्तुमिति । तुमुन् । प्रकर्तेति तृन्नन्त इति । तृजन्ताशङ्कां निराकरोति । कृत्स्वरबाधनार्थमित्यादि । अव्ययस्वरापवादः 'गतिकारकोपपदात् कृत्' इति कृत्स्वरः प्राप्नोति, अतस्तद्बाधनार्थं वचनम् । प्रजल्पाक इति । 'जल्पभिक्ष' इत्यादिना षाकन् । तृजन्त इति । तृन्नन्ताशङ्कां निराकरोति ।

अथ निद्ग्रहणं किमर्थम् ? प्रकृष्टमृष्टमृत्तिका प्रमृत्तिका इत्यत्र मा भूदिति चेत् ? नैतदस्ति; तथा हि—यत्क्रियायुक्ताः प्रादयः तं प्रति गत्युपसर्गसंज्ञा भवन्ति, मृत्तिकाशब्दश्चायं नामधेयत्वात् क्रियावाची न भवति, तेन तं प्रत्युपसर्गसंज्ञा नास्त्येव ? इत्यत आह—कृद्ग्रहणमित्यादि । 'कृति' इत्यनेन संज्ञासम्बन्धकालो लक्ष्यते, तेन कृत्संज्ञावेलायां यस्तादिरित्येषोऽर्थः सम्पद्यत इति कृद्ग्रहणमुपदेशे ताद्यर्थं भवति; कृत्संज्ञाप्रतिपत्ति-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


## तवै चान्तश्च युगपत् ॥ ५१ ॥

तवैप्रत्ययस्यान्त उदात्तो भवति गतिश्चानन्तरः प्रकृतिस्वर इति एतदुभयं युगपद्भवति । अन्वेतवै । परिस्तरितवै । परिपातवै । तस्मादग्निचिन्नाभिचरितवै । उपसर्गा आद्युदात्ता अभिवर्जमित्यभिरन्तोदात्तः ।

कृत्स्वरापवादो योगः ॥

## अनिगन्तोऽञ्चतौ वप्रत्यये ॥ ५२ ॥

पदमञ्जरी

कृद्ग्रहणे, तादिग्रहणेन स्वरप्रवृत्तिसमये यस्तादिस्तत्रेति विज्ञायेत, ततश्च प्रलपितेत्यादौ इडागमे कृते न स्यात्; सम्प्रत्यतादित्वात्, कृद्ग्रहणात्तु भवति ।

आदिग्रहणं तु शक्यमकर्तुम्, 'यस्मिन्विधिस्तदादावल्ग्रहणे' ॥

*तवै चान्तश्च युगपत्* ॥ *अन्त उदात्तो भवतीति* । कथं पुनरन्तरेणोदात्तग्रहणमुदात्तो भवतीत्ययमर्थो लभ्यते ? एवं मन्यते— प्रकृत्येति वर्तते, तत्रैवमभिसम्बन्धः क्रियते—तवैप्रत्ययान्तस्य यः स्वरः प्रकृत्याश्रयः प्राप्तः सोऽन्तस्य भवतीति, स चोदात्त एवेति । *युगपदिति* पर्यायनिवृत्त्यर्थम् ॥

न्यासः

कालस्योपदेशकालत्वात् । तस्मात् पुनरुपदेशो यस्तादिस्तदर्थं यत्नः क्रियत इत्याह—इहेत्यादि । यदि तदुपदेशग्रहणं ताद्यर्थं न क्रियेत, तदा प्रलपितेत्यत्र न स्यात्; इटा तादिताया विहतत्वात् । यस्मिंश्च सत्युपदेश एव तादिर्भवतीति यद्यप्युत्तरकालं तादिता विहन्यते, तथापि भवत्येव । आगन्तुरिति । 'सितनिगमिमसि' इत्यादिना तुन्प्रत्ययः ॥

तवै चान्तश्च युगपत् ॥ अन्त उदात्तो भवतीति । कथं पुनरुदात्तो भवतीत्येषो लभ्यते, नेहोदात्तग्रहणमस्ति ? न ह्यत्रापूर्व एव स्वरो विधीयते किं तर्हि ? 'गतिकारकोपपदात् कृत्' इति प्रकृतिभावेनादेयः स्वरः प्राप्नोति स एव, तत् कथं प्रकृत्येति वर्तते ? तत्रैवमभिसम्बन्धः क्रियते—तवैप्रत्ययान्तस्य यः प्राप्नोति सोऽन्त्यस्य भवतीति । स चोदात्त एवेति सामर्थ्यादुदात्तो लभ्यते । युगपद्ग्रहणं पर्यायनिवृत्त्यर्थम् । अन्वेतवा इति । अनुपूर्वादितेः 'कृत्यार्थे तवैकेन्केन्यत्वनः' इति तवैप्रत्ययः, गुणः । परिपातवा इति । परिपूर्वात् पिबतेः । अभिचरितवा इति । अभिपूर्वाच्चरतेः । अभिरन्तोदात्त इति । प्रातिपदिकस्वरेण ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अनिगन्तो गतिः प्रकृतिस्वरो भवत्यञ्चतौ वप्रत्यये परतः। प्राङ्, प्राञ्चौ, प्राञ्चः। 'स्वरितो वानुदात्तेऽपदादौ' इत्ययमेकादेश उदात्तः स्वरितो वा। पराङ्, पराञ्चौ, पराञ्चः।

अनिगन्त इति किम्? प्रत्यङ्, प्रत्यञ्चौ, प्रत्यञ्चः। कृदुत्तरपदप्रकृतिस्वर इह भवति। वप्रत्यय इति किम्? उदञ्चनः।

पदमञ्जरी

*अनिगन्तोऽञ्चतौ वप्रत्यये* ॥ *वप्रत्यय इति*। वकारः प्रत्ययो यस्य स तथोक्तः। *प्राङिति*। 'ऋत्विक्' इत्यादिना क्विन्। स च वकारमात्र एव; ककारादीनामनुबन्धत्वात्। 'उगिदचाम्' इति नुम्, हल्ङ्यादिसंयोगान्तलोपौ। 'क्विन्प्रत्ययस्य कुः' इति कुत्वम्—चकारस्य ङकारः। *पराङिति*। पराशब्द आद्युदात्तः, तेनात्र 'स्वरितो वाऽनुदात्तेऽपदादौ' इत्येष विधिर्न भवति।

*प्रत्यङिति*। ननु चात्रान्तरङ्गत्वाद्यणादेशे कृते, अनिगन्तत्वात्प्रकृतिभावेन भवितव्यम्, 'अनिगन्तः' इत्यस्य तु प्रतीच इत्यादिरवकाशः, तत्र 'अचः' इत्यकारलोपाद्यणादेशाभावः। न च यणादेशस्य स्थानिवद्भावोऽस्ति; अपूर्वविधित्वात्, पूर्वपदस्य प्रकृतिस्वरविधानात्? यत्तर्हि न्यधीचेत्यधेः प्रकृतिभावं शास्ति, तज्ज्ञापयति—यण्विषयेऽयं स्वरो न भवतीति। यदि स्याद्, अभ्यङित्यत्राप्यनेनैव सिद्धं स्यात्। नैतदस्ति ज्ञापकम्, अधीच इत्यादौ यत्र यण् नास्ति तदर्थमेतत्स्यात्? यत्तर्हि नेः प्रकृतिस्वरं शास्ति, निशब्दस्यैकाच्त्वाद्, नीच इत्यादावुत्तरस्य प्रकृतिस्वरस्य च विशेषो नास्ति। एतदपि न ज्ञापकम्, वचन-

न्यासः

अनिगन्तोऽञ्चतौ वप्रत्यये ॥ वप्रत्यय इति। वकारः प्रत्ययो यस्य स तथोक्तः। प्राङित्यादि। प्राञ्चतीति 'ऋत्विक्' इत्यादिना क्विन्प्रत्ययः, स च वकारमात्र एव; ककारादीनामनुबन्धत्वात्; तेषां चानैकान्तत्वात्। 'उगिदचाम्' इति नुम्, एकवचने हल्ङ्यादिसंयोगान्तलोपौ, 'क्विन्प्रत्ययस्य कुः' इति नकारस्य कुत्वं ङकारः। द्विवचनबहुवचनयोस्तु 'स्तोश्चुना श्चुः' इति श्चुत्वं ञकारः। उपसर्गाकारेण सह 'अकः सवर्णे दीर्घः'। पराङित्यादि। पराशब्द आद्युदात्तः। तेन 'स्वरितो वानुदात्तेऽपदादौ' इत्येषा विधिर्न भवति।

प्रत्यङिति। अत्र प्रतिशब्दस्येगन्तत्वात् प्रकृतिभावो न भवति। ननु च यणादेशे कृते सोऽप्यनिगन्त एव? स्थानिवद्भावादिगन्तव्यपदेशः कृतेऽपि यणादेशे भविष्यतीत्यदोषः। स्वरविधौ स्थानिवद्भावः प्रतिषिध्यत इति चेत्? नैतदस्ति; 'स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवत्, अन्यस्तु स्थानिवदेव इत्युक्तमेतत्। उदञ्चन इति।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



चोरनिगन्तोऽञ्चतौ वप्रत्यय इत्येष स्वरो भवति विप्रतिषेधेन। पराचः। पराचा॥

न्यधी च॥ ५३॥

नि, अधि, इत्येतौ चाञ्चतौ वप्रत्यये परतः प्रकृतिस्वरौ भवतः। न्यङ्, न्यञ्चौ, न्यञ्चः। 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' इत्यञ्चतेरकारः स्वरितः। अध्यङ्, अध्यञ्चौ, अध्यञ्चः। अधीचः। अधीचा॥

पदमञ्जरी

सामर्थ्यादकृत एवान्तरङ्गे यणादेशे निशब्दस्य स्वरार्थमेतत्स्यात्, यणादेशे कृते स्वरभाजोऽभावात्; प्रत्यङ्ङादिषु तु यणादेश एवान्तरङ्गत्वात्प्राप्नोति, तस्माद्यण्विषये प्रतिषेधो वक्तव्यः? न वक्तव्यः; स्थानिवद्भावात्सिद्धम्। ननु चोक्तम्—'पूर्वपदस्य प्रकृतिस्वरो न यणः पूर्वस्य' इति? नैतदस्ति; उक्तमेतत्—'पूर्वपदशब्दः पूर्वपदस्योद उदात्ते स्वरिते वा वर्तते' इति।

*चोरिति*। 'चौ' इति यत्पूर्वपदान्तोदात्तत्वं विधीयते तच्चुशब्देन लक्ष्यते। चोः = चुस्वरादित्यर्थः। *एष स्वरो भवतीति*। विप्रतिषेधेनेति भावः। चुस्वरस्यावकाशः—दधीचः, दधीचा, यत्र गतिर्नास्ति; अनिगन्तस्वरस्यावकाशः—पराङ्, पराञ्चौ, पराञ्चः; पराच इत्यादावुभयप्रसङ्गे परत्वादनिगन्तस्वर एव भवति। नायं युक्तो विप्रतिषेधः, चुस्वरः सतिशिष्टः, कथम्? 'चौ' इत्युच्यते, यत्रास्यैतद्रूपम्, भसंज्ञानिमित्ते प्रत्यये, अल्लोपे च कृते सम्भवति? एवं तर्हि नायं विप्रतिषेध उपन्यस्तः, किं तर्हि? इष्टिरेषा—'चोरनिगन्तोऽञ्चतावप्रत्यय इत्येष स्वर इष्यते' इति॥

*न्यधी च॥ अधीच इति*। अत्रापि कृत्स्वरादयमेव स्वर इष्यत इति दर्शयति॥

न्यासः

लुक्। अत्राप्युत्तरपदप्रकृतिस्वर एव भवति। चोरनिगन्तोऽञ्चतावित्यादि। चोरित्यनेन 'चौ' इत्यनेन यदन्तोदात्तत्वं विधीयते तदुपलक्षयति। चोरित्यस्यावकाशः—दधीचः, यत्र गतिर्न भवति; अनिगन्तस्वरस्यावकाशो यत्राञ्चतेरकारनकारौ न लुप्येते—पराङ्, पराञ्चाविति; इहोभयं प्राप्नोति—पराचः, पराचेति, अनिगन्तः स्वरो भवति विप्रतिषेधेन। प्रतिषेधशब्दस्तत्राध्याहार्यः॥

न्यधी च॥ इगन्तार्थोऽयमारम्भः। उदात्तस्वरितयोरित्यादि। निरुदात्तः 'उपसर्गाश्चाभिवर्जम्' इति, तेन तदिकारस्थाने यो यणादेशः स उदात्तयण्। तेन 'उदात्तस्वरितयोः' इत्यादिना ततः परमञ्चतेरकारः स्वरितो भवति। अध्यङ्ङित्यादौ तु न भवति; आदेशाद्युदात्तत्वात्, यणादेश उदात्तयण् न भवतीति कृत्वा॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## ईषदन्यतरस्याम् ॥ ५४ ॥

'ईषत्' इत्येतत्पूर्वपदमन्यतरस्यां प्रकृतिस्वरं भवति । ईषत्कडारः । ईषत्पिङ्गलः । ईषदित्ययमन्तोदात्तः ।

ईषद्भेद इत्येवमादौ कृत्स्वर एव भवति ॥

## हिरण्यपरिमाणं धने ॥ ५५ ॥

हिरण्यपरिमाणवाचि पूर्वपदं धनशब्द उत्तरपदेऽन्यतरस्यां प्रकृतिस्वरं भवति । द्विसुवर्णधनम् । द्वौ सुवर्णौ परिमाणमस्य द्विसुवर्णं तदेव धनमिति कर्मधारयः । बहुव्रीहावपि परत्वाद्विकल्प एव भवति । द्विसुवर्णधनः ।

### पदमञ्जरी

*ईषदन्यतरस्याम्* ॥ *ईषद्भेद इत्यादौ तु कृत्स्वर एव भवतीति* । परत्वात् । अपर आह—'ईषदकृता' इति प्रतिपदोक्तस्य समासस्य ग्रहणादुपपदसमासस्याप्रवृत्तिरिति ॥

*हिरण्यपरिमाणं धने* ॥ *हिरण्यपरिमाणवाचीति* । परिमाणविशिष्टहिरण्यवाचीत्यर्थः । तत्र सुवर्णशब्दः परिमाणे, उपपदादौ तत्परिच्छिन्ने हिरण्ये च वर्तते, यथा—प्रस्थादिशब्दो दार्वादिनिर्मिते परिमाणे तत्परिमिते च व्रीह्यादौ वर्तते । 'पञ्चकृष्णलको माषस्ते सुवर्णस्तु षोडश', 'पलं सुवर्णाश्चत्वारः', द्वयोः सुवर्णयोः समाहारो द्विसुवर्णं पात्रादि । *द्विसुवर्णपरिमाणमिति* । अत्र सुवर्ण-

### न्यासः

ईषदन्यतरस्याम् ॥ समासस्वरापवादोऽयं योगः । ईषत्कडार इति । 'ईषदकृता' इति समासः । यदायं प्रकृतिभावो न भवति, तदा समासान्तोदात्तत्वमेव भवति ।

ईषद्भेद इत्येवमादौ कृत्स्वर एव भवतीति । परत्वादिति भावः । आदिशब्देन ईषत्कर इत्यादीनां ग्रहणम् । 'ईषद्दुःसुषु' इत्यादिना खल् ॥

हिरण्यपरिमाणं धने ॥ हिरण्यपरिमाणं परिमाणवद् हिरण्यमित्यर्थः । इह तु तद्वाचिशब्दरूपं गृह्यते । द्विसुवर्णधनमिति । सुवर्णशब्दो हिरण्यपरिमाणविशेषवाची । द्वे सुवर्णे परिमाणमस्येति 'तद्धितार्थ' इति समासः । 'तदस्य परिमाणम्' इति 'प्राग्वतेष्ठञ्', तस्य 'अध्यर्धपूर्व' इत्यादिना लुक्, ततो धनशब्देन सह कर्मधारयः । द्विसुवर्णशब्दः समासस्वरेणान्तोदात्तः । बहुव्रीहावपीत्यादि । यद्वा—द्विसुवर्णं धनं यस्येति बहुव्रीहिः, तदापि परत्वाद् विकल्प एव भवति; न तु 'बहुव्रीहौ प्रकृत्या' इत्येष नित्यो विधिः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



हिरण्यग्रहणं किम् ? प्रस्थधनम् । परिमाणग्रहणं किम् ? काञ्चन-धनम् । धन इति किम् ? निष्कमाला ॥

## प्रथमोऽचिरोपसम्पत्तौ ॥ ५६ ॥

प्रथमशब्दः पूर्वपदमचिरोपसम्पत्तौ गम्यमानायामन्यतरस्यां प्रकृति-स्वरं भवति । अचिरोपसम्पत्तिः = अचिरोपश्लेषः, अभिनवत्वम् । प्रथमवैयाकरणः=अभिनववैयाकरणः । सम्प्रति व्याकरणमध्येतुं प्रवृत्त इत्यर्थः । प्रथमशब्दः 'प्रथेरमच्' इति चित्त्वादन्तोदात्तः ।

अचिरोपसंपत्ताविति किम् ? प्रथमवैयाकरणः । वैयाकरणाना-माद्यो मुख्यो वा यः स नित्यमन्तोदात्त एव ॥

## कतरकतमौ कर्मधारये ॥ ५७ ॥

कतरशब्दः कतमशब्दश्च पूर्वपदं कर्मधारये समासेऽन्यतरस्यां

### पदमञ्जरी

शब्द उपले वर्तते । *काञ्चनधनमिति* । परिमाणग्रहणमकृत्वा हिरण्यमित्युच्य-माने इहापि स्यात्, काञ्चनशब्दस्य हिरण्यवाचित्वात् । परिमाणवाची त्वेष न भवति ॥

### न्यासः

प्रस्थधनमिति । अयमपि कर्मधारयः । बहुव्रीहिर्वा । प्रस्थशब्दो भवति परिमाणम्, न तु हिरण्यस्य, किं तर्हि ? धान्यादेः । काञ्चनधनमिति । यदि परिमाणग्रहणं न क्रियेत, तदा 'हिरण्यम्' इत्येतावत्युच्यमान इहापि स्यात्; काञ्चनशब्दस्य हिरण्यवाचित्वात् । हिरण्यवाच्यपि परिमाणवाची न भवतीति न भवत्येष प्रसङ्गः । अयमपि समासस्वरा-पवादो योगः ॥

प्रथमोऽचिरोपसम्पत्तौ ॥ अचिरोपश्लेष इति । अचिरकालसम्बन्ध इत्यर्थः । अस्यैवार्थं प्रसिद्धतरार्थेन प्रदर्शयितुमाह—अभिनवत्वमिति । प्रथमवैयाकरण इति । प्रथमश्च वैयाकरणश्चेति 'पूर्वापर' इत्यादिना समासः । तत्र यत्तद् वैयाकरणत्वं व्याकरण-स्याध्येतृत्वम् । अनेनाचिरकालसम्बन्धोऽध्येतुर्गम्यते । अभिनववैयाकरणादिनाऽचिर-कालोपसम्पत्तिमुदाहरणे दर्शयति ।

आद्यो मुख्यो यः स इति । अनेनापि प्रत्युदाहरणविषयस्य प्रथमशब्दस्यान्यार्थतां च पक्षेऽचिरोपसम्पत्तेरभावं च । अयमपि समासस्वरापवादो योगः । एवमुत्तरेऽपि ॥

'कतरकतमौ कर्मधारये ॥ 'किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच्', 'वा बहूनां जातिपरिप्रश्ने डतमच्' इति कतरकतमशब्दौ व्युत्पाद्येते, तेन तौ चित्स्वरेणान्तोदात्तौ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रकृतिस्वरं भवति । कतरकठः । कतमकठः[1] ।

कर्मधारयग्रहणमुत्तरार्थम्, इह तु प्रतिपदोक्तत्वादेव सिद्धम् ॥

## आर्यो ब्राह्मणकुमारयोः ॥ ५८ ॥

आर्यशब्दः पूर्वपदं ब्राह्मणकुमारशब्दयोः कर्मधारये समासेऽन्यतरस्यां प्रकृतिस्वरं भवति । आर्यब्राह्मणः । आर्यकुमारः । आर्यशब्दो ण्यदन्तोऽन्तस्वरितः ।

आर्य इति किम् ? परमब्राह्मणः । परमकुमारः । ब्राह्मणकुमारयोरिति किम् ? आर्यक्षत्रियः । कर्मधारये इत्येव – आर्यस्य ब्राह्मणः आर्यब्राह्मणः ॥

## राजा च ॥ ५९ ॥

राजा च पूर्वपदं ब्राह्मणकुमारयोरुत्तरपदयोः कर्मधारये समासेऽन्यतरस्यां प्रकृतिस्वरं भवति । राजब्राह्मणः । राजकुमारः ।

### पदमञ्जरी

*कतरकतमौ कर्मधारये ॥ इह त्वित्यादि* । 'कतरकतमौ जातिपरिप्रश्ने' इति प्रतिपदसमासः तस्येह ग्रहणम्, स कर्मधारय एव । तस्मान्नेहार्थं कर्मधारयग्रहणमिति भावः ॥

*राजा च ॥ राजब्राह्मण इति* । राजशब्दो ब्राह्मणे ताद्धर्म्याद्वर्तत इति सामाना-

### न्यासः

कतरकठ इति । 'कतरकतमौ जातिपरिप्रश्ने' इति समानाधिकरणसमासः । एतदर्थमपि कर्मधारयग्रहणं कस्मान्न भवति ? इत्याह—इह त्वित्यादि । कतरकतमशब्दयोर्हि यः प्रतिपदसमासः स एव लक्षणप्रतिपदोक्तपरिभाषया विज्ञायते । स च कर्मधारय एव । तस्मात् प्रतिपदोक्तत्वादेवैतत्समासस्य कर्मधारयत्वम् । तस्मान्नैतदर्थं कर्मधारयग्रहणमुपपद्यते ॥

आर्यो ब्राह्मणकुमारयोः ॥ आर्यब्राह्मण इति । आर्यश्चासौ ब्राह्मणश्चेति विशेषणसमासः । आर्यशब्दो ण्यदन्त इति । 'ऋहलोर्ण्यत्' इति ण्यति व्युत्पादितत्वात् । अन्तस्वरित इति । तित्स्वरेण । प्रत्युदाहरणे तु समासान्तोदात्तत्वमेव भवति ॥

राजा च ॥ राजब्राह्मणमिति । पूर्ववत् समासः । प्रत्युदाहरणेऽपि पूर्ववत् । राजशब्दः कनिन्प्रत्ययान्तत्वादाद्युदात्तः ।

---

१. 'कतरकलाप', कतमकलापः । कतरकतमौ शब्दावन्तोदात्तौ' इत्यधिकं क्वचित् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



कर्मधारय इत्येव – राज्ञो ब्राह्मणो राजब्राह्मणः । राजकुमारः । पृथग्योगकरणमुत्तरार्थम् ॥

षष्ठी प्रत्येनसि ॥ ६० ॥

'राजा' इति वर्त्तते, 'अन्यतरस्याम्' इति च। षष्ठ्यन्तो राजशब्दः पूर्वपदं प्रत्येनस्युत्तरपदेऽन्यतरस्यां प्रकृतिस्वरं भवति । राज्ञः प्रत्येनाः राजप्रत्येनाः ।

षष्ठीति किम् ? राजा चासौ प्रत्येनाश्च राजप्रत्येनाः ॥

क्ते नित्यार्थे ॥ ६१ ॥

क्तान्त उत्तरपदे नित्यार्थे समासे पूर्वपदमन्यतरस्यां प्रकृतिस्वरं भवति । नित्यप्रहसितः । सततप्रहसितः । 'कालाः' इति द्वितीयासमासोऽयम् । नित्यशब्दः 'त्यब्नेर्ध्रुवे' इति त्यबन्त आद्युदात्तः ।

पदमञ्जरी

धिकरण्यात्कर्मधारयः, राजशब्दः कनिन्प्रत्ययान्तत्वादाद्युदात्तः ।

*पृथग्योगकरणमुत्तरार्थमिति* । उत्तरो विधी राजशब्दस्यैव यथा स्यात्, आर्यशब्दस्य मा भूत् । यथासङ्ख्याभावोऽपि पृथग्योगकरणस्य प्रयोजनम्, तत्तु नोक्तमित्येतावत् ॥

*षष्ठी प्रत्येनसि* ॥ *राज्ञः प्रत्येना इति* । 'षष्ठ्या आक्रोशे' इत्यलुक् ॥

क्ते *नित्यार्थे* ॥ नित्यशब्द आभीक्ष्ण्ये कौटस्थ्ये च वर्तते, इह त्वाभीक्ष्ण्ये । कुत एतत् ? क्त इत्युच्यते, क्तश्च धातोर्विधीयते, धातुश्च क्रियावचनः, क्रियायाः क्षणिकत्वात्कौटस्थ्यं नोपपद्यते, तस्मादाभीक्ष्ण्ये नित्यशब्दः । *द्वितीयासमासोऽयमिति* । द्वितीया पुनरत्यन्तसंयोगे । अथ वा—कर्मणि, 'कालभावाध्वगतव्याः

न्यासः

पृथग्योगकरणमुत्तरार्थमिति । उत्तरो विधी राजशब्दस्यैव यथा स्यात् । आर्यशब्दस्य मा भूदिति ॥

षष्ठी प्रत्येनसि ॥ राज्ञः प्रत्येना इति । 'षष्ठ्या आक्रोशे' इति विभक्तेरलुक् ॥

क्ते नित्यार्थे ॥ नित्यशब्द आभीक्ष्ण्ये, न कूटस्थे । कुत एतत् ? क्त इत्युच्यते, क्तश्च धातोर्विधीयते, धातुश्च क्रियावचनः, क्रियायाश्च कौटस्थ्यं नोपपद्यते; क्षणिकत्वात् क्रियायाः । तस्यास्तु पौनःपुन्याद्यपेक्षया युक्तमाभीक्ष्ण्यम् । काला इति द्वितीयासमासोऽयमिति । द्वितीया तु 'कालाध्वनोरत्यन्तसंयोगे' इति । अथ वा—कर्मण्येव । कर्मसंज्ञा तु 'कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्' इति वचनात् । नित्यशब्द



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सततम् इति – यदा भावे क्तस्तदा थाथादिस्वरेणान्तोदात्तः ।

नित्यार्थं इति किम् ? मुहूर्त्तप्रहसितः ॥

ग्रामः शिल्पिनि ॥ ६२ ॥

ग्रामशब्दः पूर्वपदं शिल्पिवाचिन्युत्तरपदेऽन्यतरस्यां प्रकृतिस्वरं भवति । ग्रामनापितः । ग्रामकुलालः । ग्रामशब्द आद्युदात्तः ।

ग्राम इति किम् ? परमनापितः । शिल्पिनीति किम् ? ग्रामरथ्या ॥

राजा च प्रशंसायाम् ॥ ६३ ॥

राजशब्दः पूर्वपदं शिल्पिवाचिन्युत्तरपदे प्रशंसायां गम्यमानायामन्यतरस्यां प्रकृतिस्वरं भवति । राजनापितः । राजकुलालः । कर्म-

पदमञ्जरी

कर्मसंज्ञा ह्यकर्मणाम्' इति । *सततम् इति भावे क इत्यादि* । यदा तु कर्मणि क्तः, तदा 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरेणाद्युदात्तो भवति । समासस्वरस्य द्वितीयापूर्वपदप्रकृतिस्वरो बाधकः, तस्य थाथादिस्वरः, तस्यायमपवादः ॥

*ग्रामः शिल्पिनि* ॥ ग्राम इति स्वरूपग्रहणम् ॥

न्यासः

इत्यादि । अनेन 'ध्रुव उपसंख्यानम्' इति नेर्नित्यशब्दो व्युत्पाद्यते त्यबन्तः । ततश्च त्यपः पित्त्वेनानुदात्तत्वान्नेश्चोदात्तत्वादाद्युदात्तो भवति । 'सततमिति यदा कर्मणि क्तस्तदा थाथादिस्वरेणान्तोदात्तः' इति—अयुक्तोऽयं पाठः । यदा हि कर्मणि क्तस्तदा 'गतिरनन्तरः' इति गतेः प्रकृतिभावे सत्याद्युदात्तेन सततशब्देन भवितव्यम् । तस्मात् – सततमिति यदा भावे क्तस्तदा थाथादिस्वरेणान्तोदात्त इत्ययं तत्रानवद्यः पाठो वेदितव्यः । तथा हि सततशब्दोऽपि थाथादिस्वरेणान्तोदात्तः । भावे हीयं निष्ठेति गतिस्वरो न भवतीत्युक्तम् । यदा तु कर्मणि क्तस्तदा तु गतिस्वरेण सततशब्द आद्युदात्त एव भवति । 'समो वा हिततयोः' इति समो मकारलोपः ।

मुहूर्तप्रहसित इति । अत्र थाथादिस्वर एव भवति । प्रहसित इति हसेरकर्मकत्वात् कर्तरि क्तः । समासस्वरे द्वितीयापूर्वपदप्रकृतिस्वरेण बाधिते सति थाथादिस्वरः प्राप्नोति । अतस्तदपवादो योगः ॥

ग्रामः शिल्पिनि ॥ सप्तमीनिर्दिष्टग्रहणमनुवर्तते । तेन शिल्पिनीत्यर्थग्रहणम् । ग्राम इति स्वरूपग्रहणमेव ।

ग्रामनापित इति । षष्ठीसमासः । समासस्वरापवादो योगः । एवमुत्तरोऽपि ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



धारये राजगुणाध्यारोपेणोत्तरपदार्थस्य प्रशंसा। षष्ठीसमासे च राजयोग्यतया तस्य।

राजेति किम्? परमनापितः। प्रशंसायामिति किम्? राजनापितः।

शिल्पिनीत्येव — राजहस्ती॥

## आदिरुदात्तः॥ ६४॥

'आदिरुदात्तः' इत्येतदधिकृतम्, इत उत्तरं यद्वक्ष्यामः, तत्र पूर्वपदस्यादिरुदात्तो भवतीत्येवं तद्वेदितव्यम्। वक्ष्यति — 'सप्तमीहारिणौ धर्म्येऽहरणे इति। स्तूपेशाणः। मुकुटेकार्षापणम्। याज्ञिकाश्वः। वैयाकरणहस्ती। दृषदिमाषकः'।

'आदिः' इति प्रागन्ताधिकारात्। 'उदात्तः' इति 'प्रकृत्या भगालम्' इति यावत्॥

## सप्तमीहारिणौ धर्म्येऽहरणे॥ ६५॥

सप्तम्यन्तं हारिवाचि च पूर्वपदं धर्म्यवाचिनि हरणशब्दादन्य-

पदमञ्जरी

*राजा च प्रशंसायाम्*॥ षष्ठीसमासे चेति। प्रशंसेत्यनुषङ्गः। *राजयोग्यतया तस्येति*। स हि कर्मणि प्रवीणत्वाद्राजानं प्रति योग्यो भवति। राजार्ह इति चोक्ते प्रशंसा गम्यते॥

*आदिरुदात्तः*॥ पूर्वपदमित्यस्येहार्थात्षष्ठ्या विपरिणामः। सर्वत्र वात्र प्रकरणे पूर्वपदविषये षष्ठ्यर्थे प्रथमा॥

न्यासः

राजा च प्रशंसायाम्॥ कर्मधारय इत्यादि। राजनापित इति। कर्मधारयोऽयं वा स्यात्, षष्ठीतत्पुरुषो वा? तत्र यदा कर्मधारयस्तदा राजशब्दस्य नापित उपचारेण वृत्तिः। उपचारस्तु राजगुणारोपनिबन्धनः, अतस्तेनैवोत्तरपदस्य प्रशंसा भवति। कथं पुनर्नापितः षष्ठीसमासेन राजनापितशब्देनोच्यते? इत्याह राजयोग्यतया तस्येत्यादि। स हि स्वकर्मणि प्रवीणत्वाद् राजानं प्रति योग्यो भवति। अतोऽपि राजनापित इति षष्ठीसमासेनोच्यते। अत्र पक्षे तस्यैव योग्यतयोत्तरपदस्य प्रशंसा वेदितव्या॥

आदिरुदात्तः॥ आदिरित्यादिनाद्यधिकारस्यावधिं दर्शयति। उदात्त इत्यादिनाऽप्युदात्ताधिकारस्य॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



स्मिन्नुत्तरपदे आद्युदात्तं भवति। हारीति देयं यः स्वीकरोति सोऽभिधीयते। 'धर्म्यम्' इत्याचारनियतं देयमुच्यते। धर्मो ह्यनुवृत्त आचारः, तस्मादनपेतं तेन वा प्राप्यमिति। स्तूपेशाणः। मुकुटेकार्षापणम्। हलेद्विपदिका। हलेत्रिपदिका। दृषदिमाषकः। 'संज्ञायाम्' इति सप्तमीसमासः, 'कारनाम्नि च' इति विभक्तेरलुक्। हारिणि — याज्ञिकाश्वः। वैयाकरणहस्ती। मातुलाश्वः। पितृव्यगवः।

क्वचिदयमाचारो व्यवस्थितः — स्तूपादिषु शाणादि दातव्यम्, याज्ञिकादीनामश्वादीति।

पदमञ्जरी

*सप्तमीहारिणौ धर्म्येऽहरणे॥ हारीत्यावश्यके* णिनिः। धर्म्ये इत्यर्थग्रहणम्। हरणप्रतिषेधात्तत्साहचर्याद्धारीत्यर्थग्रहणम्। *आचारनियतमिति*। आचारेण नियतमाचारनियतम्, आचारवशादवश्यकर्तव्यमित्यर्थः। कथं पुनस्ताद्धर्म्यम्? तत्राह—*धर्मो ह्यनुवृत्त आचार इति*। जनपदे ग्रामे चरणे कुले वाऽनुवृत्तः परम्परायात इत्यर्थः। तस्मादनपेतं धर्म्यम्, 'धर्मपथ्यर्थ' इत्यादिना यत्। *तेन वा प्राप्यमिति*। 'नौवयोधर्म' इत्यादिना यत्। याज्ञिकाश्वादौ षष्ठीसमासः।

*क्वचिदित्यादिना* शाणादेर्देयस्याचारनियततां दर्शयति। *याज्ञिकादीनामश्वादीति*। दातव्यमित्यनुषङ्गः।

न्यासः

सप्तमीहारिणौ धर्म्येऽहरणे॥ हारीत्यावश्यके णिनिः। सप्तमीत्यनेन साहचर्याद् हारीति स्वरूपग्रहणं न भवति। अत एवाह —हारिवाचि पूर्वपदमिति। धर्म्ये इत्यत्रापि स्वरूपग्रहणं न भवति; अहरण इति प्रतिषेधाद्। अत एवाह—धर्म्यवाचिनीति। आचारनियतमिति। आचारे नियतमिति; ततोऽन्यत्राभावात्। आचारे नियतम्, आचारेण वा नियतमाचारनियतम्। यदाचारवशादवश्यकर्तव्यं तदाचारनियतं भवति। कथं पुनराचारनियतं धर्म्यमुच्यते? इत्याह—धर्मो ह्यनुवृत्त इत्यादि। अनुवृत्त इव व्यवस्थित इत्यर्थः। तस्मादिति। धर्मादनपेतमिति। अनुगतमित्यर्थः। तेनेति। धर्मेण। प्राप्तमिति। लभ्यमित्यर्थः। उभयथाप्यर्थे 'नौवयोधर्म' इत्यादिना यत्। इति करणो हिशब्दश्च हेतौ। यस्मादाचारविशेषो धर्म उच्यते, यच्च तस्माद्धर्मादनपेतम्। यद्वा तेन प्राप्यं तद्धर्म्यम्। तेनाचारनियतं धर्म्यमित्युच्यते। संज्ञायामिति सप्तमीसमास इति। यद्येवम्, विभक्तेर्लुक् प्राप्नोति? इत्यत आह—कारनाम्नि चेत्यादि। याज्ञिकाश्व इत्यादौ तु षष्ठीसमासः।

क्वचिदित्यादिना स्तूपेशाण इत्याद्युदाहरणेषु शाणादेर्देयस्याचारनियततां दर्शयन्

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



धर्म्यं इति किम् ? स्तम्बेरमः । कर्मकरवर्द्धितकः । अहरण इति किम् ? वाडवहरणम् । वडवाया अयं वाडवः, तस्य बीजनिषेका-दुत्तरकालं शरीरपुष्ट्यर्थं यद्दीयते हरणमिति तदुच्यते । परोऽपि कृत्स्वरो हारिस्वरेण बाध्यते विप्रतिषेधेन – इत्येतदहरण इत्यनेन ज्ञाप्यते, तेन वाडवहार्यमिति हारिस्वरः सिद्धो भवति ॥

पदमञ्जरी

*क्वचिदयमाचारो व्यवस्थित इति* च । वर्द्धितको नाम = मूले स्थूलोऽग्रे सूक्ष्म ओदनपिण्डः, स कर्मकराय दीयते, अन्यथा कर्म न कुर्यादिति, न स्वयं धर्मः । बीजावापः = *बीजनिषेकः*, गर्भाधानम् । *वाडवहरणमिति* । क्वचिदयमाचारो व्यवस्थितः—वाडवाय बीजनिषेकादुत्तरकालं शरीरपुष्ट्यर्थं योग्यमशनादि दातव्यमिति । हरणशब्दः कर्मसाधनः । अत्रास्मिन्स्वरे निवृत्ते कृत्स्वरे प्राप्ते 'अनो भावकर्मवचनः' इत्युत्तरपदान्तोदात्तत्वं भवति । ननु च परत्वादेवायं स्वरो भविष्यति, तत्किं हरणप्रतिषेधेन ? तत्राह—*परोऽपीत्यादि* । अत्र पूर्व-पदानां स्वरो नाऽऽख्यातः; अप्रयोजनत्वात् ॥

न्यासः

उत्तरपदस्य धर्म्यवाचित्वं दर्शयति— याज्ञिकादीनामश्वादीति । क्वचिदयमाचारो व्यवस्थित इत्यनेन दातव्यमित्यनेन च सम्बन्धः । याज्ञिकादयो हि हारिणः, ते देय-मश्वादिकं स्वीकुर्वन्ति ।

स्तम्बेरम इति । 'स्तम्बकर्णयो रमिजपोः' इत्यच्; उपपदसमासः, 'तत्पुरुषे कृति बहुलम्' इति विभक्तेरलुग् भवति । अत्र स्तम्बेरम इत्यत्र स्तम्ब इत्येतत् सप्तम्यन्तम्, न तु रमशब्दो धर्म्यवाची । कर्मकरवर्द्धितक इति । अत्र कर्मकरो हारी भवति, स हि वर्द्धितकं स्वीकरोति । न तु वर्द्धितकशब्दो धर्म्यवाची । न हि क्वचिदय-माचारो—व्यवस्थितः कर्मकराय वर्द्धितको दातव्य इति । वडवाया अयं वाडव इति । 'तस्येदम्' इत्यण् । बीजनिषेकादिति । गर्भाधानम् = बीजनिषेकः । अत्र वाडवोऽश्वो हारी स हि हरणं देयं स्वीकरोति । हरणम् = देयं धर्म्यम् । क्वचिदयमाचारो व्यवस्थितः—येनाश्वेन वडवायां गर्भ आधीयते तस्य बीजनिषेकादुत्तरकालं शरीरपुष्ट्यर्थं योग्या-शनादिकं दातव्यमिति । तेन हरणशब्दो धर्म्यवाची भवति । तथाप्यहरण इति प्रति-षेधाद् न भवति । ततश्च कृत्स्वरे प्राप्ते 'अनो भावकर्मवचनः' इत्युत्तरपदं ल्युडन्तमन्तो-दात्तं भवति । ननु च परत्वादेवायं स्वरो भविष्यति, तत् किमहरण इति प्रतिषेधेन ? इत्यत आह—परोऽपीत्यादि । तेनेत्यादिना ज्ञापनस्य प्रयोजनं दर्शयति । वाडव-हार्यमिति । 'ऋहलोर्ण्यत्' इति हरतेर्ण्यद्—हार्यम्, तत् पुनस्तदेव ग्रहणम् । वाडवस्य

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## युक्ते च ॥ ६६ ॥

**युक्तवाचिनि च समासे पूर्वपदमाद्युदात्तं भवति। गोबल्लवः। अश्वबल्लवः। गोमणिन्दः। अश्वमणिन्दः। गोसंख्यः। अश्वसंख्यः।**

पदमञ्जरी

युक्ते च॥ वल्लवादयः शब्दा गवादीनां पालकवचनाः। मणिं ददातीति मणिन्दः पृषोदरादिः। गाः सञ्चष्टे, 'समि ख्यः' इति कः, गोसंख्यः, उपपद-

न्यासः

हार्यं वाडवहार्यम्। तत्र यदि ज्ञापनार्थमनन्तरोक्तस्यार्थस्य हरणप्रतिषेधो न क्रियेत, तदा परत्वाद् 'गतिकारकोपपदात् कृत्' इति कृत्स्वरेणोत्तरपदस्यान्तस्वरितत्वं स्यात्। अस्मिंस्तु सत्ययमेव हारिस्वरो भवति। स्तूपेशाण इत्यादौ यत्र सप्तम्यन्तं पूर्वपदं तत्र 'समासस्य' इत्यस्यापवादे 'तत्पुरुषे तुल्यार्थ' इत्यादिना पूर्वपदप्रकृतिस्वरे प्राप्ते पूर्ववदाद्युदात्तमिदमुच्यते।

पूर्वपदानि च प्रायेणान्तोदात्तानि, तथा हि—स्तूपसमुच्छ्राय इत्यस्य चौरादिकस्य पचाद्यचि स्तूपशब्दो व्युत्पाद्यते, तेनासावन्तोदात्तः। सप्तम्या सहैकदेशो विकृतेऽन्तोदात्त एव भवति। 'एकादेश उदात्तेनोदात्त.' इति। 'मकि मण्डने' इत्येतस्माद् 'उणादयो बहुलम्' इत्युणादित्वम्, नलोपश्च, तेन मकुटशब्द आद्युदात्तः। 'हल विलेखने' इत्येतस्मात् 'खनो घ च' इति घित्करणेनान्यतोऽपि घो भवतीति ज्ञापितत्वाद् घप्रत्ययः। तेन हलशब्दोऽन्तोदात्तः। 'दॄ विदारणे' इत्यस्मात् 'शॄदॄभसोऽदिः' इति 'दृणातेः षुग् ह्रस्वश्च' इति दृषच्छब्दो व्युत्पाद्यते, तेन सोऽप्यन्तोदात्तः।

याज्ञिकाश्व इत्यादयः षष्ठीसमासाः। तत्र समासस्वरे प्राप्ते हारिवाचिनः पूर्वपदस्याद्युदात्तत्वं यथा स्यादित्येवमर्थमिदम्। अत्र च पूर्वपदानामुत्तरपदानां चासमासावस्थायां यः स्वरः स नाऽऽख्यायते; समासे कृते तस्य प्रयोगसमवायित्वात्। नापि समासे कृते तस्य प्राप्तिरस्ति। स 'प्रकृतिभावेन तस्मिन् प्राप्ते सतीदमारभ्यते' इत्यस्यार्थस्य प्रदर्शनार्थमाख्यायते। अत एव च पूर्वत्रापि नाख्यातः॥

युक्ते च॥ युक्तः = समाहितः, कार्ये तत्पर इत्युच्यते। गोबल्लव इति। अधिकारनाम, सोऽस्यास्तीति 'वप्रकरणेऽन्येभ्योऽपि दृश्यते' इति वप्रत्ययः, गवां बल्लव इति षष्ठीसमासः। अत्रापि समासस्वर एव प्राप्ते पूर्वपदाद्युदात्तत्वं विधीयते। गोमणिन्द इति। मणिं ददातीति 'आतोऽनुपसर्गे कः', 'तत्पुरुषे कृति बहुलम्' इति विभक्तेरलुक्, ततो गवां मणिन्द इति षष्ठीसमासः। अत्रापि समासस्वर एव प्राप्तेऽयं विधिः। गोसंख्य इति। गां सञ्चष्ट इति 'समि ख्यः' इति कः, उपपदसमासः, 'गतिकारकोपपदात्' इति कृत्स्वरे प्राप्ते पूर्वपदस्योदात्तार्थमिहापि वचनम्। ननु च परत्वात् थाथादिस्वरः

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



युक्त इति = समाहितः, कर्त्तव्ये तत्परो यः स उच्यते ॥

## विभाषाऽध्यक्षे ॥ ६७ ॥

अध्यक्षशब्द उत्तरपदे विभाषा पूर्वपदमाद्युदात्तं भवति । गवाध्यक्षः । अश्वाध्यक्षः ॥

## पापं च शिल्पिनि ॥ ६८ ॥

पापशब्दः शिल्पिवाचिन्युत्तरपदे विभाषाऽऽद्युदात्तो भवति । पापनापितः । पापकुलालः ।

'पापाणके कुत्सितैः' इति पापशब्दस्य प्रतिपदोक्तः समाना-

### पदमञ्जरी

समासः । नन्वत्र परत्वात्थाथादिस्वरः प्राप्नोति, अस्य तु गोबल्लवादिरवकाशः ? सत्यम् ; पूर्वविप्रतिषेधस्त्वत्र पठितव्यः, चित्स्वराद्धारिस्वरः— पितृगवः, मातृगवः, कृत्स्वराच्च वाडवहार्यम् । युक्तस्वरश्च कृत्स्वरादित्येव, कृतो यः स्वरस्थाथादिसूत्रेण तस्माद्युक्तस्वरो भवति पूर्वविप्रतिषेधेनेत्यर्थः । युक्तः *समाहित इति* । 'युज समाधौ' इत्यस्यैतद्रूपमित्यर्थः ॥

*विभाषाऽध्यक्षे* ॥ अध्यक्षशब्दोऽपि समासे युक्तवाच्येवेति सूत्रे पूर्वेण नित्ये प्राप्ते विकल्पः ॥

*पापं च शिल्पिनि* ॥ *पापमिति* स्वरूपग्रहणम् , *शिल्पिनीति* चार्थग्रहणम् ; व्याख्यानात् ॥

### न्यासः

प्राप्नोति, तस्माद् गोवल्लवादौ कथमिदं वचनमिति, युक्तस्वरं कृत्स्वर एव बाधेत ? एवं तर्हि पूर्वविप्रतिषेधो वक्तव्यः; परशब्दस्येष्टवाचित्वात् ।

गोवल्लव इत्येवमादयः समासाः सर्वे युक्तवाचिन इति दर्शयन्नाह--युक्त इति समाहित इत्यादि । अनेन 'युज समाधौ' इत्यस्य निष्ठायां युक्त इत्येतद् दर्शयति ॥

विभाषाऽध्यक्षे ॥ अध्यक्षशब्दोऽपि समासे युक्तवाच्येव, तत्र पूर्वेण नित्यमाद्युदात्तत्वे प्राप्ते विभाषेयमारभ्यते । आद्युदात्तत्वेन मुक्ते समासान्तोदात्तत्वमेव भवति । गवामध्यक्ष इति षष्ठीसमासः ॥

पापञ्च शिल्पिनि ॥ पापमिति स्वरूपग्रहणम् । शिल्पिनीत्यत्रार्थग्रहणम् । अर्थग्रहणं किमर्थम् , ग्रामशिल्पिनीत्यत्र शिल्पिग्रहणादर्थग्रहणं प्रसिद्धम् , अत इहाप्यर्थग्रहणं विज्ञायते ? नित्यं समासस्वरे प्राप्ते विकल्पेन पूर्वपदस्याद्युदात्तत्वं विधीयते, तेन मुक्ते समासस्वर एव भवति । अथेह कस्मान्न भवति—पापस्य नापित इति ? अत

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



धिकरणसमास इति षष्ठीसमासे न भवति — पापस्य नापितः पापनापित इति ॥

गोत्रान्तेवासिमाणवब्राह्मणेषु क्षेपे ॥ ६९ ॥

गोत्रवाचिन्यन्तेवासिवाचिनि चोत्तरपदे माणवब्राह्मणयोश्च क्षेपवाचिनि समासे पूर्वपदमाद्युदात्तं भवति । जङ्घावात्स्यः । यो जङ्घादानं ददान्यहमिति वात्स्यः सम्पद्यते स जङ्घावात्स्य इति क्षिप्यते । भार्यासौश्रुतः । सुश्रुतापत्यस्य भार्याप्रधानतया क्षेपः । वशाब्राह्म-

पदमञ्जरी

*गोत्रान्तेवासिमाणवब्राह्मणेषु क्षेपे* ॥ गोत्रान्तेवासिनोरर्थग्रहणम्, इतरयोः स्वरूपग्रहणम् । अपत्याधिकारादन्यत्र लौकिकं गोत्रमित्यनेन लौकिकमपत्यमात्रं गोत्रं गृह्यते । *जङ्घादानमहं ददानीति* । जङ्घादानं करवाणीत्यर्थः, ओदनपाकं पचतीतिवत् । अत्र श्राद्धादौ वात्स्यानामेव पादप्रक्षालनं क्रियते, तत्रावात्स्यः सन्वात्स्योऽहमिति ब्रूते, तल्लाभाय स जङ्घावात्स्य इति क्षिप्यते । वत्सशब्दो गर्गादिः, 'सुप्सुपा' इति समासः, सुष्ठु शृणोतीति सुश्रुत्, तस्यापत्यं सौश्रुतः । *भार्याप्रधानतयेति* । शाकपार्थिवादित्वादुत्तरपदलोपी समास इति दर्शयति । *वशा-*

न्यासः

आह—पापशब्दस्य प्रतिपदोक्त इति । तस्मात् षष्ठीसमासे न भवतीति । प्रतिपदोक्ते हि समासे सति लक्षणप्रतिपदोक्तपरिभाषया तस्यैव ग्रहणं भविष्यति; नान्यस्य ॥

गोत्रान्तेवासिमाणवब्राह्मणेषु क्षेपे ॥ 'गोत्राधिकारादन्यत्र गोत्रग्रहणे लौकिकं गोत्रं गृह्यते' इत्युक्तम्, लोके चापत्यमात्रे प्रसिद्धम्, तेनेह तस्यैव ग्रहणम्, न तु पारिभाषिकस्य । अन्तेवासी = शिष्यः । तत्रान्तेवासिग्रहणादर्थग्रहणं प्रसिद्धम् । अत इहाप्यर्थ एव गृह्यते, न स्वरूपम् । माणवब्राह्मणयोः स्वरूपमेव । मनोरयं माणवः, अस्मादेव निपातनाण्णत्वम् । 'अबाधकान्यपि निपातनानि भवन्ति' इति पक्षे मानव इत्यपि भवति । ब्रह्मणोऽयं ब्राह्मणः । यत्तु 'अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः' इति माणवकशब्दो व्युत्पाद्यते, यश्च ब्रह्मणोऽपत्यं ब्राह्मण इत्यर्थे ब्राह्मणशब्दः, तयोर्गोत्रग्रहणेनैव सिद्धम् । क्षेपः = निन्दा । जङ्घावात्स्य इति । 'सुप्सुपा' इति समासः । कथं पुनरत्र क्षेपः ? इत्याह—यो जङ्घादानमित्यादि । जङ्घादानं किमप्याचारनियतं देयमुच्यते, तद् ददान्यहमित्यतोऽभिप्रायेण वात्स्यः सम्पद्यते । वात्स्योऽहमित्यभ्युपगच्छति यः स जङ्घावात्स्य इत्येवं निन्द्यते । अवात्स्यस्यापि सतो जङ्घादानं प्रति वात्स्यत्वाभ्युपगमात् । वात्स्यशब्दोऽयं गर्गादिः । भार्यासौश्रुत इति । सुश्रुतोऽपत्यं सौश्रुत इत्यण्, भार्याप्रधानं सौश्रुतो भार्यासौश्रुतः । समानाधिकरणाधिकारे 'शाक-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



क्तेयः । ब्रह्मकृतशब्दः शुभ्रादिषु पठ्यते । गोत्र ।

अन्तेवासि — कुमारीदाक्षाः । कम्बलचारायणीयाः । घृतरौढीयाः । ओदनपाणिनीयाः । कुमार्यादिलाभकामा ये दाक्षादिभिः प्रोक्तानि शास्त्राण्यधीयते तच्छिष्यतां वा प्रतिपद्यन्ते त एवं क्षिप्यन्ते । अन्तेवासि ।

माणव — भिक्षामाणवः । भिक्षां लप्स्येऽहमिति माणवो भवति । माणव ।

ब्राह्मण — दासीब्राह्मणः । वृषलीब्राह्मणः । भयब्राह्मणः । यो

पदमञ्जरी

*ब्राह्मक्तेय इति* । वशा = वन्ध्या भार्या, सौश्रुतवत्समासः । दक्षेण प्रोक्तं दाक्षम्, तदधीते दाक्षः, दाक्षेश्छात्त्रो वा दाक्षः । चरशब्दो नडादिः, चारायणेन प्रोक्तमधीते तस्य वा शिष्यश्चारायणीयः । एवं पाणिनीयः । *कुमार्यादिलाभकामा इति* । तत्प्रोक्ते ग्रन्थे श्रद्धायामसत्यामपि ये कुमार्यादिलाभकामास्तत्र प्रवर्तन्ते त एवं क्षिप्यन्ते । पूर्ववत्समासः । माणवब्राह्मणयोरपत्यवाचित्वेन प्रसिद्ध्यभावात्पृथग्ग्रहणम् । अपर आह—'तस्येदम्' इत्यणन्तयोर्ग्रहणम्, निपातनाच्च माणवे णत्वमिति ।

*भयब्राह्मण इति* । यो ब्राह्मण एव सन् राजदण्डादिभयेन ब्राह्मणाचारं

न्यासः

पार्थिवादीनामुपसंख्यानमुत्तरपदलोपश्च' इति समासः । सुश्रुतस्य भार्याप्रधानतयेत्यनेन समानाधिकरणेनात्र समास इति दर्शयति । सुश्रुतोऽपत्यमित्यनेनापि सौश्रुतस्याण्प्रत्ययान्तत्वम् । वशाब्राह्मकृतेय इति । तेनैवोपसंख्यानेन समासः । अत्रापि वशाप्रधानतया ब्रह्मकृतापत्यस्य क्षेपः ।

कुमारीदाक्षा इति । 'सुप्सुपा' इति समासः । एवं कम्बलचाराणीया इत्यत्रापि । दाक्षिणा प्रोक्तं दाक्षं शास्त्रम् । 'इञश्च' इत्यण्, दाक्षमधीयते तद्वेत्तीति वा पुनरण्, तस्य 'प्रोक्ताल्लुक्' इति लुक् । चरशब्दो नडादिः, चरस्यापत्यं चारायणः, तेन प्रोक्तं चारायणीयम् । 'वृद्धाच्छः', 'तदधीते' इति पूर्ववदण् । पाणिनिना प्रोक्तं पाणिनीयम्, ततः पूर्ववदध्येतर्यण्, तस्य च लुक् । कुमार्यादिलाभकामा इति । आदिशब्देन कम्बलौदनादीनां ग्रहणम् । अत्रापि 'सुप्सुपा' इति समासः । तेनैवोपसंख्यानेन वा कुमारीलाभकामा दाक्षाः कुमारीदाक्षाः ।

भिक्षामाणव इति । पूर्ववत् समासः । भिक्षालाभकामो माणवो भिक्षामाणवः ।

दासीब्राह्मण इति । दास्याः कामयिता ब्राह्मणो दासीब्राह्मणः । एवं वृषलीब्राह्मणः, भयब्राह्मण इति । 'कर्तृकरणे कृता बहुलम्' इति बहुलवचनादकृतापि

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



भयेन ब्राह्मणः सम्पद्यते । अत्र यस्यान्यत् समासलक्षणं नास्ति, 'सुप्सुपा' इत्येव तत्र समासः कर्त्तव्यः ।

गोत्रादिष्विति किम् ? दासीश्रोत्रियः । क्षेप इति किम् ? महाब्राह्मणः ॥

## अङ्गानि मैरेये ॥ ७० ॥

मैरेयशब्द उत्तरपदे तदङ्गवाचीनि पूर्वपदान्याद्युदात्तानि भवन्ति । गुडमैरेयः । मधुमैरेयः । मद्यविशेषो मैरेयः, स्तस्य गुडविकारस्य गुडोऽङ्गं भवति । मधुविकारस्य मधु, तस्य मध्वङ्गम् ।

अङ्गानीति किम् ? परममैरेयः । मैरेय इति किम् ? पुष्पासवः । फलासवः ॥

## भक्ताख्यास्तदर्थेषु ॥ ७१ ॥

भक्तम्=अन्नम्, तदाख्याः = तद्वाचिनः शब्दाः, तदर्थेषूत्तरपदेषु

पदमञ्जरी

करोति, न श्रद्धया, स एवं क्षिप्यते । 'कर्तृकरणे कृता बहुलम्' इति बहुलवचनादकृतापि समासः । *दासीश्रोत्रियो* दासीब्राह्मणवत् ॥

*अङ्गानि मैरेये* ॥ अङ्गम् = आरम्भकम्, बहुवचनं स्वरूपविधिनिरासार्थम् । सुराव्यतिरिक्तं मद्यम् = मैरेयम् । *तदङ्गवाचिनीति* । मैरेयशब्द इति प्रकृतम्, इह तु तच्छब्देन तदर्थः परामृश्यते । *पौष्पासव इति* । आसवः = मद्यविशेषः, यत् पौष्पेण मधुना द्रव्यान्तरेण चारभ्यते तस्य पौष्पमङ्गं भवति । *पुष्पासव इति* तु युक्तः पाठः ॥

*भक्ताख्यास्तदर्थेषु* ॥ बहुवचननिर्देशादेव स्वरूपविधिनिरासे सिद्धे आख्या-

न्यासः

समासः । 'तृतीया' इति योगविभागाद्वा ।

दासीश्रोत्रिय इति । दासीब्राह्मण इत्यनेन तुल्यम् । समासस्वरापवादो योगः ॥

अङ्गानि मैरेये ॥ अङ्गशब्दोऽयं कारणवाची । आरम्भकं यत् तदङ्गमुच्यते । अङ्गानीति बहुवचनं स्वरूपविधिनिरासार्थम् । सुरावर्ज्यं मद्यम् = मैरेयमित्यभिधीयते । गुडमैरेयः, मधुमैरेय इति । षष्ठीसमासः । गुडविकारस्य मैरेयस्य गुडोऽङ्गमिति । तत्कारणत्वात् । अयमपि समासस्वरापवादो योगः ॥

भक्ताख्यास्तदर्थेषु ॥ आख्याग्रहणं स्वरूपविधिनिरासार्थम् । ननु च बहुवचना-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



आद्युदात्ता भवन्ति। भिक्षाकंसः। श्राणाकंसः। भाजीकंसः। भिक्षादयोऽन्नवचनाः।

भक्ताख्या इति किम्? समाशंशालयः। समशनं समाश इति क्रियामात्रमुच्यते, न द्रव्यम्। तदर्थेष्विति किम्? भिक्षाप्रियः। बहुव्रीहिरयमत्र पूर्वपदमन्तोदात्तम्॥

## गोबिडालसिंहसैन्धवेषूपमाने॥ ७२॥

गवादिषूपमानवाचिषूत्तरपदेषु पूर्वपदमाद्युदात्तं भवति। धान्यगवः। हिरण्यगवः। भिक्षाविडालः। तृणसिंहः। काष्ठसिंहः। सक्तु-

पदमञ्जरी

ग्रहणं भक्तविशेषवाचिनां भिक्षादीनां ग्रहणार्थम्; अन्यथा पर्यायाणामन्नादीनामेव ग्रहणं स्यात्। *भिक्षाकंसादयः* षष्ठीसमासाः, येषां प्रकृतिविकारभावे चतुर्थीसमास इति पक्षः। अन्येषां चतुर्थीसमासाः॥

*गोविडालसिंहसैन्धवेषूपमाने*॥ उपमानशब्दस्य सह गवादिभिः प्रत्येकं

न्यासः

देव स्वरूपविधिर्न भविष्यति? नैतदस्ति; बहुवचनं ह्येतदर्थस्यैव बहुत्वमाचक्षीत—बह्वर्थवृत्तिर्यो भक्तशब्द इति। अपि च बहुवचनेन स्वरूपविधौ बाधितेऽन्नादय एव ये भक्तशब्देन समासार्थपर्यायास्ते गृह्येरन्, न तु भक्तविशेषवाचिनो भिक्षादयः। आख्याग्रहणे तु स्वरूपविधौ बाधिते बहुवचनेन तद्विशेषाणां ग्रहणं सम्पद्यते। तस्मा इदं तदर्थम्। तच्छब्देन भक्ताख्यानामर्थो निर्दिश्यते। भिक्षाकंस इत्येवमादयः 'चतुर्थीतदर्थार्थ' इति चतुर्थीसमासाः। ननु च प्रकृतिविकृतिग्रहणं तत्र चोद्यते, न चेह प्रकृतिविकारभावः? सत्यमेतत्; इदमेव तु वचनं ज्ञापकम्—भक्ताख्यायां तादर्थ्यमात्रे चतुर्थी समस्यत इति।

समशनं समाश इति। 'अश भोजने' इत्यस्मात् सम्पूर्वाद् भावे घञ्। क्रियामात्रमुच्यत इति। मात्रशब्देन भक्तव्यवच्छेदं करोति। अत्र पूर्वपदमन्तोदात्तमिति। भिक्षाशब्दः 'गुरोश्च हलः' इति भिक्षेरप्रत्ययं कृत्वा व्युत्पाद्यते, श्राणाशब्दोऽपि 'श्रै पाके' इत्यस्मात् क्तप्रत्ययम्। तेन द्वावपि प्रत्ययस्वरेणान्तोदात्तौ। 'बहुव्रीहौ प्रकृत्या' इति प्रकृतिभावेनान्तोदात्तावेव भवतः। समासस्वरापवादो योगः॥

गोविडालसिंहसैन्धवेषूपमाने॥ उपमानशब्दोऽयं गवादिभिः प्रत्येकमभिसम्बध्यते; अन्यथैकवचनान्तस्य बहुवचनान्तैः समानाधिकरणेन विशेष्यविशेषणभावो न स्यात्। अथ वा—सुब्व्यत्यये बहुवचनस्यैव स्थान इदमेकवचनं द्रष्टव्यम्। धान्यगव इति। 'गोर-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सैन्धवः। पानसैन्धवः। धान्यं गौरिवेति विगृह्य व्याघ्रादेराकृतिगणत्वाद् 'उपमितं व्याघ्रादिभिः' इति समासः। उपमानार्थोऽपि यथासम्भवं यथाप्रसिद्धि च योजयितव्यः। गवाकृत्या सन्निवेशितं[1] धान्यगवशब्देनोच्यते।

उपमान इति किम्? परमसिंहः॥

अके जीविकार्थे॥ ७३॥

अकप्रत्ययान्त उत्तरपदे जीविकार्थवाचिनि समासे पूर्वपदमाद्युदात्तं

पदमञ्जरी

सम्बन्धादेकवचनम्। *उपमानार्थोऽपीति*। यो यत्रोदाहरणे उपमानार्थः सम्भवति स तत्र योजयितव्यः। *यथाप्रसिद्धं चेति*। यस्योदाहरणस्य च यथा लोके प्रसिद्धिः स तथा योजयितव्यः। तत्र दिङ्मात्रं दर्शयति—*गवाकृत्येत्यादि*। आकृतिः = संस्थानम्, संनिवेशितम् = व्यवस्थापितम्। एवमन्यत्रापि यत्किञ्चित् सादृश्यं योजनीयम्॥

*अके जीविकार्थे*॥ *जीविकावाचिनीति*। प्रवृत्तिनिमित्तकथनमेतत्, जीविका-

न्यासः

तद्धितलुकि' इति टच् समासान्तः। अत्र चित्स्वरे प्राप्ते पूर्वपदस्याद्युदात्तत्वं विधीयते। भिक्षाविडाल इत्येवमादौ समासस्वरे। उपमानार्थोऽपीत्यादि। योऽयमत्रोदाहरणे उपमानार्थः संम्भवति, स तत्र योजयितव्यः। यथाप्रसिद्धि चेति। यस्योपमानस्यार्थस्य च लोके प्रसिद्धिः स तथा योजयितव्यः। तत्र दिङ्मात्रमुपमानार्थयोजनस्य दर्शयितुमाह—गवाकृतिः—गोसंस्थानम्, तया सन्निवेशितं गोर्यत्संस्थानं तेन सन्निवेशितं व्यवस्थापितं धान्यगवशब्देनोच्यते; तुल्याकृतित्वात्। एवमन्यत्रापि यत् किञ्चित् सादृश्यं योज्यम्। यथा गोरचनाविशेषावयवानामेवं यस्य हिरण्यस्य तद्धिरण्यं हिरण्यगवशब्देनोच्यते। यथा विडाला अल्पप्रमाणास्तथा हि भिक्षा, यथा वा विडालाः क्वचिद् भवन्ति न सर्वत्र तथा भिक्षापि। एवं श्राणविडालयोः सादृश्यमेवञ्जातीयकं योजयितव्यम्। सिंहाकृत्या सन्निविष्टं तृणं तृणसिंहः। यथा सैन्धवं शुक्लमेवं सक्तुः सक्तुसैन्धवः। एवं पानसैन्धवः॥

अके जीविकार्थे॥ अक इति प्रत्ययग्रहणम्। तत्र प्रत्ययग्रहणपरिभाषया तदन्तस्य ग्रहणं विज्ञायत इत्याह—अकप्रत्ययान्त उत्तरपद इति। जीविकावाचिनीति। जीविका = जीवकः, तद्वाचिनीत्यर्थः। जीविकाशब्दो ह्यर्शआदेराकृतिगणत्वाद्

1. 'अवस्थितम्'—इति पाठान्तरं क्वचित्।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



भवति । दन्तलेखकः । नखलेखकः । अवस्करशोधकः । रमणीयकारकः । दन्तलेखनादिभिर्येषां जीविका त एवमुच्यन्ते । 'नित्यं क्रीडाजीविकयोः' इति समासः ।

अक इति किम् ? रमणीयकर्त्ता । जीविकार्थं इति किम् ? इक्षुभक्षिकां मे धारयसि ॥

## प्राचां क्रीडायाम् ॥ ७४ ॥

प्राग्देशवर्त्तिनां या क्रीडा तद्वाचिनि समासेऽकप्रत्ययान्त उत्तरपदे पूर्वपदमाद्युदात्तं भवति । उद्दालकपुष्पभञ्जिका । वीरणपुष्पप्रचायिका । शालभञ्जिका । तालभञ्जिका । 'संज्ञायाम्' इति ण्वुल्, 'नित्यं क्रीडाजीविकयोः' इति षष्ठीसमासः ।

प्राचामिति किम् ? जीवपुत्रप्रचायिका । इयमुदीचां क्रीडा ।

पदमञ्जरी

रूपप्रवृत्तिनिमित्त. इत्यर्थः । पर्यवसानभूमिस्तु तद्वान्, तदाह—*दन्तलेखनादिभिर्येषामिति* । *रमणीयकर्तेति* । अत्रापि 'नित्यं क्रीडाजीविकयोः' इति समासः, क्रीडायामेव हि तृजन्तं सम्भवति, न पुनर्जीविकायामिति तत्रार्थः ॥

*प्राचां क्रीडायाम्* ॥ प्राचां क्रीडायामिति श्रुतयोरेवान्वयसम्भवान्मतेनेत्यध्याहारो न युक्त इति मत्वाऽऽह—*प्राग्देशवर्तिनां या क्रीडेति* ॥

न्यासः

मत्वर्थीयाकारान्तः सूत्र उपात्तः । अत एव वृत्तौ दन्तलेखनादिभिर्येषां जीविका त एवमुच्यत इत्याह - दन्तलेखक इति । लिखेर्ण्वुल्, षष्ठीसमासः । षष्ठी पुनः 'कर्तृकर्मणोः कृति' इति कर्मणि । अवस्करशोधक इति । 'शुध शौचकर्मणि' इत्यस्माण्ण्यन्ताण्ण्वुल् । रमणीयकारक इत्यत्रापि करोतेः ।

रमणीयकर्तेति । पूर्ववत् समासः । अत्र 'गतिकारकोपपदात् कृत्' इति प्रकृतिभावेनोत्तरपदमन्तोदात्तम् । इक्षुभक्षिकामित्यादि । 'पर्यायार्हणोत्पत्तिषु ण्वुच्' इति भक्षयतेर्ण्वुच् । अत्र 'षष्ठी' इति समासलक्षणेनैव समासः । अत्रापि पूर्ववदुत्तरपदमन्तोदात्तम् । कृत्स्वरापवादो योगः । एवमुत्तरत्रापि योगाः ।

'युक्तारोह्यादयश्च' इत्यतः प्राक् कृत्स्वरापवादो वेदितव्यः ॥

प्राचां क्रीडायाम् ॥ प्राग्देशवर्तिनां या क्रीडेति । एतेन प्राग्ग्रहणमिह न विभाषार्थम्, किन्त्व क्रियाविशेषणमिति दर्शयति । उद्दालकपुष्पभञ्जिकेत्यादि । उद्दालकपुष्पादिषु कृद्योगे कर्मणि षष्ठी । जीवपुत्रप्रचायिकेति । अत्रापि प्रपूर्वाच्चिनोतेः

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



क्रीडायामिति किम् ? तव पुष्पप्रचायिका । पर्याये ण्वुच्प्रत्ययो भवति ॥

अणि नियुक्ते ॥ ७५ ॥

अणन्त उत्तरपदे नियुक्तवाचिनि समासे पूर्वपदमाद्युदात्तं भवति । छत्त्रधारः । तूणीरधारः । कमण्डलुग्राहः[1] । भृङ्गारधारः ।

नियुक्तः=अधिकृतः, स च कस्मिंश्चित्कर्तव्ये तत्परो न भवतीति 'नियुक्तः' इत्यनेन सिध्यति ।

नियुक्त इति किम् ? काण्डलावः । शरलावः ॥

शिल्पिनि चाकृञः ॥ ७६ ॥

शिल्पिवाचिनि समासेऽणन्त उत्तरपदे पूर्वपदमाद्युदात्तं भवति, स

पदमञ्जरी

*अणि नियुक्ते* ॥ नियुक्त इति 'युजिर्योगे' इत्यस्यैतद्रूपमित्याह—*नियुक्तोऽधिकृत इति । स च कस्मिंश्चित्कर्तव्ये तत्परो न भवतीति* । कार्यान्तरेऽपि नियोगसम्भवात् ॥

*शिल्पिनि चाकृञः* ॥ 'युक्ते च' इत्येव सिद्धे कृञः प्रतिषेधार्थं वचनम् ।

न्यासः

संज्ञायां ण्वुल् । पूर्ववत् समासः । लित्स्वरेणोत्तरपदं मध्योदात्तम् ।

तव पुष्पप्रचायिकेति । 'षष्ठी' इत्यनेनैवात्र समासः । चित्स्वरेणोत्तरपदं मध्योदात्तम् ॥

अणि नियुक्ते ॥ छत्त्रधार इति । 'कर्मण्यण्' ।

किमर्थं पुनरिदम्, यावता युक्तोऽभिमतः, तद्वाची न भवति ? नियुक्तोऽधिकृत इत्यादि । 'युक्ते च' इत्यनेन हि यः कर्तव्ये युक्तः समाहितः, तस्य पूर्वपदस्याद्युदात्तत्वम्, तेनाधिकृतवाचिनि न सिध्यति । तस्मादधिकृतच्छत्त्रादिषु यः सहनियुक्तोऽभिप्रेतः, स च कस्मिंश्चिच्छत्त्रधारणे तत्परो न भवति तेनच्छत्त्रधार इत्यादि समासो यादृशः 'युक्ते च' इत्यत्र युक्तोऽभिमतस्तद्वाची न भवति । नियुक्तोऽधिकृत इत्यनेन 'युजिर् योगे' इत्यस्य निष्ठायां नियुक्त इत्येतद्रूपमिति दर्शयति ।

काण्डलाव इति । अत्र काण्डलवनक्रियां प्रति कर्तृत्वमात्रं गम्यते, नाधिकृतत्वम् । तेनैष स्वरो न भवति ॥

शिल्पिनि चाकृञः ॥ अनियुक्तार्थं वचनम् । 'अकृञः' इति शिल्पिविशेषे प्रति-

---

१. क्वचिदिदमुदाहरणं नास्ति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


चेदण् कृञो न भवति । तन्तुवायः । तुन्नवायः । वालवायः ।

शिल्पिनीति किम् । काण्डलावः । अकृञ इति किम् ? कुम्भकारः । अयस्कारः ॥

## संज्ञायां च ॥ ७७ ॥

संज्ञायां विषयेऽणन्त उत्तरपदेऽकृञः पूर्वपदमाद्युदात्तं भवति । तन्तुवायो नाम कीटः । बालवायो नाम पर्वतः ।

अकृञ इत्येव – रथकारो नाम ब्राह्मणः ॥

## गोतन्तियवं पाले ॥ ७८ ॥

गो, तन्ति, यव – इत्येतानि पूर्वपदानि पालशब्द उत्तरपदे आद्युदात्तानि भवन्ति । गोपालः । तन्तिपालः । यवपालः ।

अनियुक्तार्थ आरम्भः ।

गोतन्तियवमिति किम् ? वत्सपालः । पाल इति किम् ? गोरक्षः ॥

## णिनि ॥ ७९ ॥

णिनन्त उत्तरपदे पूर्वपदमाद्युदात्तं भवति । पुष्पहारी । फलहारी । पर्णहारी ॥

### पदमञ्जरी

*तन्तुवाय इति* । 'ह्वावामश्च' इत्यण्, 'आतो युक्' । *अयस्कार इति* । 'अतः कृकमि' इत्यादिना विसर्जनीयस्य सत्वम् ॥

*गोतन्तियवं पाले* ॥ 'तनु विस्तारे', क्तिच्, तन्तिः = वत्सानां बन्धनरज्जुः ॥

### न्यासः

षेधं वक्ष्यामीत्येवमर्थश्च । तन्तुवाय इति । 'वेञ् तन्तुसन्ताने' इति । तन्तून् वयतीति 'ह्वावामश्च' इत्यण्, 'आतो युक् चिण्कृतोः' इति युक् ।

अयस्कार इति । 'अतः कृकमि' इत्यादिना विसर्जनीयस्य सकारः । प्रत्युदाहरणेषु कृत्स्वर एव भवति ॥

संज्ञायाञ्च ॥ गोतन्तियवं पाले ॥ गोपाल इति । 'पा रक्षणे', पूर्ववदण् ।

अनियुक्तार्थ आरम्भ इति । नियुक्ते 'अणि नियुक्ते' इत्यनेनैव सिद्धत्वात् ।

गोरक्ष इति । 'रक्ष पालने' ॥

णिनि ॥ पुष्पहारीति । पुष्पाणि हरतीति 'हरतेर्व्रते', बहुलमाभीक्ष्ण्ये' इति वा णिनिः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## उपमानं शब्दार्थप्रकृतावेव ॥ ८० ॥

उपमानवाचि पूर्वपदं शब्दार्थप्रकृतावेव णिनन्त उत्तरपद आद्युदात्तं भवति । उपमानं नियम्यते । उष्ट्रक्रोशो । ध्वाङ्क्षरावी । खरनादी ।

उपमानग्रहणमस्य पूर्वस्य च योगस्य विषयविभागार्थम् ।

शब्दार्थप्रकृताविति किम् ? वृकवञ्ची । वृकप्रेक्षी । प्रकृतिग्रहणं किम् ? प्रकृतिरेव यत्रोपसर्गनिरपेक्षा शब्दार्था भवति तत्रैव यथा स्याद्, इह मा भूद् – गर्दभोच्चारो, कोकिलाभिव्याहारीति ।

### पदमञ्जरी

*उपमानं शब्दार्थप्रकृतावेव* ॥ *उष्ट्रक्रोशीत्यादौ* 'कर्तर्युपमाने' इति णिनिः । *उपमानग्रहणमित्यादि* । अन्यथा योगविभागेन नियमाश्रयणसामर्थ्याद्विशिष्टविषयो नियम इत्येतावद् गम्यते, न त्विष्टो विषयविभाग इति भावः ।

*शब्दार्थप्रकृताविति किमिति* । सूत्रारम्भः किमर्थ इत्यर्थः । *वृकवञ्चीति* । कृत्स्वर एव भवति । *प्रकृतिरेवेत्यादि* । असति प्रकृतिग्रहणे शब्दार्थात्परो यो

### न्यासः

उपमानं शब्दार्थप्रकृतावेव ॥ शब्दार्थप्रकृताविति । शब्दार्थः प्रकृतिर्यस्मिन्निति बहुव्रीहिः । उपमानं नियम्यत इति यत एवकारस्ततोऽन्यत्रावधारणं भवति । इह च शब्दार्थप्रकृतेरेवकारः, तस्मादुपमाननियमो भवति, अतस्तन्नियम्यते । उष्ट्रक्रोशीति । 'क्रुश आह्वाने' इत्यस्मात् 'कर्तर्युपमाने' इति णिनिः । णिनिनैव साद‍ृश्यस्योक्तत्वाद् वृत्ताविवशब्दो न प्रयुज्यते । ध्वाङ्क्षरावीति । 'रु शब्दे', पूर्वलक्षणाण्णिनिः । खरनादीति । 'णद अव्यक्ते शब्दे' ।

उपमानग्रहणमित्यादि । यद्युपमानग्रहणं न क्रियेत, तदा पूर्वस्य योगस्यास्य च विषयविभागो न ज्ञायेत । यदि योगविभागकरणसामर्थ्याद् विषयान्तरस्य कल्प्येत, तथापीष्टो विषयविभागो न ज्ञायेत । उपमानग्रहणे तु सति पूर्वस्य सामान्यं विषयः, अस्य तु विशेष उपमानमिति विषयविभागो निश्चीयेत । तेन विषयविभागार्थमुपमानग्रहणम् ।

वृकवञ्चीति । 'वञ्चु प्रलम्भने' । वृकप्रेक्षीति । 'ईक्ष दर्शने' प्रपूर्वः । अत्र कृत्स्वर एव भवति । प्रकृतिरेवेत्यादि । यदि प्रकृतिग्रहणं न क्रियेत, तदा शब्दार्थात् परो यो णिनिस्तदन्त उत्तरपद इत्येवं विज्ञायेत; ततश्च गर्दभोच्चारी, कोकिलाभिव्याहारीत्यस्यापि स्यात् ; भवति ह्यत्रापि धातूपसर्गसमुदायाच्छब्दार्थात् परो णिनिः, अतस्तदन्तमुत्तरपदम् । तस्मादिह मा भूदिति प्रकृतिग्रहणं क्रियते, तेनेह न

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



एवकारकरणमुपमानावधारणार्थम् । शब्दार्थप्रकृतौ त्वनुपमानमुपमानं चाद्युदात्तं भवति । सिंहविनर्दी । पुष्कलजल्पी ॥

## युक्तारोह्यादयश्च ॥ ८१ ॥

### पदमञ्जरी

णिनिस्तदन्त उत्तरपद इति विज्ञायेत, ततश्च यत्रापि धातूपसर्गसमुदायात् शब्दार्थात्परो णिनिः, तत्रापि स्यात्; कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणाण्णिन्यन्तमेवोत्तरपदमिति कृत्वा । प्रकृतिग्रहणे तु न भवति ।

योऽत्र धातुर्नासौ शब्दार्थः, यश्च शब्दार्थो धातूपसर्गसमुदायो न ततो णिनिर्विहित इति, सिद्धे विधिरारभ्यमाणोन्तरेणाप्येवकारं नियमाय भवति, नार्थ एवकारेण ? तत्राह—*एवकारकरणमित्यादि* । असति हि तस्मिन्विपरीतो नियमः स्यात्—शब्दार्थप्रकृतौ यदि भवति उपमान एवेति । एवं च प्रकृतिर्नियम्येत, नोपमानम् । तस्मादुपमानावधारणार्थमेवकारः क्रियते । किं पुनः कारणमुपमानावधारणमाश्रीयते ? अत आह—*शब्दार्थप्रकृताविति* । तुशब्दो हेतौ, उपमाननियमे हि शब्दार्थप्रकृतेरनियतत्वात्तत्राप्यविशेषेण सर्वस्याद्युदात्तत्वं लभ्यते, नान्यथा । किञ्च—प्रकृत्यवधारणेऽस्यानियतत्वाद् वृकवञ्चीत्यादावाद्युदात्तत्वप्रसङ्गः ॥

### न्यासः

भवति । प्रकृतिग्रहणे सति यत्रोपसर्गनिरपेक्षा प्रकृतिरेव केवलः शब्दार्थस्तत्र भवितव्यम् । यश्चात्र धातुरुपसर्गात् परो नासौ शब्दार्थः; चरतेरुपसर्गनिरपेक्षस्य गत्यर्थत्वात्, हरतेश्च हरणार्थत्वात् । यद्वा—योऽत्र शब्दार्थो धातूपसर्गसमुदायः, न तस्माण्णिनेर्विधानम् ।

यदि पूर्वेणैव सिद्धे नियमार्थं वचनम्, एवं सिद्धे विधिरारभ्यमाणो नियमाय भवतीत्यनर्थकमेवकारकरणम् ? इत्याह – एवकारकरणमित्यादि । असति ह्येवकार उपमान एव शब्दार्थप्रकृतावित्येवमवधारणं स्यात्, ततश्च शब्दार्थप्रकृतिरेव नियम्येत—शब्दार्थप्रकृतौ यदि भवत्युपमान एव भवति, नानुपमान इति । ततश्चानुपमाने न स्यात् । तस्मादुपमानावधारणं यथा स्यादित्येवमर्थमेवकारः क्रियते । किं कारणम् ? इत्याह—शब्दार्थप्रकृतौ त्वित्यादि । तुशब्दो हेतौ । तस्मात् शब्दार्थप्रकृतावुपमानमनुपमानं चाद्युदात्तं भवति । तस्मादुपमानावधारणार्थमेवकारकरणम् । उपमाननियमे हि सति शब्दार्थप्रकृतेरनियतत्वात् तत्राविशेषेण सर्वस्याद्युदात्तत्वं लभ्यते । सिंहविनर्दीति । उपमानस्योदाहरणम् । पुष्कलजल्पीति । अनुपमानस्य । पुष्कलजल्पीत्यत्र 'व्रते', 'बहुलमाभीक्ष्ण्ये' इति वा णिनिः ॥



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



युक्तारोह्यादयः समासा आद्युदात्ता भवन्ति । युक्तारोही । आगतरोही । आगतयोधी । आगतवञ्ची । आगतनर्दी । आगतप्रहारी । एते णिनन्ताः 'णिनि' इत्यस्यैवोदाहरणार्थं पठ्यन्ते ।

पूर्वोत्तरपदनियमार्था इति केचित् । इह मा भूद् – वृक्षारोही, युक्ताध्यायीति । आगतमत्स्या ।

क्षीरहोता । भगिनीभर्त्ता । याजकादित्वात् षष्ठीसमासावेतौ ।

ग्रामगोधुक् । अश्वत्रिरात्रः । गर्गत्रिरात्रः । व्युष्टत्रिरात्रः । शणपादः । समपादः । षष्ठीसमासा एते ।

### पदमञ्जरी

*युक्तारोह्यादयश्च* ।। *पूर्वोत्तरपदनियमार्थमिति* । यत्र युक्तादीन्येव पूर्वपदानि, आरोह्यादीन्येव चोत्तरपदानि--तत्रैव यथा स्यादित्यर्थः । आगतमत्स्यादिषु च बहुव्रीहिः, कर्मधारयो वा ।

### न्यासः

युक्तारोह्यादयश्च ।। युक्तारोहीत्यादिषु यत्र कृदन्तमुत्तरपदं तत्र कृत्स्वरापवादो योगः । अन्येषु तु समासस्वरापवादः । युक्तारोहीत्येवमादिषु आगतप्रहारीत्येवम्पर्यन्तेषु 'रुह जन्मनि', 'युध संप्रहारे', 'वञ्चु प्रलम्भने', 'टुणदि समृद्धौ', 'हृञ् हरणे' प्रपूर्वः— इत्येभ्यो धातुभ्यो यथायोगं युक्तागतपूर्वेभ्यः 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनिः । यद्येते णिन्यन्तास्तत् किमर्थमिह पठ्यन्ते, यावता णिनीत्यनेनैव सिद्धम् ? इत्यत आह णिनीत्यस्यैवोदाहरणार्थं पठ्यन्त इति ।

पूर्वोत्तरपदेत्यादिना केषाञ्चिन्मतेन तेषामिह पाठस्य प्रयोजनान्तरं दर्शयति । पूर्वोत्तरपदयोर्नियमोऽर्थो येषां ते तथोक्ताः । यत्र युक्तादीन्येव पूर्वपदान्यारोह्यादीन्येव चोत्तरपदानि तत्रैव यथा स्यादिति, इह मा भूत्—ध्वाङ्क्षारोही, वृक्षारोहीति, अत्रान्यत्पूर्वपदम् । युक्ताध्यायीत्यत्रान्यदुत्तरपदम् । 'इङ् अध्ययने' इत्यस्माण्णिनिः । आगतमत्स्या इति । विशेषणसमासः । क्षीरहोतेति । क्षीरस्य होता । अस्मादेव निपातनात् षष्ठीसमासः । याजकादित्वाद्वा । 'हु' इत्येतस्मात् तृच् । भगिनीभर्तेति । अयमपि पूर्ववत् षष्ठीसमासः । भृञस्तृच् ।

ग्रामगोधुगिति । दुहेः क्विप् , 'दादेर्धातोर्घः', 'एकाचो बशो भष्' इत्यादिना दकारस्य धकारः, 'झलां जशोऽन्ते' इति घकारस्य गकारः, तस्य 'वावसाने' इति चर्त्वम्—ककारः ।

त्रिरात्र इति । तिस्रो रात्रयः समाहृता इति समाहारे द्विगुः । 'अहःसर्वैकदेश' इत्यादिनाऽच् समासान्तः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



एकशितिपात् । एकः शितिः पादोऽस्येति त्रिपदबहुव्रीहिः । तत्रैकशितिशब्दः 'तद्धितार्थोत्तरपद' इति तत्पुरुषसंज्ञः, तस्य निमित्तिस्वरबलीयस्त्वाद् अन्तोदात्तत्वं प्राप्तमित्याद्युदात्तत्वं विधीयते ।

पदमञ्जरी

*एकशितिपादिति* । 'संख्यासुपूर्वस्य' इति पादशब्दाकारस्य लोपः, संख्यासुपूर्वस्य समासस्य योऽन्ते पादशब्दस्तस्य लोपो भवतीति तत्रार्थः । ननु चेह 'इणभीकापाशल्यतिमर्चिभ्यः कन्' इति कन्नन्त एकशब्द आद्युदात्तः, ततश्च 'बहुव्रीहौ प्रकृत्या' इत्येव सिद्धमाद्युदात्तत्वम् ? तत्राह—*एकः शिति पादोऽस्येति त्रिपदो बहुव्रीहिरिति* । ततः किमित्याह—*तत्रेति* । यद्युत्तरपदे परत एकशितिशब्दस्तत्पुरुषः, ततोऽपि किम् ? इत्याह—*तस्येति* । तस्य तत्पुरुषसंज्ञकस्यैकशितिशब्दस्य समासान्तोदात्तत्वं प्राप्तम् । ननु समासस्वरापवादो बहुव्रीहिस्वरः ? तत्राह—*निमित्तिस्वरबलीयस्त्वादिति* । समासस्वरस्येति शेषः । निमित्तमुत्तरपदं द्विगोस्त्रिपदो बहुव्रीहिस्तस्य यः स्वरः, तस्मात्समासस्वरस्य बलीयस्त्वादित्यर्थः । बलीयस्त्वं तु सतिशिष्टत्वात् । सतिशिष्टत्वं तु बहुव्रीहौ सति पश्चात्तत्पुरुषे कृते प्राप्नोतीति ।

न्यासः

एकशितिपादिति । 'पादस्य लोपोऽहस्त्यादिभ्यः' इत्यकारलोपः । ननु चैकशब्दोऽयम् 'इणभीकापाशल्यतिमर्चिभ्यः कन्' इति कन्प्रत्ययान्तो नित्स्वरेणाद्युदात्तः । तत्रैकः शितिः पादोऽस्येति बहुव्रीहिः । तत्र कृते प्रकृतिभावेनैव सिद्धमिहाद्युदात्तत्वम्, ततो नार्थ इहास्य पाठेन ? इत्यत आह—एकः शितिः पादोऽस्येति । द्विपदे बहुव्रीहावनेष दोषः स्यात्, न चायं द्विपदः, किं तर्हि ? त्रिपदः । अत्र पादशब्द उत्तरपदे परतः 'तद्धितार्थोत्तरपद' इति पूर्वपदयोरेकशितिशब्दयोस्तत्पुरुषसंज्ञा भवति । यद्येवम्, ततः किम् ? इत्यत आह – तस्येत्यादि । तस्येति तत्पुरुषसंज्ञकस्यैकशितिशब्दस्यान्तोदात्तत्वं प्राप्तमिति 'समासस्य' इत्यनेन । इतिकरणो हेतौ । यस्मात् तस्यान्तोदात्तत्वं प्राप्तं तस्मात् तस्याद्युदात्तत्वं विधीयते । ततो नापार्थक एकशितिपाच्छब्दस्येह पाठ इत्यभिप्रायः । कस्मात् पुनस्तस्यान्तोदात्तत्वं प्राप्नोति, बहुव्रीहिस्वरेणैव हि परत्वादन्तोदात्तत्वं बाधित्वा युक्तं भवितुम् ? इत्याह—निमित्तस्वरबलीयस्त्वादिति । निमित्तपदं द्विगोस्त्रिपदबहुव्रीहिः । तत्र हि कृते द्विगुरुत्तरपदे परतः पूर्वपदयोर्भवति । यच्च यस्मिन् सति भवति तत् तस्य निमित्तम्, तस्य निमित्तस्य बहुव्रीहिस्वरो निमित्तस्वरः, तस्माद् बलीयस्त्वं निमित्तस्वरबलीयस्त्वम् । 'पञ्चमी' इति योगविभागात् समासः । तदेतदुक्तं भवति—तस्माद् बहुव्रीहिस्वरात् समासान्तोदात्तत्वस्य बलीयस्त्वम्, तस्मात् तत्

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



एवमपि नार्थ एतेन, इगन्त० द्विगौ' इति सिद्धत्वात् ? एवं तर्हि ज्ञापकार्थम्, एतज् ज्ञापयति – शित्यन्तस्योत्तरपदे द्विगुस्वरो न भवतीति। तेन द्विशितिपादित्यत्र तिशब्द उदात्तो भवति। निमित्तिस्वरबलीयस्त्वस्याप्येकशितिपात्स्वरवचनमेव ज्ञापकं वर्णयन्ति।

पात्रेसमितादयश्च युक्तारोह्यादयः, ततस्तेऽप्याद्युदात्ता भवन्ति॥

## दीर्घकाशतुषभ्राष्ट्रवटं जे॥ ८२॥

दीर्घान्तं पूर्वपदम्, काश, तुष, भ्राष्ट्र, वट – इत्येतानि च जे उत्तरपदे आद्युदात्तानि भवन्ति। कुटीजः। शमीजः। काशजः। तुषजः। भ्राष्ट्रजः। वटजः॥

### पदमञ्जरी

*एवमपीत्यादि*। स्पष्टार्थम्। *निमित्तिस्वरबलीयस्त्वस्यापीत्यादि*। तथा च समर्थसूत्रे वार्त्तिकम्—'एकशितिपात्स्वरवचनं तु ज्ञापकं निमित्तिस्वरबलीयस्त्वस्य' इति। उभयमन्तरेणाप्यनुपपद्यमानमेकशितिपाद्ग्रहणमुभयमपि ज्ञापयति॥

*दीर्घकाशतुषभ्राष्ट्रवटं जे*॥ *कुटीज इति*। 'सप्तम्यां जनेर्डः'॥

### न्यासः

प्राप्नोतीति। बलीयस्त्वं तु तस्य सतिशिष्टत्वात्। तद्धि बहुव्रीहेराद्युदात्तत्वे सति भवति। तस्मात् सति शिष्टस्य बलीयस्त्वमुक्तम्। वक्ष्यमाणज्ञापकाद्वा निमित्तस्वरबलीयस्त्वम्।

एवमपीत्यादि। एवमपि त्रिपदे बहुव्रीहौ कल्प्यमानेऽपि। नार्थ एतेनेति। एकशितिपाच्छब्देनेह भवति नार्थः। कस्मात्? इत्याह—इगन्तेत्यादि। त्रिपदे हि बहुव्रीहावेकशितिशब्दयोरुत्तरपदे यः समासः 'संख्यापूर्वो द्विगुः' इति द्विगुसंज्ञः स इगन्तश्च भवति। ततश्च 'इगन्त० द्विगौ' इत्याद्युदात्तत्वं सिद्धम्, ततो नार्थ एतेन। एवं तर्हीत्यादिनैकशितिपाच्छब्दपाठस्य ज्ञापकत्वं दर्शयति। किं पुनस्तज्ज्ञापयति? इत्याह—एतदित्यादि। तेनेत्यादिना। प्रयोजनं दर्शयति। यद्येषोऽर्थो न ज्ञाप्यते, तेन द्वौ शिती पादावस्येति त्रिपदे बहुव्रीहौ कृते, तत्र चोत्तरपदे परतः पूर्वपदयोर्द्विगौ सति 'इगन्त० द्विगौ' इति पूर्वपदप्रकृतिस्वरे कृते तिशब्दो द्विशितिपादित्यत्रोदात्तः स्यात्। अस्मिंस्त्वर्थे ज्ञापिते 'इगन्त० द्विगौ' इत्येष स्वरो न भवति। तस्मिंश्चासति समासस्वरेण तिशब्द उदात्तो भवति, निमित्तस्वरबलीयस्त्वं न स्यात्। ततश्च त्रिपदे हि बहुव्रीहौ परत्वात् समासस्वरं बाधित्वा बहुव्रीहिस्वर एव भवति, ततस्तेनैव सिद्धत्वादेकशितिपाच्छब्दस्येह पाठो न क्रियेत, कृतश्च। तस्मात् स एव ज्ञापयति—निमित्तस्वरबलीयस्त्वमिति॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अन्त्यात्पूर्वं बह्वचः ॥ ८३ ॥

जे उत्तरपदे बह्वचः पूर्वपदस्यान्त्यात्पूर्वमुदात्तं भवति । उपसरजः । मन्दुरजः । आमलकीजः । वडवाजः ।

बह्वच इति किम् ? दग्धजानि तृणानि ॥

ग्रामेऽनिवसन्तः ॥ ८४ ॥

ग्रामशब्द उत्तरपदे पूर्वपदमाद्युदात्तं भवति न चेन्निवसद्वाचि भवति । मल्लग्रामः । वणिग्ग्रामः । ग्रामशब्दोऽत्र समूहवाची । देवग्रामः । देवस्वामिक इत्यर्थः ।

अनिवसन्त इति किम् ? दाक्षिग्रामः । माहकिग्रामः । दाक्ष्यादयो निवसन्ति यस्मिन्ग्रामे स तेषामिति व्यपदिश्यते ॥

पदमञ्जरी

*अन्त्यात्पूर्वं बह्वचः* ॥ *आमलकीज इति* । दीर्घान्तेऽपि बह्वचि परत्वादयमेव स्वरो भवति ॥

*ग्रामेऽनिवसन्तः* ॥ निपूर्वाद्वसेरौणादिकोऽधिकरणे झच्, निवसन्त्यस्मिन्निति निवसन्तः । *देवग्राम इति* । प्राचीनपरिक्षिप्तदेशेऽयं ग्रामशब्दः । यद्येवम्, निवसन्तवाची भवति ? तत्राह—*देवस्वामिक इति* । ततश्चायं न देवापेक्षया ग्रामो निवसन्त इति भावः ।

*दाक्ष्यादयो निवसन्ति यस्मिन्नित्यादि* । अन्ये निवसन्तु, तत्र मा वा वसन्,

न्यासः

दीर्घकाशतुषभ्राष्ट्रवटं जे ॥ कृत्स्वरापवादो योगः । कुटीज इति । कुट्यां जात इति 'सप्तम्यां जनेर्डः' इति डप्रत्ययः ॥

अन्त्यात् पूर्वं बह्वचः ॥ अयमपि कृत्स्वरापवादो योगः ।

दग्धजानीति । अत्र कृत्स्वर एव भवति ।

ग्रामेऽनिवसन्तः ॥ निवसन्तशब्दोऽयमौणादिको गृह्यते । 'जृविशिभ्यां झच्' इति वर्तमाने 'तृभूवहिवसिभासिसाधिगतिमण्डिजिनन्दिभ्यश्च' इति वसेर्निपूर्वाज् झच् । निवसतीति निवसन्तः । केचिच्छत्रन्तस्य वसच्छब्दस्य ग्रहणं वर्णयन्ति । मल्लग्राम इति । षष्ठीसमासः । देवग्राम इति । वाटकपरिक्षिप्ते गृहसमुदाये ग्रामशब्दो वर्तते । तस्माद् देवस्वामिक इत्यर्थः । एतेन स्वस्वामिभावसम्बन्धा या साऽत्र षष्ठी समस्यते, न तु क्रियावाससम्बन्धेति दर्शयति; अन्यथा देवशब्दः पूर्वपदं निवसन्तवाच्येव स्यादित्यभिप्रायः ।

दाक्ष्यादयो निवसन्ति यस्मिन्नित्यादिना प्रत्युदाहरणे पूर्वपदस्य निवसन्तवाचित्वं दर्शयति ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## घोषादिषु च ॥ ८५ ॥

घोषादिषु चोत्तरपदेषु पूर्वपदमाद्युदात्तं भवति । दाक्षिघोषः । दाक्षिकटः । दाक्षिपल्वलः । दाक्षिह्लदः । दाक्षिबदरी । दाक्षिपिङ्गलः[1] । दाक्षिपिशङ्गः[2] । दाक्षिशाला । दाक्षिरक्षा । दाक्षिशिल्पी । दाक्ष्यश्वत्थः । कुन्दतृणम् । दाक्षिशाल्मली । आश्रममुनिः । शाल्मलिमुनिः । दाक्षिप्रेक्षा । दाक्षिकूटः । यान्यत्र निवासनामधेयानि तेषु निवसद्वाचीन्यपि पूर्वपदान्याद्युदात्तानि भवन्ति ।

अनिवसन्त इति नानुवर्त्तयन्ति केचित् । अपरे पुनरनुवर्त्तयन्ति ॥

## छात्र्यादयः शालायाम् ॥ ८६ ॥

शालायामुत्तरपदे छात्र्यादय आद्युदात्ता भवन्ति ।

छात्रिशाला । पेलिशाला । भाण्डिशाला ।

छात्रि । पेलि । भाण्डि । व्याडि । आपिशलि । आखण्डि । आपारि । गोमि । छात्र्यादिः ।

यदा शालान्तस्तत्पुरुषो नपुंसकलिङ्गो भवति, तदापि 'तत्पुरुषे

### पदमञ्जरी

ते तावदवास्तुरित्येतावता तेषामिति व्यपदिश्यत इत्यर्थः ॥

घोषादिषु च ॥ *यान्यत्रेति* । घोषकुटादीनि । *अपरे पुनरिति* । येषां घोषकुटादिष्वपि शब्देषु तावद्भवति, न निवासनामधेयेषु ॥

*छात्र्यादयः शालायाम्* ॥ *यदा शालान्त इत्यादि* । 'विभाषा सेनासुरा' इत्यादिना शालान्तस्य तत्पुरुषस्य विभाषा नपुंसकत्वमुक्तम् । तत्रास्यावकाशो

### न्यासः

घोषादिषु च ॥ समासस्वरापवादो योगः । एवमुत्तरेऽपि । 'न भूताधिकसञ्जीव' इत्यादेः सूत्राद् ये योगास्ते समासस्वरापवादा द्रष्टव्याः । दाक्षिघोष इत्येवमादयः षष्ठीसमासाः । यान्यत्रेत्यादि । कथं पुनरेतल्लभ्यते, यावताऽनिवसन्त इति प्रकृतम् ? इत्यत आह—अनिवसन्त इति । अपर इत्यादि । तेषां मतेन यान्यत्र निवासनामधेयानि तेषु निवसद्वाचीन्यप्युदात्ता भवन्ति ॥

छात्र्यादयः शालायाम् ॥ यदा शालान्त इत्यादि । 'विभाषा सेनासुरा' इत्यादिना शालान्तस्य तत्पुरुषस्य विभाषा नपुंसकत्वमुक्तम् । इह च शालाशब्दस्य

---

१-२. क्वचिदिदमुदाहरणद्वयं नास्ति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



शालायां नपुंसके' इत्येतस्मात्पूर्वविप्रतिषेधेन पूर्वपदमाद्युदात्तं भवति । छात्त्रिशालम् । पैलिशालम् ॥

## प्रस्थेऽवृद्धमकर्क्यादीनाम् ॥ ८७ ॥

प्रस्थशब्द उत्तरपदे कर्क्यादिवर्जितमवृद्धं पूर्वपदमाद्युदात्तं भवति । इन्द्रप्रस्थः । कुण्डप्रस्थः । ह्रदप्रस्थः । सुवर्णप्रस्थः ।

अवृद्धमिति किम् ? दाक्षिप्रस्थः । माहकिप्रस्थः ।

अकर्क्यादीनामिति किम् ? कर्कीप्रस्थः । मघीप्रस्थः ।

कर्की । मघी । मकरी । कर्कन्धू । शमी । करीर । कटुक । कुरल[1] । बदर । कर्क्यादिः ॥

### पदमञ्जरी

यो नपुंसकलिङ्गो न भवति—छात्त्रिशाला, गोशलेति; 'तत्पुरुषे शालायाम्' इत्यस्यावकाशो यश्छात्त्र्यादिपूर्वपदो न भवति—ब्राह्मणशालम् , क्षत्त्रियशालमिति; यश्छात्त्र्यादिपूर्वपदो नपुंसकलिङ्गश्च, तत्रैकदेशविकृतस्यानन्यत्वादयमपि प्राप्नोति, 'तत्पुरुषे शालायाम्' इत्ययं च; तत्र पूर्वविप्रतिषेधादयमेव भवति ॥

*प्रस्थेऽवृद्धमकर्क्यादीनाम्* ॥ 'मालीदीनां च' इति वचनादवृद्धमिति पदच्छेदः । कर्क्यादिप्रतिषेधस्तु नामधेयार्थः स्यात्—'वा नामधेयस्य वृद्धसंज्ञा वक्तव्या' इति ॥

### न्यासः

**स्त्रीलिङ्गस्य ग्रहणम्** । तत्र यथा समासो नपुंसकलिङ्गो न भवति, तथा 'तत्पुरुषे शालायां नपुंसके' इत्यनेन परत्वादुत्तरपदाद्युदात्तत्वेन भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात् । अतस्तन्निरासाय यदा शालान्त इत्यादेर्ग्रन्थस्योपन्यासः । यो नपुंसकलिङ्गः शालान्ततत्पुरुषो न भवति सोऽस्यावकाशः—छात्त्रिशाला, ऐलिशालेति । यस्तु नपुंसकलिङ्गो न छात्त्र्यादिपूर्वपदस्तत्पुरुषः स 'शालायां नपुंसके' इत्यस्यावकाशः—ब्राह्मणशालम् , क्षत्त्रियशालमिति; इहोभयं प्राप्नोति—छात्त्रिशालमिति, पूर्वविप्रतिषेधेनायमेव स्वरो भवति ॥

**प्रस्थेऽवृद्धमकर्क्यादीनाम्** ॥ प्रस्थशब्दो यदि व्युत्पाद्यते 'घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम्' इति, तदा थाथादिस्वरे प्राप्ते । अथ न व्युत्पाद्यते, तदा समासान्तोदात्तत्वे । इन्द्रप्रस्थ इत्यादयः षष्ठीसमासाः ॥

---

१. 'कुवल' इति पाठान्तरम् । क्वचिच्चेदं नोपलभ्यते ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


## मालादीनां च ॥ ८८ ॥

'प्रस्थे' इति वर्त्तते। प्रस्थ उत्तरपदे मालादीनामादिरुदात्तो भवति। मालाप्रस्थः। शालाप्रस्थः।

माला। शाला। शोणा। द्राक्षा। क्षौमा। क्षामा। काञ्ची। एक। काम। मालादिः।

वृद्धार्थं आरम्भः। एकशोणाशब्दयोः 'एङ् प्राचां देशे' इति वृद्धसंज्ञा ॥

## अमहन्नवं नगरेऽनुदीचाम् ॥ ८९ ॥

नगरशब्द उत्तरपदे महन्नवशब्दवर्जितं पूर्वपदमाद्युदात्तं भवति, तच्चेदुदीचां न भवति। सुह्मनगरम्। पुण्ड्रनगरम्[1]।

अमहन्नवमिति किम्? महानगरम्। नवनगरम्। अनुदीचामिति किम्? नदीनगरम्। कान्तीनगरम् ॥

## अर्मे चावर्णं द्व्यच्त्र्यच् ॥ ९० ॥

अर्मशब्द उत्तरपदे द्व्यच्त्र्यच् पूर्वपदमवर्णान्तमाद्युदात्तं भवति। दत्तार्मम्। गुप्तार्मम्। कुक्कुटार्मम्। वायसार्मम्।

अवर्णमिति किम्? बृहदर्मम्। द्व्यच्त्र्यजिति किम्? कपिञ्जलार्मम्।

अमहन्नवमित्येव — महार्मम्। नवार्मम् ॥

### पदमञ्जरी

*अर्मे चावर्णं द्व्यच्त्र्यच्* ॥ *बृहदर्ममिति*। 'स्वरविधौ व्यञ्जनमविद्यमानवत्' इत्येतदत्र नाश्रीयते; अनित्यत्वात्। *महार्ममिति*। आत्वे कृतेऽवर्णान्तत्वादस्ति प्राप्तिः। *नवार्ममिति*। नवशब्दः प्रत्यग्रवचनोऽकारान्तः ॥

### न्यासः

मालादीनाञ्च ॥ अमहन्नवं नगरेऽनुदीचाम् ॥ सुह्मनगरमित्यादयोऽपि षष्ठीसमासा एव। किमर्थं प्राचामित्येवं नोच्येत, लघु हि प्राचामिति वचनमनुदीचामिति वचनात्? नैवं शक्यम्; मध्यदेशनगरे विराटनगरमित्यत्र न स्यात्। पूर्वपदाद्युदात्तत्वे प्राप्ते प्रतिषेधोऽयमुच्यते, न समास एव भवति ॥

---

१. इदं बहुषु पुस्तकेषु नोपलभ्यते।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## न भूताधिकसञ्जीवमद्राश्मकज्जलम् ॥ ९१ ॥

भूत, अधिक, सञ्जीव, मद्र, अश्मन्, कज्जल — इत्येतानि पूर्वपदानि अर्मशब्द उत्तरपदे नाद्युदात्तानि भवन्ति । भूतार्मम् । अधिकार्मम् । सञ्जीवार्मम् ।

मद्राश्मग्रहणं सङ्घातविगृहीतार्थम् — मद्रार्मम् । अश्मार्मम् । मद्राश्मार्मम् । कज्जलार्मम् । समासान्तोदात्तत्वमेवात्र भवति ।

* आद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसंख्यानम् * । दिवोदासं वध्र्यश्वाय दाशुषे ॥

## अन्तः ॥ ९२ ॥

### पदमञ्जरी

*न भूताधिकसञ्जीवमद्राश्मकज्जलम्* ॥ *मद्राश्मग्रहणं सङ्घातविगृहीतार्थमिति* । मद्रशब्दस्य केवलस्य मद्राश्मशब्दस्य च सङ्घातस्य प्रतिषेधार्थमित्यर्थः ।

*मद्राश्मार्ममिति* । 'अनोऽश्मायःसरसां जातिसंज्ञयोः' इति समासान्ते सत्यवर्णान्तमेतद्भवति, तदेवम् — मद्रार्मम् , मद्राश्मार्ममिति द्वे एवोदाहरणे । प्रायेण तु *अश्मार्ममिति* तृतीयमप्युदाहरणं पठ्यते, तदयुक्तम् ; अश्मशब्दस्य नकारान्तत्वात् । न च लोपे कृतेऽवर्णान्तत्वम् ; स्वरविधौ नलोपस्यासिद्धत्वात् । तथा च वक्ष्यति—पञ्चार्मम् , दशार्ममित्यत्र 'अर्मे चावर्णं द्व्यच्त्र्यच्' इत्ययं स्वरो न भवतीति ।

अपर आह—'मद्राश्मग्रहणं सङ्घातविगृहीतार्थम्' इत्यस्य *भाष्येऽ*दर्शनादनार्षो वृत्तौ पाठ इति ।

*दिवोदासमिति* । 'दिवश्च दासे' इति षष्ठ्या अलुक् ॥

*अन्तः* ॥ अत्रापि प्रकरणे पूर्वपदविषया प्रथमा षष्ठ्यर्थे द्रष्टव्या ॥

### न्यासः

अर्मे चावर्णं द्व्यच्त्र्यच् ॥ न भूताधिकसञ्जीवमद्राश्मकज्जलम् ॥ मद्राश्मग्रहणमित्यादि । उभयत्रापि द्व्यच् त्र्यजिति च प्राप्तिरस्ति । तस्मात् सङ्घातार्थं विगृहीतार्थञ्च वचनम् । कथं पुनः सङ्घातविगृहीतार्थत्वं लभ्यते ? एकशेषं कृत्वा मद्राश्म इति निर्देशात् । मद्राश्मा च मद्राश्मानौ चेत्येकशेषः । एकशेषे सति मद्रशब्दस्य केवलस्य, मद्रशब्दस्य च सङ्घातस्य प्रतिषेध उपपद्यते ।

आद्युदात्तस्य प्रकरणमित्याद्युदात्तप्रकरणम् , प्रक्रान्तम् । तत्र दिवोदासादीनां छन्दस्याद्युदात्तो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । व्याख्यानं तु—'शुक्रे च' इत्येवमादौ

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



'अन्तः' इत्यधिकृतम्, इत उत्तरं यद्वक्ष्यामस्तत्र पूर्वपदस्यान्त उदात्तो भवतीत्येवं वेदितव्यम्। वक्ष्यति – 'सर्वं गुणकार्त्स्न्ये। सर्वश्वेतः। सर्वकृष्णः'।

प्राक् 'उत्तरपदादिः' इत्येतस्मादयमधिकारो वेदितव्यः॥

सर्वं गुणकार्त्स्न्ये ॥ ९३ ॥

सर्वशब्दः पूर्वपदं गुणकार्त्स्न्ये वर्त्तमानमन्तोदात्तं भवति। सर्वश्वेतः। सर्वकृष्णः। सर्वमहान्।

सर्वमिति किम्? परमश्वेतः। आश्रयव्याप्त्या परमत्वं श्वेतत्वस्येति। गुणकार्त्स्न्ये वर्त्तते। गुणग्रहणं किम्? सर्वसौवर्णः। सर्वराजतः।

पदमञ्जरी

*सर्वं गुणकार्त्स्न्ये*॥ यत्र गुणान्तरस्याभावस्तत्र गुणकार्त्स्न्यं भवति। *सर्वश्वेत इति*। 'पूर्वकालैक' इत्यादिना कर्मधारयः। अत्र शुक्लेन गुणेन सर्वावयवानां व्याप्तिर्गम्यते।

*आश्रयव्याप्त्या परमत्वमिति*। यद्यप्यौज्ज्वल्यादिनापि परमत्वं सम्भवति, अत्र त्वेवंविधं परमत्वं विवक्षितमित्यर्थः। *सर्वसौवर्ण इति*। विकारविषयमत्र

न्यासः

येऽस्मिन् प्रकरणे चकाराः, तेषामन्यतमस्यानुक्तसमुच्चयार्थतामाश्रित्य कर्तव्यम्॥

अन्तः॥ सर्वं गुणकार्त्स्न्ये॥ गुणकार्त्स्न्यं इति। गुणकार्त्स्न्यं गुणस्य सर्वत्रभावः। सर्वश्वेत इति। 'पूर्वकालैक' इत्यादिना समानाधिकरणसमासः। अत्र समुदायगुणस्य सर्वत्र भावः। न तु तदवयवे तत्र सर्वशब्दो वर्तत इति गुणकार्त्स्न्यस्य वृत्तिर्भवति। परमश्वेत इति। कथं पुनरत्र गुणकार्त्स्न्ये परमशब्दो वर्तते, यावतासौ प्रकर्षवाची, अन्यश्च प्रकर्षः, अन्यच्च गुणकार्त्स्न्यम्? इत्यत आह—आश्रयव्याप्त्येत्यादि। इतिकरणो हेतौ। यस्मादाश्रयव्याप्त्या परमत्वमुत्कर्षो भवति, नान्यथा। एवं हि तस्योत्कर्ष उपपद्यते यदि सर्वमाश्रयं व्याप्नोति। तस्माद् गुणकार्त्स्न्यं इह परमशब्दो वर्तते। सर्वसौवर्णः, सर्वराजत इति। सुवर्णस्य विकारः सौवर्णः, रजतस्य विकारो राजतः—नात्र गुणकार्त्स्न्यम्, किं तर्हि? जातियुक्तस्य विकारविषयं कार्त्स्न्यम्। सर्वं हि विकारद्रव्यं प्रकृतिभावेन व्याप्नोतीति द्रव्यकार्त्स्न्यमिह, तत्र च सर्वशब्दो वर्तते। सर्वेषां श्वेततरः सर्वश्वेत इति। अत्र गुणकार्त्स्न्ये। कथं पुनरत्र समासः, यावता 'पूरणगुणसुहित' इत्यादिना गुणवचनेन षष्ठीसमासः प्रतिषिद्धः? अथापि कथञ्चित् समासः स्यात्, एवमपि श्वेततरशब्देन समासे

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



कार्त्स्न्ये इति किम् ? सर्वेषां श्वेततरः सर्वश्वेतः । 'गुणात्तरेण समासस्तरलोपश्च वक्तव्यः' इत्येवमत्र समासः, तरब्लोपश्च ॥

## संज्ञायां गिरिनिकाययोः ॥ ९४ ॥

संज्ञायां विषये गिरि, निकाय – इत्येतयोरुत्तरपदयोः पूर्वपदमन्तोदात्तं भवति । अञ्जनागिरिः । भञ्जनागिरिः । निकाये – शापिण्डिनिकायः । मौण्डिनिकायः । चिखिल्लिनिकायः[1] ।

संज्ञायामिति किम् ? परमगिरिः । ब्राह्मणनिकायः ॥

## कुमार्यां वयसि ॥ ९५ ॥

कुमार्यामुत्तरपदे वयसि गम्यमाने पूर्वपदमन्तोदात्तं भवति । वृद्धकुमारी । जरत्कुमारी ।

### पदमञ्जरी

कार्त्स्न्यम् । *कार्त्स्न्ये इति किमिति* । गुणवाचिन्युत्तरपदे न सर्वशब्दस्य कार्त्स्न्यं व्यभिचरतीति प्रश्नः । *सर्वेषां श्वेततरः सर्वश्वेत इति* । गुणिकार्त्स्न्ये सर्वशब्दः, न गुणकार्त्स्न्ये । सर्वेषामिति च गुणसम्बन्धे षष्ठी, पटस्य शौक्ल्यमितिवद् । गुणवाचिन एव च प्रत्ययः, सर्वेषां पटानां द्रव्यान्तराधारो यः श्वेतगुणस्तदपेक्षया सातिशयः श्वेतो गुण इत्यर्थः ।

*गुणात्तरेणेति* । गुणाद्यस्तरप्प्रत्ययस्तदन्तेनेत्यर्थः । वचनमेवेदम्, तेन 'पूरणगुण' इति प्रतिषेधं बाधित्वा समासश्च भवति, तरब्लोपश्च ॥

*संज्ञायां गिरिनिकाययोः* ॥ *अञ्जनागिरिरिति* । 'वनगिर्योः संज्ञायाम्' इति दीर्घत्वम् ॥

*कुमार्यां वयसि* ॥ *वृद्धकुमारीति* । विशेषणसमासः । *जरत्कुमारीति* । जरती-

### न्यासः

कृते सर्वश्वेततरमिति वक्तव्यम् ? इत्यत आह– गुणात् तरेण समास इत्यादि । औपसंख्यानिकाविह समासतरलोपाविति दर्शयति । समासस्वरापवादो योगः । एवमुत्तरेऽपि योगाः । 'न हास्तिनफलकमार्देयाः' इत्यतः प्राक् समासस्वरापवादो वेदितव्यः ॥

संज्ञायां गिरिनिकाययोः ॥ अञ्जनागिरिरित्येवमादयः षष्ठीसमासाः । अञ्जनभञ्जनशब्दयोः 'वनगिर्योः संज्ञायाम्' इति दीर्घत्वम् । शापिण्डिमौण्डिशब्दाविञन्तौ । चिखिल्लिशब्दो मत्वर्थीयेनिप्रत्ययान्तः ॥

---

1. क्वचिदन्त्यमुदाहरणद्वयं नास्ति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



कुमारीशब्दः पुंसा सहासम्प्रयोगमात्रं प्रवृत्तिनिमित्तमुपादाय प्रयुक्तो वृद्धादिभिर्वयोविशेषवचनैः समानाधिकरणो भवति । तच्च वय इह गृह्यते, न कुमारत्वमेव ।

वयसीति किम् ? परमकुमारी ।।

पदमञ्जरी

शब्दस्य 'पूर्वकालैक' इत्यनेन, अत्रोभयत्र 'पुंवत्कर्मधारय' इत्यादिना पुंवद्भावः ।

ननु च कुमारीशब्दः प्रथमे वयसि वर्तते, तथा च 'वयसि प्रथमे' इति ङीबत्र विहितः, तस्य कथं चरमवयोवाचिभ्यां वृद्धाजरतीशब्दाभ्यां सामानाधिकरण्यम् ? अत आह—*कुमारीशब्द इत्यादि* । कुमार्यां हि द्वयं दृष्टम्—प्रथमं वयः, पुंसा सहासम्प्रयोगश्च; तत्र प्रथमार्थप्रहाणेन द्वितीयमर्थमसम्प्रयोगमात्रमुपाददानस्य सम्भवति सामानधिकरण्यमित्यर्थः । *तच्चेति* । वृद्धादिशब्दान्तराभिधेयमित्यर्थः । *कुमारत्वमेवेति* । यदेतत्कुमारीशब्दस्य प्रवृत्तिनिमित्तं न तद्वयो गृह्यत इत्यर्थः । एतच्च वयोग्रहणसामर्थ्याल्लभ्यते; अन्यथा कुमारीशब्दप्रयोगे नियमतः प्रथमवयो गम्यते इत्यनर्थकं तत्स्यात् ।

*परमकुमारीत्यत्र* कुमारत्वमेव प्रतीयते, न वयोऽन्तरमिति भवति प्रत्युदाहरणम् ।।

न्यासः

कुमार्यां वयसि ।। वृद्धकुमारीति । 'विशेषणं विशेष्येण' इति समासः । जरत्कुमारीति । जरती चासौ कुमारी चेति 'पूर्वकाल' इत्यादिना समासः । उभयत्र 'पुंवत् कर्मधारय' इत्यादिना पुंवद्भावः ।

ननु च कुमारीशब्दः प्रथमे वयसि वर्तते, तथा हि 'वयसि प्रथमे' इति ङीबत्र विहितः, वृद्धाजरतीशब्दौ चरमे वयसि वर्तेते, तत्कथमिह सामानाधिकरण्यम् ? इत्यत आह—कुमारीशब्दः पुंसा सहासम्प्रयोगमात्रंप्रवृत्तिनिमित्तमुपादाय प्रयुक्त इति । असम्प्रयोगः = असम्बन्धः । तन्मात्रप्रवृत्तिनिवृत्तिसमुदायावयवः सामान्ये प्रवृत्तः । कुमारीशब्दो यथा वृद्धादिभिर्वयोविशेषवचनैर्विशेष्यते तदा तैः समानाधिकरणो भवति । वयोविशेषोऽन्यं वयः । कथं पुनर्विशेषवचनं सामान्ये वर्तते ? वयोग्रहणसामर्थ्यात् । यदि वृद्धकुमारीशब्दः प्रथमे वयसि वर्तते वयोग्रहणमनर्थकं स्यात् । यत्र कुमारीशब्दः प्रयुज्यते प्रथमवयोवाची, तत्र नियोगतो वयो गम्यत एवेति किं वयोग्रहणेन ! तस्माद् वयोग्रहणसामर्थ्याद् यथोक्तेन प्रकारेण वयःसामान्ये प्रवर्तते । वयोग्रहणेन हि तस्माद् विशेषादपनीयासौ सामान्यवृत्तिराश्रीयते । तच्च वय इह गृह्यत इति । यत्र वर्तमानो विशेषवचनैः सह समानाधिकरणो भवति, तच्च वयो गृह्यते । चशब्दादन्यच्च यौवनाधीनकुमारत्वमेवेति, न प्रथमवय इत्यर्थः ।

परमकुमारीति । अत्र समासात् पूज्यमानता; पूज्यमानत्वं तु दर्शनीयत्वात् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## उदकेऽकेवले ॥ ९६ ॥

अकेवलम् = मिश्रम्, तद्वाचिनि समासे उदकशब्द उत्तरपदे पूर्वपदमन्तोदात्तं भवति । गुडमिश्रमुदकम् गुडोदकम्[1]। तिलोदकम् ।

स्वरे कृते एकादेशः 'स्वरितो वानुदात्तेऽपदादौ' इति पक्षे स्वरितो भवति ।

अकेवल इति किम् ? शीतोदकम् । उष्णोदकम् ॥

## द्विगौ क्रतौ ॥ ९७ ॥

द्विगावुत्तरपदे क्रतुवाचिनि समासे पूर्वपदमन्तोदात्तं भवति । गर्गत्रिरात्रः । चरकत्रिरात्रः । कुसुरविन्दसप्तरात्रः । गर्गाणां त्रिरात्रः गर्गत्रिरात्रः ।

द्विगाविति किम् ? अतिरात्रः । अचश्चित्त्वादन्तोदात्तः । क्रता-

### पदमञ्जरी

उदकेऽकेवले ॥ असन्देहार्थम् 'केवल उदके' इत्यवचनाद् 'अकेवले' इति पदच्छेदः । मिश्रम् = द्रव्यान्तरसंयुक्तम् ॥

*द्विगौ क्रतौ* ॥ गर्गत्रिरात्रादयः षष्ठीसमासाः । तिसृणां रात्रीणां समाहारस्त्रिरात्रः, 'अहःसर्व' इत्यादिनाच् समासान्तः । *अतिरात्र इति* । रात्रिमतिक्रान्त इति प्रादिसमासः ॥

### न्यासः

दर्शनीया कन्येत्यर्थः । न ह्यत्र समासो वयोऽभिधानपरः । नाप्युत्तरपदं वयःसामान्ये वर्तते ॥

उदकेऽकेवले ॥ मिश्रमिति । द्रव्यान्तरसम्पृक्तमित्यर्थः । गुडमिश्रमिति । शाकपार्थिवादित्वादुत्तरपदलोपिसमासः ।

शीतोदकमिति । विशेषणसमासः । पूर्वपदमत्र गुणोपसर्जनमुदकं ब्रूते । उत्तरपदमपि जात्युपसर्जनम् । तथैव तेनैकमेव वस्तु जातिगुणाभ्यामुच्यत इति केवलोदकवाचिसमासः ॥

द्विगौ क्रतौ ॥ गर्गत्रिरात्रादयः षष्ठी समासाः । तिसृणां रात्रीणां समाहारस्त्रिरात्रः । 'अहःसर्वैकदेश' इत्यादिनाच् समासान्तः । अतिरात्र इति । रात्रिमतिक्रान्त इति प्रादिसमासः ॥

---

१. क्वचिदिदमुदाहरणं नोपलभ्यते ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


विति किम् ? बिल्वसप्तरात्रः । बिल्वशतस्य बिल्वहोमस्य वा सप्तरात्रो बिल्वसप्तरात्रः ॥

## सभायां नपुंसके ॥ ९८ ॥

सभाशब्द उत्तरपदे नपुंसकलिङ्गे समासे पूर्वपदमन्तोदात्तं भवति । गोपालसभम् । पशुपालसभम् । स्त्रीसभम् । दासीसभम् ।

सभायामिति किम् ? ब्राह्मणसेनम् ।

नपुंसकमिति किम् ? राजसभा । ब्राह्मणसभा ।

सभायां प्रतिपदोक्तमिह नपुंसकलिङ्गं गृह्यत इति रमणीयसभम्, ब्राह्मणकुलमित्यत्र न भवति ॥

## पुरे प्राचाम् ॥ ९९ ॥

पुरशब्द उत्तरपदे प्राचां देशे पूर्वपदमन्तोदात्तं भवति । ललाटपुरम् । काञ्चीपुरम् । शिवदत्तपुरम् । कार्णिपुरम् । नामंपुरम् ।

प्राचामिति किम् ? शिवपुरम् ॥

## अरिष्टगौडपूर्वे च ॥ १०० ॥

### पदमञ्जरी

*सभायां नपुंसके* ॥ गोपालसभादौ 'अशाला च' इति नपुंसकत्वम् ।

*रमणीयसभमिति* । अत्राभिधेयवशान्नपुंसकत्वम् , न प्रतिपदोक्तम् ॥

### न्यासः

सभायां नपुंसके ॥ गोपालसभमित्येवमादयोऽपि षष्ठीसमासाः 'सभाऽराजामनुष्यपूर्वा' इति नपुंसकत्वम् । राजसभा, ब्राह्मणसभेत्यत्र 'अमनुष्यपूर्वा' इति प्रतिषेधान्नपुंसकता न भवति ।

अथेह कस्मान्न भवति—रमणीया सभाऽस्य ब्राह्मणकुलस्य रमणीयसभम् ? इत्यत आह—प्रतिपदोक्तमित्यादि । लक्षणप्रतिपदोक्तपरिभाषया यत् प्रतिपदोक्तं नपुंसकं तदिह गृह्यते । न चेह तथाविधं नपुंसकत्वम् । अत्र त्वभिधेयवल्लिङ्गवचनानि भवन्तीति ब्राह्मणकुलस्याभिधेयस्य नपुंसकत्वात् । न तत् प्रतिपदोक्तम् ॥

पुरे प्राचाम् ॥ ललाटपुरमित्येवमादयः षष्ठीसमासाः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अरिष्ट, गौड – इत्येवम्पूर्वे समासे पुरशब्द उत्तरपदे पूर्वपदमन्तोदात्तं भवति । अरिष्टपुरम् । गौडपुरम् ।

पूर्वग्रहणं किम् ? इहापि यथा स्यात् – अरिष्टश्रितपुरम्, गौडभृत्यपुरम् ॥

**न हास्तिनफलकमार्देयाः ॥ १०१ ॥**

हास्तिन, फलक, मार्देय – इत्येतानि पूर्वपदानि पुरशब्द उत्तरपदे नान्तोदात्तानि भवन्ति । 'पुरे प्राचाम्' इति प्राप्तिः प्रतिषिध्यते । हास्तिनपुरम् । फलकपुरम् । मार्देयपुरम् । मृदोरपत्यं मार्देयः । शुभ्रादित्वाद् ढक् ॥

**कुसूलकूपकुम्भशालं बिले ॥ १०२ ॥**

कुसूल, कूप, कुम्भ, शाला – इत्येतानि पूर्वपदानि बिलशब्दे

**पदमञ्जरी**

*अरिष्टगौडपूर्वे च* ॥ *पूर्वग्रहणं किमिति* । 'अरिष्टगौडयोरिति वक्तव्यम्' इति प्रश्नः । *इहापि यथा स्यादिति* । पूर्वग्रहणे हि सति बहुव्रीहिर्लभ्यते—अरिष्टगौडौ पूर्वौ यस्मिन्समास इति । तेनारिष्टाश्रितपुरम्, गौडभृत्यपुरमित्यत्रापि पूर्वपदमन्तोदात्तं भवति । असति तु पूर्वग्रहणे श्रित-भृत्यशब्दाभ्यां व्यवहितत्वादपूर्वपदत्वादरिष्टगौडयोस्तावन्न स्यात् ; समुदाययोश्च सूत्रेऽनुपात्तत्वात् ॥

*न हास्तिनफलकमार्देयाः* ॥ *मार्देय इति* । 'ढेलोपोऽकद्र्वाः' इत्युकारलोपः ॥

**न्यासः**

अरिष्टगौडपूर्वे च ॥ अरिष्टपुरम्, गौडपुरमिति । एतावपि षष्ठीसमासावेव । पूर्वग्रहणं किमिति ? एवं मन्यते – अरिष्टगौडादयोरिति वक्तव्यम्, एवमप्युच्यमानेऽरिष्टगौडादयोः पुरशब्द उत्तरपदेऽन्तोदात्तत्वं सिध्यत्येवेति । इहापि यथा स्यादिति । यदि पूर्वग्रहणं न क्रियेत, तदारिष्टं श्रितस्तस्य पुरमरिष्टश्रितपुरमिति । गौडानां भृत्या गौडभृत्याः, तेषां पुरं गौडभृत्यपुरमित्यत्र न स्यात् । अत्र पूर्वपदमरिष्टश्रितशब्दो गौडभृत्यशब्दश्च, न त्वरिष्टगौडशब्दौ । पूर्वग्रहणे तु सति बहुव्रीहिर्लभ्यते—अरिष्टगौडादी पूर्वौ यस्मिन् समासे सोऽरिष्टगौडपूर्व इति । तेनारिष्टश्रितपुरम्, गौडभृत्यपुरमित्यत्रापि यदुत्तरपदं तस्याप्यन्तोदात्तत्वं भवत्येव । अत्रापि ह्यरिष्टशब्दो गौडशब्दश्च पूर्वः । पूर्वश्चायमवयववचनः ॥

न हास्तिनफलकमार्देयाः ॥ कुसूलकूपकुम्भशालं बिले ॥ कुसूलबिलमित्येव-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


उत्तरपदेऽन्तोदात्तानि भवन्ति । कुसूलबिलम् । कूपबिलम् । कुम्भबिलम् । शालाबिलम् ।

कुसूलादिग्रहणं किम् ? सर्पबिलम् । बिल इति किम् ? कुसूलस्वामी ॥

**दिक्शब्दा ग्रामजनपदाख्यानचानराटेषु ॥ १०३ ॥**

दिक्शब्दाः पूर्वपदानि अन्तोदात्तानि भवन्ति ग्रामजनपदाख्यानवाचिषूत्तरपदेषु, चानराटशब्दे च । पूर्वेषुकामशमी । अपरेषुकामशमी । पूर्वकृष्णमृत्तिका । अपरकृष्णमृत्तिका । जनपद[1]—पूर्वपञ्चालाः । अपरपञ्चालाः । आख्यान—पूर्वाधिरामम् । पूर्वयायातम् । अपरयायातम् । अधिराममधिकृत्य कृतो ग्रन्थ आधिरामम् । तथा यायातम् । चानराट—पूर्वचानराटम् । अपरचानराटम् ।

शब्दग्रहणं कालवाचिनोऽपि दिक्शब्दस्य परिग्रहार्थम् ॥

पदमञ्जरी

*दिक्शब्दा ग्रामजनपदाख्यानचानराटेषु* ॥ चानराटे स्वरूपग्रहणम्, इतरेषु अर्थग्रहणम् । *पूर्वेषुकामशमीति* । 'दिक्संख्ये संज्ञायाम्' इति समासः । *पूर्वपञ्चाला इति* । 'समुदाये हि वृत्ताः शब्दा अवयवेष्वपि वर्तन्ते' इति पञ्चालैकदेशे पञ्चालशब्दः, ततः 'पूर्वापरप्रथम' इत्यादिना कर्मधारयः । *शब्दग्रहण-*

न्यासः

*मादयः* षष्ठीसमासाः । समासस्वरापवादो योगः । एवमुत्तरेऽपि 'बहुव्रीहौ विश्वं संज्ञायाम्' इत्यतः प्राग्योगाः समासस्वरापवादा वेदितव्याः ॥

दिक्शब्दा ग्रामजनपदाख्यानचानराटेषु ॥ पूर्वेषुकामशमीति । 'दिक्संख्ये संज्ञायाम्' इति समासः । एवमपरेषुकामशमीत्यत्रापि । पूर्वकृष्णमृत्तिकेति । पूर्वा चासौ कृष्णमृत्तिका चेति 'पूर्वापर' इत्यादिना समासः । एवमपरकृष्णमृत्तिकेत्येवमादावपि । अधिराममधिकृत्य कृतो ग्रन्थ आधिरामम् 'अधिकृत्य कृते ग्रन्थे' इत्यण् । अथ यथा—चानराटे रूपग्रहणं तथा ग्रामादिष्वपि कस्मान्न भवति ? अर्थप्रधानत्वात् निर्देशस्य । शब्दप्रधाने हि निर्देशस्य स्वरूपग्रहणं भवतीत्युक्तम् । इह चानराट एव शब्दप्रधानो निर्देशः, ग्रामादिष्वर्थप्रधान एव ।

अथ शब्दग्रहणं किमर्थम्, न दिगित्येवोच्येत ? इत्यत आह—शब्दग्रहणमित्यादि ।

---

१. 'जनपदादिषु' इति पाठान्तरमसङ्गतम् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## आचार्योपसर्जनश्चान्तेवासिनि ॥ १०४ ॥

आचार्योपसर्जनान्तेवासिवाचिन्युत्तरपदे दिक्शब्दा अन्तोदात्ता भवन्ति । पूर्वपाणिनीयाः । अपरपाणिनीयाः । पूर्वकाशकृत्स्नाः । अपरकाशकृत्स्नाः ।

आचार्योपसर्जन इति किम् ? पूर्वशिष्याः । अन्तेवासिनीति किम् ? पूर्वपाणिनीयं शास्त्रम् ॥

पदमञ्जरी

*मित्यादि* । दिशि दृष्टः शब्दो दिक्शब्द इत्युत्तरपदलोपी समासः, तेन कालवाचिनोऽपि ग्रहणात् पूर्वयायातमित्यादावपि भवति ॥

*आचार्योपसर्जनश्चान्तेवासिनि* ॥ आचार्योपसर्जनग्रहणमन्तेवासिनो विशेषणम्, सप्तम्यर्थे प्रथमा । *आचार्योपसर्जनान्तेवासिवाचिनीति* । आचार्य उपसर्जनं यस्य स आचार्योपसर्जनः, स चासावन्तेवासी च आचार्योपसर्जनान्तेवासी; तद्वाचिनि । *पूर्वपाणिनीया इति* । पूर्ववत्समासः, पाणिनेश्छात्राः पाणिनीयाः, अत्रान्तेवासिनः प्रधानम्, आचार्यस्तूपसर्जनम् । काशकृत्स्निशब्दात् 'अतश्च' इत्यण् ।

*पूर्वपाणिनीयं शास्त्रमिति* । पाणिनीयं शास्त्रं पूर्वम्, चिरन्तनमित्यर्थः ।

न्यासः

असति हि शब्दग्रहणे पूर्वाविरामम्, पूर्वयायातमित्यत्र न स्यात् । कस्मात् ? इह कालवाची पूर्वशब्दः । दिग्वाचिशब्दग्रहणे सति दिक्शब्दमात्रग्रहणं भवति । तस्मात् कालवाचिनोऽपि दिक्शब्दस्य परिग्रहो यथा स्यादित्येवमर्थं शब्दग्रहणम् ॥

आचार्योपसर्जनश्चान्तेवासिनि ॥ आचार्योपसर्जनश्चेति । सुपां सुर्भवतीति सप्तम्येकवचनस्य स्थाने प्रथमैकवचनम्, एतच्चान्तेवासिविशेषणम् । आचार्योपसर्जनान्तेवासिवाचिन्युत्तरपद इति । आचार्य उपसर्जनम् = अप्रधानं यस्यान्तेवासिनः स तथोक्तः । आचार्योपसर्जनश्चासावन्तेवासी चाचार्योपसर्जनान्तेवासी, तं वक्तुं शीलं यस्योत्तरपदस्य तदाचार्योपसर्जनान्तेवासिवाचि । पूर्वपाणिनीया इति । 'पूर्वापरं' इत्यादिना समासः । पाणिनेराचार्यस्यान्तेवासिनः पाणिनीयाः, अत्रान्तेवासिनः प्राधान्येनोच्यन्ते प्रत्ययान्तेन; आचार्यस्तु तद्विशेषणत्वादुपसर्जनभावेनेत्याचार्योपसर्जनान्तेवासिवाच्युत्तरपदं भवति । पूर्वकाशकृत्स्ना इति । काशकृत्स्नस्येमे काशकृत्स्नाः, औत्सर्गिकोऽण् ।

पूर्वपाणिनीयं शास्त्रमिति । पाणिनिना प्रोक्तं पाणिनीयम्, अत्राचार्योपसर्जनशास्त्रवाच्युत्तरपदम्, न त्वाचार्योपसर्जनान्तेवासिवाचि ॥



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## उत्तरपदवृद्धौ सर्वं च ॥ १०५ ॥

'उत्तरपदस्य' इत्येवमधिकृत्य या विहिता वृद्धिस्तद्वत्युत्तरपदे सर्वंशब्दो दिक्शब्दाश्चान्तोदात्ता भवन्ति । सर्वपाञ्चालकः । पूर्वपाञ्चालकः । उत्तरपाञ्चालकः ।

सुसर्वार्धदिक्शब्देभ्यः 'जनपदस्य' इति तदन्तविधिना जनपदलक्षणो वुञ्प्रत्ययः । 'सुसर्वार्धाज्जनपदस्य', 'दिशोऽमद्राणाम्' इति चोत्तरपदवृद्धिः ।

अधिकारलक्षणादिह न भवति — सर्वमासः, सर्वकारक इति ॥

पदमञ्जरी

उत्तरपदवृद्धौ सर्वं च ॥ 'वृद्धौ' इत्येतावतैव तद्वदुत्तरपदपरिग्रहे सिद्धे उत्तरपदग्रहणात्तदधिकारो लक्ष्यते ॥

न्यासः

उत्तरपदवृद्धौ सर्वञ्च ॥ उत्तरपदवृद्धाविति । उत्तरपदाधिकारविहिता वृद्धिरुत्तरपदवृद्धिः, इह तु तद्वदुत्तरपदं गृह्यते । तमेवार्थं दर्शयितुमाह – उत्तरपदस्येत्येवमित्यादि । कथं पुनरुत्तरपदवृद्धावित्युच्यमान एषोऽर्थः शक्यते विज्ञातुम् ? तदुच्यते; उत्तरपदं स्वर्यते, स्वरितेनाधिकारो लक्ष्यते, तेनोत्तरपदस्येत्यधिकृत्य या विहिता वृद्धिस्तस्यास्तावद् ग्रहणं विज्ञायते । पूर्वपदस्येदमन्तोदात्तत्वं विधीयते । पूर्वपदञ्च सम्बन्धिशब्दत्वादुत्तरपदमुपस्थापयति । न च वृद्धिमात्र उत्तरपदमुपपद्यत इति सामर्थ्याद् वृद्धिशब्दसाहचर्यादुत्तरपदं वृद्धिमुपलक्षयति । तेनोत्तरपदाधिकारे वृद्धिमत्युत्तरपद एष स्वरो भवतीति विज्ञायते । सर्वपाञ्चालक इति । 'पूर्वकालैक' इत्यादिना समासः । पूर्वपाञ्चालक इत्यादौ 'पूर्वापर' इत्यादिना ।

जनपदलक्षणो वुञ्प्रत्यय इति । 'धन्वयोपधाद् वुञ्' इत्यनुवर्तमाने 'जनपदतदवध्योश्च' इत्यतो जनपदग्रहणे च 'अवृद्धादपि बहुवचनविषयात्' इत्यनेन वुञ् ।

सुसर्वार्धादित्यादि । सर्वपाञ्चालक इति 'सुसर्वार्धाज्जनपदस्य' इत्युत्तरपदवृद्धिः । पूर्वपाञ्चालक इत्यादौ तु 'दिशोऽमद्राणाम्' इति । एषा चोत्तरपदाधिकारविहिता, तत्र चोत्तरपदस्येत्यनुवृत्तेः ।

किं पुनः कारणमुत्तरपदाधिकार उत्तरपदग्रहणेन लक्ष्यत इत्येवं विज्ञायते ? इत्याह— अधिकारलक्षणादित्यादि । यद्युत्तरपदग्रहणेनोत्तरपदाधिकारो लक्ष्येत, तदा वृद्धिमात्रवत्युत्तरपदे वैतद् वुञो ह्युदात्तत्वं भवतीत्युक्तं स्यात् । तथा च सर्वभासः, सर्वकारक इत्यत्रापि स्यात् । अधिकारलक्षणे तु न भवति, न ह्युत्तरपदाधिकारविहिता वृद्धिः । 'भासृ दीप्तौ', भासत इति भासः, पचाद्यच् । करोतीति कारकः, ण्वुल्, 'अचो ञ्णिति' इति वृद्धिः, सा चोत्तरपदाधिकारविहिता न भवति ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## बहुव्रीहौ विश्वं संज्ञायाम् ॥ १०६ ॥

बहुव्रीहौ समासे विश्वशब्दः पूर्वपदं संज्ञायां विषयेऽन्तोदात्तं भवति । विश्वदेवः । विश्वयशाः । विश्वमहान् । पूर्वपदप्रकृतिस्वरत्वेनाद्युदात्तत्वं प्राप्तम् ।

बहुव्रीहाविति किम् ? विश्वे च ते देवाः विश्वदेवाः । संज्ञायामिति किम् ? विश्वे देवा अस्य विश्वदेवः । विश्वामित्रः, विश्वाजिन इत्यत्र 'संज्ञायां मित्राजिनयोः' इत्येतद्भवति परत्वात् ।

'बहुव्रीहौ' इत्येतदधिक्रियते प्रागव्ययीभावसंज्ञानात् ॥

## उदराश्वेषुषु ॥ १०७ ॥

उदर, अश्व, इषु – इत्येतेषूत्तरपदेषु बहुव्रीहौ समासे संज्ञायां विषये पूर्वपदमन्तोदात्तं भवति । वृकोदरः । दामोदरः । हर्यश्वः ।

### पदमञ्जरी

*बहुव्रीहौ विश्वं संज्ञायाम्* ॥ विशेः क्वनि विश्वशब्द आद्युदात्तः । *विश्वामित्र इत्यादि* । अस्यावकाशः—विश्वदेवः, विश्वयशाः, 'संज्ञायां मित्राजिनयोः' इत्यस्यावकाशः—कुलमित्रः, कुलाजिनः; विश्वामित्रः, विश्वाजिन इत्यत्रोभयप्रसङ्गे 'संज्ञायां मित्राजिनयोः' इत्येतद्भवति विप्रतिषेधेन ॥

*उदराश्वेषुषु*[1] ॥ अयमपि पूर्वपदप्रकृतिस्वरस्यापवादः । वृकशब्दः 'प्राणिनां च कुपूर्वाणाम्' इत्याद्युदात्तः, वृकस्येवोदरं यस्य वृकोदरः । दाम उदरे यस्य *दामोदरः*, दामशब्दो मनिन्प्रत्ययान्तः । हरतेः 'सर्वधातुभ्य इन्' इतीन्,

### न्यासः

बहुव्रीहौ विश्वं संज्ञायाम् ॥ पूर्वपदप्रकृतिस्वरत्वेनाद्युदात्तत्वं प्राप्तमिति । 'बहुव्रीहौ प्रकृत्या' इत्यादिना विश्वे च ते देवा विश्वदेवा इति विशेषणसमासः, तत्पुरुषोऽयम् । अत्र समासान्तोदात्तत्वमेव भवति । विश्वदेव इति । अत्र पूर्वपदप्रकृतिस्वरत्वेनाद्युदात्तत्वमेव भवति । विश्वशब्दस्य क्वन्प्रत्ययान्तस्य नित्स्वरेणाद्युदात्तत्वम् ।

विश्वामित्र इति । 'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदान्तोदात्तस्यावकाशः—विश्वदेवः, विश्वयशा इति । 'संज्ञायां मित्राजिनयोः' इत्युत्तरपदान्तोदात्तत्वस्यावकाशः—कुलमित्रम्, कुलाजिनमिति; विश्वामित्रः, विश्वाजिन इत्यत्रोभयं प्राप्नोति, 'संज्ञायां मित्राजिनयोः' इत्येतत्तु भवति विप्रतिषेधेन ॥

---

१. 'उत्तरपदवृद्धौ सर्वं च'–इति मुद्रितपाठोऽपपाठः ( प्र० सं० स० )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



यौवनाश्वः । सुवर्णपुङ्खेषुः । महेषुः ॥

## क्षेपे ॥ १०८ ॥

क्षेपे गम्यमाने उदरादिषूत्तरपदेषु बहुव्रीहौ समासे संज्ञायां विषये पूर्वपदमन्तोदात्तं भवति । कुण्डोदरः । घटोदरः । कटुकाश्वः । स्पन्दिता-

पदमञ्जरी

हरिदश्वो यस्य हर्यश्वः । यौवनशब्दोऽव्युत्पन्नं प्रातिपदिकम्, 'लघावन्ते द्वयोश्च बह्वषो गुरुः' इत्याद्युदात्तः । यूनो भावो यौवनमिति युवाद्यणन्तत्वे प्रत्ययस्वरेणान्तोदात्तत्वात् पूर्वपदप्रकृतिस्वरेणैव सिद्धम् । *सुवर्णपुङ्खेषुरिति* । शोभनो वर्णो येषां ते सुवर्णाः, 'नञ्सुभ्याम्' इत्यन्तोदात्तत्वम्, सुवर्णाः पुङ्खा येषां ते सुवर्णपुङ्खाः, पूर्वपदप्रकृतिस्वरेण मध्योदात्तत्वम्, पुनरिषुशब्देन बहुव्रीहिः । *महेषुरिति* । महच्छब्दोऽन्तोदात्त इति 'महान्व्रीह्यपराह्ण' इत्यत्रोक्तम् । तस्मात्तत्पूर्वपदप्रकृतिस्वरेणैव सिद्धे सति तस्यान्यार्थ आरम्भः, अपवादत्वादनेनैवान्तोदात्तत्वं युक्तमित्यस्योपन्यासः ॥

क्षेपे ॥ कुण्डशब्दः 'नब्विषयस्यानिसन्तस्य' इत्याद्युदात्तः । घटशब्दः पचाद्यजन्तः । महेषुवदस्योपन्यासः । कटुशब्दात्संज्ञायां कन् । स्पन्दितशब्दो

न्यासः

उदराश्वेषुषु ॥ वृकस्येवोदरमस्य वृकोदरः । दाम उदरे यस्येति दामोदरः । हरिरश्वो यस्येति हर्यश्वः । यौवनमेवाश्वो यस्य स यौवनाश्वः । शोभनो वर्णो येषां ते सुवर्णाः, सुवर्णाः पुङ्खा येषामिषूणां ते सुवर्णपुङ्खाः, सुवर्णपुङ्खा इषवो यस्य स सुवर्णपुङ्खेषुः । महान्त इषवो यस्य स महेषुः । 'आन्महतः' इत्यात्त्वम् । अत्र पूर्वपदानाम् 'बहुव्रीहौ प्रकृत्या' इति प्रकृतिभावः । यत्र स्वरे प्राप्तेऽयं विधिरारब्धः स आख्यायते । 'कृदाधारार्चिकलिभ्यः कः' इत्यतः 'कः' इत्यनुवर्तमाने 'अविवृरीभ्यो नित्' इत्यतो निद्ग्रहणे 'सवृभूशुषिमुषिभ्यः कक्' इति कक्प्रत्ययान्तो वृकशब्दो व्युत्पाद्यते, तेनायमाद्युदात्तः । एवं दामन्शब्दोऽपि; मनिन्प्रत्ययान्तत्वात् । हृञित्येतस्मात् 'सर्वधातुभ्य इन्' इति हरिशब्द आद्युदात्तः ॥

क्षेपे ॥ कुण्डोदर इति । शकिशम्योर्नित्' इति वर्तमाने 'कादिभ्यः कित्' इत्यतः किद्ग्रहणे च 'कुडि दाहे' इत्येतस्मात् 'अमन्ताड्डः' इति डप्रत्यये कुण्डमाद्युदात्तम् । घटोदर इति । घटशब्दोऽयम् 'घट चेष्टायाम्' इत्यस्य पचाद्यचि व्युत्पादित्वादन्तोदात्तः । तस्मात् पूर्वपदप्रकृतिस्वरेणैव सिद्धे सति त्वस्यान्यार्थं आरम्भेऽपवादत्वाद् पचाद्यजन्तादनेनैवान्तोदात्तत्वं युक्तमिति मन्यमानो वृत्तिकार एतदप्युदाहरति । कटुकाश्व इति । कटुकोऽश्वो यस्य स कटुकाश्व । कटुशब्दात् 'संज्ञायां कन्' इति कन्, तेन कटुक-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



श्व: । अनिघातेषुः । चलाचलेषुः ।

अनुदरः, सूदर इत्यत्र 'नञ्सुभ्याम्' इत्येतद्भवति विप्रतिषेधेन ॥

नदी बन्धुनि ॥ १०९ ॥

बहुव्रीहौ समासे बन्धुन्युत्तरपदे नद्यन्तं पूर्वपदमन्तोदात्तं भवति । गार्गीबन्धुः । वात्सीबन्धुः ।

नदीति किम् ? ब्रह्मबन्धुः । ब्रह्मशब्द आद्युदात्तः । बन्धुनीति किम् ? गार्गीप्रियः[1] ॥

पदमञ्जरी

निष्ठान्तः । निहन्यतेऽनेनेति निघातः, ततोऽन्योऽनिघातः, अतोऽव्ययपूर्वपद-प्रकृतिस्वरत्वम्, 'चरिचलिपतिवदीनां वा द्वित्वमच्याक्चाभ्यासस्य'—चलाचलः ।

अनुदर इत्यादि । अस्यावकाशः—कुण्डोदर इत्यादि, 'नञ्सुभ्याम्' इत्य-स्यावकाशः—अयशाः, सुयशाः; एवं स्थिते विप्रतिषेधः ॥

नदी बन्धुनि ॥ 'बन्धुनि' इति शब्दरूपापेक्षया नपुंसकनिर्देशः, गर्गवत्स-

न्यासः

शब्द आद्युदात्तः । स्पन्दितोऽश्वोऽस्य स्पन्दिताश्वः । 'स्पदि किञ्चिच्चलने' इत्यस्मात् क्तः । तेन स्पन्दितशब्दः प्रत्ययस्वरेणान्तोदात्तः । अनिघात इषुरस्येति अनिघातेषुः । निहन्यतेऽनेनेति निघातः, 'हलश्च' इति घञ्, न निघातोऽनिघातः 'तत्पुरुषे तुल्यार्थ' इत्यादिनाऽव्ययप्रकृतिभावादनिघातशब्द आद्युदात्तः । चलाचल इषुरस्य चलाचलेषुः । 'चल कम्पने', तस्य पचाद्यचि 'चरिचलिपतिवदीनां वा द्वित्वमच्याक्चाभ्यासस्य' इति द्विर्वचनम्, अभ्यासस्याऽऽगागमश्च । एतेन चलाचलशब्दोऽन्तोदात्तः ।

अनुदर इत्यादि । 'उदराश्वेषुषु', 'क्षेपे' इत्यस्यावकाशः—कुण्डोदरः, घटोदर इति, 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तस्यावकाशः—अयवः, सुयव इति; इहोभयं प्राप्नोति—अनुदरः, सुदर इति । 'नञ्सुभ्याम्' इत्येतद् भवति विप्रतिषेधेन ॥

नदी बन्धुनि ॥ बन्धुनीति शब्दरूपापेक्षया नपुंसकलिङ्गनिर्देशः; अन्यथा बन्धु-शब्दस्य पुंल्लिङ्गत्वाद् 'बन्धौ' इति निर्देशं कुर्यात् । गार्गीबन्धुः, वात्सीबन्धुरिति । गर्गवत्सशब्दाभ्यां गर्गादित्वात् यञ्, तदन्ताद् 'यञश्च' इति ङीप् । गार्गीवात्सीशब्दौ ञित्स्वरेणाद्युदात्तौ ।

ब्रह्मबन्धुरिति । अत्र प्रकृतिभाव एव भवति पूर्वपदस्य । ब्रह्मशब्दश्चायम् 'मनिन्' इत्यनुवर्तमाने 'बृंहेर्नोऽच्च' इति मनिन्प्रत्ययान्तो व्युत्पाद्यते, तेनाद्युदात्तः । गार्गीप्रिय

---

१. 'देवप्रियः' इत्यधिकं क्वचित् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## निष्ठोपसर्गपूर्वमन्यतरस्याम् ॥ ११० ॥

बहुव्रीहौ समासे निष्ठान्तमुपसर्गपूर्वं पूर्वपदमन्यतरस्यामन्तोदात्तं भवति । प्रधौतमुखः । प्रक्षालितपादः ।

यदि मुखशब्दः स्वाङ्गवाची, तदा पक्षे 'मुखं स्वाङ्गम्' इत्येतद्भवति, न चेत्पूर्वपदप्रकृतिस्वरत्वेन 'गतिरन्तरः' इत्येतद्भवति ।

पदमञ्जरी

शब्दाभ्यां गर्गादियञन्तभ्याम् 'यञश्च' इति ङीप्, गार्गीवात्सीशब्दौ ञित्स्वरेणाद्युदात्तौ । ब्रह्मशब्दो बृहेर्मनिन्प्रत्यये निपातितः[1] ॥

*निष्ठोपसर्गपूर्वमन्यतरस्याम्* ॥ *प्रक्षालितपाद इति* । 'क्षल शौचकर्मणि' चुरादिः, 'धावु गतिशुद्धयोः', 'च्छ्वोः शूठ्' इत्यूठ्, 'एत्येधत्यूठ्सु' इति वृद्धिः, प्रक्षालितप्रधौतशब्दौ गतिस्वरेणाद्युदात्तौ ।

*मुखं स्वाङ्गमित्येतद्भवतीति* । विकल्पितमुत्तरपदान्तोदात्तत्वम्, तेन स्वाङ्गवाचिनि मुखशब्दे स्वरत्रयं भवति—अनेन पूर्वपदान्तोदात्तत्वम्, 'मुखं स्वाङ्गम्' इत्येतत्, उभाभ्यां मुक्ते पूर्वपदप्रकृतिभावेन 'गतिरनन्तरः' इत्याद्युदात्तत्वं च । *न चेदिति* । स्वाङ्गवाचीति सम्बध्यते, यदि मुखशब्दः स्वाङ्गवाची न भवतीत्यर्थः ।

न्यासः

इति । गार्गीशब्दोऽपि प्रकृतिभावेनाद्युदात्त एव भवति ॥

निष्ठोपसर्गपूर्वमन्यतरस्याम् ॥ प्रक्षालितपाद इति । 'क्षल शौचकर्मणि' अस्माण्ण्यन्तात् क्तः । प्रक्षालितशब्दः 'गतिरनन्तरः' इत्याद्युदात्तः । प्रधौतमुखमिति । 'धावु गतिशुद्धयोः', अस्मात् क्तः । 'च्छ्वोः शूडनुनासिके च' इत्यूठ्, 'एत्येधत्येठ्सु' इति वृद्धिः ।

यदि मुखशब्द इत्यादि । मुखशब्दोऽयं स्वाङ्गवाच्यपि । तत्र यद्ययमिह स्वाङ्गवाची तदानेन पूर्वपदान्तोदात्तत्वमेव । मुक्ते पक्षे 'मुखं स्वाङ्गम्' इत्युत्तरपदाद्युदात्तत्वं भवति । अत्र निष्ठोपसर्गपूर्वमन्यतरस्यांग्रहणानुवृत्तेर्यदाऽन्तोदात्तत्वं भवति तदा 'गतिरनन्तरः' इत्येतत् । तेन स्वाङ्गवाचिनि मुखशब्दे त्रयः स्वरा भवन्ति । अनेन पूर्वपदान्तोदात्तत्वम्, 'मुखं स्वाङ्गम्' इत्यनेन नोत्तरपदान्तोदात्तत्वम्, 'गतिरनन्तरः' इति प्रकृतिभावात् पूर्वपदस्याद्युदात्तत्वम् । न चेदित्यादि । यदि मुखशब्दोऽत्र स्वाङ्गवाची न भवति तदा 'मुखं स्वाङ्गम्' इत्यस्यायं विषयो न भवतीति 'गतिरनन्तरः' इति द्विविधा

---

१. 'बृहेरम् नलोपश्चेति मन्प्रत्यये नलोपे अमागमे च निपातितः'—इति पाठान्तरम् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



निष्ठेति किम् ? प्रसेचकमुखः । उपसर्गपूर्वमिति किम् ? शुष्कमुखः ॥

उत्तरपदादिः ॥ १११ ॥

'उत्तरपदादिः' इत्येतदधिकृतम् । यदित ऊर्ध्वमनुक्रमिष्याम उत्तरपदस्यादिरुदात्तो भवतीत्येवं तद्वेदितव्यम् । वक्ष्यति – 'कर्णो वर्णलक्षणात् । शुक्लकर्णः, कृष्णकर्णः' ।

'उत्तरपदस्य' – इत्येतदा पादपरिसमाप्तेः । 'आदिः' इति 'प्रकृत्या भगालम्' इति यावत् ॥

कर्णो वर्णलक्षणात् ॥ ११२ ॥

बहुव्रीहौ समासे वर्णवाचिनो लक्षणवाचिनश्च कर्णशब्द उत्तरपदमाद्युदात्तं भवति । शुक्लकर्णः । कृष्णकर्णः । लक्षणात् – दात्राकर्णः ।

पदमञ्जरी

प्रसेचकशब्दः कृदुत्तरपदप्रकृतिस्वरेण मध्योदात्तः, शुष्कशब्दः 'शुष्कधृष्टौ' इत्याद्युदात्तः ॥

उत्तरपदादिः ॥ उत्तरपदग्रहणमसमस्तं लुप्तषष्ठीकम् । अत्रापि प्रकरण उत्तरपदनिर्देशे षष्ठ्यर्थे प्रथमा ॥

*कर्णो वर्णलक्षणात् ॥ दात्राकर्णः, शङ्कूकर्ण इति* । दात्रं कर्णे यस्य, शङ्कुः

न्यासः

मुक्ते प्रवर्तते । तेन स्वाङ्गवाचिनि मुखशब्दे द्वौ स्वरौ भवतः—पूर्वपदस्याद्युदात्तत्वम्, अन्तोदात्तत्वञ्च ।

प्रसेचकमुखमिति । अत्र पूर्वपदप्रकृतिस्वर एव भवति । प्रसिच्यत इति प्रसेचकः, 'कृत्यल्युटो बहुलम्' इति कर्मणि ण्वुल्, 'कुगतिप्रादयः' इति समासः, तत्पुरुषे तुल्यार्थ' इत्यादिनाऽव्ययप्रकृतिभावः । तेन प्रसेचकशब्द आद्युदात्त इति । शुष्कमुख इति । 'शुषः कः' इति निष्ठायां कादेशः । प्रत्ययस्वरेण शुष्कशब्दोऽन्तोदात्तः । बहुव्रीहौ प्रकृतिभावेन नित्यमेवान्तोदात्तो भवति ॥

उत्तरपदादिः ॥ कर्णो वर्णलक्षणात् ॥ वर्णम् = शुक्लादि, लक्ष्यतेऽनेनेति लक्षणम् = चिह्नम्, वर्णश्च लक्षणञ्च वर्णलक्षणम् । द्वन्द्व एकवद्भावः । अर्थग्रहणं चेह वर्णलक्षणयोः अर्थप्रधानत्वान्निर्देशस्य । श्वेतकर्णः, कृष्णकर्ण इति । श्वेतकृष्णशब्दावन्तोदात्तौ । तथा हि—'श्विता वर्णे' इत्यस्मात् पचाद्यचि श्वेतशब्दो व्युत्पाद्यते । कृष्णशब्दोऽपि

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


शङ्कूकर्णः । 'लक्षणस्य' इति दीर्घत्वम् ।

पशूनां विभागज्ञापनार्थं दात्रशङ्कुप्रतिरूपकं कर्णादिषु चिह्नं यत् क्रियते तदिह लक्षणं गृह्यते, तेन स्थूलकर्णं इत्यत्र न भवति ।

कर्ण इति किम् ? श्वेतपादः । कूटशृङ्गः । वर्णलक्षणादिति किम् ? शोभनकर्णः ॥

पदमञ्जरी

कर्णे यस्येति विग्रहः, सप्तम्याः पूर्वनिपाते 'गड्वादिभ्यः परवचनम्' इति परनिपातः । *कर्णे लक्षणस्याविष्टेत्यादिना दीर्घत्वम्*[1] । लक्ष्यते येन तल्लक्षणम्, ततश्च स्थूलकर्ण इत्यत्रापि प्राप्नोति, स्थौल्येनापि हि लक्षणीयत्वादत आह— *पशूनां विभागज्ञापनार्थमित्यादि* । एतच्च सामान्योक्तावपि वर्णग्रहणाल्लभ्यते; अन्यथा वर्णेनापि लक्ष्यमाणत्वात्तदनर्थकं स्यात् । *श्वेतपाद इति* । 'श्विता वर्णे'

न्यासः

'इण्सिञ्जिदीङ्युष्यविभ्यो नक्' इत्यनुवर्तमाने 'कृषेर्वर्णे' इति नक्प्रत्यये । दात्राकर्ण इति । 'धः कर्मणि ष्ट्रन्' इति वर्तमाने 'दाम्नीशस्' इत्यादिना ष्ट्रन्प्रत्ययः, तेन दात्रशब्द आद्युदात्तः । शङ्कूकर्णइति । 'कृग्रोरुच्च' इत्यनुवर्तमाने 'खरुशङ्कुपीयुनीलङ्गुलिगु' इति कुप्रत्ययान्तः शङ्कुशब्दोऽन्तोदात्तो निपात्यते । 'धापॄवस्यज्यतिभ्यो नः' इत्यधिकृत्य 'कृवृच्छसिद्रुपन्यनिस्वपिभ्यो नित्' इति कर्णशब्दो व्युत्पाद्यते, तेनायमाद्युदात्तः । लक्षणस्येति दीर्घत्वमिति । लक्षणस्येत्यनेन सूत्रैकदेशेन 'कर्णे लक्षणस्याविष्टपञ्चमणिभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्य' इति सूत्रमुपलक्षयति ।

श्वेतपाद इत्यादि । पूर्वपदस्य प्रकृतिस्वर एव भवति ।

अथेह कस्मान्न भवति—स्थूलकर्ण इति, स्थूलेनापि हि कर्णेन लक्ष्यत एव, ततश्च लक्षणादित्येव सिद्धम् ? इत्यत आह—पशूनां विभागज्ञापनार्थमित्यादि । तेन स्थूलकर्ण इत्यत्र न भवतीति भावः । कथं पुनः सामान्येनोक्तौ विशेषस्य ग्रहणं लभ्यते ? वर्णग्रहणाज्ज्ञापकात् । यदि लक्षणमात्रस्येह ग्रहणमभिमतं स्याद् वर्णग्रहणं न क्रियेत, वर्णो हि लक्षणं भवत्येव । तेनापि लक्ष्यत इति कृत्वा, कृतश्च । तस्मात् तदेव ज्ञापयति—विशिष्टमिह लक्षणं गृह्यत इति । यत् पुनर्विशिष्टं व्याख्यानात् तद् विज्ञेयम् ।

श्वेतपाद इति । 'श्विता वर्णे' इत्यस्मात् पचाद्यचि श्वेतशब्दो व्युत्पाद्यते, तेनान्तोदात्तोऽयम् । कूटशृङ्ग इति । 'कूट दाहे' इति, अस्मादिगुपधलक्षणः कः, तेन कूटशब्दोऽप्यन्तोदात्त एव । शोभनकर्ण इति । 'शुभ शुम्भ शोभार्थे' अस्माद् 'अनुदात्तेतश्च हलादेः' इति युच् । चित्स्वरेण शोभनशब्दोऽप्यन्तोदात्तः । पूर्वपदप्रकृतिस्वरापवादो

---

१. 'कर्णे लक्षणस्येति दीर्घत्वम्' इति मुद्रितपुस्तके पाठो न्यास-पदमञ्जर्यसंगतः ( प्र० सं० स० )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## संज्ञौपम्ययोश्च ॥ ११३ ॥

संज्ञायामौपम्ये च यो बहुव्रीहिर्वर्त्तते तत्र कर्णशब्द उत्तरपदमाद्युदात्तं भवति। संज्ञायाम् — कुञ्चिकर्णः। मणिकर्णः। औपम्ये — गोकर्णः। खरकर्णः॥

## कण्ठपृष्ठग्रीवाजङ्घं च ॥ ११४ ॥

कण्ठ, पृष्ठ, ग्रीवा, जङ्घा — इत्येतानि उत्तरपदानि बहुव्रीहौ समासे संज्ञौपम्ययोराद्युदात्तानि भवन्ति।

कण्ठः संज्ञायाम् — शितिकण्ठः। नीलकण्ठः। औपम्ये — खरकण्ठः। उष्ट्रकण्ठः।

पृष्ठः संज्ञायाम् — काण्डपृष्ठः। नाकपृष्ठः। औपम्ये — गोपृष्ठः। अजपृष्ठः।

ग्रीवा संज्ञायाम् — सुग्रीवः। नीलग्रीवः। दशग्रीवः। औपम्ये — गोग्रीवः। अश्वग्रीवः।

### पदमञ्जरी

पचाद्यच्, 'कूट दाहे', इगुपधलक्षणः कः, 'शुभ शुम्भ शोभार्थे', 'अनुदात्तेतश्च हलादेः' इति युच् — शोभनः। प्रत्युदाहरणे सर्वत्र पूर्वपदप्रकृतिस्वर एव भवति। कण्ठकर्णादीनां समाहारद्वन्द्वे नपुंसकह्रस्वत्वम्॥

कण्ठपृष्ठग्रीवाजङ्घं च॥ *सुग्रीव इति*। अत्र परत्वात् 'नञ्सुभ्याम्' इत्यन्तोदात्त-

### न्यासः

योगः। एवमुत्तरेऽपि योगाः प्रागव्ययीभावसंशब्दनात्। तेन सर्वत्र प्रत्युदाहरणेषु पूर्वपदप्रकृतिस्वरः प्रत्युदाहार्यः॥

संज्ञौपम्ययोश्च॥ कुञ्चिकर्णः, मणिकर्ण इति। 'कुचि शब्दे तारे', 'भण रण वण भ्रण मण' इति मणिर्भ्वादौ पठ्यते। आभ्याम् 'सर्वधातुभ्य इन्', 'इगुपधात् कित्' इतीन्प्रत्ययः, किच्च। तेन कुञ्चिमणिशब्दावाद्युदात्तौ। गोकर्ण इति। गौरिव कर्णोऽस्येति विग्रहः। गोशब्द उक्तस्वरः। खरकर्ण इति। खरस्येत्यादि विग्रहः। खमस्यास्तीति 'रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानम्' इति रप्रत्ययः, तेन खरशब्दोऽन्तोदात्तः॥

कण्ठपृष्ठग्रीवाजङ्घं च॥ 'कणेष्ठः' इति ठप्रत्ययान्तत्वात् कण्ठशब्दोऽन्तोदात्तः। 'तिष्ठपृष्ठगूथयूथप्रोथाः' इति पृष्ठशब्दोऽन्तोदात्तो निपात्यते। 'इण्भीभ्यां वन्' इत्यतो वन्प्रत्ययेऽनुवर्तमाने 'शेवयह्वजिह्वाग्रीवाप्वमीवाः' इति ग्रीवाशब्दोऽन्तोदात्तो निपात्यते।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



जङ्घा संज्ञायाम् — नारीजङ्घः । तालजङ्घः । औपम्ये — गोजङ्घः । अश्वजङ्घः । एणीजङ्घः ॥

पदमञ्जरी

त्वेन भाव्यम् ,अस्य तु दशग्रीवादिरवकाशः, यदि तु नेष्यते,चकारस्यैव विधेः समुच्चयार्थं इति व्याख्यातव्यम् । *नाडीजङ्घ इति* । नाड्याकारे जङ्घे यस्य नाडीजङ्घः ॥

न्यासः

अत्यन्तं हन्ति गच्छतीति हन्तेर्यङ्, द्विर्वचनम्, 'नुगतोऽनुनासिकान्तस्य' इति नुक्, 'अभ्यासाच्च' इति कुत्वम्, जङ्घन्य इति स्थिते पचाद्यच्, 'यङोऽचि च' इति यङो लुक्; टाप्, चित्स्वरेण जङ्घाशब्दोऽन्तोदात्तः । अथ वा—'हन्तेरच् जङ्घ च' इति हन्तेरच्प्रत्ययो जङ्घ इत्ययमादेश इत्येवं वा जङ्घाशब्दो व्युत्पाद्यते । एषां कण्ठादीनां समाहारे द्वन्द्वः ।

शितिकण्ठ इति । 'सर्वधातुभ्य इन्' इति वर्तमाने 'क्रमितमिशशिस्तम्भामत इच्च' इति शितिशब्द आद्युदात्तः । नीलकण्ठ इति । 'नील वर्णे', अस्मात् घञ्, तेन नीलशब्दोऽप्याद्युदात्तः । खरकण्ठ इति । खरस्येव कण्ठोऽस्येति विग्रहः । खमस्यास्तीति 'रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानादप्रत्ययः, तेन खरोऽन्तोदात्तः । उष्ट्रकण्ठ इति । उष्ट्रस्येव कण्ठोऽस्येति 'ष्ट्रन्' इति वर्तमाने 'उषिखनिभ्यां कित्' इति 'उष दाहे' इत्यस्मात् ष्ट्रन्, किच्च । तेनोष्ट्रशब्द आद्युदात्तः ।

काण्डपृष्ठ इति । काण्डं पृष्ठमस्येति काण्डशब्दः 'नब्विषयस्यानिसन्तस्य' इत्याद्युदात्तः । नाकपृष्ठमिति । नास्याकमस्तीति 'न भ्राट्' इत्यादिना प्रकृतिभावान्नलोपाभावः । 'नभ्राण्नपात्' ... 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तविधानान्नाकशब्दोऽन्तोदात्तः । गोपृष्ठमिति । गोरिव पृष्ठमस्येति । गोशब्द उक्तस्वरः । अजपृष्ठमिति । अजस्येव पृष्ठमस्येति 'अज गतिक्षेपणयोः', अस्मात् पचाद्यच् । अजादिष्वजाशब्दस्य पाठाद् वीभावो न भवति । चित्स्वरेणाजशब्दोऽन्तोदात्तः ।

सुग्रीव इति । शोभना ग्रीवास्येति 'निपाता आद्युदात्ताः' इति सुशब्द आद्युदात्तः । नीलग्रीव इति । नीला ग्रीवास्येति 'नील वर्णे', अस्मात् घञ् । तेन नीलशब्द आद्युदात्तः । दशग्रीव इति । दश ग्रीवा अस्येति दशशब्दः 'न्रः संख्यायाः' इत्याद्युदात्तः । अश्वग्रीव इति । अश्वस्येव ग्रीवास्येति गोशब्दोऽश्वशब्दश्चोक्तस्वरः ।

नारीजङ्घ इति । नारी जङ्घा यस्येति । शार्ङ्गरवादिषु 'नृनरयोश्च' इति पठ्यन्ते, तेनाद्युदात्तः । तालजङ्घ इति । तालो जङ्घा यस्येति 'तल प्रतिष्ठाकरणे' चुरादिः, तस्मात् पचाद्यच् । तेन तालशब्दोऽन्तोदात्तः । गोजङ्घ इति । गोरिव जङ्घा यस्येति । अश्वजङ्घ इति । अश्वस्येव जङ्घा यस्येति । एणीजङ्घ इति । एण्या इव जङ्घा यस्येति एणीशब्दः 'जातेरस्त्रीविषयात्' इति ङीषन्तः । तेनान्तोदात्तः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## शृङ्गमवस्थायां च ॥ ११५ ॥

शृङ्गशब्द उत्तरपदमवस्थायां संज्ञौपम्ययोश्च बहुव्रीहौ आद्युदात्तं भवति । उद्गतशृङ्गः । द्व्यङ्गुलशृङ्गः । त्र्यङ्गुलशृङ्गः । अत्र शृङ्गोद्गमनादिकृतो गवादेर्वयोविशेषः=अवस्था । संज्ञायाम् – ऋष्यशृङ्गः । औपम्ये – गोशृङ्गः । मेषशृङ्गः ।

अवस्थादिष्विति किम् ? स्थूलशृङ्गः[1] ॥

## नञो जरमरमित्रमृताः ॥ ११६ ॥

नञ उत्तरे जरमरमित्रमृता बहुव्रीहौ समासे आद्युदात्ता भवन्ति । अजरः । अमरः । अमित्रः । अमृतः ।

### पदमञ्जरी

नञो *जरमरमित्रमृताः* ॥ जरणं जरः, 'ऋदोरप्' । मरणं मरः, अस्मादेव निपातनादप् । 'ञिमिदा स्नेहने'—अस्मात् क्त्रः, मित्रम् ॥

### न्यासः

शृङ्गमवस्थायाञ्च ॥ उद्गतशृङ्ग इति । गन्गाम्यद्योः' इत्यधिकृत्य 'शृणः किन्नुट् च' इति च 'शृणातेर्ह्रस्वश्च' इति गन्प्रत्ययान्तः शृङ्गशब्दो व्युत्पाद्यते । तेनायमाद्युदात्तः । उद्गतशब्दस्थाथादिस्वरेणान्तोदात्तः । द्व्यङ्गुलशृङ्ग इति । द्वे अङ्गुली प्रमाणमस्येति तद्धितार्थे द्विगुः 'प्रमाणे द्वयसच्'इत्यादिना विहितस्य मात्रच आगतस्य लोपः । 'प्रमाणे लो द्विगोर्नित्यम्' इति 'तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः' इत्यच् समासान्तः । तेन द्व्यङ्गुलशब्दोऽन्तोदात्तः । द्व्यङ्गुलं शृङ्गमस्येति । त्र्यङ्गुलशृङ्ग इति । पूर्वेण तुल्यम् । अत्रेत्यादि । आदिशब्देन द्व्यङ्गुलादिग्रहणम् । ऋष्यशृङ्ग इति । ऋष्यं शृङ्गं यस्येति । 'अर्घ्यादयश्च' इत्याद्युदात्त ऋष्यशब्दो निपात्यते । मेषशृङ्ग इति । मेषस्येव शृङ्गो यस्येति 'मिष स्पर्द्धायाम्' अस्मात् पचाद्यच् । तेन मेषशब्दोऽन्तोदात्तः ।

स्थूलशृङ्ग इति । स्थूलशब्दः प्रातिपदिकस्वरेणान्तोदात्तः ॥

नञो जरमरमित्रमृताः ॥ अजर इति । जरणं जरः, 'ऋदोरप' । तेनायं धातुस्वरेणाद्युदात्तः । अविद्यमानो जरोऽस्येति । अमर इति । मरणं मरः, 'कृत्यल्युटो बहुलम्' इत्यप् । तेनायमपि पूर्ववदाद्युदात्तः । अमित्र इति । 'अमिचिमिदिशसिभ्यः क्त्र' इति मिदेः क्त्रः । तेन मित्रशब्दोऽन्तोदात्तः । अमृत इति । 'मृङ् प्राणत्यागे', मरणम् = मृतम् । 'नपुंसके भावे क्तः' । तेन मृतशब्दोऽन्तोदात्तः ।

---

[1] 'संज्ञादिषु किम् ? मेघशृङ्गः' इत्यधिकं क्वचित् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



नञ इति किम् ? ब्राह्मणमित्रः । जरादय इति किम् ? अशत्रुः । 'नञ्सुभ्याम्' इति उत्तरपदान्तोदात्तत्वमेवात्र भवति ॥

सोर्मनसी अलोमोषसी ॥ ११७ ॥

सोरुत्तरमनन्तमसन्तं च बहुव्रीहौ समासे आद्युदात्तं भवति लोमोषसी वर्जयित्वा । सुकर्मा । सुधर्मा । सुप्रथिमा । असन्तम् — सुपयाः । सुयशाः । सुस्रोताः । सुस्रत् । सुध्वत् ।

सोरिति किम् ? कृतकर्मा । कृतयशाः । मनसी इति किम् ? सुराजा । सुतक्षा । अलोमोषसी इति किम् ? सुलोमा । सूषा ।

पदमञ्जरी

*सोर्मनसी अलोमोषसी* ॥ मँश्च अश्च मनसी । *सुप्रथिमेति* । पृथोर्भावः, 'पृथ्वादिभ्य इमनिच्', 'र ऋतो हलादेर्लघोः' इति रादेशः । पीयत इति पयः, 'पिबतेरिच्च' इत्यसुन् । 'अशेर्देवने युट् च' इत्यसुन्, युडागमः, यशः । 'स्रुरिभ्यां तुट्' स्रोतः । *सुस्रत्, सुध्वद् इति* । स्रंसुध्वंसुभ्यां क्विप्, 'वसुस्रंसु' इत्यादिना दत्वम्, तस्यासिद्धत्वादत्रासन्तत्वम् ।

न्यासः

ब्राह्मणमित्र इति । ब्राह्मणशब्दोऽणन्तत्वादन्तोदात्तः । अत्र पूर्वपदप्रकृतिस्वर एव भवति । अशत्रुरिति । 'रुशातिभ्यां क्रुन्' इति क्रुन्नन्तः शत्रुशब्द आद्युदात्तः । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वापवादो योगः । एवमुत्तरेऽपि योगाः प्राक् 'कूलतीरतूल' इत्यतः द्रष्टव्याः ॥

सोर्मनसी अलोमोषसी ॥ सुकर्मेति । 'कृहचरिभ्यो मनिन्', 'सर्वनामस्थाने च' इति दीर्घः । सुप्रथिमेति । पृथोर्भावः प्रथिमा, 'पृथ्वादिभ्यः' इतीमनिच् । 'र ऋतो हलादेर्लघोः' इति ऋकारस्य रेफः । सुपया इति । असुन्निति वर्तमाने 'पिबतेरिच्च' इति पयःशब्दो व्युत्पाद्यते । तेनायमाद्युदात्तः । 'अत्वसन्तस्य' इति दीर्घः । सुयशा इति । 'अशू भोजने', 'अशेर्देवने युट् च' इत्यसुन्येव यशःशब्दो व्युत्पाद्यते । तेनायमाद्युदात्तः, पूर्ववद्दीर्घः । सुस्रोता इति । 'सर्वधातुभ्योऽसुन्' इति वर्तमाने 'स्रुरिभ्यां तुट् च' इति । सुस्रत्, सुध्वदिति । स्रन्सुध्वन्सुभ्यां क्विप्, 'वसुस्रंसु' इत्यादिना दत्वम्, तस्यासिद्धत्वादत्रासन्तत्वम् ।

सुराजा, सुतक्षेति । राजन्, तक्षन्निति कनिन्नन्तः । सुलोमेति । लुनातेर्मनिनि लोमेति । सुषेति । 'उष दाहे', 'मिथुनेऽसिः' इति वर्तमाने 'उष कित्' इति कित् । अथ कथं सुप्रथिमेत्यत्र सुस्रोताः, सुस्रद्, सुध्वदित्येतेषु चोत्तरपदमाद्युदात्तं भवति,

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



'अनिनस्मन्ग्रहणान्यर्थवताऽनर्थकेन च' इत्यनर्थकयोरपि मनसोरिह ग्रहणम्। 'नञ्सुभ्याम्' इत्यस्यायमपवादः।

कपि तु परत्वात् 'कपि पूर्वम्' इत्येतद्भवति। सुकर्मकः। सुस्रोतस्कः॥

## क्रत्वादयश्च ॥ ११८ ॥

क्रत्वादयः सोरुत्तरे बहुव्रीहौ समासे आद्युदात्ता भवन्ति। सुक्रतुः। सुदृशीकः।

क्रतु। दृशीक। प्रतीक। प्रपूर्त्ति। हव्य। भग। क्रत्वादिः॥

### पदमञ्जरी

राज-तक्षशब्दौ 'कनिन्युवृषि' इत्यादिना कनिप्रत्ययान्तौ। लुनातेर्मनिन्—लोम, 'उष दाहे', 'मिथुनेऽसिः' इति वर्तमाने 'उषः कित्'।

*अनिनस्मन्ग्रहणानीति*। अन्, इन्, अस्, मन्—इत्येतानि गृह्यन्ते येषु सूत्रेषु तानि तथोक्तानि, तत्र तदन्तविधिं प्रयोजयन्तीति वचनादनर्थकानामप्यनिन्प्रभृतीनां ग्रहणं भवतीत्युक्तं भवति। तेन सुप्रथिमा, सुस्रत्, सुध्वादित्यादिकमप्युदाहरणमुपपद्यत इति भावः।

*कपि परत्वादिति*। 'सोर्मनसी' इत्यस्यावकाशः—सुकर्मा, सुशर्मा; 'कपि पूर्वम्' इत्यस्यावकाशः—अयवकः, सुयवक इति; एकस्थले विप्रतिषेधः॥

### न्यासः

यावतार्थवतोर्मनसोरर्थवद्ग्रहणपरिभाषयेह ग्रहणम्, न चेह तावर्थवन्तौ ? इत्यत आह—अनिनस्मन्नित्यादि। 'अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति' इति ब्रुवता वाक्यकारेणानिनस्मन्प्रभृतीनामनर्थकानामपि ग्रहणं भवतीत्युक्तं भवति। अन्यथाप्येतत् तदन्तविधेः प्रदर्शनार्थं स्यात्।

कपि तु परत्वादित्यादि। 'सोर्मनसी' इति सूत्रस्यावकाशः—सुकर्माः, सुवयाः, 'कपि पूर्वम्' इत्यस्यावकाशः—अयवकः, सुयवक इति, 'शेषाद्विभाषा' इति कप्। इहोभयं प्राप्नोति—सुकर्मकः, सुस्रोतस्क इति, 'कपि पूर्वम्' इत्येतद् भवति विप्रतिषेधेन॥

क्रत्वादयश्च॥ कृञः क्रतुः, तेन नित्स्वरेण क्रतुराद्युदात्तः। दृशीकप्रतीकशब्दौ 'अर्घ्यादयश्च' इत्याद्युदात्तौ। सूपूर्वस्य त्वरते क्तिन्। 'तादौ च निति कृत्यतौ' इति गतिस्वरेण प्रतूर्तिशब्द आद्युदात्त, 'ज्वरत्वर' इत्यादिनोठ्। जुहोतेः 'अचो यत्', 'यतोऽनावः' इत्याद्युदात्तो भवति हव्यशब्दः। 'भजेः खनो घ च' इति घः। अत्र हि घित्करणेन ज्ञापितम्—अन्येभ्योऽपि घो भवतीति। वृषादित्वाद् भगशब्द आद्युदात्तः॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## आद्युदात्तं द्व्यच्छन्दसि ॥ ११९ ॥

यदाद्युदात्तं द्व्यच् उत्तरपदं बहुव्रीहौ समासे सोरुत्तरं तदाद्युदात्तमेव भवति छन्दसि विषये। स्वश्वास्त्वा सुरथा मर्जयेम। नित्स्वरेणाश्वरथशब्दावाद्युदात्तौ।

आद्युदात्तमिति किम्? या सुबाहुः स्वङ्गुरिः। बाहुशब्दः प्रत्ययस्वरेणान्तोदात्तः। द्व्यजिति किम्? सुगुरसत्। सुहिरण्यः। स्वश्वः। 'नञ्सुभ्याम्' इत्यस्यायमपवादः ॥

## वीरवीर्यौ च ॥ १२० ॥

वीर, वीर्य — इत्येतौ च शब्दौ सोरुत्तरौ बहुव्रीहौ समासे छन्दसि विषये आद्युदात्तौ भवतः। सुवीरस्ते। सुवीर्यस्य पतयः स्याम।

वीर्यमिति यत्प्रत्ययान्तम्, तत्र 'यतोऽनावः' इति आद्युदात्तत्वं न भवतीत्येतदेव वीर्यग्रहणं ज्ञापकम्। तत्र हि सति पूर्वेणैव सिद्धं स्यात् ॥

### पदमञ्जरी

*आद्युदात्तं द्व्यच् छन्दसि* ॥ 'कुर्भ्रश्च' इति वर्तमाने 'अर्जिदृशिकम्यमिपशिबाधामृजिपसितुग्धुग्दीर्घहकाराश्च'। बाधते येन परानिति बाहुः ॥

*वीरवीर्यौ च* ॥ 'वीर विक्रान्तौ' चुरादिः, ततः पचाद्यचि — वीरः, 'अचो यत्' — वीर्यम्, वीरेषु वा साधुरिति प्राग्घितीयो यत्। *तत्रेत्यादि*। कथं पुनरेतज्ज्ञापकम्? इत्याह— *तत्र हि सतीति*। फिषि तु 'बिल्वभक्ष्यवीर्याणि छन्दसि' इति छन्दस्यन्तस्वरितत्वं भाषायां वाद्युदात्तत्वं शब्दस्य स्थितम् ॥

### न्यासः

आद्युदात्तं द्व्यच्छन्दसि ॥ नित्स्वरेणाश्व-रथशब्दावाद्युदात्ताविति। अश्वशब्दस्य 'अशिपुषि' इत्यादिना क्वन्प्रत्ययान्तस्य व्युत्पादित्वात्। रथशब्दस्यापि 'हनिकुषिनीरमिकाशिभ्यः क्थन्' इति क्थन्प्रत्ययान्तस्य।

बाहुशब्दः प्रत्ययस्वरेणान्तोदात्त इति। 'कुर्भ्रश्च' इत्यतः कुरिति वर्तमाने 'अर्जिदृशिकम्यमिपशिबाधामृजिपसितुग्दीर्घहकाराश्च' इति कुप्रत्ययान्तस्य व्युत्पादितत्वात्। सुहिरण्य इति। हिरण्यशब्दः 'नब्विषयस्यानिसन्तस्य' इत्याद्युदात्तः ॥

वीरवीर्यौ च ॥ 'स्फायितञ्चि' इत्यादिनाऽजे रक्प्रत्यये वीरशब्दो व्युत्पाद्यते। तेनान्तोदात्तः। अथ वा—'वीर विक्रान्तौ' इत्यस्य पचाद्यचि व्युत्पादितत्वात्। वीर्यमिति यत्प्रत्ययान्तमिति। वीरे साधुः, 'तत्र साधुः' इति प्राग्घितीयो यत्। अथ

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## कूलतीरतूलमूलशालाक्षसममव्ययीभावे ॥ १२१ ॥

कूल, तीर, तूल, मूल, शाला, अक्ष, सम — इत्येतानि उत्तरपदानि अव्ययीभावसमास आद्युदात्तानि भवन्ति । परिकूलम् । उपकूलम् । परितीरम् । उपतीरम् । परितूलम् । उपतूलम् । परिमूलम् । उपमूलम् । परिशालम् । उपशालम् । उपाक्षम् । पर्यक्षम् । सुषमम् । विषमम् । निषमम् । दुःषमम् । तिष्ठद्गुप्रभृतिष्वेते पठ्यन्ते ।

कूलादिग्रहणं किम् ? उपकुम्भम् । अव्ययीभाव इति किम् ? परमकूलम् । उत्तमकूलम् ।

### पदमञ्जरी

*कूलतीरतूलमूलशालाक्षसममव्ययीभावे* ॥ सुषममित्यादौ 'सुविनिर्दुर्भ्यः सुपिसूतिसमाः' इति षत्वम्, तस्यासिद्धत्वात्समशब्द एवायम् । *तिष्ठद्गुप्रभृतिष्वेते*

### न्यासः

वा—वीर इत्यस्माच्चौरादिकाद् अस्मादेव निपातनाद् 'अचो यत्', तेन वीर्यमिति यत्प्रत्ययान्तम् । एवं सति 'यतोऽनावः' इत्याद्युदात्तत्वम् प्राप्नोति ? इत्यत आह— तत्रेत्यादि । कथं पुनर्वीर्यग्रहणं ज्ञापकम् ? इत्याह—तत्र हीत्यादि । यद्याद्युदात्तं स्यात् तदा 'आद्युदात्तं द्व्यच्छन्दसि' इत्येवनेनैव सिद्धं स्यात् । ततश्चेह वीर्यग्रहणं न कुर्यात्, कृतश्च; तस्मात् तदेव ज्ञापयति - वीर्यशब्दस्य यदन्तस्याप्याद्युदात्तत्वं न भवतीति । तस्मिन्नसति 'तित्स्वरितम्' इत्यन्तस्वरितमेव भवति ॥

कूलतीरतूलमूलशालाक्षसममव्ययीभावे ॥ 'कूल संवरणे', 'पार तीर कर्मसमाप्तौ', 'तूल निष्कर्षे', 'मूल प्रतिष्ठायाम्'— एभ्यो घञ्, तेनैते कूलादय आद्युदात्ताः । 'शल हुल पत्लृ गतौ'—अस्माद् घञ् । शालाप्याद्युदात्ता । स्त्रीत्वम् 'तत्पुरुषे शालायाम्' इति निपातनात् । 'तृवदिहनिकमिकसिभ्यः सः' इति, 'अशेर्देवने' इति च सप्रत्ययान्तत्वादक्षशब्दोऽन्तोदात्तः । योऽपि 'अक्ष्णोऽदर्शनात्' इत्यचि समासान्ते कृतेऽक्षशब्दः सम्पद्यते, सोऽपि चित्स्वरेणान्तोदात्त, तस्यापीह ग्रहणम् । 'षमु वैकल्ये'— अस्मात् पचाद्यच्, तेन समोऽन्तोदात्तः । यस्तु सर्वादिषु समशब्दः सोऽनुदात्तस्तत्रैव पठ्यते, तस्यापीह ग्रहणम् । उपकूलमिति । कूलस्य समीपमिति 'अव्ययं विभक्ति' इत्यादिनाव्ययीभावः । परिकूलमिति । 'अपपरी वर्जने' इति परिशब्दः कर्मप्रवचनीयसंज्ञः । तेन योगे 'पञ्चम्यपाङ्परिभिः' इति कूलात् पञ्चमी । 'अपपरिबहिरञ्चवः पञ्चम्या' इत्यव्ययीभावः । सुषममित्यादौ 'सुषामादिषु च' इति षत्वम्, तस्यासिद्धत्वात् समशब्द एवायम् । तिष्ठद्गुप्रभृतिष्वेते पठ्यन्त इति । तेन 'तिष्ठद्गुप्रभृतीनि च' इत्येतेऽव्ययीभावा इति दर्शयति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पर्यादिभ्यः कूलादीनामाद्युदात्तत्वं विप्रतिषेधेन भवति। परिकूलम्। उपकूलम्॥

कंसमन्थशूर्पपाय्यकाण्डं द्विगौ॥ १२२॥

कंस, मन्थ, शूर्प, पाय्य, काण्ड – इत्येतान्युत्तरपदानि द्विगौ समास आद्युदात्तानि भवन्ति। द्विकंसः। त्रिकंसः। द्विमन्थः। त्रिमन्थः। द्विशूर्पः। त्रिशूर्पः। द्विपाय्यः। त्रिपाय्यः। द्विकाण्डः। त्रिकाण्डः।

पदमञ्जरी

*पठ्यन्त इति*। तेनाव्ययीभावसंज्ञा। *पर्यादिभ्य इत्यादि*। 'परिप्रत्युपापा' इत्यस्यावकाशो यत्र कूलादयो न सन्ति—परित्रिगर्तमिति, कूलादीनामाद्युदात्तस्यावकाशो यत्र पर्यादयो न भवन्ति—अवकूलम्, अतिकूलमिति; पर्यादिभ्यः परेषु कूलादिषु विप्रतिषेधः॥

*कंसमन्थशूर्पपाय्यकाण्डं द्विगौ*॥ *द्विकंस इति*। द्वाभ्यां कंसाभ्यां क्रीत इति तद्धितार्थे समासः, 'कंसाट्टिठन्' इति टिठन्, तस्य 'अध्यर्धपूर्व' इति लुक्। *द्विमन्थ इति*। 'आर्हादगोपुच्छ' इत्यादिना ठक्, शेषं पूर्ववत्। *द्विशूर्पमिति*।

न्यासः

उपकुम्भमिति। अत्र समासान्तोदात्तत्वमेव। परमकुलम्, उत्तमकुलमिति। परमं कूलमस्योत्तमं कूलमस्येति बहुव्रीहिः। अत्र पूर्वपदप्रकृतिस्वर एव भवति। यौ तु तत्पुरुषौ परमकूलोत्तमकूलशब्दौ, तत्र बहुव्रीह्यधिकारादेव न भविष्यतीति तन्निवृत्त्यर्थमव्ययीभावग्रहणमयुक्तम्।

पर्यादिभ्य इत्यादि। 'परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु' इत्यस्यावकाशो यत्र कूलादयो न सन्ति —परित्रिगर्तमिति, कूलादीनामाद्युदात्तस्यावकाशो यत्र पर्यादयो विद्यन्ते—अपकूलमिति; परिकूलमित्यत्र तूभयं प्राप्नोति, तत्र विप्रतिषेधेनेदमेवाद्युदात्तत्वं भवति।

समासस्वरापवादो योगः। एवमुत्तरेऽपि 'नाचार्यराज' इत्यादेः सूत्रात् प्राक्॥

कंसमन्थशूर्पपाय्यकाण्डं द्विगौ॥ 'वृतॄवदिहनिकमिकषिभ्यः सः' इति कमेः सः, तेन कंसोऽन्तोदात्तः। 'मन्थ विलोडने'—अस्माद् 'अकर्तरि च कारके संज्ञायाम्' इति घञ्, तेन मन्थ आद्युदात्तः। 'पानीविषिभ्यः पः' इति वर्तमाने 'सुशॄभ्यां निच्च' इति शृणातेः पः, निच्च। बाहुलकादूत्वञ्च। अथ वा—'शूर्प माने'—अस्माद् घञ्, तेन शूर्पशब्द आद्युदात्तः। पाय्यशब्दो ण्यति 'पाय्यसान्नाय्य' इति निपात्यते, तेनायमन्तस्वरितः। कुण्डशब्दः पूर्वमेवोक्तस्वरः। द्विकंस इति। द्वाभ्यां कंसाभ्यां क्रीत इति तद्धितार्थे समासः, ततः प्राग्वतेः संख्यापूर्वपदानां तदन्तविधेरभ्युपगमात् 'कंसाट्टिठन्'

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



द्विगाविति किम् ? परमकंसः । उत्तमकंसः ॥

तत्पुरुषे शालायां नपुंसके ॥ १२३ ॥

शालाशब्दान्ते तत्पुरुषे समासे नपुंसकलिङ्गे उत्तरपदमाद्युदात्तं भवति । ब्राह्मणशालम् । क्षत्त्रियशालम् । 'विभाषा सेनासुराच्छायाशालानिशानाम्' इति नपुंसकलिङ्गता ।

तत्पुरुष इति किम् ? दृढशालं ब्राह्मणकुलम् । शालायामिति किम् ? ब्राह्मणसेनम् । नपुंसक इति किम् ? ब्राह्मणशाला ॥

पदमञ्जरी

'शूर्पादञन्यतरस्याम्' । *द्विपाय्यमिति* । 'पाय्यसान्नाय्य' इत्यादिना परिमाणे निपातितः । 'प्राग्वतेष्ठञ्' । *द्विकाण्डमिति* । द्वे काण्डे प्रमाणमस्य 'प्रमाणे द्वयसच्' इत्यादिना मात्रजादयः, तेषाम् 'प्रमाणे लो द्विगोर्नित्यम्' इति लुक् ॥

*तत्पुरुषे शालायां नपुंसके* ॥ *दृढशालमिति* । बहुव्रीहिरयम् । तत्र पूर्वपदप्रकृतिस्वर एव भवति, पूर्वपदं च निष्ठान्तत्वादन्तोदात्तम् । ननु चात्र लक्षणप्रतिपदोक्तपरिभाषयैव भविष्यति ? सत्यम्; उत्तरार्थं तत्पुरुषग्रहणमवश्यं कर्तव्यं तदिहैव क्रियते, परिभाषाया अनाश्रयणाय ॥

न्यासः

इति टिठन्, तस्य चापि 'अध्यर्द्धपूर्व' इत्यादिना लुक् । त्रिकंस इति । पूर्वेण तुल्यम् । द्विमन्थ इति । 'आर्हादगोपुच्छ' इत्यादिना ठक् । शेषं समासादि पूर्ववत् । द्विशूर्पं इति । 'शूर्पादन्यतरस्याम्' इत्यञ् । शेषं पूर्ववत् । द्विपाय्य इति । प्राग्वतीयष्ठञ् । शेषं पूर्ववत् । द्विकाण्डमिति । द्वे काण्डे प्रमाणमस्येति 'प्रमाणे द्वयसच्' इत्यादिना मात्रजादयः, तेषाम् 'प्रमाणे लो द्विगोर्नित्यम्' इति लोपः, समासः पूर्ववत् ।

परमकंस इति । अत्र समासस्वर एव भवति ॥

तत्पुरुषे शालायां नपुंसके ॥ शालाशब्दः 'कूलतीर' इत्यत्रोक्तस्वरः । ब्राह्मणशालम्, क्षत्त्रियशालमिति । ब्राह्मणशब्दोऽणन्तत्वादन्तोदात्तः । क्षत्त्रियशब्दस्तु मध्योदात्तः, 'क्षत्राद् घः' इति घप्रत्ययान्तत्वात् । दृढशालमिति । बहुव्रीहिरयम्, तेन पूर्वपदप्रकृतिस्वर एव भवति । पूर्वपदञ्च निष्ठान्तत्वादन्तोदात्तम् । ननु च लक्षणप्रतिपदोक्तपरिभाषया 'विभाषा सेना' इति प्रतिपदोक्ता या नपुंसलिङ्गता सैव ग्रहीष्यते । न हि दृढशालमित्यत्र प्रतिपदोक्ता नपुंसकता, किं तर्हि ? अभिधेयवशेन लक्षणोक्ता—अभिधेयवल्लिङ्गवचनानि भवन्तीति । तत् किमेतन्निवृत्त्यर्थेन तत्पुरुषग्रहणेन ? एवं तर्ह्युत्तरार्थं तत्पुरुषग्रहणम् । 'चेलखेटकटुककाण्डं गर्हायाम्' इत्यनेन दधि च तत् कटुकं चेति दधिकटुकमित्यत्रैव यथा स्यात् । दधिकटुकम्, उदश्वित्कटुकमिति । उत्तरार्थं



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

## कन्था च ॥ १२४ ॥

तत्पुरुषे समासे नपुंसकलिङ्गे कन्थाशब्द उत्तरपदमाद्युदात्तं भवति । सौशमिकन्थम् । आह्वकन्थम् । चप्पकन्थम् । 'संज्ञायां कन्थोशीनरेषु' इति नपुंसकलिङ्गता । षष्ठीसमासा एते ।

नपुंसक इत्येव – दाक्षिकन्था ॥

## आदिश्चिहणादीनाम् ॥ १२५ ॥

कन्थान्ते तत्पुरुषे समासे नपुंसकलिङ्गे चिहणादीनामादिरुदात्तो भवति । चिहणकन्थम् । मडरकन्थम् । 'मड्डुर' इति केचित् पठन्ति । मड्डुरकन्थम् ।

### पदमञ्जरी

*कन्था* च ॥ शोभनः शमो यस्य तस्यापत्यं सौशमिः । आङ्पूर्वात् ह्वयतेः 'आतश्चोपसर्गे' इति कः, 'चप सान्त्वने', औणादिकः पः, बहुलवचनादिड-भावः—चप्पः ॥

*आदिश्चिहणादीनाम्* ॥ चिनोतेः क्विप्, चित्, हन्तेः पचाद्यच्, हनः, चिहणम्—निपातनात्तलोपो णत्वं च । 'मल मल्ल धारणे', आभ्यां रप्रत्ययः, निपातनाल्लस्य डत्वम्—मडरः, मड्डुरः । विगततुलस्येदं वैतुलम् । पटदिति

### न्यासः

वु तत्क्रियमाणं विस्पष्टार्थत्वमुपपादयतीत्येतदर्थमपि भवति । लक्षणप्रतिपदोक्तपरिभाषा चेह नाश्रयितव्या भवति—एतदर्थं तत्पुरुषग्रहणस्य दृढशालमित्येतत् प्रत्युदाहरणमु-पन्यस्तम् ॥

कन्था च ॥ 'कथि क्लेशने'— अस्माद् 'गुरोश्च हलः' इत्यकारः, तेन कन्थान्तो-दात्ता । सौशमिकन्थमिति । शोभनः शमोऽस्य सुशमः, 'तस्यापत्यम्' इत्यत इञ् । तेनाद्युदात्तः सौशमिशब्दः । आह्वकन्थमिति । आङ्पूर्वस्य ह्वयतेः 'आतश्चोपसर्गे' इति कः, तेनाह्वशब्दस्याथादिस्वरेणान्तोदात्तः । चप्पकन्थमिति । 'चप सान्त्वने' अस्मात् 'पानीविषिभ्यः पः' इति बहुलवचनाच्चपोऽपि भवति । तेन चप्पशब्दोऽन्तो-दात्तः ॥

आदिश्चिहणादीनाम् ॥ पूर्वेणोत्तरपदस्य सिद्धेऽयं पूर्वपदस्याद्युदात्तत्वार्थ आरम्भः । चिनोतेः क्विप् चित् । हन्तेः पचाद्यच् हनः । निपातनात् तलोपो णत्वं च—चिहणः । 'मल मल्ल धारणे'—आभ्यां रप्रत्ययः, लस्य निपातनात् डत्वम् । मडरमड्डुरशब्दौ मध्योदात्तौ । विगता तुला यस्य स वितुलः, तस्यायं वैतुलः । अणन्तत्वादन्तोदात्तः । पट-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


चिह्ण । मडर । मडुर । वैतुल । पटत्क । चैत्तालिकर्णः । वैतालिकर्णिरित्यन्ये पठन्ति । कुक्कुट । चिक्कण । चित्कण इत्यपरे पठन्ति । चिह्णादिः ।

'आदिः' इति वर्तमाने पुनरादिग्रहणं पूर्वपदाद्युदात्तार्थम् ॥

चेलखेटकटुककाण्डं गर्हायाम् ॥ १२६ ॥

चेल, खेट, कटुक, काण्ड – इत्येतान्युत्तरपदानि तत्पुरुषे समासे गर्हायां गम्यमानायामाद्युदात्तानि भवन्ति । पुत्त्रचेलम् । भार्याचेलम् ।

पदमञ्जरी

कायति—पटत्कः । 'कै गै रै शब्दे' । 'आतोऽनुपसर्गे कः' । बिडमादत्ते बिडालः । 'ला आदाने' सोपसर्गादप्यस्मादेव निपातनात्कः, तस्यापत्यं बैडालिः, तस्येव कर्णावस्य बैडालिकर्णः । अपरे तु इकारान्तं पठन्ति—*बैडालिकर्णिरिति* । कुक्कु रटतीति कुक्कुटः, निपातनाद्रशब्दस्य लोपः, चिनोतेः क्विप् , चित् , कणतेरच् , कणः, चिता कणः चिक्कणः, निपातनात्तकारस्य ककारः । तकारमेवान्ये पठन्ति । चिह्णादयश्चैते गोत्रनामधेयानि स्मर्यन्ते ।

*आदिरिति वर्तमान इति* । पूर्वं ह्यादिग्रहणमुत्तरपदाभिसम्बद्धमिह पूर्वपदानां चिह्णादीनामाद्युदात्तत्वमिष्यते, अतस्तदर्थं पुनरादिग्रहणं कृतम् ॥

*चेलखेटकटुककाण्डं गर्हायाम्* ॥ *पुत्त्रचेलमिति* । चेलवत्तुच्छमित्यर्थः ।

न्यासः

दिति कायतीति 'कै गै शब्दे' 'आतोऽनुसर्गे कः' पटत्कोऽन्तोदात्तः । चित्तमादत्त इति 'ला आदाने'- इत्यस्मादाङ्पूर्वादस्मादेव निपातनात् कः - चित्तालः, तस्यापत्यमिति 'अत इञ्' चैत्तालिः, स कर्णावस्य चैत्तालिकर्णः । बहुव्रीहिरयं पूर्वपदप्रकृतिस्वरेणाद्युदात्तः । पूर्वपदं हि ञित्स्वरेणाद्युदात्तम् । अन्ये त्विञन्तं चैत्तालिकर्णिरिति समुदायमधीयते । 'कुक वृक आदाने' अस्मात् क्विप्—कुक् ; 'कुट कौटिल्ये' इत्यस्मादिगुपधलक्षणः कः, कुटः, कुकः कुटः कुक्कुटः । समासस्वरेणान्तोदात्तः । चिनोतेः क्विप् , चित् , कणतेः पचाद्यचि कणः, चितः कणश्चिक्कणः, तकारस्य ककारो निपातनात् । चित्कण इत्यपरे पठन्ति । चिह्णादयश्चैते मनुष्यनामधेयानि गोत्रनामधेयानि चेति स्मर्यते ।

अथादिग्रहणं किमर्थम् , यावतादिरनुवर्तत एव ? इत्यत आह–आदिरिति वर्तमान इत्यादि । पूर्वकं ह्यादिग्रहणमुत्तरपदाभिसम्बद्धम् । पूर्वपदानां चिह्णादीनामाद्युदात्तत्वमिष्यते । तस्मात् पूर्वपदभूतानां तेषामाद्युदात्तत्वं यथा स्यादित्येवमर्थं पुनरादिग्रहणम् ॥

चेलखेटकटुककाण्डं गर्हायाम् ॥ वेल चेल केल चलने' अस्मात् संज्ञायां घञ्

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


उपानत्खेटम्। नगरखेटम्। दधिकटुकम्। उदश्वित्कटुकम्। भूत-काण्डम्। प्रजाकाण्डम्।

चेलादीनां सादृश्येन पुत्रादीनां गर्हा, तत्र पुत्रश्चेलमिवेति विगृह्य व्याघ्रादेराकृतिगणत्वाद् 'उपमितं व्याघ्रादिभिः' इति समासः।

गर्हायामिति किम्? परमचेलम्॥

चीरमुपमानम्॥ १२७॥

चीरमुत्तरपदमुपमानवाचि तत्पुरुषे समासे आद्युदात्तं भवति।

पदमञ्जरी

'खेट' इति तृणनाम, तद्वद् दुर्बला उपानत्खेटम्। कटुकम् = अस्वादु, तथा दध्यपि गतस्वादुकत्वात् कटुकम्। काण्डमिति शरनाम, तद् यथा सत्त्व-पीडाकरम्, एवं भूतमपि॥

न्यासः

चेलम् = वस्त्रमुच्यते। 'खिट उत्त्रासने' अस्मादपि भावे घञ्—खेटः = तृणनामैतत्। ञित्स्वरेण चेलखेटशब्दावाद्युदात्तौ। कटुशब्दात् संज्ञायां कन्, गुणवचनमेतदाद्युदात्तम्। काण्डमप्याद्युदात्तमेवेत्युक्तम्।

चेलादीनां सादृश्येन पुत्रादीनां गर्हेति। यथा चेलमकुलीनेन तन्तुवायेनोप-जनितमेवं पुत्रोऽप्यकुलीनजो यः स पुत्रचेलमित्युच्यते। यथा खेटमदृढमेवमुपानद् याऽदृढा सोपानत्खेटम्। यथा कटुकमस्वादु तथा दध्यपि यदस्वादु तद् दधिकटुकम्। यथा काण्डं सत्त्वपीडाकरमेवं भूतमपि। तत्र पुत्रशब्दः प्रत्ययस्वरेणान्तोदात्तः। स हि 'अमिचिमिदिशसिभ्यः क्त्रः' इत्यनुवर्तमाने 'पुवो ह्रस्वश्च' इति पुत्रशब्दः क्त्रप्रत्ययान्तो व्युत्पाद्यते। भार्याशब्दः 'ऋहलोर्ण्यत्' इति ण्यदन्तत्वादन्तस्वरितः। 'णह बन्धने', अस्मादुपपूर्वात् क्विप्, 'नहिवृति' इत्यादिना पूर्वपदस्य दीर्घत्वम्, 'नहो धः' इति नकारस्य धकारः, तस्य चर्त्वम्—तकारः। उपानच्छब्दः कृत्स्वरेणान्तोदात्तः। नगा अस्मिन् विद्यन्त इति 'नगरात् कुत्सनप्रावीण्ययोः' इत्यस्मादेव निपातनाद्रप्रत्ययः, तेन नगरमन्तोदात्तम्। दधीति—'आदृगम' इत्यादिना क्विन्प्रत्ययान्तो दधातेर्व्युत्पाद्यते, तेनाद्युदात्तः। उदकेन श्वयत इत्युदश्वित्, क्विप्। 'क्विब्वचिप्रच्छि' इत्यादिना बहुल-वचनाद् दीर्घोऽस्य न भवति। 'उदकस्योदः संज्ञायाम्' इत्युदभावः, कृत्स्वरेणान्तोदात्तः। भूतशब्दोऽपि निष्ठान्तत्वादन्तोदात्तः। प्रजाशब्दः 'उपसर्गे च संज्ञायाम्' इति डप्रत्य-यान्तः, तेन कृत्स्वरेणान्तोदात्तः।

परमचेलमिति। अत्र पूजा गम्यते, न गर्हा॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



वस्त्रं चीरमिव वस्त्रचीरम्। पटचीरम्। कम्बलचीरम्।

उपमानमिति किम्? परमचीरम्॥

पललसूपशाकं मिश्रे ॥ १२८ ॥

पलल, सूप, शाक — इत्येतान्युत्तरपदानि मिश्रवाचिनि तत्पुरुषे समासे आद्युदात्तानि भवन्ति। गुडपललम्। घृतपललम्। घृतसूपः। मूलकसूपः। घृतशाकम्। मुद्गशाकम्। गुडेन मिश्रं पललं गुडपललम्। 'भक्ष्येण मिश्रीकरणम्' इति समासः।

मिश्र इति किम्? परमपललम्॥

कूलसूदस्थलकर्षाः संज्ञायाम् ॥ १२९ ॥

कूल, सूद, स्थल, कर्ष — इत्येतान्युत्तरपदानि तत्पुरुषे समासे संज्ञायां विषये आद्युदात्तानि भवन्ति। दाक्षिकूलम्। माहकिकूलम्।

पदमञ्जरी

*चीरमुपमानम्*॥ *वस्त्रचीरमिति*। वस्त्रं चीरमिवेति पूर्ववद्व्याघ्रादिसमासः॥

न्यासः

चीरमुपमानम्॥ 'सुसूधागृधिभ्यः क्रन्' इति वर्तमाने 'शुसिचिमीनां दीर्घश्च' इति क्रन्प्रत्ययान्तश्चीरशब्दः, तेनाद्युदात्तः। वस्त्रचीरमिति। पूर्ववद् व्याघ्रादित्वात् समासः। वसेराच्छादनार्थात् ष्ट्रन् वस्त्रम्, तेनाद्युदात्तम्। कम्बलचीरमिति। 'घृतादीनाञ्च' इति कम्बलशब्दोऽन्तोदात्तः॥

पललसूपशाकं मिश्रे॥ 'पल रक्षणे', कलस्तृपश्च' इति वर्तमाने 'वृषादिभ्यश्चित्' इति कलप्रत्ययस्य चित्त्वात् पलशब्दोऽन्तोदात्तः। 'रोदेर्णिलुक् च' इति विद्यमाने 'बहुलमन्यत्रापि संज्ञाच्छन्दसोः' इति बहुलवचनाण्णिलुक् च। 'पानीविषिभ्यः पः' इत्यधिकृत्य 'स्तुवो दीर्घश्च' इति च 'सुशृभ्यां निच्च' इति सूपशब्दः पप्रत्ययान्तो व्युत्पाद्यते, तेनाद्युदात्तः। 'इण्भीकापाशल्यतिमर्चिभ्यः कन्' इति बहुलवचनात् 'शो तनूकरणे' इत्यस्मादपि भवति। तेन शाकशब्द आद्युदात्तः। गुडपललमिति 'गुड वेष्टने', अस्मादिगुपधलक्षणः कः, तेन गुडशब्दोऽन्तोदात्तः। 'घृ क्षरणे' इत्यस्माद् 'अञ्जिघृसिभ्यः क्तः' इति क्तः, तेन घृतमन्तोदात्तम्। 'मुदिग्रोर्गग्गौ' इति मुदेर्गक्, तेन मुद्गोऽन्तोदात्तः॥

कूलसूदस्थलकर्षाः संज्ञायाम्॥ कूलशब्द उक्तस्वरः, 'षूद क्षरणे' इत्यस्मादिगुपधात् कः, तेन सूदोऽन्तोदात्तः। 'स्थल स्थाने' इत्यस्माद् पचाद्यच्, तेन स्थलमन्तो-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



देवसूदम् । भाजोसूदम् । दाण्डायनस्थली । माहकिस्थली । दाक्षिकर्षः । ग्रामनामधेयान्येतानि ।

स्थलग्रहणम् – लिङ्गविशिष्टत्वात्स्थलीशब्दोऽपि गृह्यते । 'जानपदकुण्ड' इत्यनेन ङीष् ।

संज्ञायामिति किम् ? परमकूलम् ॥

अकर्मधारये राज्यम् ॥ १३० ॥

कर्मधारयवर्जिते तत्पुरुषे समासे 'राज्यम्' इत्येतदुत्तरपदमाद्युदात्तं भवति । ब्राह्मणराज्यम् । क्षत्त्रियराज्यम् ।

अकर्मधारय इति किम् ? परमराज्यम् ।

चेलराज्यादिस्वरादव्ययस्वरो भवति पूर्वविप्रतिषेधेन – कुचेलम्, कुराज्यम् ॥

पदमञ्जरी

*कूलसूदस्थलकर्षाः संज्ञायाम्* ॥ *भाजीसूदमिति* । भाजीशब्दो जानपदादिसूत्रेण ङीषन्तः ॥

*अकर्मधारये राज्यम्* ॥ *चेलराज्यादिस्वरादिति* । आदिशब्देन वर्ग्यादिस्वरपरिग्रहः, चेलराज्यादिस्वरस्यावकाशः—भार्याचेलम्, ब्राह्मणराज्यम्; 'तत्पुरुषे तुल्यार्थ' इत्यादिना विहितस्याव्ययस्वरस्यावकाशः—निष्कौशाम्बिः; कुचेलम्, कुराज्यमित्यत्रोभयप्रसङ्गे पूर्वविप्रतिषेधः ॥

न्यासः

दात्तम् । कर्षशब्दः 'कर्षात्वतो घञोऽन्त उदात्तः' इत्यन्तोदात्तः । दाक्षिकूलमित्यादि । दाक्षिमाहकिशब्दाविञन्तावाद्युदात्तौ । देवशब्दः पचाद्यजन्तत्वादाद्युदात्तः । भाजीशब्दो जानपदादिसूत्रेण ङीषन्तत्वादन्तोदात्तः । दाण्डायनशब्दो नडादित्वात् फगन्तः, तेन 'कितः' इत्यन्तोदात्तः ।

ननु च सूत्रे स्थलशब्द उपात्त, तत्कथं स्थलीशब्द उत्तरपदमाद्युदात्तञ्चोदाह्रियते ? इत्याह—स्थलग्रहणमित्यादि ॥

अकर्मधारये राज्यम् ॥ राज्ञो भावः कर्म वा राज्यम्, ष्यन्तत्वादाद्युदात्तम् । ब्राह्मणक्षत्त्रियशब्दौ उक्तस्वरौ ।

चेलराज्येत्यादि । चेलराज्यस्वरस्यावकाशः—भार्याचेलम्, ब्राह्मणराज्यमिति, 'तत्पुरुषे तुल्यार्थ' इत्यादिना विहितस्य स्वरस्यावकाशः—निष्कौशाम्बिरिति; इहोभयं प्राप्नोति—कुचेलम्, कुराज्यमिति, अव्ययस्वरो भवति पूर्वप्रतिषेधेन । आदिशब्देन वर्ग्यादिस्वरपरिग्रहः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



वर्ग्यादयश्च ॥ १३१ ॥

'वर्ग्य' – इत्येवमादीन्युत्तरपदानि अकर्मधारये तत्पुरुषे समासे आद्युदात्तानि भवन्ति । वासुदेववर्ग्यः । वासुदेवपक्ष्यः । अर्जुनवर्ग्यः । अर्जुनपक्ष्यः ।

अकर्मधारय इत्येव – परमवर्ग्यः । वर्ग्यादयः प्रातिपदिकेषु न पठ्यन्ते ।

दिगादिषु तु – वर्ग, पूग, गण, पक्ष – इत्येवमादयो ये पठिताः, त एव यत्प्रत्ययान्ता वर्ग्यादय इह प्रतिपत्तव्याः ॥

पुत्रः पुम्भ्यः ॥ १३२ ॥

पुत्रशब्दः पुंशब्देभ्य उत्तरस्तत्पुरुषे आद्युदात्तो भवति । कौनटिपुत्रः । दामकपुत्रः । माहिषकपुत्रः ।

पुत्र इति किम् ? कौनटिमातुलः । पुम्भ्य इति किम् ? गार्गीपुत्रः । वात्सीपुत्रः ॥

नाचार्यराजर्त्विक्संयुक्तज्ञात्याख्येभ्यः ॥ १३३ ॥

पदमञ्जरी

*पुत्रः पुम्भ्यः* ॥ कुनटस्यापत्यं *कौनटिः* । *दामकमाहिषकशब्दौ* 'संज्ञायां कन्' इति कन्नन्तौ ॥

न्यासः

वर्ग्यादयश्च ॥ वर्ग्यादयो दिगादियदन्ताः । तेषु ये द्व्यचस्ते 'यतोऽनावः' इत्याद्युदात्ताः । परिशिष्टास्तु 'तित् स्वरितम्' इत्यन्तस्वरिताः । वसुदेवस्यापत्यम् 'ऋष्यन्धक' इत्यादिनाण्, तेन वासुदेवशब्दोऽन्तोदात्तः । 'अर्ज अर्जने' इत्यस्माच्चुरादिणिजन्ताद् 'अर्जेर्णिलुक् च' इत्युनण्प्रत्ययः । तेनार्जुनो मध्योदात्तः । इत्येवमादय इति । आदिशब्देन पक्षशब्दात् परे ये पठ्यन्ते तेषां ग्रहणम् ।

पुत्रः पुम्भ्यः ॥ कौनटिपुत्र इति । पुत्रशब्द उक्तस्वरः । कुनटस्यापत्यं कौनटिः, तेनायमाद्युदात्तः । दामकमाहिषकशब्दावपि कन्नन्तावाद्युदात्तौ ।

गार्गीपुत्रः, वात्सीपुत्र इति । गार्ग्यवात्स्यशब्दाभ्याम् 'यञश्च' इति ङीप् । तेन गार्गीवात्सीशब्दौ ञित्स्वरेणाद्युदात्तौ ।

सर्वत्रास्मिंस्तत्पुरुषाधिकारे प्रत्युदाहरणे 'समासस्य' इत्यन्तोदात्तत्वं वेदितव्यम् ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



आचार्यः = उपाध्यायः । राजा=ईश्वरः । ऋत्विजः = याजकाः । संयुक्ताः = स्त्रीसम्बन्धिनः श्यालादयः । ज्ञातयः = मातृपितृसम्बन्धिनो बान्धवाः । आचार्याद्याख्येभ्यः परः पुत्रशब्दो नाद्युदात्तो भवति । आख्याग्रहणात्स्वरूपस्य पर्यायाणां विशेषाणां च ग्रहणं भवति । आचार्यपुत्रः । उपाध्यायपुत्रः । शाकटायनपुत्रः । राजपुत्रः । ईश्वरपुत्रः । नन्दपुत्रः । ऋत्विक्पुत्रः । याजकपुत्रः । होतुःपुत्रः । भ्रातुष्पुत्रः । 'ऋतो विद्यायोनिसम्बन्धेभ्यः' इति षष्ठ्या अलुक् । संयुक्तपुत्रः । सम्बन्धिपुत्रः । श्यालपुत्रः । ज्ञातिपुत्रः । पुत्रस्वरे प्रतिषिद्धे समासान्तोदात्तत्वमेव भवति ॥

### पदमञ्जरी

*नाचार्यराजर्त्विक्संयुक्तज्ञात्याख्येभ्यः* ॥ *संयुक्ताः स्त्रीसम्बन्धिनः श्यालादय इति* । योगरूढिरेषा तेषाम्, यथा सम्बन्धिशब्दः । *ज्ञातयो मातापितृसम्बन्धेन बान्धवा इति* । पितृसम्बन्धिष्वेव तु ज्ञातिशब्दो लोके प्रसिद्धः । आख्याग्रहणमाचार्यादिभिः प्रत्येकमभिसम्बध्यते । *भ्रातुष्पुत्र इति* । कस्कादिषु पाठात् षत्वम् ॥

### न्यासः

नाचार्यराजर्त्विक्संयुक्तज्ञात्याख्येभ्यः ॥ पूर्वेणाचार्यादिभ्योऽपि परस्य पुत्रशब्दस्याद्युदात्तत्वे प्राप्ते प्रतिषेधोऽयमुच्यते । तथा च समासान्तोदात्तत्वमेव भवति । आख्याग्रहणादित्यादि । आख्याग्रहणमाचार्यादिभिः प्रत्येकमभिसम्बध्यते । तथा चाख्याग्रहणेऽनिरस्ते तस्याचार्यादेः पर्यायाणां विशेषाणाञ्च ग्रहणं भवति । आचार्यपुत्र इति स्वरूपस्योदाहरणम् । उपाध्यायपुत्र इति पर्यायस्य । शाकटायनपुत्र इति विशेषस्य । राजपुत्र इति स्वरूपस्य । ईश्वरपुत्र इति पर्यायस्य । नन्दपुत्र इति विशेषस्य । ऋत्विक्पुत्र इति स्वरूपस्य । याजकपुत्र इति पर्यायस्य । होतुःपुत्र इति विशेषस्य । संयुक्तपुत्र इति स्वरूपस्य । सम्बन्धिपुत्र इति पर्यायस्य । स्यालपुत्र इति विशेषस्य । ज्ञातिपुत्र इति स्वरूपस्य । भ्रातुष्पुत्र इति विशेषस्य । 'कस्कादिषु च' इति षत्वम् । तत्राचार्यशब्दः कृत्स्वरेणान्तस्वरितः । स हि चरेराङ्पूर्वस्य ण्यति व्युत्पाद्यते । उपाध्यायशब्दोऽन्तोदात्तस्थाथादिस्वरेण, स 'इङश्च' इति घञन्तो व्युत्पाद्यते । राजशब्द आद्युदात्तः; कनिन्प्रत्ययान्तत्वात् । ईश्वरशब्दोऽन्तोदात्तः; 'स्थेशभास' इत्यादिना वरच्प्रत्ययान्तत्वात् । नन्दशब्दोऽप्यन्तोदात्तः; अजन्तत्वात् । ऋत्विग्शब्दः 'ऋत्विग्दधृक्' इत्यादिना क्विन्प्रत्ययान्तः । कृत्स्वरेणान्तोदात्तः । याजकशब्दो ण्वुलन्तः, तेन लित्स्वरेणाद्यु-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## चूर्णादीन्यप्राणिषष्ठ्याः ॥ १३४ ॥

'उत्तरपदादिः' इति वर्त्तते, 'तत्पुरुष' इति च। चूर्णादीन्युत्तरपदानि

पदमञ्जरी

चूर्णादीन्यप्राणिषष्ठ्याः ॥ 'चूरी दाहे' अस्मात् क्तः, चूर्णम्। 'वा गतिगन्धनयोः', 'पा रक्षणे'—आभ्यां करिशब्द उपपदे 'आतोऽनुपसर्गे कः', करिवम्, करिपम्[1]। महेरिनण्, बहुलवचनात् शकेरपि भवति—शाकिनम्, 'शकादिभ्योऽटच्', शकटम्, तद्वहतीति शकटादण्—शाकटम्। द्राक् क्षरति द्राक्षा, पृषोद-

न्यासः

दात्तः। होतृशब्दस्तृन्नन्तत्वादाद्युदात्तः। संयुक्तशब्दः 'गतिरनन्तरः' इत्याद्युदात्तः। 'स्यल वितर्के'[3]—अस्माच्चुरादिणिजन्तात् पचाद्यचि स्यालशब्दोऽन्तोदात्तः। 'ज्ञा' इत्यस्मात् 'क्तिच्क्तौ च संज्ञायाम्' इति ज्ञातिशब्दोऽन्तोदात्त 'तृन्तृचौ शंसिक्षदादिभ्यः' इति प्रकृत्य भ्रातृशब्दस्तृन्नन्तो व्युत्पाद्यते, तेनाद्युदात्तः। संयुक्तशब्दोऽयमस्त्येव रूढिशब्दो यो विवाहकृतेन सम्बन्धेन स्यालश्वशुरादिषु वर्तते, अस्ति क्रियाशब्दो यः सर्वत्र केनचित् सम्बन्धेन वर्तते; तत्रेह रूढिशब्दस्य ग्रहणम्। कुत एतत्? आचार्यादीनां पृथग्ग्रहणात्। यदि हि क्रियाशब्दस्य ग्रहणं स्यात्, तदा संयुक्तग्रहणेनैव निषिद्धत्वादाचार्यादीनां पृथग्ग्रहणं न कुर्यात्। तेऽपि हि विद्यादिकृतेन सम्बन्धेन संयुक्ता भवन्त्येव। तस्माद्रूढिशब्दस्य ग्रहणम्। तेन क्रियाशब्दो यः संयुक्तशब्दस्तस्मात् प्रतिषेधो न भवति ॥

चूर्णादीन्यप्राणिषष्ठ्याः ॥ 'चूरी दाहे', अस्मान्निष्ठा, तेन चूर्णमन्तोदात्तम्। करिणः पातीति 'आतोऽनुपसर्गे कः' पकारस्य पक्षे वकारो निपात्यते—करिपः, करिवः। कृत्स्वरेण थाथादिस्वरेण वान्तोदात्तः। 'महेरिनण् च', बहुलवचनाच्छकेरपि भवति, शाकिनम्, प्रत्ययस्वरेण मध्योदात्तम्। 'शकादिभ्योऽटच्' शकटम्। तद्वहतीति शकटादण् शाकटम्। प्रत्ययस्वरेणान्तोदात्तः। द्राग् द्रुतं क्षीयत इति द्राक्षा, पृषोदरादित्वात्। अन्तोदात्तोऽयं शब्दः। 'तुस ह्रस ह्लस रस शब्दे', ततो बहुलवचनाद् 'हसिमृग्रिण्वामिदमिलूपूधुर्विभ्यस्तन्' इति तन्, निपातनार्द्दीर्घश्च। तूस्तमाद्युदात्तम्। कुत्सितं दुनोतीति 'क्विब् वचिप्रच्छि' इत्यादौ सूत्रे क्विबिति योगविभागः। 'टुदु उपतापे' इत्यस्मादपि क्विप्, बहुलवचनादनित्यत्वाद्वागमशासनस्य तुगभावः, पूर्वपदस्य च बहुलवचनादेव मुम्—कुन्दु, तन्मिमीत इति 'माङ्माने' इत्यस्मात् कः, कुन्दुमोऽन्तोदात्तः। 'उषिकुटिदलिकचिखजिभ्यः कपन्' तेन दलप आद्युदात्तः। 'अत्यविचमितमिनमि' इत्यादिना असच्—चमसः, ततो जातिलक्षणो ङीष् चमसी। 'चक तृप्तौ'

१. क्वचिदिदं वाक्यं नास्ति।

२. पुल्लिङ्गपाठोऽप्यस्योदाहरणद्वयस्य पुस्तकान्तरे लभ्यते।

३. 'स्यम' इति युक्तः पाठः। अधिकं प्रस्तावनायाम्।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अप्राणिवाचिनः षष्ठ्यन्तात्पराणि तत्पुरुषे समासे आद्युदात्तानि भवन्ति । मुद्गचूर्णम् । मसूरचूर्णम् ।

अप्राणिषष्ठ्या इति किम् ? मत्स्यचूर्णम् । षष्ठ्या इति किम् ? परमचूर्णम् ।

चूर्ण । करिप । करिव । शाकिन । शाकट । द्राक्षा । तूस्त । कुन्दम । दलप । चमसी । चक्कन । चौल ।

'चूर्णादीन्यप्राण्युपग्रहात्' इति सूत्रस्य पाठान्तरम् । तत्र 'उपग्रह' इति षष्ठ्यन्तमेव पूर्वाचार्योपचारेण गृह्यते ॥

**षट् च काण्डादीनि ॥ १३५ ॥**

षट् पूर्वोक्तानि काण्डादीन्युत्तरपदानि अप्राणिषष्ठ्या आद्युदात्तानि

### पदमञ्जरी

रादिः । 'तुस शब्दे' ततो बहुलवचनात् क्तः, उपधादीर्घत्वं च । कुं दुनोति, कुत्सितं वा दुनोतीति क्विप्, अस्मादेव निपातनात्तुगभावः, पूर्वपदस्य च मुम्—कुन्दुं मिमीते कुन्दुमः । दलेः कपन्, दलपः । 'चमेरसच्' चमसः, ततो जातिलक्षणो ङीष्—चमसी । 'कनी दीप्तिकान्तिगतिषु'—अस्मात् पचाद्यच्, अस्मादेव निपातनाद् द्विर्वचनम्—चक्कनः । चकन इत्यन्ये पठन्ति, तत्रापि निपातनादेव रूपसिद्धिः । चोलस्यापत्यम् 'द्व्यचः' इत्यण्—चौलः । एते चूर्णादयः ।

*पूर्वाचार्योपचारेणेति* । उपचारः = प्रयोगः ॥

### न्यासः

इत्यस्मात् क्विप्, चक् । 'कनी दीप्तिकान्तिगतिषुः' तस्मादच्, कनः । चक्कनः । चोलस्यापत्यं चौलः, 'द्व्यच्मगध' इत्यादिनाण् । एते चूर्णादयः । मुद्गचूर्णमिति । 'मुदि ग्रोर्गग्गौ' इति मुद्गोऽन्तोदात्तः । मसूरचूर्णमिति । 'मसेरूरन्' मसूर आद्युदात्तः । मत्स्यचूर्णमिति । मत्स्यः प्रातिपदिकस्वरेणान्तोदात्तः

तत्रोपग्रह इति षष्ठ्यन्तमेवेति । अनेन तुल्यार्थतां सूत्रयोर्दर्शयति । कथं पुनरुपग्रहः षष्ठ्यन्तमेव गृह्यते ? इत्याह—पूर्वाचार्योपचारेणेति । पूर्वाचार्या हि षष्ठ्यन्तमुपग्रह इत्येवमुपचरन्ति स्म । तेनेह पूर्वाचार्य्योपचारेण हेतुना षष्ठ्यन्तमेवोपग्रह इति गृह्यते । समासस्वरापवादो योगः । एवमुत्तरेऽपि त्रयः ॥

षट् च काण्डादीनि ॥ 'चेलखेटकटुककाण्डम्' इत्यादिषु चतुर्षु योगेषु सन्निविष्टानि काण्डादीनि षट् गृह्यन्ते । यद्येवं तैरेव योगैरेषामाद्युदात्तत्वं सिद्धम्, तत् किमर्थमिदम् ? यत्र तैर्विहितं ततोऽन्यत्रापि यथा स्यात्, प्राणिषष्ठ्याश्च मा भूदित्येवमर्थञ्च ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



भवन्ति । 'काण्डं गर्हायाम्' इत्युक्तम्, अगर्हायामपि भवति – दर्भकाण्डम्, शरकाण्डम् । 'चीरमुपमानम्' इत्युक्तम्, अनुपमानमपि भवति – दर्भचीरम्, कुशचीरम् । 'पललसूपशाकं मिश्रे' इत्युक्तम्, अमिश्रेऽपि भवति – तिलपललम्, मुद्गसूपः, मूलकशाकम् । 'कूल संज्ञायाम्' इत्युक्तम्, असंज्ञायामपि भवति – नदीकूलम्, समुद्रकूलम् ।

षडिति किम् ? राजसूदः[1] ॥

कुण्डं वनम् ॥ १३६ ॥

'कुण्ड'–शब्दोऽत्र कुण्डसादृश्येन वने वर्त्तते । 'कुण्डम्' इत्येतदुत्तरपदं वनवाचि तत्पुरुषे समासे आद्युदात्तं भवति । दर्भकुण्डम् । शरकुण्डम् ।

वनमिति किम् ? मृत्कुण्डम् ॥

पदमञ्जरी

*कुण्डं वनम्* ॥ *कुण्डशब्दोऽत्रेत्यादि* । जनविशेषाभिधायी कुण्डशब्दस्तस्य नान्तरेण सादृश्यम्, ततोऽन्यत्र वने वृत्तिः सम्भवतीति भावः । अन्ये तु— वनेऽपि मुख्य एव कुण्डशब्द इत्याहुः । तत्र वनशब्देन विशेषणेन भाजनविशेषवाची निवर्त्यते, समुदायवाची चात्र वनशब्दः, न तूदकवाची, आह हि— कुण्डाद्युदात्तत्वे तत्समुदायग्रहणमिति, तच्छब्देन पूर्वपदार्थः परामृश्यते । अपर आह—'वनसमुदाये इति वक्तव्यम्, न तु वने' इति, तेन शरवणसमुदायः शरकुण्डशब्देनोच्यत इति ॥

न्यासः

दर्भकाण्डमिति । 'दृदलिभ्यां भः' इति भप्रत्ययान्तो दर्भशब्दोऽन्तोदात्तः । 'तृणधान्यानाञ्च द्व्यषाम्' इति वा । शरकाण्डमिति । शरशब्दोऽप्यनन्तरेणैव 'द्व्यषाम्' इत्याद्युदात्तः । एवं कुशशब्दोऽपि । तथा तिलशब्दोऽपि । पललमूलकशब्दावुक्तस्वरौ । नदडिति पचादिषु पठ्यते, तेन टित्वान्नदशब्दान् ङीप्, 'यस्येति च' इत्यकारलोपः, 'अनुदात्तस्य च यत्रोदात्तलोपः' इति ङीप उदात्तत्वम् । तेन नदीशब्दोऽन्तोदात्तः । 'पाटलापालङ्काम्बासागरार्थानाम्' इति फिषा समुद्रशब्दोऽन्तोदात्तः । राजसूद इति । सूदशब्दः षड्भ्यः परः पठ्यते । तेनात्र समासान्तोदात्तत्वमेव भवति । सर्वे च ते दर्भकाण्डादयः षष्ठीसमासाः ॥

कुण्डं वनम् ॥ कुण्डशब्दोऽत्र कुण्डसादृश्येन वने वर्तत इति । यथा कुण्डं

---

१. 'अप्राणषष्ठ्या इति किम् ? देवदत्तकाण्डः'—इत्यधिकं क्वचित् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



**प्रकृत्या भगालम् ॥ १३७ ॥**

भगालवाच्युत्तरपदं तत्पुरुषे समासे प्रकृतिस्वरं भवति । कुम्भीभगालम् । कुम्भीकपालम् । कुम्भीनदालम् । भगालादयो मध्योदात्ताः । 'प्रकृत्या' इत्येतदधिकृतम् 'अन्तः' इति यावद्वेदितव्यम् ॥

**शितेर्नित्याबह्वज् बहुव्रीहावभसत् ॥ १३८ ॥**

शितेरुत्तरपदं नित्यं यदबह्वज् भसच्छब्दवर्जितं बहुव्रीहौ समासे तत्प्रकृतिस्वरं भवति । शितिपादः । शित्यंसः । शित्योष्ठः । पादशब्दो वृषादित्वादाद्युदात्तः । अंसौष्ठशब्दौ च प्रत्ययस्य नित्त्वादाद्युदात्तौ ।

शितेरिति किम् ? दर्शनीयपादः । नित्यग्रहणं किम् ? शितिककुत् । ककुदस्यावस्थायां लोपो विधीयते । तत्रावस्थाया अन्यत्र शितिककुद इति बह्वजुत्तरपदं भवतीति तेन न नित्याबह्वच् । अबह्वजिति

**पदमञ्जरी**

*प्रकृत्या भगालम्* ॥ भगालमित्यर्थग्रहणमित्याह—*भगालवाचीति* । अत्र च व्याख्यानमेव शरणम् । *भगालादयो मध्योदात्ता इति* । 'लघावन्ते द्वयोश्च बह्वषो गुरुः' इति वचनात् ॥

*शितेर्नित्याबह्वज्बहुव्रीहावभसत्* ॥ अंसौष्ठशब्दावित्यादि । 'अम्' रोगे,

**न्यासः**

कस्यचिदुदकादेराश्रयस्तथा वनमपि । अतः कुण्डसादृश्येनात्र कुण्डशब्दो वने वर्तते । भवति हि सादृश्येन ताच्छब्द्यं यथा—अग्निर्माणवक इति । मृत्कुण्डमिति । अत्र कुण्ड आकारविशेषो मृद्विकारे वर्तते, न वने । तेन समासान्तोदात्तत्वमेव भवति ॥

प्रकृत्या भगालम् ॥ भगालमित्यर्थग्रहणम् ; अर्थप्रधानत्वान्निर्देशस्य । अर्थप्रधाने हि निर्देशे स्वरूपग्रहणं न भवतीत्युक्तम् । अर्थग्रहणे च सति तद्वाचिनामेतत् कार्यं विज्ञायते । अत एवाह —भगालवाचीत्यादि । कुम्भीभगालमिति । कुम्भीशब्दः 'जातेरस्त्रीविषयादयोपधात्' इति ङीषन्तत्वादन्तोदात्तः । भगालादयो मध्योदात्ता इति । 'लघावन्ते द्वयोश्च बह्वषो गुरुः' इति फिषैषामाकारस्योदात्तत्वविधानात् ॥

शितेर्नित्याबह्वज् बहुव्रीहावभसत् ॥ शितिपाद इति । शितिशब्दः 'वर्णानां तणतिनितान्तानाम्' इति फिषाद्युदात्तः । अंसौष्ठशब्दावित्यादि । 'अम रोगे' इत्यस्माद् 'अमः सन्' इति सन्प्रत्ययान्तोऽसशब्दो व्युत्पाद्यते । ओष्ठशब्दोऽपि 'उषिकुषिगार्तिभ्यस्थन्' इति थन्प्रत्ययान्तः । तेनैतौ प्रत्ययस्य नित्त्वादाद्युदात्तौ ।

दर्शनीयपाद इति । दर्शनीयशब्दोऽनीयर्-प्रत्ययान्तः । तेन 'उपोत्तमं रिति' इति

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



किम् ? शितिललाटः । बहुव्रीहाविति किम् ? शितेः पादः शितिपादः । अभसदिति किम् ? शितिभसद् । शितिशब्द आद्युदात्तः ।

पूर्वपदप्रकृतिस्वरापवादो योगः ॥

## गतिकारकोपपदात्कृत् ॥ १३९ ॥

'तत्पुरुषे' इति वर्त्तते, न 'बहुव्रीहौ' इति । गतेः कारकादुपपदाच्च कृदन्तमुत्तरपदं तत्पुरुषे समासे प्रकृतिस्वरं भवति । प्रकारकः । प्रकरणम् । प्रहारकः । प्रहरणम् । कारकात् – इध्मप्रव्रश्चनः । पलाशशातनः । श्मश्रुकल्पनः । उपपदात् – ईषत्करः । दुष्करः । सुकरः । सर्वत्रैवात्र लित्स्वरः ।

### पदमञ्जरी

अमेः सन् , असः; 'उष दाहे', 'उषिकुषिगार्त्तिभ्यस्थन्', ओष्ठः । दर्शनीयशब्दोऽनीयर्-प्रत्ययान्तो मध्योदात्तः । शितिशब्दः 'वर्णानां तणतिनितान्तानाम्' इत्याद्युदात्तः ॥

*गतिकारकोपपदात् कृत्* ॥ *प्रकारक इत्यादौ* 'कुगतिप्रादयः' इति समासः । *इध्मप्रव्रश्चनादौ* कर्मणि षष्ठ्याः समासः, करणे ल्युट् , इध्मं प्रवृश्च्यते येन सोऽत्र इध्मप्रव्रश्चनः, 'शद्‌लृ शातने', णिच् , 'शदेरगतौ तः' । पलाशानि शात्यन्ते येन स दण्डः *पलाशशातनः* । श्मश्रु कल्प्यते येन स क्षुरादिः *श्मश्रुकल्पनः* । 'कृपू सामर्थ्ये' ण्यन्तः, केवलो वा । *ईषत्कर इति* । एतदुपपदग्रहणस्य

### न्यासः

मध्योदात्तः । ततोऽत्र पूर्वपदस्य प्रकृतिस्वर एव भवति । एवमुत्तरेष्वपि प्रत्युदाहरणेषु । कथं पुनः ककुदशब्दो नित्यं बहुज् न भवति ? इत्याह—ककुदस्यावस्थायां लोप इत्यादि । शितिललाट इति । 'लल ईप्सायाम्', अस्माद् 'उणादयो बहुलम्' इत्याटप्रत्ययः, तेन ललाटशब्दो मध्योदात्तः ! शितिपाद इति । शितेः पाद इत्यत्र समासस्वर एव भवति । शितिभसदिति 'शृदृभसोऽदिः' इति भसच्छब्दो व्युत्पाद्यते ! ततोऽयमन्तोदात्तः ॥

गतिकारकोपपदात् कृत् ॥ प्रकारकः, प्रहारक इति । ण्वुल् । प्रकरणमित्यादिषु ल्युट् । ईषत्कर इत्यादिषु 'ईषद्दुःसुषु' इति खल् । यदत्राव्ययपूर्वपदं तत्र 'तत्पुरुषे तुल्यार्थ' इत्यादिना प्राप्तेऽव्ययस्वरे तदपवादार्थं वचनम् । अन्यत्र तु समासस्वरे प्राप्ते । प्रकारक इत्यादौ तु 'कुगतिप्रादयः' इति समासः । कारकादिति । षष्ठी तु 'कर्तृकर्मणोः कृति' इति कर्मणि कारके वेदितव्या । इध्मादयो हि व्रश्चनक्रियाया व्याप्तुमिष्टतमत्वात्

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


गतिकारकोपपदादिति किम् ? देवदत्तस्य कारको देवदत्तकारकः। देवदत्तस्येति शेषलक्षणा षष्ठी।

पदमञ्जरी

साक्षादुदाहरणम्। सुदुरोस्तु गतित्वादपि सिद्धम्, स्तम्बेरमादौ च कारकत्वात्। उच्चैःकृत्य, उच्चैःकारमित्यादिकमप्युपपदग्रहणस्यैवोदाहरणम्।

*देवदत्तस्येति शेषलक्षणा षष्ठीति*। न कर्मलक्षणा, तथा हि सति कारकमेव देवदत्तः स्यात्, 'तृजकाभ्यां कर्तरि च' इति समासप्रतिषेधप्रसङ्गश्च।

अथ कृद्ग्रहणं किमर्थम्? निर्गतः कौशाम्ब्याः निष्कौशाम्बिरित्यत्र मा भूत्। नैतदस्ति प्रयोजनम्, यत्क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञा भवन्ति, न च कौशाम्बीशब्दं प्रति क्रियायोगः, कारकमपि क्रियाया एव सम्भवति, उपपदमपि धात्वधिकारे सप्तमीनिर्दिष्टं प्रत्ययनिमित्तमुच्यते; तदेवं गत्यादिभिस्त्रिभिरपि क्रियावाच्युत्तरपदमाक्षिप्यते, धातुश्च क्रियावाची, धातोश्च द्वये प्रत्ययाः—कृतः, तिङश्च; तत्र तिङन्ते समासाभावात्कृदन्तमेव सम्भवतीति; अनुव्यचलदित्यत्र तु न गतित्वनिबन्धनः समासः, किं तर्हि? सुबिति योगविभागनिबन्धनः? धातुप्रत्ययसमुदायपरिग्रहार्थं तु; अन्यथा यत्क्रियायुक्तास्तं प्रतीति वचनाद्धातुमेव प्रति गतित्वाद्धातावेवोत्तरपदे स्वरः स्यात्—प्रणीः, उन्नीरिति; इह न स्यात्—प्रणायकः, उन्नायक इति।

एतदपि नास्ति प्रयोजनम्; 'यत्क्रियायुक्ताः' इति नैवं विज्ञायते—यस्य क्रिया यत्क्रिया यत्क्रियायुक्तास्तं प्रतीति, एवं विज्ञायमाने त्वन्वयव्यतिरेकाभ्यां धातोरेव क्रिया वाच्येति तमेव प्रति गत्युपसर्गसंज्ञाप्रसङ्गः, कथं तर्हि विज्ञायते? या

न्यासः

कर्मभावमनुभवन्ति। ईषत्कर इत्यादौ तु 'उपपदमतिङ्' इति समासः। तत्र प्रशब्दः 'उपसर्गाश्चाभिवर्जम्' इत्याद्युदात्तः। इध्मशब्दो हि 'इषियुधीन्धि' इत्यादिना मक्प्रत्ययान्तत्वादन्तोदात्तः। 'शो तनूकरणे', पलं श्यतीति 'आतोऽनुपसर्गे कः'। पलाशः कृत्स्वरेण थाथादिस्वरेण वान्तोदात्तः। शदेर्णिजन्तस्य 'शदेरगतौ तः' इति तकारे कृते ल्युटि शातन इति भवति। 'श्मनि श्रयतेर्डुन्' इति नित्स्वरेण श्मश्रुशब्द आद्युदात्तः। 'कृपू सामर्थ्ये' इत्यस्य ल्युटि 'कृपो रो लः' इति लत्वे कृते कल्पन इति भवति। ईषच्छब्दोऽन्तोदात्तः; स्वरादिषु तथाभूतेषु तथाभूतस्यैव पाठात्। सुदुरावाद्युदात्तौ; प्रादिषु तथाभूतयोः पाठात्। सर्वत्रैवात्र लित्स्वर इति। स पुनः प्रत्ययात् पूर्वस्योदात्तत्वम्।

देवदत्तस्येति शेषलक्षणा षष्ठीति। कर्मणि षष्ठीत्वं निराकरोति। कर्मषष्ठ्यां ह्यस्यां कारकमेव देवदत्तः स्यात्, तथा च प्रत्युदाहरणं नोपपद्यते।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


कृद्ग्रहणं विस्पष्टार्थम् । प्रपचतितराम्, प्रपचतितमाम् – इत्यत्र तरबाद्यन्तेन समासे कृते पश्चादाम्, तत्र सतिशिष्टत्वादाम एव स्वरो भवतीत्येके ।

पदमञ्जरी

क्रिया यत्क्रिया तं क्रियालक्षणमर्थं प्रतिगत्युपसर्गसंज्ञे भवतः, केवलायाश्च क्रियाया वाचकमुत्तरपदं नास्तीति क्रियाविशिष्टसाधनवाचिनि प्रणीः, प्रकारक इत्यादौ क्रियायां सिद्धताभिधायिनि, प्रभवनमित्यादौ च सर्वत्र भविष्यतीति नार्थ एतेन कृद्ग्रहणेन ? अत आह– *कृद्ग्रहणं विस्पष्टार्थमिति* । य एवं प्रतिपत्तुमसमर्थस्तं प्रति विस्पष्टार्थं क्रियत इत्यर्थः ।

यदि तर्हि विस्पष्टार्थमपि तावत्कृद्ग्रहणं क्रियते, आमन्ते तर्हि न प्राप्नोति— प्रपचतितराम्, प्रपचतितमामिति, ततश्च समासस्वरं बाधित्वाऽव्ययस्वर एव स्यात् इत्यत आह—*प्रपचतितरामित्यादि* । अत्र हि प्रशब्दस्य तरबन्तेन समासः, नामन्तेन । कथम् ? अन्तरङ्गत्वाद्धातुः पूर्वमुपसर्गेण युज्यते, प्रपचित्यस्यामवस्थायां सुबभावात् समासो न कृत इत्येतावत्, ततस्तिङ्, तस्यामप्यवस्थायां सुबभावः, ततस्तरप्, तद्धितान्तत्वात्सुप्, तेन समासः, ततश्चाम्प्रत्ययः, तत आम्स्वरः सतिशिष्टः । कथं पुनस्तरबन्तेन समासः ? कथं च न स्यात् ? 'गतिकारकोपपदानां कृद्भिः सह समासवचनम्' इति वचनात्; नात्र कृद्भिरेव समास इति नियम्यते, किं तर्हि ? यदि गत्यादीनां समासो भवति तेनतेन लक्षणेन, तदा कृद्भिः प्राक् सुबुत्पत्तेरिति; ननु चैवमपि तरबन्तेन समासो न लभ्यते, किं कारणम् ? असुबन्तत्वात्; प्रातिपदिकाधिकाराद्धि तत एव 'किमेत्तिङव्ययघात्' इत्याम् भवति, न सुबन्तात्, न च गतिकारकोपपदानामित्येतदस्ति,

न्यासः

अथ कारकग्रहणं किमर्थम्, निर्गतः कौशाम्ब्या निष्कौशाम्बिरित्यत्र मा भूदिति चेत् ? नैतदस्ति; तथा हि– यत्क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञा भवन्ति, न हि कौशाम्बीशब्दः क्रियावाचो, तत् कुतस्तं प्रति निसोऽत्र गतिसंज्ञा ? इत्यत आह— कृद्ग्रहणं विस्पष्टार्थमिति । यदि तर्हि कृद्ग्रहणं क्रियते, प्रपचतितरामित्यत्र प्रकृतिस्वरो न प्राप्नोति । ततश्च समासस्वरं बाधित्वाव्ययस्वर एव स्यात् ? इत्यत आह—प्रपचतितरामित्यादि । अत्र हि पचतिशब्दादतिशयविवक्षायां तरप्तमपौ । ततस्तरबाद्यन्ते 'कुगतिप्रादयः' इति प्रशब्दस्य समासः । समासे तु कृते पूर्वपदस्य 'तत्पुरुषे तुल्यार्थ' इत्यादिना प्रकृतिस्वरः । पश्चात् 'किमेत्तिङव्यय' इत्यादिनामुः । आमन्तस्य च 'आद्युदात्तश्च' इति प्रत्ययस्वरः प्राप्तः, सोऽव्ययस्वरे सति सतिशिष्टः, सतिशिष्टस्य च बलीयस्त्वमुक्तम् । तेन यद्यप्यनेनामन्तस्य कृद्ग्रहणे क्रियमाणे सति प्रकृतिस्वरो भवति,

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रपचतिदेश्याद्यर्थं तु कृद्ग्रहणं दृश्यत एव ॥

पदमञ्जरी

अकृदन्तत्वात् ? अत्राहुः—'घकालतनेषु' इति ज्ञापकात्सुबन्तादेव सर्वे तद्धिताः, ङ्याप्प्रातिपदिकग्रहणं तु वृद्ध्याद्यर्थमेवाधिक्रियते, ततश्चामुत्पत्तये यः सुप् तदन्तेन समास इति। अपर आह—'कुगतिप्रादयः' इत्यत्रातिङिति वक्ष्यमाणस्य प्रतिकर्षादुत्तरपदमसुबन्तमेव समस्यते, ततश्च तरबन्तेन समासो लभ्यत इति।

इत्येक इति। अस्य कृद्ग्रहणं विस्पष्टार्थम्, न चामन्ते दोषप्रसङ्ग इत्येवं केचिद्व्याचक्षते।

*प्रपचतिदेश्याद्यर्थं त्वित्यादि*। तुशब्दः पक्षं व्यावर्तयति। आदिशब्देन प्रपचतिकल्पम्, प्रपचतिदेशीयम्, प्रपचतिरूपमित्येतेषां ग्रहणम्। प्रपचतिदेश्यादावर्थः प्रयोजनं यस्य तत्तथोक्तम्। एतदुक्तं भवति—'न विस्पष्टार्थं कृद्ग्रहणम्, अपि तु प्रपचतिदेश्यादौ यत्र सतिशिष्टस्वरान्तरं नास्ति, तत्रायं स्वरो मा भूद्, अव्ययपूर्वपदप्रकृतिस्वर एव यथा स्यादित्येवं सप्रयोजनं दृश्यते' इति। इदं तु वक्तव्यम्—प्रपचतितरामित्यादौ तरबन्तेन समासे पश्चादाम् भवन् प्रत्ययग्रहणपरिभाषया पचतितरशब्दस्यैव घान्तत्वात् तत एव स्यात्। तत्र को दोषः ? सोपसर्गस्य सङ्घातस्यैकपद्याभावाद् आम्प्रपचतितरां देवदत्तेत्यादौ 'आम एकान्तरमामन्त्रितमनन्तिके' इत्येष विधिर्न स्यात्, शेषनिघातश्च प्रशब्दस्य न स्यात्; भिन्नपदत्वात्। तस्मात् प्रशब्दस्यामन्तेन समासोऽङ्गीकर्तव्यः, न तरबन्तेन। तत्र समासत्वात् समुदायस्य प्रातिपदिकत्वे विभक्त्यावैकपद्यं भवति। स्वरे तु दोषप्रसङ्गात् कृद्ग्रहणमपि त्यक्तव्यमिति *भाष्ये* स्थितम्, प्रपचतिदेशीयादौ का गतिरिति न विद्मः॥

न्यासः

तथाप्याम्स्वरो भवत्येव; तस्य सतिशिष्टत्वात्। अथ कथं तरबाद्यन्तेन समासः ? कथञ्च न स्यात् ? 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेः' इति वचनात् ? नैष दोषः; अत्र हि द्वे दर्शने गतिकारकोपदात् कृद्भिरेव समासो भवति, स च प्राक् सुबुत्पत्तेरित्येकं दर्शनम्; गतिकारकोपपदानामविशेषेण समासो भवति, कृद्भिस्तु प्राक् सुबुत्पत्तेरिति द्वितीयम्। तत्र द्वितीये दर्शने युज्यत एव तरबाद्यन्तेन समासः। तत्र कृद्ग्रहणं विस्पष्टार्थमित्यनेन सम्बद्धम्। एक आचार्याः कृद्ग्रहणं विस्पष्टार्थमित्येव व्याचक्षत इत्यर्थः।

प्रपचतिदेश्याद्यर्थं त्वित्यादि। तुशब्दः पूर्वस्माद् व्याख्यानाद् विशेषद्योतनाय। प्रपचतिदेश्य आदिर्यस्य स प्रपचतिदेश्यादिः। आदिशब्देन प्रपचतिदेशीय इत्यस्य

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


## उभे वनस्पत्यादिषु युगपत् ॥ १४० ॥

'प्रकृत्या' इति वर्त्तते । वनस्पत्यादिषु समासेषु उभे पूर्वोत्तरपदे युगपत् प्रकृतिस्वरे भवतः । वनस्पतिः । वन-पतिशब्दावाद्युदात्तौ, पारस्करप्रभृतित्वात् सुट् ।

बृहस्पतिः । बृहतां पतिः, 'तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च' इति सुट्, तकारलोपश्च । बृहदित्येतदन्तोदात्तं निपातयन्ति । तस्य केचिदाद्युदात्तत्वं वर्णयन्ति ।

शचीपतिः । शचीशब्दः 'कृदिकारादक्तिनः' इति ङीषन्तत्वादन्तोदात्तः । केचित्तु शार्ङ्गरवादिषु पठन्ति, तेषामाद्युदात्तः ।

तनूनपात् । तनोतेरौणादिक ऊप्रत्ययः, तेन तनूशब्दोऽन्तोदात्तः । न पाति न पालयति वा नपात्, क्विबन्तः 'नभ्राण्नपात्' इत्यादिना-ऽऽद्युदात्तो निपातितः । तन्वा नपात्, तनूनपात् ।

### पदमञ्जरी

*उभे वनस्पत्यादिषु युगपत्* ॥ वनशब्दः 'नब्विषयस्यानिसन्तस्य' इत्याद्युदात्तः, 'पातेर्डतिः' पतिः ।

*तनुशब्दोऽन्तोदात्त इति* । केचित्तु तस्याप्याद्युदात्तत्वमत्र निपातयन्ति, तथा च 'तनूनपादुच्यते गर्भ आसुरः' इत्याद्युदात्तमधीयते ।

### न्यासः

ग्रहणम् । प्रपचतिदेश्यादावर्थः प्रयोजनं यस्य तत् प्रपचतिदेश्याद्यर्थम् । कृद्ग्रहणं दृश्यत इति । एवम् 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' इत्यत्र 'तिङश्च' इत्यनुवृत्तेः प्रपचतिशब्दाद् देश्यदेशीयरौ । तदन्तेन च प्रशब्दस्य गतिसमासे कृद्ग्रहणं न क्रियेत । तथा प्रपचतिदेश्यः, प्रपचतिदेशीय इत्यत्राप्युत्तरपदस्य प्रकृतिस्वरः स्यात्, न चेष्यते । तस्मादिह मा भूदित्येवमर्थं कृद्ग्रहणं दृश्यत एव । तस्मादेतन्न विस्पष्टार्थम् । तदपि तु प्रपचतिदेश्य इत्यादौ विषये मा भूदित्येवमर्थमित्यभिप्रायः ॥

उभे वनस्पत्यादिषु युगपत् ॥ वनशब्दः 'नब्विषयस्यानिसन्तस्य' इत्याद्युदात्तः । पतिशब्दोऽपि प्रत्ययस्वरेण । स हि 'पातेर्डतिः' इति डतिप्रत्ययान्तः । बृहदित्यन्तोदात्तमित्यादि । बृहच्छब्दः 'वर्त्तमाने पृषद्बृहन्महज्जगच्छतृवच्च' इति केवलमन्तोदात्तो यद्यपि निपात्यते, तथापि बृहस्पतिरित्यत्राद्युदात्तत्वं निपातयति- ।

तनोतेरौणादिक ऊप्रत्यय इति । 'कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः' इत्यनेन



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


नराशंसः । नरा अस्मिन्नासीनाः शंसन्ति नरा एवं शंसन्तीति वा नराशंसः । 'नृ नये', अबन्तो नरशब्द आद्युदात्तः । शंसशब्दोऽपि घञन्तः, 'अन्येषामपि दृश्यते' इति दीर्घत्वम् ।

शुनःशेपः । शुन इव शेपोऽस्येति बहुव्रीहिः । तत्र 'शेपपुच्छलाङ्गूलेषु शुनः संज्ञायाम्' इति षष्ठ्या अलुक् । उभावाद्युदात्तौ ।

शण्डामर्कौ । शण्ड-मर्कशब्दौ घञन्तत्वादाद्युदात्तौ । तयोर्द्वन्द्वे 'अन्येषामपि दृश्यते' इति दीर्घत्वम् ।

पदमञ्जरी

*नरा अस्मिन्नित्यादि* । शंसेः 'अकर्तरि च कारके संज्ञायाम्' इत्यधिकरणे वा घञ् । *अबन्त इति* । 'कृत्यल्युटो बहुलम्' इति कर्तरि 'ऋदोरप्' ।

*शुनःशेप इति* । बहुव्रीहिः । 'शुनः पुच्छशेपलाङ्गूलेषु' इत्यनेन षष्ठ्या अलुक् । *उभावाद्युदात्ताविति* । श्वन्शब्दः प्रातिपदिकस्वरेण, शेपशब्दः 'स्वाङ्गशिटामदन्तानाम्' इत्यनेन । 'शिट्' इति सर्वादीनां संज्ञा, स्वाङ्गवाचिनां शिटामदन्तानां चादिरुदात्तो भवतीत्यर्थः । 'शडि रुजायाम्' पचाद्यच् शण्डः, ग्रामादित्वादाद्युदात्तः ।

मर्चयतेः 'इण्भीकापाशल्यतिमर्चिभ्यः कन्' इति कन्, 'तितुत्र' इत्यादिना इट्प्रतिषेधः, कुत्वम्—मर्कशब्द आद्युदात्तः ।

न्यासः

तनूशब्दोऽन्वोदात्तः । न पाति न पालयतीत्यनेन 'पा रक्षणे' इत्यस्मान्नपादित्येतन्निपात्यत इति दर्शयति । न पातयतीत्यनेनापि । 'नलोपो नञः' इति नलोपः प्राप्नोति, 'न भ्रान्नपात्' इत्यादिना प्रकृतिभावान्न भवति ।

नरा अस्मिन्नासीनाः शंसन्तीति । एतेनाधिकरणसाधनं शंसशब्दं दर्शयति । एवं शंसन्तीत्यनेनापि कर्मसाधनम् । 'शंस स्तुतौ' इत्यस्माद् 'अकर्त्तरि च कारके' इति घञ् । अबन्त इति । 'ऋदोरप्' इत्यनेन ।

शुनःशेप इति । बहुव्रीहिरयम् । तेनात्र पूर्वपदस्य प्रकृतिभावे प्राप्ते वचनम् । उभावाद्युदात्ताविति । तत्र श्वन्शब्दः 'श्वन्नुक्षन्' इत्यादिना कनिन्प्रत्ययान्तो व्युत्पाद्यते । शेपशब्दो 'वृङ्शीङ्भ्यां रूपस्वाङ्गयोः पुट् च' इत्यसुन्प्रत्ययान्तो व्युत्पाद्यते, तेन द्वावपि तावाद्युदात्तौ ।

शण्डपर्कशब्दाविति । 'शडि रुजायाम्' इत्यस्य घञि शण्ड इति भवति । 'पृची सम्पर्के' इत्यस्यापि तत्रैव पर्क इति भवति ।

---

१. अयं चार्वैदिकः पाठः ।

Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तृष्णावरूत्री । तृष्णाशब्द आद्युदात्तः, वरूत्रीशब्दो ग्रसितादिसूत्रे निपातितोऽन्तोदात्तः । तत्र द्वन्द्वे दीर्घत्वं पूर्ववत् ।

बम्बाविश्ववयसौ । बम्बशब्दोऽन्तोदात्तः । विश्ववयःशब्दोऽपि 'बहुव्रीहौ विश्वं संज्ञायाम्' इति विश्वशब्दोऽन्तोदात्तः । तयोर्द्वन्द्वे दीर्घत्वं पूर्ववत् ।

मर्मृत्युः । मरिति मृञो विच्प्रत्ययः । मृत्युशब्दोऽन्तोदात्तः ।

द्वन्द्वानामदेवताद्वन्द्वार्थः, अनुदात्ताद्युत्तरपदार्थश्च वनस्पत्यादिषु पाठः ॥

## देवताद्वन्द्वे च ॥ १४१ ॥

देवतावाचिनां यो द्वन्द्वस्तत्र युगपदुभे पूर्वोत्तरपदे प्रकृतिस्वरे

पदमञ्जरी

*तृष्णाशब्द इति* । तृषेर्निष्ठायामस्मादेव निपातनादिडभावः, 'निष्ठा च द्व्यजनात्' इत्याद्युदात्तत्वम् ।

'लबि अवस्रंसने', पचाद्यच्, अस्मादेव निपातनाल्लकारस्य बकारः, विश्वानि वयांस्यस्य विश्ववयाः, मृङः 'अन्येभ्योऽपि दृश्यते' इति विच्— *मरिति* । 'भुजिमृङ्भ्यां युक्त्युकौ'—मृत्युः ॥

न्यासः

तृष्णाशब्द आद्युदात्त इति । स हि तृषेर्निष्ठायां व्युत्पाद्यते । तेन 'निष्ठा च द्व्यजनात्' इत्याद्युदात्तः ।

बम्बशब्द इति । 'लबि अवस्रंसने', अस्य पचाद्यचि व्युत्पादित्वादस्मादेव निपातनाद्बत्वम् । विश्ववयःशब्द इति । विश्वं वयो यस्येति बहुव्रीहिः । तत्र 'बहुव्रीहौ विश्वं संज्ञायाम्' इति विश्वशब्दोऽन्तोदात्तः । तयोरिति । बम्बविश्ववयःशब्दयोः ।

मृङो विच्प्रत्यय इति । 'विजुपे छन्दसि' इत्यतो विजित्यनुवर्तमाने 'अन्येभ्योऽपि दृश्यते' इति विच् । मृत्युशब्दोऽन्तोदात्त इति । 'भुजिमृङ्भ्यां युक्त्युकौ' इति त्युक्प्रत्ययान्तत्वात् ।

द्वन्द्वानामित्यादि । येऽत्र द्वन्द्वाः, तेषामदेवताद्वन्द्वार्थः पाठः । देवताद्वन्द्वे हि 'देवताद्वन्द्वे च' इत्यनेनैव सिद्धम् । अनुदात्ताद्युत्तरपदार्थश्चेति । द्वन्द्वानां पाठः । यदि हि तेषामिह पाठो न स्यात्, तदा 'नोत्तरपदेऽनुदात्तादौ' इति प्रतिषेधादन्तोदात्तत्वं स्यात् ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



भवतः। इन्द्रासोमौ। इन्द्रावरुणौ। इन्द्राबृहस्पती। 'ऋज्रेन्द्राग्र' इति इन्द्रशब्द आद्युदात्तो निपातितः[1]। सोम इति मन्प्रत्ययान्तः। वरुण उनन्प्रत्ययान्तः, तेनाद्युदात्तः। बृहस्पतिशब्दे वनस्पत्यादित्वाद् द्वावुदात्तौ, तेन इन्द्राबृहस्पती – इत्यत्र त्रय उदात्ता भवन्ति।

देवताग्रहणं किम्? प्लक्षन्यग्रोधौ। द्वन्द्वग्रहणं किम्? अग्निष्टोमः॥

**नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु ॥ १४२ ॥**

उत्तरपदेऽनुदात्तादौ पृथिवीरुद्रपूषमन्थिवर्जिते देवताद्वन्द्वे नोभे युगपत्प्रकृतिस्वरे भवतः। इन्द्राग्नी। इन्द्रवायू। अग्नि-वायुशब्दावन्तोदात्तौ।

पदमञ्जरी

देवताद्वन्द्वे च॥ उदाहरणेषु 'देवताद्वन्द्वे च' इति पूर्वपदस्यानङ्। *अत्र त्रय उदात्ता इति*। त्रयाणां पदानामाद्यः॥

*नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु*॥ अग्निशब्दः 'अङ्गेर्निर्नलोपश्च' इति निप्रत्ययान्तः। 'कृवापाजिमिस्वदिसाध्यशूभ्य उण्', युक्, वायुः।

न्यासः

देवताद्वन्द्वे च॥ इन्द्रासोमाविति। 'देवताद्वन्द्वे च' इति पूर्वपदस्यानङ्। ऋज्रेन्द्रेत्यादि। 'वृधिवपिभ्यां रन्' इत्यतो रन्नित्यनुवर्त्तमाने 'ऋज्रेन्द्र' इतीन्द्रशब्दो रन्प्रत्ययान्तो निपात्यते, तेनाद्युदात्तः। सोम इति मन्प्रत्ययान्त इति। तेन सोऽप्याद्युदात्त एवेत्यभिप्रायः। मन्प्रत्ययान्तत्वं च तस्य 'षुञ् अभिषवे' इत्यस्माद् 'अर्त्तिस्तुसुहुसृ' इत्यादिना मन्प्रत्ययमुत्पाद्य व्युत्पादितत्वात्। वरुण उनन्प्रत्ययान्त इति। 'कृवृदारिभ्य उनन्' इति। बृहस्पतिशब्दो हि वनस्पत्यादिषु पठ्यते, तत्र च पूर्वोत्तरपदयोर्युगपदाद्युदात्तत्वं विधीयते, तेन द्वावुदात्तौ। तेनेन्द्राबृहस्पती इत्यत्र त्रय उदात्ता इति। इन्द्रशब्दादयः।

प्लक्षन्यग्रोधाविति। अत्र समासान्तोदात्तत्वमेव भवति। एवमग्निष्टोम इत्यत्रापि। षष्ठीसमासश्चायम्। समासस्वरापवादो योगः॥

नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु॥ अग्निवायुशब्दावन्तोदात्ताविति। अग्निशब्दः 'वीज्याज्वरिभ्यो निः' इति वर्तमाने 'अङ्गेर्नलोपश्च' इति निप्रत्य-

---

1. 'निपातितः' इति क्वचिन्नास्ति।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



उत्तरपदग्रहणम् 'अनुदात्तादौ' इत्युत्तरपदविशेषणं यथा स्याद्, द्वन्द्वविशेषणं मा भूदिति ।

'अनुदात्तादौ' इति विधिप्रतिषेधयोर्विषयविभागार्थम् ।

अपृथिव्यादिष्विति किम् ? द्यावापृथिव्यौ । द्यावाशब्द आद्युदात्तो निपातितः । पृथिवीशब्दो ङीष्प्रत्ययान्तत्वादन्तोदात्तः[1] ।

रुद्र — सोमारुद्रौ । 'रोदेर्णिलुक्च' इति रुद्रशब्दो रक्प्रत्ययान्तोऽन्तोदात्तः ।

पदमञ्जरी

*उत्तरपदग्रहणमित्यादि* । अन्यथाऽस्मिन्प्रकरणे द्वन्द्वः सप्तम्या निर्दिष्टः, नोत्तरपदम्; तत्र 'अनुदात्तादौ' इति सप्तम्यन्तं द्वन्द्वस्यैव विशेषणं स्यात्, ततश्चन्द्रसूर्यावित्यादौ प्रतिषेधः स्यात् । उत्तरपदग्रहणे तु सति तस्यैव श्रुतस्य 'अनुदात्तादौ' इत्येतद्विशेषणं भवति ।

*अनुदात्तादावित्यादि* । अन्यथा विधिप्रतिषेधयोः समानविषयत्वाद्विकल्पः स्यात्ः

न्यासः

यान्तः । वायुशब्दोऽपि 'कृवापाजि' इत्यादिनोण्प्रत्ययान्तः, तेन प्रत्ययस्वरेण द्वावप्यन्तोदात्तौ ।

अथोत्तरपदग्रहणं किमर्थम्, यावता 'अनुदात्तादौ' इति सप्तम्येवात्रानुदात्तादेरुत्तरपदत्वं बोधयिष्यति ? इत्यत आह—उत्तरपदग्रहणमित्यादि । इह हि प्रकरणे द्वन्द्वः सप्तम्या निर्दिष्टः, नोत्तरपदम् । तत्रानुदात्तादाविति सप्तमी द्वन्द्वस्यैव विशेषणमापद्यते— अनुदात्तादौ द्वन्द्वे स्वरोऽयं न भवतीति, ततश्चेह प्रतिषेधः स्यात्— चन्द्रसूर्याविति । चन्द्रशब्दस्यान्तोदात्तत्वादनुदात्तादिरयं द्वन्द्वः । उत्तरपदग्रहणे तु सति द्वन्द्वे सप्तम्यां विहितायामनुदात्तावित्येतदुत्तरपदस्य विशेषणं सम्पद्यते । तस्मादुत्तरपदविशेषणमेतद् यथा स्याद्, द्वन्द्वविशेषणं मा भूदित्येवमर्थमुत्तरपदग्रहणम् ।

अनुदात्तादाविति । असत्येतस्मिन् विशेषणे विधिरपि देवताद्वन्द्व उच्यते, प्रतिषेधोऽपि, ततश्च तयोर्विषयविभागो न स्यात्; एवञ्च समानविषयत्वाद्विकल्पः प्रसज्येत । अनुदात्तादावित्यस्मिंस्तु सति यत्रानुदात्ताद्युत्तरपदो देवताद्वन्द्वस्तत्र प्रतिषेधः स्यात्, ततोऽन्यस्तु विधिरिति विधिप्रतिषेधयोर्विषयविभागो भवति । अतो विषयविभागार्थमनुदात्तादावित्युच्यते ।

पृथिवीशब्दो ङीष्प्रत्ययान्त इति । गौरादिषु पाठात् ।

रोदेर्णिलुक् चेति । 'रुदिर् अश्रुविमोचने' इत्यस्माण्ण्यन्तात् 'स्फायितञ्चि' इत्यादिसूत्राद्रगित्यनुवर्तमाने 'रोदेर्णिलुक्च' इति रक्, तेन रुद्रोऽन्तोदात्तः ।

---

१. 'ङीषन्तोऽन्तोदात्तः' इति पाठान्तरम् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पूषन्—इन्द्रापूषणौ । 'श्वन्नुक्षन्पूषन्' इति पूषान्तोदात्तो निपात्यते ।

मन्थिन् – शुक्रामन्थिनौ । मन्थोऽस्यास्तीति मन्थी, इन्नन्तत्वादन्तोदात्तः । पृथिव्यादिषु तु उभे युगपत् प्रकृतिस्वरे भवत एव ॥

अन्तः ॥ १४३ ॥

'अन्तः' इत्यधिकारः । यदित ऊर्ध्वमनुक्रमिष्यामस्तत्र समासस्योत्तरपदस्यान्त उदात्तो भवतीत्येवं तद्वेदितव्यम् । वक्ष्यति – 'थाथघञ्क्ताजबित्रकाणाम्' इति । सुनीथः । अवभृथः' ॥

थाथघञ्क्ताजबित्रकाणाम् ॥ १४४ ॥

थ, अथ, घञ्, क्त, अप्, इत्र, क – इत्येवमन्तानामुत्तरपदानां गतिकारकोपपदात्परेषामन्त उदात्तो भवति । सुनीथः । अवभृथः । 'हनिकुषिनीरमिकाशिभ्यः क्थन्' इति 'भवे भृञः' इति च क्थन्प्रत्ययान्तावेतौ । तत्र कृदुत्तरपदप्रकृतिस्वरत्वेनाद्युदात्तमुत्तरपदं स्यात् ।

अथ – आवसथः । उपवसथः । 'उपसर्गे वसेः' इत्यथन्प्रत्ययः ।

घञ् – प्रभेदः । काष्ठभेदः । रज्जुभेदः ।

क्त – दूरादागतः । विशुष्कः । आतपशुष्कः ।

पदमञ्जरी

प्रसज्येत । 'प्रथेः षिवन् सम्प्रसारणं च' । शुक्रशब्दोऽयम् 'ऋज्रेन्द्राग्र' इत्यादिना निपातितोऽन्तोदात्तः ॥

*अन्तः ॥ तत्र समासस्योत्तरपदस्येति* । क्वचित् समासस्यान्त उदात्तो भवति, क्वचिदुत्तरपदस्येत्यर्थः । विषयविभागमुत्तरत्र दर्शयिष्यति ॥

*थाथघञ्क्ताजबित्रकाणाम् ॥ आद्युदात्तमुत्तरपदं स्यादिति* । यदीदं नोच्येतेति भावः ।

*दूरादागत इति* । अत्र कर्मणि क्तः, ग्रामादिरभिधेयः, कृता आङो मति

न्यासः

शुक्रामन्थिनाविति । शुक्रशब्दः 'ऋज्रेन्द्र' इत्यादिना रन्प्रत्ययान्तः, तेनाद्युदात्तः ॥

अन्तः ॥ थाथघञ्क्ताजबित्रकाणाम् ॥ अत्र कृदुत्तरपदप्रकृतिस्वरत्वेनाद्युदात्तमुत्तरपदं स्यादिति । यदीदं नारभ्येतेति भावः ।

उपसर्गे वसेरित्यथप्रत्यय इति । तत्र 'शीङ्शपिरुगमिवञ्चि' इत्यादिना थप्रत्ययानुवृत्तेः कृदुत्तरपदप्रकृतिस्वरत्वेन मध्योदात्तमुत्तरपदं स्यात् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


अच् — प्रक्षयः । प्रजयः । 'क्षयो निवासे', 'जयः करणम्' इति आद्युदात्तौ क्षयजयशब्दौ प्रयोजयतः ।

अप् — प्रलवः । प्रसवः ।

इत्र — प्रलवित्रम् । प्रसवित्रम् ।

पदमञ्जरी

समासे 'गतिरनन्तरः' इति प्रकृतिभावे चागत इत्याद्युदात्तम्, तेन 'स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन' इति समासः, 'पञ्चम्याः स्तोकादिभ्यः' इत्यलुक्, तत्र कारकात्परमागतमित्येतत् कृदुत्तरपदप्रकृतिस्वरेणाद्युदात्तं स्यात् । *विशुष्क इति* । शुषेरकर्मकत्वात् कर्तरि क्तः, 'शुष्कधृष्टौ' इत्याद्युदात्तत्वम्, ततो गतिसमासः । *आतपशुष्क इति* । नायम् 'सिद्धशुष्क' इति सप्तमीसमासः; 'सप्तमी सिद्धशुष्कपक्वबन्धेष्वकालात्' इति पूर्वपदप्रकृतिस्वरप्रसङ्गात् । तस्मात् 'कर्तृकरणे कृता बहुलम्' इति समासः ।

*प्रक्षयः, प्रजय इति* । 'एरच्' । ननु च कृदुत्तरपदप्रकृतिस्वरेणैवात्रान्तोदात्तत्वं सिद्धम् ? अत आह—*क्षयो निवास इत्यादि* ।

*प्रलवः प्रसव इत्यादि* । 'ऋदोरप्' ।

*प्रलवित्रमिति* । 'अर्त्तिलूधूसूखनसहचर इत्रः' ।

न्यासः

दूरादागत इति । गमेः क्तः, 'अनुदात्तोपदेश' इत्यादिनाऽनुनासिकलोपः, आगतशब्देन 'स्तोकान्तिकार्थ' इत्यादिना समासः, 'पञ्चम्याः स्तोकादिभ्यः' इत्यलुक् । शुष्क इति । 'शुषः कः' इति कादेशः । उभयत्रात्र कर्मणि निष्ठा । तत्र 'गतिरनन्तरः' इति प्राप्ते तदपवाद उत्तरपदान्तोदात्तत्वं विधीयते । यदा तु कर्तरि क्तः, तदा तु कृत्स्वरेणोत्तरपदस्य प्रकृतिभावे सत्यन्तोदात्तत्वं सिद्धमेव । ननु च शुषिरकर्मकः, तस्य कुतः कर्मणि निष्ठा ? अन्तर्भावितण्यर्थः सकर्मको भवतीत्यदोषः । आतपशुष्कमिति । 'कर्तृकरणे कृता बहुलम्' इति समासः । अत्र 'तत्पुरुषे तुल्यार्थ' इत्यादिना पूर्वपदं पूर्वपदप्रकृतिस्वरं स्यात् । पूर्वपदं पुनरत्र पचाद्यजन्तत्वात् कृत्स्वरेणान्तोदात्तः ।

प्रक्षयः, प्रजयः इति । 'एरच्' । ननु च कृदुत्तरपदप्रकृतिस्वरत्वेनैवात्रोत्तरपदान्तोदात्तत्वं भविष्यति ? इत्यत आह—क्षयो निवास इत्यादि । यदा 'क्षयो निवासे' 'जयः करणम्' इति चाद्युदात्तौ क्षयजयशब्दौ भवतः, तदा कृत्स्वरेण मध्योदात्तत्वं स्यात् ।

प्रलवित्रम्, प्रसवित्रमिति । 'अर्तिलूधूसूखन' इत्यादिनेत्रः । अत्र कृत्स्वरे सति प्रत्ययस्वरं स्यात् । तेनोत्तरपदं मध्योदात्तं स्यात् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


क – गोवृषः, खरीवृषः । गां वर्षंति, खरीं वर्षंतीति मूलविभुजादित्वात्कप्रत्ययः । प्रवृषः । प्रहृषः । 'इगुपध' इति कप्रत्ययः । 'वृषादीनां च' इति वृषशब्द आद्युदात्तः ।

गतिकारकोपपदादित्येव – सुस्तुतं भवता ।

कर्मप्रवचनीयेऽव्ययस्वर एव भवति ॥

## सूपमानात् क्तः ॥ १४५ ॥

'सु' इत्येतस्मादुपमानाच्च परं क्तान्तमुत्तरपदमन्तोदात्तं भवति । सुकृतम् । सुभुक्तम् । सुपीतम् । उपमानात् – वृकावलुप्तम् । शशप्लुतम् । सिंहविनर्दितम् । सुशब्दाद् 'गतिरनन्तरः' इति प्राप्ते उपमानादपि 'तृतीया कर्मणि' इति, अयमपवादः ।

गतिकारकोपपदादित्येव – सुस्तुतं भवता ॥

## संज्ञायामनाचितादीनाम् ॥ १४६ ॥

### पदमञ्जरी

*गोवृष इति* । 'वृषु मृषु सेवने' । *सुस्तुतमिति* । 'सुः पूजायाम्', 'अतिरतिक्रमणे च' इति कर्मप्रवचनीयसंज्ञा, 'स्वती पूजायाम्' इति प्रादिसमासः ॥

*सूपमानात् क्तः* ॥ *वृकावलुप्तमित्यादि* । 'लूञ् छेदने', 'च्युङ् प्रुङ् प्लुङ् गतौ', 'नर्द गर्द शब्दे'—सर्वत्र 'कर्तृकरणे कृता बहुलम्' इति समासः । वृकैरिवावलुप्तमित्यादिविग्रहः । *उपमानादपीत्यादि* । अत्रेतिशब्दस्यानन्तरं प्राप्त इत्यस्यानुषङ्गः ॥

*संज्ञायामनाचितादीनाम्* ॥ सम्भूतादयः शब्दा रामायणादीनां संज्ञाः,

### न्यासः

गोवृष इति । 'पृषु वृषु मृषु सेचने', अत्र 'उपपदमतिङ्' इति समासः, 'गतिकारकोपपदात् कृत्' इत्युत्तरपदाद्युदात्तत्वं स्यात् ।

सुस्तुतमिति । 'सुः पूजायाम्', 'अतिरतिक्रमणे च' इति स्वती कर्मप्रवचनीयसंज्ञौ । अत्राव्ययस्वर एव भवतीति, तत्पुरुषे तुल्यार्थ' इत्यादिना ॥

सूपमानात् क्तः ॥ सुपीतमिति । 'घुमास्था' इत्यादिसूत्रेणेत्त्वम् । वृकावलुप्तमिति । 'लुप्लृ छेदने' । शशप्लुतमिति । 'च्युङ् ज्युङ् प्रुङ् प्लुङ् गतौ' । सिंहविनर्दितमिति । 'नर्द शब्दे' । सर्वत्र 'कर्तृकरणे कृता बहुलम्' इति समासः । वृकैरिवावप्लुतमित्यादिर्विग्रहः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



संज्ञायां विषये गतिकारकोपपदात् क्तान्तमुत्तरपदमन्तोदात्तं भवति आचितादीन्वर्जयित्वा । सम्भूतो रामायणः । उपहूतः शाकल्यः । परिजग्धः कौण्डिन्यः । सम्भूत इति प्राप्त्यर्थाद् भवतेः कर्मणि क्तः ।

'गतिरनन्तरः' इत्यत्र हि 'कर्मणि' इत्यनुवर्त्तते, तद्बाधनार्थं चेदम् । धनुष्खाता नदी । कुद्दालखाता[1] नगरी । हस्तिमृदिता भूमिः । 'तृतीया कर्मणि' इति प्राप्तिरिह बाध्यते ।

पदमञ्जरी

रामायणशब्दो नपुंसकलिङ्गः, प्रायेण तु पुंल्लिङ्गः पठ्यते । *उपहूत इति* । ह्वेञो निष्ठायां यजादित्वात् सम्प्रसारणम् । *परिजग्ध इति* । अदो जग्धिरादेशः । *प्राप्त्यर्थाद्भवतेरिति* । चुरादौ 'आधृषाद्वा' इत्यधिकारे 'भू प्राप्तावात्मनेपदी' इति पठ्यते ।

किं पुनः कारणं प्रयत्नेन कर्मणि क्त उपपाद्यते ? अत आह—*गतिरनन्तर इत्यत्र हीति* । *तद्बाधनार्थञ्चेदमिति* । प्रकृतोदाहरणाभिप्रायमेतद् , न सूत्राभिप्रायम् । *धनुष्खातेति* । 'नित्यं समासेऽनुत्तरपदस्थस्य' इति षत्वम् ।

न्यासः

संज्ञायामनाचितादीनाम् ॥ उपहूत इति । ह्वेञो निष्ठा, 'वचिस्वपि' इत्यादिना संप्रसारणम् , 'हलः' इति दीर्घः । परिजग्ध इति । 'अदो जग्धिर्ल्यप्ति किति' इत्यदेर्जग्धिरादेशः । 'झषस्तथोर्धोऽधः' इति धत्वम् । कर्मणि क्त इति । भवतेरकर्मकत्वात् कर्मनिष्ठा नोपपद्यत इति सम्भूत इति कर्तरीयं निष्ठेति कस्यचिद् भ्रमः स्यात् , अतस्तन्निराकरणायाह— सम्भूत इति । अनेकार्थत्वाद्धातूनां भवतिरत्र प्राप्तौ वर्तते । ये च प्राप्त्यर्थास्ते नियोगतः प्राप्त्यैव कर्मणा सकर्मका भवन्ति । यथा—'णीञ् प्रापणे' इत्येवमादयः । तस्मात् प्राप्त्यर्थाद् भवतेः सम्भूत इत्यत्र कर्मणि क्तः ।

किं पुनः कारणं कर्मणि क्त इष्यते ? इत्याह—गतिरनन्तर इत्यत्र कर्मणीत्यनुवर्तते । ततः किम् ? इत्याह— तद्बाधनार्थं चेदमिति । 'गतिरनन्तरः' इत्यत्र हि कर्मणीत्यनुवर्तते, इदञ्च सूत्रम्, तद् 'गतिरनन्तरः' इत्यस्यैव बाधनार्थम् । एवं चैतद् गतिस्वरस्य बाधकं भवति, यदि कर्मणि क्तो विहितः । तदन्तस्योत्तरपदस्यानेनान्तोदात्तत्वं विधीयते, नान्यथा । तस्मात् सम्भूत इत्यत्र कर्मणि क्तो द्रष्टव्य इत्यभिप्रायः । धनुष्खातेति । 'खनु अवदारणे', 'जनसनखनाम्' इत्यात्वम् । 'कर्तृकरणे कृता बहुलम्' इति समासः । एवं कुद्दालखातेत्येवमादावपि । धनुःशब्दः 'नन्विषयस्यानिसन्तस्य'

---

१. 'कुद्दालखातं नगरम्' इति पाठान्तरम् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अनाचितादीनामिति किम् ? आचितम् । पर्याचितम् । आस्थापितम् । परिगृहीतम् । निरुक्तम् । प्रतिपन्नम् । प्रश्लिष्टम् । उपहतम् । उपस्थितम् ॥

❀ संहिताऽगवि ❀ । संहिताशब्दो यदा गोरन्यस्य संज्ञा, तदाऽन्तोदात्तो न भवति । यदा तु गोः संज्ञा, तदाऽन्तोदात्त एव ॥

प्रवृद्धादीनां च ॥ १४७ ॥

प्रवृद्धादीनां च क्तान्तमुत्तरपदमन्तोदात्तं भवति । प्रवृद्धं यानम् । प्रवृद्धो वृषलः । प्रयुक्ताः सक्तवः । आकर्षेऽवहितः । अवहितो भोगेषु । खट्वारूढः । कविशस्तः ।

पदमञ्जरी

'चिञ् चयने', 'ष्ठा गतिनिवृत्तौ', ण्यन्तः केवलश्च, 'ग्रह उपादाने', 'वच परिभाषणे', 'पद गतौ', 'श्लिष आलिङ्गने', 'डुधाञ् धारणपोषणयोः'—सर्वत्र कर्मणि क्तः, एते आचितादयः ।

*संहिताऽगवीति* गणसूत्रम्, तद् व्याचष्टे—*यदा गोरन्यस्येति* ॥

*प्रवृद्धादीनां* च ॥ 'वृधु वृद्धौ', 'यु मिश्रणे', 'डुधाञ् धारणे', 'रुह बीजजन्मनि', 'शसु हिंसायाम्' । *खट्वारूढ इति* । 'खट्वा क्षेपे' इति समासः ।

न्यासः

इत्याद्युदात्तः । कुद्दालशब्दः 'लघावन्ते' इत्यादिना मध्योदात्तः । हस्तिमृदितेति । 'मृद क्षोदे' हस्तिशब्दः 'हस्ताज्जातौ' इतीनिप्रत्ययान्तत्वादन्तोदात्तः ।

आस्थापितमिति । तिष्ठतेर्णिच्, 'अर्तिह्री' इत्यादिना पुक् । परिगृहीतम् 'ग्रहोऽलिटि दीर्घः' । निरुक्तम् । 'वच परिभाषणे', 'वचिस्वपि' इत्यादिना संप्रसारणम्, 'चोः कुः' । प्रतिपन्नमिति । 'पद गतौ', 'रदाभ्याम्' इति नत्वम् । प्रश्लिष्टमिति । 'श्लिष आलिङ्गने' । उपद्रुतमिति । 'दु द्रु गतौ' । स्थितमिति । 'द्यतिस्यति' इत्यादिनेत्वम् । संहितेति । दधातेर्हिरादेशः ॥

प्रवृद्धादीनाञ्च ॥ गतिस्वरे प्राप्त इदं वचनम् । प्रवृद्धमिति । 'वृधु वृद्धौ' । प्रयुता इति । 'यु मिश्रणे' । अवहितमिति । पूर्ववद्दधातेर्हिरादेशः । खट्वारूढ इति । 'रुह बीजजन्मनि', 'झषस्तथोर्धोऽधः' 'ढो ढे लोपः', 'ढ्लोपे पूर्वस्य दीर्घोऽणः', 'खट्वा क्षेपे' इति समासः । अस्य 'अहीने द्वितीया' इति पूर्वपदप्रकृतिस्वरे प्राप्त इह पाठः । कविशस्त इति । 'शसु हिंसायाम्', 'कर्तृकरणे कृता बहुलम्' इति समासः । अस्यापि 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वर एव ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



यानादीनामत्र गणे पाठः प्रायोवृत्तिप्रदर्शनार्थः, न विषयनियमार्थः। यानादिभ्योऽन्यत्रापि तेषामन्तोदात्तत्वं भवत्येव। विषयनियमार्थ एवेत्येके।

असंज्ञार्थोऽयमारम्भः।

आकृतिगणश्च प्रवृद्धादिर्द्रष्टव्यः। तेन पुनरुत्स्यूतं वासो देयम्, पुनर्निष्कृतो रथः—इत्येवमादि सिद्धं भवति॥

## कारकाद्दत्तश्रुतयोरेवाशिषि ॥ १४८ ॥

'संज्ञायाम्' इति वर्त्तते, 'क्तः' इति च। संज्ञायां विषये आशिषि

पदमञ्जरी

नैतदिह पठितव्यमिति 'अहीने द्वितीया' इत्यत्रावोचाम। कविभिः शस्तः, 'तृतीया कर्मणि' इत्यस्यापवादः।

*प्रायोवृत्तिप्रदर्शनार्थं इति*। प्रायो बाहुल्येन या वृत्तिर्यानादिष्वर्थेषु तस्याः प्रदर्शनार्थं इत्यर्थः।

*पुनरुत्स्यूतमिति*। सीव्यतेः 'च्छ्वोः शूडनुनासिके' इति ऊठ्, 'पुनश्चनसोश्छन्दसि' इति गतिसंज्ञायां समासः॥

*कारकादत्तश्रुतयोरेवाशिषि*॥ 'संज्ञायामनाचितादीनाम्' इति विहितमन्तो-

न्यासः

यानादीनामिति। आदिशब्देन वृषादीनां ग्रहणम्। यानादीनामर्थानां य इह पाठः, स प्रवृद्धादीनां यानादिष्वर्थेषु प्रायो बाहुल्येन या वृत्तिस्तस्याः प्रदर्शनार्थम्। न तु प्रवृद्धस्य यानवृषलयोरेवार्थयोरन्तोदात्तत्वं भवति। प्रयुक्तशब्दस्य सक्तुष्वेवेतीत्येवमादिषु विषयनियमार्थः। तेन किं भविष्यति? इत्याह यानादिभ्योऽन्यत्रापीत्यादि। विषयनियमार्थं इत्येक इति। तेषामनेन यानादिभ्योऽन्यत्र न भवितव्यम्।

असंज्ञार्थोऽयमारम्भ इति। संज्ञायां पूर्वेणैव सिद्धत्वात्।

आकृतिगणश्च प्रवृद्धादिर्द्रष्टव्य इति। कुत एतत्? आकृतिगणतां तस्य सूचयितुमनुक्तसमुच्चयार्थस्य चकारस्येह करणात् आकृतिगणत्वे यत् सिद्धं भवति, तद् दर्शयितुमाह—पुनरुत्स्यूतं वास इत्यादि। 'षिवु तन्तुसन्ताने', 'च्छ्वोः शूडनुनासिके च', इत्यूठ्, यणादेशः। पुनर्निष्कृत इति। 'इदुदुपधस्य चाप्रत्ययस्य' इति विसर्जनीयस्य षत्वम्॥

कारकाद् दत्तश्रुतयोरेवाशिषि॥ देवदत्त इति। 'आशिषि लिङ्लोटौ' इति वर्तमाने 'क्तिच् क्तौ च संज्ञायाम्' इति क्तः। 'दो दद् घोः' इति ददादेशः, पूर्ववत्

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



गम्यमानायां कारकादुत्तरयोर्दत्तश्रुतयोरेव क्तान्तयोरन्त उदात्तो भवति । देवा एनं देयासुर्देवदत्तः । विष्णुरेनं श्रूयाद् विष्णुश्रुतः ।

कारकादिति किम् ? कारकान्नियमो मा भूत् – सम्भूतो रामायणः । दत्तश्रुतयोरिति किम् ? देवपालितः । एतस्मान्नियमादत्र 'संज्ञायामनाचितादीनाम्' इत्यन्तोदात्तत्वं न भवति, 'तृतीया कर्मणि' इत्येवात्र भवति ।

एवकारकरणं किम् ? कारकावधारणं यथा स्याद्, दत्तश्रुतावधारणं मा भूत् । अकारकादपि दत्तश्रुतयोरन्त उदात्तो भवति – संश्रुतः, विश्रुतः ।

पदमञ्जरी

दात्तत्वमनेन नियम्यते, 'देवा एनं देयासुः' इत्येवं प्रार्थितैर्देवैर्दत्तो देवदत्तः, 'आशिषि लिङ्लोटौ' इति वर्तमाने 'क्तिच् क्तौ च संज्ञायाम्' इति क्तः, 'दो दद्घोः' ।

*सम्भूतो रामायण इति* । 'कारकात्' इत्यनुच्यमाने 'गतिकारकोपपदात्' इति त्रितयाधिकाराद्यथैव कारकान्नियमो भवति, तथा गतेरपि स्यात् ।

*एवकारकरणं किमिति* । सिद्धे विधिरारभ्यमाणोऽन्तरेणाप्येवकारं नियमार्थो भविष्यतीति प्रश्नः । *कारकावधारणमित्यादि* । असति ह्येवकारं विपरीतोऽपि नियमः स्यात्—कारकादेव दत्तश्रुतयोरिति । एवं चाकारकाद् दत्त-

न्यासः

तृतीयासमासः । देवशब्दः पचाद्यजन्तत्वाच्चित्स्वरेणान्तोदात्तः । विष्णुशब्दोऽपि प्रातिपदिकस्वरेण । ब्रह्मशब्दो मनिन्प्रत्ययान्तत्वादाद्युदात्त इत्युक्तम् ।

सम्भूतो रामायण इति । कारकादित्यनुच्यमाने 'गतिकारकोपपदात् कृत्' इत्यधिकाराद् यथैव कारकान्नियमो भवत्येवं गतेरपि स्यात्, कारकग्रहणे तु सति न भवति । तेन गतेः परस्य 'संज्ञायामनाचितादीनाम्' अन्तोदात्तत्वं भवेदेव । अस्मिंस्तूच्यमाने सत्येष विषयो न भवति; नियमेन व्यावर्त्तितत्वात् । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वर एव भवति ।

एवकारकरणं किमिति । सिद्धे विधिरारभ्यमाणोऽन्तरेणाप्येवकारकरणं नियमार्थो भविष्यतीत्यभिप्रायः । कारकावधारणमित्यादि । असति ह्येवकारे कारकादेवेत्येषोऽपि नियमः स्यात् । तथा चैवकारस्ततोऽन्यत्रावधारणमिति दत्तश्रुतावधारणं स्यात्—कारकादेव दत्तश्रुतयोरिति । एवं च कारकाद् दत्तश्रुतयोरनन्तरं क्रियमाणे कारकावधारणमिष्टं

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



आशिषीति किम् ? अनाशिषि नियमो मा भूत् । देवैः खाता देवखाता ।

कारकाद्दत्तश्रुतयोराशिष्येव — इत्यमप्यत्र नियम इष्यते, तेनाहतो नदति देवदत्त इत्यत्र न भवति । देवदत्त इति कस्यचित् शङ्खस्य नाम । तत्र 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वमेव भवति ॥

## इत्थम्भूतेन कृतमिति च ॥ १४९ ॥

इमं प्रकारमापन्नः=इत्थम्भूतः । 'इत्थम्भूतेन कृतम्' इत्येतस्मिन्नर्थे यः समासो वर्त्तते तत्र क्तान्तमुत्तरपदमन्तोदात्तं भवति । सुप्तप्रलपितम् । उन्मत्तप्रलपितम् । प्रमत्तगीतम् । विपन्नश्रुतम् ।

पदमञ्जरी

श्रुतयोर्न स्यात्,इष्यते च,तथा कारकस्यानियतत्वाद् देवपालित इत्यादावन्तोदात्तप्रसङ्गः । अतः कारकावधारणं यथा स्याद्दत्तश्रुतावधारणं मा भूदित्येवमर्थं करणमित्यर्थः । *अयमपि नियम इष्यत इति* । एतच्च तन्त्रेण सूत्रद्वयोच्चारणादेकसूत्रेऽपि आशिष्येवेति भिन्नक्रमत्वादेवकारस्य लभ्यते ॥

*इत्थम्भूतेन कृतमिति च* ॥ *सुप्तप्रलपितमित्यादि* । कथं पुनरेतान्युदाहरणानि, यावता कृतमित्युच्यते, न च प्रलपितादीनि कृतानि, अभूतप्रादुर्भाव एव हि

न्यासः

भवति, न दत्तश्रुतावधारणमिष्टम् । तेनैवकारः कृतः । किं पुनः कारणं कारकावधारणमिष्यते, न दत्तश्रुतावधारणम् ? इत्याह - अकारकादपि हीत्यादि । देवैः खाता देवखातेति । नात्राशीर्विद्यते, तेनाशिषीति वचनान्नियमो न भवति । ततश्च 'संज्ञायाम्' इत्यादिनान्तोदात्तत्वं भवत्येव ।

कारकाद् दत्तश्रुतयोराशिष्येवेत्ययमप्यत्र नियम इति । कथं पुनरेकेन योगेन हि नियमद्वयं लभ्यते, एकः पुनरत्र योग इति ? यथैव हि श्वेतो धावतीति कश्चित् तन्त्रेण वाक्यद्वयमुच्चारयति तथेहाप्याचार्यस्तन्त्रे वाक्यमुच्चारितवान् । तत्रैकेन योगेन कारकाद् दत्तश्रुतयोरेवाशिषीत्येव नियमो भवति, अपरेण तु कारकाद् दत्तश्रुतयोराशिष्येवेत्येषः । तेनाहतो नदति देवदत्त इत्यत्रानाशिषि न भवति । देवदत्त इति कस्यचिच्छङ्खस्य नामेति । यदृच्छाशब्दतां देवदत्तस्य दर्शयन्नाशीरिह न दत्त इति प्रकाशयति ॥

इत्थम्भूतेन कृतमिति च ॥ इतिकरणोऽर्थनिर्देशार्थः । आपन्न इति । प्राप्त इत्यर्थः । सुप्तप्रलपितमिति । 'रप लप व्यक्तायां वाचि', अत्र सुप्तत्वं प्रकारमापन्नम्,

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



'कृतम्' इति क्रियासामान्ये करोतिर्वर्त्तते, नाभूतप्रादुर्भाव एव; तेन प्रलपिताद्यपि कृतं भवति । 'तृतीया कर्मणि' इत्यस्यायमपवादः ।

भावे तु यदि प्रलपितादयः, तदा थाथादिस्वरेणैव सिद्धमन्तोदात्तं भवति ॥

## अनो भावकर्मवचनः ॥ १५० ॥

पदमञ्जरी

करोतिर्वर्तते, ततश्च सुप्रकृतं सुप्रभाषितं सुप्रोत्पादितमित्यादिकमेवोदाहर्तव्यम् ? अत आह—*कृतमिति क्रियासामान्ये करोतिर्वर्तत इति* । ततश्च यथा 'क्रियावचनो धातुः', 'क्रियायां क्रियार्थायाम्' इत्यादौ विशेषाणामपि ग्रहणं भवति, तद्वदत्रापि । अभूतप्रादुर्भावः = निष्पादनम् ॥

*अनो भावकर्मवचनः* ॥ पयःपानादीनाममुपपदसमासः । राजभोजनादौ षष्ठ्या समासः ।

न्यासः

तेन प्रलपितं कृतम्, तत्र समासो वर्तते । उन्मत्तप्रलपितमिति । अत्राप्युन्मत्तत्वं प्रकारमापन्नं तेन प्रलपितं कृतम् । प्रमत्तगीतमिति । अत्रापि प्रमत्तत्वं प्रकारमापन्नं तेन गीतं कृतम् । 'कै गै शब्दे', 'घुमास्था' इत्यादिसूत्रेणेत्वम् । विपन्नश्रुतमिति । अत्रापि विपन्नत्वं प्रकारमापन्नं तेन श्रुतं कृतम् । सर्वत्र 'कर्तृकरणे कृता बहुलम्' इति समासः । तत्र सुप्तशब्दः प्रत्ययस्वरेणान्तोदात्तः । प्रलपितशब्दो यदि कर्मणि निष्ठा, ततः 'गतिरनन्तरः' इति गतिस्वरेणाद्युदात्तः; अथ भावे, ततस्थाथादिस्वरेणान्तोदात्तः । एवमुत्पन्नप्रकारा आपन्नविपन्नादिशब्दा अपि थाथादिस्वरेणैवान्तोदात्ताः । 'गतिरनन्तरः' इत्येतत् त्विह न प्रवर्तते; तत्र कर्मणीत्यनुवृत्तेः । इहाकर्मकाद्धातोः कर्मणि क्तप्रत्ययस्यानुपपत्तेः । गीतश्रुतशब्दौ सुप्तशब्दवदन्तोदात्तौ । अथ कथमेतान्युदाहरणान्युपलभ्यन्ते, यावतेत्थम्भूतेन कृतमित्येतस्मिन्नर्थे एतत् कार्यमुच्यते, न चायमत्रार्थः सम्भवति, प्रलपितादीनामकृतार्थत्वात् ? प्रकृते प्रलपनादौ करोतेरप्रवृत्तेः । अभूतप्रादुर्भाव एव हि करोतिर्वर्तते, न प्रलपनादौ ।

कस्मान्न प्रलपनादिकृतम् ? इत्येतच्चोद्यमपाकर्तुमाह—कृतमिति क्रियासामान्यामित्यादि । न हि करोतिरभूतप्रादुर्भाव एव वर्तते ? किं तर्हि ? क्रियासामान्येऽपि । तच्च क्रियासामान्यं प्रलपनादप्यस्ति । तेन प्रलपनाद्यपि कृतं भवति । तृतीया कर्मणीत्यस्येति । पूर्वपदप्रकृतिस्वरभाव इति ।

यदीत्यादीना यदा भावे निष्ठा, तदास्य योगस्यानुपयोगं दर्शयति ॥

अनो भावकर्मवचनः ॥ 'कारकात्' इति वर्तते, 'अनः' इति प्रत्ययग्रहणपरिभाषया

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अनप्रत्ययान्तमुत्तरपदं भाववचनं कर्मवचनं च कारकात्परमन्तोदात्तं भवति। ओदनभोजनं सुखम्। पयःपानं सुखम्। चन्दनप्रियङ्गुकालेपनं सुखम्। कर्मवचन – राजभोजनाः शालयः। राजाच्छादनानि वासांसि।

'कर्मणि च येन संस्पर्शात्कर्तुः शरीरसुखम्' इत्ययं योग उभयथा वर्ण्यते – कर्मण्युपपदे भावे ल्युड् भवति, कर्मण्यभिधेये ल्युड् भवतीति। तत्र पूर्वस्मिन् सूत्रार्थे भाववचनोदाहरणानि, उत्तरत्र कर्मवचनोदाहरणानि।

अन इति किम्? हस्तहार्यमुदश्वित्। भावकर्मवचन इति किम्? दन्तधावनम्। करणे ल्युट्।

कारकादित्येव – निदर्शनम्। अवलेखनम्।

सर्वेषु प्रत्युदाहरणेषु प्रकृतिस्वरो भवति॥

पदमञ्जरी

*सर्वेषु प्रत्युदाहरणेष्वित्यादि*। एतेन गतिकारकोपपदात्' इत्यस्यायमपवाद इति दर्शयति॥

न्यासः

तदन्तस्य ग्रहणं विज्ञायते ? इत्याह—अनप्रत्ययान्तमित्यादि। ओदनभोजनमित्यादौ सर्वत्र षष्ठीसमासः। षष्ठी तु कृद्योगलक्षणा कर्मणि। राजभोजना इत्यादौ तु कर्तरि। ओदनशब्दः 'लघावन्ते' इत्याद्युदात्तः। भोजनमित्यादिकं तूत्तरपदं लित्स्वरेणाद्युदात्तम्। पयःशब्दः 'नब्विषयस्य' इत्याद्युदात्त एव। चन्दनप्रियङ्गुकाशब्दो द्वन्द्वः, तेन समासस्वरेणान्तोदात्तः। लेपनमिति। 'लिप उपदाहे' इत्यस्यैवं रूपम्। राजशब्द उक्तस्वरः। आच्छादनशब्दः 'छद अपवारणे' इत्यस्य रूपम्।

कर्मणि च येनेत्यादिनैकेनैव योगेन भाववचनः कर्मवचनश्च ल्युड् भवतीति दर्शयति।

हस्तहार्यमिति। हस्तशब्दः 'हसिमृग्रिण्वामिदमिपूधुर्विभ्यस्तन्' इति स्तन्प्रत्ययान्तः, तेनाद्युदात्तः। हार्यशब्दस्तु 'ऋहलोर्ण्यत्' इति ण्यदन्तस्तित्स्वरेणान्तस्वरितः। दन्तधावनमिति। 'धावु गतिशुद्ध्योः' इत्यस्मात् करणे ल्युट्। दन्तशब्दः 'स्वाङ्गशिटाम्' इत्याद्युदात्तः।

निदर्शनमिति। दृशेर्भावे ल्युट्। अवलेखनमिति। अत्रापि लिखेः।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः ॥ १५१ ॥

मन्नन्तम्, क्तिन्नन्तम्, व्याख्यान, शयन, आसन, स्थान – इत्येतानि, याजकादयः, क्रीतशब्दश्चोत्तरपदमन्तोदात्तं भवति। मन्–रथवर्त्म, शकटवर्त्म। क्तिन् – पाणिनिकृतिः, आपिशलिकृतिः। व्याख्यान – ऋगयनव्याख्यानम्, छन्दोव्याख्यानम्। शयन – राजशयनम्, ब्राह्मणशयनम्। आसन–राजासनम्। ब्राह्मणासनम्। स्थान – गोस्थानम्, अश्वस्थानम्। याजकादिः – ब्राह्मणयाजकः। क्षत्त्रिययाजकः। ब्राह्मणपूजकः। क्षत्त्रियपूजकः। याजकादयो ये 'याजकादिभिश्च' इति षष्ठी-

### पदमञ्जरी

*मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः* ॥ *रथवर्त्मेति*। वृत्तेरधिकरणे मनिन्, कर्तरि षष्ठ्या समासः। *पाणिनिकृतिरिति*। कर्मणि क्तिन्, पूर्ववत्समासः। *व्याख्यानशब्दः* करणसाधनः, शयनासनस्थानशब्दा अधिकरण-

### न्यासः

सर्वेषु प्रत्युदाहरणेष्वित्यादि। एतेन 'गतिकारकोपपदानां कृत्' इत्यस्यायमपवाद इति दर्शयति ॥

मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः ॥ मन्क्तिन्निति प्रत्ययग्रहणम्। तत्र प्रत्ययग्रहणपरिभाषया तदन्तस्य ग्रहणं विज्ञायते, इत्याह—मन्नन्तं क्तिन्नन्तञ्चेति। रथवर्त्मेत्यादयः षष्ठीसमासाः। रथशब्दः क्थन्प्रत्ययान्त आद्युदात्त इत्युक्तम्। 'वृतु वर्तने' इत्यस्मान्मनिन्। तेन वर्त्मशब्द आद्युदात्तः। शकटशब्दः पयःशब्दश्च नित्त्वादाद्युदात्तः। पाणिन्यापिशलिशब्दाविञन्तत्वात्। कृतिशब्दोऽपि क्तिन्नन्तत्वात्। करणसाधनाश्चायं व्याख्यानशब्दो ल्युडन्तः। कृत्स्वरेण मध्योदात्तः। छन्दःशब्दः 'सर्वधातुभ्योऽसुन्' इति प्रत्ययग्रहणम्। तत्र कृते 'चन्देरादेश्चछः' इत्यसुन्प्रत्ययान्तत्वादाद्युदात्तः। अयन्त्यनेनेत्ययनम्, ऋचामयनम्। ऋचामिति कर्मणि षष्ठी। ऋगयनशब्दः कृत्स्वरेण मध्योदात्तः। राजशयनमित्यादि। शेरतेऽस्मिन्निति शयनम्, आसतेऽस्मिन्नित्यासनम्, ताभ्यां राजब्राह्मणशब्दयोः षष्ठीसमासः। राजब्राह्मणशब्दावुक्तस्वरौ। शयनासनशब्दौ लित्स्वरेणाद्युदात्तौ। अत्र कृद्योगलक्षणा पूर्ववदेव कर्तरि षष्ठी। एवं गोस्थानमश्वस्थानमित्यत्रापि। गवाश्वशब्दावुक्तस्वरौ। तिष्ठत्यस्मिन्निति स्थानं. लित्स्वरेणाद्युदात्तम्। ब्राह्मणयाजक इत्यादौ कृद्योगलक्षणा कर्मणि षष्ठी। याजकादिषु ये ण्वुलन्ताः पठ्यन्ते, तेषु येऽनुपसर्गाः—याजकपूजकस्नापका इति, त आद्युदात्ताः। ये तु सोपसर्गाः—परिवेषकाध्यापकोद्वर्तकोत्सादका इति, ते कृत्स्वरेण मध्योदात्ताः। होतृभर्तृशब्दौ

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


समासार्थाः पठ्यन्ते त एवेह गृह्यन्ते । क्रीत – गोक्रीतः । अश्वक्रीतः ।

कृत्स्वरापवादोऽयं योगः । क्रीतशब्दे तु 'तृतीया कर्मणि' इत्यस्यापवादः ।

व्याख्यानशयनासनस्थानानामभावकर्मार्थं ग्रहणम् ।

कारकादित्येव – प्रकृतिः । प्रहृतिः ॥

सप्तम्याः पुण्यम् ॥ १५२ ॥

सप्तम्यन्तात्परं पुण्यमित्येतदुत्तरपदमन्तोदात्तं भवति । अध्ययने पुण्यम् अध्ययनपुण्यम् । वेदे पुण्यं वेदपुण्यम् । 'सप्तमी' इति योगविभागात्समासः । 'तत्पुरुषे तुल्यार्थं' इति पूर्वपदप्रकृतिस्वरत्वं प्राप्तमित्यन्तोदात्तत्वं विधीयते । उणादीनां तु व्युत्पत्तिपक्षे – कृत्स्वरेणाद्युदात्तः पुण्यशब्दः स्यादिति ।

पदमञ्जरी

साधनाः । *प्रकृतिः, प्रहृतिरिति* । 'तादौ च निति कृत्यतौ' इति पूर्वपदप्रकृतिस्वर एवात्र भवति ॥

*सप्तम्याः पुण्यम्* ॥ *उणादीनां त्विति* । 'अतः कृकमिकंस' इत्यत्र कमिग्रहणे-

न्यासः

तृजन्तौ प्रयोजयतः । यौ तु तृजन्तौ, तयोः कृत्स्वरेणान्तोदात्तत्वं सिद्धम् । गोक्रीतः, अश्वक्रीत इत्यादि । 'कर्तृकरणे कृता' इति समासावेतौ । क्रीतशब्दः प्रत्ययस्वरेणान्तोदात्तः ।

कृत्स्वरापवादो योग इति । क्रीतशब्दादन्येषु । मन्क्तिन्व्याख्यानादिषु । क्रीतशब्दे तु 'तृतीया कर्मणि' इत्यस्येति पूर्वपदप्रकृतिस्वरस्य ।

व्याख्यानशयनस्थानानामभावकर्मार्थं ग्रहणमिति । भावकर्मवचनस्यानन्तस्य 'अनो भावकर्मवचनः' इत्यनेनैव सिद्धत्वात् । प्रकृतिः, प्रहृतिरिति । अत्र 'तत्पुरुषे तुल्यार्थ' इत्यादिना पूर्वपदस्य प्रकृतिस्वरत्वमेव भवति । गतिसमासावेतौ ॥

सप्तम्याः पुण्यम् ॥ अध्ययनपुण्यमित्यादि । अध्ययनशब्दो ल्युडन्तः कृत्स्वरेण मध्योदात्तः । पुण्यम् 'नब्विषयस्य' इत्याद्युदात्तम् । विद्यतेऽनेनेति वेदः, घञ् । तेन वेदशब्दश्चाद्युदात्तः ।

तत्पुरुषे तुल्यार्थेत्यादि । एतद् 'उणादयोऽव्युत्पन्नानि प्रातिपदिकानि' इत्येवं पक्षमाश्रित्योक्तम् । इदानीं व्युत्पत्तिलक्षणमाश्रित्याह—उणादीनां त्वित्यादि । व्युत्पत्तिपक्षे हि पुण्यशब्दः 'पूञो यण् णुग् ह्रस्वश्च' इति यत्प्रत्ययान्तो व्युत्पाद्यते । तत्र



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

सप्तम्या इति किम् ? वेदेन पुण्यं वेदपुण्यम् ॥

ऊनार्थकलहं तृतीयायाः ॥ १५३ ॥

ऊनार्थान्युत्तरपदानि, कलहशब्दश्च तृतीयान्तात् पराण्यन्तोदात्तानि भवन्ति। माषोनम्। कार्षापणोनम्। माषविकलम्। कार्षापणविकलम्। कलह – असिकलहः। वाक्कलहः।

तृतीयापूर्वपदप्रकृतिस्वरापवादो योगः।

अत्र केचिदर्थं इति स्वरूपग्रहणमिच्छन्ति। धान्येनार्थो धान्यार्थः। ऊनशब्देनैव त्वर्थनिर्देशार्थेन तदर्थानां ग्रहणमिति प्रतिपदोक्तत्वा-

पदमञ्जरी

नैव सिद्धे कंसग्रहणादुणादिषु पाक्षिकव्युत्पत्तिकार्यमिति भावः। 'पूञो यत्, णुक् ह्रस्वश्च', पुण्यम्। ह्रस्वविधानादगुणत्वम्। 'यतोऽनावः' इत्याद्युदात्तत्वम्॥

*ऊनार्थकलहं तृतीयायाः* ॥ उदाहरणेषु 'पूर्वसदृश' इति तृतीयासमासः।

*अत्र केचिदित्यादि*। नन्वेवमूनशब्दस्यापि स्वरूपग्रहणं प्रसज्येत, ततश्च तदर्थानामन्येषां ग्रहणं न स्यात् ? अत आह— *ऊनशब्देनैव त्विति*। अर्थनिर्देशार्थत्वं तु व्याख्यानादवसेयम्॥

न्यासः

यदीदं नारभ्येत तदा 'गतिकारक' इति कृत्स्वरेणाद्युदात्तोऽध्ययनमित्यादौ पुण्यशब्दस्य स्यात्। तस्मात् तदपवादोऽयमन्तोदात्तविधिरित्यभिप्रायः।

वेदेन पुण्यं वेदपुण्यमिति। व्युत्पत्तिपक्षे 'तृतीया' इति योगविभागात् समासः, पूर्वपदप्रकृतिस्वरत्वञ्च। अव्युत्पत्तिपक्षे 'कर्तृकरणे कृता' इति समासः, कृत्स्वरेण पुण्यशब्दस्याद्युदात्तत्वञ्च॥

ऊनार्थकलहं तृतीयायाः॥ माषोनमिति। 'पूर्वसदृश' इत्यादिना तृतीयासमासः। एवं कार्षापणोनमित्यादावपि। 'कष खष शिष जष झष वष मष' इत्यस्माद् घञ्, तेन माषशब्द आद्युदात्तः। 'इण्सिञ्जिदीङुष्यविभ्यो नक्' इति, तेनोनशब्दोऽन्तोदात्तः। कार्षस्यापणः कार्षापणः। कार्षापणशब्दः समासस्वरेणान्तोदात्तः। विगतः कलोऽस्येति विकलः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन विकलशब्द आद्युदात्तः। असिकलह इति। 'अस इः' इति वर्तमाने 'खनिकष्यज्यसि' इत्यादिना खिरन्तोदात्तः। 'कल गतौ', अस्मात् पचाद्यच्। कलयतीति कलः, कलं हन्तीति 'अन्येष्वपि दृश्यते' इति डः। तेन कलहशब्दोऽन्तोदात्तः।

अत्र केचिदित्यादि। तत्रार्थं इति स्वरूपग्रहणम्, एवं सत्यूनशब्देऽपि स्वरूप-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



देव तृतीयासमासपरिग्रहे सिद्धे तृतीयाग्रहणं विस्पष्टार्थम् ॥

मिश्रं चानुपसर्गमसन्धौ ॥ १५४ ॥

'तृतीया' इति वर्त्तते । 'मिश्र' – इत्येतदुत्तरपदमनुपसर्गं तृतीयान्तात्परमन्तोदात्तं भवत्यसन्धौ गम्यमाने । गुडमिश्राः । तिलमिश्राः । सर्पिर्मिश्राः ।

मिश्रमिति किम् ? गुडधानाः । अनुपसर्गमिति किम् ? गुडसम्मिश्राः ।

इहानुपसर्गग्रहणं ज्ञापकम् – अन्यत्र मिश्रग्रहणे सोपसर्गग्रहणस्य ।

पदमञ्जरी

*मिश्रं चानुपसर्गमसन्धौ* ॥ कथं पुनर्मिश्रशब्दस्य विधीयमानः सम्मिश्रशब्दस्य

न्यासः

ग्रहणं प्रसज्येत, ततश्च तदर्थानामन्येषां ग्रहणं न स्यात् ? इत्यत आह—ऊनशब्देनैवेत्यादि । ऊनशब्दोऽन्यमतानां विशेषं दर्शयति । अन्ये हि—अर्थग्रहणे नानर्थकानां ग्रहणं भवतीति मन्यन्ते । केचित्तु—'ऊनशब्देनैवार्थनिर्देशार्थेनार्थनिर्देशः प्रयोजनं यस्य स तथोक्तः । शब्दप्रधाने हि निर्देशे स्वरूपं ग्रहणं भवतीत्युक्तम् । इह चोन इत्यर्थप्रधाननिर्देशः । तेनोनशब्दोऽर्थनिर्देशार्थः' इत्याहुः । तस्मात् तेनैव तदर्थानां ग्रहणम् । इतिकरणो हेतौ । यस्मादूनशब्देनैवार्थनिर्देशार्थेन तदर्थानां ग्रहणम्, तस्मादत्र केचिदर्थं इति स्वरूपग्रहणमिच्छन्ति । धान्यार्थे इति । 'तृतीया तत्कृतार्थेन' इति समासः । 'धने धान्ये'— अस्माण्ण्यत् । धान्यमन्तस्वरितम् । अथ धाने साधु धान्यम्, 'प्राग्घिताद्यत्', तेन 'यतोऽनावः' इति धान्यमाद्युदात्तम् । अत्रार्थशब्दः 'ग्रामादीनाञ्च' इत्याद्युदात्तः ।

तृतीयाग्रहणं किमर्थम् ? अनूनम्, अकलह इत्यत्र मा भूदिति चेत् ? नैतदस्ति; इह हि प्रतिपदोक्तपरिभाषयोनार्थकलहादीनां प्रतिपदोक्तो यः समासः स एव परिगृह्यते । तत् किमनूनकलह इत्येतन्निवृत्त्यर्थेन तृतीयाग्रहणेन ? इत्यत आह— प्रतिपदोक्तत्वादित्यादि । गतार्थम् ॥

मिश्रञ्चानुपसर्गमसन्धौ ॥ गुडमिश्रा इति । पूर्ववत् 'पूर्वसदृश' इत्यादिना समासः । गुडशब्दः 'इगुपध' इति 'गुड रक्षायाम्' इत्यस्मात् कः, तेनान्तोदात्तः । 'स्फायितञ्चि' इत्यादिना रग् विधीयमानो बहुलवचनान् मिशेरपि रग्भवति, तेन मिश्रशब्दोऽन्तोदात्तः । तिलशब्दः 'तृणधान्यानाञ्च द्व्यषाम्' इत्याद्युदात्तः ।

प्रमिश्रम्, सन्मिश्रमित्यस्य प्राप्नोति, अतस्तन्निवृत्तयेऽनुपसर्गग्रहणं क्रियते ? इत्याह– इहेत्यादि । अथ वा—मिश्रशब्देन तृतीयासमास उच्यमानः कथं सोपसर्गो लभ्यते ? इत्याह—इहेत्यादि । यदि तदिहानुपसर्गग्रहणं क्रियते, तर्ह्यन्यत्र मिश्रशब्दग्रहणे सोप-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तेन मिश्रश्लक्ष्णैरिति सोपसर्गेणापि मिश्रशब्देन तृतीयासमासो भवति।

असन्धाविति किम्? ब्राह्मणमिश्रो राजा। ब्राह्मणैः सह संहितः=ऐकार्थ्यमापन्नः।

सन्धिरिति हि पणबन्धेनैकार्थ्यमुच्यते।

केचित्पुनराहुः — गृह्यमाणविशेषा प्रत्यासत्तिः=सन्धिरिति, अत्र राज्ञो ब्राह्मणैः सह देशप्रत्यासत्तावपि सत्यां मूर्त्तिविभागस्वरूपभेदो गृह्यत इति ब्राह्मणमिश्रो राजेति प्रत्युदाह्रियते।

पदमञ्जरी

प्राप्नोति, कथं वा मिश्रशब्देन समान उच्यमानः सोपसर्गेण लभ्यते? अत आह—*इहेत्यादि*।

प्रत्युदाहरणे सन्धिं दर्शयति—*ब्राह्मणैरिति*। एतदेव स्पष्टयति—*ऐकार्थ्यमापन्न इति*।

कथं पुनः सन्धिशब्दस्यायमर्थः? इत्याह—*सन्धिरिति*। पणबन्धः = परिभाषणम्—यदि मे भवानेवं कुर्यादहमपि ते इदं करिष्यामीत्येवंरूपः।

*केचित्पुनरिति*। गृह्यमाणो विशेषो व्यावृत्तिर्यस्यां प्रत्यासत्तौ सा तथोक्ता। ततः किम्? इत्याह—*तत्रेति*। यद्यपि राज्ञोऽपि ब्राह्मणैस्सह प्रत्यासत्तिरस्ति,

न्यासः

सर्गस्य ग्रहणं नास्तीतीहानुपसर्गग्रहणमनर्थकं स्यात्। तेनेत्यादि। ज्ञापनस्य प्रयोजनं दर्शयति।

ब्राह्मणमिश्रो राजेति। 'पूर्वसदृश' इत्यादिनैव समासः। ब्राह्मणैः सह संहित इत्यनेन प्रत्युदाहरणे सन्धिं दर्शयति। ऐकार्थ्यमापन्न इति। अनन्तरोक्तमेवार्थं विस्पष्टीकरोति। एकः = अभिन्नोऽर्थो यस्य स एकार्थः, तद्भाव ऐकार्थ्यम्। तदापन्नः = प्राप्त इत्यर्थः।

कथं पुनर्ज्ञायते—सन्धिशब्दस्यायमर्थः? इत्याह—सन्धिरितीत्यादि। पणबन्धः = परिभाषणम्—यदि मे भवानिदं कुर्यात् ततोऽहमपि भवत इदं करिष्यामीत्येवजातीयकम्। तेन पणबन्धेन यदैकार्थ्यं तत् सन्धिरुच्यते। तस्मात् प्रत्युदाहरणे सन्धौ सति ब्राह्मणैः सह संहित ऐकार्थ्यमापन्नः—इत्येषोऽर्थो विज्ञायते। केचित् पुनराहुरित्यादि। गृह्यमाणो विशेषो यस्यां प्रत्यासत्तौ सा गृह्यमाणविशेषा सन्धिरिति केचिदेवमाहुः, तत्रैव स्यात्। एवंविधः सन्धिः प्रत्युदाहरणे नास्तीत्यत आह—अत्र राज्ञो ब्राह्मणैः सहेत्यादि। यद्यपि राज्ञा ब्राह्मणैः सह प्रत्यासत्तिः = देशसामीप्यमस्ति, तथापि

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



उदाहरणेष्वविभागापत्तिरेव — गुडमिश्रा इति ॥

**नञो गुणप्रतिषेधे सम्पाद्यर्हहितालमर्थास्तद्धिताः ॥ १५५ ॥**

सम्पादि, अर्हं, हित, अलम् — इत्येवमर्था ये तद्धितास्तदन्तान्युत्तरपदानि नञो गुणप्रतिषेधे वर्त्तमानात् पराण्यन्तोदात्तानि भवन्ति । सम्पादि — कर्णवेष्टकाभ्यां सम्पादि मुखं कार्णवेष्टकिकम्, न कार्णवेष्टकिकम् अकार्णवेष्टकिकम् । अर्हं — छेदमर्हति छैदिकः, न छैदिकोऽच्छैदिकः । हित — वत्सेभ्यो हितो वत्सीयः, न वत्सीयोऽवत्सीयः ।

पदमञ्जरी

तथापि सत्यामपि तस्यां परस्परमूर्तिविभागस्वरूपभेदो गृह्यत इति प्रत्युदाहरणोपपत्तिरित्यर्थः ।

उदाहरणेषु नैवमित्याह—*उदाहरणेष्विति* ॥

*नञो गुणप्रतिषेधे सम्पाद्यर्हहितालमर्थास्तद्धिताः* ॥ सम्पादि – शोभनम् । *कार्णवेष्टकिकमिति* । 'सम्पादिनि' इति प्राग्वतेष्ठञ् । छैदिक इति । 'छेदादिभ्यो नित्यम्' इति 'आर्हादगोपुच्छ' इत्यादिना ठक् । *वत्सीय इति* । 'प्राक्

न्यासः

सत्यामपि तस्यां मूर्तिविभागो मूर्तिविशेषो राज्ञो ब्राह्मणानाञ्च गृह्यत इत्येव । इतिकरणो हेतौ । यत एवम्, तेन ब्राह्मणैः सह मिश्रो राजेति प्रत्युदाह्रियते ।

उदाहरणेष्वविभागापत्तिरेवेति । एतेन गुडमिश्रा इत्यादौ तु सन्वेरभावं दर्शयति । यथा हि विलीनेन मिश्रा धानादयो भवन्ति, तथास्य गुडाः, तेषां च मूर्तिविभागो न गृह्यते; न तत्र सन्वेरविभागापत्तिरिति । न विभागोऽविभागः, तस्यापत्तिः प्राप्तिः । यदा पणबन्धेनैकार्थ्यं सन्धिस्तदोदाहरणेषु तस्याभावो वेदितव्यः । स हि परिभाषणविशेषणलक्षणः । न चासौ गुडमिश्रेषु धानास्वचेतनेषु विद्यते; तस्य प्राणिधर्मत्वात् ॥

नञो गुणप्रतिषेधे सम्पाद्यर्हहितालमर्थास्तद्धिताः ॥ सम्पाद्याद्यर्थास्तद्धिता इति । तद्धितप्रत्ययाः । तस्मात् प्रत्ययग्रहणपरिभाषया तदन्तविधिर्विज्ञायते । गुणप्रतिषेधे इति । यस्मिन् वाक्यार्थे तद्धित उत्पद्यते स तद्धितस्य प्रवृत्तिनिमित्तं विधीयते— यथोक्तम्—'उपकारि सिद्धमङ्गम्, साध्योऽनुपकारकस्त्वङ्गी' इति । अङ्गी, गुण इति पर्यायावेतौ । गुणस्य प्रतिषेधो गुणप्रतिषेधः । एतच्च नञो विशेषणम्, गुणप्रतिषेधे चेन्नञ्वर्तत इत्यर्थः । कार्णवेष्टकिकमिति । कर्णवेष्टकाभ्यां शोभत इत्यर्थः । 'सम्पादिनि' इति 'प्राग्वतेष्ठञ्', न कार्णवेष्टकिकमकार्णवेष्टकिकमिति । अत्र कर्णवेष्टकाभ्यां सम्पद्यत इति वाक्यार्थे तद्धितास्तस्य प्रवृत्तिनिमित्तं यो गुणस्तस्य प्रतिषेधेन नञ्वर्तते । तत् पुनः प्रवृत्तिनिमित्त-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


अलमर्थं — सन्तापाय प्रभवति सान्तापिकः, न सान्तापिकोऽसान्तापिकः।

नञ इति किम् ? गर्दभरथमर्हति गार्दभरथिकः। विगार्दभरथिकः। गुणप्रतिषेध इति किम् ? गार्दभरथिकादन्योऽगार्दभरथिकः। 'गुण' इति तद्धितार्थप्रवृत्तिनिमित्तं सम्पादित्वाद्युच्यते। तत्प्रतिषेधो यत्रोच्यते समासे तत्रायं विधिः। कर्णवेष्टकाभ्यां न सम्पादि मुखमिति।

पदमञ्जरी

क्रीताच्छः'। *सान्तापिक इति*। 'तस्मै प्रभवति सन्तापादिभ्यः' इति 'प्राग्वतेष्ठञ्'।

*नञ इति किमिति*। प्रतिषेधे प्रायेण नञ एव प्रवृत्तिदर्शनात्प्रश्नः। *विगार्दभरथिक इति*। अव्ययपूर्वपदप्रकृतिस्वर एवात्र भवति। *गार्दभरथिकादन्य इत्यादि*। उदाहरणादस्य विशेषं प्रदर्शयितुम् 'गुणप्रतिषेधे' इति सूत्रावयवं व्याचष्टे—*गुण इति*। तद्धितार्थः सम्पाद्यादिः, तस्य यत्प्रवृत्तिनिमित्तं सम्पादित्वादि। आदिशब्देन तदर्हत्वादेर्ग्रहणम्, स गुण इत्युच्यते। उक्तं हि—

संसर्गभेदकं यद्यत् सव्यापारं प्रतीयते।
गुणत्वं परतन्त्रत्वात्तस्य शास्त्र उदाहृतम्॥ इति।

कथं तस्य गुणस्य प्रतिषेध उच्यते ? इत्याह—*कर्णवेष्टकाभ्यां न सम्पादीति*।

न्यासः

त्वम्। छैदिक इति। छेदमर्हतीति 'आर्हादगोपुच्छ' इत्यादिना ठक्। वत्सीय इति। 'प्राक् क्रीताच्छः'। सान्तापिक इति। 'तस्मै प्रभवति सन्तापादिभ्यः' इति 'प्राग्वतेष्ठञ्'। विगार्दभरथिक इति। 'तदर्हति' इत्यार्हीयष्ठञ्। विशब्देन प्रादिसमासः। विशब्दोऽयमिह गार्दभरथिक इत्यस्य गुणप्रतिषेधे वर्तते। अत्र 'तत्पुरुषे तुल्यार्थ' इत्यादिना पूर्वपदस्य प्रकृतिस्वर एव भवति। एवमुत्तरत्रापि। नञ्यसति, अस्मिन् प्रत्युदाहरणेऽपि यत् पूर्वपदं प्रकृतिस्वरः प्रत्युदाहार्यः। गार्दभरथिकादन्योऽगार्दभरथिक इति। अत्र गार्दभरथिकादन्यत्र नञ् वर्तते, न तु गार्दभरथिकत्वस्य प्रतिषेधे; पर्युदासत्वादस्य। गुण इति तद्धितार्थप्रवृत्तिनिमित्तमित्यादि। तद्धितार्थः—कर्णवेष्टकाभ्यां सम्पादीत्येवमादिवाक्यार्थः, तत्र यत् प्रवृत्तिनिमित्तं तद्धितान्तस्य शब्दस्य सम्पादित्वादि तद् गुण इत्युच्यते। आदिशब्देन तदर्हत्वादेर्ग्रहणम्। तद्धितान्तमलमर्थञ्च परिगृह्यते। तत्प्रतिषेध इत्यादि। तस्य प्रतिषेधो यत्र समास उच्यते तत्रायं विधिः। कथं तस्य गुणस्य प्रतिषेध उच्यते ? इत्याह—कर्णवेष्टकाभ्यां न सम्पादि मुखमिति। एतेन सर्वेण प्रसज्यप्रतिषेधेऽयं विधिः, न पर्युदास इति दर्शयन्नगार्दभरथिक इत्यत्र प्रत्युदाहरणेऽस्य विधेरभावं दर्शयति।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सम्पाद्यर्हहितालमर्था इति किम् ? पाणिनीयमधीते पाणिनीयः, न पाणिनीयोऽपाणिनीयः। तद्धिता इति किम् ? कन्यां वोढुमर्हति कन्यावोढा, न वोढा अवोढा – 'अर्हे कृत्यतृचश्च' इति तृच् ॥

**ययतोश्चातदर्थे ॥ १५६ ॥**

य, यत् – इत्येतौ यौ तद्धितावतदर्थे वर्त्तेते तदन्तस्योत्तरपदस्य नञो गुणप्रतिषेधविषयादन्त उदात्तो भवति। पाशानां समूहः पाश्या, न पाश्या अपाश्या। अतृण्या। यत् – दन्तेषु भवं दन्त्यम्, न दन्त्यम् दन्त्यम्। अकर्ण्यम्।

अतदर्थ इति किम् ? पादार्थमुदकं पाद्यम्, न पाद्यमपाद्यम्।

तद्धिता इत्येव – अदेयम्। गुणप्रतिषेध इत्येव – दन्त्यादन्यत् अदन्त्यम्।

निरनुबन्धकैकानुबन्धकयोर्यतोर्ग्रहणादिह न भवति–'वामदेवाड्

पदमञ्जरी

*वोढेति*।अर्हार्थे तृच्, ढत्वधत्वष्टुत्वढलोपेषु 'सहिवहोरोदवर्णस्य' इत्योत्वम्॥

*ययतोश्चातदर्थे*॥ पाशतृणशब्दाभ्यां समूहे 'पाशादिभ्यो यः', दन्तकर्णशब्दाभ्यां भवार्थे 'दिगादिभ्यो यत्', 'शरीरावयवाच्च' इति यत्।

*पाद्यमिति*। 'पादार्घाभ्यां च' इति यत्। *अदेयमिति*। अर्हार्थे 'अचो यत्',

न्यासः

पाणिनीयमिति। 'वृद्धाच्छः'। अपाणिनीय इति। अत्राप्येतयर्थे यस्तद्धितस्तदन्तमुत्तरपदम्। न सम्पाद्यर्हहितालमर्था ये तद्धितास्तदन्तम्। वोढेति।पूर्ववद् धत्वढत्वष्टुत्वढलोपा विधेयाः, 'सहिवहोरोदवर्णस्य' इत्योत्त्वम्। अवोढेति। अत्रार्हार्थो य कृदन्तः स उत्तरपदम्। तेन तद्धितग्रहणादन्तोदात्तत्वमुत्तरपदस्य न भवति, अव्ययपूर्वपदप्रकृतिस्वर एव भवति। पूर्वपदप्रकृतिस्वरापवादो योग.। एवमुत्तरेऽपि योगा द्रष्टव्याः; 'प्राग्बहुव्रीहाविदमेतद्' इत्यादियोगात्॥

ययतोश्चातदर्थे॥ पाश्येति। प्रत्ययस्वरेणान्तोदात्तत्वम्। अदन्त्यमिति। 'ययोऽनावः' इत्याद्युदात्तत्वम्। एवम्—अकर्ण्यमित्येतदपि तद्वदेवाद्युदात्तम्।

पाद्यमिति। 'पादार्घाभ्याञ्च' इति यत्।

दन्त्यादन्यद्दन्त्यमिति। अत्र दन्त्यादन्यत्र नञ् वर्तते, न तु तदन्तस्य प्रतिषेधे। अदेयमिति। 'अर्हे कृत्यतृचश्च' इत्यत्रार्हार्थे यत्, 'ईद् यति' इतीत्त्वम्। अथेह कस्मान

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



ङ्यड्ङ्यौ' — वामदेव्यम्, न वामदेव्यमवामदेव्यमिति ॥

## अच्कावशक्तौ ॥ १५७ ॥

अच्, क — इत्येवमन्तमशक्तौ गम्यमानायामुत्तरपदं नञः परमन्तोदात्तं भवति। अपचो यः पक्तुं न शक्नोति। अजयः। कः खल्वपि — अविक्षिपः। अविलिखः।

अशक्ताविति किम्? अपचः, दीक्षितः। अपचः परिव्राजकः[1] ॥

## आक्रोशे च ॥ १५८ ॥

आक्रोशे च गम्यमाने नञ उत्तरमच्कान्तमन्तोदात्तं भवति। अपचोऽयं जाल्मः। अपठोऽयं जाल्मः। पक्तुं पठितुं शक्तोऽप्येवमाक्रुश्यते। अविक्षिपः। अविलिखः ॥

## संज्ञायाम् ॥ १५९ ॥

पदमञ्जरी

'ईद्यति' इतीत्वम्, गुणः। *निरनुबन्धकैकानुबन्धयोरिति*। एते च परिभाषे— 'वामदेवाड् ड्यड्ड्यौ' इत्यत्र ज्ञापिते ॥

*अच्कावशक्तौ* ॥ *अविक्षिप इति*। वक्ष्यमाणैः कृत्योकेष्णुच्भिः साहचर्यादच्कयोः कृतोरिदं ग्रहणम्, तेन कृद्ग्रहणपरिभाषया विक्षिपशब्दस्य कान्तत्वम्।

दीक्षितपरिव्राजकौ शास्त्रनिषेधान्न पचतः, न त्वशक्तत्वात्, तेन तत्र व्रतं गम्यते, न त्वशक्तिः ॥

*आक्रोशे च* ॥ *अपचोऽयं जाल्म इति*। लोभोऽत्र विवक्षितः, न त्वशक्तिः ॥

न्यासः

भवति—वामदेवेन दृष्टं साम वामदेव्यम्? इत्यत आह—निरनुबन्धकेत्यादि। गतार्थम् ॥

अच्कावशक्तौ ॥ अपच इति। पचाद्यच्। अविक्षिप इति। 'इगुपधज्ञाप्रीकिरः कः'। अपचोऽदीक्षित इत्यादि। दीक्षितपरिव्राजकौ शास्त्रे प्रतिषिद्धत्वान्न पचतः; न त्वशक्तत्वात्। तेनात्र व्रतं गम्यते, न त्वशक्तिः ॥

आक्रोशे च ॥ अत्राक्रोशे दोषवचनमाक्रोशः। अगम्यमानायामप्यशक्तौ यथा स्यादिति वचनम् ॥

---

१. 'गुणप्रतिषेध इत्येव, भव्यो यः पचादपचः'—इत्यधिकमेकस्मिन् पुस्तके।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



आक्रोशे गम्यमाने नञः परमुत्तरपदं संज्ञायां वर्त्तमानमन्तोदात्तं भवति । अदेवदत्तः । अयज्ञदत्तः । अविष्णुमित्रः ॥

कृत्योकेष्णुच्चार्वादयश्च ॥ १६० ॥

कृत्य, उक, इष्णुच् – इत्येवमन्ताश्चार्वादयश्च नञ उत्तरेऽन्तोदात्ता भवन्ति । कृत्य – अकर्त्तव्यम् । अकरणीयम् । उक – अनागामुकम् । अनपलाषुकम् । इष्णुच् – अनलङ्करिष्णुः । अनिराकरिष्णुः ।

इष्णुज्ग्रहणे 'कर्त्तरि भुवः खिष्णुच्' इत्यस्य द्व्यनुबन्धकस्यापि ग्रहणमिकारादेर्विधानसामर्थ्याद् भवति । अनाढ्यम्भविष्णुः । असुभगम्भविष्णुः ।

पदमञ्जरी

*संज्ञायाम्* ॥ *अदेवदत्त इति* । यो देवदत्तः सन् तत्कार्यं न करोति, स एवमाक्रुश्यते ॥

*कृत्योकेष्णुच्चार्वादयश्च* ॥ *द्व्यनुबन्धकस्यापि ग्रहणमिति* । भवतीति वक्ष्यमाणेन सम्बन्धः । अत्रैव हेतुः—*इकारादेर्विधानसामर्थ्यादिति* । भवतेरुदात्तत्वात्ततः

न्यासः

संज्ञायाम् ॥ अदेवदत्तोऽयज्ञदत्त इति । देवदत्तयज्ञदत्त-शब्दावन्तोदात्तौ प्रातिपदिकस्वरेण । यो देवदत्तः सन् तत् कार्यं न करोति स एवमाक्रुश्यते । एवमविष्णुमित्र इत्यत्रापि वेदितव्यम् ॥

कृत्योकेष्णुच्चार्वादयश्च ॥ कृत्य, उक, इष्णुजिति प्रत्ययग्रहणम् । तत्र प्रत्ययग्रहणपरिभाषया तदन्तोपस्थानं भवति । चार्वादीनि प्रातिपदिकान्येव । अकर्त्तव्यमिति । यदा तव्यदन्तस्तदा कर्तव्यशब्दोऽन्तस्वरितः । यदा तव्यान्तस्तदा मध्योदात्तः । अकरणीयमिति । अनीयर्-प्रत्ययान्तत्वाद् 'उपोत्तमं रिति' इति रित्स्वरेण मध्योदात्तः करणीयशब्दः । अनागामुकम्, अनपलाषुकमिति । 'लषपतपद' इत्यादिनोकञ् । आगामुकापलाषुकशब्दौ कृत्स्वरेण मध्योदात्तौ । अनलङ्करिष्णुरिति । 'अलंकृञ्' इत्यादिनेष्णुच् । अलङ्करिष्णुशब्दश्चित्स्वरेणान्तोदात्तः । एवं निराकरिष्णुशब्दोऽपि । एकानुबन्धकग्रहणपरिभाषयेष्णुज्ग्रहणे द्व्यनुबन्धकस्य खिष्णुचो ग्रहणेन न भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात्, अतस्तां निराकर्त्तुमाह—इष्णुज्ग्रहणे कर्तरि भुवः खिष्णुजित्यस्य द्व्यनुबन्धकस्यापि ग्रहणम् । भवतीति वक्ष्यमाणेन सम्बन्धः । अत्रैव कारणमाह—इकारादेर्विधानसामर्थ्यादिति । खिष्णुच इकारादेर्विधानस्यैतदेव प्रयोजनम्—इह सूत्रे सामान्येन ग्रहणं यथा स्याद्, अन्यथा तदपार्थकं स्यात्, उदात्तत्वाद् भवतेः; ततः परस्य खिष्णुच इटैवेकारादित्वात् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



चार्वादयः — अचारुः । असाधुः । अयौधिकः । अवदान्यः ।

चारु । साधु । यौधिक । अनङ्गमेजय । अत्र द्वितीय नञ्समासेऽन्तोदात्तत्वम् । अननङ्गमेजयः । वदान्यः । अकस्मात् । अत्रापि द्वितीये नञ्समासेऽन्तोदात्तत्वम् — अनकस्मात् । * वर्त्तमानवर्द्धमानत्वरमाणध्रियमाणक्रियमाणरोचमानशोभमानाः संज्ञायाम् * । एते वर्त्तमानादयः संज्ञायां द्रष्टव्याः । * विकारसदृशे व्यस्तसमस्ते * । अविकारः । असदृशः । अविकारसदृशः । गृहपति । गृहपतिकः । * राजाह्नोश्छन्दसि * । अराजा । अनहः । भाषायां नञ्स्वर एव भवति । चार्वादिः ॥

विभाषा तृन्नन्नतीक्ष्णशुचिषु ॥ १६१ ॥

तृन्नन्त, अन्न, तीक्ष्ण, शुचि — इत्येतेषु नञ उत्तरेषु विभाषाऽन्त उदात्तो भवति । अकर्त्ता । अन्न — अनन्नम् । तीक्ष्ण — अतीक्ष्णम् ।

पदमञ्जरी

परस्य खिष्णुच इटैवेकारादित्वे सिद्धे इकारादेर्विधानमिह सामान्यग्रहणार्थमेवेति भावः । *अचारुरित्यादि* ।

चरेर्ञुण् *चारुः* । साधेरुण् *साधुः* । युधा चरति *यौधिकः* । 'एजेः खश्' अङ्गमेजयः, ततोऽन्योऽ*नङ्गमेजयः* । वदेरान्यः । न कस्मादक*स्मात्* । 'वृतु वर्तने', 'वृधु वृद्धौ', 'ञित्वरा सम्भ्रमे', 'रुच दीप्तौ', 'धृङ् अवस्थाने'—एते शानजन्ताः गृह्यते । संज्ञायां कन्—*गृहपतिकः* । *गृहपतिरि*त्यन्ये पठन्ति ॥

न्यासः

अचारुरित्यादि । 'दृसनिजनिचरिचटिभ्यो ञुण्' इति ञुण् । तेनाद्युदात्तश्चारुशब्दः । साधुशब्दोऽन्तोदात्तः; 'कृवापा' इत्यादिनोण्प्रत्ययान्तत्वात् । युधा चरति यौधिकः, 'प्राग्वहतेष्ठक्', 'कितः' इत्यन्तोदात्तः । अनङ्गमेजय इति । अव्ययस्वरेणाद्युदात्तः । अत्र द्वितीये नञ्समासे समासान्तोदात्तत्वमिति नञ्समासः स्यात् । अत्रापीत्यादि । कस्माच्छब्दस्य नञ उत्तरस्याद्युदात्तत्वविधानात् । अत्रापि द्वितीयेन नञ्समासेनान्तोदात्तत्वमिति । वर्तमान, वर्धमान—इत्येवमादयः शानजन्तत्वादन्तोदात्ताः । विकारसदृशशब्दः समासस्वरेणान्तोदात्तः । गृहपतिकशब्दः 'संज्ञायां कन्' इति कनन्तत्वादाद्युदात्तः । 'वदेरान्यः', वदान्यशब्दः प्रत्ययस्वरेण मध्योदात्तः ॥

विभाषा तृन्नन्नतीक्ष्णशुचिषु ॥ तृन्निति प्रत्ययग्रहणम्, तेन पूर्ववत् तदन्तस्योपस्थानम् । अन्नादीनि प्रातिपदिकानि । अकर्तेति । ताच्छीलिकस्तृन् । तेन नित्स्वरेणाद्यु-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



शुचि – अशुचिः । पक्षे – अव्ययस्वर एव भवति ॥

**बहुव्रीहाविदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने ॥ १६२ ॥**

बहुव्रीहौ समासे इदम्, एतद्, तत् – इत्येतेभ्य उत्तरस्य प्रथम-शब्दस्य पूरणप्रत्ययान्तस्य च क्रियागणनवर्त्तमानस्यान्त उदात्तो भवति । इदं प्रथमं गमनं भोजनं वा स इदम्प्रथमः, इदन्द्वितीयः, इदन्तृतीयः । एतत्प्रथमः, एतद्द्वितीयः, एतत्तृतीयः । तत्प्रथमः, तद्द्वितीयः, तत्तृतीयः ।

बहुव्रीहाविति किम् ? अनेन प्रथम इदम्प्रथमः । 'तृतीया' इति योग-विभागात्समासः । इदमेतत्तद्भ्य इति किम् ? यत्प्रथमः । प्रथमपूरण-योरिति किम् ? तानि बहून्यस्य तद्बहुः । क्रियागणन इति किम् ? अयं प्रथम एषां त इदम्प्रथमाः । द्रव्यगणनमेतत् । गणन इति किम् ? अयं

पदमञ्जरी

*बहुव्रीहाविदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने* ॥ प्रथमेति स्वरूप-ग्रहणम् । पूरणशब्दस्य स्वरितत्वात्तदधिकारविहितानां प्रत्ययानां ग्रहणम् ।

*अनेन प्रथम इति* । अत्र तृतीयापूर्वपदप्रकृतिस्वर एव भवति ।

*यत्प्रथमा इति* । यः प्रथम एषामिति बहुव्रीहिः । अत्रापि पूर्वपदप्रकृतिस्वर एव भवति ।

न्यासः

दात्तः कर्तृशब्दः । अन्नशब्दोऽपि 'नब्विषयस्य' इति । 'कृत्यशूभ्यां क्स्नः' इति 'तिजे-र्दीर्घश्च' इति तीक्ष्णशब्दोऽन्तोदात्तः । 'इन्' इति वर्तमाने 'इगुपधात् कित्', तेन शुचि-शब्द आद्युदात्तः ॥

बहुव्रीहाविदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने ॥ प्रथमपूरणयोरिति । प्रथमे स्वरूपग्रहणम् । पूरणग्रहणे पूरणेऽर्थे ये प्रत्यया विहितास्ते गृह्यन्ते; प्रथमसाह-चर्यात् । अथ वा— पूरणग्रहणं स्वर्यते, स्वरितेन चाधिकारगतिर्भवति । तेन 'तस्य पूरणे डट्' इत्यधिकृत्य ये प्रत्यया विहितास्तेषां ग्रहणं भवति । इदम्प्रथम इति । प्रथमो-ऽन्तोदात्तः । 'प्रथेरमच्' इत्यमच्प्रत्ययान्तत्वात् । इदमादयस्त्यदादिष्वन्तोदात्ता निपात्यन्ते; इदन्द्वितीयः, इदन्तृतीय इति । 'द्वेस्तीयः', 'त्रेः सम्प्रसारणं च' इति तीयप्रत्ययान्तत्वाद् मध्योदात्तौ द्वितीयतृतीयशब्दौ ।

अनेन प्रथम इदम्प्रथम इति । अत्र 'तत्पुरुषे तुल्यार्थ' इत्यादिना पूर्वपदप्रकृतिस्वर एव भवति । यत्प्रथम इति । यत् प्रथममेषामिति बहुव्रीहिः । अत्र 'बहुव्रीहौ प्रकृत्या'

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रथम एषामिदम्प्रथमाः । इदम्प्रधाना इत्यर्थः ।

उत्तरपदस्य कार्यित्वात् कपि पूर्वमन्तोदात्तं भवति । इदम्प्रथमकाः ।

'बहुव्रीहौ' इत्येतद् 'वनं समासे' इति प्रागेतस्मादधिकृतं वेदितव्यम् ॥

संख्यायाः स्तनः ॥ १६३ ॥

पदमञ्जरी

*इदम्प्रधाना इत्यर्थं इति* ।

अनेन प्रधानवचनः प्रथमशब्दो न त्वेकसंख्यावचन इति दर्शयन् गणनाभावमाह—*उत्तरपदस्येत्यादि* । सर्वत्रेह समासस्येति प्रकृतम्, 'उत्तरपदादिः' इत्यतः प्रभृति 'उत्तरपदस्य' इति च, तत्र चोत्तरपदं कार्यित्वेनाश्रीयते । तेन यदा कबुत्पद्यते तदा कपि परतो यत्पूर्वं प्रथमेति तदन्तोदात्तं भवति, न तु कबन्तम् । कप्प्रत्ययो हि समासस्यैवान्तः, नोत्तरपदस्य । यदा च समासार्थादुत्तरपदादकृत एव समासे समासान्त इति पक्षः, तदापि 'प्रथमपूरणयोः' इति विशिष्टरूपग्रहणात्, कपश्च तत्रानन्तर्भावादुपात्तयोरेव स्वरः । ननु यदत्रोत्तरपदं कबन्तं न तदुपात्तम्, यच्चोपात्तं न तदुत्तरपदम्, कपा सहोत्तरपदत्वादिति नात्र कपः स्वरप्रसङ्गः, नापि ततः पूर्वपदस्य स्वरेण भवितव्यम् । तस्मादस्मिन् पक्षे उत्तरपदग्रहणमुपात्तस्योपलक्षणम् । प्रायेण हि तदुत्तरपदम्, उत्तरपदस्य कार्यित्वात् । कोऽर्थः ? प्रायेणोत्तरपदभूतयोः प्रथमपूरणयोः कार्यित्वादित्यर्थः ॥

न्यासः

इति पूर्वपदप्रकृतिस्वर एव भवति । एवमुत्तरेष्वप्यस्मिन् बहुव्रीह्यधिकारे प्रत्युदाहरणेषु वेदितव्यम् । इदम्प्रधाना इत्यर्थ इति । एतेनानन्तरोक्ते प्रत्युदाहरणे प्रथमशब्दः प्रधानवचनः, न त्वेकसंख्यावचन इति दर्शयन् गणनाभावं दर्शयति ।

उत्तरपदस्येत्यादि । इह सूत्रे 'प्रथमपूरणयोः' इति त्वन्यविभक्त्योरुत्तरपदनिर्देशः कृतः, न बहुव्रीहिर्निर्देशः कृतः । तेनोत्तरपदस्यैव कार्यित्वम्, न बहुव्रीहेः । ततश्च यदा कबुत्पद्यते तदा 'कपि पूर्वम्' अन्तोदात्तं भवति । कप्प्रत्ययो हि समासाधिकारे विहितत्वात् समासस्यैवान्तो भवति, नोत्तरपदस्य । न ह्युत्तरपदं समासः, तेन 'कबुत्तरपदक्रमेण गृह्यते' इत्युत्तरपदस्यान्तोदात्तत्वं विधीयमानं कपो न भवति, किं तर्हि ? पूर्वस्य । इदम्प्रथमका इति । 'शेषाद्विभाषा' इति कप् । 'बहुव्रीहौ प्रकृत्या' इति पूर्वपदप्रकृतिस्वरापवादो योगः ।

एवमुत्तरेऽपि बहुव्रीह्यधिकारेऽस्मिन् योगा द्रष्टव्याः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



संख्यायाः परः स्तनशब्दो बहुव्रीहौ समासेऽन्तोदात्तो भवति। द्विस्तना। त्रिस्तना। चतुःस्तना।

संख्याया इति किम्? दर्शनीयस्तना। स्तन इति किम्? द्विशिराः[1] ॥

## विभाषा छन्दसि ॥ १६४ ॥

छन्दसि विषये बहुव्रीहौ समासे संख्यायाः परः स्तनशब्दो विभाषाऽन्तोदात्तो भवति। द्विस्तनां कुर्याद्वामदेवः। द्विस्तनां करोति द्यावापृथिव्योर्दोहाय चतुःस्तनां करोति पशूनां दोहायाष्टातनां करोति छन्दसां दोहाय ॥

## संज्ञायां मित्राजिनयोः ॥ १६५ ॥

संज्ञायां विषये बहुव्रीहौ समासे मित्र, अजिन — इत्येतयोरुत्तरपदयोरन्त उदात्तो भवति। देवमित्रः। ब्रह्ममित्रः। वृकाजिनः। कूलाजिनः। कृष्णाजिनः ॥

संज्ञायामिति किम्? प्रियमित्रः। महाजिनः।

* ऋषिप्रतिषेधो मित्रे *। विश्वामित्र ऋषिः ॥

### पदमञ्जरी

*विभाषा छन्दसि* ॥ *द्विस्तना*—इत्यन्तोदात्तम्। चतुस्तना—इत्याद्युदात्तम् ॥

*संज्ञायां मित्राजिनयोः* ॥ *विश्वामित्र इति*। 'मित्रे चर्षौ' इति दीर्घः,

### न्यासः

संख्यायाः स्तनः ॥ द्विस्तना, त्रिस्तनेति। द्वित्रिशब्दौ प्रातिपदिकस्वरेणान्तोदात्तौ। 'स्तनगदी देवशब्दे', चुरादिरदन्तः, तस्माद् घञ्। तेन स्तनशब्द आद्युदात्तः। चतुस्तनेति। 'चतेरुरन्' इत्युरन्प्रत्ययान्तत्वाच्चतुःशब्द आद्युदात्तः।

दर्शनीयशब्दोऽनीयर्-प्रत्ययान्तः 'उपोत्तमं रिति' इति मध्योदात्तः। द्विशिरा इति। शिरःशब्दः 'नब्विषयस्य' इत्याद्युदात्तः ॥

विभाषा छन्दसि ॥ संज्ञायां मित्राजिनयोः ॥ देवमित्रो ब्रह्ममित्र इति। देवब्रह्मशब्दावुक्तस्वरौ। 'अमिचिमिदिशसिभ्यः क्त्रः' इति मित्रशब्दोऽन्तोदात्तः। वृकाजिन इति। प्रकृतिविकारयोर्भेदस्याविवक्षितत्वाद् वृकविकारे वृकशब्दोऽत्र वर्तते। वृकमजिनमस्य वृकाजिनः। वृकशब्दः 'प्राणिनां कुपूर्वाणाम्' इत्याद्युदात्तः। 'स्यास्त्याहेम-

---

1. 'त्रिशिराः' इत्यधिकं बहुषु पुस्तकेषु।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


## व्यवायिनोऽन्तरम् ॥ १६६ ॥

व्यवायी = व्यवधाता, तद्वाचिनः परमन्तरं बहुव्रीहौ समासेऽन्तोदात्तं भवति । वस्त्रान्तरः । पटान्तरः । कम्बलान्तरः । वस्त्रमन्तरं व्यवधायकं यस्य स वस्त्रान्तरः । वस्त्रव्यवधायक इत्यर्थः ।

व्यवायिन इति किम् ? आत्मान्तरः । आत्मा=स्वभावोऽन्तरः= अन्यो यस्यासावात्मान्तरः ॥

## मुखं स्वाङ्गम् ॥ १६७ ॥

मुखमुत्तरपदं स्वाङ्गवाचि बहुव्रीहौ समासेऽन्तोदात्तं भवति । गौरमुखः । भद्रमुखः ।

स्वाङ्गमिति किम् ? दीर्घमुखा शाला । स्वाङ्गमद्रवादिलक्षणमिह गृह्यते ॥

पदमञ्जरी

परत्वादनेनान्तोदात्तत्वं प्राप्तं प्रतिषिध्यते, ततः 'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदान्तोदात्तं भवति ॥

*व्यवायिनोऽन्तरम्* ॥ उदाहरणे व्यवधानवाचिनोऽन्तराशब्दात् 'तत्करोति' इति णिचि पचाद्यच् । प्रत्युदाहरणे त्वन्यवाच्यन्तरशब्दः ॥

*मुखं स्वाङ्गम्* ॥ *दीर्घमुखा शालेति* । मुखशब्देनात्र द्वारप्रदेशः शालाया उच्यते । ननु च स्वमङ्गं स्वाङ्गम्, ततश्च भवितव्यमेवात्रापि ? अत आह— *स्वाङ्गमद्रवादिलक्षणं गृह्यत इति* ॥

न्यासः

विम्य इनच्' इत्यधिकृत्य 'अजेरज च' इतीनजादेशश्च । तेनाजिनमन्तोदात्तम् । कूलाजिन इति । कु इति निपातः, तस्मिन्नुपपदे 'ला आदाने' इत्येतस्माद् 'अन्येष्वपि दृश्यते' इति डः; 'अन्येषामपि दृश्यते' इति पूर्वपदस्य दीर्घत्वम् । तेन कूल इत्यन्तोदात्तः । कृष्णाजिन इति । 'इण्सिञ्जिदीङुष्यविभ्यो नक्' इत्यधिकृत्य 'कृषेर्वर्णे' इति नक् । तेन कृष्णोऽन्तोदात्तः ।

प्रियमित्र इति । प्रीणातीति प्रियः, 'इगुपध' इत्यादिना कः । तेन प्रियोऽन्तोदात्तः । महाजिन इति । 'वर्त्तमाने पृषद्बृहन्महज्जगच्छतृवच्च' इति महच्छब्दोऽन्तोदात्तः ॥

व्यवायिनोऽन्तरम् ॥ मुखं स्वाङ्गम् ॥ गौरमुख इति । 'गुरी उद्यमने',

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



**नाव्ययदिक्शब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः ॥ १६८ ॥**

अव्यय, दिक्शब्द, गो, महत्, स्थूल, मुष्टि, पृथु, वत्स – इत्येतेभ्यः परं मुखं स्वाङ्गवाचि बहुव्रीहौ समासे नान्तोदात्तं भवति । अव्यय – उच्चैर्मुखः । नीचैर्मुखः । दिक्शब्द – प्राङ्मुखः । प्रत्यङ्मुखः । गो – गोमुखः । महत् – महामुखः । स्थूल – स्थूलमुखः । मुष्टि – मुष्टिमुखः । पृथु – पृथुमुखः । वत्स – वत्समुखः । पूर्वपदप्रकृतिस्वरो यथायोगमेषु भवति । गोमुष्टिवत्सपूर्वस्योपमानलक्षणो विकल्पः पूर्वविप्रतिषेधेन बाध्यते ॥

**पदमञ्जरी**

*नाव्ययदिक्शब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः*॥ उच्चैर्नीचैःशब्दौ स्वरादिष्वन्तोदात्तौ । *प्राक्शब्दः* 'अनिगन्तोऽञ्चतौ' इत्याद्युदात्तः । *प्रत्यङ्ङि*त्यत्र कृदुत्तरपदप्रकृतिस्वरः । *गोमहतो*रुक्तः स्वरः । *स्थूलशब्दः* 'ऋज्रेन्द्र' इत्यादौ निपातितः, अन्तोदात्तः । मुषेः क्तिच्— मुष्टिः । कुश्च, 'प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्च' इति *पृथुः* । वदेः सः, वत्सः । *गोमुष्टिवत्सपूर्वस्येत्यादि* । अस्य प्रतिषेध-

**न्यासः**

एतस्मादच् । तदन्तादपि प्रज्ञादेराकृतिगणत्वात् 'प्रज्ञादिभ्यश्च' इत्यण् , तेन गौरोऽन्तोदात्तः । उदि हणातेरच्लौ पूर्वपदान्त्यलोपश्च इति प्रकृत्य 'डित् खनेर्मुट् स चोदात्तः' इति खनेरचलावित्येतौ प्रत्ययौ भवतः, तौ च डितौ, मुट् चोदात्तः । तेन मुखशब्द आद्युदात्तः । भद्रमुख इति । 'ऋज्रेन्द्र' इत्यादिसूत्रेण भद्रशब्दो व्युत्पाद्यते । तेन भद्र इत्यन्तोदात्तः ।

दीर्घमुखा शालेति । मुखशब्देनात्र द्वारप्रदेशः शालाया उच्यते । स्वाङ्गमद्रवलक्षणमिह गृह्यत इति । 'अद्रवं मूर्तिमत् स्वाङ्गम्' इत्यादि यत् परिभाषितं स्वाङ्गमद्रवादिलक्षणं तदिह गृह्यते । तेन दीर्घमुखा शालेत्यत्र न भवतीति भावः ॥

नाव्ययदिक्शब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः ॥ पूर्वेण प्राप्तस्यान्तोदात्तत्वादयं प्रतिषेध उच्यते । उच्चैर्मुख इति । उच्चैरित्येते स्वरादौ पठ्यन्ते, तेऽन्तोदात्ता इति निपात्यन्ते । प्राङ्मुख इति । प्राङित्येत् क्विन्नन्तमाद्युदात्तम् , तत्र 'अनिगन्तोऽञ्चतौ वप्रत्यये' इति पूर्वपदस्य प्रकृतिस्वरः । प्रत्यङ्मुख इति । अत्र कृदुत्तरपदप्रकृतिस्वरः । गोमुखः, महामुख इति । गोमहच्छब्दावन्तोदात्तावित्युक्तम् । स्थूलमुख इति । 'स्थूल परिबृंहणे' —चुरादिः, तस्मात् पचाद्यच् । तेन स्थूलशब्दोऽन्तोदात्तः । मुष्टिमुख इति । मुषेः क्तिच् । तेन मुष्टिशब्दोऽन्तोदात्तः । पृथुमुख इति । 'कुभ्रश्च' इत्यधिकृत्य 'प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्च' इति कुप्रत्ययः । तेन पृथुरन्तोदात्तः । वत्समुख

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


## निष्ठोपमानादन्यतरस्याम् ॥ १६९ ॥

निष्ठान्तादुपमानवाचिनश्च मुखं स्वाङ्गमुत्तरपदमन्यतरस्यां बहुव्रीहौ समासेऽन्तोदात्तं भवति। प्रक्षालितमुखः। यदैतदुत्तरपदान्तोदात्तत्वं न भवति, तदा 'निष्ठोपसर्गपूर्वमन्यतरस्याम्' इति पक्षे पूर्वपदान्तोदात्तत्वम्, तदभावपक्षेऽपि पूर्वपदप्रकृतिस्वरत्वेन गतिस्वर इति त्रीण्युदाहरणानि भवन्ति। उपमानात् — सिंहमुखः। व्याघ्रमुखः॥

पदमञ्जरी

स्यावकाशो यत्र गवाद्युपमानं न भवति—गौर्मुखमिव यस्य, मुष्टिर्मुखमिव यस्य, वत्सो मुखमिव यस्येति, सर्वत्र गवाद्युपमेयम्, नोपमानम्; विकल्पस्योत्तरस्यावकाशो यत्र गवादिपूर्वपदं न भवति—सिंहमुखः; व्याघ्रमुखः; गवादावुपमाने उभयप्रसंगेऽयमेव भवति प्रतिषेधः पूर्वविप्रतिषेधेन॥

*निष्ठोपमानादन्यतरस्याम्*॥ हिंसेः पचाद्यच्, पृषोदरादित्वादाद्यन्त-

न्यासः

इति। 'वृत्बदिहनि' इत्यादिना सः। तेन वत्सोऽन्तोदात्तः। गोमुष्टीत्यादि। उत्तरसूत्रेण निष्ठादिपूर्वपदस्योपमानलक्षणोऽपि यः प्राप्नोति सोऽप्यनेन बाध्यते। अस्य प्रतिषेधस्यावकाशो यत्र गवाद्युपमानं न—गौर्मुखमिव यस्य, मुष्टिमुखमिव यस्य, वत्सो मुखमिव यस्येति सर्वत्र गवाद्युपमेयम्, नोपमानम्। उत्तरसूत्रेण निष्ठादिपूर्वपदस्योपमानलक्षस्य विकल्पस्यावकाशो यत्र गवादेरन्यदुपमानम्—सिंहमुखः, व्याघ्रमुख इति। यत्र गवाद्युपमानं तद् यत्र पूर्वपदं तत्रोभयप्राप्तावुपमानक्षणं बाधित्वाऽयमेव प्रतिषेधो पूर्वविप्रतिषेधेन॥

निष्ठोपमानादन्यतरस्याम्॥ 'मुखं स्वाङ्गम्' इति नित्ये प्राप्ते विकल्पवचनमेतत्। यदैतदुत्तरपदान्तोदात्तत्वमित्यादि। अन्यतरस्यां ग्रहणाद्विकल्पेनैतदुत्तरपदान्तोदात्तत्वं विधीयते। तेन यदैतन्न भवति तदा 'निष्ठोपसर्गपूर्वपदस्यान्तरस्याम्' इति पक्षे पूर्वपदान्तोदात्तत्वं भवति। तस्यापि विकल्पेन विधानाद् यदास्याभावस्तदा 'गतिरनन्तरः' इति पूर्वपदस्य प्रकृतिभावविधानाद् गतिस्वर एव। तेनाद्युदात्तत्वं भवति। यत एवं ततस्त्रीण्युदाहरणानि भवन्ति—एकमनेन सूत्रेणोत्तरपदस्यान्तोदात्तत्वविधानम्, द्वितीयम् 'निष्ठोपसर्गपूर्वादन्यतरस्याम्' इत्यादिना पूर्वपदान्तोदात्तत्वविधानम्, तृतीयम् 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरविधानम्। सिंहमुख इति। सिंहशब्दः पचाद्यजन्तत्वादन्तोदात्तः। 'तृहि हिसि हिंसायाम्', हिनस्तीति सिंहः—पृषोदरादित्वाद् वर्णव्यत्ययः। व्याघ्रमुख इति। 'घ्रा गन्धोपादाने'—इत्यस्माद् व्याङ्पूर्वाद् 'आतश्चोपसर्गे कः', तेन व्याघ्रशब्दोऽप्यन्तोदात्त एव॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## जातिकालसुखादिभ्योऽनाच्छादनात् क्तो-ऽकृतमितप्रतिपन्नाः ॥ १७० ॥

जातिवाचिन आच्छादनवर्जितात् कालवाचिनः सुखादिभ्यश्च परं क्तान्तं कृतमितप्रतिपन्नान् वर्जयित्वा बहुव्रीहौ समासेऽन्तोदात्तं भवति । शाङ्गरजग्धः[1] । पलाण्डुभक्षितः । सुरापीतः । काल[2] – मासजातः । संवत्सरजातः । द्व्यहजातः । त्र्यहजातः । सुखादिभ्यः – सुखजातः । दुःखजातः । तृप्रजातः ।

पदमञ्जरी

विपर्ययः—सिंहः । व्याजिघ्रतीति व्याघ्रः । 'आतश्चोपसर्गे' इति कः । 'पाघ्राध्मास्थाम्नादाण्दृश्यर्त्तिसर्त्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः' इति शो न भवति; 'जिघ्रतेः संज्ञायां प्रतिषेधः' इति वचनात् ॥

*जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः* ॥ ननूदाहरणेषु

न्यासः

जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः ॥ शाङ्गरजग्ध इति । गृणातेरिंतेर्वा 'शमिधातोः संज्ञायाम्' इत्यच्- शङ्गरः, ततोऽपि प्रज्ञादेराकृतिगणत्वादण् । तेन शाङ्गरशब्दोऽन्तोदात्तः । पलाण्डुभक्षित इति । 'पल गतौ', 'उणादयो बहुलम्' इत्याण्डुप्रत्ययः । तेन पलाण्डुशब्दो मध्योदात्तः । सुरापीत इति । 'सुसूधागृधिभ्यः क्रन्' इति सुराशब्द आद्युदात्तः । मासजात इति । 'मसी परिमाणे' — अस्माद् घञ्, तेन मास आद्युदात्तः । संवत्सरजात इति । 'अशेः सरः' इत्यधिकृत्य 'वसेश्च', 'सम्पूर्वाच्चित्' इति । तेन संवत्सरोऽन्तोदात्तः । द्व्यहजातः, त्र्यहजात इति । द्वित्रिशब्दावन्तोदात्तावित्युक्तम् । सुखजात इति । खनतेः सुपूर्वाद् 'अन्येष्वपि दृश्यते' इति डः[3] । तेन सुखशब्दोऽन्तोदात्तः । एवं दुःखशब्दोऽपि वेदितव्यः । अयं तु विशेषोऽत्र—'दुष्पूर्वात् खनेर्डः' इति । तृप्रे 'स्फायितञ्चि' इत्यादिना रप्रत्ययः । तेन तृप्रशब्दोऽन्तोदात्तः । कृच्छ्रजात इति । 'कृते च्छः क्रू च' इति' कृच्छ्रशब्दोऽन्तोदात्तः[1] । 'असु क्षेपणे', अस्माद् 'बहुलमन्यत्रापि' इति रक्, तेनास्रमन्तोदात्तम् । 'वृतृवदिहनिकमिकषिभ्यः सः' इति बहुलवचनादमेरपि भवति । अंसो वृषादित्वादाद्युदात्तः ।

---

१. 'शारङ्गजग्धः' इति न्याससम्मतः पाठः ।

२. 'कालात्' इति पाठान्तरम् ।

२. एवं क्रमशः सुखादयो व्युत्पाद्यन्ते । ते च यथा न्यासमतेन—

सुखदुःखतृप्रकृच्छ्राण्यस्रांसावलकं तथा ।
करुणकृपणौ सोढः प्रतीपश्च सुखादयः ॥ इति । ( प्र० सं० स० )



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



जात्यादिभ्य इति किम्? पुत्रजातः। आहिताग्न्यादित्वात्पर-निपातः। अनाच्छादनादिति किम्? वस्त्रच्छन्नः। वसनच्छन्नः। अकृत-मितप्रतिपन्ना इति किम्? कुण्डकृतः। कुण्डमितः। कुण्डप्रतिपन्नः।

एतेषु बहुव्रीहिषु निष्ठान्तस्य पूर्वनिपातो[1] न भवति; अस्मादेव ज्ञापकात्। प्रत्युदाहरणेषु पूर्वपदप्रकृतिस्वरो योजयितव्यः।

सुखादयस्तृतीयेऽध्याये पठ्यन्ते[2]॥

पदमञ्जरी

प्रत्युदाहरणेषु च निष्ठेति निष्ठान्तं पूर्वं प्रयोक्तव्यं स्यात्? इत्यत आह—एते-ष्विति। *प्रत्युदाहरणेष्वित्यादि*। तत्र पुत्रशब्दोऽन्तोदात्तः। वसेष्ट्रन्—वस्त्रम्, तस्यैव ल्युट्—वसनम्। कुण्डशब्दः 'नब्विषयस्यानिसन्तस्य' इत्याद्युदात्तः॥

न्यासः

अलकमिति। अलतेः 'पुंसि संज्ञायां घः प्रायेण', ततः कन्निति कन्नन्तोऽलकशब्दः। तेनाद्युदात्तः। 'कृवृदारिभ्य उनन्', तेन करुणशब्द आद्युदात्तः। 'रञ्जेः क्युन्' इति बहुलवचनात् कृपेरपि भवति। तेन कृपणमाद्युदात्तम्। सोढ इति क्तान्तम्। तेनैत-दन्तोदात्तम्। पूर्ववद् घत्वढत्वादयः कर्तव्याः। प्रतीपमिति। प्रतिगता आपोऽस्मिन्निति बहुव्रीहिः। 'ऋक्पूः' इत्यादिनाऽकारः समासान्तः, 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' इतीत्वम्। पुत्रजात इति। अत्र बहुव्रीहिस्वर एव भवति। 'अमिचिमिदिशसिभ्यः क्त्रः', 'पुवो ह्रस्वश्च'। तेन पुत्रशब्दोऽन्तोदात्तः।

कथं पुनर्जातशब्दस्य परनिपातः, यावता 'निष्ठा' इति पूर्वनिपातेनात्र भवितव्यम्? इत्यत आह—आहिताग्न्यादित्वादित्यादि। पुत्रजातशब्दोऽयमाहिताग्न्यादिषु पठ्यते, तेन वा 'आहिताग्न्यादिषु' इति जातादिशब्दस्य परनिपातः। वस्त्रच्छन्न इति। वस्त्रम्= आच्छादनम्, आच्छाद्यतेऽनेनेति कृत्वा। वस्त्रशब्द उक्तस्वरः। छन्नशब्दः 'छद अपवारणे' इत्यस्य ण्यन्तस्य निष्ठायाम् 'वा दान्तशान्त' इत्यादिना निपातितः। वसन-च्छन्न इति। वसेराच्छादनार्थाल्ल्युट्। तेन वसनमाद्युदात्तम्। कुण्डलकृत इति। कुण्डशब्दोऽयम् 'नब्विषयस्य' इत्याद्युदात्तः। कुण्डमित इति। 'माङ् माने', 'द्यतिस्यति' इत्यादिनेत्त्वम्।

अथ कथमेतेषु बहुव्रीहिषु 'निष्ठा' इत्यनेन निष्ठान्तस्य पूर्वनिपातो न भवति? इत्याह—एतेष्वित्यादि। यस्मादेतत् कृतम्, तस्माज्जात्यादिभ्यः परस्यान्तोदात्तत्वविधानम्।

---

१. 'परनिपातो' इति पाठा०।

२. (३.१.१८) सूत्रे इति शेषः। (प्र० सं० स०)

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## वा जाते ॥ १७१ ॥

जातशब्द उत्तरपदे वाऽन्त उदात्तो भवति बहुव्रीहौ समासे जातिकालसुखादिभ्यः। दन्तजातः। स्तनजातः। कालात् – मासजातः। संवत्सरजातः। सुखादिभ्यः – सुखजातः। दुःखजातः॥

## नञ्सुभ्याम् ॥ १७२ ॥

नञ्सुभ्यां परमुत्तरपदं बहुव्रीहौ समासेऽन्तोदात्तं भवति। अयवो देशः। अव्रीहिः। अमाषः। सुयवः। सुव्रीहिः। सुमाषः।

समासस्यैतदन्तोदात्तत्वमिष्यते। समासान्ताश्चावयवा भवन्तीति—

### पदमञ्जरी

*वा जाते* ॥ *दन्तस्तनशब्दौ* 'स्वाङ्गशिटामदन्तानाम्' इत्याद्युदात्तौ। मासशब्दः 'ग्रामादीनां च' इत्याद्युदात्तः। संवत्सरशब्दः 'बंहिष्ठवत्सरतिशत्थान्तानाम्' इत्यन्तोदात्तः। अस्यार्थः— बंहिष्ठवत्सरतिशत्थ इत्येवमन्तानामन्त उदात्तो भवति—बंहिष्ठः, संवत्सरः, सप्ततिः, अशीतिः, त्रिंशत्, चत्वारिंशत्, गूथम्, पूथम्।

*सुखदुःखशब्दौ* 'खान्तस्याशमादेः' इत्यन्तोदात्तौ। अस्यार्थः—खान्तस्य शब्दस्याशकारमकारादेरन्त उदात्तो भवति, नखः, उखा। अश्मादेरिति किम्? शिखा, मुखम्। तृपेः 'स्फायितञ्चि' इत्यादिना रक्प्रत्ययः। 'कृतेश्छू च'—कृच्छ्रम्। असेर्बहुलवचनाद्रक्, अस्रम्। 'अम्बिकादयश्च' इति अम्बिकशब्द इकन्प्रत्ययान्तो निपातितः। प्रतिगता आपोऽत्र प्रतीपम्। 'कृवापाजिभ्य उण्'—कारुः। कृपेः क्युन्– कृपणः। सहेः क्ते सोढः। दश सुखादयः॥

*नञ्सुभ्याम्* ॥ *समासस्यैतदित्यादि*। यद्यपि समास उत्तरपदं चेति प्रकृतम्,

### न्यासः

एतस्मादेव ज्ञापकान्निष्ठान्तस्य पूर्वनिपातो न भवति; अन्यथा ह्येतदन्तोदात्तत्वविधानं नोपपद्यते॥

वा जाते॥ जातशब्दोऽपि क्तान्त इति तस्यापि जात्यादिभ्यः परस्य पूर्वेण नित्यमन्तोदात्तत्वे विकल्पोऽयमुच्यते। दन्तजात इति। 'हसिमृग्रिण्वामिदमि' इत्यादिना तन्- दन्तः। तेनायमाद्युदात्तः। स्तनजात इति। स्तनशब्द उक्तस्वरः॥

नञ्सुभ्याम्॥ अयवो देश इत्यादि। यवव्रीहिमाषाः 'तृणधान्यानाञ्च द्व्यषाम्' इत्याद्युदात्ताः।

समासस्येत्यादि। इह समासः प्रकृत उत्तरपदं च। तत्र यद्युत्तरपदस्यैतदन्तो-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अनृचः, बह्वृच इत्यत्र कृते समासान्तेऽन्तोदात्तत्वं भवति ॥

पदमञ्जरी

तथाप्यत्र समासस्यैव कार्यित्वमिष्यते । एतच्च 'कपि पूर्वम्' इति वचनादवसीयते । यदि ह्यनेनोत्तरपदस्यान्तोदात्तत्वं स्यात्, ततोऽकुमारीक इत्यादावनेनैव सिद्धत्वात् 'कपि पूर्वम्' इति न वाच्यं स्यात् । *समासान्ताश्च समासावयवा भवन्तीति* । समासान्ता इत्यत्रान्तग्रहणमेतदर्थम्—समासान्ताः समासग्रहणेन यथा गृह्येरन्निति, तेनानृच इत्यादौ कृते समासान्ते तस्यैव समासान्तस्योदात्तत्वं भवति । बह्वृच इति । 'बहोर्नञ्वद्' इत्यतिदेशादिदमत्रोदाहृतम् । एतच्च 'समासान्ताः समासस्यैवावयवाः, नोत्तरपदस्य' इत्याश्रित्योक्तम् । 'न कपि' इत्यत्र तु 'पूर्वं समासान्तेषु पश्चात्तदन्तेन समासः' इति वक्ष्यति ॥

न्यासः

दात्तत्वं स्याद्, अनृचो बह्वृच इत्यत्र 'ऋक्पूरब्धूः' इत्यादिनाकारे समासान्ते कृते ततः पूर्वस्य ऋक्शब्दस्योत्तरपदस्यान्तोदात्तत्वं प्रसज्येत । समासस्य त्वन्तोदात्तत्वं विधीयमानमकारस्यैव भवति; तस्य समासावयवत्वात् । समासावयवत्वं तु 'समासान्ताः' इत्यधिकृत्य विधानात् । तस्मात् समासावयवस्यैतदन्तोदात्तत्वमिष्यते । कथं पुनरिष्यमाणमपि लभ्यते ? 'कपि पूर्वम्' इत्यत्र पूर्वग्रहणात् । तद्धि पूर्वग्रहणमनेन समासस्यान्तोदात्तत्वं विधीयमानम्—समासावयवस्य कप एव मा भूदित्येवमर्थं क्रियते । यदि तूभयपदस्यैतदन्तोदात्तत्वं स्यात्, तदान्तरेणापि कपिपूर्वग्रहणं कपिपूर्वस्योत्तरपदस्य स्यात्, न कपः; न हि कबुत्तरपदस्यावयवः, ततश्च पूर्वग्रहणमनर्थकम् । इदं तावत्—'समासान्ताः प्रत्ययाः समासस्यैवावयवाः, नोत्तरपदस्य' इत्येतद्दर्शनमङ्गीकृत्योक्तम् । इदानीम् 'उत्तरपदस्यापि तेऽवयवाः' इत्येतद् दर्शनमाश्रित्याह – समासान्ताश्चेत्यादि । उत्तरपदं चेति शेषः । एतदन्तोदात्तत्वमिष्यत इति प्रकृतेन सम्बन्धः । इतिकरणो हेतौ । अथ वा—उत्तरपदस्यैवैतदन्तोदात्तत्वमिष्यते । कुतः ? समासान्ता उत्तरपदावयवा भवन्तीत्यतो हेतोः । तेनानृचः, बह्वृच इत्यत्र कृते समासान्तेऽन्तोदात्तत्वं भवति, तच्चोत्तरपदस्य भवेत् । तस्यैव समासान्तस्य भवति; तस्योत्तरपदावयवत्वादिति भावः । यदि हि समासान्ता उत्तरपदावयवा न स्युः, तत उत्तरपदावयवस्यान्तोदात्तत्वं विधीयमानं समासान्तस्य न स्यात् । उत्तरपदावयवत्वे हि समासान्तानां तस्यैव समासान्तस्य भवति । कथं पुनः समासान्तानामुत्तरपदावयवत्वम् ? समासार्थादुत्तरपदात् पूर्वं समासान्तं विधाय पश्चात् तदन्तेन समासविधानात् । तथा हि 'न कपि' इत्यत्र वक्ष्यति—"'गोस्त्रियोरुपसर्जनस्य' इत्ययमपि ह्रस्वः कपि न भवति । समासार्थे ह्युत्तरपदे कपि कृते पश्चात् कबन्तेन सह समासेन भवितव्यमिति स्त्रीप्रत्ययान्तं समासप्रातिपदिकं न भवति" इति । समासान्तप्रत्ययान्तेन च पदेन यदि समासः

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## कपि पूर्वम् ॥ १७३ ॥

नञ्सुभ्यां कपि परतः पूर्वमन्तोदात्तं भवति। अकुमारीको देशः। अवृषलीकः। अब्रह्मबन्धूकः। सुकुमारीकः। सुवृषलीकः। सुब्रह्मबन्धूकः ॥

## ह्रस्वान्तेऽन्त्यात्पूर्वम् ॥ १७४ ॥

ह्रस्वोऽन्तो यस्य तदिदं ह्रस्वान्तमुत्तरपदं समासो वा, तत्रान्त्यात् पूर्वमुदात्तं भवति कपि परतो नञ्सुभ्यां परं बहुव्रीहौ समासे। अयवको देशः। अव्रीहिकः। अमाषकः। सुयवकः। सुव्रीहिकः। सुमाषकः।

पदमञ्जरी

कपि पूर्वम् ॥ पूर्वेण कप एवोदात्तत्वे प्राप्ते ततः पूर्वस्योदात्तत्वं विधीयते। 'ह्रस्वान्तेऽन्त्यात्पूर्वम्' इति वचनादिह दीर्घान्ता एवोदाहृताः। 'नद्यृतश्च' इति कप् ॥

ह्रस्वान्तेऽन्त्यात्पूर्वम् ॥ 'ह्रस्वान्ते' इत्यस्य बहुव्रीहेरन्यपदार्थं उत्तरपदं समासो वेत्याह—*ह्रस्वोऽन्तो यस्येत्यादि*।

अत्र च 'कपि परतः' इति पृथग्वचनात्तद्रहितमुत्तरपदं समासश्च गृह्यते,

न्यासः

क्रियते, तदा 'तन्मध्ये पतितास्तद्ग्रहणेन गृह्यन्ते' इति समासान्ताः प्रत्ययाः उत्तरपदावयवा भवन्ति। यद्येवम्, समासावयवत्वं तेषां नोपपद्यते? नैतदस्ति; अवयवावयवोऽपि हि समुदायावयवो भवति, तथा हि—'देवदत्तायाः सर्वेऽवयवा अलङ्क्रियन्ताम्' इत्युक्ते देवदत्तावयवस्य येऽवयवा अङ्गुल्यादयस्तेऽप्यलङ्क्रियन्ते ॥

कपि पूर्वम् ॥ पूर्वेण कप एवान्तोदात्तत्वे प्राप्ते कपि पूर्वस्योदात्तत्वमनेन विधीयते। अकुमारीक इत्यादि। 'शेषाद्विभाषा' इति कप्। कुमारीशब्द उदात्तनिवृत्तिस्वरेणान्तोदात्तः। वृषलीशब्दोऽपि जातिलक्षणेन ङीषा। ब्रह्मबन्धूरप्यूङन्तत्वात् प्रत्ययस्वरेण ॥

ह्रस्वान्तेऽन्त्यात् पूर्वम् ॥ ह्रस्वोऽन्तोऽस्येत्यादि। अनेन ह्रस्वान्त इत्यस्यैव बहुव्रीहेरन्यपदार्थं उत्तरपदं समासो वेति दर्शयति। अयवको देश इति। अत्र कपि परतो यव इत्येतद् ह्रस्वान्तमुत्तरपदम्, अयव इत्ययं वा समासः। तत्रान्त्याद् वकारात् पूर्वमक्षरं यकाराकार उदात्तो भवति। अनया दिशान्यत्रापि वेदितव्यम्।

अथ पूर्वग्रहणं किम्, यावता 'कपि पूर्वम्' इत्यतः पूर्वमिति वर्तत एव? इत्यत

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पूर्वमिति वर्त्तमाने पुनः पूर्वग्रहणं प्रवृत्तिभेदेन नियमप्रतिपत्त्यर्थम्—ह्रस्वान्तेऽन्त्यादेव पूर्वमुदात्तं भवति, न कपि पूर्वमिति। तेनाज्ञकः, सुज्ञक इत्यत्र कबन्तस्यैवान्तोदात्तत्वं भवति॥

## बहोर्नञ्वदुत्तरपदभूम्नि ॥ १७५ ॥

पदमञ्जरी

पूर्वग्रहणमनर्थकम्, कपि पूर्वमित्यनुवृत्तेः? इत्यत आह—*पूर्वमिति वर्तमाने इत्यादि*। द्वितीये पूर्वग्रहणे सति प्रवृत्तिभेदो भवति, तत्रैकया प्रवृत्त्या ह्रस्वान्तेऽन्त्यात्पूर्वस्योदात्तत्वं विधीयते, अपरया तु नियम्यते—ह्रस्वान्तेऽन्त्यादेव पूर्वमुदात्तं भवति, न तु कपि पूर्वमिति। तेन किं सिद्धं भवति? तत्राह—*तेनेति*। नास्त्यस्य ज्ञ इत्यज्ञकः, शोभनो ज्ञोऽस्येति सुज्ञकः। तत्र यद्येष नियमो न स्यात्, ततोऽन्त्यात्पूर्व उदात्तभावी नास्तीति 'कपि पूर्वम्' इत्ययमेव स्वरः स्यात्। अस्मिंस्तु नियमे सति न भवति, 'नञ्सुभ्याम्' इति कबन्तस्यैव भवति। यथा च कबन्तस्य भवति तथा तत्रैव प्रतिपादितम्। व्यक्तिपक्षाश्रयणे चैतत्पूर्वग्रहणं कृतम्। जातिपक्षाश्रयणे तु यथा 'हलादिः शेषः' इत्यत्र क्वचिदपि वर्तमानो हलादिरनादेः सर्वत्र निवृत्तिं करोति, (तथैव) 'ह्रस्वान्तेऽन्त्यात्पूर्वम्' इत्यत्रापि ह्रस्वजातेराश्रयणात्सर्वत्र ह्रस्वान्ते तक्रकौण्डिन्यन्यायेन 'कपि पूर्वम्' इत्यस्याप्रवृत्तिः सिध्यति॥

*बहोर्नञ्वदुत्तरपदभूम्नि*॥ नञ इव नञ्वत्, अस्मादेव निपातानात्पञ्चमीसमर्थाद्वतिः। यद्वा—सम्बन्धसामान्ये षष्ठी, तया सर्वे विभक्त्यर्थाः संगृह्यन्त इति पञ्चम्यर्थेऽपि 'तत्र तस्येव' इति वतिः षष्ठ्यन्तादेव। बहूनां भावो भूमा,

न्यासः

आह—पूर्वमिति वर्तमान इत्यादि। द्वितीये हि पूर्वग्रहणे क्रियमाणे वाक्यभेदेन प्रवृत्तिभेदो भवति; पूर्वग्रहणसामर्थ्यात्, अन्यथा हि तदपार्थकं स्यात्। तत्रैकया प्रवृत्त्या ह्रस्वान्तेऽन्त्यात् पूर्वमन्तोदात्तं विधीयते। अपरया तु ह्रस्वान्तेऽन्त्यात् पूर्वमन्तोदात्तं न भवतीति नियमः। तेन कपि पूर्वमन्तोदात्तं न भवति। तेनेत्यादिना नियमे सति यदिष्टं सम्पद्यते तद् दर्शयति। नास्य ज्ञो विद्यत इत्यज्ञकः। शोभनो ज्ञोऽस्येति सुज्ञकः। अत्र यद्येष नियमो न स्यात्, तदात्रान्त्यात् पूर्वं उदात्तभावी नास्तीति कपि पूर्वमन्तोदात्तं स्यात्। 'कपि पूर्वम्' इत्यनेन नियमे तु सति न भवति। तेन 'नञ्सुभ्याम्' इति कबन्तस्यैवान्तोदात्तत्वं भवति। यथा च स भवति तथात्रैवोपपादितम्॥

बहोर्नञ्वदुत्तरपदभूम्नि॥ 'नञ्सुभ्याम्' इत्यादिभिर्योगैर्नञ उत्तरस्य यत् स्वर-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



उत्तरपदार्थबहुत्वे यो बहुशब्दो वर्त्तते तस्मान्नञ इव स्वरो भवति । 'नञ्सुभ्याम्' इत्युक्तम्, बहोरपि तथा भवति – बहुयवो देशः, बहुव्रीहिः, बहुतिलः । 'कपि पूर्वम्' इत्युक्तम्, बहोरपि तथा भवति – बहुकुमारीको देशः, बहुवृषलीकः, बहुब्रह्मबन्धूकः । 'ह्रस्वान्तेऽन्त्यात्पूर्वम्' इत्युक्तम्, बहोरपि तथा भवति—बहुयवको देशः बहुव्रीहिकः, बहुमाषकः । 'नञो जरमरमित्रमृताः' इत्युक्तम्, बहोरपि तथा भवति – बहुजरः । बहुमरः । बहुमित्त्रः । बहुमृतः ।

उत्तरपदभूम्नीति किम् ? बहुषु मनोऽस्य बहुमना अयम् ॥

## न गुणादयोऽवयवाः ॥ १७६ ॥

पदमञ्जरी

'बहोर्लोपो भू च बहोः', उत्तरपदशब्देन तदर्थो गृह्यते; स्वरूपेणोत्तरपदस्य बहुत्वासम्भवात् । तदाह—*उत्तरपदार्थबहुत्व इति* । किमर्थं पुनरतिदेश आश्रीयते, न 'नञ्सुबहुभ्य उत्तरपदभूम्नि' इत्युच्येत, एवमपि ह्युच्यमाने 'उत्तरपदभूम्नि' इत्येतत्सम्भवव्यभिचाराभ्यां बहोरेव विशेषणं भविष्यति, योऽपि 'न गुणादयोऽवयवाः' इति प्रतिषेधः, तत्राप्युत्तरपदभूम्नीत्यनुवृत्तेर्बहोरेव भविष्यति, न 'नञ्सुभ्याम्'—अगुणः, सगुणः इति ? इदं तर्हि प्रयोजनम्—प्रकरणान्तरेऽपि यो नञाश्रयः स्वरस्तस्याप्यतिदेशो यथा स्यादिति । तद्दर्शयति—*नञो जरमरमित्त्रमृता इत्युक्तमित्यादि* ॥

*न गुणादयोऽवयवाः* ॥ 'गुण संख्याने' चुरादेरदन्तादेरच् । 'अशेः सरः',

न्यासः

विधानं तद्बहोरपि यथा स्यादित्येवमर्थमिदम् । नञ इव नञ्वत् । बहोर्भावो भूमा; पृथ्वादित्वादिमनिच्, 'बहोर्लोपो भू च बहोः' इति भूभावः । उत्तरपदस्य भूमेति षष्ठीसमासः । अथातिदेशः किमर्थः, न 'नञ्सुबहुभ्य उत्तरपदभूम्नि' इत्येवोच्येत; न चैवं योगे क्रियमाणे नञ्स्वोरप्युत्तरपदभूम्नीत्येतद् विशेषणमापाद्यते; सम्भवापेक्षत्वादस्य, यथैव हि 'हल्ङ्याब्भ्यो दीर्घात्' इत्यत्र दीर्घग्रहणं सम्भवापेक्षं विशेषणं ङ्यापोरेव भवति न हलः; तथैतदपि बहोरेव भविष्यति न नञ्स्वोः, न हि तयोरुत्तरपदार्थबहुत्वे वृत्तिः सम्भवतीति ? एवं तर्हि यदपि विदेशस्थं नञोपलक्षितं बहुव्रीहेः स्वरविधानम्, तदप्यस्मादतिदेशाद् यथा स्यादित्येवमर्थोऽयमतिदेशः क्रियते । तेन 'नञो जरमरमित्त्रमृताः' इत्युत्तरपदाद्युदात्तत्वमपि बहोरतिदिश्यते । बहुमना इति । अत्रोत्तरपदबहुत्वे बहुशब्दो न वर्तते ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



गुणादयोऽवयववाचिनो बहोरुत्तरे बहुव्रीहौ नान्तोदात्ता भवन्ति । बहुगुणा रज्जुः । बह्वक्षरं पदम् । बहुच्छन्दोमानम् । बहुसूक्तः । बह्वध्यायः ।

गुणादिराकृतिगणो द्रष्टव्यः ।

अवयवा इति किम् ? बहुगुणो ब्राह्मणः । अध्ययनश्रुतसदाचारादयोऽत्र गुणाः ॥

उपसर्गात् स्वाङ्गं ध्रुवमपर्शु ॥ १७७ ॥

उपसर्गात् स्वाङ्गं ध्रुवं पर्शुवर्जितमन्तोदात्तं भवति बहुव्रीहौ समासे । प्रपृष्ठः । प्रोदरः । प्रललाटः ।

'ध्रुवम्' इत्येकरूपमुच्यते । ध्रुवमस्य शीतमिति यथा । सततं यस्य प्रगतं पृष्ठं भवति स प्रपृष्ठः ।

पदमञ्जरी

*अक्षरः* । छन्दो मीयते येन *छन्दोमानम्* । वचेः सुपूर्वात् क्तः—*सूक्तम्* । अधीयतेऽस्मादिति *अध्यायः*, 'इङश्च' इति घञ् । एते गुणादयः ॥

*उपसर्गात् स्वाङ्गं ध्रुवमपर्शु* ॥ स्वाङ्गं प्रति क्रियायोगाभावाद् उपसर्गग्रहणं प्राद्युपलक्षणम् । *सततं यस्येत्यादिना* पृष्ठस्य ध्रुवत्वं दर्शयति । 'तीर्थपृष्ठगूढयूथ' इति पृष्ठशब्दो निपातितः ।

न्यासः

न गुणादयोऽवयवाः ॥ पूर्वेणातिप्रसक्तोऽतिदेश इति गुणादिना प्रतिषिध्यते—बहुगुणा रज्जुरिति । बह्ववयवा इत्यर्थः । 'गुण आमन्त्रणे' चुरादिः, तस्माद् घञ् । तेन गुणशब्द आद्युदात्तः । 'अशेः सरः' इत्यनेनाक्षरशब्दोऽन्तोदात्तः । छन्दो मीयतेऽनेनेति च्छन्दोमानम् । कृत्स्वरेण छन्दोमाने मानशब्द आद्युदात्तः; तस्य घञन्तत्वात् । शोभनमुक्तं सूक्तम् । प्रादिसमासः । थाथादिस्वरेण सूक्तशब्दोऽन्तोदात्तः । अधीयतेऽस्मादित्यध्यायः । 'इङश्च' इति घञ् । सूक्तवदध्यायोऽन्तोदात्तः ॥

उपसर्गात् स्वाङ्गं ध्रुवमपर्शु ॥ उपसर्गग्रहणं प्राद्युपलक्षणं वेदितव्यम्; स्वाङ्गं प्रति क्रियायोगाभावात् । प्रादिग्रहणमेव तु न कृतम्, वैचित्र्यार्थम् । ध्रुवशब्दोऽयमवयवेऽप्यस्ति, यथा—'ध्रुवमपायेऽपादानम्' इति; एकस्वरूपेऽप्यस्ति, यथा—ध्रुवमस्य शीतमिति; तदिहैकस्वरूपे वर्तमानो गृह्यत इति दर्शयितुमाह—ध्रुवमित्येकरूपमुच्यत इत्यादि । सततमित्यादिना ध्रुवत्वं पृष्ठस्य दर्शयति । पृष्ठशब्दोऽन्तोदात्तः । 'पृषु मृषु वृषु सेचने' इत्यस्य थकि व्युत्पादितत्वात् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



उपसर्गादिति किम् ? दर्शनीयललाटः । स्वाङ्गमिति किम् ? प्रशाखो वृक्षः । ध्रुवमिति किम् ? उद्बाहुः क्रोशति । अपर्श्विति किम् ? उत्पर्शुः । विपर्शुः ॥

**वनं समासे ॥ १७८ ॥**

समासमात्रे 'वनम्' इत्येतदुत्तरपदमुपसर्गात्परमन्तोदात्तं भवति । प्रवणे यष्टव्यम् । निर्वणे प्रणिधीयते । 'प्रनिरन्तरः' इति णत्वम् ।

समासग्रहणं समासमात्रपरिग्रहार्थम्, बहुव्रीहावेव हि स्यात् ॥

**अन्तः ॥ १७९ ॥**

अन्तश्शब्दादुत्तरं वनमन्तोदात्तं भवति । अन्तर्वणो देशः ।

पदमञ्जरी

*उद्बाहुः क्रोशतीति* । अत्र क्रोशनसमय एवोद्बाहुत्वं न सर्वदेत्यध्रुवत्वम् । 'स्पृशेः श्वण्शुनौ पृ च' स्पृशेर्धातोः श्वण्, शुन्—इत्येतौ प्रत्ययौ भवतः, धातोश्च पृ इत्यादेशः । बहुलवचनाच्छकारस्येत्संज्ञा न भवति, यथाक्रमं वृद्धिगुणौ—पार्श्वम्, पर्शुः ॥

न्यासः

दर्शनीयललाट इति । दर्शनीयशब्दः 'उपोत्तमं रिति' इति मध्योदात्तः । 'लक ईप्सायाम्' इत्यस्माद् 'उणादयो बहुलम्' इत्याटप्रत्ययः । तेन ललाटशब्दो मध्योदात्तः । प्रशाखो वृक्ष इति । 'उणादयो बहुलम्' इति वचनात् 'शो तनूकरणे' इत्यस्मात् खः, टाप्, सवर्णदीर्घत्वम्, 'एकादेश उदात्तेनोदात्तः' । तेन शाखाशब्दोऽन्तोदात्तः । उद्बाहुः क्रोशतीति । अत्र बाहोरेकरूपता नास्तीत्यध्रुवत्वम् । न ह्यसौ नित्यमूर्ध्वबाहुरेव क्रोशति, अपि तु कदाचिदधोबाहुरपि । उत्पर्शुरिति । 'स्पृशेः श्वण् शुनौ पृ च' इति शुन्प्रत्ययान्तः पर्शुः । तेनायमाद्युदात्तः ॥

वनं समासे ॥ समासमात्र इति । मात्रग्रहणेन बहुव्रीहेर्निवृत्तिं सूचयति । प्रवण इति । यदायं बहुव्रीहिस्तदा प्रकृष्टं प्रकृतं वा वनमस्येति विग्रहः । यदा तु तत्पुरुषः, तदा प्रकृष्टं वनं प्रगतं वा वनमिति विग्रहः । निर्वण इति । अत्रापि यदा बहुव्रीहिः, तदा निर्गतं वनमस्येति विग्रहः । यदा तु तत्पुरुषस्तदा निर्गतो वनादिति । तत्पुरुषस्तु 'कुगतिप्रादयः' इति । किं पुनः स्याद् यदि समासमात्रपरिग्रहार्थं समासग्रहणं न क्रियेत ? इत्यत आह—बहुव्रीहावेव हि स्यादिति । 'रञ्जेः क्युन्' । बहुलवचनाद् 'वनु याचने' इत्यस्मादपि भवति । तेन वनमाद्युदात्तम् ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


अनुपसर्गार्थं आरम्भः ॥

अन्तश्च ॥ १८० ॥

अन्तशब्दश्चोत्तरपदमुपसर्गादन्तोदात्तं भवति । प्रान्तः । पर्यन्तः । बहुव्रीहिरयम् , प्रादिसमासो वा ॥

न निविभ्याम् ॥ १८१ ॥

नि, वि—इत्येताभ्यामुत्तरोऽन्तशब्दो नान्तोदात्तो भवति । न्यन्तः । व्यन्तः । पूर्वपदप्रकृतिस्वरत्वे कृते यणादेशः । तत्र 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' इति स्वरितो भवति ॥

परेरभितोभावि मण्डलम् ॥ १८२ ॥

परेरुत्तरमभितोभाविवचनं मण्डलं चान्तोदात्तं भवति । परिकूलम् । परितीरम् । परिमण्डलम् । बहुव्रीहिरयम्, प्रादिसमासः,

पदमञ्जरी

*परेरभितोभावि मण्डलम्* ॥ बहुव्रीहिरयमित्यादि । यदा बहुव्रीहिस्तदा परितः कूलमस्येति विग्रहः । प्रादिसमासे तु परिगतं कूलमिति । यदा पुनरव्ययी-

न्यासः

अन्तः ॥ अन्तः इति स्वरादिष्वन्तोदात्तो निपात्यते । अन्तर्वणो देश इति । अन्तर्वनं यस्मिन्निति बहुव्रीहिः, 'वनेऽन्तः' इति शौण्डादिपाठात् सप्तमीसमासो वा । 'प्रानरन्तरः' इत्यादिना णत्वम् ।

अनुपसर्गार्थ आरम्भ इति । उपसर्गात् पूर्वेणैव सिद्धत्वात् ॥

अन्तश्च ॥ अन्तःशब्दः 'हसिमृग्रिण्वामिदमिलूपूधुर्विभ्यस्तन्' इति तन्प्रत्ययान्तत्वादाद्युदात्तः ॥

न निविभ्याम् ॥ पूर्वेण निविभ्यामप्युत्तरस्यान्तोदात्तत्वे प्राप्ते प्रतिषेधोऽयमुच्यते । पूर्वपदप्रकृतिस्वरत्वे कृत इति । यदा बहुव्रीहिस्तदा 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इति प्रकृतिस्वरत्वम् । यदा तु तत्पुरुषस्तदा 'तत्पुरुषे तुल्यार्थ' इत्यादिना ॥

परेरभितोभावि मण्डलम् ॥ परिकूलम् , परितीरमिति । कूलतीरशब्दावुक्तस्वरौ 'कूलतीरतूलमूल' इत्यादौ सूत्रे । परिमण्डलमिति । परितः = सर्वतो मण्डलं परिमण्डलम् । 'मणि भूषायाम्'—अस्मात् 'कलस्तृपश्च' इति बाहुलकात् कलप्रत्ययः, 'वृषादिभ्यश्चित्' इति च । तेन मण्डलमन्तोदात्तम् । बहुव्रीहिरयमित्यादि । यदा

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अव्ययीभावो वा। अव्ययीभावपक्षेऽपि हि 'परिप्रत्युपापावर्ज्यमानाहोरात्रावयवेषु' इति पूर्वपदप्रकृतिस्वरत्वं प्राप्तमनेन बाध्यते।

अभित इत्युभयतः, अभितो भावोऽस्यास्तीति तदभितोभावि। यच्चैवंस्वभावं कूलादि, तदभितोभाविग्रहणेन गृह्यते॥

## प्रादस्वाङ्गं संज्ञायाम्॥ १८३॥

प्रादुत्तरपदमस्वाङ्गवाचि संज्ञायां विषयेऽन्तोदात्तं भवति। प्रकोष्ठम्। प्रगृहम्। प्रद्वारम्।

### पदमञ्जरी

भावस्तदा परिकूलादिति। *अव्ययीभावपक्षेऽपि हीत्यादि*। अव्ययीभावेऽप्ययमेव स्वर एषितव्यः, न समासस्वरेण सिद्धिरित्यर्थः। *अभितो भावोऽस्यास्तीत्यभितोभावीति*। लौकिके योगे लाघवस्यासार्वत्रिकत्वाद्बहुव्रीहिरेव नाश्रित इत्याह—*अभितोभावीति*। 'सुप्यजातौ' इति णिनिरिति। *यच्चैवंस्वभावमिति*। अभितोभवनस्वभावम्॥

*प्रादस्वाङ्गं संज्ञायाम्*॥ प्रकोष्ठादिषु प्रादिसमासः, बहुव्रीहिर्वा॥

### न्यासः

बहुव्रीहिस्तदा—परितः कूलमस्य, परितस्तीरमस्येति विग्रहः। यदा तु प्रादिसमासस्तदा—परिगतं कूलम्, परिगतं तीरमिति। यदा पुनरव्ययीभावस्तदा—परि कूलात्, परि तीरादिति। अव्ययीभावस्तु 'अपपरिबहिरञ्चवः पञ्चम्या' इत्यनेन। परि कूलादिति पञ्चमी 'पञ्चम्यपाङ्परिभिः' इति कर्मप्रवचनीययोगे। कर्मप्रवचनीयत्वं तु परेः 'अपपरी वर्जने' इति। युक्तं यद् बहुव्रीहौ तत्पुरुषे चेदमन्तोदात्तत्वं विधीयते; तत्र हि समासान्तोदात्तत्वस्यापवादः पूर्वपदप्रकृतिस्वरः प्राप्नोति। अव्ययीभावे त्वयुक्तम्; तत्र हि समासान्तोदात्तत्वेनैव सिद्धम्। न हि तस्यापवादः पूर्वपदप्रकृतिस्वरः केनचित् प्राप्त इत्यत आह—अव्ययीभावपक्षेऽपि हीत्यादि। यदाप्यव्ययीभावपक्षः, तदापि 'परिप्रत्युपापा' इत्यादिना पूर्वपदप्रकृतिस्वरः प्राप्तोऽनेनान्तोदात्तत्वविधानेन बाध्यत इति किमत्रायुक्तम्। यच्चैवंस्वभावमित्यादि। अभितो भवनं यस्य स्वभावस्तदभितोभाविग्रहणेन गृह्यते, न तु तद्विपरीतस्वभावम्॥

पादस्वाङ्गं संज्ञायाम्॥ प्रकोष्ठमिति। 'उषिकुषिगातिभ्यस्थन्' इति कुषेः स्थन्। तेन कोष्ठशब्द आद्युदात्तः। प्रगृहमिति। 'गेहे कः' इति ग्रहेः कप्रत्ययः। तेन गृहमन्तोदात्तम्। प्रद्वारमिति। 'नब्विषयस्यानिसन्तस्य' इति द्वारमाद्युदात्तम्।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अस्वाङ्गमिति किम्? प्रहस्तम्। प्रपदम्। संज्ञायामिति किम्? प्रपीठम्[1]॥

निरुदकादीनि च ॥ १८४ ॥

निरुदकादीनि च शब्दरूपाण्यन्तोदात्तानि भवन्ति। निरुदकम्। निरुलपम्। निरुपलमित्यन्ये पठन्ति। निर्मक्षिकम्। निर्मशकम्। एषां प्रादिसमासः, बहुव्रीहिर्वा। अव्ययीभावे तु समासान्तोदात्तत्वेनैव सिद्धम्।

निष्कालकः। निष्क्रान्तः कालकादिति कन्प्रत्ययान्तेन कालब्देन प्रादिसमासः। निष्कालिकः—इत्यन्ये पठन्ति।

पदमञ्जरी

*निरुदकादीनि च ॥ एषामित्यादि।* यदा प्रादिसमासस्तदा—निर्गतमुदकं निर्गतं वोदकादिति[2] विग्रहः, बहुव्रीहौ—निर्गतमुदकमस्मादिति। अथाव्ययीभावार्थमप्येषां ग्रहणं कस्मान्न भवति? अत आह—*अव्ययीभावे त्विति। निष्कालिक इति।* कालशब्दाज्जानपदादिसूत्रेण ङीष्, ततः स्वार्थे कन्, 'केऽणः'

न्यासः

प्रपदमिति। पदं द्वारवदेवाद्युदात्तम्। प्रहस्तमिति। 'हसिमृग्रिणवामिदमि' इत्यादिना हसेस्तन्। तेन हस्तशब्द आद्युदात्तः॥

निरुदकादीनि च॥ निरुदकमिति। निष्क्रान्तमुदकमस्मादिति बहुव्रीहिः, निष्क्रान्तमुदकादिति वा प्रादिसमासः। उदकं कायतीति 'आतोऽनुपसर्गे कः', 'उदकस्योदः संज्ञायाम्' इत्युदभावः। तेनोदकमन्तोदात्तम्। निरुपलमिति। 'विटपविष्टपविशिपोलपाः' इत्युलपशब्दोऽन्तोदात्तो निपात्यते। निरुपलमित्यन्य इति। उपपूर्वाल्लातेः 'आतश्चोपसर्गे' इति कः। तेनोपलशब्दस्थाथादिस्वरेणाद्युदात्तः। निर्मक्षिकम्, निर्मशकमित्यादीनामिति। मशकमक्षिकाशब्दाद्युदात्तान्तोदात्तौ। तत्र हि अथादिः, प्राक् शकटेः; अथ द्वितीयः, प्रादीषादिति वर्तते। एषामित्यादि। यदि प्रादिसमासस्तदा—निर्गतमुदकं निर्गतं वोदकादिति विग्रहः। यदा तु बहुव्रीहिस्तदा—निर्गतमुदकमस्मादिति। अथाव्ययीभावोऽप्येषां कस्मान्न भवति? इत्याह—अव्ययीभावे त्वित्यादि। बहुव्रीहिप्रादिसमासयोस्तु समासान्तोदात्तत्वेन न सिध्यति। तथा हि—'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इति समासस्वरापवादः पूर्वपदप्रकृतिस्वरो बहुव्रीहावुक्तः।

---

१. 'प्रशमो वृक्षः' इत्यधिकं क्वचित् पठ्यते।

२. 'निरादयः क्रान्ताद्यर्थे' इति समासः।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



निष्पेषः । दुस्तरीपः । 'अवितृस्तृतन्त्रिभ्य ईः'—तरीः, तां पातीति तरीपः, कुत्सितस्तरीपो दुस्तरीपः । निस्तरीप इति केचित् पठन्ति । अपरे — निस्तरीक इति । ते तरीशब्दान्ते बहुव्रीहौ कपं कुर्वन्ति ।

निरजिनम् । उदजिनम् । उपाजिनम् ।

※ परेर्हस्तपादकेशकर्षाः ※ । परिहस्तः । परिपादः । परिकेशः । परिकर्षः । निरुदकादिराकृतिगणः ॥

## अभेर्मुखम् ॥ १८५ ॥

अभेरुत्तरं मुखमन्तोदात्तं भवति । अभिमुखः । बहुव्रीहिरयम्, प्रादिसमासो वा । अव्ययीभावे तु समासान्तोदात्तत्वेनैव सिद्धम् ।

### पदमञ्जरी

इति ह्रस्वः, कालिका; ततः प्रादिसमासः ।

*निष्पेष इति* । पिषेर्घञ् । *कुत्सितस्तरीप इति* । दुः कुत्सायां वर्तत इति दर्शयति । *अपरे निस्तरीक इति* । पठन्तीत्यनुषङ्गः, निष्पूर्वोऽजिनशब्दः । स एवोदुपपूर्वः ।

*परेरित्यादि* । परेरुत्तरे हस्तादयोऽन्तोदात्ता भवन्ति । *परिहस्त इत्यादि* । हरेरिव केशा यस्य *हरिकेशः*, कपेरिव *कपिकेशः*[१] ॥

### न्यासः

प्रादिसमासेऽपि 'तत्पुरुषे तुल्यार्थ' इत्यादिना ।

निष्कालक इति । कालकशब्दः कन्प्रत्ययान्तत्वादाद्युदात्तः । निष्कालिक इति । निष्क्रान्तः कालिकाया इति प्रादिसमासः । 'कालीति जनपदादिसूत्रेण ङीषन्तत्वादन्तोदात्तः, ततः स्वार्थिके कनि कृतेऽप्याद्युदात्त एव भवति ।

निष्पेष इति । 'पिष्लृ सञ्चूर्णने'—अस्माद् घञ् । तेन पेषशब्द आद्युदात्तः । तरीं पातीति । 'आतोऽनुपसर्गे कः' इति तरीपशब्दोऽन्तोदात्तः । कुत्सितस्तरीप इति कुत्सितग्रहणेन दुस्तरीपशब्दे दुःशब्दः कुत्सायां वर्तत इति दर्शयति । निस्तरीप इति केचिदिति । ते च निर्गतस्तरीप इति विगृह्य प्रादिसमासं कुर्वन्ति । अपरे निस्तरीक इतीति । पठन्तीति सम्बन्धः ।

निरजिनमित्यादि । 'अजिनमन्तोदात्तम्' इत्युक्तम् ।

परेरित्यादि । हस्तपादकेशाः 'स्वाङ्गशिटामदन्तानाम्' इत्याद्युदात्ताः । शिटाम् = सर्वनाम्नामित्यर्थः । कर्षशब्दः 'कर्षात्वतो घञोऽन्त उदात्तः' इत्यन्तोदात्तः ॥

अभेर्मुखम् ॥ अभिमुख इति । मुखशब्द उक्तस्वरः । अभिशब्दोऽन्तोदात्तः ।

१. पदमञ्जर्यनुसारमत्रोदाहरणद्वयमधिकम्, तच्चायुक्तम् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


'उपसर्गात्स्वाङ्गम्' इति सिद्धे वचनमबहुव्रीह्यर्थम्, अध्रुवार्थम्, स्वाङ्गार्थं च। अभिमुखा शाला ॥

अपाच्च ॥ १८६ ॥

अपाच्चोत्तरं मुखमन्तोदात्तं भवति। अपमुखः। अपमुखम्। अव्ययीभावोऽप्यत्र प्रयोजयति। तत्रापि हि 'परिप्रत्युपापावर्ज्यमानाहोरात्रावयवेषु' इत्युक्तम्।

योगविभाग उत्तरार्थः ॥

पदमञ्जरी

*अभेर्मुखम्* ॥ *उपसर्गात्स्वाङ्गं ध्रुवमिति सिद्ध इति*। 'मुखं स्वाङ्गम्' इति न सिद्ध्यति, 'नाव्ययदिक्शब्द' इति प्रतिषेधात् ॥

*अपाच्च* ॥ *अव्ययीभावोऽप्यत्र प्रयोजयतीति*। कुतः? इत्याह—*तत्रापि हीति*। यस्मात्तत्रापि 'परिप्रत्युपापा' इति पूर्वपदप्रकृतिस्वरत्वमुक्तम्, तस्मात्सोऽपि प्रयोजयतीत्यर्थः।

*योगविभाग उत्तरार्थ इति*। उत्तरत्र 'अपात्' इत्यस्यैवानुवृत्तिर्यथा स्यात्, अभेर्मा भूत् ॥

न्यासः

बहुव्रीहिरयमित्यादि। यदा बहुव्रीहिस्तदा—अभिगतं मुखमनेनेति विग्रहः। यदा तु प्रादिसमासस्तदा अभिगतो मुखम्, अभिगतो वा मुखेनेति। कस्मादयमव्ययीभावो न भवति? इत्याह अव्ययीभावे त्वित्यादि।

वचनमिदमबहुव्रीह्यर्थमिति। यदा मुखं ध्रुवं भवति तदाऽध्रुवार्थम्, अस्वाङ्गार्थञ्चेति। अध्रुवमस्वाङ्गञ्च मुखं बहुव्रीहावपि यदा भवति। अभिमुखा शालेति। अभिगतं मुखं यस्या इति बहुव्रीहिः। अत्र 'उपसर्गात् स्वाङ्गम्' इति न सिध्यति; मुखशब्दस्यास्वाङ्गवाचित्वात् ॥

अपाच्च ॥ अव्ययीभावोऽप्यत्र प्रयोजयतीति। न केवलं बहुव्रीहितत्पुरुषावित्यपिशब्दस्यार्थः। तत्र यदा बहुव्रीहिस्तदा—अपगतं मुखमस्मादिति विग्रहः। यदा तु प्रादिसमासस्तदा अपगतं मुखमिति। यदा पुनरव्ययीभावस्तदा – अपमुखादिति, मुखं वर्जयित्वेत्यर्थः। अव्ययीभावस्तु 'अपपरिबहिरञ्चवः पञ्चम्या' इत्यनेन। कथं पुनरव्ययीभावः प्रयोजयति, यावता समासान्तोदात्तत्वेनैव सिद्धम्? इत्याह - तत्रापि हीत्यादि। प्रकृतिस्वरत्वमित्यत्राध्याहार्यम्। तत्राप्यव्ययीभावे 'परिप्रत्युपापा' इत्यादिना पूर्वपदस्य प्रकृतिस्वरत्वमुक्तं समासस्वरापवादः। तस्मादव्ययीभावोऽपि प्रयोजयति।

योगविभाग उत्तरार्थ इति। उत्तरसूत्रेऽपादित्यस्यैवानुवृत्तिर्यथा स्यात्, अभेर्मा

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## स्फिगपूतवीणाञ्जोऽध्वकुक्षिसीरनाम नाम च ॥ १८७ ॥

स्फिग, पूत, वीणा, अञ्जस्, अध्वन्, कुक्षि – इत्येतान्युत्तरपदानि सीरनामानि च नामशब्दश्च अपादुत्तराण्यन्तोदात्तानि भवन्ति। अपस्फिगम्। अपपूतम्। अपवीणम्। अपाञ्जः। अपाध्वा।

'उपसर्गादध्वनः' इति यदा समासान्तो नास्ति, तदाऽनेनान्तोदात्तत्वं भवति। तस्मिन् हि सत्यच्प्रत्ययस्य चित्त्वादेव सिद्धम्। 'अनित्यश्च समासान्तः' इत्येतदेव ज्ञापकम्।

पदमञ्जरी

*स्फिगपूतवीणाञ्जोऽध्वकुक्षिसीरनाम नाम* च ॥ नामग्रहणं सीरशब्देनैव सम्बध्यते, न स्फिगादिभिः; स्फिगपूतकुक्षीणां पृथग्ग्रहणात्।

*उपसर्गादध्वन इति यदा समासान्त* इत्यादि। अत्र कारणमाह—*तस्मिन् हि सतीति*। ननु च 'उपसर्गादध्वनः' इत्यत्र तु न विकल्पः श्रुतः, नापि प्रकृतः, तत्किमुच्यते—यदा समासान्तो नास्तीति? अत आह—*अनित्यश्चेति*। यदि नित्यः समासान्तः स्यादध्वग्रहणमिह न कर्तव्यं स्याद्, अच्प्रत्ययस्य चित्त्वा-

न्यासः

भूत्। अव्ययपूर्वादपि प्रकृतिस्वरापवादो योगः। एवमुत्तरेऽपि योगाः 'द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ' इत्यतो योगात् प्राग्वेदितव्या ॥

स्फिगपूतवीणाञ्जोऽध्वकुक्षिसीरनाम नाम च ॥ स्फिगादीनां नामपर्यन्तानां समाहारे द्वन्द्वः। सीरनामानि चेति। हलादीनि। अपस्फिगम्, अपपूतमिति। प्रादिसमासः; बहुव्रीहिर्वा। स्फिगपूतशब्दौ 'स्वाङ्गशिटामदन्तानाम्' इत्याद्युदात्तौ। केचित्तु स्फिगशब्दं घृतादित्वादन्तोदात्तमिच्छन्ति। 'रास्नासास्नास्थूणावीणाः' इति वीणाशब्द आद्युदात्तो निपात्यते। 'अञ्जू' इत्येतस्मादसुन्। तेनाञ्ज आद्युदात्तः। 'शीङ्कुशिरुहिजिक्षिसृधृभ्यः क्नन्' इत्यविकृत्य 'अदेर्ध च' इत्यध्वा। तेनायमाद्युदात्तः। 'उपसर्गादध्वनः' इति यदा समासान्तो नास्ति तदानेनान्तोदात्तत्वं भवति। अत्र कारणमाह—तस्मिन् हि सतीत्यादि। 'अच्प्रत्यन्ववपूर्वात् सामलोम्नः' इत्यतोऽच्ग्रहणेऽनुवर्तमाने 'उपसर्गादध्वनः' इत्यनेनाच् समासान्तो विधीयते। तेन तस्मिन् समासान्तेऽच्प्रत्ययस्य चित्त्वादेव सिद्धमन्तोदात्तत्वम्। ननु च नित्यः समासान्तः, तत् किमुच्यते—यदा समासान्तो नास्तीति? अत आह—अनित्यश्चेत्यादि। यदि नित्यः समासान्तः स्यादध्वग्रहणमिह न कृतं स्यात्; अच्प्रत्ययस्य चित्त्वादेवान्तोदात्तस्य सिद्धत्वात्; कृतं च, तस्मादेतदेव ज्ञापयति—समासान्तविधिरनित्य इति। तेन 'तत्रोपासितलोकभर्तरि' इत्येवमादयः प्रयोगा उपपन्ना भवन्ति।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


अपकुक्षिः । अपसीरः । अपहलम् । अपलाङ्गलम् । अपनाम । सर्वत्र प्रादिसमासः, बहुव्रीहिः, अव्ययीभावो वा ।

स्फिगपूतकुक्षीणां ग्रहणमबहुव्रीह्यर्थम्, अध्रुवार्थम्, अस्वाङ्गार्थं च ॥

अधेरुपरिस्थम् ॥ १८८ ॥

अधेरुत्तरमुपरिस्थवाचि अन्तोदात्तं भवति । अधिदन्तः । अधिकर्णः । अधिकेशः । अध्यारूढो दन्त इति प्रादिसमासः । अध्यारूढो वा दन्त इति समानाधिकरण उत्तरपदलोपी समासः ।

दन्तस्योपरि योऽन्यो दन्तो जायते स उच्यते=अधिदन्त इति ।

पदमञ्जरी

देवान्तोदात्तत्वस्य सिद्धत्वात् ; कृतं तु, ज्ञापयति—समासान्तविधिरनित्य इति ।

*स्फिगपूतकुक्षीणामित्यादि* । यदा ह्येतानि स्वाङ्गवाचीनि ध्रुवाणि च भवन्ति, बहुव्रीहिश्च समासः, तदा 'उपसर्गात्स्वाङ्गम्' इत्येव सिद्धम् ॥

*अधेरुपरिस्थम्* ॥ उपरि तिष्ठतीत्युपरिस्थम्, 'सुपि स्थः' इति कः । दन्तस्योपरीत्यादिनोपरिस्थत्वं दर्शयति ।

*अधिकरणमिति* । अत्र कृदुत्तरपदप्रकृतिस्वरेण ककाराकार उदात्तः ॥

न्यासः

'प्लुषिकुषिशुषिभ्यः क्सिः' इति कुक्षिः । तेन कुक्षिशब्दोऽन्तोदात्तः । हलसीरशब्दौ 'नब्विषयस्यानिसंन्तस्य' इत्याद्युदात्तौ । नामशब्दोऽपि 'नामन्सीमन्' इत्यादिनाऽऽद्युदात्तो निपात्यते ।

स्फिगपूतकुक्षीणां ग्रहणमबहुव्रीह्यर्थमिति । यदैतानि ध्रुववाचीनि भवन्ति । अस्वाङ्गार्थञ्चेति । बहुव्रीहावपि यदाऽस्वाङ्गवाचीनि भवन्ति । यदा ह्येतानि स्वाङ्गवाचीनि ध्रुवाणि च भवन्ति, बहुव्रीहिश्च समासः, तदा 'उपसर्गात् स्वाङ्गं ध्रुवमपर्शु' इत्येव सिद्धम् ॥

अधेरुपरिस्थम् ॥ उपरिस्थमिति । उपरि तिष्ठतीति 'सुपि स्थः' इति कः । अधिदन्त इत्यादि । दन्तादयः 'स्वाङ्गशिटाम्' इत्याद्युदात्ताः । अध्यारूढो वा दन्त इति । वाशब्देन समनाधिकरणो वोत्तरपदलोपी समास इति सूचयति । स पुनः 'समानाधिकरणाधिकारे शाकपार्थिवादीनामुपसंख्यानमुत्तरपदलोपश्च' इत्युपसंख्यानेन वेदितव्यः ।

दन्तस्योपरीत्यादि । एतेनोपरिस्थत्वं दर्शयति । एवं कर्णस्योपरि योऽन्यः कर्णो जायते स उच्यतेऽधिकर्ण इति । तथा केशस्योपरि योऽन्यः केशोऽधिकेशः स उच्यते ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



उपरिस्थमिति किम् ? अधिकरणम् ॥

अनोरप्रधानकनीयसी ॥ १८९ ॥

अनोरुत्तरमप्रधानवाचि कनीयश्चान्तोदात्तं भवति। अनुगतो ज्येष्ठमनुज्येष्ठः। अनुमध्यमः। पूर्वपदार्थप्रधानः प्रादिसमासोऽयम्। अनुगतः कनीयान् अनुकनीयान्। उत्तरपदार्थप्रधानोऽयम्। प्रधानार्थं च कनीयोग्रहणम्।

अप्रधानकनीयसी इति किम् ? अनुगतो ज्येष्ठोऽनुज्येष्ठः ॥

पुरुषश्चान्वादिष्टः ॥ १९० ॥

पुरुषशब्दोऽन्वादिष्टवाची चानोरुत्तरोऽन्तोदात्तो भवति। अन्वादिष्टः पुरुषोऽनुपुरुषः। अन्वादिष्टः=अन्वाचितः, कथितानुकथितो वा।

पदमञ्जरी

*अनोरप्रधानकनीयसी* ॥ उदाहरणे उत्तरपदार्थस्याप्राधान्यं दर्शयति। *पूर्वपदार्थप्रधानः प्रादिसमासोऽयमिति*। *प्रधानार्थं च कनीयोग्रहणमिति*। अन्यत्राप्रधानग्रहणेनैव सिद्धत्वात्।

*अनुगतो ज्येष्ठ इति*। विग्रहविशेषेण प्रधानवाचित्वं ज्येष्ठशब्दस्य दर्शयति ॥

पुरुषश्चान्वादिष्टः ॥ अन्वादिष्टः = अप्रधानशिष्टः, यथा भिक्षामट गां चानयेति

न्यासः

उपरिस्थमिति किम् ? अधिकरणमिति। अत्राव्ययपूर्वपदप्रकृतिस्वर एव भवति।

अनोरप्रधानकनीयसी ॥ अनुज्येष्ठ इति। 'वृद्धस्य च' इतीष्ठनि परतो वृद्धस्य ज्यादेशः। ज्येष्ठशब्दो नित्स्वरेणाद्युदात्तः। अनुमध्यम इति। 'मध्यान्मः' इति मध्यमः, प्रत्ययस्वरेणान्तोदात्तः। पूर्वपदार्थप्रधानः प्रादिसमासोऽयमिति। अत्र हि योऽसौ ज्येष्ठमनुगतो मध्यमश्च स प्रधान्येन प्रादिसमासेनोच्यते, ज्येष्ठमध्यमौ तु गुणभावेन। तस्मात् पूर्वपदार्थप्रधानोऽयम्। अनुकनीयानिति। ईयसुनि परतो युवशब्दस्य 'युवाल्पयोः कनन्यतरस्याम्' इति कनादेशः। कनीयःशब्दो नित्स्वरेणाद्युदात्तः।

अनुगतो ज्येष्ठोऽनुज्येष्ठ इति। उत्तरपदार्थप्रधानोऽयम्। तेन प्रधानवाचित्वं ज्येष्ठशब्दस्यास्ति ॥

पुरुषश्चान्वादिष्टः ॥ 'पॄ पालनपूरणयोः'—अस्मात् 'पुरः कुषन्' इति कुषन् प्रत्ययः। तेन पुरुषशब्द आद्युदात्तः। अन्वादिष्टोऽन्वाचित इति। अप्रधानशिष्ट इत्यर्थः। यथा—भिक्षामट गाश्चानयेत्यत्र गोरानयनम्, यथा वा—'कर्तुः क्यङ्



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


अन्वादिष्ट इति किम् ? अनुगतः पुरुषोऽनुपुरुषः ॥

अतेरकृत्पदे ॥ १९१ ॥

अतेः परमकृदन्तं पदशब्दश्चान्तोदात्तो भवति । अत्यङ्कुशो नागः । अतिकशोऽश्वः । पदशब्दः खल्वपि — अतिपदा शक्वरी ।

अकृत्पदे इति किम् ? अतिकारकः ।

※ अतेर्धातुलोप इति वक्तव्यम् ※ । इह मा भूत् — शोभनो गार्ग्यः । अतिगार्ग्यः । इह च यथा स्यात् — अतिक्रान्तः कारकादतिकारक इति ॥

पदमञ्जरी

गोरानयनम् । *कथितानुकथितो वेति* । कस्मिंश्चित्प्राक्कथिते योऽन्यः पश्चात्कथ्यते स कथितानुकथितः । अनुगतः = पश्चाद्गतः ॥

*अतेरकृत्पदे* ॥ अकृच्च पदच्च अकृत्पदे ॥ *अतिकारक इति* । शोभनः कारकः, 'स्वती पूजायाम्' इति प्रादिसमासः ।

*अतेर्धातुलोप इति वक्तव्यमिति* । अत्यङ्कुश इत्यादौ वृत्तिविषयेऽतिशब्दोऽतिक्रान्तार्थवृत्तिरिति क्रमेरप्रयोग एव धातुलोपः । *अतिगार्ग्य इति* । यथान्यासे त्वत्रापि प्राप्नोति; गार्ग्यशब्दस्याकृदन्तत्वात् । *अतिकारक इति* । यथान्यासे

न्यासः

सलोपश्च' इत्यत्र सलोपः । कथितानुकथितो वेति । यः कथितात् पश्चात् कथितः स कथितानुकथितः । यो वा किञ्चित् प्राक् कथयित्वा पश्चात् कथ्यते स कथितानुकथित इत्युच्यते ।

अनुगतः पुरुषोऽनुपुरुष इति । यः पश्चाद्भवः पुरुष स एवमुच्यते ॥

अतेरकृत्पदे ॥ अकृत्पद इति । अकृच्च पदं चाकृत्पदे—प्रथमाद्विवचनान्तमेतत् । अत्यङ्कुशो नाग इति । अङ्कुशशब्दः 'सानसिपर्णसि' इत्यादिना 'अकि लक्षणे'—इत्यस्मादुशच्प्रत्ययेनान्तोदात्तो निपात्यते । अतिकशोऽश्व इति । 'कश गतिशासनयोः'— अस्मात् पचाद्यच्, टाप्, 'एकादेश उदात्तेनोदात्तः' । तेन कशान्तोदात्ता । अतिपदा शक्वरीति । 'खनो घ च' इति पदेर्घः । घित्करणेन हि ज्ञापितम्—तत्र घोऽन्यस्मादपि भवतीति । तेन पदमन्तोदात्तम् ।

अतिकारक इति । करोतेर्ण्वुल् । अत्र 'तत्पुरुषे तुल्यार्थ' इत्यादिना पूर्वपदस्याव्ययस्वरो भवति ।

अतेर्धातुलोप इति । यत्र धातोर्लोपस्तत्रातेरुत्तरपदमन्तोदात्तं भवतीति वक्तव्यम् । किमर्थम् ? इत्याह—इहेत्यादि । यद्यतेर्धातुलोप इति नोच्येत, तदिहापि स्यात्—शोभनो

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## नेरनिधाने ॥ १९२ ॥

नेः परमुत्तरपदमन्तोदात्तं भवत्यनिधाने । निधानम्=अप्रकाशता, तद्भिन्नमनिधानम्=प्रकाशनम् । निमूलम् । न्यक्षम् । नितृणम् । बहुव्रीहिरयम्, प्रादिसमासो वा । अव्ययीभावे तु समासान्तोदात्तत्वेनैव सिद्धम् ।

अनिधान इति किम् ? निवाग्वृषलः । निदण्डः । निहितवाक्, निहितदण्ड इत्यर्थः । निशब्दोऽत्र निधानार्थं ब्रवीति । प्रादयो हि वृत्तिविषये ससाधनां क्रियामाहुः ॥

**पदमञ्जरी**

त्वत्र न स्यात्, कारकशब्दस्य कृदन्तत्वात् । तस्मादव्याप्त्यतिव्याप्तिपरिहारार्थमकृत्पदे इत्यपनीय 'अतेर्धातुलोपः' इति वक्तव्यम् ।

नेरनिधाने ॥ *निधानमप्रकाशतेति* । न निधानमनिधानम् । निर्गतं मूलमस्य निर्गतं वा मूलन्निमूलम् ।

*निधानार्थं ब्रवीतीति* । अप्रकाशतां ब्रवीतीत्यर्थः । कथं पुनर्निशब्दस्यायमर्थः ? इत्याह—*प्रादयो हीति* ॥

**न्यासः**

गार्ग्योऽतिगार्ग्य इति । भवति ह्यत्रातेरुत्तरपदमकृदन्तम् । इह च न स्याद्— अतिक्रान्तः कारकादतिकारक इति । 'नरादयः क्रान्ताद्यर्थे पञ्चम्या' इति प्रादिसमासः । अत्र हि कृदन्तः कारकशब्दः उत्तरपदम् । तत्र यद्यतेर्धातुलोप इति नोच्यते तदिहापि न स्यात् । एवं तूच्यमान इहापि भवति, अस्ति ह्यत्र क्रमेर्धातोर्लोपः । लोपः पुनस्तस्य समासे गम्यमानार्थत्वादप्रयुज्यमानस्यादर्शनम् ॥

नेरनिधाने ॥ निधानमप्रकाशतेति । न निधानमनिधानम् । निमूलम्, न्यक्षमिति । 'मूल प्रतिष्ठायाम्'— अस्मात् पचाद्यच् । तस्मान् मूलशब्दोऽन्तोदात्तः । वृतृवदिहनिकमिकषिभ्यः सः' इत्यधिकृत्य 'अशेर्देवने' इति सप्रत्ययान्तत्वादक्षशब्दोऽप्यन्तोदात्तः । नितृणमिति । 'नब्विषयस्य' इति तृणमाद्युदात्तम् । बहुव्रीहिरयमित्यादि । यदा बहुव्रीहिस्तदा— निगतानि मूलान्यस्येति विग्रहः । यदा प्रादिसमासस्तदा निगतं मूलमिति । अव्ययीभावः कस्मादयं न भवति ? इत्याह- अव्ययीभावे त्वित्यादि । बहुव्रीहौ तु समासान्तोदात्तत्वापवादः 'बहुव्रीहौ प्रकृत्या' इत्यादिना पूर्वपदस्य प्रकृतिस्वर उक्तः । तत्पुरुषेऽपि 'तत्पुरुषे तुल्यार्थ' इत्यादिना तेन तयोर्विनाऽनेन वचनेनान्तोदात्तत्वं न सिध्यति । अव्ययीभावे तु समासान्तोदात्तत्वेनैव सिद्धम्, न हि तत्र तस्यापवाद उक्तः ।

निवाग् वृषलः, निदण्ड इति । अत्र पूर्वपदस्य प्रकृतिस्वर एव भवति । वाक्शब्दः

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## प्रतेरंश्वादयस्तत्पुरुषे ॥ १९३ ॥

प्रतेरंश्वादयस्तत्पुरुषे समासेऽन्तोदात्ता भवन्ति। प्रतिगतोंऽशुः प्रत्यंशुः। प्रतिजनः। प्रतिराजा।

राजशब्दः समासान्तस्यानित्यत्वाद्यदा टच् नास्ति तदा प्रयोजयति। तस्मिन्हि सति चित्त्वादेवान्तोदात्तत्वं सिद्धम्।

अंशु। जन। राजन्। उष्ट्र। खेटक। अजिर। आर्द्रा। श्रवण। कृत्तिका। अर्द्ध। पुर। अंश्वादिः।

### पदमञ्जरी

*प्रतेरंश्वादयस्तत्पुरुषे* ॥ अंशुशब्दः 'कुश्च' इति वर्तमाने 'मृगय्वादयश्च' इति निपातितः। राजतेः कनिन् *राजन्*। उष दाहे, ष्ट्रन्—*उष्ट्रः*। खिट्, ण्वुल्—*खेटक*। 'अजिरशिशिर' इति किरच्—*अजिरम्*। द्रातेराङ्पूर्वाद् 'आतश्चोपसर्गे' इत्यङ्, अस्मादेव निपातनादाङो रगागमः—*आर्द्रा*। शृणोतेल्युँट्—*श्रवणम्*। 'कृतिभिदिलतिभ्यः कित्', तिकन् प्रकृतः—*कृत्तिका*। ऋधेः पचाद्यच्—*अर्धः*। 'पुर अग्रगमने' इगुपधात्कः—*पुरम्*। एते अंश्वादयः॥

### न्यासः

'क्विब्वचिप्रच्छि' इत्यादिना क्विबन्तो व्युत्पादित आद्युदात्तः। 'दमु उपशमे'—अस्मात् 'अमन्ताड्डः' इति; तेन दण्डशब्दोऽप्यन्तोदात्तः। निशब्दोऽत्र निधानार्थं ब्रवीतीति। अप्रकाशतां ब्रवीतीत्यर्थः। कथं पुनरत्र निशब्दो निधानार्थं ब्रवीति? इत्याह—प्रादयो हीत्यादि। वृत्तिशब्देनेह समासवृत्त्यादिर्गृह्यते। प्रादयो हि स्वभावेनैव वृत्तिविषये ससाधनां क्रियामाहुः। तस्मादिह समासवृत्तौ विषये यासावप्रकाशनात्मिका क्रिया निधानशब्दवाच्या वाक्साधना, दण्डसाधना च तां निशब्दो ब्रवीति॥

प्रतेरंश्वादयस्तत्पुरुषे॥ पूर्वपदप्रकृतिस्वरापवादो योगः। प्रत्यंशुरिति। प्रादिसमासः। 'कुर्भ्रश्च' इत्यधिकृत्य 'मृगय्वादयश्च' इत्यंशुशब्दो निपातितः। तेनान्तोदात्तः। जनेर्घञ्। तेन जन आद्युदात्तः। राजन्शब्दोऽपि कनिन्प्रत्ययान्तत्वात्। राजशब्द इत्यादि। 'राजाहःसखिभ्यष्टच्' इति यदाऽनित्यत्वाट् टच् नास्ति, तदा राजशब्द इह पाठे प्रयोजयति। अथ तस्मिन् समासान्ते सति कस्मान् न प्रयोजयति? इत्याह—तस्मिन् हि सतीत्यादि। अनित्यत्वं तु समासान्तविधेः पूर्वमेव ज्ञापितम्। राजशब्दस्य चेह पाठः समासान्तविधेरनित्यत्वं ज्ञापयति। 'उष दाहे'—इत्यस्मात् ष्ट्रन्। तेन उष्ट्रशब्द आद्युदात्तः। 'खिट सन्तापे'—अस्माण्ण्वुल्। तेन खेटकशब्दोऽप्याद्युदात्तः। 'अजिरशिशिर' इत्यादिना किरच्प्रत्ययान्तोऽजिरशब्दो निपातितः। तेनान्तोदात्तः। 'द्रा कुत्सायां गतौ'—अस्मादाङ्पूर्वाद् 'आतश्चोपसर्गे' इत्यङ्, निपातनात्

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तत्पुरुष इति किम् ? प्रतिगता अंशवोऽस्य प्रत्यंशुरयमुष्ट्रः ॥

उपाद् द्व्यजजिनमगौरादयः ॥ १९४ ॥

उपादुत्तरं द्व्यजजिनं चान्तोदात्तं भवति तत्पुरुषे समासे गौरादीन् वर्जयित्वा । उपगतो देवमुपदेवः । उपसोमः । उपेन्द्रः । उपहोडः । अजिन – उपाजिनम् ।

अगौरादय इति किम् ? उपगौरः । उपतैषः ।

गौर । तैष । नैष । तैट । लट । लोट । जिह्वा । कृष्णा । कन्या । गुड । कल्य[1] । पाद । गौरादिः ।

तत्पुरुष इत्येव – उपगतः सामोऽस्य उपसोमः ॥

पदमञ्जरी

उपाद् द्व्यजजिनमगौरादयः ॥ 'गुरी उद्यमने', पचाद्यजन्तात्प्रज्ञाद्यण्, गौरम् । तिष्येण युक्तः कालस्तैषः । लेट् लोट् इति । कण्ड्वादिपठिताभ्यां पचाद्यच्, लेटलोटौ । दिहेर्जिह्वा उणादिः । 'कृषेर्वर्णे' इति नक्, टाप्—कृष्णा । कन्याशब्दः 'अघ्न्यादयश्च' इति निपातितः । 'गुध घनत्वे', इगुपधात्कः—गुधः । कलृपिपदिभ्यां घञ्—कल्पः, पादः ॥

न्यासः

पूर्वपदस्य रेफान्तता । ततश्चाव्ययरूपहानादसत्यस्मात् पूर्वपदप्रकृतिस्वरत्वे आर्द्रेत्यन्तोदात्ता भवति । 'श्रु श्रवणे' इत्यस्माल्ल्युट् । तेन श्रवणशब्दो लित्स्वरेणाद्युदात्तः । 'कृतेस्तिकन्' इति प्रकृते 'कृतिभिदिलतिभ्यः कित्' इति तिकन् टाप् । तेन कृत्तिकाशब्द आद्युदात्तः । 'ऋध' —इत्येतस्मादच्, घञ् वा । तेनार्धशब्दोऽन्तोदात्तः, आद्युदात्तो वा । 'पुर अग्रगमने' अस्मादिगुपलक्षणः कः । तेन पुरशब्दोऽन्तोदात्तः ।

प्रतिगता अंशवोऽस्येत्यादि । अत्र बहुव्रीहौ पूर्वपदप्रकृतिस्वरो भवति ॥

उपाद् द्व्यजजिनमगौरादयः ॥ उपदेव इति । प्रादिसमासोऽयम् । देवशब्दः पचाद्यजन्तत्वादन्तोदात्तः । उपसोम इति । 'अर्तिस्तुसुहुसृ' इत्यादिना मन् । तेन सोमशब्द आद्युदात्तः । 'हुडृ हूडृ गतौ'—अस्मात् पचाद्यच् । तेन होडशब्दोऽन्तोदात्तः । अजिनमन्तोदात्तमित्युक्तम्, अद्व्यजर्थं चास्य ग्रहणम् ।

गौरशब्दः प्रज्ञाद्यणन्तत्वादाद्युदात्तः । तिष्येण युक्तः कालस्तैषः, 'प्राग्दीव्यतोऽण्' ।

---

१. पदमञ्जरीमतेन 'कल्प' शब्द एव पठ्यते ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## सोरवक्षेपणे ॥ १९५ ॥

सुशब्दात्परमुत्तरपदं तत्पुरुषे समासेऽन्तोदात्तं भवति अवक्षेपणे गम्यमाने । अवक्षेपणम् = निन्दा । इह खल्विदानीं सुस्थण्डिले सुस्फिगाभ्यां सुप्रत्यवसितः । सुशब्दोऽत्र पूजायामेव । वाक्यार्थस्तु अवक्षेपणमसूयया; तथाभिधानात् ।

सोरिति किम् ? कुब्राह्मणः । अवक्षेपण इति किम् ? शोभनेषु तृणेषु सुतृणेषु ॥

### पदमञ्जरी

*सोरवक्षेपणे* ॥ उदाहरणे तु 'स्वती पूजायाम्' इति कर्मप्रवचनीयस्य समासः । तेन सुप्रत्यवसिते थाथादिस्वरेण सिद्धिर्नाशङ्कया । यदि सुशब्दोऽत्र पूजायामेव वर्तते, कथं तर्हि क्षेपो गम्यते ? इत्याह—*वाक्यार्थस्त्विति* । कथम् ? इत्याह—*असूयया तथाभिधानादिति* । यः खल्वनर्थं उपस्थिते सुखायाम आस्ते तं प्रकृत्यैवमुक्ते क्षेपो गम्यते ॥

### न्यासः

'सूर्यतिष्य' इति यलोपः । नैषतैटावणन्तौ । तेनान्तोदात्तौ । 'रट परिभाषणे'—अस्मादच् । रलयोरेकत्वाद्रेफस्य लकारः । लटः । 'लुट विलोडने'— अस्मात् पचाद्यच् । तेन लटलोटावप्यन्तोदात्तौ । 'शेवयह्वजिह्वाग्रीवाप्वमीवाः' इति जिह्वान्तोदात्ता निपात्यते । 'इण्सिञ्जि' इत्यधिकृत्य 'कृषेर्वर्णे' इति कृषेर्नक्, टाप्, सवर्णदीर्घत्वम्, 'एकादेश उदात्तेनोदात्तः' । तेन कृष्णाशब्दोऽन्तोदात्तः । 'अघ्न्यादयश्च' इति कन्याशब्दोऽन्तस्वरितो निपात्यते । 'गुड घनत्वे'—अस्मादिगुपलक्षणः कः । तेन गुडोऽन्तोदात्तः । कल्यवाहशब्दौ वृषादित्वादन्तोदात्तौ ॥

सोरवक्षेपणे । सुस्थण्डिल इति । स्थानं स्थिरमस्मिन्निति स्थण्डिलम् । पृषोदरादित्वात् आद्युदात्तः । सुस्फिगाभ्यामिति । स्फिगशब्द आद्युदात्तः । सुप्रत्यवसित इति । प्रत्ययवसितशब्दस्थाथादिस्वरेणान्तोदात्तः । ननु च सुशब्देनापि सह समासे कृते थाथादिस्वरेणैवान्तोदात्तत्वं भविष्यति, तत् किमर्थमुदाहृतम् ? एवं मन्यते—सत्यन्यार्थेऽस्यारम्भे परत्वादनेनैवात्राप्यन्तोदात्तत्वं युक्तमिति । यदि सुशब्दोऽत्र पूजायामेव वर्तते, अवक्षेपणं तर्हि कस्यार्थः ? इत्याह—वाक्यार्थस्त्ववक्षेपणमिति । अत्रैव कारणमाह—असूयया तथाभिधानादिति । इह खल्विदानीम् 'अस्त्व सुस्थण्डिल !' इत्येवम्प्रकारं वाक्यं यस्मादसूयया प्रयुज्यते, तस्माद् वाक्यार्थस्यैवावक्षेपणम् । सुतृणेष्विति । अत्र गुणोद्भावनेच्छयाभिधानम्, नासूयया । तेनावक्षेपणं नास्ति, पूजैव तु विद्यते ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## विभाषोत्पुच्छे ॥ १९६ ॥

उत्पुच्छशब्दे तत्पुरुषे विभाषाऽन्त उदात्तो भवति। उत्क्रान्तः पुच्छाद् उत्पुच्छः।

यदा तु पुच्छमुदस्यति उत्पुच्छयति, उत्पुच्छयतेरच् उत्पुच्छः, तदा थाथादिसूत्रेण नित्यमन्तोदात्तत्वे प्राप्ते विकल्पोऽयमिति सेयमुभयत्र विभाषा भवति।

तत्पुरुष इत्येव — उदस्तं पुच्छमस्य उत्पुच्छः॥

## द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ ॥ १९७ ॥

द्वि, त्रि — इत्येताभ्यामुत्तरेषु पाद, दत्, मूर्धन् — इत्येषूत्तरपदेषु यो बहुव्रीहिस्तत्र विभाषाऽन्त उदात्तो भवति। द्वौ पादौ अस्य द्विपात्।

### पदमञ्जरी

*विभाषोत्पुच्छे* ॥ *सेयमुभयत्र विभाषेति*। आद्यप्रवृत्तावव्ययपूर्वपदप्रकृतिस्वरेण बाधितत्वात् समासस्यान्तोदात्तत्वमप्राप्तम्, द्वितीयायां तु थाथादिस्वरेण नित्यं प्राप्तमिति कृत्वा॥

*द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ* ॥ 'द्वित्रिभ्याम्' इति दिग्योगलक्षणा पञ्चमी, 'पाद्दन्मूर्धसु' इति सत्सप्तमी, बहुव्रीहिः कार्यीति, तदेतदाह—*द्वि त्रि इत्येताभ्यामिति*। *द्विपादिति*। 'संख्या सुपूर्वस्य' इत्यकारलोपः समासान्तः। *दन्निति*। 'वयसि दन्तस्य दतृ'।

### न्यासः

विभाषोत्पुच्छे॥ उत्पुच्छ इति। पुच्छशब्दः 'नब्विषयस्य' इत्याद्युदात्तः।

सेयमुभयत्र विभाषा भवतीति। यदोत्पुच्छशब्दोऽच्प्रत्ययान्तो न भवति तदा समासान्तोदात्तत्वम्। यदा समासान्तोदात्तत्वापवादः 'तत्पुरुषे तुल्यार्थ' इत्यादिना पूर्वपदस्याव्ययस्य प्रकृतिस्वरः, तदा तेनाप्राप्तेऽस्मिन्नन्तोदात्तत्वे विभाषेयम्। यदा तु पुच्छमुदस्यतीत्यस्यार्थस्य विवक्षायाम् 'पुच्छभाण्डचीवराण्णिङ्' इति णिङं विधाय तदन्तादुत्पुच्छयतेः पचाद्यचि कृते उत्पुच्छ इत्येतच्छब्दरूपं भवति, तदा थाथादिस्वरेण नित्यमन्तोदात्तत्वे प्राप्तेऽयं विकल्पः। तेन प्राप्ते विभाषेयम्।

उदस्तं पुच्छमस्योत्पुच्छ इति। बहुव्रीहिप्रकृतिस्वर एव भवति॥

द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ॥ द्वित्रिभ्यामिति। दिग्योगलक्षणा पञ्चमी। पाद्दन्मूर्धस्विति। 'यस्य च भावेन भावलक्षणम्' इति भावलक्षणा सप्तमी। द्विपात्, त्रिपादिति। 'पादस्य लोपोऽहस्त्यादिभ्यः', 'सङ्ख्यासुपूर्वस्य' इत्यकारलोपः। पादशब्दो

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



त्रिपात् । द्विदन् । त्रिदन् । द्विमूर्धा । त्रिमूर्धा । पादिति कृताकारलोपः पादशब्दो गृह्यते । ददिति कृतदादेशो दन्तशब्दः ।

मूर्धन्निति त्वकृतसमासान्तो नान्त एव मूर्धन्शब्दः । तस्यैतत्प्रयोजनम् — असत्यपि समासान्तेऽन्तोदात्तत्वं यथा स्यात् । एतदेव ज्ञापकम् — अनित्यः समासान्तो भवतीति ।

यदापि समासान्तः क्रियते, तदापि बहुव्रीहेः कार्यित्वात् तदेकदेशत्वाच्च समासान्तस्यान्तोदात्तत्वं पक्षे भवत्येव — द्विमूर्धः, त्रिमूर्धः ।

पदमञ्जरी

*मूर्द्धन्नित्यादि*[1] । न[2] ह्यकृतसमासान्तस्य सम्भवः ? अत आह – *एतदेवेति* । यदि तर्ह्यकृतसमासान्तस्योपादानम्, एवं सति यदि समासान्तः क्रियते, तदा न प्राप्नोति; तस्य शब्दान्तरत्वादित्यत आह — *यदापीति* । इह हि बहुव्रीहिः कार्यित्वेनोपात्तः, न मूर्द्धशब्दः । *तदेकदेशत्वाच्चेति* । तस्य बहुव्रीहेरेकदेशोऽवयवः समासान्तस्तद्भावस्तत्त्वम्, तस्मादित्यर्थः । *तदेकदेशित्वादिति* पाठे स

न्यासः

धञन्तत्वादाद्युदात्त इति पाच्छब्दश्चाद्युदात्त एव भवति । द्विदन्निति । 'वयसि दन्तस्य' इति दत्रादेशः । दन्तशब्द आद्युदात्त इत्युक्तम् । तेन दत्रादेशोऽपि स्थानिवद्भावेनाद्युदात्त एव भवति । द्विमूर्धेति । मूर्धशब्दः 'श्वन्नुक्षन्पूषन्प्लीहन्' इत्यादिना रन् प्रत्ययान्तो निपात्यते । तेनाद्युदात्तः । मूर्धन्नित्यादि । 'द्वित्रिभ्यां षो मूर्ध्नः' इति षः समासान्तः प्राप्नोति, स न कृतः । तेनात्र नान्त एव मूर्धशब्दः । किं पुनः कारणमकृतसमासान्त एव मूर्धन्शब्द उपात्तः ? इत्यत आह — तस्येत्यादि । यदि कृतसमासान्त उपादीयेत तदा सत्येव समासान्तेऽन्तोदात्तत्वं स्यात्, असति न स्यात् । तस्मादसत्यपि समासान्तेऽन्तोदात्तत्वं यथा स्यादित्येतत् प्रयोजनमकृतसमासान्तनिर्देशस्य । ननु च नित्यमेव समासान्तेन भवितव्यम्, तत् कुतस्तस्यासत्त्वम् ? इत्यत आह — एतदेवेत्यादि ।

---

१. 'अकृतसमासान्त एव मूर्धन्शब्द इति' । एतच्च मूर्धस्विति निर्देशादेवावसीयते । अन्यथा मूर्धेष्विति निर्देश्यं स्यात् । किमर्थं तर्ह्यकृतसमासान्त एव निर्दिष्टः ? इत्याह — तस्येति । कृतसमासान्तस्य निर्देशे सत्येव समासान्तेऽन्तोदात्तत्वं स्यात्, असति न स्यात्' — इति पाठान्तरम् ( प्र० सं० स० ) ।

२-२. 'ननु च द्वित्रिभ्यां ष मूर्ध्नः — इत्यत्र न विकल्पः श्रुतः, तत्कथमसमासान्तसम्भवः ?' — इति पाठान्तरम् ( प्र० सं० स० ) ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



द्वित्रिभ्यामिति किम् ? कल्याणमूर्धा। पादादिष्विति किम् ? द्विहस्तम्। बहुव्रीहाविति किम् ? द्वयोर्मूर्धा द्विमूर्धा ॥

पदमञ्जरी

ब व्रीहिरेकदेशी अवयवी यस्य स तदेकदेशी, तस्य भावस्तत्त्वम्, तस्मादिति स एवार्थः। तदेवं बहुव्रीहेः कार्यित्वात्तदेकदेशत्वाच्च समासान्तस्य यदापि समासान्तः क्रियते, तदाप्ययं विधिर्भवत्येव।

अपर आह—यदाप्युत्तरपदस्य कार्यित्वं तदापि परत्वादन्तोदात्तत्वे कृते पश्चात्समासान्तः, तत्र टिलोपे सति उदात्तनिवृत्तिस्वरेणैव षप्रत्ययस्य सिद्ध-मुदात्तत्वमिति। *कल्याणमूर्धेति*। पूर्वपदप्रकृतिस्वर एवात्र भवति। कल्याण-शब्दः 'लघावन्ते' इति मध्योदात्तः ॥

न्यासः

यदिदमस्य प्रयोजनस्य सम्पादनार्थमकृतसमासान्तस्य मूर्धन्-शब्दस्योपादानम्, एतदेव ज्ञापकम्—अनित्यः समासान्तो भवतीति। तेन द्विमूर्धेत्यादिप्रयोग उपपन्नो भवति। यदि तर्ह्यकृतसमासान्त इह मूर्धन्-शब्द उपात्तः, एवं सति यदा समासान्तः क्रियते तदान्तो-दात्तेन न भवितव्यम्। कृतसमासान्तस्य शब्दान्तरत्वादित्यत आह—यद्यपीत्यादि। इह हि बहुव्रीहिः कार्यी, तदेकदेशित्वञ्च समासान्तस्य। एकदेशोऽस्यास्तीत्येकदेशी, स बहुव्रीहिरेकदेशी यस्य समासान्तस्य स तदेकदेशी, तद्भावस्तदेकदेशित्वम्। एतेन बहुव्रीह्यवयवत्वं समासान्तस्य दर्शयन् कृतसमासान्तस्य शब्दान्तरत्वं निरस्यति। तदेवं यस्मादिह बहुव्रीहिः कार्यी तदेकदेशित्वञ्च समासान्तस्य, तस्माद् यदापि समासान्तः क्रियते तदापि पक्षेऽन्तोदात्तत्वं भवत्येव। कल्याणमूर्धेति। कल्याणशब्दः 'नब्विषयस्य' इत्याद्युदात्तः। द्वयोर्मूर्धेति। अत्र नित्यमेव समासान्तोदात्तत्वं भवति[1] ॥

---

१. अस्य सूत्रस्य न्यासस्य पाठान्तरं प्र० सं० स० सङ्कलितम्—

"द्वित्रिभ्यां पादन्मूर्धसु बहुव्रीहौ ॥ द्वित्रिभ्यामिति। दिग्योगलक्षणा पञ्चमी। पादन्मूर्धस्विति। 'यस्य च भावेन भावलक्षणम्' इति भावलक्षणा सप्तमी। बहुव्रीहिः कार्यी। अत आह—द्वित्रि इत्येताभ्यामित्यादि। द्विपात, त्रिपादिति। 'संख्या-सुपूर्वस्य' इत्यकारलोपः समासान्तः। द्विदन, त्रिदन्निति। 'वयसि दन्तस्य दतृ' इति ददादेशः। द्विमूर्धा, त्रिमूर्धेति।

नन्वत्र 'द्वित्रिभ्यां षो मूर्ध्नः' इति समासान्तेन षप्रत्ययेन भवितव्यम्, तेन द्विमूर्धः, त्रिमूर्ध इत्येव स्यात्, कथं द्विमूर्धा, त्रिमूर्धा ? इत्याह—मूर्धन्नित्यादि। अकृत-समासान्तस्य नान्तस्यैव निर्देशस्तु मूर्धस्वित्यनेनैव ज्ञायते, अन्यथा मूर्धेष्विति ब्रूयात्। नं ह्यकृतसमासान्तस्य सम्भवः, इत्यत आह—तस्यैतत् प्रयोजनमित्यादि। कृत-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


## सक्थं चाक्रान्तात् ॥ १९८ ॥

सक्थमिति कृतसमासान्तः सक्थिशब्दोऽत्र गृह्यते, सोऽक्रान्तात्परो विभाषान्तोदात्तो भवति । गौरसक्थः । श्लक्ष्णसक्थः ।

अक्रान्तादिति किम् ? चक्रसक्थः । षचश्चित्वान्नित्यमन्तोदात्तत्वं भवति ॥

### पदमञ्जरी

सक्थं चाक्रान्तात् ॥ 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' इति समासान्ते कृते यः सक्थशब्दः सोऽत्र गृह्यते । क्रशब्दोऽन्तो यस्य स क्रान्तः, ततोऽन्योऽक्रान्त इति । *गौरसक्थ इति* । गौरशब्दः प्रज्ञाद्यणन्तत्वादन्तोदात्तः । 'श्लिषेरच्चोपधायाः' इति श्लक्ष्णशब्दोऽन्तोदात्तः ।

*षचश्चित्त्वादिति* । एतेन चित्स्वरस्यायमपवादः, प्राप्तविभाषेयमिति दर्शयति ॥

### न्यासः

सक्थं चाक्रान्तात् ॥ सक्थमितीति । 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्' इत्यनेन षच् समासान्तो यस्य स सक्थिशब्दोऽत्र गृह्यते । अक्रान्तादिति । क्रशब्दोऽन्तो यस्य स क्रान्तः, न क्रान्तोऽक्रान्तः । गौरसक्थ इति । गौरशब्दः प्रज्ञाद्यणन्तत्वादन्तोदात्तः । श्लक्ष्णसक्थ इति । 'कृत्यशूभ्यां क्स्नः' इति प्रकृते

---

समासान्तस्य निर्देशे सत्येव समासान्तेऽन्तोदात्तत्वं स्यात्, असति न स्यात् । तस्माद् असत्यपि समासान्तेऽन्तोदात्तत्वं यथा स्यात्, तदर्थोऽयं निर्देशोऽकृतसमासान्तस्य । ननु च नित्यमेव समासान्तेन भवितव्यतया यदिदमस्य प्रयोजनस्य सम्पादनार्थमकृतसमासान्तस्योपादानम्, तज् ज्ञापकम्—अनित्यः समासान्तो भवतीति । तेन द्विमूर्धेत्यादिः प्रयोग उपपद्यते ।

यदि तर्ह्यकृतसमासान्त इह मूर्धशब्द उपात्तः, एवं सति यदि समासान्तः क्रियते तदान्तोदात्तत्वेन न भवितव्यमिति, कृतसमासान्तस्य शब्दान्तरत्वात् ? इत्यत आह—यदापीत्यादि । बहुव्रीहिरत्र कार्यी । तदेकदेशत्वञ्च समासान्तस्य । एकदेशोऽस्यास्तीत्येकदेशी, स बहुव्रीहिरेकदेशी अवयवी यस्य समासान्तस्य स तदेकदेशी तद्भावस्तदेकदेशित्वम् । एतेन समासान्तस्य बहुव्रीह्यवयवत्वं दर्शयन् कृतसमासान्तस्य शब्दान्तरत्वं निरस्यति । तदेवं यस्मादेतन्न शब्दान्तरं बहुव्रीहिः कार्यी तदेकदेशित्वं च समासान्तस्य, तस्माद् यदापि समासान्तः क्रियते तदापि पक्षे तस्यान्तोदात्तत्वं भवत्येव ।

कल्याणमूर्धेति । कल्याणशब्दः 'नब्विषयस्य' इत्याद्युदात्तः । अत्र पूर्वपदप्रकृतिस्वर एव—द्वयोर्मूर्धा द्विमूर्धेति । अनेन नित्यमेव समासान्तोदात्तत्वमाह ॥"

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


## परादिश्छन्दसि बहुलम् ॥ १९९ ॥

छन्दसि विषये परादिरुदात्तो भवति बहुलम्। परशब्देनात्र सक्थशब्द एव गृह्यते। अञ्जिसक्थमालभेत। त्वाष्ट्रौ लोमशसक्थौ। ऋजुबाहुः। वाक्पतिः। चित्पतिः।

परादिश्च परान्तश्च पूर्वान्तश्चापि दृश्यते।
पूर्वादयश्च दृश्यन्ते व्यत्ययो बहुलं ततः[1] ॥

पदमञ्जरी

*परादिश्छन्दसि बहुलम्* ॥ *परादिरिति*। *परशब्देनात्र सक्थशब्द एव गृह्यत इति*। तस्यैव पूर्वसूत्रे सन्निहितत्वात्। यद्येवम्, परग्रहणमनर्थकम्, प्रकृतो हि सक्थशब्दोऽनुवर्तिष्यते? नैतदस्ति; बहुव्रीहेरपि प्रकृतस्यानुवृत्तिः स्यात्, तस्याद्युदात्तत्वं शङ्क्येत, विभाषाग्रहणे प्रकृते बहुलग्रहणस्य प्रयोजनमन्यदपि यथा स्यादिति। *ऋजुबाहुरिति*। बहुव्रीहिः। *वाक्पतिश्चित्पतिरिति*। षष्ठीसमासौ। अत्र भाषाविषये 'पत्यावैश्वर्ये' इत्यस्य 'न भूवाक्चिद्दिधिषु' इति प्रतिषेधे समासान्तोदात्तत्वं भवति।

बहुलग्रहणसिद्धमर्थं श्लोकेन दर्शयति—*परादिश्च परान्तश्चेति*। पूर्वपर-

न्यासः

'श्लिषेरच्चोपधायाः' इति क्स्नप्रत्ययान्तः श्लक्ष्णशब्दः। तेनान्तोदात्तः।

चक्रसक्थ इति। 'करोतेः किन् द्वे च' इति चक्रशब्द आद्युदात्तः ॥

परादिश्छन्दसि बहुलम् ॥ परशब्देनात्र सक्थशब्द एव गृह्यत इति। प्रत्यासत्तेः स हि पूर्वसूत्रे सन्निहितत्वात् प्रत्यासन्नः। यद्येवम्, परशब्दग्रहणमनर्थकम्, सक्थशब्द एव ह्यत्रानुवर्त्तिष्यते? नैतदस्ति; बहुव्रीहिग्रहणमप्यत्रानुवर्त्तेत इति तस्याप्याद्युदात्तत्वमाशङ्क्येत। अञ्जिसक्थमिति। अञ्जिशब्दः प्रातिपदिकस्वरेणान्तोदात्तः। अथाप्यञ्जशब्दान् मत्वर्थ इनिः क्रियते, एवमप्यन्तोदात्त एव। लोमशसक्थमिति। 'लोमादिपामादिपिच्छादिभ्यः शनेलचः' इति शप्रत्ययान्तत्वाल्लोमशशब्दोऽन्तोदात्तः। ऋजुबाहुरिति। 'कुर्भ्रश्च' इत्यधिकृत्य 'अर्जिदृशिकम्यमिपशिबाधामृजिपसितुग्धुग्दीर्घहकाराश्च' इति कुप्रत्ययान्तौ ऋजुबाहुशब्दौ। तेनान्तोदात्तौ। वाक्पतिश्चित्पतिरिति। षष्ठीसमासावेतौ। अत्रोत्तरपदमाद्युदात्तं भवति; बहुलग्रहणात्। विभाषाग्रहणे हि प्रकृते बहुलग्रहणेन यत् सिध्यति तद्दर्शनार्थमुपन्यस्तः।

व्यत्ययो बहुलं तत इति। यत एवं बहुलग्रहणेनानेन कार्यं सिध्यति, तेन व्यत्ययो

---

१. भाष्ये तु—'व्यत्ययो बहुलं स्मृतः' इति हि श्लोकस्य चरमः पादः। तत्र 'बहुलग्रहणलभ्यः स्वरव्यत्ययः' इति कैयटः। ( प्र० सं० स० )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



परादिरुदाहृतः ।

परान्तः – ❋ अन्तोदात्तप्रकरणे त्रिचक्रादीनां छन्दस्युपसंख्यानम् ❋ । त्रिबन्धुरेण त्रिवृता रथेन त्रिचक्रेण ।

पूर्वान्तः – ❋ पूर्वपदान्तोदात्तप्रकरणे मरुद्वृद्धादीनां छन्दस्युपसंख्यानम् ❋ । मरुद्वृद्धः ।

पूर्वादिः – ❋ पूर्वपदाद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसंख्यानम् ❋ । 'दिवोदासाय सामगाय ते' इत्येवमादि सर्वं संगृहीतं भवति[1] ॥

पदमञ्जरी

शब्दाभ्यां पूर्वोत्तरपदयोर्ग्रहणम् । यत एवं परादिप्रभृतिरुदात्तश्छन्दसि दृश्यते,

न्यासः

बहुलम् भवति । ननु च पूर्वमेव स्वराणां व्यत्ययो विहितः ? सत्यमेतत्; तस्यैव तु प्रपञ्चोऽयम् । परादिरुदाहृत इति । वाक्पतिश्चित्पतिरिति । अत्र च परग्रहणेनोत्तरपदमुक्तम् ।

अन्तोदात्तप्रकरण इति । 'अन्तः', 'थाथघञ्क्ताजबित्रकाणाम्' इत्यादौ । पूर्वपदान्तोदात्तप्रकरण इति । 'अन्तः', 'सर्वं गुणकार्त्स्न्ये' इत्यादौ ।

पूर्वपदाद्युदात्तप्रकरण इति । आदिरुदात्तः—'सप्तमीहारिणौ धर्म्येऽहरणे' इत्यादौ । एवमादि सर्वं संगृहीतं भवतीति । बहुलग्रहणेन । यतस्तेन विभाषाग्रहणे

---

१. अस्य सूत्रस्यान्यमातृकायामित्थमपि व्याख्यानमुपलभ्यते—

"परादिश्छन्दसि बहुलम् ॥ परशब्देनात्र सक्थशब्द एव गृह्यत इति । प्रत्यासत्तेः । स हि पूर्वसूत्रे सन्निहितत्वाद् प्रत्यासन्नः । यद्येवम्, परशब्दग्रहणमनर्थकम्, सक्थशब्द एव ह्यत्रानुवर्तिष्यते ? नैतदस्ति; अत्र यथा सक्थशब्दस्तथा बहुव्रीहिरपि प्रकृतः । एवं बहुव्रीहेरप्यनुवृत्तिः स्यात् । ततस्तस्याद्युदात्तत्वं शङ्कनीयं स्यात् । ननु विभाषाग्रहणमत्र प्रकृतम्, कथं पुनर्बहुलं गृह्यते ? तस्य प्रयोजनमन्यदपि यथा स्यादिति । अतः पदान्तरे समासान्तरे च परादिरुदात्तो भवतीति दर्शयति—ऋजुबाहुरित्यादि । ऋजुबाहुरिति बहुव्रीहिः । वाक्पतिश्चित्पतिरिति षष्ठीसमासौ ।

एवञ्च बहुलग्रहणसिद्धमर्थं परादिश्च परान्तश्चेत्यादिश्लोकेन दर्शयन्नाह—व्यत्ययो बहुलं तत इति । यत एवं बहुलग्रहणात् परादौ परान्तादौ च स्वरव्यत्ययो भवति । ननु पूर्वमेव स्वराणां व्यत्ययो विहितः ? सत्यमेतत्; भाषाविषये तु 'पत्यावैश्वर्ये' इत्यस्य 'न भूवाक्चिद्दिधिषु' इति प्रतिषेधे समासान्तोदात्तत्वं भवति । अत्र तु

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



इति श्रीवामनविरचितायां काशिकावृत्तौ षष्ठाध्यायस्य
द्वितीयः पादः ॥

पदमञ्जरी

ततो हेतोर्बहुलं स्वरव्यत्यय उक्तः। स्वरव्यत्ययार्थं बहुलग्रहणं कृतमित्यर्थः॥

*इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां*
*षष्ठस्याध्यायस्य द्वितीयः पादः ॥*

न्यास.

प्रकृते बहुलग्रहणं कृतमित्यभिप्रायः। त्रिचक्रादीनां पूर्वमेव पूर्वोत्तरपदस्वर उक्त इति पुनरिह नोच्यते ॥

इति बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां
काशिकाविवरणपञ्जिकायां षष्ठस्याध्यायस्य
द्वितीयः पादः ॥

---

बहुलग्रहणेन व्यत्यय इति। वाक्पतिश्चित्पतिरिति। अत्र परग्रहणेन सक्थान्तमुदाहरणम्। बहुलग्रहणेनान्यत्। एवञ्च परान्त उदात्तः—'थाथघञ्क्ताजबित्रकाणाम्' इत्यादौ। पूर्वपदमन्तोदात्तम्—'सर्वं गुणकार्त्स्न्ये' इत्यादौ। पूर्वपदाद्युदात्तत्वम्—'सप्तमीहारिणौ धर्म्येऽहरणे' इत्यादौ। एवमादि सर्वं संगृहीतं भवति। बहुलग्रहणेन। विभाषाग्रहणे प्रकृते स्वरव्यत्ययार्थं बहुलग्रहणं कृतमित्यभिप्रायः। त्रिचक्रादीनां बहुव्रीहित्वात् पूर्वपदप्रकृतिस्वर उक्त इति, पुनरिह 'छन्दसि बहुलम्' इति स्वरव्यत्ययस्तेषामन्तोदात्तत्वप्रदर्शनार्थमुक्तः॥ इति प्र० सं० सम्पादकसंगृहीतं न्यासपाठान्तरम्।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# अथ षष्ठाध्याये तृतीयः पादः

## अलुगुत्तरपदे ॥ १ ॥

'अलुक्' इति च 'उत्तरपदे' इति च एतदधिकृतं वेदितव्यम्। यदित ऊर्ध्वमनुक्रमिष्यामोऽलुगुत्तरपद इत्येवं तद्वेदितव्यम्। वक्ष्यति – 'पञ्चम्याः स्तोकादिभ्यः। स्तोकान्मुक्तः। अल्पान्मुक्तः'।

उत्तरपद इति किम्? निष्क्रान्तः स्तोकाद् निःस्तोकः।

### पदमञ्जरी

अलगुत्तरपदे॥ *अलुगिति चेत्यादि*। प्रत्येकं स्वरितत्वप्रतिज्ञानं दर्शयति, अस्य प्रयोजनम्—एकस्य निवृत्तावपरस्य निवृत्तिर्मा भूदिति। *स्तोकान्मुक्त इति*। 'करणे च स्तोकाल्पकृच्छ्र' इत्यादिना पञ्चमी, 'स्तोकान्तिक' इत्यादिना समासः। *उत्तरपद इति किमिति*। लुक् तावत्समास एव प्राप्तः प्रतिषिध्यते इति सामर्थ्या-दुत्तरपद इत्येतल्लभ्यते। 'नलोपो नञः' इत्यादौ च 'न समासे' इत्यतो हि समास-ग्रहणानुवृत्तेरुत्तरपदलाभात् नतरामित्यादौ नञो नलोपाद्यभावः सिद्ध इति प्रश्नः। *निस्तोक इति*। अत्रोत्तरपदभूतेभ्योऽपि स्तोकादिभ्यः परस्याः पञ्चम्या अलुक्प्रसङ्गः।

ननु च लक्षणप्रतिपदोक्तपरिभाषया स्तोकादिभ्यः प्रतिपदं या पञ्चमी

### न्यासः

अलुगुत्तरपदे॥ स्तोकान्मुक्तः, अल्पान्मुक्त इति। 'करणे स्तोकाल्पकृच्छ्र-कतिपयस्यासत्त्ववचनस्य' इति पञ्चमी, स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन' इति समासः। ननु च 'वनं समासे' इत्यतः समासग्रहणमनुवर्तिष्यते, समासे च नियतं सन्निहित-मुत्तरपदम्, अतोऽन्तरेणाप्युत्तरपदग्रहणमुत्तरपदं लभ्यत इत्यभिप्रायेणाह—उत्तरपद-मिति किमिति। निःस्तोक इति। 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' इति प्रादिसमासः। एवं मन्यते—असत्युत्तरपदग्रहणे समासे ये स्तोकादय उत्तरपदभूताः पूर्वपदभूता वा, तेभ्य उत्तरस्याः पञ्चम्या अलुग्भवतीत्येतावन्मात्रं लभ्यते, न तूत्तरपदे परतो ये स्तोका-दय इत्येष विशेषः। ततश्च निःस्तोक इत्यत्राप्यलुक् स्यात्। भवति ह्यत्रापि समास-वर्तिनः स्तोकादेः शब्दादुत्तरा पञ्चमीति।

नन्वेवमपि न कर्तव्यमेवोत्तरपदग्रहणम्, लक्षणप्रतिपदोक्तपरिभाषया प्रतिपदम् 'स्तोकादिभ्यः करणे च' इत्यादिसूत्रेण या पञ्चमी विहिता, तस्या एव ग्रहणम्। न तु 'अपादाने पञ्चमी' इत्यनेन सामान्यलक्षणेन या पञ्चमी विहिता तस्याः। अवश्यञ्च

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अन्यार्थमिदमुत्तरपदग्रहणमिहाप्यलुको निवृत्तिं करोतीत्येवमर्थं 'लक्षणप्रतिपदोक्त'– परिभाषा नाश्रयितव्या ।

अलुगधिकारः प्रागानङः । उत्तरपदाधिकारः प्रागङ्गाधिकारात् ॥

पदमञ्जरी

विहिता, यश्च तेषां प्रतिपदोक्तः समासस्तस्या एव तत्रैव वा लुग्भविष्यति, तत्किमेतन्निवृत्त्यर्थेनोत्तरपदग्रहणेन? इत्यत आह– *अन्यार्थमित्यादि* । 'आनङृतो द्वन्द्वे' उत्तरपदे परतो यथा स्यात्, उत्तरपदस्य मा भूद्– होतापोतारौ; अन्यथा परमपि सर्वनामस्थानापेक्षत्वेन बहिरङ्गम् 'ऋतो ङि' गुणं बाधित्वा द्वन्द्वक्रियानन्तरप्राप्त आनङ् स्यात्, होतापोतृभ्यामित्यादौ च स्यादेव । तथा 'इको ह्रस्वोऽङ्यो गालवस्य' इति उत्तरपदे यथा स्याद्, ग्रामणीरित्यादावुत्तरस्य पदस्य मा भूदित्येवमाद्यर्थमुत्तरपदाधिकारोऽवश्यं कर्तव्यः, स इहैव क्रियेत, समासानुवृत्तिः—लक्षणप्रतिपदोक्तपरिभाषा नाश्रयितव्या भवतीति । आ कुत इमावधिकारौ? इत्यपेक्षायामाह–*अलुगधिकार इत्यादि* । ऋकारान्तस्य ह्युत्तरपदेऽनन्तरे

न्यासः

लक्षणप्रतिपदोक्तपरिभाषाऽश्रयितव्या; अन्यथा हि स्तोकादपेतः स्तोकापेत इत्यत्राप्यलुक् स्यात् । एवं सति निःस्तोक इत्यत्रालुक्प्राप्तिरेव नास्ति, न ह्यत्र स्तोकशब्दात् प्रतिपदविहिता पञ्चमी, किं तर्हि? सामान्यलक्षणविहिता । तत् किं तन्निवृत्त्यर्थेनोत्तरपदग्रहणेन? इत्याह– अन्यार्थमित्यादि । आनङाद्यर्थमिदमुत्तरपदग्रहणम् । असति चैतस्मिन् 'आनङ् ऋतो द्वन्द्वे' इत्यानङ् होतापोतृभ्यामित्यत्र यथा पूर्वपदस्य भवति, तथोत्तरपदस्यापि स्यात् । तथा 'इको ह्रस्वोऽङ्यो गालवस्य' इति ह्रस्वो यथेह भवति— ग्रामणिपुत्र इति, तथेहापि स्यात्— ग्रामणीरिति । ननु यद्यनुत्तरपदेऽपि ह्रस्वः स्यात्, तदा 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति वचनमनर्थकं स्यात्; अनेनैव सिद्धत्वात्! नानर्थकम्; अनिगन्तार्थत्वन्नित्यार्थत्वाच्च । किञ्च, असत्युत्तरपदग्रहणे 'नलोपो नञः' इति प्रत्ययेऽपि नलोपः स्यात्—नतरामिति । तस्मादन्यार्थमिदमुत्तरपदग्रहणं कृतम् । यद्येवम्, यदर्थमिदं तद्विधावेव कर्त्तव्यम्, इह किमर्थं क्रियते? इत्याह—इहाप्यलुको निवृत्तिमित्यादि । इतिकरणो हेतौ । अन्यार्थं तावदवश्यमिदमुत्तरपदग्रहणम् । इह तु क्रियमाणे सत्ययं विशेषः— निःस्तोक इत्यत्राप्यलुग् निवृत्तः क्रियते । तेन लक्षणप्रतिपदोक्तपरिभाषा नाश्रयितव्या भवति ।

अथ कुतः प्रागिमावधिकारौ? इत्याह—अलुगधिकार इत्यादि । विधेयान्तरं विधेयान्तरस्य निवर्तकम् भवतीत्यानङ् विधीयमान उत्तरपदेऽलुकं निवर्तयति, तस्माद्— अलुगधिकारः प्रागानङः । उत्तरपदाधिकारः प्रागङ्गाधिकारादिति । उत्तरपदे

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## पञ्चम्याः स्तोकादिभ्यः ॥ २ ॥

स्तोकान्तिकदूरार्थकृच्छ्राणि स्तोकादीनि, तेभ्यः परस्याः पञ्चम्या उत्तरपदेऽलुग्भवति । स्तोकान्मुक्तः । अल्पान्मुक्तः । अन्तिकादागतः । अभ्याशादागतः । दूरादागतः । विप्रकृष्टादागतः । कृच्छ्रान्मुक्तः ।

समासे कृते प्रातिपदिकत्वात्सुपो लुकि प्राप्ते प्रतिषेधः क्रियते ।

पदमञ्जरी

पितृपुत्र इत्यादौ आनङा भवितव्यम् । यदि चात्रालुक् स्याद्विभक्त्या व्यवधानं स्यात् । यद्वा—साक्षान्निर्दिष्टमानङादिकार्यं प्रकरणप्राप्तस्यालुको निवर्तकमिति अलुगधिकारः प्रागानङः; तथाङ्गस्य विधीयमानं कार्यं यत्राङ्गमित्येतद्भवति तत्रैव भवति । कस्मिंश्चैतद्भवति ? प्रत्यये, न तूत्तरपद इति सामर्थ्याद् उत्तरपदाधिकारः प्रागङ्गाधिकारात् ॥

*पञ्चम्याः स्तोकादिभ्यः* ॥ स्तोकादीना प्रातिपदिकगणेऽपाठात्सूत्रपठितानां ग्रहणमित्याह—*स्तोकान्तिकदूरार्थकृच्छ्राणि स्तोकादीनीति* । 'करणे च स्तोकाल्पकृच्छ्र' इत्यादीनि तु स्तोकादीनि न गृह्यन्ते; अव्याप्तेः । 'स्तोकान्तिक' इत्यत्रत्यानि

न्यासः

परतो यत् कार्यं विधीयते तस्य सम्बन्धिशब्दत्वात् पूर्वपदं विधिभाक् । अतोऽङ्गं विधिभाक्त्वेन विज्ञायमानमुत्तरपदाधिकारं निवर्तयति । अङ्गस्य हि यत् कार्यं तत् प्रत्यये परतो विधीयते, नोत्तरपदे । न ह्युत्तरपदेऽङ्गसंज्ञा भवति । अथ वा—उत्तरपद इति सप्तमीनिर्देशादनन्तर एवोत्तरपदे भवितव्यमानङा । यदि चात्र विभक्तेरलुक् स्यात् तदा व्यवधानादानन्तर्यं न स्यात् । न च व्यवधानेऽपि वचनसामर्थ्यादानङ् स्यादिति शक्यते परिकल्पयितुम् । एवं हि 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति निर्दिष्टग्रहणमानन्तर्यार्थं बाध्येत, अनिष्टञ्च रूपमापद्येत । न चानिष्टार्था शास्त्रे प्रक्लृप्तिर्युक्ता । तस्मादलुगधिकारः प्रागानङः । अङ्गस्य प्रत्यये परतोऽभावादुत्तरपदे परतस्तन्न भवत्येव, अत उत्तरपदाधिकारः प्रागङ्गाधिकारात् ॥

पञ्चम्याः स्तोकादिभ्यः ॥ स्तोकादय इति प्रातिपदिकगणेषु न पठ्यन्ते । तस्मात् सूत्रपरिपठिता एवेह ग्रहीतव्या इति दर्शयन्नाह—स्तोकान्तिकदूरार्थकृच्छ्राणीत्यादि । अथ 'करणे च' इत्यादौ सूत्रे ये परिपठिताः स्तोकादयस्ते कस्मान्न गृह्यन्ते ? एवं मन्यते—'ङसेः स्तोकादिभ्यः' इति वक्तव्ये 'पञ्चम्याः' इति बहुतराक्षरनिर्देशेनैतद् सूचितम्—'येषु स्तोकादिषु गृह्यमाणेषु बहुतरलक्ष्यसंग्रहो भवति ते ग्रहीतव्याः' इति । स्तोकान्तिककृच्छ्राणीत्येतेष्वेव गृह्यमाणेषु बहुतरलक्ष्यसंग्रहो भवति, तत्रार्थग्रहणात्; न त्वितरेषु । तस्मादेषामेव ग्रहणं न्याय्यमिति । कथं पुनरत्र लुक् प्राप्नोति, यस्मिन्

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पदमञ्जरी

भूयिष्ठानि अर्थग्रहणात् । *अलुग्भवतीति* । लुग्न भवतीत्यर्थः । *सुपो लुकि प्राप्त इति* । 'सुपो धातुप्रातिपदिकयोः' इत्यनेन । *प्रतिषेधः क्रियत इति* । अलुगिति प्रसज्यप्रतिषेध इति दर्शयति, उत्तरपदाधिकारोपजीवनाय तु 'नाव्ययीभावात्' इत्यस्यानन्तरमिदं प्रकरणं नारब्धम्, एकवच्च, सर्वस्यालुक्प्रकरणस्य शेषभूतोऽयमर्थातिदेशः, यस्या विभक्तेरलुग्विधीयते, तदर्थो द्व्यात्मको बह्वात्मकश्चैकवद्भवतीति वक्तव्यम् । तेन स्तोकाभ्यां मुक्तः, स्तोकेभ्यो मुक्त इत्यपि विग्रहे स्तोकान्मुक्त इत्येव भवति; अन्यथा द्विवचनबहुवचनयोरप्यलुकि सति स्तोकाभ्यां मुक्तः, स्तोकेभ्यो मुक्त इत्यत्राप्यैकपद्यमैकस्वर्यं स्यात् ? नैष दोषः; स्तोकादिभ्यः प्रतिपदं या पञ्चमी—'करणे च स्तोकाल्प' इति, तस्य अलुक्, सा चासत्त्ववचनेभ्यो द्विबह्वोर्न सम्भवतीति स्तोकाभ्याम्, स्तोकेभ्य इत्यपादान एषा पञ्चमीत्येव न भविष्यति । एवमपि दूराभ्यामागतः, दूरेभ्य आगत इत्यत्र प्रसङ्गः, अत्र हि 'दूरान्तिकार्थेभ्यो द्वितीया च' इति प्रतिपदमेव पञ्चमी । तथाऽन्तिकाभ्यां कृतम्, अन्तिकेभ्यः कृतमित्यादावप्यलुक्प्रसङ्गः ? तस्मादेकवच्चेति वक्तव्यम् । ननु वृत्तावुपसर्जनपदानि एकादिसङ्ख्यां विहायाभेदैकत्वसङ्ख्यां प्रतिपद्यन्ते, का पुनरियमभेदैकत्वसङ्ख्या ? विशेषाणामविभागेनावस्थानम्, यथा–मधुन्योषधिरसानाम्, न हि तत्रास्या ओषधेरयं रसोऽस्या अयमिति विभागो दृश्यते, अथ च त एव विशेषा अनुभूयन्ते न पुना रससामान्यम्, तद्वदत्रापि राजपुरुष इति राजार्थो नैकत्वादिविशेषाः । उक्तं च—

'यथौषधिरसाः सर्वे मधुन्याहितशक्तयः ।
अविभागेन वर्तन्ते तां सङ्ख्यां तादृशीं विदुः' ॥ इति ।

यद्वा—अनुपात्तसङ्ख्याविशेषमेकत्वादिष्वनुगतं सामान्यमभेदैकत्वसङ्ख्या, यथा सन्तमसे रूपमात्रं गृह्यते; न पुनः शुक्ल इति वा, कृष्ण इति वा, तद्वदत्रापीति सङ्ख्यावान् राजार्थः, न चाव्ययार्थवन्निःसङ्ख्य इत्येतावत्प्रतीयते । उक्तं च—

'भेदानां वा परित्यागात्सङ्ख्यात्मा स तथाविधः ।
व्यापाराज्जातिभागस्य भेदापोहेन वर्तते ॥
अन्तर्हितविशेषेण यथा रूपेण रूपवान् ।
प्रख्यायते न शुक्लादिभेदो रूपस्य गम्यते' ॥ इति ।

तदेवमभेदैकत्वसङ्ख्योपादानाद् द्विवचनबहुवचनान्तानां सर्वा वृत्तिर्न भवति, किं पुनः समास एव, ततश्च समासाभावादलुग्न भविष्यतीति किमेकवद्भावेन ? उच्यते; किं पुनः कारणम्—वृत्तावभेदैकत्वसङ्ख्या प्रतीयते ? सङ्ख्याविशेषप्रतिपादकाभावात् । विभक्तिर्हि तस्य प्रतिपादिका, सा च वृत्तौ निवृत्ता, निवृत्तायां च तस्याम् 'त्रिकः प्रातिपदिकार्थः' इति पक्षे सङ्ख्यासामान्यस्यापि



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



द्विवचनबहुवचनान्तानां तु स्तोकादीनामनभिधानात्समास एव न

पदमञ्जरी

तावत्प्रतिपादकाभावः। यदि परं गुड इत्युक्ते माधुर्यादिवदव्यभिचारात्सङ्ख्या प्रतीयते, अव्यभिचारश्च सामान्यस्यानियतस्य वा विशेषस्येति, सैवाभेदैकत्वसङ्ख्या। पञ्चकपक्षेऽपि सङ्ख्याविशेषप्रतिपत्तौ द्योतकत्वेनापि तावद् विभक्तयोऽपेक्ष्यन्त इति तदभावात्सामान्योऽनियतो वा विशेषः प्रतीयत इति सैवाभेदैकत्वसङ्ख्या। यत्र ह्यर्थप्रकरणादिकं विशेषावगतौ प्रमाणं भवत्येव तत्र वृत्तिः। तद्यथा, अर्थाद्—मुद्गैः क्रीतं मौद्गिकम्, न ह्येकेन मुद्गेन क्रयः सम्भवति, कारकमध्य इति च, न ह्येकस्य मध्यं सम्भवति; प्रकरणात्—'भवद्गिरामवसरप्रदानाय' इति; आदेशात्—तावकीनो मामकीन इति शैषिकः। मासजात इत्यादौ तु प्रातिपदिकार्थस्यैवाक्तपरिमाणत्वात्। द्विपुत्र इत्यादौ सङ्ख्याशब्दसन्निधानात्। तदेवं यत्र विशेषे प्रमाणाभावस्तत्राभेदैकत्वसङ्ख्या।

यद्येवम्, अत्रालुकि सति विभक्तिरेव प्रमाणमिति द्विवचनबहुवचनान्तानां समासः स्यादेव? यदा त्वर्थप्रकरणादिना विशेषावगतौ द्विवचनबहुवचनान्तानां वृत्तिर्भवति तदा का शङ्का विभक्तावेव सत्याम्। यदि चाभेदैकत्वसङ्ख्योपजनाद् द्विवचनबहुवचनयोरलुगभावः, एकवचनस्यापि न स्यात्, तस्यापि हि शुद्धमेकत्वं वाच्यम्, नाभेदैकत्वसङ्ख्या। अथ विभक्त्यभावे सङ्ख्यासामान्यस्य प्रतीतस्य विशेषपर्यवसानापेक्षायां यो हि बहून् कल्पयति कल्पयत्यसावेकमिति न्यायेन वृत्तावपि शुद्धमेकत्वं प्रतीयत इत्युच्येत, अभेदैकत्वसङ्ख्येत्यनुपपन्नं स्यात्। तस्मादेकवचनान्तस्य, द्विवचनान्तस्य, बहुवचनान्तस्य वा यथेष्टं वृत्तिः; वृत्तौ चाभेदैकत्वसङ्ख्या, अर्थप्रकरणादिना विशेषावगतिरिति वाच्यम्। एवं च पूर्वोक्तेन न्यायेन द्विवचनबहुचनयोरलुक्प्रसङ्गादतिदेश आश्रयितव्यः।

यद्येवम्, गोषुचरः, अप्सुयोनिः, अप्सव्य इति ये नित्यबहुवचनान्ताः, तेषामप्यलुकि एकत्वातिदेशादेकवचनप्रसङ्गः? एवं तर्ह्यनभिधानमत्र हेतुः। तदाह *द्विवचनबहुवचनान्तानां त्वनभिधानादिति*। वाक्यमपि तर्हि न

न्यासः

प्राप्ते प्रतिषेधोऽयं क्रियते? इत्याह—समासे कृत इत्यादि। समासे कृते सति तस्य 'कृत्तद्धितसमासाश्च' इति प्रातिपदिकत्वम्, अतः 'सुपो धातुप्रातिपदिकयोः' इति सुपो लुकि प्राप्ते प्रतिषेधोऽयमुच्यते।

किं पुनः कारणमेकवचनान्तानां स्तोकादीनामलुगुदाह्रियते, न द्विवचनबहुवचनान्तानाम्? इत्याह—द्विवचनबहुवचनान्तानामित्यादि। वृत्तौ हि विशेषणपदान्येकत्वादिकां संख्यां विहायाभेदैकत्वसंख्यां प्रतिपद्यन्ते। सा पुनः संख्यानमात्रमनुपात्तसंख्या-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



भवति — स्तोकाभ्यां मुक्तः, स्तोकेभ्यो मुक्त इति। तेनात्र न कदाचिदप्यैकपद्यम्, ऐकस्वर्यं च भवति।

*ब्राह्मणाच्छंसिन उपसंख्यानं कर्तव्यम्*। ब्राह्मणादादाय शंसतीति

पदमञ्जरी

प्राप्नोति। न च वाच्यम्—समासे नास्त्यभिधानम्, वाक्ये पुनरस्तीति। न हि समाससंज्ञाऽर्थाभिधाने उपयुज्यते, यत्पुनरुपयुज्यते—प्रातिपदिकम्, विभक्तिश्च, तत्सर्वमविकलमिति किमत्रानभिधानं करिष्यति। तत्राह—*तेनात्रेत्यादि*। स्वरस्याप्यर्थाभिधान उपयोगात्, पृथक्स्वरयुक्तस्य वाक्यस्य प्रतिपादकत्वमैकस्वर्ययुक्तस्य समासस्याप्रतिपादकत्वं च युक्तमित्यर्थः।

*ब्राह्मणाच्छंसिन इत्यादि*। किं पुनरत्रोपसङ्ख्यायते? द्वितीयार्थे पञ्चमी,

न्यासः

विशेषं सामान्यभूतम्; यत एवमतो विवक्षितार्थानभिधानाद् द्विवचनबहुवचनान्तानां समासो न भवत्येव। अभिधानलक्षणा हि कृत्तद्धितसमासा भवन्तीति। तेनेत्यादि। यत एवं द्विवचनबहुवचनान्तानां स्तोकादीनां समासो न भवति, तेन स्तोकाभ्यां मुक्तः, स्तोकेभ्यो मुक्त इत्यत्र न कदाचिदैकपद्यमैकस्वर्यं च भवति। स्तोकाभ्यामित्यस्माद्धि पदान्मुक्त इत्येतत् पदमन्यदेवात्यन्तभिन्नम्, तथा स्तोकेभ्य इत्यस्मान् मुक्त इत्येतत्। स्वरोऽप्यत्रानेक एव। तथा हि—'स्तोकाभ्याम्' इत्येतत् प्रातिपदिकस्वरेण मध्योदात्तम्, 'मुक्तः' इत्येतत् प्रत्ययस्वरेणान्तोदात्तम्। एवम् 'स्तोकेभ्यो मुक्तः' इत्यत्रापि नानास्वरता वेदितव्या। मूलोदाहरणे तु समासे सत्यैकपद्यं भवति, स्वरोऽप्येक एव। तथा हि—थाथादिसूत्रेणात्रान्तोदात्तत्वम्।

यदि द्विवचनबहुवचनान्तानां समासो न भवतीह तर्हि कथं भवति—गोषुचरः, वर्षासुज इति? विवक्षितार्थाभिधानात्। अनभिधानं ह्यसमासे हेतुरुक्तः, इह तु विवक्षितार्थस्यार्थस्य बहुवचनस्याभिधानमस्त्येव। यत्र ह्यभेदैकत्वसंख्योपजायते, तत्र संख्याविशेषस्याभिधानं न भवति, न चात्राभेदैकत्वसंख्योपजायते। ततश्च विवक्षितार्थाभिधानादभेदैकत्वसंख्या नोपपद्यते। तथा हि—गोषुचर इत्यत्र गोशब्दोऽप्सु वर्तते, स चापोऽभिदधानो बहुत्वसंख्याविशिष्ट एवाभिदधाति, अप्शब्दवत्। वर्षासुज इति—वर्षाशब्दोऽपि कालविशेषे बहुत्वसंख्याविशिष्ट एव वर्तते। अतः प्रातिपदिकेनैव बहुत्वसंख्याया आश्रितत्वान्नात्राभेदैकत्वसंख्योपजायते। यदि तु जायेत, तदा बहुत्वसंख्या निवर्तेत, ततश्च गोशब्दस्य वर्षाशब्दस्य च यः प्रातिपदिकार्थोऽभिप्रेतः स इह न गम्येत। तस्मान् मा भूद् गोशब्दवर्षाशब्दयोरभिप्रेतस्यार्थस्यानवगतिरिति नात्राभेदैकत्वसंख्योपजायते। ततश्च विवक्षितार्थाभिधानाद् गोषुचरः, वर्षासुज इत्यत्र भवत्येव समासः।

ब्राह्मणाच्छंसिन उपसंख्यानं कर्तव्यमिति। ब्राह्मणाच्छंसीति योऽयं शब्दस्त-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



**ब्राह्मणाच्छंसी इति । ऋत्विग्विशेषस्य रूढिरियम् । तस्य व्युत्पत्तिरसता सता वाऽवयवार्थेन क्रियते ॥**

**ओजःसहोम्भस्तमसस्तृतीयायाः ॥ ३ ॥**

पदमञ्जरी

ब्राह्मणानि शंसति ब्राह्मणाच्छंसी, अलुक् तु 'तत्पुरुषे कृति बहुलम्' इत्येव सिद्धः। ननु शास्त्राण्यसौ शंसति, न ब्राह्मणानि ? नैष दोषः, ब्राह्मणविहितेषु शास्त्रेषु ब्राह्मणशब्दो द्रष्टव्यः। अपर आह—युक्त एवात्र पञ्चम्यर्थः, आहरणपूर्वके शंसने शंसतिर्वर्तते, ब्राह्मणादाहृत्य सूक्तानि शंसतीति ब्राह्मणाच्छंसी। एवमपि होतृप्रभृतिष्वपि ब्राह्मणाच्छंसीति प्राप्नोति ? तत्राह—*ऋत्विग्विशेषस्य रूढिरियमिति*। *तस्या इति*। ब्राह्मणाच्छंसीत्यस्या रूढेरित्यर्थः। *सतेति*। ब्राह्मणाच्छंसीत्यत्र पक्षे पञ्चम्यर्थो न सम्भवति, पक्षान्तरे तु सम्भवति ॥

*ओजःसहोम्भस्तमसस्तृतीयायाः* ॥ उदाहरणेषु 'कर्तृकरणे कृता बहुलम्' इति समासः। इह कस्मान्न भवति—सततनैशतमोवृतामिति ? उच्यते; उत्तरपदेन पूर्वपदमाक्षिप्यते, तेनोपात्तमोजःप्रभृति विशेष्यते - पूर्वपदभूतेभ्य ओजःप्रभृतिभ्य इति। न चात्र तमःशब्दः पूर्वपदम्, किं तर्हि ? सततनैशतमःशब्दः। यत्र तदन्तविधिरिष्यते तत्रोपात्तेनाक्षिप्तं पूर्वपदं विशेष्यते, तेन तस्य तदन्तस्य

न्यासः

स्योपसंख्यानं प्रतिपादनं कर्तव्यमित्यर्थः। किं पुनरत्र न सिध्यति ? पञ्चमीति। ब्राह्मणशब्देनात्राध्ययनविशेष[1] उच्यते, तं शंसति = कथयति यः स ब्राह्मणाच्छंसीति ताच्छीलिको णिनिः। अत्र ब्राह्मणशब्दात् 'कर्मणि द्वितीया' इति द्वितीयायां प्राप्तायां पञ्चम्युपसंख्येया। अलुक्पुनः 'तत्पुरुषे कृति बहुलम्' इत्येवं सिद्धः। यदा तु ब्राह्मणादाकृष्यावयवमर्थं वा शंसतीति विवक्ष्यते, तदा पञ्चम्यपि नोपसंख्येया। 'अपादाने पञ्चमी' इत्येवमेव तस्याः सिद्धत्वात्। कथं पुनरत्रासता पञ्चम्यर्थेन व्युत्पत्तिः क्रियते ? इत्याह ऋत्विग्विशेष इत्यादि। रूढिः = प्रसिद्धिः, संज्ञेति यावत्। तस्या इत्यनेन रूढिमात्रं प्रत्यवमृश्यते, न तु ब्राह्मणाच्छंसीत्ययं रूढशब्दः। रूढिशब्दा हि नावश्यं सतैवावयवार्थेन व्युत्पाद्यन्ते, अपि त्वसतापि, तैलपायिकाशब्दवत्। ब्राह्मणाच्छंसीति शब्दश्चायं रूढिशब्दः कस्यचिदेव ऋत्विग्विशेषस्य वाचकः, तत्रैव तस्य संज्ञात्वेन प्रणीतत्वात्। तस्मात् तस्याप्यसता सता वावयवार्थेन व्युत्पत्तिः क्रियते। तत्र यदि ब्राह्मणं शंसतीत्ययमर्थो विवक्ष्यते, तदा पञ्चम्यर्थस्यापादानस्याभावादसतावयवार्थेन व्युत्पत्तिः क्रियते। तदा तु ब्राह्मणादवयवार्थं वा गृहीत्वा शंसतीत्ययमर्थो विवक्ष्यते, तदा पञ्चम्यर्थस्य भावात् सता ॥

ओजःसहोऽम्भस्तमसस्तृतीयायाः ॥ ओजसाकृतमित्यादौ 'कर्तृकरणे कृता

1. '....नात्राध्येयग्रन्थविशेषः' इति युक्तम्।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



ओजस्, सहस्, अम्भस्, तमस् — इत्येतेभ्य उत्तरस्यास्तृतीयाया अलुग्भवति उत्तरपदे। ओजसाकृतम्। सहसाकृतम्। अम्भसाकृतम्। तमसाकृतम्।

※ अञ्जस उपसंख्यानं कर्तव्यम् ※। अञ्जसाकृतम्।

※ पुंसानुजो जनुषान्ध इति वक्तव्यम् ※। पुंसानुजः[1]॥

**मनसः संज्ञायाम्॥ ४॥**

मनस उत्तरस्यास्तृतीयायाः संज्ञायामलुग्भवति। मनसादत्ता। मनसागुप्ता। मनसासङ्गता।

संज्ञायामिति किम्? मनोदत्ता। मनोगुप्ता॥

**आज्ञायिनि च॥ ५॥**

आज्ञायिन्युत्तरपदे मनस उत्तरस्यास्तृतीयाया अलुग्भवति। मनसाऽऽज्ञातुं शीलमस्य मनसाज्ञायी॥

पदमञ्जरी

च भवति—इष्टकचितम्, पक्वेष्टकचितमिति। क्वचित्तु—यदेवोपात्तं तस्यैवोत्तरपदेऽनन्तरे तत्कार्यं भवति, न तूपात्तस्य तदन्तस्य वा पूर्वपदत्वमपेक्ष्यते, यथा—'आनङ् ऋतो द्वन्द्वे', 'होतृपोतृनेष्टोद्गातारः' इति, अत्र नेष्टृशब्दश्च

न्यासः

बहुलम्' इत्यनेन समासः।

अञ्जस उपसंख्यानमिति। अञ्जस उत्तरस्यास्तृतीयाया अलुक उपसंख्यानम् = प्रतिपादनं कर्त्तव्यमित्यर्थः। तत्रेदं प्रतिपादनम्—'आज्ञायिनि च' इत्यत्र चकारोऽनुक्तसमुच्चयार्थः, तेनाञ्जःशब्दादुत्तरस्यास्तृतीयाया अलुग्भवतीति। अन्यदपि चात्र प्रतिपादनमुत्तरत्र करिष्यामः।

पुंसानुज इत्यादि। पुंसानुजो जनुषान्ध इत्यत्रापि तृतीयाया अलुक्प्रतिपादनं कर्त्तव्यमित्यर्थः। प्रतिपादनं पूर्ववत्। पुंसा हेतुनानुजः पुंसानुजः। जनुषा हेतुनान्धः जनुषान्धः। 'तृतीया' इति योगविभागात् समासः। जनुरिति जन्मनो नामधेयमेतत्।

मनसः संज्ञायाम्॥ आज्ञायिनि च॥ मनसाज्ञायीति। ताच्छीलिको णिनिः, 'आतो युक् चिण्कृतोः' इति युगागमः, उपपदसमासः॥

---

१. 'पुंसा हेतुनानुजः। जनुषान्धः। जनुषा हेतुनाऽन्धः। 'तृतीया' इति योगविभागात् समासः। जनुरिति जन्मनो नामधेयम्'—इति मुद्रितपुस्तकेऽधिकः पाठो दृश्यते, स त्वनर्थक एव; न्यासे तस्य व्याख्यानरूपेण दर्शनात्। (प्र० सं० स०)

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## आत्मनश्च पूरणे[1] ॥ ६ ॥

आत्मन उत्तरस्यास्तृतीयायाः पूरणप्रत्ययान्त उत्तरपदेऽलुग्भवति । आत्मनापञ्चमः । आत्मनाषष्ठः । 'तृतीयाविधाने प्रकृत्यादिभ्य उपसंख्यानम्' इति तृतीया । 'तृतीया' इति योगविभागात्समासः । आत्मना वा कृतः पञ्चम आत्मनापञ्चमः ।

### पदमञ्जरी

न पूर्वपदम्, नापि तदन्तं पूर्वपदम्, किं तर्हि ? होतृशब्दः, न तस्योत्तरपदमनन्तरम् ।

अञ्जसा = आर्जवेन । यस्य पुमानग्रजः स पुंसा हेतुनाऽनुज इति कृत्वा, जनुषान्धः = जात्यन्धः, जनु = जन्म ।

*आत्मनश्च पूरणे* ॥ वार्त्तिकमेवेदं सूत्ररूपेण पठितम् । पूरणशब्दस्य स्वरितत्वात्तदधिकारविहितानां प्रत्ययानामत्र ग्रहणं न स्वरूपस्य ग्रहणमित्याह— *पूरणप्रत्ययान्त इति* । यद्यप्युत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तविधिर्न भवतीति 'हृदयस्य हृल्लेख' इत्यत्र ज्ञापयिष्यते, तथाप्यात्मन्शब्दात् पूरणप्रत्ययस्यासम्भवात्सामर्थ्यादत्र तदन्तविधिः । *आत्मना वा कृत इति* । वृत्तौ कृतार्थस्यान्तर्भावात् कर्तरि करणे वा तृतीया, 'तृतीया तत्कृतार्थेन' इति समासः, यथा—कुङ्कमलोहितादावित्यर्थः ।

### न्यासः

आत्मनश्च पूरणे ॥ पूरणग्रहणमिह स्वर्यते, स्वरितेन चाधिकारावगतिर्भवति । तेन पूरणग्रहणमधिकृत्य ये पूरणप्रत्यया विहितास्त एव पूरणग्रहणेन गृह्यन्ते, न तु स्वरूपम् । 'उत्तरपदे' इत्यनुवर्त्तते च, ततः प्रत्ययग्रहणपरिभाषया पूरणप्रत्ययान्त उत्तरपदे कार्यं विज्ञायत इत्यालोच्याह—पूरणप्रत्ययान्त उत्तरपद इत्यादि । पञ्चम इति । पञ्चानां पूरणः 'तस्य पूरणे डट्' इति डट्, तस्य 'नान्तादसङ्ख्यादेर्मट्' । षष्ठ इति । षण्णां पूरण इति 'षट्कतिकतिपयचतुरां थुक्', ष्टुत्वम् । आत्मनापञ्चम इत्यादौ केन तृतीया, न ह्यत्र करणादिस्तृतीयार्थोऽस्ति, करणादि हि कारकम्, क्रियायाश्च कारकं भवति, न चेह काचित् क्रिया विद्यते ? इत्याह—तृतीयाविधान इत्यादि । भवत्वेवम्, तृतीयासमासस्तु कथम्, न ह्यत्र समासलक्षणमस्ति ? इत्यत आह—तृतीयेति चेत्यादि । अथ वा—'कर्तृकरणयोस्तृतीया' इत्यनेनैवात्र तृतीया, 'कर्तृकरणे कृता बहुलम्' इति समास इति दर्शयन्नाह—आत्मना वेत्यादि । अत्र कर्त्तरि करणे वैषा तृतीया—कृतः पञ्चम इति । कृते समासे कृतशब्दो न प्रयुज्यते; तदर्थस्य वृत्तावन्तर्भावात् ।

---

१. अत्र विषये काशीसंस्कृतग्रन्थमालाप्रकाशितायाः काशिकायाः प्रस्तावनायामस्माभिर्विवेचनं कृतम् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


कथं 'जनार्दनस्त्वात्मचतुर्थ एव' इति ? बहुव्रीहिरयम् – आत्मा चतुर्थोऽस्यासावात्मचतुर्थः ॥

वैयाकरणाख्यायां चतुर्थ्याः ॥ ७ ॥

वैयाकरणानामाख्या वैयाकरणाख्या । आख्या = संज्ञा । यया संज्ञया वैयाकरणा एव व्यवहरन्ति तस्यामात्मन उत्तरस्याश्चतुर्थ्या अलुग्भवति । आत्मनेपदम् । आत्मनेभाषा । तादर्थ्ये चतुर्थी । 'चतुर्थी' इति योगविभागात्समासः ॥

पदमञ्जरी

*आत्मा चतुर्थो यस्येति* । एकस्यापि वस्तुनो बुद्धिपरिकल्पितविभेदस्य वर्त्तिपदार्थत्वम् , अन्यपदार्थत्वं चाविरुद्धम् ॥

*वैयाकरणाख्यायां चतुर्थ्याः* ॥ *वैयाकरणानामित्यादि* । यदि तु व्याकरणे भवा वैयाकरणी, 'अणृगयनादिभ्यः' इत्यण् , वैयाकरणी चासावाख्या चेति वैयाकारणाख्येत्येवं व्याख्यायेत ? आत्मनेभाषः, परस्मैभाष इत्यत्र न स्यात् ; अनयोरष्टाध्याय्यामपठितत्वात् । तस्माद्यथोपदर्शितमेव व्याख्यातम् । यद्येवम् , कुबेरबलिरित्यादौ लौकिकसंज्ञाशब्दे प्रसङ्गः, वैयाकरणानामपि तेन व्यवहारात् ? अत आह—*ययेति* । विशेषणसामर्थ्यादवधारणमाश्रीयत इति भावः । यदा तु धातुसूत्रगणोणादिवाक्यात्मकं पञ्चस्थानं व्याकरणम् , तदा वैयाकरणी चासावाख्या चेत्यस्मिन् व्याख्यानेऽपि न दोषः । *आत्मनेपदमिति* । अन्वर्थत्वमस्य समासविधौ दर्शितम् ।

न्यासः

कथमित्यादि । अत्राप्यात्मना चतुर्थ इति भवितव्यमिति भावः । बहुव्रीहिरयमित्यादि परिहारः । तत्पुरुषे ह्यात्मनाचतुर्थ इति स्यात् , न चायं तत्पुरुषः । किं तर्हि ? बहुव्रीहिः । स च प्रथमान्तयोरेव पदयोरिति न भवत्यनिष्टप्रसङ्गः । ननु चान्यपदार्थे बहुव्रीहिरुच्यते, अन्यपदार्थश्च व्यतिरिक्तो भवति । यथा – चित्रा गावो यस्य स चित्रगुरिति, न चेह कश्चिद् व्यतिरिक्तोऽन्यपदार्थोऽस्ति ? नैष दोषः; अव्यतिरिक्तोऽप्यन्यपदार्थो भवति व्यपदेशिवद्भावेन । यथा—शोभनशरीरः शिलापुत्रक इति ॥

वैयाकरणाख्यायां चतुर्थ्याः ॥ वैयाकरणानामिति । व्याकरणमधीयते विदन्ति वा वैयाकरणाः । का पुनर्वैयाकरणानामाख्येत्याह—ययेत्यादि । अथैवं कस्मान्न व्याख्यायते—व्याकरणे भवा वैयाकरणी, 'अणृगयनादिभ्यः' इत्यण् , वैयाकरणी चासावाख्या चेति वैयाकरणाख्या, 'पुंवत् कर्मधारय' इत्यादिना पुंवद्भावः, तस्यां वैयाकरणाख्यायामिति ? अशक्यमेवं व्याख्यातुम् , इह हि न स्यात्—आत्मनेभाषः,

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


## परस्य च ॥ ८ ॥

परस्य च या चतुर्थी तस्या वैयाकरणाख्यायामलुग्भवति। परस्मैपदम्। परस्मैभाषा ॥

## हलदन्तात्सप्तम्याः संज्ञायाम् ॥ ९ ॥

हलन्ताददन्ताच्चोत्तरस्याः सप्तम्याः संज्ञायामलुग्भवति। युधिष्ठिरः। त्वचिसारः। गविष्ठिर इत्यत्र तु 'गवियुधिभ्यां स्थिरः' इत्यत एव वचनादलुक्। अदन्तात् – अरण्येतिलकाः। अरण्येमाषकाः। वनेकिंशुकाः। वनेहरिद्रकाः। वनेबल्बजकाः। पूर्वाह्णेस्फोटकाः। कूपेपिशाचकाः।

हलदन्तादिति किम्? नद्यां कुक्कुटिका नदीकुक्कुटिका। भूम्यां पाशाः भूमिपाशाः। संज्ञायामिति किम्? अक्षशौण्डः।

### पदमञ्जरी

*परस्य च* ॥ किमर्थमिदमुच्यते? अलुग् यथा स्यात्—परस्मैपदम्, परस्मैभाषः। सिद्धोऽत्रालुक् पूर्वेणैव? न सिध्यति; 'आत्मनः' इति तत्र वर्तते। निवर्तिष्यते? यदि निवर्तेत, तेभ्यो हितास्तद्धिता इत्यत्रापि प्राप्नोति। तस्मात् 'अत्मनः' इति तत्रानुवर्तते, तस्मिंश्चानुवर्तमाने परस्य चेति वक्तव्यम् ॥

*हलदन्तात्सप्तम्याः सञ्ज्ञायाम्* ॥ उदाहरणेषु 'संज्ञायाम्' इति समासः। *गविष्ठिर इत्यादि*। अन्यथा 'अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते' इत्य-

### न्यासः

परस्मैभाष इति। व्याकरणे हि का भाषा? या व्याकरणे कृता। न चैते क्वचित् व्याकरणे कृते। पूर्वत्र व्याख्याने सतोह्यपि भवति, एते अपि वैयाकरणानामाख्ये, तथा ह्याम्यामपि वैयाकरणा व्यवहरन्त्येव। आत्मनेपदमिति। आत्मार्थं पदम्। 'तादर्थ्ये चतुर्थी' इति योगविभागात् समासः। ननु 'चतुर्थी तदर्थ' इत्येवं समासः सिद्धः? न सिध्यति; प्रकृतिविकारभावे हि स इष्यते ॥

परस्य च ॥ हलदन्तात् सप्तम्याः संज्ञायाम् ॥ युधिष्ठिर इति। 'संज्ञायाम्' इति समासः, 'गवियुधिभ्यां स्थिरः' इति षत्वम्। अथ गविष्ठिर इत्यत्र कथमलुक्, न हि गोशब्दो हलन्तः, नाप्यदन्तः? स्यादेतत्—'गो + इ + स्थिर इति स्थितेऽन्तरङ्गत्वादवादेशे कृते हलन्तत्वाद् भविष्यति, एतच्च नास्ति; यतोऽन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते इति; अवश्यञ्चैतदभ्युपेयम्; अन्यथा हि नद्यां कुक्कुटिका नदीकुक्कुटिका, भूम्यां पाशो भूमिपाश इत्यत्रापि यणादेशे कृतेऽलुक् प्रसज्येत? इत्यत आह—गविष्ठिर इत्यत्र त्वित्यादि।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


* हृद्द्युभ्यां ङेः[1] * । हृद्, दिव् – इत्येताभ्यामुत्तरस्य ङेरलुक् भवति । हृदिस्पृक् । दिविस्पृक् ॥

कारनाम्नि च प्राचां हलादौ ॥ १० ॥

प्राचां देशे यत्कारनाम तत्र हलादावुत्तरपदे हलदन्तादुत्तरस्याः सप्तम्या अलुग्भवति । कूपेशाणम्[2] । दृषदिमाषकः । हलेद्विपदिका । हलेत्रिपदिका ।

पदमञ्जरी

वादेशस्याकरणादहलदन्तत्वान्न स्यात्, यथा—भूम्यां पाशो भूमिपाश इत्यत्रेति भावः ।

*हृद्द्युभ्यामिति* । असंज्ञार्थमिदम् । *हृदिस्पृक्*, *दिविस्पृगिति* । द्वितीयार्थे चैषा सप्तमी । तथा हि भाष्यम्—'अन्यार्थे चैषा सप्तमी द्रष्टव्या, हृदयं स्पृशतीति हृदिस्पृक्, दिवं स्पृशतीति दिविस्पृक्' इति । आख्याग्रहणस्योपसमस्तत्वादिह संज्ञाग्रहणम् । तत्रैव त्वसमस्तमाख्याग्रहणं कर्तव्यम् ॥

*कारनाम्नि च प्राचां हलादौ* ॥ वणिग्भिः पशुपालैः कर्षकैश्च कल्पितो राजग्राह्यो भागः = करः, कर एव कारः, प्रज्ञादित्वादण् ।

न्यासः

हृद्द्युभ्यामिति । असंज्ञार्थमिदम् । वक्तव्यमिति व्याख्येयमित्यर्थः । व्याख्यानं चोत्तरत्र करिष्यते । अथ वेहापि क्रियते—इहान्तग्रहणं न कर्तव्यम्, विनापि तेन सप्तम्या प्रातिपदिके सन्निधापिते हलदन्तता लभ्यत एव, तस्मादधिकमिहान्तग्रहणं क्रियते, तदधिकं क्रियमाणमेतत् सूचयति—अधिकेनायमलुग् भवतीति । तेन क्वचिदसंज्ञायामलुग् भवतीति । हृदिस्पृग्दिविस्पृगिति । 'स्पृशोऽनुदके क्विन्', 'क्विन्प्रत्ययस्य कुः' इति शकारस्य खकारः, तस्य 'झलां जशोऽन्ते' इति जश्त्वम्—गकारः, तस्यापि 'वावसाने' इति चर्त्वम्—ककारः । अत्र चायमर्थः—हृदयं स्पृशति, दिवं स्पृशतीति । तथा हि भाष्ये उक्तम्—'द्वितीयार्थे सप्तमी चैषा द्रष्टव्या, हृदयं स्पृशति, दिवं स्पृशतीति—हृदिस्पृग्, दिविस्पृक्' इति । कथं पुनर्द्वितीयार्थे सा भवति? अत एव भाष्यकारवचनात् । अथ वा—हृदयं यः स्पृशति स हृदये स्पृशत्येव, दिवं यः स्पृशति स दिवि स्पृशत्येव । अत्र 'अधिकरणे' इत्येवं भविष्यति सप्तमी ।

आख्याग्रहणे प्रकृते पुनः संज्ञाग्रहणं विस्पष्टार्थम् ॥

कारनाम्नि च प्राचां हलादौ ॥ वणिग्भिः कर्षकैः पशुपालैश्च राज्ञे देयो भागो

---

१. 'अलुग्वक्तव्यः' इति क्वचिदधिकम् ।

२. 'सूपेशाणः' इति पाठान्तरम् । 'मुकुटेकार्षापणम्' इत्यधिकं च ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



कारविशेषस्य संज्ञा एताः, तत्र पूर्वेणैव सिद्धे नियमार्थमिदम्। एते च त्रयो नियमविकल्पा अन्विष्यन्ते – कारनाम्न्येव, प्राचामेव, हलादावेवेति।

कारनाम्नीति किम्? अभ्यर्हिते पशुः अभ्यर्हितपशुः। कारादन्यस्यैतद्देयस्य नाम। प्राचामिति किम्? यूथे पशुः यूथपशुः। हलादाविति किम्? अविकटे उरणः अविकटोरणः। हलदन्तादित्येव – नद्यां दोहनी नदीदोहनी॥

पदमञ्जरी

*नियमविकल्पा इति*। नियमविशेषा इत्यर्थः। तानेव दर्शयति—*कारनाम्न्येवेत्यादि*। 'प्राचां देशे हलादौ यदि भवति कारनाम्न्येव' इति प्रथमो नियमः, अप्राग्देशवर्तिनि तु त्वचिसारादावकारनाम्न्यपि भवत्येव। तथा 'कारनाम्नि हलादौ यदि भवति प्राचामेव' इति द्वितीयः। 'प्राचां कारनाम्नि च यदि भवति हलादावेव' इति तृतीयः। अवीनां समूहोऽविकटम्, सङ्घाते कटच्। कथं पुनरेकस्मिन्वाक्ये नियमत्रयं लभ्यते? कः पुनराह—एकमिदं वाक्यमिति! अगृह्यमाणविशेषत्वेन प्रत्येकमेवकाराध्याहारात् त्रीण्येव वाक्यानि। संज्ञाग्रहणेन प्रकृतेऽपि नामग्रहणं क्रियते नियमार्थत्वं विस्पष्टयितुम्; अन्यथाऽसंज्ञायां विध्यर्थताऽपि सम्भाव्येत। कथं पुनरसंज्ञायां सप्तमीसमासः? एतदेव ज्ञापकं स्यात्—प्राचां कारे हलादिनोत्तरपदेनासंज्ञानामपि भवति समास इति।

'यस्मिन्विधिः' इत्येव सिद्धे आदिग्रहणं विस्पष्टार्थम्॥

न्यासः

रक्षानिबन्धनः = कारः, तस्य नाम कारनाम। कूपेशाणमित्यादौ 'संज्ञायाम्' इति समासः। हलेद्विपदिकेति। द्वौ द्वौ पादौ देयौ द्विपदिका, 'पादशतस्य' इत्यादिना वुन्, अलोऽन्त्यलोपश्च, 'पादः पत्' इति पदादेशः।

कारविशेषस्येत्यादिनास्य सूत्रस्य नियमार्थतां दर्शयति। नियमविकल्पाः = नियमविशेषा इत्यर्थः। कारनाम्नि चेत्यादिना तेषां नियमविकल्पानां स्वरूपं दर्शयति। एते च नियमविकल्पाः कारनाम्नि, प्राचाम्, हलादावित्येषां पदानामिह नियमवाक्य उपादानाल्लभ्यन्ते। यद्याद्यो नियमो नाभिप्रेतः स्यात् तदा 'कारनाम्नि' इति न ब्रूयात्। एवं यदि द्वितीयो नियमो नाभिप्रेतः स्यात् तदा 'प्राचाम्' इत्येवं नोक्तं स्यात्। तथा यदि तृतीयो नियमो नाभीष्टः स्यात् 'हलादौ' इत्येवं नोक्तं स्यात्। अथ किमर्थं नामग्रहणम्, न पूर्वयोगात् संज्ञाग्रहणमनुवर्त्तते? पूर्वयोगे संज्ञया उपाधेः प्रायिकत्वसूचनार्थं नामग्रहणम्। तेन हृदिस्पृग्, दिविस्पृगित्यत्रासंज्ञायामप्यलुक्सिद्धो भवति॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


## मध्याद् गुरौ ॥ ११ ॥

मध्यादुत्तरस्याः सप्तम्या गुरावुत्तरपदेऽलुग्भवति । मध्येगुरुः ।

* अन्ताच्चेति वक्तव्यम् * । अन्तेगुरुः । 'सप्तमी' इति योगविभागात् समासः ॥

## अमूर्द्धमस्तकात् स्वाङ्गादकामे ॥ १२ ॥

मूर्द्धमस्तकवर्जितात् स्वाङ्गादुत्तरस्याः सप्तम्या अकाम उत्तरपदेऽलुग्भवति । कण्ठे कालोऽस्य कण्ठेकालः । उरसिलोमा । उदरेमणिः ।

अमूर्द्धमस्तकादिति किम् ? मूर्द्धशिखः । मस्तकशिखः । अकाम इति किम् ? मुखे कामोऽस्य मुखकामः । स्वाङ्गादिति किम् ? अक्षशौण्डः ।

हलदन्तादित्येव – अङ्गुलित्राणः । जङ्घावलिः ॥

## बन्धे च विभाषा ॥ १३ ॥

'बन्धे' इति घञन्तो गृह्यते, तस्मिन्नुत्तरपदे हलदन्तादुत्तरस्याः

पदमञ्जरी

*अमूर्द्धमस्तकात् स्वाङ्गादकामे* ॥ उदाहरणेषु प्रत्युदाहरणेषु च व्यधिकरणपदो बहुव्रीहिः । *अक्षशौण्ड इति* । 'सप्तमी शौण्डैः' इति तत्पुरुषः ॥

*बन्धे च विभाषा* ॥ 'स्वाङ्गात्' इति निवृत्तम्, सामान्येनायं विधिः । 'बन्धे' इति धातुरेवात्र सहकारेणाऽनुक्तः । 'नेन्सिद्धबध्नातिषु च' इति धातावेव प्रतिषेध उक्तः, ततश्च बहुव्रीहिरेवास्य विकल्पस्य विषयः । तत्रापि हस्तबन्धादौ स्वाङ्गे प्राप्तविभाषा, चक्रबन्धादावस्वाङ्गे त्वप्राप्तविभाषेत्युभयत्रविभाषा सम्पद्यते; तत्पुरुषे तु नैवास्य प्रवृत्तिः ?—इतीमां शङ्कामपनयति— बन्ध इति

न्यासः

मध्याद् गुरौ ॥ अन्ताच्चेति वक्तव्यमिति । अन्तशब्दाच्चोत्तरस्याः सप्तम्या अलुग्भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—पूर्वयोगाच्चकारोऽनुवर्त्तते, स चानुक्तसमुच्चयार्थः । तेनान्तशब्दादप्युत्तरस्याः सप्तम्या अलुग्भवतीति ॥

अमूर्धमस्तकात् स्वाङ्गादकामे ॥ स्वाङ्गमद्रवादिलक्षणं पारिभाषिकं यत् तदिह गृह्यते । कण्ठेकाल इति बहुव्रीहिः । 'व्यधिकरणानामपि बहुव्रीहिर्भवत्येव'—इति बहुव्रीहिः । समानाधिकरण इत्येतत् प्रायिकम् । अक्षशौण्ड इति । 'सप्तमी शौण्डैः' इति समासः । अङ्गुलित्राणजङ्घावली सप्तमीतत्पुरुषौ ॥

बन्धे च विभाषा ॥ 'स्वाङ्गात्' इति निवृत्तम्, सामान्येन विधिः । बन्धे इति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सप्तम्या विभाषाऽलुग्भवति । हस्तेबन्धः, हस्तबन्धः । चक्रेबन्धः, चक्रबन्धः । उभयत्रविभाषेयम् । स्वाङ्गाद्धि बहुव्रीहौ पूर्वेण नित्यमलुक् प्राप्नोति; तत्पुरुषे तु स्वाङ्गादस्वाङ्गाच्च 'नेन्सिद्धबध्नातिषु च' इति प्रतिषेधः प्राप्नोति ।

हलदन्तादित्येव — गुप्तिबन्धः[1] ॥

## तत्पुरुषे कृति बहुलम् ॥ १४ ॥

तत्पुरुषे समासे कृदन्त उत्तरपदे सप्तम्या बहुलमलुग्भवति । स्तम्बेरमः । कर्णेजपः ।

### पदमञ्जरी

*घञन्तो गृह्यत इति* । ततश्च तत्पुरुषेऽपि घञन्तस्य वृत्तिर्विरुद्धा, प्रतिषेधस्य बन्धनादौ चरितार्थत्वादिति भावः । *उभयत्र विभाषेयमिति* । कथमित्याह— *स्वाङ्गाद् बहुव्रीहाविति* । *तत्पुरुषे त्विति* । यद्यपि बहुव्रीहावेवास्वाङ्गादप्राप्त इति शक्यं वक्तुम्, तथाप्यस्य तत्पुरुषे प्रवृत्तिं दर्शयितुं तत्पुरुषे चास्य प्रवृत्तिः पूर्वविप्रतिषेधेन; अन्यथा बहुव्रीहिरस्यावकाशः, बध्नातिप्रतिषेधस्य च बन्धनादिरवकाशः; घञन्ते तु तत्पुरुषे उभयप्रसङ्गे परत्वात्प्रतिषेध एव स्यात् ॥

*तत्पुरुषे कृति बहुलम्* ॥ अत्रापि कृदन्तस्य ग्रहणम्, न कृन्मात्रस्य, तत्र परतः सप्तम्या असम्भवात् । इह कस्मान्न भवति—परमे कारके परमकारक इति ? उच्यते – अन्तरङ्गा कृत्प्रतिपाद्यक्रियानिमित्ता सप्तमी, इह तु क्रियान्तरनिमित्ता— परमे कारके निधेहीति, तेन बहिरङ्गत्वान्नास्या ग्रहणम् ।

### न्यासः

बध्नातेरेतद्रूपम् । 'नेन्सिद्धबध्नातिषु च' इत्यनेन तत्पुरुषे बध्नातौ प्रतिषेधं वक्ष्यन्ति । तत्र विषयविभागो न ज्ञायते—तत्पुरुषे क्व च प्रतिषेध. ? इत्यतस्तत्परिज्ञानार्थमाह— बन्ध इति घञन्तो गृह्यत इति । बन्धनं बन्धः, भावे घञ् । अनेन घञन्ते बध्नातौ विभाषा । प्रत्ययान्तरे तु प्रतिषेध इति दर्शितं भवति । कथं पुनर्ज्ञायते—घञन्तोऽयमिति ? आद्युदात्तत्वात् । हस्तेबन्ध इति । तत्पुरुषः, बहुव्रीहिर्वा । उभयत्रेति । प्राप्ते चाप्राप्ते च कथं पुनरुभयत्र विभाषेयम् ? इत्याह— स्वाङ्गाद्धीत्यादि ॥

तत्पुरुषे कृति बहुलम् ॥ स्तम्बेरमः, कर्णेजप इति । 'स्तम्बकर्णयोरमिजपोः' इत्यच्, 'उपपदमतिङ्' इति तत्पुरुषः ।

---

१. 'कारिकाबन्धः' इत्यधिकम् एकत्र पुस्तके ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


न च भवति – कुरुचरः, मद्रचरः ॥

**प्रावृट्शरत्कालदिवां जे ॥ १५ ॥**

प्रावृट्, शरत्, काल, दिव् – इत्येतेषां जे उत्तरपदे सप्तम्या बहुलमलुग्भवति । प्रावृषिजः । शरदिजः । कालेजः । दिविजः । पूर्वस्यैवायं प्रपञ्चः ॥

**विभाषा वर्षक्षरशरवरात् ॥ १६ ॥**

वर्ष, क्षर, शर, वर – इत्येतेभ्यः उत्तरस्याः सप्तम्या ज उत्तरपदे विभाषाऽलुग्भवति । वर्षेजः, वर्षजः । क्षरेजः, क्षरजः । शरेजः, शरजः । वरेजः, वरजः ॥

**घकालतनेषु कालनाम्नः ॥ १७ ॥**

पदमञ्जरी

*कुरुचर इति* । 'हलदन्तात्' इत्यधिकारमनाश्रित्यैतदुदाहृतम् । विभाषाग्रहणे प्रकृते बहुलग्रहणं क्वचित् प्रकृत्यादीनामुपसंग्रहार्थम् । तेन कर्णेजपादावलुगेव, मद्रचरादौ लुगेव, ब्राह्मणाच्छंस्यादौ असप्तम्या अप्यलुक् । एवं च सर्वमेवालुक्प्रकरणमस्यैव प्रपञ्चः ॥

*प्रावृट्शरत्कालदिवां जे* ॥ प्रावृट्शरदोः पृथग्ग्रहणात्कालेति स्वरूपग्रहणम् ॥

न्यासः

कुरुचरः, मद्रचर इति । 'चरेष्टः' । विभाषायां प्रकृतायां बहुलग्रहणं क्वचित्प्रवृत्त्यादीनामर्थानां संग्रहार्थम् । तेनालुक्प्रवृत्तिः क्वचिदेव भवति – स्तम्बेरम इत्यादौ । क्वचिदप्रवृत्तिरेव – कुरुचर इत्यादौ । क्वचिदुभयम् – सरसिजं सरोजमित्यादौ । क्वचिदन्यदेव – ब्राह्मणाच्छंसीत्यादौ । सप्तम्यां अलुगुक्तः पञ्चम्या अपि भवति । तथा कृदन्त उत्तरपदेऽलुगुक्तस्तद्धितेऽपि भवति—अप्सु भवोऽप्सव्य इति । दिगादित्वाद् यत्— 'ओर्गुणः' इति गुणः, 'वान्तो यि प्रत्यये' इति वान्तादेशः ।

तदेवं सर्वत्र बहुलग्रहणेन सिद्धमिति 'ब्राह्मणाच्छंसिन उपसंख्यानम्' इत्यादि यदुक्तम्, यच्च वक्ष्यते–'अपोयोनियन्मतुषु सप्तम्या अलुक्' इत्यादि, तत् सर्वं न वक्तव्यं भवतीति । यद्येवम्, स्तोकान्मुक्त इत्याद्यपि सर्वमनेनैव सिद्धमिति 'पञ्चम्याः स्तोकादिभ्यः' इति न वक्तव्यं भवति ? सत्यमेतत्; अस्यैव प्रपञ्चार्थं तद् वेदितव्यम् । एवञ्च सति सुसंग्रहीतं लक्ष्यं भवति । तथा चाह—त एव विषयाः सुसंगृहीता भवन्ति येषां लक्षणं प्रपञ्चश्च ॥

प्रावृट्शरत्कालदिवां जे ॥ प्रावृषिज इति । 'सप्तम्यां जनेर्डः', 'टेः' इति टिलोपः, 'उपपदमतिङ्' इति समासः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



घसंज्ञके प्रत्यये कालशब्दे तनप्रत्यये च परतः कालनाम्न उत्तरस्याः सप्तम्या विभाषाऽलुग्भवति। घ – पूर्वाह्णेतरे, पूर्वाह्णतरे। पूर्वाह्णेतमे, पूर्वाह्णतमे। काल – पूर्वाह्णेकाले, पूर्वाह्णकाले। तन – पूर्वाह्णेतने, पूर्वाह्णतने।

कालनाम्न इति किम्? शुक्लतरे, शुक्लतमे।

हलदन्तादित्येव – रात्रितरायाम्। उत्तरपदाधिकारे प्रत्ययग्रहणे

पदमञ्जरी

घकालतनेषु कालनाम्नः॥ 'घ' इति तरप्तमपोर्ग्रहणम्। 'काल' इति स्वरूपग्रहणम्, 'तन' इति ट्युट्युलोरादेशस्य सतुट्कस्य ग्रहणम्। *पूर्वाह्णेतनमिति*। सप्तम्यर्थप्रकर्षे प्रत्ययः, तस्याद्रव्यप्रकर्षत्वादलुक्पक्षे, 'किमेत्तिङव्ययघात्' इत्यामुप्रत्ययः। लुक्पक्षे तु निमित्ताभावादद्रव्यप्रकर्षेऽप्यामभावः। तरबन्तात् सप्तमी। कचित्तु—अलुक्पक्षेऽपि सप्तमी समुदायात्पठ्यते, तत्र प्रकृत्यर्थविवक्षया 'अद्रव्यप्रकर्षे' इति प्रतिषेधो व्याख्येयः। *पूर्वाह्णेतन इति*। 'विभाषा पूर्वाह्णापराह्णाभ्याम्' इति ट्युट्युलौ, अनादेशस्तुट् च।

कथं पुनर्घतनप्रत्ययमात्रेऽलुक् उदाहृतः, यावता प्रत्ययग्रहणपरिभाषया तदन्त उत्तरपदेऽलुगुदाहर्तव्यः? अत आह—*उत्तरपदाधिकार इति*। कुत

न्यासः

विभाषा वर्षक्षरशरवरात्॥ घकालतनेषु कालनाम्नः॥ 'घ' इति तरप्तमपोर्ग्रहणम्, 'काल' इति कालवाचिनः शब्दस्य, 'तन' इति ट्युट्युलोरनादेशस्य सतुट्कस्य। पूर्वाह्णेतरामिति। अह्नः पूर्वमिति विगृह्य 'पूर्वापर' इत्यादिनैकदेशिसमासः। 'राजाहःसखिभ्यष्टच्' इति टच् समासान्तः, 'अह्नोऽह्न एतेभ्यः' इत्यह्नादेशः। 'अह्नोऽदन्तात्' इति णत्वम्। अस्मिंश्च पूर्वाह्णे अस्मिंश्च पूर्वाह्णे, अस्मिंस्त्वनयोरतिशयेन पूर्वाह्णे पूर्वाह्णेतर इति। 'द्विवचन' इत्यादिना तरप्। पूर्वाह्णेतमामिति। 'अतिशायन' इत्यादिना तमप्, 'कृत्तद्धितसमासाश्च' इति प्रातिपदिकत्वे सति सुब्लुक् प्राप्तः पक्षे प्रतिषिध्यते। पूर्वाह्णेतन इति। पूर्वाह्णेतर इत्यत्रार्थे 'विभाषा पूर्वाह्णापराह्णाभ्याम्' इति ट्युट्युलौ तुडागमश्च, 'युवोरनाकौ' इत्यनादेशः।

रात्रितरायामिति। अस्याञ्च रात्रावस्याञ्च रात्रावनयोरतिशयेन रात्राविति विग्रहः। ननु च 'प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य' इति तदन्तग्रहणं भवतीति घसंज्ञकप्रत्ययान्ते तनप्रत्ययान्ते चोत्तरपदे परतोऽलुगुदाहर्त्तव्यः, तत् कस्मात् प्रत्ययमात्रे स उदाहृतः? इत्याह—उत्तरपदाधिकार इत्यादि। कुतः पुनरेतदित्याह—लेखग्रहणादित्यादि। 'हृदयस्य हृल्लेखयदणलासेषु' इत्यत्राणो लेखशब्दस्य चाणन्तस्य भेदेनो-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तदन्तविधिर्नेष्यते; 'हृदयस्य हृल्लेख' इति लेखग्रहणाल्लिङ्गात्। तेन घतनग्रहणे तदन्तग्रहणं न भवति।

कालेति न स्वरूपग्रहणम् ॥

शयवासवासिष्वकालात् ॥ १८ ॥

शय, वास, वासिन् – इत्येतेषूत्तरपदेष्वकालवाचिन उत्तरस्याः सप्तम्या विभाषाऽलुग्भवति। खेशयः, खशयः। ग्रामेवासः, ग्रामवासः। ग्रामेवासी, ग्रामवासी।

अकालादिति किम्? पूर्वाह्णशयः।

हलन्तादित्येव – भूमिशयः।

❋ अपो योनियन्मतुषु सप्तम्या अलुग्वक्तव्यः ❋। अप्सुयोनिः।

पदमञ्जरी

इत्याह। *लेखग्रहणादिति*। यदयम् 'हृदयस्य हृल्लेखयदणलासेषु' इत्यण्ग्रहणे क्रियमाणे लेखग्रहणं करोति, तज्ज्ञापयति—नोत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तविधिर्भवतीति। यदि स्यात्, लेखग्रहणं न कुर्यात्; अणन्त इत्येव सिद्धत्वात्। ननु च घञर्थं लेखग्रहणं स्यात्, न वै घञन्त इष्यते। *कालेति न स्वरूपग्रहणमिति*। नामग्रहणात्। क्वचिन्नञ् न पठ्यते, तत्र घकाले स्वरूपग्रहणमित्यर्थः॥

*शयवासवासिष्वकालात्*॥ अत्राकाल इत्यर्थग्रहणम्; व्याख्यानात्। तदाह—*अकालवाचिन इति*। *खशय इति*। 'अधिकरणे शेतेः' इत्यच्। *वास इति*। घञ्। *ग्रामेवासीति*। 'सुप्यजातौ णिनिः'।

*अपो योनीत्यादि*। शब्दप्रधानत्वादप इत्येकवचनम्, योनिः = उत्पत्तिः, अप्सु

न्यासः

पादानम्। तत्र यद्युत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तविधिरिष्यते तदा लेखग्रहणं न कुर्यात्; अण्ग्रहणेनैव तद्ग्रहणस्य सिद्धत्वात्, क्रियते च। तस्माल्लेखग्रहणाद् विज्ञायते—'उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तविधिर्नेष्यते' इति। तेनेति। तदन्तविधेरिहानिष्टत्वेन। काल इति न स्वरूपग्रहणमिति। नामग्रहणात्। तस्य ह्येतदेव प्रयोजनम्॥

शयवासवासिष्वकालात्॥ खेशय इति। 'अधिकरणे शेतेः' इत्यच्। ग्रामेवास इति। वसनं वासः, भावे घञ्। ग्रामेवासीति। ताच्छीलिको णिनिः, व्रते वा।

पूर्वाह्णशय इति। ननु च स्वरूपग्रहणे सति कालशय इति प्रत्युदाहार्यम्, नैवेदं स्वरूपग्रहणम्। किं तर्हि? अर्थग्रहणम्। अत एव वृत्तावुक्तम्—अकालवाचिन इति। कथं पुनरर्थग्रहणं लभ्यते? पूर्वसूत्रादिह नामग्रहणानुवृत्तेः। यद्येवम्, तदा नार्थः काल-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अप्सव्यः । अप्सुमन्तौ । अप्सु भत्र इति दिगादित्वाद्यत्प्रत्ययः । सर्वत्र 'सप्तमी' इति योगविभागात्समासः ॥

नेन्सिद्धबध्नातिषु च ॥ १९ ॥

इन्नन्ते उत्तरपदे सिद्धशब्दे बध्नातौ च परतः सप्तम्या अलुग्न भवति । स्थण्डिलवर्ती । सिद्ध – सांकाश्यसिद्धः । काम्पिल्यसिद्धः ।

पदमञ्जरी

योनिर्यस्य सोऽप्सुयोनिः । *अप्सव्य इति* । 'ओर्गुणः', 'वान्तो यि प्रत्यये' । *अप्सुमन्ताविति* । सप्तम्यन्तान्मतुपोऽसम्भवादप्स्विति शब्दो ययोरस्ति तावप्सुमन्तौ कारीर्यामाज्यभागौ, तयोर्हि 'अप्स्वग्ने सधिष्टवः', 'अप्सु मे सोमो अब्रवीत्', इत्यनुवाक्ययोरप्सुशब्दोऽस्ति । यद्येवम्, अनुकरणत्वादस्यवामीयादिवल्लुग्न भविष्यतीति किं मतुब्ग्रहणेन ! अन्ये तु मतिशब्दं पठन्ति, उदाहरन्ति—अत्र सोमो वाप्सुमतिरिति; तत्तु भाष्ये न दृष्टम्[1] ॥

*नेन्सिद्धबध्नातिषु च* ॥ 'तत्पुरुषे कृति बहुलम्' इति प्राप्तं प्रतिषिध्यते, सप्तम्याः परस्याः परस्य केवलस्येनोऽसम्भवादुत्तरपदाधिकारेऽपि प्रत्ययग्रहणे तदन्तविधिरित्याह—*इनन्त उत्तरपद इति* । *स्थण्डिलवर्तीति* । 'व्रते'

न्यासः

ग्रहणेन, 'कालनाम्नः' इत्येतदनुवर्त्तिष्यते, तस्य च नञा सह सम्बन्धं करिष्यामः—कालनाम्नो नेति, तत्रायमर्थः—'नेन्सिद्धबध्नातिषु च' इत्यत्र नेति वक्तव्यं न भवति, नेत्येतदेव ह्यनुवर्त्तिष्यते ? नैवं शक्यम्; 'न शयवासवासिषु' इत्युच्यमाने ह्यलुक एवायं प्रतिषेधो विज्ञायेत, तस्यात्र विधेयतया प्रस्तुतत्वात् । तस्मात् कालस्यैव प्रतिषेधो यथा स्यादित्येवमर्थं कालग्रहणं कर्त्तव्यम् । वक्तव्यमिति व्याख्येयमित्यर्थः । व्याख्यानं तु पूर्वमेव कृतम् ॥

नेन्सिद्धबध्नातिषु च ॥ 'तत्पुरुषे कृति बहुलम्' इति प्राप्तस्यालुकोऽयं प्रतिषेधः । इन्नन्त उत्तरपद इति । ननु चोत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तविधिर्नेष्यत इति ज्ञापितमेतत्, तत् कथमिह तदन्तमुत्तरपदं गृह्यते ? सप्तम्याः परस्येन्प्रत्ययस्यासम्भवात् । द्विविध एव हीन्प्रत्ययः—कृत्, तद्धितश्च । तत्र कृद् धातोरेवोत्पद्यत इति न सप्तम्याः परः सम्भवति । तद्धितोऽपि नैव कश्चित् सप्तमीसमर्थादुत्पद्यत इत्यसावपि नैवं सप्तम्याः परः सम्भवति । तस्मादिन्नन्तमेव गृह्यत इति युक्तमुक्तमेतत् । स्थण्डिलवर्त्तीति । 'व्रते' इति णिनिः, 'उपपदमतिङ्' इति समासः । साङ्काश्यसिद्ध इति । 'सिद्धशुष्क' इत्यादिना

---

१. आधुनिक भाष्यसंस्करणेषु तु दृश्यत एव । अधिकं जिज्ञासुभिस्तत्रत्यः (६.३.१) उद्द्योतो द्रष्टव्यः । ( प्र० स० स० )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



बध्नाति – चक्रबद्धः । चारबद्धः । 'सप्तमी' इति योगविभागात् समासः ।

चक्रबन्ध इति केचिदुदाहरन्ति, तत्पचाद्यजन्तं द्रष्टव्यम् । घञन्ते हि 'बन्धे च विभाषा' इत्युक्तम् ॥

## स्थे च भाषायाम् ॥ २० ॥

स्थे चोत्तरपदे भाषायां सप्तम्या अलुग्न भवति । समस्थः । विषमस्थः । कूटस्थः । पर्वतस्थः ।

भाषायामिति किम् ? कृणोम्यारेष्ठः । 'पूर्वंपदात्' इति षत्वम् ॥

## षष्ठ्या आक्रोशे ॥ २१ ॥

आक्रोशे गम्यमाने उत्तरपदे षष्ठ्या अलुग्भवति । चौरस्य कुलम् । वृषलस्य कुलम् ।

पदमञ्जरी

इति णिनिः । उपपदसमासः । *साङ्काश्यसिद्ध इति* । 'सिद्धशुष्कपक्वबन्धैश्च' इति समासः । *चारबद्ध इति* । बद्धशब्दो निष्ठान्तः । *योगविभागात् समास इति* । बद्धशब्देन ।

*तदिति* । बन्ध इत्येव शब्दरूपम् । अथ घञन्तः कस्मान्न भवति ? तत्राह— *घञन्ते हीति* । अथ वा—पचाद्यजन्ते च 'बन्धे च विभाषा' इत्ययं विकल्पः कस्मान्न भवति ? इत्यत आह—*घञन्ते हीति* ॥

स्थे च *भाषायाम्* ॥ आरेष्ठ इति । 'स्थः क च' इति कः ॥

न्यासः

समासः । चक्रबद्ध इति । बद्धशब्दो निष्ठान्तः, 'सप्तमी' इति योगविभागात् समासः ।

बन्धशब्देन चक्रबन्ध इति । 'सिद्ध' इत्यादिना समासः । तत् पचाद्यच्प्रत्ययान्तं द्रष्टव्यमिति । अथ बन्ध इत्येतच्छब्दरूपं घञन्तं कस्मान्न गृह्यते ? इत्याह—घञन्ते हीत्यादि ॥

स्थे च भाषायाम् ॥ अयमपि 'तत्पुरुष' इत्यादिना प्राप्तस्यालुकः प्रतिषेधः । समस्थ इति ! समे तिष्ठतीति कः, 'आतो लोप इटि च' इत्याकारलोपः ।

कृष्णोम्यारेष्ठः इति । 'स्थः क: च' इति क्विप्प्रत्ययः ॥

षष्ठ्या आक्रोशे ॥ चौरस्यकुलमिति । आक्रोशप्रतिपादनपरमेतत्, न त्वनेन



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



आक्रोशे इति किम् ? ब्राह्मणकुलम् ।

* षष्ठीप्रकरणे वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु यथासंख्यमलुग् वक्तव्यः * । वाचोयुक्तिः । दिशोदण्डः । पश्यतोहरः ।

* आमुष्यायणामुष्यपुत्रिकामुष्यकुलिकेति चालुग्वक्तव्यः * । अमुष्यापत्यमामुष्यायणः । नडादित्वात् फक् । अमुष्य पुत्रस्य भाव आमुष्यपुत्रिका । मनोज्ञादित्वाद्वुञ् । तथा — आमुष्यकुलिकेति ।

* देवानाम्प्रिय इत्यत्र च षष्ठ्या अलुग् वक्तव्यः * । देवानाम्प्रियः ।

* शेपपुच्छलाङ्गूलेषु शुनः संज्ञायां षष्ठ्या अलुग्वक्तव्यः * । शुनःशेपः । शुनःपुच्छः । शुनोलाङ्गूलः ।

* दिवश्च दासे षष्ठ्या अलुग्वक्तव्यः * । दिवोदासाय गायति ।।

पुत्रेऽन्यतरस्याम् ।। २२ ।।

पुत्रशब्द उत्तरपदे आक्रोशे गम्यमानेऽन्यतरस्यां षष्ठ्या अलुग्

पदमञ्जरी

षष्ठ्या आक्रोशे ।। *पश्यतोहर इति* । 'षष्ठी चानादरे' इति षष्ठी, पश्यन्तमनाहृत्य हरतीत्यर्थः ।

*शुनःशेप इति* । आकारान्तोऽप्यस्ति शेपशब्दः न केवलं सकारान्तः । शुन इव शेपमस्येति बहुव्रीहिः । एवं पुच्छलाङ्गूलाभ्यामपि बहुव्रीहिः । ऋषिविशेषाणामेताः संज्ञाः ।।

न्यासः

तस्य सम्बन्धो विवक्षितः । वक्तव्य इति । व्याख्येय इत्यर्थः । व्याख्यानं तु पूर्वमेव कृतम् ।

पश्यतोहर इति । पश्यत इति 'षष्ठी चानादरे' इति षष्ठी । हरतीति हरः, पचाद्यच् ।

अमुष्येति । अदसस्त्यदाद्यत्वम् , 'अदसोऽसेर्दादु दो मः' इत्युत्वमत्वे, उत्वस्यासिद्धत्वाद् 'टाङसिङसामिनात्स्याः' इति ङसः स्यादेशः । तथामुष्यकुलिकेति । यथा अमुष्यपुत्रिकेत्यत्र मनोज्ञादित्वाद्वुञ् , तथात्रापीत्यर्थः ।

देवानाम्प्रिय इति । प्रीणातीति प्रियः, 'इगुपधज्ञाप्रीकिरः कः' इति कप्रत्ययः, इयङादेशः । शुनःशेप इति । 'श्वयुवमघोनामतद्धिते' इति सम्प्रसारणम् ।।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



भवति । दास्याःपुत्रः, दासीपुत्रः । वृषल्याःपुत्रः, वृषलीपुत्रः ।

आक्रोश इत्येव — ब्राह्मणीपुत्रः ॥

ऋतो विद्यायोनिसम्बन्धेभ्यः ॥ २३ ॥

ऋकारान्तेभ्यो विद्यासम्बन्धवाचिभ्यो योनिसम्बन्धवाचिभ्यश्चोत्तरस्याः षष्ठ्या अलुग्भवति । होतुरन्तेवासी । होतुःपुत्रः । पितुरन्तेवासी । पितुःपुत्रः ।

ऋत इति किम् ? आचार्यपुत्रः । मातुलपुत्रः ।

विद्यायोनिसम्बन्धेभ्यस्तत्पूर्वोत्तरपदग्रहणम् । विद्यायोनिसम्बन्धवाचिन्येवोत्तरपदे यथा स्याद्, अन्यत्र मा भूत् — होतृधनम् । पितृधनम् । होतृगृहम् । पितृगृहम् ॥

पदमञ्जरी

*ऋतो विद्यायोनिसम्बन्धेभ्यः* ॥ विद्या च योनिश्च विद्यायोनी, अभ्यर्हितत्वाद्विद्यायाः पूर्वनिपातः, तत्कृतः सम्बन्धो येषां ते विद्यायोनिसम्बन्धाः, कृतशब्दो गम्यमानत्वान्न प्रयुज्यते । *पितुःपुत्र इति* । प्रख्यातात्पितुरुत्पन्न इत्यर्थः ।

*विद्यायोनिसम्बन्धेभ्यः पूर्वोत्तरपदग्रहणमिति* । सूत्रे पञ्चमीनिर्देशात्पूर्वपदा-

न्यासः

पुत्रेऽन्यतरस्याम् ॥ ऋतो विद्यायोनिसम्बन्धेभ्यः ॥ विद्या च योनिश्चेति विद्यायोनी, तत्कृतः सम्बन्धो येषां ते विद्यायोनिसम्बन्धाः । कृतशब्दस्य वृत्तावप्रयोगः; गम्यमानार्थत्वात्, यथा— गुडधाना इत्यत्र मिश्रशब्दस्य ।

ऋतो विद्यायोनिसम्बन्धेभ्यस्तत्पूर्वोत्तरपदग्रहणं कर्त्तव्यमिति । तदित्यनेन विद्यायोनिसम्बन्धा उभयेऽपि निर्दिश्यन्ते, तेषां पूर्वपदभूतानामुत्तरपदभूतानाञ्च ग्रहणं कर्त्तव्यम् । गृह्यते येन तद् ग्रहणम्, येन ते गृह्यन्ते तादृशं व्याख्यानम् कर्त्तव्यमित्यर्थः । किं पुनस्तद् व्याख्यानम् ? किमर्थं तत् कर्त्तव्यम् ? इत्याह—विद्यायोनिवाचिन्येवेत्यादि । तत्रेदं व्याख्यानम्-- इहेङ्गितेनोन्मिषितेन महता सूत्रप्रबन्धेनाचार्याणामभिप्राया लक्ष्यन्ते, 'ऋतो विद्यायोनिसम्बन्धेभ्यः' इत्येष महान् सूत्रप्रबन्धः, यदि ह्यविद्यायोनिसम्बन्धवाचिन्युत्तरपदेऽलुगभीष्टः स्यात्, एवं सत्यविद्यायोनिसम्बन्धादित्येवं ब्रूयात् । अथ वा—सम्बन्धग्रहणमपि न कुर्यात्, न हि किञ्चिदृकारान्तं विद्यावाचि योनिवाचि वाऽसम्बन्धमस्ति, तत्रान्तरेणापि सम्बन्धग्रहणं विद्यायोनिसम्बन्धवाचिन इति विज्ञास्यते, तत् किं सम्बन्धग्रहणेन ? तदेतस्मान्महतः सूत्रप्रबन्धाद्विद्यायोनिसम्बन्धवाचिन्युत्तरपद आचार्यस्यायमलुगभीष्ट इति लक्ष्यत इति । होतुरिति । 'ऋत उत्'

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## विभाषा स्वसृपत्योः ॥ २४ ॥

स्वसृ, पति — इत्येतयोरुत्तरपदयोर्ऋकारान्तेभ्यो विद्यायोनिसम्बन्धवाचिभ्यो विभाषाऽलुग्भवति। मातुःष्वसा। मातृस्वसा। मातृष्वसा। पितुःष्वसा। पितुःस्वसा। पितृष्वसा। यदा लुक् तदा 'मातृपितृभ्यां स्वसा' इति नित्यं षत्वम्। यदा त्वलुक् तदा 'मातृपितृभ्यामन्यतरस्याम्' इति विकल्पेन षत्वम्। दुहितुःपतिः। दुहितृपतिः। ननान्दुःपतिः। ननान्दृपतिः॥

## आनङ् ऋतो द्वन्द्वे ॥ २५ ॥

ऋकारान्तानां विद्यायोनिसम्बन्धवाचिनां यो द्वन्द्वस्तत्रोत्तरपदे पूर्वपदस्यानङादेशो भवति। होतापोतारौ। नेष्टोद्गातारौ। प्रशास्ताप्रतिहर्त्तारौ। योनिसम्बन्धेभ्यः — मातापितरौ। याताननान्दरौ।

पदमञ्जरी

नामेव विद्यायोनिसम्बन्धवाचित्वं लभ्यते, नोत्तरपदानाम्? अथ सप्तमीनिर्देशः क्रियते। उत्तरपदानामेव लभ्यते, न पूर्वपदानाम्। तस्मादुभयेषामपि तद्वाचित्वेऽयं विधिरिति वक्तव्यमित्यर्थः। अन्यवृत्तिपरत्वाच्चास्य तेषां परस्परव्यतिकरेऽपि भवति—होतुःपुत्रः, पितुरन्तेवासीति॥

*आनङ् ऋतो द्वन्द्वे* ॥ अत्र यद्यृकारस्य द्वन्द्वे आनङ् भवतीत्येवं विज्ञायेत, पितृपितामहादप्याङ् स्यात्; 'ऋतः' इत्येतच्चानर्थकं प्रकृतत्वात्, तस्माद् द्वन्द्वविशेषणमृत इति। जातौ चेदमेकवचनमिति मन्यमान आह—*ऋकारान्ताना-मित्यादि*।

इह कार्यार्थः श्रवणार्थो वा वर्णानामुपदेशः, नकारश्चायं न क्वचित् श्रूयते सर्वत्र 'नलोपः प्रातिपदिकान्तस्य' इति नलोपेन भवितव्यम्, कार्यमपि चास्य

न्यासः

इत्युत्वम्, रपरत्वम्, 'रात्सस्य' इति सकारलोपः॥

विभाषा स्वसृपत्योः॥ आनङ् ऋतो द्वन्द्वे॥ ऋकारान्तानां विद्यायोनिसम्बन्धवाचिनां यो द्वन्द्व इत्यादि। अथ ऋकारान्तस्य द्वन्द्व आनङ् भवतीत्येवं कस्मान्न विज्ञायते? अशक्यमेवं विज्ञातुम्; इहापि प्रसज्येत—पितृपितामहाविति। ङकारोऽन्त्यादेशार्थः।

इह हि वर्णानामुपदेशः—कार्यार्थः, श्रवणार्थो वेति, नकारश्चायं न क्वचिच् श्रूयते, सर्वत्रैव ह्यस्य 'नलोपः प्रातिपदिकान्तस्य' इति लोपेन भवितव्यम्, नापि किञ्चित् कार्यं

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



नकारोच्चारणं परत्वनिवृत्त्यर्थम् ।

ऋत इति किम् ? पितृपितामहौ । 'पुत्रे' इत्यत्रानुवर्त्तते, 'ऋतः' इति च । तेन पुत्रशब्देऽप्युत्तरपदे ऋकारान्तस्यानङादेशो भवति । पितापुत्रौ । मातापुत्रौ ॥

पदमञ्जरी

न किञ्चिदुपदिश्यते, तस्मान्नार्थ एतेन ? इत्यत आह—*नकारोच्चारणमित्यादि* । असति नकारे उः स्थानेऽणेव शिष्यते इति 'उरण् रपरः' इति रपरत्वं स्यात्, तस्मिंश्च नायमणेव शिष्यते, किं तर्हि ? अण् चान्यच्चेति, नास्ति रपरत्वप्रसङ्गः । तस्माद्रपरत्वनिवृत्त्यर्थं नकारोच्चारणम् । ङकारः 'ङिच्च' इत्यन्त्यादेशार्थः । यत्र च निर्दिश्यमानं कार्यिणो विशेषणम्, तत्र निर्दिश्यमानस्यादेशा भवन्तीत्येतद्भवति, नात्र 'ऋतः' इति कार्यिणो विशेषणम्, किं तर्हि ? द्वन्द्वस्य विशेषणम् । *पुत्र इत्यत्रानुवर्तत इति* । 'पुत्रेऽन्यतरस्याम्' इत्यतः । यद्यत्र पुत्र इति वर्तते, 'विभाषा स्वसृपत्योः' इत्यत्रानुवर्तेत, ततश्च भ्रातुष्पुत्र इत्यादावनाक्रोशेऽपि विकल्पप्रसङ्गः ? एवं तर्हि व्याख्यानादत्रैव सम्बध्यते, अत एव ह्यत्रेत्युक्तम् । एवमपि पुत्र उत्तरपदे पूर्वपदमात्रस्यानङ् प्राप्नोति, कार्यिणोऽनिर्देशात्, 'ऋतः' इति श्रुतस्य द्वन्द्वविशेषणत्वादत आह—*ऋत इति चेति* । 'अनुवर्तते' इत्यनु-

न्यासः

मस्योपलभ्यते, तत् किमर्थं नकारस्योच्चारणम् ? इत्याह—नकारोच्चारणमित्यादि । असति नकार ऋकारस्य स्थानेऽणेव शिष्यते, ततश्च 'उरण् रपरः' इति रपरत्वं स्यात् । नकारे तु सति नायमणेव शिष्यते, अपि त्वण् चानङ् चेति न भवति रपरत्वप्रसङ्गः । न हि यत्राण् अनण् चेति शिष्यते तत्र रपरत्वं भवति । यथा—'सुधातुरकङ् च' इति सौधातकिरित्यत्र । तस्मादत्र रपरत्वनिवृत्त्यर्थं नकारोच्चारणम् ।

अथ पितापुत्रौ, मातापुत्रौ इत्यत्र कथमानङादेशः, न ह्यत्र ऋकारान्तानां द्वन्द्वः ? इत्याह– पुत्र इत्यत्रानुवर्त्तत इति । 'पुत्रेऽन्यतरस्याम्' इत्यतः पुत्र इत्येतदत्रानुवर्त्तत इत्यभिप्रायः । यदि तु पुत्र इत्यनुवर्त्तते, तदा 'विभाषा स्वसृपत्योः' इत्यत्र पुत्रेऽपि विभाषा प्राप्नोति ? नैष दोषः; मण्डूकप्लुतिन्यायेन तदनुवर्त्तते । अत एवात्रेत्युक्तं तत्रैवानुवर्त्तते, न पूर्वत्रेति प्रतिपादनार्थम् । नन्वेवमपि पुत्रशब्द उत्तरपदे पूर्वपदमात्रस्यानङ् प्राप्नोति; कार्यिणेहानिर्देशादुत्तरपदशब्देन च पूर्वपदमात्रस्याक्षिप्तत्वात्, न च शक्यते वक्तुम्—ऋत इति वचनादृकारस्य भविष्यतीति, तस्मादेकमिह ऋत इति वचनं द्वन्द्वस्य विशेषणम्, न कार्यिणः ? इत्याह— ऋत इति चेति । अत्रानुवर्त्तत इति सम्बन्धः । 'ऋतो विद्यायोनिसम्बन्धेभ्यः' इत्यत ऋत इत्यनुवर्त्तते, तत् कार्यिणो

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## देवताद्वन्द्वे च ॥ २६ ॥

देवतावाचिनां यो द्वन्द्वस्तत्रोत्तरपदे पूर्वपदस्यानङादेशो भवति । इन्द्रावरुणौ । इन्द्रासोमौ । इन्द्राबृहस्पती ।

'द्वन्द्वे' इति वर्त्तमाने पुनर्द्वन्द्वग्रहणं प्रसिद्धसाहचर्यार्थम् । अत्यन्तसहचरिते लोकविज्ञाते द्वन्द्वमित्येतन्निपात्यते । तत्र ये लोके प्रसिद्धसाहचर्याः, वेदे च ये सहवापनिर्दिष्टास्तेषामिह ग्रहणं भवति । तेन ब्रह्मप्रजापती, शिववैश्रवणावित्येवमादौ न भवति ।

### पदमञ्जरी

षङः । 'ऋतो विद्यायोनि' इत्यतः 'ऋतः' इत्यनुवर्तते, तत्कार्यिणं विशेषयिष्यतीत्यर्थः । यद्यपि तत् पञ्चम्यन्तम्, तथापि तदिह व्याख्यानात्षष्ठ्यन्तं विपरिणम्यते ॥

देवताद्वन्द्वे च ॥ अनृकारान्तार्थमविद्यायोनिसम्बन्धार्थं वचनम् । *द्वन्द्व इति वर्तमान इत्यादि* । प्रकृतं द्वन्द्वग्रहणं समासविशेषप्रतिपत्त्यर्थम्, इदं प्रसिद्धं साहचर्यं यस्य युगलस्य तत्परिग्रहार्थम् । कथं पुनर्न परिग्रहः ? इत्यत आह—*अत्यन्तसहचरित इत्यादि* । 'द्वन्द्वं रहस्यमर्यादा' इत्यत्राभिव्यक्तिग्रहणेनात्यन्तसहचरितयुगले द्वन्द्व इति निपात्यते, तस्यात्र ग्रहणं देवतापदेन, समस्तं चेदम्प्रकृतस्य द्वन्द्वस्यार्थद्वारकं विशेषणम्—अत्यन्तसहचरितयुगलाभिधायिनि द्वन्द्व इति यावत् । साहचर्यमेव विशिनष्टि—*तत्रेति* । सहवापः = सहनिर्वापः । 'अग्नीषो-

### न्यासः

विशेषणं भविष्यति । ननु तत् पञ्चमीनिर्दिष्टम्, षष्ठीनिर्दिष्टेन चेहार्थः ? नैष दोषः; पुत्र इत्येषा सप्तमी ऋत इत्यस्याः पञ्चम्याः षष्ठीत्वं प्रकल्पयिष्यति—'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति । नन्वेवमपि विरोधः, तथा हि—यदि पुत्रशब्द उत्तरपदम्, कथं तदा ऋकारान्तानां द्वन्द्वः, अथ ऋकारान्तानां द्वन्द्वो न तर्हि पुत्रशब्द उत्तरपदमिति ? नैतदस्ति; अन्य एव हि स द्वन्द्वो यस्य ऋत इत्येतद् विशेषणम् । अन्यश्च स यस्य पुत्रशब्द उत्तरपदमिति कोऽत्र विरोधः ॥

देवताद्वन्द्वे च ॥ अनृकारार्थमविद्यायोनिसम्बन्धार्थञ्च वचनम् । ननु च 'आनङृतो द्वन्द्वे' इत्यतो द्वन्द्वग्रहणमनुवर्त्तत एव, तत् किमर्थमिह पुनर्द्वन्द्वग्रहणम् ? इत्याह—द्वन्द्व इत्यनुवर्त्तमान इत्यादि । पूर्वकं हि द्वन्द्वग्रहणं समासविशेषप्रतिपत्त्यर्थम्, इदं तु प्रसिद्धसाहचर्यार्थम्—येषां लोके वेदे च प्रसिद्धं साहचर्यमेषां पुनःपरिग्रहो यथा स्यादित्येवमर्थम् । अथ क्रियमाणेऽपि पुनर्द्वन्द्वग्रहणे कथमयमर्थो लभ्यते ? इत्याह—अत्यन्तसहचरित इत्यादि । 'द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमण' इत्यत्रेदमुच्यते । अत्यन्तसहचरिते लोकविज्ञाते द्वन्द्वमित्येतन्निपात्यत इति । तेनायमर्थो लभ्यत इति

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



* उभयत्र वायोः प्रतिषेधो वक्तव्यः * । अग्निवायू । वाय्वग्नी ॥

ईदग्नेः सोमवरुणयोः ॥ २७ ॥

सोम, वरुण — इत्येतयोर्देवताद्वन्द्वेऽग्नेरीकारादेशो भवति । अग्नीषोमौ । अग्नीवरुणौ । 'अग्नेः स्तुत्स्तोमसोमाः' इति षत्वम् ॥

इद् वृद्धौ ॥ २८ ॥

कृतवृद्धावुत्तरपदे देवताद्वन्द्वेऽग्नेरिकारादेशो भवति । आग्नि-वारुणीमनड्वाहीमालभेत । आग्निमारुतं कर्म क्रियते । अग्नीवरुणौ देवते अस्य, अग्नीमरुतौ देवते अस्येति तद्धितः । तत्र 'देवताद्वन्द्वे च' इत्युभयपदवृद्धौ कृतायामानङ्, ईत्वं च बाधितुमिकारः क्रियते ।

वृद्धाविति किम् ? आग्नेन्द्रः । 'नेन्द्रस्य परस्य' इत्युत्तरपदवृद्धिः प्रतिषिध्यते ।

पदमञ्जरी

माभ्यां जुष्टं निर्वपामि' इत्यादि । *उभयत्रेति* । पूर्वपदत्वेनोत्तरपदत्वेनेत्यर्थः ॥

इद् वृद्धौ ॥ अत्र वृद्धिमदुत्तरपदं वृद्धिशब्देनोच्यते, वृद्ध्यात्मकस्योत्तरपद-स्यासम्भवात् । अग्नीवरुणौ देवते अस्य, अग्नामरुतौ देवते अस्येति विग्रहः, पूर्वत्रेत्वम्, उत्तरत्रानङ् । *द्व्यधिष्ठानं देवतात्वमिति* । देवतेत्येकवचनम् । *आनङमीत्वं च बाधितुमिति* । वरुणे हीत्वस्य प्रसङ्गः, अन्यत्रानङः । यद्यपि

न्यासः

दर्शयति । वेदे च ये सहवापनिर्दिष्टा इति । सहवापः = सहदानम्, तत्र निर्दिष्टाः सहवापनिर्दिष्टाः । के पुनरेकहविःसम्बन्धिनः ? य एकं हूयमानं हविः प्रति सम्प्रदान-त्वेन निर्दिष्टा एकत्र मन्त्रे— इन्द्रावरुणाभ्यां छागं हविर्निर्वपामीत्यादौ, ते वेदितव्याः ।

उभयत्रेत्यादि । पूर्वपदत्व उत्तरपदत्वे च सति वायोरानङादेशस्य प्रतिषेधो वक्तव्यो व्याख्येयः । तत्रेदं व्याख्यानम् 'विभाषा स्वसृपत्योः' इत्यतो विभाषाग्रहण-मनुवर्त्तते, सा च व्यवस्थितविभाषा । तेन वायोरुत्तरपदत्वे पूर्वपदत्वे च सति न भविष्यतीति ॥

ईदग्नेः सोमवरुणयोः ॥ आनङादेशापवादोऽयमीकारो विधीयते । तकार उच्चारणार्थः ॥

इद् वृद्धौ ॥ 'अग्नेः' इत्यनुवर्त्तते, 'देवताद्वन्द्वे' इति च । 'सोमवरुणयोः' इति निवृत्तम् । वृद्धिशब्देन साहचर्यात् कृतवृद्ध्युत्तरपदं गृह्यते । अत एवाह—कृतवृद्धा-वुत्तरपद इति । आग्निवारुणीमिति । औत्सर्गिकेऽणि कृते 'टिड्ढाणञ्' इति ङीप् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



* इद् वृद्धौ विष्णोः प्रतिषेधो वक्तव्यः * । आग्नावैष्णवं चरुं निर्वपेत् ॥

## दिवो द्यावा ॥ २९ ॥

दिवित्येतस्य 'द्यावा' इत्ययमादेशो भवति देवताद्वन्द्वे उत्तरपदे । द्यावाक्षामा । द्यावाभूमी[1] ॥

## दिवसश्च पृथिव्याम् ॥ ३० ॥

पृथिव्यामुत्तरपदे देवताद्वन्द्वे दिवः 'दिवस्' – इत्ययमादेशो भवति, चकाराद् 'द्यावा' च । दिवस्पृथिव्यौ । द्यावापृथिव्यौ ।

अकारोच्चारणं सकारस्य विकाराभावप्रतिपत्त्यर्थम् । तेन रुत्वादीनि न भवन्ति ।

### पदमञ्जरी

प्राग् वृद्धेर्विग्रहवाक्य एवानङीत्वयोः प्रसङ्गः, तथाप्यपवादविषयत्वात्प्रक्रियावाक्ये न क्रियेते, लौकिके तु वाक्ये भवत एव ।

इद्वृद्धौ विष्णोः प्रतिषेधः—आग्नावैष्णवमेकादशकपालं निर्वपेत् ॥

*दिवसश्च पृथिव्याम्* ॥ 'दिवसः' इति प्रथमान्तम् । अकारोच्चारणं किमर्थम्, यावता प्रयोजनाभावात्सकारस्येत्संज्ञा न भविष्यति ? तत्राह—*अकारोच्चारणमिति* । असति तस्मिन् पृथिवीशब्दे परतः सकारस्य रुत्वम्, विसर्जनीयः, 'कुप्वोः ≍क≍पौ च' इत्येते विकाराः प्राप्नुवन्ति, अकारे सति सकारस्योच्चारणं भवति, तेन प्रयोगेऽस्याविकृतस्यैव ग्रहणं भवति ।

### न्यासः

अत्रापि तकार उच्चारणार्थः ॥

दिवो द्यावा ॥ देवताद्वन्द्व उत्तरपद इति । देवताद्वन्द्वे यदुत्तरपदं तत्र परत इत्यर्थः ॥

दिवसश्च पृथिव्याम् ॥ आनङोऽपवादः । अथाकारः किमर्थमुच्चार्यते, सकारस्येत्संज्ञापरित्राणार्थं इति चेत् ? न; प्रयोजनाभावादेवेत्संज्ञा न भविष्यतीत्याह—अकारोच्चारणमित्यादि । असति ह्यकारेऽन्तर्वर्त्तिनीं विभक्तिमाश्रित्य पदसंज्ञायां सत्यां सकारस्य 'ससजुषो रुः' इति रुत्वं विकारः स्यात्, तस्यापि 'खरवसानयोर्विसर्जनीयः', तस्यापि 'कुप्वोः ≍क≍पौ च' इत्युपध्मानीयः स्यात् । अकारस्योच्चारणे तु सति न भवति, कथम् ? अकारस्योच्चारणेन यद् विकृतस्य सकारस्योपादानं तस्यैतदेव प्रयोजनम्—अवि-

---

१. अत्र 'द्यौश्च पृथिवी च द्यावापृथिव्यौ' इत्यधिकं क्वचित् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


कथम् 'द्यावा चिदस्मै पृथिवी नमेते' इति ? कर्तव्योऽत्र यत्नः ॥

उषासोषसः ॥ ३१ ॥

उषसः 'उषासा' इत्ययमादेशो भवति देवताद्वन्द्वे उत्तरपदे । उषासासूर्यम् । उषासानक्ता ॥

मातरपितरावुदीचाम् ॥ ३२ ॥

'मातरपितरौ' इत्युदीचामाचार्याणां मतेनारङादेशो मातृशब्दस्य निपात्यते । मातरपितरौ ।

उदीचामिति किम् ? मातापितरौ ॥

पितरामातरा च च्छन्दसि ॥ ३३ ॥

'पितरामातरा' इति छन्दसि निपात्यते । आ मा गन्तां पितरा-मातरा च । पूर्वपदस्य अराङादेशो निपात्यते । उत्तरपदे तु 'सुपां

पदमञ्जरी

*कथमित्यादि* । 'द्वन्द्वे' इत्यनुवृत्तेर्वाक्ये नैव प्राप्नोतीति प्रश्नः । *कर्तव्योऽत्र यत्न इति* । छान्दसोऽयं प्रयोगः, 'दृष्टानुविधिश्छन्दसि' इत्येषोऽत्र यत्नः ।

*उषासोषसः* ॥ *उषासानक्तेति* । छान्दसोऽयं प्रयोगः । उषाश्च नक्तं चेति द्वन्द्वः, प्रथमाद्विवचनस्य डादेशः । अत्र पदकाले पदकाराः—उषसानक्तेति ह्रस्वमधीयते ॥

न्यासः

*कुतस्यास्य प्रयोगो यथा स्यादिति*—द्यावा दिवसमित्यादिकम् । वाक्यमेतत् ।

इह च सूत्रे द्वन्द्वग्रहणम्, उत्तरपदग्रहणञ्चानुवर्त्तते । तेन द्यावा इत्ययमादेशो वाक्ये न प्राप्नोतीत्याह—कथमित्यादि । कर्त्तव्योऽत्र यत्न इति । तत्रायं यत्नः—'तत्पुरुषे कृति बहुलम्' इत्यतो बहुलग्रहणमनुवर्त्तते, तेन द्यावा इत्ययमादेशश्छन्दसि वाक्येऽपि भविष्यतीति ।

अथ वा—चकारोऽत्र क्रियते, तस्यानुक्तसमुच्चयार्थत्वाद्भविष्यति । द्यावाशब्दस्तु स्वरितत्वादेवानुवर्त्तिष्यत इति नार्थस्तदनुकर्षणार्थेन चकारेण ।

अथ वा—दिक्शब्देन समानार्थो द्यावाशब्दः प्रकृत्यन्तरमस्ति, तस्यायं प्रयोगः । आदेशवचनं तु दिवः प्रयोगनिवृत्त्यर्थमिति ॥

उषासोषसः ॥ आनङोऽपवाद इति । एवमुत्तरावपि योगौ । उषासानक्तमिति । उषाश्च नक्तञ्चेति विग्रहः ॥

मातरपितरावुदीचाम् ॥ पितरामातरा च च्छन्दसि ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सुलुक्' इति आकारादेशः, तत्र 'ऋतो ङिसर्वनामस्थानयोः' इति गुणः ।

छन्दसीति किम्? मातापितरौ ॥

## स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ॥ ३४ ॥

पदमञ्जरी

*स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु* ॥ अत्र त्रयः पक्षाः सम्भवन्ति---स्त्रिया इति स्त्रीप्रत्ययग्रहणम्, अर्थग्रहणम्, शब्दग्रहणं चेति । तत्र यदि स्त्रीग्रहणं स्वर्यते, स्वरितेनाधिकारावगतिर्भवतीति स्त्र्यधिकारविहिताष्टाबादयो गृह्यन्ते, यथा—'गोस्त्रियोरुपसर्जनस्य' इत्यत्र । तदा चायमर्थो भवति—भाषितपुंस्कात्परे टाबादिस्त्रीप्रत्यया यथा पुंसि न भवन्ति तथा उत्तरपदे न भवन्तीति । नन्वश्रुतक्रियापदेषु वाक्येषु भवतीत्यध्याहारोऽन्यत्र दृष्टः? उच्यते; वतिनिर्देशेषूपमाने सत्ता, असत्ता वा या प्रसिद्धा सोपमेयेऽतिदेश्या; यथा—उशीनरवन्मद्रेषु यवाः सन्ति, न सन्तीति; ततः पुंसि स्त्रीप्रत्ययस्याभावात्स्त्रियामप्यभावोऽतिदिश्यत इति न भविष्यतीत्येव वाक्यशेषः परिकल्पनीयः, तदा त्वनूङित्यनेन सामानाधिकरण्यात् 'स्त्रियाः' इति प्रथमार्थे षष्ठी, पुंवदिति सप्तमीसमर्थाद्वतिः । तत्र च प्रागेव समासाद्विग्रहवाक्य एव स्त्रीप्रत्ययस्य कृतत्वान्न तस्योत्तरपदे परतः 'न क्रोडादिबह्वचः' इतिवत् प्रागभावः शक्यः प्रतिपादयितुमिति 'लुक् तद्धितलुकि' इत्यादिवत्कृतस्य निवृत्तिरेव प्रतिपाद्या । विग्रहवाक्य एव कृताः स्त्रीप्रत्यया उत्तरपदे परतो निवर्तन्ते, लुप्यन्त इत्यर्थः ।

यदा तु पुंवत् स्त्रीत्वयुक्तं द्रव्यं स्त्रीशब्देनोच्यते, तदार्थग्रहणं भवति,

न्यासः

स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ॥ अत्र त्रयः पक्षाः सम्भाव्यन्ते—'स्त्रियाः' इति स्त्रीशब्देन प्रत्ययग्रहणं वा, अर्थग्रहणं वा, शब्दग्रहणं वेति । तत्र यदि 'स्त्रियाः' इति स्त्रीप्रत्ययग्रहणम् स्वर्यते, तदा स्वरितेनाधिकारावगतिर्भवतीति स्त्र्यधिकारविहिताः प्रत्यया गृह्यन्ते, यथा—'गोस्त्रियोरुपसर्जनस्य' इत्यत्र । अथ तु 'स्त्री' इत्यनेन स्त्रीत्वविशिष्टं द्रव्यमभिधीयते, तदार्थग्रहणम् । यदि तु स्त्र्यर्थवाची शब्दः स्त्रीत्यनेनोच्यते, तदा शब्दग्रहणम् । तत्राद्यपक्षेऽयं सूत्रार्थः—भाषितपुंस्कात्परः स्त्रीप्रत्ययोऽनूङुत्तरपदे पुंवद्भवति, निवर्तत इति यावत्, तदा 'स्त्रियाः'

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


पदमञ्जरी

स्त्रियाः स्त्र्यर्थस्य पुंस इव पुमर्थस्येव कार्यं भवतीत्यर्थः। तदा च षष्ठीसमर्थाद्वतिः। यदा तु स्त्र्यर्थवाची शब्दः स्त्रीशब्देनोच्यते तदा शब्दग्रहणम्, स्त्रियाः = स्त्रीलिङ्गस्य शब्दस्य पुंवद् रूपं भवतीति रूपातिदेशः; वृत्तिविषये पुंशब्दसम्बन्धिनः कार्यस्यातिदेष्टव्यस्याभावात्। तत्र च प्रत्यासत्तेः पुंभावभाजः स्त्रीशब्दस्य प्रयोगान्तरे पुमांसमाचक्षाणस्य यद्रूपं तदेवातिदिश्यते, न यस्य कस्यचित्।

'अनूङ्' इति षष्ठ्यर्थे प्रथमा, तत्रार्थग्रहणे स्त्रीशब्दो मुख्यः। अर्थस्य तूत्तरपदेन पौर्वापर्यमनूङः, तत्त्वं च स्वतोऽनुपपन्नमिति शब्दद्वारकमाश्रयणीयम्। इतरयोस्तु पक्षयोः स्त्रीशब्दो गौणः। पौर्वापर्यादिकं तु समञ्जसमिति न प्रमाणतः पक्षविशेषपरिग्रहः सम्भवतीति निर्दोषतः पक्षः परिग्राह्यः।

तत्राद्ये पक्षे एतभार्य इत्येतशब्दाद् 'वर्णादनुदात्तात्' इति ङीपि तकारस्य च नकारे एकदेशविकृतस्यानन्यत्वादेतशब्दाद्भाषितपुंस्कात्पर ईकार इति तन्निवृत्तावप्यर्थस्य स्त्रीत्वमनिवृत्तमिति नकारः श्रूयेत। न च सन्नियोगशिष्टत्वादीकारनिवृत्तौ नकारस्य निवृत्तिः; उत्तरपदनिमित्तायाः स्त्रीप्रत्ययनिवृत्तेर्नकारनिवृत्त्याख्ये पूर्वविधौ स्थानिवद्भावे सत्यन्यतराभावस्यासिद्धेः। न च नकारस्यापि अधिकारविहितत्वादीकारवत्पुंवद्भावेनैव निवृत्तिः; तस्य भाषितपुंस्कात्परत्वाभावात्, अप्रत्ययत्वेनोङ्सादृश्याभावाच्च। तथा पट्वी भार्यास्य पटुभार्य इति निवृत्तस्यापि स्त्रीप्रत्ययस्य स्थानिवद्भावाद्यणादेशः स्यात्।

अथ तूत्तरपदे परतोऽनूङ् स्त्रीप्रत्ययो भाषितपुंस्कान्न भवतीति 'न क्रोडादिबह्वचः' इतिवत् प्रागभाव एवात्र विधेयः, तत्सामर्थ्याच्च विग्रहवाक्य एव प्राप्तोऽन्तरङ्गोऽपि स्त्रीप्रत्ययो न क्रियते इत्युच्येत? तदैतद्दोषाभावेऽपि लुगलुगस्त्रीविषयद्विस्त्रीप्रत्ययेषु दोषः। लुक्— वतण्डस्यापत्यं स्त्री 'वतण्डाच्च लुक् स्त्रियाम्', शार्ङ्गरवादिपाठान्ङीन्, वतण्डी चासौ वृन्दारिका च वातण्ड्यवृन्दारिकेति 'पुंवत् कर्मधारय' इति ईकारस्य निवृत्तावपि अर्थगतस्य स्त्रीत्वस्यानिवृत्तत्वात् 'लुक् स्त्रियाम्' इति यञो लुक्प्राप्नोति। स्यादेतत्—स्त्री + ई स्त्रीति ईकारप्रश्लेषेण स्त्रियां य ईकारस्तत्र परतो लोपः, अत्र तु पुंवद्भावेनेकारस्यानुत्पन्नत्वाल्लुङ् न भविष्यतीति? तन्न, इतरेतराश्रयप्रसङ्गात्। कथम्? शार्ङ्गरवादिषु वतण्डशब्दः कृतयञ्लुक् पठ्यते, ततश्चाकृते लुकि ईकारो नास्ति, अकृते चेकारे लुकोऽप्रसङ्गः। अलुक्—गर्गस्यापत्यं स्त्रियः, 'गर्गादिभ्यो यञ्', 'यञश्च' इति ङीप्, गार्ग्यश्च ता वृन्दारिकाश्च गर्गवृन्दारिका इति ङीपि निवृत्तेऽपि स्त्रीत्वस्यानिवृत्तत्वाद् 'यञञोश्च' स्त्रियामिति लुग्न प्राप्नोति, वाक्यवदलुगेव स्यात्।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पदमञ्जरी

अस्त्रीविषयः—कुञ्जस्यापत्यं स्त्री 'गोत्रे कुञ्जादिभ्यश्च्फञ्', 'गोत्रं च चरणैः सह' इति जातित्वान् ङीष्, कौञ्जायनी चासौ वृन्दारिका च कौञ्जायनवृन्दारिकाः, ङीषि निवृत्तेऽपि स्त्रीत्वस्यानिवृत्तेः 'व्रातच्फञोरस्त्रियाम्' इत्यस्त्रीविषयो न स्यात्। द्विस्त्रीप्रत्ययः—गर्गस्यापत्यं स्त्री 'गर्गादिभ्यो यञ्', 'प्राचां ष्फ तद्धितः', षिल्लक्षणो ङीष्, गार्ग्यायणी चासौ वृन्दारिका च गार्ग्यवृन्दारिकेत्यादौ यत्र द्वौ स्त्रीप्रत्ययौ तत्र यो भाषितपुंस्कात्परः ष्फो नासावुत्तरपदे; ङीषा व्यवधानात्। यश्चोत्तरपदे ङीष् नासौ भाषितपुंस्कात्परः; ष्फेण व्यवधानात्, तस्य च स्त्रियामेव विहितत्वात् इति पुंवद्भाव एव न स्यात्। तथा इडविडोऽपत्यं स्त्री 'जनपदशब्दात्क्षत्त्रियादञ्', दरदोऽपत्यं स्त्री 'द्व्यञ्मगध' इत्यण्, तयोः 'अतश्च' इति लुक्— इडविडदरत्, स चासौ वृन्दारिका च ऐडविडवृन्दारिका—अत्र पुंवद्भावो न स्यात्; अधिकारविहितस्य कस्यचित्प्रत्ययस्याभावात्।

द्वितीये तु पक्षेऽर्थस्य पुमर्थत्वेऽतिदिष्टे तद्वाची शब्दः प्रवर्तत इति नैते दोषाः; किन्तु 'खित्यनव्ययस्य' इति ह्रस्वत्वस्यास्य पुंवद्भावस्य विप्रतिषेधो नोपपद्यते; भिन्नविषयत्वात्। अचो ह्रस्वत्वमर्थस्य पुंवद्भावः, ततः कालिम्मन्येत्यत्र 'विप्रतिषेधे परम्' इति ह्रस्वत्वमिष्टम्, तन्न प्राप्नोति। शब्दपक्षे तु द्वयोरप्येकविषयत्वाद्विप्रतिषेधोऽस्ति, पुंवद्भावस्यावकाशः, यत्र खिदन्तं नास्ति— दर्शनीयभार्यः; ह्रस्वत्वस्यावकाशो यत्र पुंवद्भावो नास्ति— कालिम्मन्यः पुमानिति; कालिम्मन्या स्त्रीत्यत्रोभयप्रसङ्गे परत्वाद् ह्रस्वत्वं भवति। न च कृतेऽपि ह्रस्वत्वे पुनःप्रसङ्गविज्ञानात्पुंवद्भावप्रसङ्गः; सकृद्गतिन्यायस्याश्रयणात्। न चार्थपक्षेऽप्यसत्यप्येकविषयत्वेऽसम्भवाद्विप्रतिषेधः, असम्भवादित्यस्यैवासिद्धेः। यद्यपि हि पुंवद्भावे सति स्त्रीप्रत्ययस्य निवृत्तौ दीर्घान्तत्वाभावाद् ह्रस्वस्याप्रवृत्तिः, तथापि ह्रस्वे प्रवृत्तेऽप्यर्थस्यानिवृत्तत्वात्पुंवद्भावः प्राप्नोत्येव।

न्यासः

इति प्रथमार्थे षष्ठी। कथं पुनः पुंवदित्यनेन स्त्रीप्रत्ययस्य निवृत्तिः शक्यते विज्ञातुम्? भवतीति वाक्यशेषाध्याहारात्। अत्र च पक्षे पट्वी भार्याऽस्येति पटुभार्य इत्यत्र स्त्रीप्रत्ययनिवृत्तेरुत्तरपदनिमित्तायाः पूर्वस्मिन् यणादेशे विधातव्ये सति 'अचः परस्मिन् पूर्वविधौ' इति स्थानिवद्भावे सति यणादेशः स्यात्। इह च—गार्ग्यो वृन्दारिका गर्गवृन्दारिका इत्यत्र 'तद्राजस्य बहुषु तेनैवास्त्रियाम्' इत्यनुवर्त्तमाने 'यञञोश्च' इति यञो लुग् न प्राप्नोति। पुंवद्भावेन हि स्त्रीप्रत्ययस्य निवृत्तिः क्रियते, न त्वर्थस्य स्त्रीत्वस्य; ततश्चार्थस्यानिवर्तितत्वात् केन पुनर्यञ्न श्रूयेत—इत्येवमादयः प्रत्ययपक्षे दोषा भाष्ये विस्तरेणोक्ताः। इह चातिग्रन्थविस्तरभयान्नोच्यन्ते।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



भाषितः पुमान्येन समानायामाकृतावेकस्मिन्प्रवृत्तिनिमित्ते स भाषितपुंस्कः शब्दः। तदेतदेवं कथं भवति ? भाषितः पुमान्

पदमञ्जरी

तदेवमाद्ययोर्दुष्टत्वात्तृतीयं पक्षमाश्रित्याह—*भाषितः पुमान्येनेत्यादि* । भाषितः पुमान्येन शब्देनेति शब्देऽन्यपदार्थे बहुव्रीहिराश्रीयते, ततः स्त्रियां पुंसि च वर्तमानस्य यस्य प्रवृत्तिनिमित्तं भिद्यते, तस्यापि प्राप्नोति—द्रोणीभार्यः, पात्रीभार्य इति। द्रोणशब्दः परिमाणे पुंल्लिङ्गः, पात्रशब्दोऽर्द्धर्चादित्वात्परिमाणे पुंल्लिङ्गः, भाजनविशेषे तु स्त्रीलिङ्गः, सर्वत्राप्यत्र प्रवृत्तिनिमित्तभेदेऽपि य एव प्रयोगान्तरे पुमांसमाख्यत्, स एव सम्प्रति स्त्रियां वर्तत इति स्यादेव पुंवद्भाव इति मत्वा विशिनष्टि—*समानायामाकृताविति* । भाष्यग्रन्थोऽयम्, अतो व्याचष्टे—*एकस्मिन्प्रवृत्तिनिमित्त इति* । स भाषितपुंस्कः शब्दः, अयं तावदर्थो विवक्षित इत्यर्थः। यथा पुनरयमर्थः सूत्राक्षरैरेव लभ्यते, तथा पृच्छति—*तदेतदेवमित्यादि* । तदेतदर्थरूपम् एवम्प्रकारं कथं भवतीत्यर्थः। प्रवृत्तिनिमित्तलक्षणेऽन्यपदार्थे सप्तम्यर्थे बहुव्रीहिरित्युत्तरम्। एतदुक्तं भवति—यस्मिन्प्रवृत्तिनिमित्ते पुमान् भाषितः पुमांसमाचक्षाणस्य यत्प्रवृत्तिनिमित्तं तेन युक्तं स्त्र्यर्थमाचक्षाणो भाषितपुंस्क इति।

न्यासः

अर्थपक्षे तूत्तरपदे परतो भाषितपुंस्कस्यानूङ्प्रत्ययान्तस्य स्त्रीशब्दस्य योऽर्थस्तस्य पुमर्थोऽतिदिश्यते। भाषितपुंस्कादिति पञ्चमी षष्ठ्यर्थे - स्त्र्यर्थः पुंवद्भवतीति ! पुमर्थे चातिदिष्टे तद्वचनः शब्दः प्रवर्त्तते। अत्र पक्षे 'खित्यनव्ययस्य' इति ह्रस्वत्वस्यास्य च पुंवद्भावस्य विप्रतिषेधो न प्राप्नोति; भिन्नविषयत्वात्। तथा हि— शब्दस्य ह्रस्वत्वम्, अर्थस्य पुंवद्भावः; ततश्च कालिम्मन्येत्यत्र 'विप्रतिषेधे परं कार्यम्' इति ह्रस्वत्वं न प्राप्नोति, इष्यते च विप्रतिषेधः। तथा हि—पुंवद्भावस्यावकाशो यत्र खिदन्तमुत्तरपदं नास्ति—दर्शनीयभार्य इति, ह्रस्वस्यावकाशो यत्र पुंवद्भावो नास्ति—कालिम्मन्यः पुमानिति; कालिम्मन्या स्त्रीत्यत्रोभयं प्राप्नोति, तत्र परत्वाद् ह्रस्वत्वं भवति। तदेवमाद्ययोः पक्षयोर्दोषवत्तां मन्यमानस्तृतीयं पक्षमाश्रित्याह—भाषितः पुमान् येनेत्यादि। यो ह्यविशेषेण क्वचिद् भाषितपुंस्कः शब्दः स इहाश्रीयेत, तदा द्रोणीभार्य इत्यत्रापि पुंवद्भावः स्यादिति मनसि कृत्वाऽऽह—समानायामाकृतावित्यादि। एकस्मिन् प्रवृत्तिनिमित्ते इति। अनेन समानायामाकृतावित्यस्यार्थं विस्पष्टीकरोति। आक्रियते = गृह्यते, परिच्छिद्यते येनार्थस्तत् शब्दस्य प्रवृत्तिनिमित्तं जात्यादिकमिहाकृतिशब्देनोच्यते।

'भाषितपुंस्कात्' इत्येतावत्युक्ते 'समानायामाकृतौ' इत्येष विशेषो न शक्यो लब्धुमित्यभिप्रायेणाह—तदेतदेवमित्यादि। तदिति वाक्योपन्यासे। एतस्य वचनस्यार्थ-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पदमञ्जरी

नन्वेवमपि द्रोणीभार्य इत्यादौ दोषः स्यादेव, कथम्? यस्यां गवादन्यां द्रोणीशब्दो वर्तते, सोऽपि यदा अर्थ इत्युच्यते तदा भाषितपुंस्केन प्रवृत्तिनिमित्तेन युज्यते, तत्र चार्थं शब्दप्रवृत्तिनिमित्तमप्यध्यमानत्वाद् गवादन्यां सन्निहितमिति तत्र वर्तमानो द्रोणीशब्दः स्वयं तत्प्रवृत्तिनिमित्तमनभिदधानोऽपि वस्तुतस्तद्युक्तमर्थमाह? नैतदस्ति; एवं हि भाषितपुंस्कग्रहणमनर्थकं स्यात्; सर्वत्र सुलभत्वात्। अतो यः शब्दो भाषितपुंस्केन प्रवृत्तिनिमित्तेन युक्तं स्वार्थं तेनैव रूपेणाह, न रूपान्तरेण, स भाषितपुंस्को गृह्यते। द्रोणीशब्दस्तु द्रोणीत्वजातियुक्तेन रूपेण गवादन्यां वर्तते, नाध्यमानतया।

एवमपि द्यौर्भार्या यस्य द्युभार्य इत्यत्र दिव्शब्दस्य स्त्रीलिङ्गस्य स्वर्ग इति पुंल्लिङ्गः प्राप्नोति, येनैव रूपेण स्वर्गशब्देनोच्यते, तेनैव रूपेण दिव्शब्देनापीति कृत्वा? एवं तर्हि प्रत्यासत्तेर्यस्य पुंवद्भावो विधीयते, तेनैव यत्र पुमान् भाषित इति विज्ञायते, आत्मनः प्रयोगान्तरे पुमांसमाचक्षाणस्य यत्प्रवृत्तिनिमित्तं तद्युक्तं स्त्र्यर्थम्, सम्प्रत्याचक्षाणस्य स्त्रीशब्दस्य पुम्भाषणदशायां यद्रूपं तदेवाद्यापि भवतीत्यर्थः। आतिदेशिकभेदाच्च पुंवदिति वतिनिर्देशः।

अनूङिति पर्युदासे सति नञिवयुक्तन्यायेन ऊङ्सदृशस्य टाबादेर्ग्रहणादैडविडवृन्दारिकेत्यादौ स्त्रीप्रत्ययाभावान्न स्यादिति प्रसज्यप्रतिषेधं दर्शयति—

न्यासः

रूपमेवम्प्रकारम्। कथं भवति? नैवं कथञ्चिदित्यर्थः। यदि भाषितपुंस्कशब्दस्य बहुव्रीहेः शब्दोऽन्यपदार्थत्वेनाश्रीयेत—भाषितः पुमान् येन शब्देन स भाषितपुंस्कः शब्द इति, तदा समानायामाकृतावित्येष विशेषो न लभ्यते, सर्व एव हि शब्दः क्वचिदाकृतौ पुमांसं भाषित्वाऽऽकृत्यन्तरे स्त्रियं भाषत इति कृत्वा। अर्थे त्वन्यपदार्थत्वेनाश्रीयमाणे लभ्यत एव इत्येष विशेष इत्यालोच्याह—भाषितः पुमान् यस्मिन्नर्थं इत्यादि। शब्दस्य यत् प्रवृत्तिनिमित्तं जात्यादिकं तदन्यपदार्थः। केन पुनः शब्देन तत्र भाषितः पुमान्? प्रत्यासत्तेर्यत् तस्य प्रवृत्तिनिमित्तं तेनैवेति विज्ञायते; अन्यथा हि भाषितपुंस्कग्रहणमनर्थकं स्यात्, व्यवच्छेद्याभावात्। सर्वत्रैवाभिधेयेऽर्थे येन केनचित् शब्देन पुमान् भाष्यते। अन्ततोऽर्थशब्देनापि तस्यार्थस्य भाषितपुंस्कस्य यः प्रतिपादकः शब्दः सोऽप्यभिधेयधर्मस्याभिधान उपचाराद् भाषितपुंस्क इत्युच्यते। स पुनः प्रत्यासत्तेर्यस्य योऽर्थः प्रवृत्तिनिमित्तं तत्र येन पुमान् भाषित इति स एव वेदितव्यः। यश्च भाषितपुंस्कस्य प्रवृत्तिनिमित्तस्य वाचकः स नियोगत एकस्मिन् प्रवृत्तिनिमित्ते पुमांसं भाषित्वा स्त्रियं भाषते। यथा मूलोदाहरणेषु—दर्शनीयादयः शब्दा इति, सामर्थ्याद् येन शब्देन समानायामाकृतौ पुमान् भाषित इत्येष विशेषो लभ्यते।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



यस्मिन्नर्थे प्रवृत्तिनिमित्ते स भाषितपुंस्कशब्देनोच्यते, तस्य प्रतिपादको यः शब्दः सोऽपि भाषितपुंस्कः। ऊङोऽभावः अनूङ्, भाषितपुंस्कादनूङ्

पदमञ्जरी

*ऊङोऽभावोऽनूङिति* । *भाषितपुंस्कादनूङिति* । यद्ययमसमासः स्यात्– अनूङिति, तदा प्रथमा स्यात्, लुप्तषष्ठीकं वा । षष्ठीपक्षेऽयमर्थो भवति–भाषितपुंस्कात्परस्य स्त्रीशब्दस्येव रूपं भवति, ऊङन्तस्य तु नेति । ततश्च पुंवद्भावभाजः स्त्रीशब्दस्य भाषितपुंस्कत्वं विशेषणं न स्यात्, तत्र को दोषः ? इह च प्रसज्येत—अङ्गारका नाम शकुनयः तेषां कालिकाः स्त्रियः तत एताः कालिकावृन्दारिका इति । एतच्छब्दाद्भाषितपुंस्कात्परः कालिकाशब्द इति तस्य स्त्रीविषयस्याप्यङ्गारकशब्दता स्यात् । शक्यन्ते हि ताः साहचर्यादङ्गारकशब्देनाभिधातुम् । तथा— अश्वस्य वडवा, पुरुषस्य योषित्, हंसस्य वरटा, कच्छपस्य डुलीत्यादावपि प्रसङ्गः । दर्शनीयभार्य इत्यादौ च न स्यात्, न ह्यत्र दर्शनीयशब्दो भाषितपुंस्कात्परः । प्रथमायां तु भाषितपुंस्कादित्यनेन सामानाधिकरण्यात्स्त्रिया इति पञ्चमी; षष्ठ्यां कस्यचिदर्थस्यासम्भवात् । ततश्च भाषितपुंस्कात् स्त्रीलिङ्गात्पर ऊङोऽन्यः प्रत्ययः पुंवदित्यर्थो भवति, तत्र स एव दोषो यः प्रथमपक्षे । तदेवं समासे

न्यासः

'अनूङ्' इति यद्ययं पर्युदासः स्यात्, ऊङोऽन्योऽनूङिति—ततो नञिवयुक्तन्यायेन तत्सदृशानां टाबादीनां प्रत्ययानां ग्रहणे सति तदन्तस्यैव पुंवद्भावः स्यात्, ऐडविडवृन्दारिका, दारदवृन्दारिकेत्यत्र न स्यात् । इडविडोऽपत्यं स्त्रीति 'जनपदशब्दात् क्षत्रियादञ्' इत्यञ्प्रत्ययः, दरदोऽपत्यमिति 'द्व्यञ्मगध' इत्यादिनाण्, तयोः 'अतश्च' इति लुक्, तत इडविट् चासौ वृन्दारिका चेति, दरच्चासौ वृन्दारिका चेति 'वृन्दारकनागकुञ्जरैः' इति समासः, तत्रेदानीम् 'पुंवत्कर्मधारय' इत्यादिना पुंवद्भावो न प्राप्नोति; ऊङ्सदृशप्रत्ययान्तराभावात्, ततश्चेडविट्शब्दस्यैडविडशब्दो दरच्छब्दस्य दारदशब्दो न स्यात् । प्रसज्यप्रतिषेधे सति तु भवति; अत्राप्यूङभावस्य भावादित्यालोच्य प्रसज्यप्रतिषेधोऽयमिति दर्शयन्नाह—ऊङोऽभावोऽनूङिति ।

भाषितपुंस्कादनूङिति । यद्ययमसमासः स्यान् न बहुव्रीहिः, तदायमर्थः स्यात्— भाषितपुंस्कादुत्तरस्याविद्यमानोङः स्त्र्यर्थवृत्तेः शब्दस्योत्तरपदे परतः पुंवद्भवतीति । एवञ्च सति यथाभूतार्थवाची स्त्रीशब्दस्तथाभूतार्थवाच्येव पुंशब्दस्यादेशो भवतीति सामर्थ्यादुक्तं भवति, ततश्चानिष्टप्रसङ्गः—अङ्गारका नाम शकुनयः, तेषां कालिका नाम स्त्रियः, तत एताश्च कालिकावृन्दारिकाश्चेति समासे कृते सत्येतच्छब्दो भाषितपुंस्क इति, तस्मादुत्तरस्य कालिकाशब्दस्यानूङोऽर्थतोऽन्तरतमोऽङ्गारकशब्दः पुंशब्दादेशः प्रसज्येत; अन्यस्यान्तरतमस्याभावात् । ततश्चैतदङ्गारकवृन्दारिका इति हि स्यात्, एतत्कालिका-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



**यस्मिन् स्त्रीशब्दे स भाषितपुंस्कादनूङ् स्त्रीशब्दः । बहुव्रीहिरयम् , अलुग् निपातनात् पञ्चम्याः । तस्य भाषितपुंस्कादनूङः स्त्रीशब्दस्य पुंशब्दस्येव रूपं भवति समानाधिकरणे उत्तरपदे स्त्रीलिङ्गे पूरणीप्रियादिवर्जिते । दर्शनीयभार्यः । श्लक्ष्णचूडः । दीर्घजङ्घः ।**

पदमञ्जरी

दोषप्रसङ्गाद्व्यधिकारणपदो बहुव्रीहिराश्रयणीय इत्याह—*भाषितपुंस्कादनूङि-त्यादि* । *अलुक्च निपातनात्पञ्चम्या इति* । अलौकिकत्वादस्य निपातनादित्यपरिहारः । लुगपि तर्हि न प्राप्नोति ? अलौकिकत्वादेवेति यत्किञ्चिदेतत् । 'अनूङ्' इति षष्ठ्यर्थे प्रथमा, तदायमर्थोऽवस्थितः— भाषितपुस्कात्स्वस्मादूङोऽभावो यस्मिन् । कोऽर्थः ? यस्मिन् स्त्रीशब्दे भाषिपुंस्कात्पर उङ् न कृत इत्यर्थ इति । अपर आह—भाषितपुंस्कादिति षष्ठ्यर्थे पञ्चमी, सर्वमन्यत्पूर्ववत् । भाषित-पुंस्कस्य स्त्रीशब्दस्य पुंशब्दस्येव रूपं भवति, ऊङन्तस्य तु नेति ।

नन्वेवमाश्रीयमाणे यत्र भाषितपुस्कस्यैवानन्तरमुत्तरपदं तत्रैव स्यात्—दर्शनीयभार्य इत्यादौ, अत्र हि भाषितपुंस्कस्य दर्शनीयशब्दस्य टापश्चैकादेशः पूर्वं प्रत्यन्तवद्भावाद्भाषितपुंस्कग्रहणेन गृह्यते; गार्गी चासौ वृन्दारिका च गार्ग्यवृन्दारिकेत्यादौ न स्यात् , योऽत्र भाषितपुंस्को गार्ग्यशब्दो न तस्यानन्तर-मुत्तरपदम्; ङीपा व्यवधानात् । यस्य चानन्तरं गार्गीशब्दस्य नासौ भाषित-पुंस्कः ? स्यादेतदेवम् , प्रयोगान्तरे भाषितपुंस्कस्य सम्प्रति स्त्रियां वर्तमानस्य

न्यासः

वृन्दारिका इतीष्यते । बहुव्रीहौ तु सत्यनिष्टप्रसङ्गो न भवति, तत्र हि भाषितपुंस्कस्य शब्दस्यानूङः पुंवद्भावेन भवितव्यम् , न च कालिकाशब्दो भाषितपुंस्कः—इत्येतत्सर्वमालोच्य बहुव्रीहिरयमिति दर्शयन्नाह—भाषितपुंस्कादनूङ् यस्मिन् स्त्रीशब्द इति । यदि बहुव्रीहिरयमिति । एवं सति 'सुपो धातुप्रातिपदिकयोः' इति पञ्चम्या लुक् प्राप्नोति ? अत आह – अलुग् निपातनादित्यादि । ननु चालौकिकत्वादस्य वाक्यस्य निपातनादित्ययमपरीहारः, निपातनं हि लौकिकं भवति, तर्ह्येवं लुकाप्यत्र न भाव्यम् ? अथ लुग् भविष्यतीत्येवावसीयतेऽलुगपि भवतीत्यवसीयताम् ।

दर्शनीयभार्य इति । दर्शनीया भार्यास्येति बहुव्रीहिः । 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वत्वमुत्तरपदस्य । दर्शनीयत्वं नामात्र सामान्ये विशेषो दर्शनीयशब्दस्य प्रवृत्ति-निमित्तम् । तमेकमेवार्थमुपादायासौ पुंसि स्त्रियाञ्च वर्तते-—दर्शनीयो देवदत्तः, दर्शनीया भार्येति । तस्मात् समानायामाकृतौ दर्शनीयशब्दो भाषितपुंस्को भवति, स्त्रियाञ्च वर्तते, न चास्मादूङ् । अतो भार्याशब्दे स्त्रीलिङ्गे उत्तरपदेऽस्य स्त्रीशब्दस्य पुंशब्दस्यस्यैव रूपं भवति । एवं श्लक्ष्णचूड इत्यादावपि योजनीयम् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



स्त्रिया इति किम् ? ग्रामणि ब्राह्मणकुलं दृष्टिरस्य ग्रामणिदृष्टिः। भाषितपुंस्कादिति किम् ? खट्वाभार्यः। समानायामाकृताविति किम् ? द्रोणीभार्यः।

कथं गर्भिभार्यः, प्रसूतभार्यः, प्रजातभार्यं इति ? कर्तव्योऽत्र यत्नः।

पदमञ्जरी

पुंवद्भाव उच्येत। स्त्रियां वर्तमानस्य तदैव भाषितपुंस्कस्य पुंवद्भावं ब्रूमः, सम्भवति च स्त्रियां वर्तमानस्य तदैव भाषितपुंस्कत्वं भाषितपुंस्केन प्रवृत्ति-निमित्तेन युक्तां स्त्रियमाहेति कृत्वा। एवं च स्त्रीशब्दस्यैवान्तर उत्तरपदे पुंवद्भाव इति सर्वत्र सिध्यति।

*ग्रामणि दृष्टिरस्येति*। अत्र ग्रामणिशब्दोऽपरित्यक्तस्वलिङ्ग एव दृष्टिशब्देन समानाधिकरणो भवति। अत्र यदि पुंवद्भावः स्यान्नपुंसकह्रस्वत्वं निवर्तेत।

*कथमित्यादि*। अनवयवभूतगर्भसम्बन्धः स्त्रियां गर्भिणीशब्दस्य प्रवृत्ति-निमित्तम्, पुंसि त्ववयवभूतगर्भसम्बन्धः। प्रसूत-प्रजातशब्दयोरपि स्त्रियां गर्भमोचननिमित्तम्, पुंसि तु गर्भाधानम्। *कर्तव्योऽत्र यत्न इति*। अन्तर्वर्तिवस्तु-सम्बन्धमात्रं गर्भिणीशब्दस्य प्रवृत्तिनिमित्तमवयवत्वानवयवत्वेन तन्त्रम्। एवं प्रसूतप्रजातशब्दयोरपि आधानविमोचनत्यागेनापत्यसम्बन्धमात्रं निमित्तमा-श्रीयत इत्ययमत्र यत्नः।

न्यासः

ग्रामणिदृष्टिरिति। अत्र सर्वमस्ति, न तु ग्रामणीशब्दः स्त्रियां वर्तते, किं तर्हि ? नपुंसक इति न भवति पुंवद्भावः। द्रोणीभार्य इति। द्रोणशब्देन भाषितः पुमान्, न तु समाने प्रवृत्तिनिमित्ते। यस्मात् परिमाणविशेषं प्रवृत्तिनिमित्तमुपादाय पुंसि परि-माणिनि वर्तते। जातिविशेषं तूपादाय स्त्रियां गवादन्या वर्तते। यत्र गावोऽदन्ति सा गवादनी द्रोणीशब्देनोच्यते। तस्मान्न द्रोणशब्दः समानायामाकृतौ भाषितपुंस्कः।

कथमित्यादि। यदि समानायामाकृतौ यो भाषितपुंस्कस्तस्य पुंवद्भाव उच्यत एवं च गर्भिभार्य इत्यादौ पुंवद्भावो न प्राप्नोति। गर्भप्रभृतीनां शब्दानां भिन्नाया-माकृतौ भाषितपुंस्कत्वादित्यभिप्रायः। अनवयवभूतान्तर्वर्तिवस्तुविशेषसम्बन्धे हि सति स्त्री गर्भिणीत्युच्यते। व्रीहिस्त्वन्तर्वर्त्यवयववस्तुविशेषसम्बन्धे सति गर्भीत्युच्यते। तस्मात् पुंसि स्त्रियाञ्च वर्तमानस्य गर्भिशब्दस्य प्रवृत्तिनिमित्तं भिद्यते। प्रसूतप्रजातशब्दयोरपि प्रवृत्तिनिमित्तम्, क्रियाकृतिर्भिन्ना। स्त्रियां हि वर्तमानौ तौ गर्भविमोक्षणं प्रवृत्ति-निमित्तमुपादाय वर्तेते, पुंसि तु गर्भाधानम्। कर्तव्योऽत्र प्रयत्न इति। केचिद्व्या-चक्षते—उपसंख्यानं कर्तव्यमिति। अपरे पुनराहुः—स्त्रियाः पुंवदिति योगविभागः



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अनूङ इति किम् ? ब्रह्मबन्धूभार्यः। समानाधिकरण इति किम् ? कल्याण्या माता कल्याणीमाता। स्त्रियामिति किम् ? कल्याणी प्रधानमेषां कल्याणीप्रधाना इमे। अपूरणीति किम् ? कल्याणी पञ्चमी यासां ताः कल्याणीपञ्चमा रात्रयः। कल्याणीदशमाः।

प्रधानपूरणीग्रहणं कर्तव्यम्, इह मा भूत्—कल्याणपञ्चमीकः पक्ष

पदमञ्जरी

*ब्रह्मबन्धूभार्य इति*। ऊङो निवृत्तिर्न भवति। 'न कोपधायाः' इत्यत्रैवोङ्ग्रहणे कर्तव्ये पृथक्प्रतिषेधादस्य वैलक्षण्यं ज्ञायते। तेन ब्रह्मबन्धूवृन्दारिकेति 'पुंवत्कर्मधारय' इति निषेधविषये विधीयमानोऽपि पुंवद्भावो न भवति। एष चार्थोऽनूङित्यस्य तत्रानुवृत्तेर्लभ्यते। अपूरणीप्रियादिष्वित्ययं तु प्रतिषेधस्तत्रैव कर्तव्यः, न ह्यस्य 'पुंवत्कर्मधारय' इत्यत्रानुवृत्तिरिष्यते; महानवमी, महाद्वादशी, अक्षयतृतीया, कृष्णचतुर्दशीत्यादौ पूरण्यामपि कर्मधारये पुंवद्भावस्येष्टत्वात्।

*प्रधानपूरणीग्रहणं कर्तव्यमिति*। प्रधानं या पूरणी तस्यामेव प्रतिषेधो भवतीति वक्तव्यमित्यर्थः। एतच्च प्रधाने कार्यसम्प्रत्ययाल्लभ्यते। *कल्याणपञ्चमीकः पक्ष इति*। अत्र तिरोहितावयवभेदः पक्षोऽन्यपदार्थ इति तत्र पूरण्या अननुप्रवेशान्नास्ति प्राधान्यम्, कल्याणपञ्चमा रात्रय इत्यादावुद्भूतावयवभेदा रात्रयोऽन्यपदार्थः, तत्र यथा प्रथमाद्या रात्रयः समासाभिधेया, एवं पञ्चम्यपीति पूरण्याः प्राधान्यम्।

न्यासः

कर्तव्यः। अथ वा—'कर्तव्योऽत्र यत्नः' इत्यनेनेदं दर्शयति यद्यपि स्त्रियां व्रीहौ च गर्भत्वभेदः, स्तथापि स नाश्रयितव्यः। यत् तु तत्रावयवानवयवभेदमुत्सृज्य सामान्येनान्ववर्तिवस्तुविशेषसम्बन्धमात्रं तदेवाश्रयितव्यम्। अतस्तदपेक्षया स्त्रियां व्रीहौ च वर्तमानस्य गर्भिशब्दस्य तुल्यमेव प्रवृत्तिनिमित्तमिति। एवं प्रसूतप्रजातशब्दयोरप्यपत्याधानविमोक्षणभेदं त्यक्त्वाऽयमपत्यवानियमपत्यवतीत्यपत्यवत्सम्बन्धमात्रमाश्रितमित्येतद्व्याख्यानमिति प्रयत्नः कर्तव्य इति।

ब्रह्मबन्धूभार्य इति। ब्रह्मबन्धूशब्दाद् 'ऊङुतः' इत्यूङ्। कल्याणीपञ्चमा इति। 'अप् पूरणीप्रमाण्योः' इत्यप्समासान्तः, पञ्चानां पूरणीति डट्, तस्य 'नान्तादसंख्यादेर्मट्', ततः 'टिड्ढाणञ्' इति ङीपि कृते पञ्चमी भवति।

प्रधानपूरणीग्रहणं कर्तव्यमिति। प्रधानं पूरणी गृह्यते येन व्याख्यानेन तद्व्याख्यानं प्रधानपूरणीग्रहणम्, तत् कर्तव्यम्—प्रधानं या पूरणी तस्यां प्रतिषेधो यथा

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



इति । 'अप् पूरणीप्रमाण्योः' इत्यत्रापि प्रधानपूरणीग्रहणमेवेत्यप्प्रत्ययो न भवति । अप्रियादिष्विति किम् ? कल्याणीप्रियः ।

प्रिया । मनोज्ञा । कल्याणी । सुभगा । दुर्भगा । भक्तिः । सचिवा । अम्बा । कान्ता । क्षान्ता । समा । चपला । दुहिता । वामा । प्रियादिः । दृढभक्तिरित्येवमादिषु स्त्रीपूर्वपदस्याविवक्षितत्वात् सिद्धमिति समाधेयम् । ॥

पदमञ्जरी

अथ दृढभक्तिः, शोभनभक्तिरित्यत्र कथं पुंवद्भावः, यावता प्रियादिषु भक्तिशब्दः पठ्यते ? अत आह— *दृढभक्तिरित्येवमादिष्विति* । स्त्रीवाचित्वं पूर्वपदस्याविवक्षितम्, अतो दृढभक्तिरित्येवमादिर्सिद्धिरित्येवं चोद्यसमाधानं कर्तव्यमित्यर्थः । दृढशब्दोऽत्र दार्ढ्यनिवृत्तिपरः, तत्र दार्ढ्यनिवृत्तिपरायां चोदनायां स्त्रीलिङ्गोपादानमकिञ्चित्करमिति भावः । न चैवं सूत्रस्यानादरणीयत्वम्; लिङ्गविशेषविवक्षायां दर्शनीयभार्य इत्याद्यनिष्टप्रसङ्गात् । अथेह कथं भवितव्यम्—पट्वीमृद्व्यौ भार्ये अस्येति, पट्वीमृदुभार्य इति भवितव्यम् ? यस्योत्तरपदमनन्तरं तस्य पुंवद्भावो नेतरस्येति ॥

न्यासः

स्यात्, अप्रधानभूतायां तस्यां मा भूदिति । तत्रेदं व्याख्यानम्— इह 'द्वन्द्वे घि' इति प्रियादिशब्दस्य पूर्वनिपाते प्राप्ते परनिपातलक्षणव्यभिचारचिह्नेन सूचितं व्यभिचार्ययं प्रतिषेधः क्वचिदेव वर्तते, न सर्वत्रेति । तेन यत्रैव प्रधानभूता पूरणी तत्रैव भवति, नान्यत्रेति । तेन यत्रासौ भवति तत्र तस्या एव प्रधानभूताया पूरण्या ग्रहणं युक्तम् । क्व पूरण्याः प्राधान्यम् ? यत्र तस्याः समासेऽभिधेयत्वेनान्तर्भावः यथानन्तरोक्तप्रत्युदाहरणे । तत्र ह्यवयवेन विग्रहः । समुदायस्त्ववयवभेदादभिन्नः, समासार्थ एव । तत्रेति । यथैवं प्रथमा, द्वितीया, तृतीया चतुर्थी चाभिधीयते, तथा पञ्चम्यपि । कल्याणपञ्चमीकः पक्ष इति । अत्र तु तिरोहितावयभेदः पक्ष एवान्यपदार्थः प्रधानम्, पञ्चमी तु रात्रिः । अस्मिन् पक्षेऽन्यपदार्थेऽनुमेयैव, न त्वभिधेया । यथा वृक्षशब्दे मूलादयः, ततस्तद्दर्थमप्यनभिधेयत्वादर्थोऽप्रधानम् । अथाप् समासान्तः कस्मान्न भवति ? इत्याह अप्पूरणीप्रमाण्योरित्यादि ।

अथ दृढभक्तिः, शोभनभक्तिरित्यादौ कथं पुंवद्भावः, यावता प्रियादित्वात् प्रतिषेधेन भवितव्यम् ? इत्याह— दृढभक्तिरित्येवमादिष्वित्यादि । अस्त्रीवाचिनः पूर्वपदस्य विवक्षितत्वाद् दृढभक्तिरित्येवमादि लक्ष्यं सिद्धमित्येवं समाधेयम् । द्वेष्यं परिहर्त्तव्यमित्यर्थः । दृढशब्दोऽत्रादार्ढ्यनिवृत्तिपरः प्रयुक्तः । अत्रादार्ढ्यनिवृत्तिपरायां चोदनायां

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## तसिलादिष्वाकृत्वसुचः ॥ ३५ ॥

'पञ्चम्यास्तसिल्' इत्यतः प्रभृति 'सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' इति प्रागेतस्माद् ये प्रत्ययास्तेषु भाषितपुंस्कादनूङ्स्त्रियाः पुंवद्भवति । तस्याः शालायाः ततः । तस्यां तत्र । यस्या यतः । यस्यां यत्र ।

तसिलादिषु परिगणनं कर्तव्यम्—त्रतसौ । तरप्तमपौ । चरट्-

पदमञ्जरी

*तसिलादिष्वाकृत्वसुचः* ॥ अनुत्तरपदार्थमारम्भः । *ततस्तत्रेति* । 'प्राग्दिशो विभक्तिः' इति विभक्तित्वात्त्यदाद्यत्वम्, टाप्, अनेन पुंवद्भावः ।

इह केचित्तसिलादिषु पठ्यन्ते, येषु पुंवद्भावो नेष्यते, केचिच्चान्यत्र पठ्यन्ते, येषु पुंवद्भाव इष्यते, तस्मादाह—*परिगणनमिति* । त्रतसोरुदाहृतम् ।

न्यासः

लिङ्गविशेषोपादानमनुपकारकमेवेति । अतः स्त्रीत्वमिह न विवक्षितम् । तस्मादस्त्रीलिङ्गस्य दृढशब्दस्यायं प्रयोग इत्यभिप्रायः ॥

तसिलादिष्वाकृत्वसुचः ॥ अनुत्तरपदार्थोऽयमारम्भः । तत इति । 'पञ्चम्यास्तसिल्' । तस्य 'प्राग्दिशो विभक्तिः' इति विभक्तिसंज्ञकत्वात् त्यदाद्यत्वम्, टाप्, अनेन पुंवद्भावः । तत्रेति । 'सप्तम्यास्त्रल्' । शेषं पूर्ववत् ।

तसिलादिष्वित्यादि । 'तसिलादिष्वाकृत्वसुचः' इत्युच्यमाने तसिलादिष्वनन्तर्भूतेष्वपि क्वचित् पुंवद्भाव इष्यते, स न प्राप्नोति । तत्रान्तर्भूतेऽपि क्वचिन्नेष्यते, एवं सत्यनिष्टमपि प्राप्नोति । तस्मात् परिगणनं कर्त्तव्यम् । तत्र ततसोरुदाहरणमुक्तम् । शेषाणां तूच्यते—इयं पट्वी, इयं पट्वी, इयमनयोरतिशयेन पट्वी—'द्विवचन' इत्यादिना तरप्—पटुतरा । इयमासामतिशयेन पट्वी—'अतिशायने' इत्यादिना तमप्—पटुतमा । पट्वी भूतपूर्वा—'भूतपूर्वे चरट्', ङीप्, पटुचरी । पट्वीप्रकारा—'प्रकारवचने जातीयर्'—पटुजातीया । ईषदसमाप्ता पट्वी—'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' पटुकल्पा, पटुदेश्या, पटुदेशीया । प्रशस्ता पट्वी—'प्रशंसायां रूपप्'—पटुरूपा । याप्या पट्वी—'याप्ये पाशप्'पटु-पाशा । अजायै हिता—'अजाविभ्यां थ्यन्'—अजथ्या । थ्यंस्तसिलादिभ्यः पूर्वं पठ्यते । सर्वप्रकारैः सर्वथा, 'प्रकारवचने थाल्' । तस्यां रात्रौ तदा—'सर्वैकान्यकिंयत्तदः काले दा' । अस्यां रात्रौ एतर्हि—'इदमोर्हिल्' । तत्रेदमः 'एतेतौ रथोः' इत्येतादेशः प्रशस्ता वृको वृकतिः । प्रशस्ता ज्येष्ठा ज्येष्ठतातिः—'वृकज्येष्ठाभ्यां तिल्तातिलौ च च्छन्दसि' इति तिल्तातिलौ । एतौ च कृत्वसुचः परौ पठ्येते ।

तसिलादिषु परिगणनं कर्त्तव्यमिति भाष्यकारस्य मतमेतत्, न तु सूत्रकारस्य ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



जातीयरौ । कल्पब्देश्यदेशीयरः । रूपप्पाशपौ । थम्थालौ । दार्हिलौ । तिल्तातिलौ ।

* शसि बह्वल्पार्थस्य पुंवद्भावो वक्तव्यः * । बह्वीभ्यो देहि । अल्पाभ्यो देहि । बहुशो देहि । अल्पशो देहि ।

* त्वतलोर्गुणवचनस्य पुंवद्भावो वक्तव्यः * । पट्व्या भावः पटुत्वम् । पटुता । गुणवचनस्येति किम् ? कठ्या भावः कठीत्वम्, कठीता ।

पदमञ्जरी

तरप्तमपोः— दर्शनीयतरा, दर्शनीयतमा । चरट्जातीयरोः— पटुचरी, पटुजातीया । कल्पदेशीयरोः— दर्शनीयकल्पा, दर्शनीयदेशीया । देश्यप्रत्ययस्य नास्ति पाठः । रूपप्पाशपोः— दर्शनीयरूपा, पटुपाशा । थम्थालोः— 'इदमस्थमुः', 'किमश्च' इति विहितस्थमुः, 'प्रकारवचने थाल्'; अनया प्रकृत्या इत्थम्, कया प्रकृत्या कथम्, तया तथा । दार्हिलोः— तस्यां वेलायां तदा, तर्हि । तिल्थ्यनोः— 'वृक-ज्येष्ठाभ्यां तिल्तातिलौ चच्छन्दसि', वृकी प्रशस्ता वृकतिः । तातिलो नास्ति पाठः । 'अजाविभ्यां थ्यन्', अजायै हिता अजथ्या । अत्र घरूपकल्पेषु ङ्यन्तस्य परत्वात् ह्रस्वः— पट्वितरा, पट्वितमा, पट्विकल्पा, पट्विरूपा ।

*शसि बह्वल्पार्थस्येति* । 'बह्वल्पार्थात्' इत्ययमपि शस् तसिलादिषु द्रष्टव्य इत्यर्थः ।

*हास्तिकमिति* । यद्यत्र पुंवद्भावो न स्यात्, तदा हस्तिनीशब्दस्य यस्येति-लोपे कृते तस्य स्थानिवत्त्वाद् 'असिद्धवदत्राभात्' इत्यसिद्धत्वाच्च 'नस्तद्धिते' इति टिलोपो न स्यादिति पुंवद्भावो विधीयते । 'ठक्छसोश्च' इत्यनेन पुंवद्भावो न लभ्यते; छसा सहचरितस्य ठको ग्रहणात् । *श्यैनेयः, रौहिणेय इति* ।

न्यासः

न चासति परिगणने किञ्चिदनिष्टमापद्यते । येषु हि तसिलादिष्वनन्तर्भूतेषु पुंवद्भाव इष्यते, तेषूत्तरसूत्रे चकारस्यानुक्तसमुच्चयार्थत्वाद् भविष्यति । येषु तसिलादिष्वन्तर्भूतेषु नेष्यते, तत्र 'न कोपधायाः' इति नेति योगविभागान्न भविष्यतीति ।

दोषः खल्वपि परिगणने— दरच्छब्दात् कप्रत्यये कृते दारदिकेत्यत्र पुंवद्भावो न प्राप्नोति; कप्रत्ययस्यापरिगणितत्वात् ।

शसि बह्वल्पार्थस्येति । शसि प्रत्यये परतः बह्वर्थस्याल्पार्थस्य च पुंवद्भावो वक्तव्यः, व्याख्येय इत्यर्थः । व्याख्यानं तु तस्यैव चकारस्यानुक्तसमुच्चयार्थत्वमाश्रित्य कर्तव्यम् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



*** भस्याढे तद्धिते पुंवद्भावो वक्तव्य *।** हस्तिनीनां समूहो हास्तिकम्। अढ इति किम्? श्यैनेयः। रौहिणेयः।

कथमाग्नायो देवताऽस्य आग्नेयः स्थालीपाक इति? कर्तव्योऽत्र यत्नः।

पदमञ्जरी

श्येतरोहिताभ्याम् 'वर्णादनुदात्तात्' इति। ङीब्नकारौ। अत्र पुंवद्भावे सति—श्यैतेयः, रौहितेय इति स्यात्।

*कथमित्यादि*। यदि ढे पुंवद्भावः प्रतिषिध्यते, ततोऽग्नेः स्त्री 'वृषाकप्यग्नि-कुसितकुसिदानामुदात्तः' इति अग्निशब्दान् ङीपि कृते ऐकारे आयादेशे च अग्नायी, सा देवतास्य 'अग्नेर्ढक्' इति, 'सर्वत्राग्निकलिभ्यां ढक्' इति ढकि पुंवद्भावनिषेधादाग्नायेय इति प्राप्नोति, तत्कथमाग्नेय इति? *कर्तव्योऽत्र यत्न इति*। केचिदाहुः—'अढे' इत्यपनीयानपत्य इति वक्तव्यम्। इदमपि सिद्धं भवति—कुण्डिन्या अपत्यमिति 'गर्गादिभ्यो यञ्', तत्र पुंवद्भावाभावाद्यस्येति लोपे तस्य स्थानिवद्भावात् 'नस्तद्धिते' इत्यसति टिलोपे कौण्डिन्य इति भवति, पुंवद्भावे तु सति कौण्ड्य इति प्राप्नोति। तथा सपत्न्या अपत्यं शिवादित्वा-दण्, तत्र पुंवद्भावाभावात् सापत्न इति भवति, पुंवद्भावे तु सति 'नित्यं सपत्न्यादिषु' इति विहितयोर्ङीब्नकारयोर्निवृत्तयोः सापत इति स्यात्। तदेवम्,

न्यासः

भस्याढे तद्धित इत्यादि। हास्तिकमिति। 'अचित्तहस्तिधेनोष्ठक्' इति ठक्। यद्यत्र पुंवद्भावो न स्यात्, तदा यस्येतीकारलोपे कृते तस्य 'अचः परस्मिन् पूर्वविधौ' इति स्थानिवद्भावात् 'नस्तद्धिते' इति टिलोपो न स्यात्। पुंवद्भावे तु सति हस्तिशब्द एवायं भवति। ननु च ठक्छसोरित्यनेनैवात्र सिध्यति पुंवद्भावः? न सिध्यति; छसा साहचर्याद् 'भवतष्ठक्छसोः' इत्यनेनैव विहितस्य तत्र ठको ग्रहणात्, न सर्वस्य।

कथमित्यादि। यदि च ढे परतः पुंवद्भावस्य प्रतिषेधः क्रियते, तदाग्नायी देवतास्येति 'अग्नेर्ढक्' इति ढकि कृत आग्नायेय इति भवितव्यम्, तत् कथमाग्नेय इति भवतीत्यभिप्रायः। अग्नेः स्त्रीत्यस्यां विवक्षायाम् 'वृषाकप्यग्निकुसितकुसीदानामुदात्तः' इत्यनेनाग्निशब्दाद् ङीपि कृत ऐकारे चान्तादेशेऽग्नायीति भवति। कर्त्तव्योऽत्र यत्न इति। यत्नः केन पुनः कर्त्तव्यः? यो भस्याढे तद्धित इत्युपसङ्ख्यानमिच्छति। न तु यश्चकारमनुक्तसमुच्चयार्थमुत्तरसूत्रे करोति। स ह्येवमाह—यत्रैवेष्यते तत्रैव चकारः पुंवद्भावं समुच्चिनोति, नान्यत्रेति। कः पुनरसौ यत्न इति? कश्चिदाह—'अपत्यग्रहणं ढस्य विशेषणं कर्त्तव्यम्—योऽपत्येऽढे' इति। तेनायमर्थो भवति—ढस्य तद्धिते पुंवद्भावो

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



* ठक्छसोश्च पुंवद्भावो वक्तव्य * । भवत्याश्छात्रा भावत्काः । भवदीयाः ॥

## क्यङ्मानिनोश्च ॥३६ ॥

क्यङि परतो मानिनि च स्त्रिया भाषितपुंस्कादनूङ् पुंवद्भवति ।

पदमञ्जरी

'अनपत्ये' इति वचनाद् ढेऽप्यनपत्ये पुंवद्भवति स आग्नेय इति । अपत्ये तु न भवति– श्यैनेयः, रौहिणेय इति । यद्यनपत्य इत्युच्यते, गर्गस्यापत्यं स्त्री गार्ग्यायणी, तस्या अपत्यम् 'गोत्रस्त्रियाः कुत्सने ण च' इति णप्रत्यये कृते पुंवद्भावो न प्राप्नोति, ततश्च गार्ग्यायणो जाल्म इति स्यात्, गार्ग्यो जाल्म इति चेष्यते, तस्मादनपत्य इति न शक्यं वक्तुम् । कथं कौण्डिन्यः ? 'आगस्त्य-कौण्डिन्ययोः' इति निपातनात् सिद्धम् । कथं सापत्नः ? शत्रुपर्यायः सपत्नशब्दोऽस्ति; 'व्यन्सपत्ने' इति लिङ्गात् । स शार्ङ्गरवादिषु पठितव्यः, ततः शिवाद्यण्, तस्मात् 'स्त्रीभ्यो ढक्' इत्यत्रैव पुंवद्भावप्रतिषेध इति ? व्याख्यानमेवात्र शरणम् ।

ठक्छसोरिति । छसः सित्त्वात् 'सिति च' इति पदसंज्ञाविधानाद्भत्वा-भावाद् वचनम्, ठग्रहणं किमर्थम्, इकादेशे कृते 'भस्याढे' इत्येव सिद्धे ठावस्थायामेव यथा स्यात् ? किमेवं सति भवति ? 'इसुसुक्तान्तात्कः' इति कादेशः सिद्धो भवति; अन्यथा यदीकादेशे कृते पुंवद्भावः स्यात्, ततो यथा माथितिक इत्यत्रेकादेशे कृते कादेशो न भवति, एवं भावत्क इत्यत्रापि न स्यात् ॥

क्यङ्मानिनोश्च ॥ अयमस्याः, इयमस्या इति वैयधिकरण्यप्रदर्शनार्थमिद-

न्यासः

भवत्यपत्यार्थप्रत्ययं वर्जयित्वा । न चाग्नेयः, स्थालीपाक इत्यपत्यार्थे ढप्रत्ययः; किन्तु सास्य देवतेत्यर्थे, अतोऽत्र भवत्येव पुंवद्भाव इति ।

अन्यस्त्वाह---'भस्याढे तद्धिते' इति व्यधिकरणे सप्तम्यौ । यश्चात्र नञ् सोऽल्पार्थे वर्त्तते, यथा—अल्पलवणा यवागूरलवणेत्युच्यते । तत्रायमर्थो भवति—भस्य तद्धिते पुंवद्भावो वक्तव्योऽल्पे ढप्रत्यय इति । तेनाग्नेयः, स्थालीपाक इत्यत्र पुंवद्भावो भवति । श्यैनेय, रोहिणेय इत्यत्र तु न भवतीति ।

ठक्छसोश्चेत्यादि । अथ ठग्रहणं किमर्थम्, यावता ठस्येकादेशे कृते 'भस्याढे तद्धिते' इत्यनेनैव सिद्धः । ठावस्थायामेव यथा स्यादित्येवमर्थम् । किमेवं सति भवति ? 'इसुसुक्तान्तात् कः' इति कः सिद्धो भवति; अन्यथा हि यदीकादेशे कृते पुंवद्भावः स्यात् ततो यथा माथितिक इत्यत्रेकादेशो न भवति, तथा भावत्का इत्यत्रापि न स्यात् । भावत्काः, भवदीया इति । 'भवतष्ठक्छसौ' इति ठक्छसौ ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



एनी – एतायते । श्येनी – श्येतायते । मानिनि – दर्शनीयमानी अयमस्याः । दर्शनीयमानिनीयमस्याः ॥

मानिनोग्रहणमस्त्र्यर्थम्, असमानाधिकरणार्थं च । इह तु दर्शनीयमात्मानं मन्यते दर्शनीयमानिनीति पूर्वेणैव सिद्धम् ॥

## न कोपधायाः ३७ ॥

कोपधायाः स्त्रियाः पुंवद्भावो न भवति । पाचिकाभार्यः । कारिकाभार्यः । मद्रिकाभार्यः । वृजिकाभार्यः । मद्रिकाकल्पा । वृजिकाकल्पा । मद्रिकायते । वृजिकायते । मद्रिकामानिनी । वृजिकामानिनी । विलेपिकाया धर्म्यं वैलेपिकम् ।

### पदमञ्जरी

मुक्तम् । *पूर्वेणैव सिद्धमिति* । एकस्या एव कर्मत्वात्कर्तृत्वाच्च सामानाधिकरण्यस्याभावात् ॥

*न कोपधायाः* ॥ मद्रेषु भवा मद्रिका, वृजिका, 'मद्रवृज्योः कन्' । *वैलेपिकमिति* । 'अण्महिष्यादिभ्यः', अत्र 'भस्याढे तद्धिते' इति ह्यौपसंख्यानिकी

### न्यासः

क्यङ् मानिनोश्च ॥ एतायते, श्येतायत इति । एतश्वेतशब्दाभ्याम् 'वर्णादनुदात्तात् तोपधात् तो नः' इत्यनेन ङीप्, तकारस्य नकारः । एनीवाचरति, श्येनीवाचरति—'कर्तुः क्यङ् सलोपश्च' इति क्यङ्, 'अकृत्सार्वधातुकयोः' इति दीर्घत्वम् । अयमस्या दर्शनीयमानीति । दर्शनीयामिमां मन्यतेऽयमिति । 'मनः' इति णिनिः । दर्शनीयमानिनीयमस्या इति । दर्शनीयामिमां मन्यत इति पूर्ववण्णिनिः 'ऋन्नेभ्यो ङीप्' इति ङीप् ।

किं पुनः कारणं स्त्रियां समानाधिकरण इत्यनुवर्त्तमानेऽस्त्रियामसमानाधिकरणे च मानिन्युत्तरपदे पुंवद्भाव उदाह्रियत इत्याह—मानिनो ग्रहणमित्यादि । कथमेतज् ज्ञायते ? इत्याह—इह त्वित्यादि । यद्युत्तरपदं स्त्रियां वर्त्तते समानाधिकरणञ्च भवति—दर्शनीयामात्मानं मन्यते दर्शनीयमानिनीत्येवमादौ । तत्र 'यस्मात् स्त्रियाः पुंवत्' इत्यनेनैव सिद्धम्, अतो मानिनोग्रहणमस्त्र्यर्थम् । असमानाधिकरणार्थञ्चेत्येतदवसीयते; अन्यथा हि तदनर्थकं स्यात् ॥

न कोपधायाः ॥ पूर्वेण प्रकरणेन प्राप्तस्य पुंवद्भावस्यायं प्रतिषेधः । पाचिकाभार्यः, कारिकाभार्य इति । पाचककारकशब्दाभ्यां ण्वुलन्ताभ्यां टाप् । 'प्रत्ययस्थात् कात्पूर्वस्यात इदाप्यसुपः' इतीत्वम् । अत्र 'स्त्रियाः पुंवत्' इत्यादिना प्राप्तिः । मद्रिकाभार्यः, वृजिकाभार्य इति । मद्रेषु भवा, वृजिषु भवेति 'मद्रवृज्योः कन्' इति कन् । अत्रापि

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



कोपधप्रतिषेधे तद्धितवुग्रहणं कर्तव्यम् ॥ इह मा भूत्—पाकभार्यः, भेकभार्य इति ॥

## संज्ञापूरण्योश्च ॥ ३८ ॥

### पदमञ्जरी

प्राप्तिः प्रतिषिध्यते । पूर्वेषु तु सौत्री । *तद्धितवुग्रहणमिति* । तद्धितस्य यः ककारः वोश्च यः ककारः तस्येति वक्तव्यमित्यर्थः । *'पाकभार्य इति* । पाकशब्दः प्रथमवयोवाची, ततो ङीबपवादोऽजादित्वाट्टाप् ॥

*संज्ञापूरण्योश्च* ॥ संज्ञाशब्दा ये दानादिक्रियानिमित्ताः पुंसि च स्त्रियां च लोके प्रयुज्यन्ते तदर्थः संज्ञाप्रतिषेधः । ये त्वेकद्रव्यनिमित्ता देशनिमित्ता

### न्यासः

'स्त्रियाः पुंवत्' इत्यादिना प्राप्तिः । मद्रिकाकल्पा । वृजिकाकल्पेति । अत्र 'तसिलादिष्वाकृत्वसुचः' इत्यनेन प्राप्तिः । मद्रिकायते इत्यादौ 'क्यङ्मानिनोश्च' इति प्राप्तिः । विलेपिकाया धर्म्यमिति । 'लिप उपदेहे' इत्यस्माण्वुल् । वैलेपिकमिति । 'अण् महिष्यादिभ्यः' इत्यण् । अत्र 'भस्याढे तद्धिते' इति वा प्राप्तिः ।

कोपधप्रतिषेधे इत्यादि । अस्मिन् कोपधप्रतिषेधे तद्धितवुग्रहणं कर्त्तव्यम् । तद्धितसम्बन्धी वुसम्बन्धी ककार उपधा यस्य तत्रैव प्रतिषेधो यथा स्यात् । इह मा भूत्—पाकभार्य इति । पाकशब्दोऽयम् 'अर्भकपृथुकपाका वयसि' इत्यनेन कन्प्रत्ययान्तो निपातितः । अत्रासति वुग्रहण इहापि प्रतिषेधः स्यात् ।

यदि तद्धितवुग्रहणं क्रियते, तर्हि 'पूर्वत्रासिद्धम्' इत्यत्र यद्वक्ष्यति—"शुष्कजङ्घ" इत्यत्र—'शुषेः कः' इत्यस्यासिद्धत्वात् 'न कोपधायाः' इति प्रतिषेधो न प्राप्नोतीत्यसिद्धाधिकारस्य प्रयोजनम्" इति, तन्नोपपद्यते, असत्यपि 'शुषः कः' इत्यस्यासिद्धत्वेनैवात्र 'न कोपधायाः' इति प्रतिषेधेन भवितव्यम्, न ह्यत्र तद्धितसम्बन्धी ककारः, नापि वुसम्बन्धी ? दर्शनभेदमाश्रित्य तथाभिधानाददोषः । इदं हि वार्त्तिककारमतमाश्रित्योक्तम् । तत् पुनः श्लोकवार्त्तिककारस्य सूत्रकारमतानुसारिणो दर्शनमाश्रित्य वक्ष्यति ॥

संज्ञापूरण्योश्च ॥ कथं पुनः संज्ञाशब्दस्य पुंवद्भावस्य प्राप्तिः, यावता भाषितपुंस्कस्य पुंवद्भाव उक्तः, न च यः संज्ञाशब्दः स्त्रियां वर्त्तते स भाषितपुंस्को भवति, एकद्रव्यनिवेशित्वात् संज्ञाशब्दानाम् ? नैतदस्ति; न ह्ययं नियोग एकद्रव्यनिवेशिभिरेव संज्ञाशब्दैर्भवितव्यमिति । तथा हि—देवदत्तादिशब्दोऽनेकद्रव्यदानक्रियादिसम्बन्धाद् नैकवस्तुसंज्ञाभूत एव लोके प्रयुज्यमान उपलभ्यते, शास्त्रेष्वपि स्वादिशब्दः । या त्वेकद्रव्यनिवेशिनी संज्ञा तां प्रति नैवायं प्रतिषेधः क्रियत इत्यसारश्चोद्यम् । ननु भवन्तु संज्ञाशब्दा अनेकार्थवृत्तयः, भाषितपुंस्कास्त्वेकस्यामाकृतौ, कथं तर्हि तेषां किञ्चित् प्रवृत्तिनिमित्तमस्ति, यदृच्छाशब्दत्वात् ? एतदप्यसारम्; यतस्तेषामपि केषाञ्चित् किञ्चित्

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



संज्ञायाः पूरण्याश्च स्त्रियाः पुंवद्भावो न भवति। दत्ताभार्यः। गुप्ताभार्यः। दत्तापाशा। गुप्तापाशा। दत्तायते। गुप्तायते। दत्तामानिनी। गुप्तामानिनी।

पूरण्याः—पञ्चमीभार्यः। दशमीभार्यः। पञ्चमीपाशा। दशमीपाशा। पञ्चमीयते। दशमीयते। पञ्चमीमानिनी। दशमीमानिनी॥

## वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे॥ ३९॥

'न' इति वर्तते। वृद्धेर्निमित्तं यस्मिन् स वृद्धिनिमित्तस्तद्धितः स यदि रक्तेऽर्थे विकारे च न विहितः, तदन्तस्य स्त्रीशब्दस्य न पुंवद्भवति। स्रौघ्नीभार्यः। माथुरीभार्यः। स्रौघ्नीपाशा। माथुरीपाशा। स्रौघ्नी-

### पदमञ्जरी

वा संज्ञाशब्दास्तत्राभाषितपुंस्कत्वादेवाप्रसङ्गः। *दत्तायते, गुप्तायते इति*। अत्र यद्यपि सत्यसति वा प्रतिषेधे विशेषाभावः, तथापि वस्तुतः प्रतिषेधस्य विषय इत्येतावताऽस्योपन्यासः॥

*वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे*॥ वृद्धेर्निमित्तं णकारः। इह निमित्तग्रहणं न कर्तव्यम्, 'वृद्धेस्तद्धितस्य' इत्येव वक्तव्यम्—वृद्धेर्यस्तद्धितः, कश्च वृद्धेस्तद्धितः? यस्तस्या निमित्तमेवं सिद्धे निमित्तग्रहणाद्व्यधिकरणपदो बहुव्रीहिः। अपर आह—षष्ठीसमासादर्शआद्यच्प्रत्यय इति। यद्वा—निमित्त-

### न्यासः

प्रवृत्तिनिमित्तमस्त्येव, सप्तपर्णादिशब्दवत्। यत्राप्येतन्नास्ति, तत्रापि स्वरूपमेव प्रवृत्तिनिमित्तमुपादायाभिधेये वर्तन्ते। तत्राभिन्ने प्रवृत्तिनिमित्ते यैर्भाषितः पुमान् ते भाषितपुंस्का इति किमत्रानुपपन्नम्? दत्ताभार्य इति। अत्र यासौ दानक्रियाकृतिस्तस्यामेव दत्ताशब्दो भाषितपुंस्कः। गुप्ताभार्य इति। अत्रापि गुप्ताशब्दो गोपनक्रियाकृतौ स्वरूपे वा प्रवृत्तिनिमित्ते। उभावपि भाषितपुंस्कशब्दौ दत्तायते, गुप्तायत इति। कथमेते प्रतिषेधस्योदाहरणे उपन्यस्ते, यावता सत्यपि पुंवद्भावे 'अकृत्सार्वधातुकयोर्दीर्घः' इति दीर्घत्वेनोभयमप्येतत् सिद्धम्? एवं मन्यते—'संज्ञापूर्वो विधिरनित्यः' इति, तत्र यदि पुंवद्भावप्रतिषेधो न स्यात् तदा दीर्घत्वाभावोऽनुमीयते। तस्मिन् पक्षे दत्तयते गुप्तयत इत्यपि स्यादिति। 'न कोपधासंज्ञापूरणीनाम्' इत्येकस्मिन्नेव योगे कर्त्तव्ये योगविभागः 'न कोपधायाः' इत्यस्य प्रतिषेधस्यानित्यत्वज्ञापनार्थः कृतः। तेन यदुक्तम्—कोपधप्रतिषेधे तद्धितवुग्रहणं कर्त्तव्यमिति, तन्न कर्त्तव्यं भवति॥

वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे॥ वृद्धिनिमित्तं अणकाः। स्रौघ्नीभार्य

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



यते । माथुरीयते । स्रौघ्नीमानिनी । माथुरीमानिनी ।

वृद्धिनिमित्तस्येति किम्? मध्यमभार्यः । तद्धितस्येति किम्? काण्डलावभार्यः । बहुव्रीहिपरिग्रहः किमर्थः? तावद्भार्यः । यावद्भार्यः । अरक्तविकार इति किम्? कषायेण रक्ता काषायी, काषायी बृहतिका यस्य स काषायबृहतिकः । लोहस्य विकारो लौही, लौही ईषा यस्य रथस्य स लौहेषः। खादिरेषः[1] ॥

पदमञ्जरी

ग्रहणाद्बहुवचनान्तस्य समासः—वृद्धीनां तिसृणामपि निमित्तं वृद्धिनिमित्तमिति । वतुस्त्वाकारस्यैव निमित्तम् । इह तु सर्वस्मै हिता सार्वा सा भार्या यस्य स सार्वभार्य इति यद्यपि 'सर्वपुरुषाभ्याम्' इति णप्रत्यये आकार एव वृद्धिर्भवति, तथापि नासौ स्वरूपेण वृद्धेर्निमित्तम्, किं तर्हि? णित्त्वेन । तच्च तिसृणामपि निमित्तम् ।

मध्ये भवा मध्यमा, 'मध्यान्मः' । काण्डं लुनातीति काण्डलावी, 'कर्मण्यण्' 'टिड्ढाणञ्' इति ङीप्, 'यत्तदेतेभ्यः परिमाणे वतुप्', 'आ सर्वनाम्नः' 'उगितश्च' ङीप्, तावती । तत्पुरुषाश्रयणेऽस्यापि प्रतिषेधः स्यात्, बहुव्रीहौ तु णकारादेरभावान् न भवति । *काषायीति* । 'तेन रक्तं रागात्' इत्यण् । *लौहीति* । 'प्राणिरजतादिभ्योऽञ्' । खदिरशब्दः पलाशादिः, ईषा = रथावयवविशेषः ॥

न्यासः

इति । स्रुघ्ने भवा, 'तत्र भव' इत्यण् । 'टिड्ढाणञ्' इति ङीप् । एवं माथुरीभार्य इत्यत्रापि ।

मध्यमभार्य इति । मध्ये भवा, 'मध्यान्मः' इति मप्रत्ययः । काण्डलावभार्य इति । काण्डं लुनातीति 'कर्मण्यण्', पूर्ववन्ङीप् । तावद्भार्य इति । तावच्छब्दात् तत्परिमाणमस्या इति 'यत्तदेतेभ्यः परिमाणे वतुप्' इति वतुप्, 'आ सर्वनाम्नः' इति दकारस्याकारः, 'उगितश्च' इति ङीप् । तावती भार्यास्य तावद्भार्यः, यदि वृद्धिनिमित्तस्येति तत्पुरुषो गृह्येत तदात्रापि प्रतिषेधः स्यात्, भवति हि वतुब् वृद्धेराकारस्य निमित्तम् । बहुव्रीहिपरिग्रहे तु न दोषः; न हि वतुपि ञकारादिकं वृद्धेर्निमित्तमस्ति । काषायीति । 'तेन रक्तम्' इत्यण् । लौहीति । 'प्राणिरजतादिभ्योऽञ्' इत्यञ्, पूर्ववन् ङीप् । खादिरेष इति । 'पलाशादिभ्यो वा' इत्यञणोरन्यतरः । खादिरी ईषा यस्य स खादिरेषः ॥

---

१. 'खादिरेषः' इत्युदाहणं न सार्वत्रिकम् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

## स्वाङ्गाच्चेतोऽमानिनि[1] ॥ ४० ॥

स्वाङ्गादुत्तरो य ईकारस्तदन्तायाः स्त्रिया न पुंवद्भवति अमानिनि परतः । दीर्घकेशीभार्यः । दीर्घकेशीपाशा । श्लक्ष्णकेशीपाशा । दीर्घकेशीयते । श्लक्ष्णकेशीयते ।

स्वाङ्गादिति किम् ? पटुभार्यः । ईत इति किम् ? अकेशभार्यः । अमानिनीति किम् ? दीर्घकेशमानिनी ॥

## जातेश्च ॥ ४१ ॥

जातेश्च स्त्रिया न पुंवद्भवति अमानिनि परतः । कठीभार्यः । बह्वृचीभार्यः । कठीपाशा । बह्वृचीपाशा । कठीयते । बह्वृचीयते ।

अमानिनीत्येव — कठमानिनी । बह्वृचमानिनी ।

अयं प्रतिषेध औपसङ्ख्यानिकस्य पुंवद्भावस्य नेष्यते । हस्तिनीनां समूहो हास्तिकम् ॥

## पुंवत्कर्मधारयजातीयदेशीयेषु ॥ ४२ ॥

### पदमञ्जरी

*स्वाङ्गाच्चेतोऽमानिनि* ॥ *अमानिनीति* वार्तिके दर्शनात्सूत्रे प्रक्षिप्तम् । 'स्वाङ्गाच्चोपसर्जनात्' इति ङीष् , दीर्घकेशी ।

'सहनञ्विद्यमानपूर्वाच्च' इति प्रतिषेधादकेशा ॥

*जातेश्च* ॥ कठबह्वृचयोः 'गोत्रं च चरणैः सह' इति जातित्वान् ङीष् ।

*अयमित्यादि* । व्याख्यानमत्र शरणम् ॥

### न्यासः

स्वाङ्गाच्चेतोऽमानिनि ॥ दीर्घकेशीति । 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति ङीष् । पट्वीति । पटुशब्दाद् 'वोतो गुणवचनात्' इति ङीष् ।

अकेशभार्य इति । अविद्यमानाः केशा अस्या अकेशा । 'सहनञ्विद्यमानपूर्वाच्च' इति ङीपि प्रतिषिद्धे टाबेव भवति ॥

जातेश्च ॥ कठीभार्य इति । कठशब्दात् 'जातेरस्त्रीविषयादयोपधात्' इति ङीष् । जातित्वं त्वस्य 'गोत्रञ्च चरणैः सह' इति लक्षणेन ।

अयमित्यादि । 'भस्याढे तद्धिते' इत्यौपसङ्ख्यानिको यः पुंवद्भावस्तस्यायं प्रतिषेधो नेष्यते । यस्मादस्य प्रतिषेधस्य बाधनार्थमुत्तरसूत्रे पुंवदिति योगविभागः कर्त्तव्य इत्यभिप्रायः ॥

---

१. अत्र का० सं० प्र० मा० काशिकाप्रस्तावनाऽवलोकनीया ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



कर्मधारये समासे जातीय, देशीय – इत्येतयोश्च प्रत्यययोर्भाषित-पुंस्कादनूङ् स्त्रियाः पुंवद्भवति । प्रतिषेधार्थोऽयमारम्भः ।

'न कोपधायाः' इत्युक्तम्, तत्रापि भवति । पाचकवृन्दारिका । पाचकजातीया पाचकदेशीया ।

'संज्ञापूरण्योश्च' इत्युक्तम्, तत्रापि भवति । दत्तवृन्दारिका । दत्त-जातीया । दत्तदेशीया । पूरण्याः – पञ्चमवृन्दारिका । पञ्चमजातीया । पञ्चमदेशीया ।

'वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे' इत्युक्तम्, तत्रापि भवति । स्रौघ्नजातीया । स्रौघ्नदेशीया ।

'स्वाङ्गाच्चेतोऽमानिनि' इत्युक्तम्, तत्रापि भवति । श्लक्ष्णमुख-वृन्दारिका । श्लक्ष्णमुखजातीया । श्लक्ष्णमुखदेशीया ।

'जातेश्च' इत्युक्तम्, तत्रापि भवति । कठवृन्दारिका । कठजातीया । कठदेशीया ।

भाषितपुंस्कादित्येव – खट्वावृन्दारिका ।

अनूङित्येव – ब्रह्मबन्धूवृन्दारिका ॥

पदमञ्जरी

पुंवत् *कर्मधारयजातीयदेशीयेषु* ॥ ननु कर्मधारये 'स्त्रियाः पुंवत्' इत्यादिना सिद्धः पुंवद्भावः, जातीयदेशीययोरपि तसिलादिष्विति, किमर्थोऽयमारम्भः ? इत्यत आह– *प्रतिषिद्धार्थोऽयमिति* । प्रतिषिद्धोऽपि पुंवद्भावो यथा स्यादित्येव-मर्थमित्यर्थः । *प्रतिषेधार्थोऽयमिति* पाठे प्रतिषेधविषयः प्रतिषेधशब्देनोक्तः । निवृत्तिवचनो वार्थशब्दः ।

न्यासः

पुंवत् कर्मधारयजातीयदेशीयेषु ॥ ननु च कर्मधारये 'स्त्रियाः पुंवत्' इत्यादिना पुंवद्भावः सिद्धः, जातीयदेशीयशब्दयोरपि 'तसिलादिष्वाकृत्वसुचः' इत्यादिना, तत् किमर्थोऽयमारम्भः ? इत्यत आह—प्रतिषेधार्थोऽयमारम्भ इति । प्रतिषेधविषयः प्रतिषेधशब्देनोक्तः । साहचर्यात् प्रतिषेधोऽर्थः प्रयोजनं यस्येति स तथोक्तः । यत्र विषये प्रतिषेध उक्तस्तत्र पुंवद्भावः प्रयोजनमित्यर्थः । अथ वा—अर्थशब्दो निवृत्ताविह वर्तते, यथा—मशकार्थो धूम इति । तेनायमर्थो भवति—प्रतिषेधनिवृत्त्यर्थोऽयमारम्भ इति ।

भाषितपुंस्कादित्येवेति । यदि 'भाषितपुंस्कादनूङ्' इति च नानुवर्तते, तदा-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

❀ कुक्कुट्यादीनामण्डादिषु पुंवद्भावो वक्तव्यः ❀। कुक्कुट्या अण्डं कुक्कुटाण्डम्। मृग्याः पदं मृगपदम्। मृग्याः क्षीरं मृगक्षीरम्। काक्याः शावः काकशावः।

न वाऽस्त्रीपूर्वपदस्य विवक्षितत्वात्। स्त्रीत्वेन विना पूर्वपदार्थोऽत्र जातिःसामान्येन विवक्षितः।

पदमञ्जरी

*कुक्कुट्यादीनामित्यादि*। अस्त्र्यर्थमसमानाधिकरणार्थं वचनम्। *न वेत्यादि*। उपसंख्यानं प्रत्याचष्टे। एवं न वा वक्तव्यम्, किं कारणम्? स्त्रीपूर्वपदस्याविवक्षितत्वात्। नात्र स्त्रीलिङ्गं पूर्वपदं विवक्षितम्; उभयोरण्डमुभयो पदम्, तत्र प्रकरणादिना स्त्रीत्वावसायः आरभ्यमाणेऽपि पुंवद्भावे समाश्रयणीयः, अनारम्भेऽपि तथा भविष्यति। यदि तर्हि स्त्रीलिङ्गेन समासः क्रियते तदा स्त्रीप्रत्ययस्य श्रवणं प्राप्नोति? एवं तर्ह्यनभिधानात् स्त्रीलिङ्गेन समासो न भविष्यति। यद्यपि तावदत्रैतच्छक्यते वक्तुम्, इह तु कथं मृग्याः क्षीरं मृगक्षीरमिति, नहि पुंसः क्षीरेण सम्बन्धोऽस्ति? अत्रापि जात्यन्तरनिवृत्तिपरत्वाच्चोदनायाः स्त्रीत्वमकिञ्चित्करत्वादविवक्षितम्। यत्र तु लिङ्गविशेष उपकारकस्तत्रासौ विवक्षित एव यथा—अजामूत्रेण पर्युक्षितं दातव्यमिति। *पूर्वपदार्थोऽत्र जातिरिति*। कुक्कुटाण्डादौ पूर्वपदार्थो जातिः, स च सामान्येन स्त्रीत्वादिविशेषरहितेन रूपेण विवक्षित इत्यर्थः।

न्यासः

ऽभाषितपुंस्कार्थमनूङर्थञ्चेदं वचनं स्यात्, न प्रतिषेधार्थम्। एवञ्च खट्वावृन्दारिका, ब्रह्मबन्धूवृन्दारिकेत्यत्रापि पुंवद्भावः स्यात्। तस्माद् भाषितपुंस्कादनूङित्यनुवर्त्तनीयम्।

कुक्कुट्यादीनामित्यादि। उत्तरपदस्थान्तादेरस्त्रीत्वादसामानाधिकरण्याच्च पुंवद्भावो न प्राप्नोतीत्युपसङ्ख्यायते। न वेत्यनेनोपसङ्ख्यानम् प्रत्याचष्टे—न वा वक्तव्यः, कस्मात्? अस्त्रीपूर्वपदस्य विवक्षितत्वात्। अस्त्रीलिङ्गस्य पूर्वपदस्य विवक्षितत्वादित्यभिप्रायः। अस्यैवार्थं विस्पष्टीकर्तुमाह—स्त्रीत्वेन विनेत्यादि। अत्र हि मयूरादिजात्यन्तरस्य निवृत्तिर्विवक्षिता। जात्यन्तरनिवृत्तिपरायां देशनायां लिङ्गविशेषोपादानमनुपकारकमेव। विनापि तेन जात्यन्तरनिवृत्तिः शक्यत एव कर्तुम्। तथा हि मृगमांसमित्युक्ते, अन्तरेणापि लिङ्गविशेषोपादानं जात्यन्तरस्य व्यवच्छेद उपपद्यते—मृगजातिसम्बन्धि मांसम्, नान्यजातिसम्बन्धीति। तस्मात् स्त्रीत्वमत्रानुपकारित्वान्न विवक्षितम्। अतः स्त्रीत्वेन विना पूर्वपदस्यार्थोऽत्र कुक्कुटाण्डादौ जातिसामान्येन स्त्रीत्वादविशेषविहितो विवक्षित इत्यर्थः। ततश्चास्त्रीलिङ्गा एवात्र कुक्कुटादयः शब्दा अण्डादिभिः शब्दैः समस्यन्त इति भावः। कः पुनरसौ पूर्वपदार्थः? कुक्कुटादिजात्या व्यवच्छिन्नं द्रव्यमात्रम्।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पुंवद्भावाद् ह्रस्वत्वं खिद्घादिषु भवति विप्रतिषेधेन। खित् – कालिम्मन्या। हरिणिम्मन्या। घादि – पट्वितरा। पट्वितमा। पट्विरूपा। पट्विकल्पा। क – पट्विका। मृद्विका।

इहेडबिड्, दरद्, पृथु, उशिजित्येते जनपदशब्दाः क्षत्रियवचनाः। तत्र तद्राजप्रत्ययस्य स्त्रियाम् 'अतश्च' इति लुकि कृते इडबिट्वृन्दा-

पदमञ्जरी

*खिद्घादिष्विति*। तत्र खिति विप्रतिषेधः 'स्त्रियाः पुंवत्' इत्यत्रैवोदाहृतः। घादिषु नद्या ह्रस्वो भवतीत्यस्यावकाशः—नर्तकितरा, नर्तकितमा, नर्तकिरूपा, नर्तकिकल्पा; यत्र पुंवद्भावः प्रतिषिध्यते 'न कोपधायाः' इति—तसिलादिष्विति। पुंद्भावस्यावकाशः यद् ङ्यन्तं न भवति— दर्शनीयतरेत्यादि। पट्वितरेत्यादावुभयप्रसङ्गे विप्रतिषेधः। केऽणो ह्रस्वो भवतीत्यावकाशः—नर्तकिका, पुंवद्भावस्यावकाशः— दरदोऽपत्यं स्त्री, 'द्व्यञ्मगध' इत्यण्, तस्य 'अतश्च' लुक्, ततः 'प्रागिवात्कः', तसिलादिष्विति पुंवद्भावाद्दारदशब्दः, 'प्रत्ययस्थात्' इतीत्वं दारिदिका। ननु च परिगणितास्तसिलादयः, न च कप्रत्ययस्तेषु समस्ति ? एवं तर्हि विप्रतिषेधादेव कप्रत्ययोऽपि तत्राभ्युपगम्यत इति अनुमीयते, पट्विका मृद्विकेत्यादावुभयप्रसङ्गे परत्वाद् ह्रस्वः, सर्वत्र चात्र सकृदित्याश्रयणाद् पुंवद्भावाभावः।

अनूङिति यदुक्तं तस्य प्रयोजनं दर्शयति— *इहेत्यादि*। *तद्राजप्रत्ययस्येति*।

न्यासः

पुंवद्भावादित्यादि। अत्र खिति पुंवद्भावाद् ह्रस्वत्वं विप्रतिषेधेन भवतीति पूर्वमेव व्याख्यातम्। घादिषु तु व्याख्यायते। घादिषु ङ्यो ह्रस्वो भवतीत्यस्यावकाशः— नर्त्तकितरा, नर्त्तकितमा; नर्त्तकिरूपा, नर्त्तकिकल्पेति; पुंवद्भावस्यावकाशः— दर्शनीयतरा, दर्शनीयतमा; दर्शनीयरूपा, दर्शनीयकल्पेति; इहोभयं प्राप्नोति— पट्वितरा, पट्वितमा; पट्विरूपा, पट्विकल्पेति, विप्रतिषेधेन ह्रस्वत्वं भवति। 'केऽणः' इति ह्रस्वस्यावकाशः— नर्त्तकिकेति, अज्ञातादावर्थे 'प्रागिवात् कः' पुंवद्भावस्यावकाशः— दारदिकेति। दरच्छब्दस्यात्र के परतः 'तसिलादिष्वाकृत्वसुचः' इति पुंवद्भावेन दारदशब्दो भवति। अतश्चापि कृते 'प्रत्ययस्थात् कात्' इत्यादिनेत्वमिहोभयं प्राप्नोति। पट्विकेति। अत्र विप्रतिषेधेन ह्रस्वत्वं भविष्यति। केन पुनः पुंवद्भावः, यावता तसिलादिषु परिगणनं कृतम्, न च तत्र कप्रत्ययः परिगणितः ? एतद् भाष्यकारः शिष्येभ्यो यः परिगणनं करोति, न तु सूत्रकारः।

पूर्वं यस्य सिद्धयेऽनूङिति प्रसज्यप्रतिषेध आश्रितस्तद्दर्शनार्थमाह— इहेत्यादि।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


-रिकेति विगृह्य समासः क्रियते । ततः पुंवद्भावेन ऐडबिडादयः पुंशब्दाः क्रियन्ते । ऐडबिडवृन्दारिका । औशिजवृन्दारिका । दारदवृन्दारिका । पार्थवृन्दारिका ।

**घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः ॥ ४३ ॥**

घ, रूप, कल्प, चेलट्, ब्रुव, गोत्र, मत, हत — इत्येतेषु परतो भाषितपुंस्कात् परो यो ङीप्रत्ययस्तदन्तस्यानेकाचो ह्रस्वो भवति । घ — ब्राह्मणितरा, ब्राह्मणितमा । रूप — ब्राह्मणिरूपा । कल्प — ब्राह्मणिकल्पा । चेलट् — ब्राह्मणिचेली । ब्रुव — ब्राह्मणिब्रुवा । गोत्र — ब्राह्मणिगोत्रा । मत — ब्राह्मणिमता । हत — ब्राह्मणिहता ।

घरूपकल्पाः प्रत्ययाश्चेलडादीन्युत्तरपदानि ।

'ब्रुव' इति—ब्रवीतीति ब्रुवः पचाद्यचि, वच्यादेशो गुणश्च निपातनान्न भवति ।

### पदमञ्जरी

ये द्व्यचस्तेषु 'द्व्यच्मगध' इत्यण्, शेषेषु 'जनपदशब्दात्' इत्यञ्, पृथ इति थकारान्तः ॥

घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः ॥ चेलादीनां वृत्तिविषये कुत्सनवचनत्वात्तैः 'कुत्सितानि कुत्सनैः' इति समासः । 'ङ्य' इत्यत्र 'ङ्याश्छन्दसि बहुलम्' इत्यादिवदागमः प्राप्तः, सौत्रत्वान्न कृतः ।

### न्यासः

तत्र तद्राजप्रत्ययस्येत्यादि । तत्रैडविट्, पृथु - इत्येताभ्याम् 'जनपदशब्दात् क्षत्रियादञ्' इति विहितस्याञस्तद्राजप्रत्ययस्य 'अतश्च' इति लुक् । दरद्, उशिजित्येताभ्यां तु 'द्व्यच्मगध' इत्यादिना विहितस्याणः । इडविट् चासौ वृन्दारिका चेति विगृह्य समास इति । विशेषणेत्यादिना । अत्रैडविडादय इति आदिशब्देन दारदः, पार्थः, औशिज इत्येते गृह्यन्ते ॥

घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः ॥ चेलड्ब्रुवगोत्रशब्दानां कुत्सार्थत्वात् 'कुत्सितानि कुत्सनैः' इति समासः । मतहतशब्दाभ्यां तु 'विशेषणं विशेष्येण बहुलम्' इत्यनेन । चेलडिति पचादौ पठ्यते, टकारो ङीबर्थः । यदि 'ब्रुवः' इति पचाद्यजन्तमेतद्, एवं सति 'ब्रुवो वचिः' इति वच्यादेशो गुणश्च प्राप्नोति, स कस्मान्न भवतीति ? यश्चोदयेत्, तं प्रत्याह—वच्यादेशो गुणश्च निपातनान्न भवतीति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



ङ्य इति किम् ? दत्तातरा । गुप्तातरा । अनेकाच इति किम् ? 'नद्याः शेषस्यान्यतरस्याम्' इति वक्ष्यति ।

भाषितपुंस्कादित्येव — आमलकीतरा । कुवलीतरा ॥

**नद्याः शेषस्यान्यतरस्याम् ॥ ४४ ॥**

नद्याः शेषस्य घादिषु परतो ह्रस्वो भवति अन्यतरस्याम् । कश्च शेषः ? अङी च या नदी ङ्यन्तं च यदेकाच् । ब्रह्मबन्धूतरा, ब्रह्मबन्धु-

पदमञ्जरी

*दत्तातरेति* । ननु च 'स्वाङ्गाच्चेतः' इत्यतः 'ईतः' इत्यनुवर्तिष्यते ? एवमपि ग्रामणीतरः—अत्रापि प्राप्नोति ? स्त्रियामिति वर्तते । एवमपि ग्रामणीतरा—अत्रापि प्राप्नोति ? 'स्त्रियाम्' इति वर्तते, स्त्रिया ईतः स्त्रीवाचिन ईकारस्येत्यर्थः, ग्रामणीशब्दे त्वनर्थक ईकारः । शेषप्रक्लृप्त्यर्थं तर्हि ङीब्ग्रहणम्, क्रियमाणे हि ङीब्ग्रहणे 'ङ्योऽनेकाचः' इति श्रुतत्वात्तदपेक्षः शेषो लभ्यते—अङीब् या नदी ङ्यन्तं च यदेकाजिति । अन्तरेणापि ङीब्ग्रहणं प्रक्लृप्तः शेषः, कथम् ? ईत इति वर्तते, अनीच्च या नदी ईदन्तं च यदेकाजिति । तदेतन्ङीग्रहणं तिष्ठतु तावत् ॥

*नद्याः शेष॰ न्यतरस्याम्* ॥ 'भाषितपुंस्कादनूङ्' इति निवृत्तम् । *कश्च शेष इति* । यदि च यत्र पूर्वसूत्रेण ह्रस्वो न विवक्षितः स शेषः, ततो यद्भाषितपुंस्कम्, यच्च भिन्नायामाकृतौ भाषितपुंस्कमनेकाज् ङ्यन्तं तस्यापि ह्रस्वत्वं प्रसज्यते—आमलकीतरा, द्रोणीतरेति । अत्रापि पूर्वेण विहितत्वादिति प्रश्नः । पूर्वसूत्रे यत्साक्षात् श्रुतं तदपेक्षः शेष इत्युत्तरम् ।

न्यासः

आमलकीतरा, कुवलीतरेति । आमलककुवलशब्दौ वृक्षे नित्यं स्त्रीलिङ्गौ । फले तु नपुंसकलिङ्गावित्युभावप्यभाषितपुंस्कौ, ताभ्यां गौरादित्वान् ङीष् ॥

नद्याः शेषस्यान्यतरस्याम् ॥ 'भाषितपुंस्कादनूङ्' इति निवृत्तम् । कश्च शेष इति । यदि पूर्वसूत्रेण यस्य ह्रस्वो न विहितः स शेषः, ततो यद् भाषितपुंस्कं यच्च भिन्नायामाकृतौ भाषितपुंस्कं नैकाच् तस्यापि शेषत्वं स्यात्, ततश्चामलकीतरा, द्रोणीतरेत्यत्रापि विकल्पेन ह्रस्वत्वं स्यात् । न ह्यत्र ह्रस्वत्वं पूर्वसूत्रेण विहितमित्यभिप्रायेणाऽऽह अङी च या नदी ङ्यन्तञ्च यदेकाजिति । एतेन श्रुतापेक्षयाऽत्र शेषत्वमाश्रीयते, न तु यस्य ह्रस्वो न विहितः, तदपेक्षयेति दर्शयति । कथं पुनरेतल्लभ्यते ? शेषग्रहणात् । अन्तरेणापि शेषग्रहणं शेषस्यैव विकल्पेन ह्रस्वत्वं भविष्यति । तथा हि यदि ङ्योऽनेकाचो भाषितपुंस्कस्यापि विभाषा ह्रस्वः स्यात्, तदा पूर्वयोग एवेदमन्यतरस्याग्रहणं कुर्यात् । इह करणाद् यस्य



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तरा। वीरबन्धूतरा, वीरबन्धुतरा। स्त्रितरा, स्त्रीतरा। स्त्रितमा, स्त्रीतमा।

* कृन्नद्याः प्रतिषेधो वक्तव्यः *। लक्ष्मीतरा। तन्त्रीतरा॥

## उगितश्च॥ ४५॥

उगितश्च परस्या नद्या घादिषु अन्यतरस्यां ह्रस्वो भवति। श्रेयसितरा, श्रेयसीतरा, श्रेयस्तरा। विदुषितरा, विदुषीतरा, विद्वत्तरा।

### पदमञ्जरी

शेषग्रहणं शक्यमकर्तुम्। कथम्? नद्या अन्यतरस्यां ह्रस्व इत्युत्सर्गः, तस्यानेकाच ईतो नित्यह्रस्वत्वमपवादः, तस्मिन्नित्ये प्राप्ते 'उगितश्च' इति विभाषाऽऽरभ्यते। यद्येवम्, 'नद्या अन्यतरस्याम्' इत्यत्र भाषितपुंस्कादित्यनुवर्त्यते वा, न वा? यद्यनुवर्त्यते, स्त्रितरा, स्त्रितमा—अत्र न प्राप्नोति; अथ नानुवर्त्यते, द्रोणीतरा—अत्रापि प्राप्नोति, तस्मात्कर्तव्यं शेषग्रहणम्। तस्मिंश्च क्रियमाणे श्रुतापेक्षं शेषत्वं यथा विज्ञायेतेति पूर्वसूत्रे ङीग्रहणमपि कर्त्तव्यम्।

*लक्ष्मीतरेति*। 'अवितॄस्तॄतन्त्रिभ्य ईः', 'लक्षेर्मुट् च' इतीकारप्रत्ययान्तो लक्ष्मीशब्द इति कृन्नद्यन्तो भवति। स तर्हि प्रतिषेधो वक्तव्यः? न वक्तव्यः; कथम्? स्त्रिया इत्यनुवर्तते, तेन नदीं विशेषयिष्यामः—स्त्रिया नद्या इति; न च कृन्नदी स्त्रीवाचिनी। नदीसंज्ञाऽपि तर्हि न प्राप्नोति? उक्तोऽत्र परिहारो नदीसंज्ञाप्रकरणे॥

### न्यासः

पूर्वेण ह्रस्वो न विहितस्तस्यैव पाक्षिकं ह्रस्वत्वमन्तरेणापि शेषग्रहणं शेषस्यैव भविष्यतीत्यवसीयत इति किं शेषग्रहणेन तत् क्रियते? 'ङ्योऽनेकाचः' इति पूर्वसूत्रे योऽच् श्रूयते तदपेक्षया शेषो विज्ञायत इत्येवमर्थम्। न चामलकीतरा, द्रोणीतरेत्यत्र श्रुतापेक्षया शेषत्वमुपपद्यते; ङ्योऽनेकाच्त्वात्। तस्मान्न भवत्यत्र ह्रस्वत्वप्रसङ्गः। स्त्रीतरेति। स्त्यायतेर्ड्रट्, डित्त्वाट्टिलोपः, 'वलि लोपश्च', टित्वान् ङीप्।

वक्तव्य इति। व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्—अन्यतरस्यांग्रहणस्य व्यवस्थितविभाषाविज्ञानात् कृन्नद्या न भविष्यतीति। लक्ष्मीतरेति। 'अवितॄस्तॄतन्त्रिभ्य ईः', 'लक्षेर्मुट् च' इतीकारप्रत्ययान्तो लक्ष्मीशब्दो व्युत्पादितः। कृन्नद्ययं भवति॥

उगितश्च॥ श्रेयसितरेति। ईयसुनि परतः 'प्रशस्यस्य श्रः' इति प्रशस्यशब्दस्य श्रादेशः, 'उगितश्च' इति ङीप्। विदुषीतरेति। विदेः परस्य लटः शत्रादेशः, तस्य

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


* पुंवद्भावोऽप्यत्र पक्षे वक्तव्यः *। प्रकर्षयोगात्प्राक् स्त्रीत्वस्याविवक्षितत्वाद्वा सिद्धम् ॥

## आन्महतः समानाधिकरणजातीययोः ॥ ४६ ॥

समानाधिकरण उत्तरपदे जातीये च प्रत्यये परतो महत आकारादेशो भवति। महादेवः। महाब्राह्मणः। महाबाहुः। महाबलः। जातीये — महाजातीयः।

समानाधिकरणजातीययोरिति किम्? महतः पुत्रो महत्पुत्रः। लक्षणोक्तत्वादेवात्र न भविष्यतीति चेद्? बहुव्रीहावपि न स्याद् —

पदमञ्जरी

*उगितश्च* ॥ *पुंवद्भावोऽप्यत्र पक्षे वक्तव्य इति*। भाष्ये नैतद् दृष्टम्। *प्रकर्षयोगात्प्रागित्यादिना* वक्तव्यं प्रत्याचष्टे। विवक्षा हि शब्दव्युत्पत्तेः प्रधानं कारणम्। न चेह प्रकर्षयोगात्प्राक्स्त्रीत्वं विवक्ष्यते, तस्मादस्त्रीप्रत्ययान्तादेवातिशायनप्रत्ययः क्रियते, तदन्तस्य तु स्त्रीत्वविवक्षायां स्त्रीप्रत्यय इति मन्यते ॥

*आन्महतः समानाधिकरणजातीययोः* ॥ *महतः पुत्रो महत्पुत्र इति*। ननु चात्र 'आन्महतः' इत्येतावानेव योगः कर्तव्यः, ततः 'जातीये च' इति द्वितीयः, तत्र पूर्वस्मिन् योगे उत्तरपदेन समासः सन्निधाप्यते, स च लक्षणप्रतिपदोक्तपरिभाषया 'सन्महत्' इत्यादिना यो विहितः स एव ग्रहीष्यते, स च समानाधिकरण एवेति अनर्थकं समानाधिकरणग्रहणम्, तदेतदाशङ्कते तावत्— *लक्षणो-*

न्यासः

'विदेः शतुर्वसुः' इति वस्वादेशः, 'वसोः सम्प्रसारणम्' परपूर्वत्वम्, पूर्ववन् ङीप्।

पुंवद्भावोऽप्यत्र पक्षे वक्तव्य इति। श्रेयस्तरा, विद्वत्तरेति पक्षे यथा स्यात्। विद्वत्तरेति 'वसुस्रंसु' इति सकारस्य दकारः 'खरि च' इति तकारः।

प्रकर्षयोगादित्यादिनोपसङ्ख्यानं प्रत्याचष्टे। शब्दानां व्युत्पत्तौ प्रवृत्तौ च न वस्तुसन्निधानं प्रधानं कारणम्, अपि तु विवक्षैव। न चैवं पूर्वं प्रकर्षयोगात् स्त्रीत्वं विवक्षितम्। तस्मादस्त्रीप्रत्ययान्तादेवातिशायिकेन भवितव्यम्। आतिशायिकप्रत्ययान्तात् तु स्त्रीप्रत्ययेनेति सिद्धं श्रेयस्तरेत्यादि रूपम्। ननु च ङ्याब्ग्रहणं तदन्तात् तद्धितविधानार्थमित्युक्तम्, तत् कथमस्त्रीप्रत्ययान्तात् तद्धितप्रकर्षप्रत्ययो युज्यते? नैतत्; अत्र विषये स्त्रीत्वतद्धितार्थयोर्युगपद् विवक्षामभिप्रेत्य तदुक्तम्, न तु यत्र विषये प्राक् प्रकर्षार्थेन सम्बन्धात् स्त्रीत्वस्य विवक्षा नास्ति तमभिप्रेत्येति किमत्र न युज्यते! ॥

आन्महतः समानाधिकरणजातीययोः ॥ महादेवः, महाब्राह्मण इति। 'सन्महत्' इत्यादिना कर्मधारयः। महाबाहुरिति बहुव्रीहिः।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


महाबाहुरिति । तदर्थं समानाधिकरणग्रहणं वक्तव्यम् ।

अमहान् महान् सम्पन्नो महद्भूतश्चन्द्रमाः – इत्यत्र गौणत्वान्महदर्थस्य न भवत्यात्त्वम् ।

पदमञ्जरी

क्त्वादिति । निराकरोति—*बहुव्रीहावपीति* । *तदर्थमिति* । बहुव्रीहावपि यथा स्यादित्येवमर्थमित्यर्थः । लक्षणप्रतिपदोक्तपरिभाषाया निवृत्त्यर्थमिति वा ।

इह *अमहान् महान्सम्पन्नो महद्भूतश्चन्द्रमा इति* महच्छब्दो भूतशब्दश्चैकस्मिन्नर्थे चन्द्रमसि वर्तेते इति सामानाधिकरण्यादात्त्वं प्राप्नोति । स्यादेतत्—अभूततद्भावे च्विर्विधीयते, अभूततद्भावश्च कः ? कारणस्य विकारात्मनाऽभूतस्य तदात्मना भावः, तत्र प्रकृतिः कर्त्री, न विकृतिः; तथा च—सङ्घीभवन्ति ब्राह्मणाः, पटीभवन्ति तन्तवः, अत्वं त्वं सम्पद्यते त्वद्भवतीति प्रकृत्याश्रयेण बहुवचनप्रथमपुरुषौ दृश्येते, न विकृत्याश्रयेणैकवचनमध्यमपुरुषौ, ततश्च भूत इति क्तप्रत्ययो भवन् क्रियायाः कर्तर्यमहत्युत्पन्नः, न तु विकारे महति; ततः किम् ? अमहतो भूतेन सामानाधिकरण्यम्, न तु महतः ? न ह्यवस्थावत एकत्वेऽप्यवस्थयोः सामानाधिकरण्यं सम्भवति; नहि भवति बालश्चासौ स्थविरश्चेति, भवति तु

न्यासः

लक्षणोक्तत्वादित्यादिना परमतमाविष्कृत्य निराकरोति । स्यादेतत्— उत्तरपदेन समासः सन्निधापितः, समासे हि सत्युत्तरपदं भवति, स च समासो लक्षणप्रतिपदोक्तपरिभाषया महतो यः प्रतिपदोक्तः 'सन्महत्' इत्यादिना साक्षाद्विशेषविहितः स एव गृह्यते, न तु यो लाक्षणिकः सामान्यलक्षणोक्तश्च समासः महत्पुत्र इति ? अत्र षष्ठीति; सामान्यलक्षणेन विहितत्वात्, तस्मादत्र न भविष्यतीति । यद्येवम्, बहुव्रीहावपि न स्यात्; तस्यापि लाक्षणिकत्वात् । तदर्थमित्यादि । बहुव्रीहावप्यात्त्वं यथा स्यादित्येवमर्थं समानाधिकरणग्रहणं कर्त्तव्यम् । तत्र सत्येषा परिभाषा नोपतिष्ठते । यद्युपतिष्ठते, समानाधिकरणमनर्थकं स्यात्; महतो यः प्रतिपदोक्तः समासस्तस्य समानाधिकरणपदत्वात् । तस्याश्चानुपस्थाने सति बहुव्रीहावप्यात्त्वं भवति । असति तु समानाधिकरणग्रहणे तया परिभाषयेहोपस्थातव्यम् । ततश्च यथा महत्पुत्र इत्यत्र न भवति, तथा बहुव्रीहावपि महाबाहुरित्यत्र न स्यात् ।

'अमहान् महान् सम्पन्नो महद्भूतश्चन्द्रमा इति यत्रार्थे च्व्यन्तो महच्छब्दो वर्त्तते तत्रैव भूतशब्दोऽपि, तस्मात् सामानाधिकरण्ये सत्यात्त्वेन भवितव्यम्'– इति कस्यचिद् भ्रान्तिः स्यात्, अतस्तां निराकर्तुमाह—अमहान् महानित्यादि । महद्भूत इति । महच्छब्दाद् 'अभूततद्भावे' इत्यादिना च्विः, तस्य 'ऊर्यादिच्विडाचश्च' इति गतिसंज्ञ-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


पदमञ्जरी

बालश्चासौ देवदत्तश्चेति, अतो वैयधिकरण्यादात्त्वाभाव इति। यद्येवम्, अमहती महती सम्पन्ना ब्राह्मणी महद्भूता ब्राह्मणीति पुंवद्भावोऽपि न स्याद्वैयधिकरण्यादेव ? यथा प्रकृतेः कर्तृत्वं दृष्टं तथा विकृतेरपि दृश्यते। तथा च पस्पशायां भाष्यम्—'सुवर्णपिण्डः खदिराङ्गारवर्णे कुण्डले भवति' इति। तथा 'क्लृपि सम्पद्यमाने चतुर्थी वक्तव्या' इति सम्पद्यकर्तरि विधीयमाना चतुर्थी विकाराद्भवति—मूत्राय कल्पते यवागूरिति, न प्रकृतेः। तथा असङ्घो ब्राह्मणसङ्घो भवति, अपटस्तन्तवः पटो भवतीति विकाराश्रयं वचनं दृश्यते; तत्र यदि विकृतेः कर्तृत्वमाश्रित्य सामानाधिकरण्याश्रयः पुंवद्भावो विधीयेत, आत्त्वमपि स्यात्। अथ प्रकृतेः कर्तृत्वाद्वैयधिकरण्यादात्त्वं न स्यात्, पुंवद्भावोऽपि न स्यात् ? उच्यते; दर्शितं तावदिदं यथा च्विविषये द्वयोरपि प्रकृतिविकृत्योः कर्तृत्वमिति। युक्तं चैतत्, यदि विकृतेः कर्तृत्वमाश्रित्य प्रत्ययः। यदा चैकोऽर्थः प्रकृतिविकारात्मक आश्रीयते, तदा परिणामव्यवहारः। उक्तं च—

जहद्धर्मान्तरं पूर्वमुपादत्ते यदा परम्।
तत्त्वादप्रच्युतो धर्मी परिणामः स उच्यते ॥ इति।

यदा त्वन्यतरव्यवस्था न विवक्ष्यते, तदा च्वेरभावः—तन्तवो भवन्ति, पटो भवतीति, तत्र योऽयं पूर्वकं धर्मं जहदुत्तरं चोपाददत्सम्मूर्छितोऽर्थः सञ्जायमानः सम्पद्यकर्तेति चोच्यते, तदभेदाच्च पूर्वोत्तरावस्थयोरपि कर्तृत्वम्, अत एतदपि निरस्तम्—असत्या उत्तरावस्थाया उत्पत्तौ शशविषाणमप्युत्पद्येत, सत्याश्च पूर्वावस्थाया उत्पत्तौ सर्व एव पटादयः सर्वदोत्पद्यमाना एव भवेयुरिति। कथं

न्यासः

कत्वाद् भूतशब्देन 'कुगतिप्रादयः' इति समासः। गौणत्वादित्यादि। लोके हि शब्दादुच्चारिताद् गौणमुख्यार्थसम्भवे सति मुख्यार्थ एव सम्प्रत्ययो भवति, न तु गौणेऽप्रधाने। तथा हि—'गौरानीयताम्' इत्युक्ते सास्नादिमानेवानीयते, न तु वाहीक इति। तस्मादिहापि महच्छब्दादुच्चारितान्मुख्य एव महदर्थे सम्प्रत्ययो भवति, न गौणे। गौणश्चात्र महदर्थः। तदभिधानाच्च महच्छब्दोऽपि गौण इति न भवत्यात्त्वम्। ननु च महत्त्वेन युक्तश्चन्द्रमा महानेव, तदयुक्तं महदर्थस्य गौणत्वम् ? नैतदस्ति; सर्वत्रैव हि च्व्यन्तेनार्थ आश्रितपूर्वावस्थ उपचरितोत्तरावस्थ उच्यते। तस्मादिहापि चन्द्रमा अमहत्त्वपूर्वावस्थो महच्छब्देनोच्यमान उपचरितमहत्त्वानुगतोत्तरावस्थ एवोच्यत इति युक्तास्य गौणता।

यदि गौणत्वान्महच्छब्दस्यात्त्वमिह न भवति, तदा पुंवद्भावोऽपि न स्यात्, अमहती ब्राह्मणी महती सम्पन्ना महद्भूतेति वृद्ध्यात्त्वे च गौणस्य गोशब्दस्य न स्याताम्,

१. 'भवतः' इति सम्प्रति पाठ उपलभ्यते।

CC-0. Gurukul Kangri Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


पदमञ्जरी

निरस्तम् ? किं सदुत्पद्यते, किम्वासत् ? पूर्वोत्तरयोरवस्थयोरनुवर्तमानं वस्तु तस्मान्न भिन्नेन नाप्यभिन्नेन केनचिद्रूपेणोत्पद्यते, यथा—मृद्वस्तु घटरूपेण। यद्येवम्, पूर्वावस्थया किमपराद्धम्, यत्सैव नोत्पद्यते ? न किञ्चिदपराद्धम्, असती तु सा कथं कर्त्री स्यात् ! विनष्टायां हि तस्यामुत्तरावस्थोत्पद्यते, यथा—घटः पिण्डावस्थायाम्। अतो मृद्वस्त्वेव तेन तेन पिण्डादिरूपेण परिणमत इति युक्तम्। एवमामूलप्रकृतितः। सा तु प्रकृत्यन्तरनिरपेक्षैव तेन तेन पृथिव्यादिरूपेण परिणमत इति। तदेवं स्थितमेतत्— सम्मूर्च्छितोऽर्थात्मा सम्पद्यकर्ता, तदभेदाच्च पूर्वोत्तरावस्थयोरपि कर्तृत्वमिति। उक्तं च—

पूर्वावस्थामभिजहत्संस्पृशन् धर्ममुत्तरम्।
सम्मूर्छित इवार्थात्मा जायमानोऽभिधीयते॥ इति।

तदेवं सति च्व्यर्थे वाक्ये क्वचित्प्रकृतेरेव कर्तृत्वम्, च्व्यन्तस्य गतित्वाद्, गतीनां च क्रियाविशेषणत्वादन्यद्धि भवनम्, अन्यद्धि सङ्घीभवनम्; तत्र केवले भवने सङ्घः कर्ता, सङ्घीभवने तु ब्राह्मणः। यथा—व्याकरणस्य सूत्रं करोतीति सूत्रं तद्विशेषणम्, व्याकरणं सूत्रयतीत्यत्र विशिष्टकरोतेर्व्याकरणं कर्म; तद्वदत्रापि। तत्र महद्भूतश्चन्द्रमा इति च्व्यन्तोऽयं महच्छब्दो भूतशब्दस्य प्रवृत्तिनिमित्ते भवने पर्यवस्यति। भूतशब्दस्तु महत्त्वेनासंस्पृष्टश्चन्द्रमसः स्वरूपे वर्तत इति वैयधिकरण्यादात्वाभावः। महद्भूता ब्राह्मणीत्यत्र तु मृगक्षीरादिवत्स्त्रीपूर्वपदस्याविवक्षितत्वात्सिद्धम्। यत्र तु स्त्रीत्वं विवक्षितम्, न भवत्येव तत्र पुंवद्भावः—अगोमती गोमती सम्पन्ना गोमतीभूता ब्राह्मणीति।

वृत्तिकारस्तु विकृतेः कर्तृत्वाश्रयेण सामानाधिकरण्ये सत्यपि परिहारमाह—*गौणत्वान्महदर्थस्येति*। गौणमुख्ययोर्हि मुख्ये सम्प्रत्ययो भवति, तद्यथा—गौरनुबन्ध्योऽजोऽग्नीषोमीय इति न वाहीकोऽनुबध्यते, स्वशास्त्रेऽपि 'स्वरूपम्' इत्यत्र रूपग्रहणेन ज्ञापितरूपवदर्थोऽपि तन्त्रमिति मुख्यार्थस्य महच्छब्दस्यात्र ग्रहणाद् गौणार्थस्यात्वाभावः। च्व्यन्तेषु हि एकस्य वस्तुनः प्रकृतिविकारात्मकतया द्व्यात्मकत्वं गम्यते। पटीभवतीति ह्युक्ते प्रागपटः सम्प्रति पटात्मना परिणमत इति प्रतीयते। पटो भवतीत्युक्ते नैवं प्रतीयते, किन्तु पटो रक्तादिरूपेण भवतीत्यपि गम्यते। तत्र केवलविकारावस्थावाचकस्य पटशब्दस्य प्रागवस्थायामनुगतावस्थायां च वृत्तिर्न लक्षणामन्तरेणोपपद्यते।

अपर आह— महत्त्वेन परिणामोन्मुखेऽमहति महच्छब्दस्य वृत्तिः। अत्र च प्रमाणम्—पटो भवतीति वाक्ये रक्तादिरूपेण भवतीत्यपि गम्यते, पटीभवतीत्यत्रापटः पटो भवतीत्येव गम्यते। एवमर्थे प्रवृत्तिरुपचारमन्तरेण नोपपद्यते इति गौणार्थत्वादात्वाभाव इति मन्तव्यम्। यदि तर्हि पुंवद्भावस्तु विशेषमनु-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

* महदात्त्वे घासकरविशिष्टेषूपसंख्यानं पुंवद्वचनं चासमाना-

पदमञ्जरी

पादाय विधीयमानो गौणार्थस्यापि भवति, शब्दविशेषोपादाने हि गौणमुख्य-न्यायः ? एवं तु गोमतीभूतेत्यत्र तु पुंवद्भावनिवृत्तये यतितव्यम्। यदि तर्हि शास्त्रेषु मुख्यार्थस्य ग्रहणम्, कथं तर्हि वाहीके वृद्ध्यात्वे भवतः—गौर्वाहीकः, गां वाहीकमिति ? उच्यते; पदस्य पदान्तरसम्बन्धे सति गौणार्थत्वाभिव्यक्तिः, विभक्त्यन्तं च पदान्तरेण सम्बध्यते, ततश्च पदस्य पदान्तरसम्बन्धे सति यत्कार्यं प्राप्तं तत्रैवासौ न्यायः, न प्रातिपदिककार्येष्विति मुख्य एव स्वार्थे सास्नादिमति वृद्ध्यात्वे अनुभूय गोशब्दो वाहीके वर्तिष्यते। इह तु महच्छब्दस्योत्तरपदे परतो विधीयमानमात्त्वं तस्यामवस्थायां मुख्यार्थस्यैव भवितुमर्हति। अनेनैव न्यायेन च तस्य गोशब्दस्य गोऽभर्वादित्यत्र 'ओत्' इति प्रगृह्यसंज्ञा न भवति, अग्निसोमौ माणवकावित्यत्र 'अग्नेः स्तुत्स्तोमसोमाः' इति षत्वं न भवति, 'ईदग्नेः' इतीत्त्वं च।

*महदात्त्व इत्यादि*। समुच्चये चशब्दः, नान्वाचये। तेन यत्रैव पुंवद्भाव-स्तत्रैवात्त्वम्।

न्यासः

गौर्वाहीकस्तिष्ठतीति वृद्धिर्न स्यात्, 'गोतो णित्' इति गौणाद् गोशब्दात् परस्य सर्वनाम-स्थानस्य णित्त्वेऽसति गां वाहीकमानयेत्यत्र 'औतोऽम्शसोः' इत्यात्त्वं न स्यात् ? नैष दोषः; पुंवद्भावस्तावत् 'स्त्रियाः पुंवत्' इति योगविभागाद्भविष्यति। योगविभागश्चावश्यं कर्त्तव्यो गर्भिभार्य इत्याद्यर्थः, महत्या घासो महाघास इत्याद्यर्थश्च; सोऽन्यार्थः क्रियमाण एतदर्थोऽपि भविष्यति। ननु च क्रियमाणेऽपि योगविभागे नैवात्र पुंवद्भावः प्राप्नोति, महदर्थस्य गौणत्वात्, योगविभागस्य चान्यत्र चरितार्थत्वात् ? एवं तर्हि 'पुंवत् कर्मधारय' इति सूत्रे द्वितीयः पुंवदिति योगविभागः करिष्यते, स गौणार्थो भविष्यति। वृद्ध्यात्त्वा-भावदोषोऽपि न प्रसजति; यस्माद् वाक्यात् तत्र गौणत्वं प्रतीयते। पदस्य तु मुख्य एवार्थः, न च पदसंस्कारवेलायां वाक्यार्थोऽपेक्ष्यते।

महदात्त्व इत्यादि। समानाधिकरण आत्त्वपुंवद्भावौ विधीयमानौ व्यधिकरणे न प्राप्नुतः। तस्माद्व्यधिकरणेऽप्युत्तरपदे घासादौ महदात्त्वस्योपसङ्ख्यानं कर्त्तव्यम्। उप-सङ्ख्यानमित्यस्य प्रतिपादनमित्यर्थः। तत्रेदं प्रतिपादनम्—'आन्महतः' इत्यत्रापि 'आत्' इति योगविभागं करिष्यति, तेन महत्या घासो महाघास इत्यादावात्त्वं भविष्यतीति। स चावश्यं योगविभागः कर्त्तव्यः—अष्टाकपालमित्याद्यर्थम्, सोऽन्यार्थं क्रियमाण एतदर्थोऽपि भवति। पुंवद्वचनञ्चेत्यादि। घासकरविशिष्टेष्वित्यपेक्ष्यते। पुंवद्भावस्य वचनं व्याख्यानं कर्त्तव्यम्, तच्च पूर्वमेव कृतम्।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

धिकरणार्थम् ※। महत्या घासः महाघासः। महत्याः करः महाकरः। महत्या विशिष्टः महाविशिष्टः।

※ अष्टनः कपाले हविष्युपसंख्यानम् ※। अष्टाकपालं चरुं निर्वपेत्। हविषीति किम्? अष्टकपालं ब्राह्मणस्य।

※ गवि च युक्तेऽष्टन उपसंख्यानं कर्त्तव्यम् ※। अष्टागवेन शकटेन। युक्त इति किम्? अष्टगवं ब्राह्मणस्य।

पदमञ्जरी

*अष्टाकपालमिति*। अष्टसु कपालेषु संस्कृतमिति तद्धितार्थे समासः, 'संस्कृतं भक्षाः' इत्यण्, तस्य 'द्विगोः' इति लुक्। *अष्टकपालमिति*। समाहारे द्विगुः, पात्रादित्वात् स्त्रीत्वाभावः।

*अष्टागवेनेति*। अष्टौ गावो युक्ता अस्मिन्निति त्रिपदो बहुव्रीहिः, पूर्वयोर्द्वयोरुत्तरपदे द्विगौ 'गोरतद्धितलुकि' इति टच्समासान्तः। तत्र दीर्घत्वेन युक्तार्थसम्प्रत्ययाद्युक्तशब्दस्य निवृत्तिः। समाहारद्विगोर्वा साहचर्यादभेदोपचाराद्युक्तार्थे वृत्तिः।

न्यासः

अष्टनः कपाल इत्यादि। अत्राप्युपसङ्ख्यानशब्दस्य प्रतिपादनमर्थः। तच्च प्रतिपादनं पूर्वमेव कृतम्। अष्टाकपालमिति। अष्टसु कपालेषु संस्कृतमिति 'तद्धितार्थ' इत्यादिना समासः, 'संस्कृतं भक्षाः' इत्यण्, तस्य 'द्विगोर्लुगनपत्ये' इति लुक्। अष्टकपालं ब्राह्मणस्येति। अष्टानां कपालानां समाहारोऽष्टकपालम्, समाहारे द्विगुः। अत्र पात्रादित्वात् स्त्रियां न भाष्यते। तेन 'द्विगोः' इति ङीब् न भवति।

गवि च युक्त इत्यादि। गोशब्दे चोत्तरपदे युक्तार्थे गम्यमानेऽष्टन्शब्दस्यात्त्वस्य प्रतिपादनं कर्त्तव्यम्। तच्च प्रतिपादनं पूर्वमेव कृतम्। अष्टागवेन शकटेनेति। अष्टौ गावो युक्ता अस्मिन्निति त्रिपदोऽयं बहुव्रीहिः। युक्तशब्दस्तु गम्यमानत्वाद् वृत्तौ न प्रयुज्यते, यथा दध्योदन इत्यत्रोपसिक्तशब्दः। यदि च बहुव्रीहिरयम्, तदा 'गोरतद्धितलुकि' इति टच् समासान्तो न प्राप्नोति; तत्पुरुषाधिकारात्? मा भूत् टच्, 'अच् प्रत्यन्ववपूर्वात्' इत्यत्र अजिति योगविभागाद् भविष्यति, यथा—कृष्णभूमः, पद्मनाभ इत्यादौ। अथ वा—अष्टानां गवां समाहारोऽष्टगवम्, अष्टगवेन युक्तमष्टागवम्। न चैवं युक्तशब्दस्य प्रयोगः प्रसजति; पदैकदेशस्य प्रयोगात्, यथा—सत्यभामा भामा, भीमसेनो भीमः, बलभद्रो बल इति।

एकादश इत्यत्रापि तत एव योगविभागादात्त्वं वेदितव्यम्। योगविभागस्य च लिङ्गम्—'प्रागेकादशभ्यः' इति निर्देशः।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

तपरकरणं विस्पष्टार्थम् ॥

द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः ॥ ४७ ॥

द्वि, अष्टन् — इत्येतयोराकारादेशो भवति संख्यायामुत्तरपदे अबहुव्रीह्यशीत्योः । द्वादश । द्वाविंशतिः । द्वात्रिंशत् । अष्टादश । अष्टाविंशतिः । अष्टात्रिंशत् ।

द्व्यष्टन इति किम् ? पञ्चदश । संख्यायामिति किम् ? द्वैमातुरः । आष्टमातुरः । अबहुव्रीह्यशीत्योरिति किम् ? द्वित्राः । द्विदशाः । द्व्यशीतिः ॥

पदमञ्जरी

*तपरकरणं विस्पष्टार्थमिति* । न भिन्नकालानां निवृत्त्यर्थम्, अनण्त्वात्, नापि गुणभिन्नानां तत्कालानां ग्रहणम्; अभेदकत्वाद् गुणानाम् । आनङ्प्रकरण एवास्मिन्वक्तव्येऽत्र 'आत्' इति वचनं योगविभागार्थम् । तेनाष्टाकपालादावात्त्वसिद्धिः । एवं चैकादशेऽन्यत्राप्यात्त्वं भवति, तथा च 'प्रागेकादशभ्योऽच्छन्दसि' इति प्रयोगः ॥

*द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः* ॥ अत्र संख्यातानुदेशो न भवति । यदि स्याद्, अष्टनोऽशीतौ प्रतिषेधः स्यात्, तथा च तस्य वैयर्थ्यम् । प्रतिषिद्धेऽप्यात्त्वे सवर्णदीर्घत्वेन भवितव्यम् । द्वादश, द्वाविंशतिरित्यादौ समाहारे द्वन्द्वः । 'स नपुंसकम्' इत्येतत्तु न भवति; लोकाश्रयत्वाल्लिङ्गस्य ।

*द्वित्रा इति* । द्वौ वा त्रयो वेति वार्थे 'संख्ययाव्ययासन्न' इति समासः,

न्यासः

तपरकरणं विस्पष्टार्थमिति । अथ भिन्नकालानां निवृत्त्यर्थं कस्मान्न भवति ? भाव्यमानेनाणा सवर्णानामग्रहणात् । गुणान्तरभिन्नानां तर्हि ग्रहणं कस्मान्न भवति ? गुणानामभेदकत्वात् ॥

द्व्यष्टनः सङ्ख्यायामबहुव्रीह्यशीत्योः ॥ सङ्ख्यातानुदेशोऽत्र न भवति । यदि हि स्यादष्टनोऽशीतौ प्रतिषेधः स्यात्, तथा च तस्य वैयर्थ्यं स्यात् । प्रतिषिद्धे ह्यात्त्वे सवर्णदीर्घत्वेन भवितव्यम् । अल्पाच्तरत्वाच्चाशीतिशब्दस्य पूर्वनिपाते कर्त्तव्ये परनिपातेन लक्षणव्यभिचारचिह्नेन सङ्ख्यातानुदेशाभावः सूचितः । द्वादशेति । द्वौ च दश चेति द्वन्द्वः । अथ वा - द्वाभ्यामधिका दशेति समानाधिकरणाधिकारे 'शाकपार्थिवादीनामुपसङ्ख्यानमुत्तरपदलोपश्च' इत्युत्तरपदलोपी तत्पुरुषसमासः । एवं द्वाविंशतिरित्यादावपि वेदितव्यम् ।

द्वैमातुर इति । द्वयोर्मात्रोरपत्यमिति विगृह्य तद्धितार्थे समासः, ततः 'मातु-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


* प्राक् शतादिति वक्तव्यम् *। इह मा भूत् – द्विशतम्। द्विसहस्रम्। अष्टशतम्। अष्टसहस्रम् ॥

त्रेस्त्रयः ॥ ४८ ॥

'त्रि' इत्येतस्य 'त्रयस्' इत्ययमादेशो भवति संख्यायामबहुव्रीह्यशीत्योः। त्रयोदश। त्रयोविंशतिः। त्रयस्त्रिंशत्।

'संख्यायाम्' इत्येव – त्रैमातुरः।

'अबहुव्रीह्यशीत्योः' इत्येव – त्रिदशाः। त्र्यशीतिः।

'प्राक् शतात्' इत्येव – त्रिशतम्। त्रिसहस्रम् ॥

विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम् ॥ ४९ ॥

चत्वारिंशत्प्रभृतौ सङ्ख्यायामुत्तरपदेऽबहुव्रीह्यशीत्योः सर्वेषां

पदमञ्जरी

'बहुव्रीहौ संख्येये डच्'। द्विर्दश द्विदशाः। सुजर्थे समासः॥

त्रेस्त्रयः॥ सन्धिवेलादिषु त्रयोदशशब्दस्य पाठात्सकारान्तोऽयमादेशः॥

न्यासः

रुत्सङ्ख्यासम्भद्रपूर्वायाः' इत्यण्; उकारश्चान्तादेशः। द्वित्रा इति। द्वौ वा त्रयो वेति विगृह्य 'सङ्ख्ययाव्यय' इत्यादिना बहुव्रीहिः, 'बहुव्रीहौ संख्येये' इत्यादिना डच् समासान्तः, टिलोपः। द्विदशा इति। पूर्ववद् डच्, बहुव्रीहिः। द्विर्दशेति विग्रहः। सुजर्थेऽयं समासः। अत्र हि दशसम्बन्धिन्यावृत्तिर्दशशब्देन लक्ष्यमाणा द्विशब्देन सङ्ख्यायते। तेन द्वौ दशकावित्ययमर्थो वेदितव्यः। समासः सुजर्थं गमयितुं समर्थ इति वृत्तौ सुज् न प्रयुज्यते। द्व्यशीतिरिति। पूर्ववद् द्वन्द्वः, उत्तरपदलोपी वा तत्पुरुषः।

प्राक् शतादित्यादि। शतात् प्राग् या सङ्ख्या तद्वाचिन्युत्तरपदे द्व्यष्टन आत्वं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम् – 'विभाषा चत्वारिंशत्' इत्यत्र वक्ष्यमाणविभाषाग्रहणं सिंहावलोकितन्यायेनेहाप्युपतिष्ठते, सा च व्यवस्थितविभाषा। तेन प्राक् शताद् या सङ्ख्या तद्वाचिन्युत्तरपदे भविष्यति। शतादिवाचिनि तु न भविष्यति। एवमुत्तरयोरपि योगयोः प्राक्शतात् कार्यं भवतीति वेदितव्यम्॥

त्रेस्त्रयः॥ 'त्रयः' इति सकारान्तोऽयमादेशः। कुत एतत्? सन्धिवेलादिषु त्रयोदशीशब्दपाठात्। अकारान्ते हि सति त्रयदशीति पाठः स्यात्। त्रयोदश, त्रयोविंशतिरिति। 'ससजुषो रुः' इति रुत्वम्, 'हशि च' इत्युत्वम्, 'आद्गुणः'। त्रिर्दश इति पूर्ववत् सुजर्थे बहुव्रीहिः, डच् समासान्तः॥

विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम्॥ सर्वग्रहणं द्व्यष्टनोरपि यथा स्यादित्येव-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


द्व्यष्टन्, त्रि – इत्येतेषां यदुक्तं तद्विभाषा भवति। द्विचत्वारिंशत्, द्वाचत्वारिंशत्। त्रिपञ्चाशत्, त्रयःपञ्चाशत्। अष्टपञ्चाशत्, अष्टापञ्चाशत्।

सर्वेषाम्-ग्रहणं त्रयाणामपि यथा स्यात्[1]।

प्राक् शतादित्येव – द्विशतम्। अष्टशतम्। त्रिशतम्[2]॥

**हृदयस्य हृल्लेखयदण्लासेषु ॥ ५० ॥**

हृदयस्य 'हृत्' इत्ययमादेशो भवति लेख, यत्, अण्, लास – इत्येतेषु परतः। हृदयं लिखतीति हृल्लेखः। यत् – हृदयस्य प्रियं हृद्यम्। अण् – हृदयस्येदं हार्दम्। लास – हृदयस्य लासो हृल्लासः।

'लेख' इत्यणन्तस्य[3] ग्रहणमिष्यते। घञि तु – हृदयस्य लेखो हृदयलेखः।

पदमञ्जरी

*विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम्॥ सर्वेषांग्रहणमित्यादि।* असति हि तस्मिन् अनन्तरस्य 'त्रेस्त्रयः' इत्यस्यैव विकल्पः स्यात्॥

*हृदस्य हृल्लेखयदणलासेषु॥ अणन्तस्य ग्रहणमिष्यत इति।* व्याख्यानात्।

न्यासः

अर्थम्; इतरथा हि 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति त्रेरेव स्यात्। मण्डूकप्लुतिन्यायेन द्व्यष्टन इत्येतदपीहानुवर्त्तिष्यते, ततोऽयमदोष इति चेत्? एवं तर्हि विस्पष्टार्थं सर्वग्रहणमिति॥

हृदयस्य हृल्लेखयदण्लासेषु॥ हृल्लेख इति। 'कर्मण्यण्'। हृद्य इति। 'प्राग्घिताद् यत्'। हार्दमिति। 'तस्येदम्' इति प्राग्दीव्यतोऽण्। हृल्लास इति। लसनं लासः, भावे घञ्। 'कृद्योगा च षष्ठी समस्यते' इति षष्ठीसमासः।

लेख इत्यणन्तस्य ग्रहणमिति। एतच्च कात्यायनप्रभृतीनां प्रमाणभूतानां वचनाद् विज्ञायते। कात्यायनेनोक्तं यत्—'अण्ग्रहणे स्वरूपग्रहणं द्रष्टव्यम्, कुतः? लेखग्रहणात्' इति। भाष्यकृताप्युक्तम्—'सर्वत्रैवोत्तरपदाधिकारे प्रत्ययग्रहणे स्वरूपग्रहणं द्रष्टव्यम्, कुतः? लेखग्रहणात्' इति। एतच्च वचनद्वयं कथमुपपद्यते? यदि लेख इत्यणन्तस्य ग्रहणं भवति, नान्यथा। अथ घञन्तस्यापि लेखशब्दस्य ग्रहणं कस्मान्न

---

१. अयमंशो न लभ्यते सर्वत्र।

२. इदमुदाहरणं क्वचिन्नास्ति।

३. क्वचिद् 'अणन्तग्रहणम्' इति समस्तः पाठः।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


एतदेव लेखग्रहणं ज्ञापकम् – उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्ताग्रहणस्य ॥

वा शोकष्यञ्रोगेषु ॥ ५१ ॥

शोक, ष्यञ्, रोग – इत्येतेषु परतो हृदयस्य वा 'हृत्' इत्ययमादेशो भवति। हृच्छोकः, हृदयशोकः। ष्यञ् – सौहार्द्यम्, सौहृदय्यम्। ब्राह्मणादित्वात् ष्यञ्। हृदादेशपक्षे 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' इत्युभयपदवृद्धिः। रोगे – हृद्रोगः, हृदयरोगः।

हृदयशब्देन समानार्थो हृत्-शब्दः प्रकृत्यन्तरमस्ति, तेनैव सिद्धे विकल्पविधानं प्रपञ्चार्थम् ॥

पादस्य पदाज्यातिगोपहतेषु ॥ ५२ ॥

पादस्य 'पद' इत्ययमादेशो भवति आजि, आति, ग, उपहत – इत्येतेषूत्तरपदेषु। पादाभ्यामजतीति पदाजिः। पादाभ्यामततीति पदातिः। 'अज्यतिभ्यां पादे च' इत्यौणादिक इण्प्रत्ययः। तत्राजेर्वीभावो न

पदमञ्जरी

अत्र व्यावर्त्यं दर्शयति—*घञि त्विति*। यदा चाणन्तस्य ग्रहणं न घञन्तस्य, तदा लेखग्रहणस्य ज्ञापकत्वमुपपद्यते ॥

*वा शोकष्यञ्रोगेषु* ॥ *हृदयशब्देनेत्यादि*। यदुक्तं तन्नानुमन्यन्ते; अत एव विकल्पविधानात्, 'पद्दन्नोमास्हृत्' इत्यत्र हृदादेशविधानाच्च ॥

*पादस्य पदाज्यातिगोपहतेषु* ॥ आकारान्तोऽयमादेशोऽविभक्तिकः। *अज्यति-*

न्यासः

विज्ञायते ? इत्याह—घञि त्वित्यादि। एतदेवेत्यादि। अण्ग्रहणादेव तदन्तस्य लेखशब्दस्य ग्रहणे सिद्धे तस्य पृथग्ग्रहणं क्रियमाणमेतज् ज्ञापयति उत्तरपदाधिकारे प्रत्यय ग्रहणे तदन्तं न गृह्यत इति। तेनेह यदण्ग्रहणे घरूपादिसूत्रे च घादिप्रत्ययग्रहणे प्रत्ययमात्रं गृह्यते, न तदन्तविधिरिति भावः ॥

वा शोकष्यञ्रोगेषु ॥ सौहार्द्यमिति। शोभनं हृदयमस्येति बहुव्रीहिः। ततः ष्यञ्।

हृदयशब्देनेत्यादि। हृदयशब्देनेह समानार्थे हृच्छब्दे सति यदा हृच्छब्दस्य प्रयोगस्तदा हृच्छोक इति भविष्यति, यदा हृदयशब्दस्य तदा हृदयशोक इति, ततश्च तेनैव प्रकृत्यन्तरेण सिद्धे विकल्पविधानमिदं न कर्तव्यम्। एतत् क्रियते तु प्रपञ्चार्थम्। स एव सिद्धप्रयोगोऽनेन सूत्रेण कथ्यत इति ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



भवति, अत एव निपातनात् । पादाभ्यां गच्छतीति पदगः । पादेनोपहतः पदोपहतः । पादशब्दो वृषादित्वादाद्युदात्तः, तस्य स्थाने पदादेश उपदेश एवान्तोदात्तो निपात्यते । तेन पदोपहत इति 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वेनान्तोदात्तत्वं भवति । पदाजिः, पदातिः, पदगः – इत्येतेषु कृत्स्वरेण समासस्यैवान्तोदात्तत्वम् ॥

पदमञ्जरी

*भ्यामिति* । 'अज गतिक्षेपणयोः', 'अत सातत्यगमने' । *पदग इति* । 'डप्रकरणेऽन्यत्रापि दृश्यते' इति डः । *उपदेश एवेति* । समसनक्रियानन्तरमेव प्रागेव समासस्य प्राप्तस्वरादित्यर्थः । *अन्तोदात्तो निपात्यत इति* । अन्यथाऽऽन्तर्यत आद्युदात्तः स्यात् । *तेनेत्यादिना* अन्तोदात्तनिपातनस्य प्रयोजनमाह । *पदाजिरित्यादिनोपदेशग्रहणस्य* । यदि कृत्स्वरे कृते सत्युत्तरकाले पदशब्दोऽन्तोदात्त आदेशः स्यात्, तदा सतिशिष्टत्वात्तेन कृत्स्वरो बाध्येत । उपदेश एव त्वन्तोदात्तादेशे कृत्स्वर एव सतिशिष्टो भवति । न चान्तोदात्तनिपातनस्य वैयर्थ्यम्; पदोपहत इत्यत्र श्रूयमाणत्वादिति पिण्डार्थः ॥

न्यासः

पादस्य पदाज्यातिगोपहतेषु ॥ पदाजिरिति । 'अज गतिक्षेपणयोः' । पदातिरिति । 'अत सातत्यगमने' । 'अज्यतिभ्याञ्च पादे च' इत्यौणादिक इण्प्रत्यय इति । अत्र 'जनिघसिभ्यामिण्' इत्यत इण्ग्रहणानुवृत्तेः । यदौणादिक इण् प्रत्ययः, एवं सति तत्र 'अजेर्व्यघञपोः' इति वीभावः कस्मान्न भवति ? इत्याह— तत्रेत्यादि । पदग इति । 'अन्तात्यन्ताध्वदूरपार' इत्यादौ सूत्रे 'डप्रकरणेऽन्यत्रापि दृश्यते' इति वक्तव्यमित्युक्तम् । तेन पादशब्देऽप्युपपदे गमेर्डप्रत्ययः । पदोपहत इति । 'कर्तृकरणे कृता बहुलम्' इति समासः, पूर्वत्र तूपपदसमासः । अकारान्तोऽयमादेशः । प्रथमायाश्च लुकं कृत्वा निर्देशः । पादशब्दोऽयमित्यादि । 'वृषादीनाञ्च' ... 'कर्षात्वतो घञोऽन्त उदात्तः' इत्यन्तोदात्तत्वे प्राप्ते पादशब्दस्य वृषादित्वादाद्युदात्तत्वं विधीयते, ततश्च तस्य स्थाने पदादेशो विधीयमान आन्तरतम्यादाद्युदात्त एव स्यात्, अन्तोदात्तश्चेष्यते । तस्मादन्तोदात्तो निपात्यते उपदेशावस्थायामेव । तेनेत्यादिनान्तोदात्तनिपातनस्य फलं दर्शयति । पदाजिः, पदातिरित्यादिनाऽऽपदेशग्रहणस्य । यदि 'गतिकारकोपपदात् कृत्' इति प्रकृतिस्वरे कृते पदशब्दस्यान्तोदात्तत्वं निपात्यते, तदा तस्य सतिशिष्टत्वं स्यात्, ततश्च पदाजिः, पदातिः, पदग इत्येषु कृत्स्वरो बाध्यते; सतिशिष्टस्वरस्य बलीयस्त्वात् । उपदेशावस्थायां त्वन्तोदात्तत्वनिपातने कृत्स्वर एव सतिशिष्टो भवति । अतस्तेन समासस्यैवान्तोदात्तत्वं भवति, न पदशब्दस्य ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## पद्यत्यतदर्थे ॥ ५३ ॥

यत्प्रत्यये परतः पादस्य पदित्ययमादेशो भवत्यतदर्थे। पादौ विध्यन्ति पद्याः शर्कराः। पद्याः कण्टकाः।

अतदर्थं इति किम्? पादार्थमुदकं पाद्यम्।

* पद्भावे इके चरतावुपसङ्ख्यानम् *। पादाभ्यां चरति पदिकः। 'पर्पादिभ्यः ष्ठन्' इति पादशब्दात् ष्ठन्प्रत्ययः।

शरीरावयववचनस्य पादशब्दस्य ग्रहणमिहेष्यते, तेन 'पणपादमाषशताद्यद्' इत्यत्र पदादेशो न भवति। द्विपाद्यम्। त्रिपाद्यम्॥

### पदमञ्जरी

*पद्यत्यतदर्थे*॥ इके *चरताविति*। चरत्यर्थे इक् प्रत्ययः कृत्प्रत्ययस्तत्रेत्यर्थः। एतद्वार्त्तिकादर्शनात्पर्पादिषु 'पादः पच्च' इति पठितम्।

*शरीरावयवस्येति*। व्याख्यानमत्र शरणम्। अपर आह—पूर्वत्र तावच्छरीरावयवस्य ग्रहणम्, तस्यैवाज्यादिषु करणत्वसम्भवात्; इहापि स एवानुवर्तते। 'ऋचः शे' इत्यत्र ऋग्विषये शरीरावयवस्यासम्भवाच्चतुर्थभागवचनस्य ग्रहणमिति। *तेनेत्यादि*। 'पणपादमाषशतात्' इत्यत्र हि परिमाणवचनैः पणादिभिः साहचर्यात्परिमाणस्य पादस्य ग्रहणम्, न शरीरावयवस्य। *द्विपाद्यमिति*। 'तेन

### न्यासः

पद्यत्यतदर्थे॥ पद्या इति। 'विध्यत्यधनुषा' इति यत्।

पाद्यमिति। पादशब्दात् तादर्थ्ये यत् इत्यनुवर्त्तमाने 'पादार्घाभ्याञ्च' इति यत्।

पद्भाव इत्यादि। पद्भावे कर्त्तव्येऽस्मिंश्चरत्यर्थे य इक् तस्मिन् कृते पद्भावस्योपसंख्यानम् = प्रतिपादनं कर्तव्यमित्यर्थः। तत्रेदं प्रतिपादनम्—पदिति योगविभागात् सिद्धमिति। पर्पादिष्वेव 'पादः पच्च' इति पाठात् सिद्धमिति वा।

शरीरावयवस्येत्यादि। कुतः पुनरेतल्लभ्यते? केचिदाहुः – व्याख्यानादयमर्थः प्रतिपत्तव्य इति। अन्ये त्वाहुः—पूर्वसूत्रे सामर्थ्याच्छरीरावयवस्य पादशब्दस्य ग्रहणम्। तत्राज्यातिप्रभृतीनि त्रीण्युत्तरपदानि गमनार्थानि, चतुर्थं तु हननार्थम्। तेषु गमनादिषु प्राण्यङ्गस्यैव पादशब्दस्य करणभावः सम्भवति, नेतरस्य। तस्मात् तत्र प्राण्यङ्गवाचिनः पादशब्दस्य ग्रहणम्, इहापि तदेवानुवर्तत इति युक्तम्—शरीरावयवस्य ग्रहणमिति। यद्येवम्, तदा 'ऋचः शे' इत्यत्रापि शरीरावयवस्य ग्रहणं स्यात्? नैष दोषः; ऋक्सम्बन्धिनः शरीरावयववचनस्यासम्भवात्। चतुर्थभागवचनः पादशब्दोऽत्र ग्रहीष्यते। तेनेत्यादि। यत एवं शरीरावयववचनपादशब्दस्येह ग्रहणम्, तेन 'पणपादमाष' इत्यादौ सूत्रे यः पादशब्दस्तस्य न पदादेशो भवति; न ह्यसौ शरीरावयववचनः, किं

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



हिमकाषिहतिषु च ॥ ५४ ॥

हिम, काषिन्, हति – इत्येतेषु पादशब्दस्य पदित्ययमादेशो भवति । हिम – पद्धिमम् । काषिन् – अथ पत्काषिणो यान्ति । हति – पद्धतिः ॥

ऋचः शे ॥ ५५ ॥

ऋक्सम्बन्धिनः पादशब्दस्य शे परतः पदित्ययमादेशो भवति । पच्छो गायत्रीं शंसति । पादंपादं शंसतीति 'संख्यैकवचनाच्च वीप्सायाम्' इति शस्प्रत्ययः ।

ऋच इति किम् ? पादशः कार्षापणं ददातीति ॥

पदमञ्जरी

क्रीतम्' इत्यत्रार्थे यत्प्रत्ययः । इदमप्यत्र शक्यं वक्तुम्—पादेन यद्विशेष्यते, पादस्य यो यत्, कश्च पादस्य यत् ? यस्ततो विहितः; द्विपाद्यमित्यत्र तु पाद-शब्दान्ताद् द्विगोर्यद्विहित इति ॥

*हिमकाषिहतिषु च* ॥ पादस्य हिमं शीतं *पद्धिमम्* । पादौ कषन्तीति *पत्काषिणः* = पादचारिणः । 'सुप्यजातौ' इति णिनिः । पादाभ्यां हन्यत इति *पद्धतिः* ॥

*ऋचः शे* ॥ *शे इति* शस्प्रत्ययस्येदमेकदेशानुकरणम्, अन्यस्य शशब्दस्या-सम्भवात् । ननु च सम्भवत्ययम्, पादे शेते 'अधिकरणे शेतेः' इत्यच् – पादश इति । नास्त्यस्य सम्भवः; न हि ऋक्पादे कश्चिच्छेते । यच्च लोमादिभ्यः

न्यासः

तर्हि ? परिमाणवचनः । कुत एतत् ? पणादिभिः परिमाणवचनैः साहचर्यात् । द्विपाद्यम्, त्रिपाद्यमिति । 'तेन क्रीतम्' इत्यर्थे यत्प्रत्ययः ॥

हिमकाषिहतिषु च ॥ पद्धिममिति । षष्ठीसमासः । पत्काषिण इति । 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनिः, उपपदसमासः । पद्धतिरिति । पादाभ्यां हन्यत इति पद्धतिः । क्तिन्नन्तेन हतिशब्देन 'कर्तृकरणे कृता बहुलम्' इति समासः ॥

ऋचः शे ॥ शे इति तद्धितस्य शस्प्रत्ययस्यावयवभूतो यः शशब्दस्तस्येह ग्रहणम्; अन्यस्य ऋक्पादात् परस्यासम्भवात् । ननु च पादे शेते इति 'अधिकरणे शेतेः' इत्यचि कृते पादश इत्यत्र शीङ्सम्बन्धी शशब्दः सम्भवति ? नैतदस्ति; न हि ऋक्पाद उपपदे शेतेर्धातोरचा भवितव्यम्; तत्र तु शयनासम्भवात्, अनभिधानाद्वा । योऽपि 'लोमादिपामादिपिच्छादिभ्यः शनेलचः' इति शो विधीयते, सोऽपि नैव ऋक्पादात् परः सम्भवति; तत्रानभिधानात् । लोमादिषु तस्यापाठाच्च ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## वा घोषमिश्रशब्देषु ॥ ५६ ॥

घोष, मिश्र, शब्द – इत्येतेषु चोत्तरपदेषु पादस्य वा 'पद्' इत्ययमादेशो भवति । पद्घोषः, पादघोषः । पन्मिश्रः, पादमिश्रः । पच्छब्दः, पादशब्दः ।

❋ निष्के चेति वक्तव्यम् ❋ । पन्निष्कः, पादनिष्कः ॥

## उदकस्योदः संज्ञायाम् ॥ ५७ ॥

उदकशब्दस्य संज्ञायां विषये 'उद' – इत्ययमादेशो भवति उत्तरपदे परतः । उदमेघो नाम यस्य औदमेघिः पुत्रः । उदवाहो नाम यस्य औदवाहिः पुत्रः ।

संज्ञायामिति किम् ? उदकगिरिः ।

### पदमञ्जरी

शः, तस्याप्यसम्भव एव; लोमादिषु पादशब्दस्याभावात् ॥

*वा घोषमिश्रशब्देषु* ॥ *पन्निष्क इति* । निष्कशब्दः सुवर्णजातिवचनः, पादशब्दः परिमाणवचनः, कर्मधारयः समासः ॥

*उदकस्योदः संज्ञायाम्* ॥ *उदमेघ इति* । षष्ठीसमासः, सादृश्यात्पुरुषस्य संज्ञा, पितुरप्रसिद्धत्वात्पुत्रेण व्यपदेशः । उदकं वहतीति 'कर्मण्यण्'— उदवाहः ।

### न्यासः

वा घोषमिश्रशब्देषु ॥ घोषशब्दशब्दाभ्यां षष्ठीसमासः, मिश्रशब्दे च 'पूर्वसदृश' इत्यादिना तृतीयासमासः ।

निष्के चेति वक्तव्यमिति । निष्कशब्दे चोत्तरपदे पादशब्दस्य पदित्ययमादेशो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेद व्याख्यानम्—'हिमकाषिहतिषु च' इत्यतश्चकारोऽत्रानुवर्तते, स चानुक्तसमुच्चयार्थः । अथ वा—सूत्रे 'वा' इति योगविभागः क्रियते, तेन निष्के चोत्तरपदे भविष्यतीति ॥

उदकस्योदः संज्ञायाम् ॥ उदमेघो नाम यस्यौदमेघिः पुत्र इति । पितुरप्रसिद्धत्वादुदमेघस्य तदपत्येन समाख्यातुं यस्यौदमेघिः पुत्र इत्युक्तम् । एतेन यस्यौदमेघिरपत्यं स उदमेघो वेदितव्यमिति दर्शयति । एवम्—उदवाहो नाम यस्यौदवाहिः पुत्र इत्यत्रापि वेदितव्यम् । उदमेघ इति षष्ठीसमासः, उदकपूर्णो वा मेघः—शाकपार्थिवादित्वान्मध्यमपदलोपी तत्पुरुषः, उदकं वहतीति उदवाहः —'कर्मण्यण्' । वक्तव्य इति व्याख्येय इत्यर्थः । तत्रेदं व्याख्यानम्—इहापि स एव चकारोऽनुवर्तते अनुक्तसमुच्चयार्थः, न चान्यत् समुच्चेतव्यमस्तीति । उदभावमेवासावुदकशब्दस्य

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


❀ संज्ञायामुत्तरपदस्य उदकशब्दस्य उदादेशो भवतीति वक्तव्यम् ❀ । लोहितोदः । नीलोदः । क्षीरोदः ॥

## पेषंवासवाहनधिषु च ॥ ५८ ॥

पेषं, वास, वाहन, धि – इत्येतेषु चोत्तरपदेषु उदकस्य 'उद' इत्ययमादेशो भवति । उदपेषं पिनष्टि । 'स्नेहने पिषः' इति णमुल् । वास – उदकस्य वास उदवासः । वाहन – उदकस्य वाहन उदवाहनः । धि – उदकं धीयतेऽस्मिन्नित्युदधिः ॥

## एकहलादौ पूरयितव्येऽन्यतरस्याम् ॥ ५९ ॥

### पदमञ्जरी

*क्षीरोद इति* बहुव्रीहिः । अत्र केचिदाहुः—उदकशब्देन समानार्थं उदशब्दोऽस्ति, तथा च संज्ञायामपि प्रयुज्यते— अप्रसन्नोद इति । इदं वचनं संज्ञायामुदकशब्दस्य प्रयोगनिवृत्त्यर्थमिति । एवं तु वक्ष्यमाणो विकल्पोऽनर्थकः स्यात् ॥

पेषंवासवाहनधिषु च ॥ असंज्ञार्थमिदम् । *उदधिरिति* । 'कर्मण्यधिकरणे च' इति किप्रत्ययः । घटादिरत्रोदधिः; समुद्रे पूर्वेणैव सिद्धेः ॥

### न्यासः

संज्ञायां समुच्चिनोति । तत्र कस्य समुच्चिनोति ? यस्य न प्राप्नोति । कस्य न प्राप्नोति ? उत्तरपदभूतस्य । तेन संज्ञायामुत्तरपदस्याप्युदकशब्दस्योद इत्ययमादेशो भवति । लोहितोदः, क्षीरोद इति बहुव्रीहिः ॥

पेषंवासवाहनधिषु च ॥ उदपेषमिति । 'पिष्लृ सञ्चूर्णने' । उदधिरिति । 'कर्मण्यधिकरणे च' इति किप्रत्ययः । 'आतो लोप इटि च' इत्याकारलोपः ।

असंज्ञार्थमिदं वचनम् ; तेनोदधिरिति घटादिरिह वेदितव्यः, न समुद्रः; तत्र पूर्वेणैव सिद्धत्वात्—उदधिशब्दः समुद्रस्य संज्ञेति कृत्वा ॥

एकहलादौ पूरयितव्येऽन्यतरस्याम् ॥ यद्येकशब्दः सङ्ख्यावचन इह गृह्यते, तदानर्थकं तस्य ग्रहणं स्यात् । न हि क्वचित् द्वौ बहवो वा हल आदिभूताः सम्भवन्ति, यद्व्यवच्छेदार्थमेकग्रहणं क्रियते । तस्मादसहायवचनोऽयमेकशब्दः । एवमपि यः कश्चिद्विशिष्ट एकोऽसहायो हल् आदिर्यस्य तदेकहलाद्युत्तरपदं गृह्येत, तदोदकस्थानमित्यत्रापि स्यात् । अत्रापि हि सकारोऽसहाय, एव एकहल् । यद्यनेके वर्णा युगपदुच्चार्येरन्, उच्चारिता वा वर्णा न प्रध्वंसेरन् , तदा ससहायस्यापि स्यादादित्वम् । न चैवम्; यतो वर्णा न युगपदुच्चार्यन्ते, ते चोच्चारितप्रध्वंसिनः । तस्मान्नास्त्येव क्वचित् किञ्चिदनेकहलादित्वं यद्व्यवच्छेदार्थमेकहलादावित्युच्यते । उक्तञ्चेदम् । अतोऽस्मादेव वचनाद्


CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


'उदकस्योदः' इति वर्त्तते। एकः=असहायः तुल्यजातीयेनानन्तरेण हलादिना। हल् आदिर्यस्योत्तरपदस्य तदेकहलादिः, तस्मिन्नेकहलादौ पूरयितव्यवाचिन्यन्यतरस्यामुदकस्य 'उद' इत्ययमादेशो भवति। उदकुम्भः, उदककुम्भः। उदपात्रम्। उदकपात्रम्।

एकहलादाविति किम्? उदकस्थालम्। पूरयितव्य इति किम्? उदकपर्वतः॥

**मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च॥ ६०॥**

पदमञ्जरी

*एकहलादौ पूरयितव्येऽन्यतरस्याम्॥ एकोऽसहाय इति*। यद्ययमेकशब्दः संख्यावचनः स्यात्, तर्ह्येकेत्यनर्थकं स्यात्, न हि द्वौ च बहवो वा आदिभूताः क्वचित्सम्भवन्ति, तस्मादसहायवचन एकशब्दः। नन्वेवमप्यस्य व्यावर्त्यं न सम्भवति, कथम्? एकैकवर्णवशवर्तित्वाद्वाचः, यदि ह्यनेकस्य वर्णस्य युगपदुच्चारणं स्यात्तदा स्थालीशब्दोऽनेकहलादिः; यदि वा क्रमेणोच्चारिता अपि वर्णा अवतिष्ठेरन्, तदापि युगपद्वर्णयोरुपलम्भादादित्वं स्यात्, यतस्तु नोच्चारणे युगपदुलब्धौ वा वर्णानां यौगपद्यम्, तस्मादेकस्यैवादित्वमिति न किञ्चिदेकग्रहणेन शक्यं व्यवच्छेत्तुम्? एवं तर्ह्येकग्रहणसामर्थ्याद्विशिष्टमसहायत्वमाश्रीयते। किं पुनस्तत्? आनन्तर्यम्। तदेतदाह—*तुल्यजातीयेनानन्तरेणेति*। हल्त्वेन तुल्यजातीयत्वेन तुल्यस्थानादिभिर्भिन्नजातीये व्यवहिते च सहायत्वाप्रसिद्धेरेवमुक्तम्॥

*मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च*॥ द्रवद्रव्यसंयुक्ताः सक्तवः=

न्यासः

विशिष्टमात्रैकहलादित्वं विवक्षितमित्येतत् सर्वं चेतसि कृत्वा तदेव विशिष्टं दर्शयितुमाह—एकोऽसहाय इत्यादि। यश्चातुल्यजातीयेनाप्यचा विनैको हल् स आदिर्यस्येति तदेकहलादि। तुल्यजातीयेन चाव्यवहितेनापि यस्य तदेकहलादीहाश्रीयेत तदा न क्वचित् स्यात्; तथाविधस्योत्तरपदस्य पूरयितव्यवाचिनोऽभावात्, उच्यते चेदम्। तस्माद् वचनप्रामाण्यात् तुल्यजातीयेन हलाऽनन्तरेणाव्यवहितेन विना यो वर्त्तते सोऽसहाय एवेहैकशब्देनासहायवाचिना विवक्षित इति गम्यते। एवंविधो हलादिर्यस्य तदेकहलादि। न चैवंविधः स्थानशब्दस्यादिर्हलस्तीत्येकहलादिग्रहणेन स्थानशब्दो निवर्त्तते। पूरियतव्यवाचिनीति। उदकादिना द्रव्येणान्तर्व्याप्तव्यः पूरयितव्य इत्युच्यते। तद्वक्तुं शीलमस्येति ताच्छीलिको णिनिः॥

मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च॥ द्रवद्रव्यसंपृक्ताः सक्तवो मन्थ

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



मन्थ, ओदन, सक्तु, बिन्दु, वज्र, भार, हार, वीवध, गाह—इत्येतेषूत्तरपदेषूदकस्य 'उद' इत्ययमादेशो भवति अन्यतरस्याम्। उदकेन मन्थ उदमन्थः, उदकमन्थः। ओदन—उदकेनौदनः उदौदनः, उदकौदनः। सक्तु—उदकेन सक्तुः उदसक्तुः, उदकसक्तुः। बिन्दु—उदकस्य बिन्दुः उदबिन्दुः, उदकबिन्दुः। वज्र—उदकस्य वज्रः उदवज्रः, उदकवज्रः। भार—उदकं बिभर्तीति उदभारः, उदकभारः। हार—उदकं हरतीति उदहारः, उदकहारः। वीवध—उदकस्य वीवधः उदवीवधः, उदकवीवधः। गाह—उदकं गाहत इति उदगाहः, उदकगाहः॥

## इको ह्रस्वोऽङ्यो गालवस्य॥ ६१॥

इगन्तस्याङ्यन्तस्योत्तरपदे ह्रस्वो भवति गालवस्याचार्यस्य मतेनान्यतरस्याम्। ग्रामणिपुत्रः, ग्रामणीपुत्रः। ब्रह्मबन्धुपुत्रः, ब्रह्मबन्धूपुत्रः।

इक इति किम्? खट्वापादः। मालापादः। अङ्य इति किम्? गार्गीपुत्रः। वात्सीपुत्रः।

### पदमञ्जरी

मन्थः। उदकेन *मन्थ इति*। तृतीयेति योगविभागात्समासः। अथ तु मथ्यत इति क्रियाशब्दः, तदा 'कर्तृकरणे कृता बहुलम्' इति समासः, सक्त्वौदनाभ्याम् 'अन्नेन व्यञ्जनम्' इति, बिन्दुवज्रवीवधैः षष्ठीति भारहारगाहैः कर्मण्यणन्तैः 'उपपदमतिङ्' इति समासः; उदकस्य वज्रं क्रूरम्, यदपां क्रूरमिति दर्शनात्। अन्येऽपि यथासम्भवं समासा भवन्त्येव—उदकं वज्रमिव भिन्दानो हृदयमसाह्निनोदवज्रः॥

*इको ह्रस्वोऽङ्यो गालवस्य*॥ *ग्रामणिपुत्र इति*। 'सत्सूद्विष' इत्यादिना क्विप्, 'अग्रग्रामाभ्यान्नयतेः' इति णत्वम्। *गार्गीपुत्र इति*। गार्ग्यशब्दाद्

### न्यासः

इत्युच्यते। तत्र मन्थशब्दोऽयं यद्यव्युत्पन्नं प्रातिपदिकम्, तदोदकेन मन्थ इति 'तृतीया' इति योगविभागात् समासः। अथ व्युत्पाद्यते—मथ्यत इति मन्थः, तदा 'कर्तृकरणे कृता बहुलम्' इति समासः। सक्त्वोदनाभ्याम् 'अन्नेन व्यञ्जनम्' इति समासः। बिन्दुवज्रवीवधैः षष्ठीति भारहारगाहैरणन्तैः 'उपपदमतिङ्' इति॥

इको ह्रस्वोऽङ्यो गालवस्य॥ ग्रामणिपुत्र इति। ग्रामं नयतीति 'सत्सूद्विष'

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



गालवग्रहणं पूजार्थम्, 'अन्यतरस्याम्' इति हि वर्तते।

व्यवस्थितविभाषा चेयम्। तेनेह न भवति – कारीषगन्धीपुत्र इति।

इयङुवङ्भाविनामव्ययानां च न भवति – श्रीकुलम्, भ्रूकुलम्। काण्डीभूतम्, वृषलीभूतम्।

भ्रुकुंसादीनां तु भवत्येव – भ्रुकुंसः, भ्रुकुटिः।

अपर आह – * भ्रुकुंसादीनामकारो भवतीति वक्तव्यम् *। भ्रकुंसः। भ्रकुटिः॥

पदमञ्जरी

'यञश्च' इति ङीप्, 'यस्येति च', 'हलस्तद्धितस्य'।

*कारीषगन्धीपुत्र इति*। 'ष्यङः संप्रसारणम्' 'संप्रसारणस्य' इति दीर्घः।

*काण्डीभूतमिति*। 'ऊर्यादिच्विडाचश्च' इति निपातसंज्ञायामव्ययत्वम्। स्त्रीवेषधारी नर्तकः पुरुषः = भ्रुकुंसः।

इहालाबुकर्कन्धुजम्बुफलमिति फलशब्द उत्तरपदे जम्ब्वा ह्रस्वत्वम्, द्वन्द्वे जम्ब्वामुत्तरपदे कर्कन्ध्वा ह्रस्वत्वम्; अलाब्वास्तु न प्राप्नोति, कर्कन्ध्वा अनुत्तरपदत्वात्? एवं तर्ह्येवं विग्रहः करिष्यते—अलाबूश्च कर्कन्धूश्च अलाबुकर्कन्ध्वौ, ते च जम्बूश्च अलाबुकर्कन्धुजम्ब्वः, तासां फलमलाबुकर्कन्धुजम्बुफलमिति, एवमपि जम्ब्वाः पूर्वनिपातः प्राप्नोति। एवं कर्कन्धुजम्ब्वोरपि द्वन्द्वे द्रष्टव्यम्। जम्बुशब्दो राजदन्तादिषु द्रष्टव्यः॥

न्यासः

इत्यादिना क्विप्। 'अग्रग्रामाभ्यां च नयतेः' इति णत्वम्। गार्गीपुत्र इति। 'यञश्च' इति गार्ग्यशब्दात् ङीप्, 'यस्येति च' इत्यकारस्य लोपः, 'हलस्तद्धितस्य' इति यकारस्य च।

अथ विकल्पार्थमेव गालवग्रहणं कस्मान्न भवति? इत्याह—अन्यतरस्यामित्यादि।

कारीषगन्धीपुत्र इति। कारीषगन्ध्यायाः पुत्र इति षष्ठीसमासः, 'ष्यङः सम्प्रसारणम्' इत्यादिना सम्प्रसारणम्, 'सम्प्रसारणाच्च' इति परपूर्वत्वम्, 'हलः' सम्प्रसारणस्य इति दीर्घः।

इयङुवङ्भाविनामित्यादि। इयङुवङौ भाविनौ येषां ते तथोच्यन्ते। श्रीकुलमिति। इयङ्भाविन उदाहरणम्। भ्रूकुलमिति। उवङ्भाविनश्च। काण्डीभूतम्, वृषलीभूतमिति। अव्ययानाम्। काण्डवृषलशब्दाभ्याम् 'अभूततद्भावे' इत्यादिना च्विः, 'अस्य च्वौ' इतीत्वम्।

भ्रुकुंस इति। भ्रूश्चासौ कुंसश्चेति विशेषणसमासः। एवं भ्रुकुटिरित्यत्रापि।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


## एक तद्धिते च ॥ ६२ ॥

एकशब्दस्य तद्धिते उत्तरपदे ह्रस्वो भवति। एकस्या आगतमेकरूप्यम्। एकमयम्। एकस्या भाव एकत्वम्। एकता। उत्तरपदे — एकस्याः क्षीरम् एकक्षीरम्। एकदुग्धम्।

लिङ्गविशिष्टस्य ग्रहणमेकशब्दह्रस्वत्वं प्रयोजयति। अचा हि

### पदमञ्जरी

एक तद्धिते च ॥ 'एक' इत्यविभक्तिको निर्देशः; समानाधिकरणे हि स्त्रियाः पुंवद्भावेनैव सिद्धत्वात्। व्यधिकरणार्थमिदम्। *एकत्वमिति*। असहायादिवचनोऽयमेकशब्दः। संख्यावचनस्य तु 'त्वतलोर्गुणवचनस्य' इति पुंवद्भावेनैव सिद्धम्। किं पुनः कारणं स्त्रीलिङ्ग एवोदाह्रियते, न पुनर्यथाश्रुतः पुंल्लिङ्गो नपुंसकलिङ्गो वेति? तत्राह—*लिङ्गविशिष्टस्येति*। स्त्रीलिङ्गस्यैव ह्रस्वविधानमर्थवद् भवति, नेतरस्य; तस्य स्वत एव ह्रस्वान्तत्वात्। ननु चास्तु स्वत एवान्तो ह्रस्वः, यस्त्वसावादिरेकारः, तदर्थमितरस्यापि ग्रहणमर्थवत्? अत आह—*अचेति*। स्यादेतदेवम्, यदि गृह्यमाणेनैकशब्देन 'अचश्च' इत्युपस्थापितोऽज्विशेष्येत— एकशब्दस्य योऽच् यत्र कुत्र स्थित इति, इह तूपस्थापितेनाचा गृह्यमाण एक-

### न्यासः

वक्तव्यमिति व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—पृषोदरादित्वाद् अकुंसादीनामकारो भविष्यतीति ॥

एक तद्धिते च ॥ एकरूप्यमिति। 'हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः' इति रूप्यः। एकमयमिति। 'मयट् च' इति मयट्। एकत्वम्, एकतेति। 'तस्य भावस्त्वतलौ' इति त्वतलौ। यदैकशब्दः संख्यापरो भवति तदैतदुदाहरणम्। यदा संख्येयपरो भवति, तदा 'त्वतलोर्गुणवचनस्य' इति पुंवद्भावेनैव सिद्धम्। ननु च गुणमुक्तवान् गुणवचनः; यश्च गुणमात्रमभिधाय तद्विशिष्टं द्रव्यमाह स गुणवचनो भवति। तद्यथा—कृष्णः पटः, शुक्लः पट इति; अयं पुनरेकशब्दो न क्वचिदपि द्रव्यव्यतिरिक्तं गुणमाह, सर्वदा संख्येये द्रव्ये वर्तत इति कृत्वा, तत् कुतोऽस्य पुंवद्भावः? अयुक्तमिदमभिधीयते; तथा हि—प्रसिद्धिमाश्रित्यैकादयः संख्येयवचना इत्युच्यन्ते, न त्वेषां संख्याने वृत्तिर्नाभ्युपेयेति। तथा हि—'द्व्येकयोर्द्विवचनैकवचने' इत्यत्र त्वेकशब्दः संख्यायामेव प्रयुक्तो न संख्येये द्रव्ये।

लिङ्गविशिष्टस्येत्यादि। पुंल्लिङ्गो य एकशब्दः स स्वभावत एव ह्रस्वान्त इति न तद्ग्रहणं प्रयोजयति, अपि तु स्त्रीलिङ्गविशिष्टस्यैव। तस्यैव हि ह्रस्वत्वं विधीयमानमर्थवद् भवति। ननु नैतस्याप्येकशब्दस्य य एकारस्तस्य ह्रस्वत्वं विधीयमानमर्थवद्भवति,

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


गृह्यमाणमत्र विशेष्यते, न पुनरच् गृह्यमाणेनेति ॥

ङ्यापोः संज्ञाछन्दसोर्बहुलम् ॥ ६३ ॥

ङ्यन्तस्याबन्तस्य च संज्ञाछन्दसोर्बहुलं ह्रस्वो भवति। ङ्यन्तस्य संज्ञायाम् — रेवतिपुत्रः, रोहिणिपुत्रः, भरणिपुत्रः। न च भवति — नान्दीकरः, नान्दीघोषः, नान्दीविशालः। ङ्यन्तस्य छन्दसि — कुमारिदा प्रफर्विदा[1]। न च भवति — फाल्गुनीपौर्णमासी, जगतीच्छन्दः।

पदमञ्जरी

शब्दो विशेष्यते—एकस्य ह्रस्वो भवति। किंविशिष्टस्य अचः? अजन्तस्येति। तत्र 'अलोन्त्यस्य' इत्यन्त्यस्य ह्रस्वेन भाव्यम्, तच्च टाबन्तस्यैवार्थवत्, नेतरस्य। इतिकरणो हेतौ ॥

ङ्यापोः संज्ञाछन्दसोर्बहुलम् ॥ बहुलग्रहणात्क्वचिदुत्तरपदेऽपि भवति— अनुगायन्ति नयो गर्भिणय इति। एवं कृत्वा फाल्गुनीपौर्णमासीति प्रत्युदाहरणोपपत्तिः, कर्मधारये पुंवद्भावः प्राप्नोति।

न्यासः

तत् किमुच्यते लिङ्गविशिष्टस्यैकशब्दस्य ग्रहणं प्रयोजयति? इत्याह—अचा गृह्यमाणमित्यादि। विशेषविशेष्यभावं प्रति कामचारः। तथा ह्युक्तम्—विशेषणविशेष्यभावयोर्यथेष्टत्वादिति। तत्र यदि गृह्यमाणेनैकशब्देनाज् विशिष्यते—एकशब्दस्य योऽजिति, तदैकसम्बन्धिन एकारस्य ह्रस्वत्वं विधीयमानमर्थवद्भवति। पुंल्लिङ्गस्याप्येकशब्दस्य ग्रहणं प्रयोजयति। न चात्र गृह्यमाणेनाज् विशिष्यते; एकारस्य ह्रस्वस्यानिष्टत्वात्। न ह्यनिष्टार्था शास्त्रे प्रक्लृप्तिर्युक्ता, तस्मादचा गृह्यमाण एकशब्दोऽत्र विशिष्यते। तेन लिङ्गविशिष्टस्य ग्रहणम्। एकशब्दस्य ह्रस्वो भवति, किंविशिष्टस्याचः? अजन्तस्येत्यर्थः। तत्रालोऽन्त्यस्यैव ह्रस्वत्वेन भवितव्यम्, तच्च टाबन्तस्यैव सार्थकम्, न पुंल्लिङ्गस्य; न हि ह्रस्वस्यैव ह्रस्वे विधीयमाने कश्चिदर्थः सिध्यति। इतिकरणो हेतौ। यत एवाचा गृह्यमाण एकशब्दोऽत्र विशिष्यते, तेन लिङ्गविशिष्टस्य ग्रहणमेकशब्दस्य प्रयोजयति ॥

ङ्यापोः संज्ञाच्छन्दसोर्बहुलम् ॥ रेवतिपुत्र इति षष्ठीसमासः। एवं रोहिणिपुत्र इत्यादावपि। कुमारीं ददातीति कुमारिदा। उर्वीं ददातीति उर्विदा। 'आतोऽनुपसर्गे कः'। फाल्गुनीत्यादि। फाल्गुनी चासौ पौर्णमासी चेति फाल्गुनीपौर्णमासी, 'विशेषणम्' इत्यादिना समासः। एवं जगतीच्छन्द इत्यत्रापि।

---

१. 'उर्विदा' इति मुद्रितः पाठोऽवैदिकः।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



आबन्तस्य संज्ञायाम् — शिलवहम्, शिलप्रस्थम्। न च भवति — लोमकागृहम्। लोमकाषण्डम्। आबन्तस्य छन्दसि — अजक्षीरेण जुहोति, ऊर्णम्रदाः पृथिवी दक्षिणावत . । न च भवति — ऊर्णासूत्रेण कवयो वयन्ति ॥

त्वे च ॥ ६४ ॥

त्वप्रत्यये परतो ङ्यापोर्बहुलं ह्रस्वो भवति। तदजाया भावः अजत्वम्। अजात्वम्। तद्रोहिण्या भावो रोहिणित्वम्। रोहिणीत्वम्। संज्ञायामसम्भवाच्छन्दस्येवोदाहरणानि भवन्ति ॥

इष्टकेषीकामालानां चिततूलभारिषु ॥ ६५ ॥

इष्टकेषीकामालानां चित, तूल, भारिन् — इत्येतेषूत्तरपदेषु यथासंख्यं ह्रस्वो भवति। इष्टकचितम्। इषीकतूलम्। मालभारिणी कन्या।

पदमञ्जरी

*ऊर्णम्रदा इति*। ऊर्णावन् म्रदीयसीति यावत्, छान्दस ईयसीशब्दस्याकारः। *तैतिरीयास्तु* दीर्घमधीयते—ऊर्णाम्रदसं चास्तृणामीति ॥

*इष्टकेषीकामालानां चिततूलभारिषु* ॥ *इष्टकचितमिति*। 'कर्तृकरणे कृता बहुलम्' इति समासः। *इषीकतूलमिति*। षष्ठीसमासः। मालाम्बिभर्तीति मालभारिणी, 'सुप्यजातौ' इति णिनिः। प्रायेण तु हरतिमधीयते, प्रयोगस्तु बिभर्तेः, गल्लिका मालभारिण्य इति।

न्यासः

शिलवहम्, शिलप्रस्थमिति। शिलाशब्दस्य वहप्रस्थशब्दाभ्याम् 'षष्ठी' इत्यनेन समासः। लोमकागृहम्, लोमकाषण्डमिति। अत्रापि लोमकाशब्दस्य गृहषण्डशब्दाभ्याम्। अजक्षीरेणेति। अत्राप्यजाशब्दस्य क्षीरशब्देन। ऊर्णमृदिति।[1] ऊर्णासहिता मृद् ऊर्णमृत्। शाकपार्थिवादित्वादुत्तरपदलोपी समासः ॥

त्वे च ॥ संज्ञायामसम्भवाच्छन्दस्येवोदाहरणानि भवन्तीति। एवकारेण संज्ञाया व्यवच्छेदः क्रियते। न हि त्वप्रत्यये ङ्यापोर्ह्रस्वत्वे कृते कस्यचित् संज्ञा गम्यते। तेन संज्ञायामसम्भवाच्छन्दस्येवोदाहरणानि भवन्ति ॥

इष्टकेषीकामालानां चिततूलभारिषु ॥ इष्टकचितमिति। 'कर्तृकरणे' इत्यादिना समासः। इषीकतूलमिति षष्ठीसमासः। मालभारिणीति। मालां भर्तुं शीलमस्या इति ताच्छील्ये णिनिः, 'उपपदमतिङ्' इति समासः।

---

१. अयं पाठो [illegible] ।

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



इष्टकादिभ्यस्तदन्तस्यापि ग्रहणं भवति । पक्वेष्टकचितम् । मुञ्जेषीकतूलम् । उत्पलमालभारिणी कन्या ॥

खित्यनव्ययस्य ॥ ६६ ॥

खिदन्ते उत्तरपदेऽनव्ययस्य ह्रस्वो भवति । कालिम्मन्या । हरिणिम्मन्या । मुमा ह्रस्वो न बाध्यते; अन्यथा हि ह्रस्वशासनमनर्थकं स्यात् ।

पदमञ्जरी

*इष्टकादिभिस्तदन्तस्यापि ग्रहणं भवतीति* । यथा तु भवति, तथा अलुक्प्रकरण एवोक्तम् ॥

*खित्यनव्ययस्य* ॥ इह ह्रस्वश्रुत्या 'अचः' इत्युपस्थाप्यते । तत्र यदि पूर्वपदेनाज्विशेष्येत पूर्वपदस्याचो ह्रस्वो भवति यत्र तत्र स्थितस्येति, ततो वाङ्मन्य इत्यादावपि प्राप्नोति; तस्मादचा पूर्वपदं विशेष्यते—अजन्तस्य पूर्वपदस्येति । तत्र कालिम्मन्येत्यादावपि मुमि कृतेऽजन्तत्वाभावाद् ह्रस्वाभाव इत्यत आह—*मुमा ह्रस्वो न बाध्यत इति* । कुतः ? इत्यत आह—*अन्यथा हीति* । उच्यते चेदम्—अजन्तस्य ह्रस्व इति, यदि पूर्वं मुम् स्याद्वचनमिदमनर्थकं स्यात् । तस्मान्मुमा

न्यासः

इष्टकादिभिस्तदन्तस्यापि ग्रहणं भवतीति । बहुलग्रहणानुवृत्तेरित्यभिप्रायः ॥

खित्यनव्ययस्य ॥ कालिम्मन्या, हरिणिम्मन्येति । कालीमात्मानं मन्यते, हरिणीमात्मानं मन्यत इति 'आत्ममाने खश्च' इति खश्, दिवादित्वाच्छ्यन्, अनेन ह्रस्वत्वम्, उत्तरसूत्रेण मुम् । इहाजन्तस्य ह्रस्वत्वमभ्युपगम्यम्; अन्यथा वाङ्मन्य इत्यत्रापि स्यात् । अजन्तस्य ह्रस्वविधाने सति परत्वान् मुमि कृतेऽनजन्तत्वाद् ह्रस्वो न प्राप्नोतीति यो मन्येत, तं प्रत्याह—मुमा ह्रस्वो न बाध्यत इति । अत्रैव हेतुमाह—अन्यथा हीत्यादि । ह्रस्वः शिष्यते = विधीयते येन तद् ह्रस्वशासनम् 'खित्यनव्ययस्य' इत्येतद् वचनम् । यदि हि मुमा ह्रस्वो बाध्येत, ततो ह्रस्वशासनमिदमनवकाशं स्यात्; ततस्तस्यानर्थक्यमेव स्यात् । तस्मान्मा भूदेष दोष इति मुमा ह्रस्वो न बाध्यते । तेन विरोधाभावादुभयं भवति—ह्रस्वः, मुम् च । कथं पुनर्मुमा ह्रस्वस्य बाधा शङ्किता ? कथं वा ह्रस्वशासनस्यानवकाशत्वम्, यावता खित्यजन्तस्याविशेषेण मुम् विधीयते, ह्रस्वत्वं तु सामर्थ्याद् दीर्घस्य, न हि ह्रस्वस्य ह्रस्वविधानमर्थवत् भवति, एवं च स्तनन्धयादिषु कृतार्थत्वान् मुमेव ह्रस्वेनापवादेन कालिम्मन्यादिषु बाध्येत ? एवम्मन्यते—अपवादविषयेऽपि मुमो विधानार्थं मुम्शास्त्रस्यावश्यमावृत्तिः कर्त्तव्या; अन्यथा कालिम्मन्येत्यत्र मुम् न स्यात् । ततश्चापवादविषयेऽपि मुमा प्रवर्त्तमानेन ह्रस्वस्य बाधा सम्भाव्येत ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अनव्ययस्येति किम् ? दोषामन्यमहः । दिवामन्या रात्रिः । 'अनव्ययस्य' इत्येतदेव ज्ञापकमिह खिदन्तग्रहणस्य ॥

## अरुर्द्विषदजन्तस्य मुम् ॥ ६७ ॥

अरुस् , द्विषत् – इत्येतयोरजन्तानां च खिदन्त उत्तरपदे मुमागमो भवति अनव्ययस्य । अरुन्तुदः । द्विषन्तपः । अजन्तानाम् – कालिम्मन्या ।

### पदमञ्जरी

ह्रस्वो न बाध्यते । कथं पुनर्मुमा ह्रस्वबाधः शङ्कितः, यावता स्तनन्धयादौ चरितार्थस्य मुमः कालिम्मन्येत्यादौ ह्रस्वेनैव बाधः शङ्कनीयः ? तस्मादयमस्यार्थः—यथा पूर्वं मुमा ह्रस्वो न बाध्यते, तथा सूत्रस्यार्थो वर्णनीयः—अजन्तस्य ह्रस्वो विधेयः, न तु पूर्वपदसम्बन्धिनोऽचो ह्रस्व इति । तस्मिन्पक्षे मुमि कृतेऽपि ह्रस्वप्रवृत्तिसम्भवादनवकाशत्वाभावात् मुमि कृते पश्चाद्ध्रस्वः स्यात् , पूर्वं तु मुमा बाध्येतेति । यत्पुनरुक्तम्—मुम एव ह्रस्वेन बाधः शङ्कनीय इति ? अत्र परिहारमुत्तरसूत्रे वक्ष्यति ।

कथं पुनरत्र खिदन्तस्य ग्रहणम् , यावता ज्ञापितमेतदुत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तविधिर्न भवति ? तत्राह—*अनव्ययस्येत्येतदेवेति* । धातोरेव खितो विधानान्नाव्ययात्परः खित्प्रत्ययः सम्भवति । तस्मादव्ययप्रतिषेधादत्र तदन्तग्रहणमित्यर्थः ॥

*अरुर्द्विषदजन्तस्य मुम्* ॥ *अरुन्तुद इति* । 'विध्वरुषोस्तुदः' इति खश् , तुदादित्वाच्छः, सकारात्पूर्वं मुमि कृते सकारस्य संयोगान्तलोपः । *द्विषन्तप इति* । 'द्विषत्परयोस्तापे' इति खच् , 'खचि ह्रस्वः'; मुमादि पूर्ववत् ।

### न्यासः

अनवकाशत्वं चात एवापवादविषयेऽपि मुम्प्रवृत्तेरिति । अथ कथमत्र खिदन्तस्य ग्रहणम्, यावता ज्ञापितमेतदुत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तविधिर्नास्ति ? इत्यत आह—अनव्ययस्येत्येतदेवेत्यादि । यद्यत्र खित्प्रत्ययमात्रं गृह्येत न तदन्तम् , ततोऽनव्ययस्येति प्रतिषेधोऽपार्थकः स्यात् । न ह्यव्ययात् परः खित् प्रत्ययः सम्भवति; धातोरेव तस्य विधानात् । ततश्चानर्थकत्वादनव्ययस्येत्येतन्नोक्तं स्यात् । उक्तश्च—तस्मादेतदेवैतज्ज्ञापयति—खिदन्तस्यात्र ग्रहणमिति ॥

अरुर्द्विषदजन्तस्य मुम् ॥ अरुन्तुद इति । अरुस्तुदतीति 'विध्वरुषोस्तुदः' इति खश् , संयोगान्तलोपः, तुदादित्वाच्छः, अतो गुणे पररूपत्वम् । द्विषन्तप इति । द्विषन्तं तापयतीति 'द्विषत्परयोस्तापेः' इति खच् , 'खचि ह्रस्वः' इति ह्रस्वत्वम् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


अरुर्द्विषदजन्तस्येति किम् ? विद्वन्मन्यः ।

अनव्ययस्येत्येव – दोषामन्यमहः । दिवामन्या रात्रिः ।

अन्तग्रहणं किम् ? कृताजन्तकार्यप्रतिपत्त्यर्थम् । अतो ह्रस्वे कृते मुम्भवति ॥

## इच एकाचोऽम्प्रत्ययवच्च ॥ ६८ ॥

### पदमञ्जरी

*विद्वन्मन्य इति* । 'वसुस्रंसुध्वंसु' इति दत्वम्, 'यरोऽनुनासिकेऽनुनासिको वा' ।

अन्तग्रहणमनर्थकम्, वर्णग्रहणे सर्वत्र तदन्तविधेर्भावादित्यत आह—*अन्तग्रहणमित्यादि* । समीपवचनोऽन्तशब्दः, अच्चासावन्तश्चेति अजन्तः, निपातनाद्विशेषणस्य परनिपातः । कः पुनरसौ पूर्वसूत्रे विहितो ह्रस्वः, तेन पूर्वपदस्य तदन्तविधिः ? एतदुक्तं भवति—योऽयमस्य सूत्रस्य समीपभूतो यः पूर्वसूत्रे विहितो ह्रस्वस्तदन्तस्य मुम् इति, यतो ह्रस्वे कृते मुम् भवतीति । एतेनैदपि निरस्तम्—मुम एव ह्रस्वेन बाधप्रसङ्ग इति । कथं तन्निमित्तकत्वान्मुमः ? ह्रस्वनिमित्तको ह्येष मुम् भवति । यद्येवम्, स्तनन्धयादौ यत्र ह्रस्वो न क्रियते तत्र मुम् न प्राप्नोति ? किं पुनः कारणमत्र ह्रस्वो न क्रियते ? प्रयोजनाभावात् । अस्ति प्रयोजनम्, किम् ? मुम् यथा स्यादिति । इदानीमेव ह्युक्तम्—ह्रस्वनिमित्तको मुमिति ॥

### न्यासः

विद्वन्मन्य इति । विद्वांसमात्मानं मन्यत इति, 'आत्ममाने खश्च' इति खश्, 'वसुस्रंसुध्वंस्वनडुहां दः' इति सकारस्य दकारः, 'यरोऽनुनासिकेऽनुनासिको वा' इति तस्य नकारः । अथान्तग्रहणं किमर्थम्, यावता 'येन विधिस्तदन्तस्य' इत्यनेन तदन्तस्यैव भविष्यति ? इत्याह—अन्तग्रहणमित्यादि । कृतमजन्तकार्यं यस्य स कृताजन्तकार्य आगमी, तस्यैवंविधस्य प्रतिपत्तिः प्रतीतिर्यथा स्यादित्येवमर्थमन्तग्रहणम् । अन्तग्रहणेन हि कार्यान्तरस्यान्तेऽवसाने मुम् कर्त्तव्य इत्येषोऽर्थः सूच्यते । अतोऽजन्तकार्ये ह्रस्वत्वे कृते पश्चान्मुम् भवति । ननु च मुमा ह्रस्वो न बाध्यत इत्यनेनैव भविष्यतीति सोपपत्तिकोऽयमर्थः प्रतिपादितः, तत् किमर्थमेतदन्तग्रहणम् ? नैतदस्ति; तेन हि निरवकाशाद् ह्रस्वशासनस्य मुमा ह्रस्वो न बाध्यत इत्येतावन्मात्रं प्रतिपादितम्, न तु कृताजन्तकार्यस्य मुम् भवतीत्येषोऽर्थः, ततः परत्वान्मुमि कृते सत्यनजन्तस्यापि ह्रस्वत्वं प्रसज्येत । अत्र को दोषः ? खित्यन्तह्रस्वभावो नास्तीति । यथा कालिम्मन्य इत्यत्र मुमि कृते सत्यनजन्तस्यापि ह्रस्वत्वं भवति, तथा वाङ्मन्य इत्यत्र स्यादिति । तस्मादन्तग्रहणं कर्त्तव्यम् ॥

इच एकाचोऽम्प्रत्ययवच्च ॥ अत्र यदि 'प्रत्ययवच्च' इत्येतावदुच्येत, तदा गाम्मन्य

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


इजन्तस्य एकाचः खिदन्ते उत्तरपदेऽमागमो भवति, आम्प्रत्ययवच्च द्वितीयैकवचनवच्च स भवति । अमिति हि द्विरावर्तते । गाम्मन्यः ।

पदमञ्जरी

इच इकाचोऽम्प्रत्ययवच्च ॥ *अमागमो भवतीति* । कथमस्यागमत्वम् ? मित्त्वात् । यद्येवम्, मकार इत्संज्ञकः प्रयोगे श्रवणं न प्राप्नोति—श्रियम्मन्यः, भ्रुवम्मन्य इति ? नैवास्य मकारस्य श्रवणम्, किं तर्हि ? मुमः । ननु च नाप्राप्ते मुम्यारभ्यमाणोऽयमागमस्तं बाधेत ? न बाधेत; उक्तं तत्र—अन्तग्रहणं कृताजन्तकार्यप्रतिपत्त्यर्थमिति, तेनास्मिन्नपि प्रकृते भविष्यति । वयन्तु ब्रूमः—नैवायमित्संज्ञको मकारः; अम्प्रत्ययवद्भावेन 'न विभक्तौ तुस्माः' इति प्रतिषेधात् । यद्येवम्, आदेशः प्राप्नोति ? अम्प्रत्ययवद्भावात्परो भविष्यति । आगमव्यपदेशस्तु यौगिकः समीप आगच्छतीति, यथा 'न य्वाभ्यां पदान्ताभ्याम्' इत्यत्रैचः । द्वितीयोऽपि वा मकारः संयोगान्तलोपेन लुप्तनिर्दिष्टो द्रष्टव्यः ।

यद्यत्र प्रत्ययवच्चेत्येतावदुच्येत गाम्मन्य इत्यत्र 'औतोऽम्शसोः' इत्याकारो न स्यात्, शसा सहचरितस्यामस्तत्र ग्रहणात् । इह च स्त्रीम्मन्य इति 'अमि पूर्वः' इति पूर्वरूपं न स्यात्; 'प्रथमयोः' इति तत्रानुवृत्तेः । इह च नरम्मन्य इति 'ऋतो ङिसर्वनामस्थानयोः' इति गुणो न स्यात्; सामान्यातिदेशे विशेषानतिदेशात् । यत्र हि सामान्यशब्देनातिदेशस्तत्र विशेषाणामशब्दार्थत्वात्सामान्यनिबन्धनमेव कार्यं प्राप्यते; यथा—ब्राह्मणवदस्मिन् क्षत्त्रिये वर्तितव्यमिति ब्राह्मणमात्रप्रयुक्तं कार्यमतिदिश्यते, न माठरादिविशेषप्रयुक्तम्; तद्वदत्रापि प्रत्ययमात्रप्रयुक्तयोरियङुवङोरेवातिदेशः स्यात्, न त्वाकारादेरिति मत्वाऽऽह—*अम् प्रत्ययवच्चेति* । एतदेव विवृणोति—*द्वितीयैकवचनवच्चेति* । ननु चात्रैकमम्ग्रहणं यदि तेनागमो निर्दिष्टः प्रत्ययो न विशेषितः स्यात्; अथ प्रत्ययो विशेष्यते, आगमो न निर्दिष्टः स्यात् ? इत्यत आह—*अमिति हीत्यादि* । नन्वत्रापि

न्यासः

इत्यत्र 'औतोऽम्शसोः' इत्यात्वं न स्यात्, इह च स्त्रीम्मन्य इति—अत्रापि 'अमि पूर्वः' इति पूर्वसवर्णः, इह च नरम्मन्य इति नृशब्दस्य 'ऋतो ङिसर्वनामस्थानयोः' इति गुणः । सामान्यातिदेशे विशेषस्यानतिदेशाद् वचनं स्वियङुवङर्थमेव केवलं स्यात्, इयङुवङावबादौ प्रत्ययमात्रसामान्येन विधीयमानौ सामान्यातिदेशेऽपि भवत इति कृत्वा । 'अम्प्रत्ययवच्च' इत्येवमुच्यमाने सत्यात्वादयो भवन्ति, तेषामप्यम्प्रत्ययइष्टत्वात् । एतत् सर्वं बुद्धौ कृत्वाह—अम्प्रत्ययवच्चेति । एतदेव विवृणोति—द्वितीयेकवचनवच्चेति । कथं पुनरयमर्थो लभ्यते, यावतैकमम्ग्रहणम्, तेन चामागमो

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


स्त्रीम्मन्यः, स्त्रियम्मन्यः। नरम्मन्यः। श्रियम्मन्यः। भ्रुवम्मन्यः। 'अम्प्रत्ययवच्च' — इत्यतिदेशादात्वपूर्वसवर्णगुणेयङुवङादेशा भवन्ति।

इच इति किम्? त्वङ्मन्यः। एकाच इति किम्? लेखाभ्रुम्मन्यः।

अथेह कथं भवितव्यम् — श्रियमात्मानं ब्राह्मणकुलं मन्यत इत्युपक्रम्य? 'श्रिमन्यमिति भवितव्यम्' इति भाष्ये स्थितम्। तत्रेदं

पदमञ्जरी

पक्षे, अम्प्रत्ययप्रयुक्तयोरात्वपूर्वत्वयोरेवातिदेशः स्यात्, न गुणस्य सर्वनामस्थानमात्रनिमित्तस्य, नतरामियङुवङोः प्रत्ययमात्रनिमित्तयोः? स्यादेतदेवम्, यद्यमित्येतदाहत्य विहितं तस्यैवातिदेशः स्यात्। वयं तु—अमि यद् दृष्टं सामान्यनिबन्धनं विशेषनबन्धनं वा तत्सर्वमतिदिशामः।

*त्वङ्मन्य इति*। अत्र त्वचंमन्य इति प्राप्नोति, येषामेको मकारः प्रत्ययवद्भावात्तु परोऽयमिति पक्षः। येषामपि द्वितीयस्तेषामचः परोऽम् प्राप्नोति, येषां त्वित्संज्ञको मकारस्तेषामत्रापि को दोष इति चिन्त्यम्। नन्वज्ग्रहणानुवृत्तेरेवात्र न भविष्यति, उपसमस्तस्य पृथगनुवृत्तिर्दुर्ज्ञानेति मन्यते। *लेखाभ्रुमन्य इति*। पूर्ववद् ह्रस्वत्वं मुमागमश्च।

*अथेहेत्यादि*। भाष्ये अथेह कथमित्यारभ्य *श्रिमन्यमिति भवितव्यमिति स्थितम्*,

न्यासः

निर्दिश्यते, प्रत्ययवच्चेत्येतदनिष्टं स्यात्। अथ प्रत्ययस्तेन विशिष्यत आगमो न निर्दिष्टः स्यादित्यत आह—अमिति हीत्यादि। एकमप्यम्ग्रहणमारभ्यमाणं यस्मादुभयमेतत् सम्पादयति तस्मादयमर्थो लभ्यत इत्यभिप्रायः। श्रियम्मन्यः। भ्रुवम्मन्य इति। 'अचि श्नुधातु' इत्यादिनेयङुवङौ। लेखाभ्रुम्मन्य इति। पूर्वसूत्रेण मुमागमः।

अथेहेत्यादि। श्रियमात्मानं ब्राह्मणकुलं मन्यत इत्युपक्रम्य = प्रस्तुत्य खश्प्रत्यये विहिते कथं भवितव्यम्—किं श्रियम्मन्यमिति भवितव्यम्, उत श्रिमन्यमिति? कथं पुनरेतत् पक्षद्वयं सम्भाव्यते, यत एवं पृच्छति? शब्दानां द्विधा प्रवृत्तिदर्शनात्। तथा हि – केषाञ्चित् स्वलिङ्गापरित्यागेणाप्यर्थान्तरे प्रवृत्तिर्दृष्टा, यथा भूतशब्दस्य—भूतमियं ब्राह्मणीति; केषाञ्चित् स्वलिङ्गपरित्यागेनापि सा दृष्टा, यथा प्रष्ठशब्दस्य – प्रष्ठीति। तत्र श्रीशब्दो ब्राह्मणकुले वर्त्तमानो यदा स्वलिङ्गं न परित्यजति, तदा श्रियम्मन्यमिति भवितव्यम्; अथ स्वलिङ्गं परित्यज्य नपुंसकलिङ्गं गृह्णाति तदा 'स्वमोर्नपुंसकात्' इत्यमो लुकि कृते 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वत्वे च श्रिमन्यमिति भवितव्यमिति—एवमिमौ द्वावपि पक्षौ सम्भाव्येते। अत उभयपक्षसम्भवे न ज्ञायते—कथं भवितव्यम्? अतस्तत्परिज्ञानार्थं प्रश्नः। श्रिमन्यमिति भवितव्यमिति भाष्ये व्यवस्थितमिति।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



भाष्यकारस्य दर्शनम् — अत्र विषये परित्यक्तस्वलिङ्गः श्रीशब्दो ब्राह्मणकुले वर्तते, यथा — प्रष्ठादयः स्त्रियाम्। तत्र 'स्वमोर्नपुंसकात्' इत्यमो लुग्भवति ॥

### पदमञ्जरी

स्थापितमित्यर्थः। तेन भिन्नकर्तृकत्वं नाशङ्कनीयम्। ननु च स्त्रीलिङ्गः श्रीशब्दस्तत्कथं श्रिमन्यमिति रूपमित्याशङ्क्योपपादयति— *तच्चेदमिति*। अर्थान्तरे हि वर्तमानाः शब्दाः केचित्स्वलिङ्गत्यागेन वर्तन्ते, यथा—यष्ट्यादयः शब्दाः पुंयोगात्स्त्रियां वर्तमानाः यष्टी, प्रचरी, गणिकेति। केचित्तु स्वलिङ्गोपादानेन यष्टीः पुरुषान् प्रवेशयेति। तत्रेह प्रथमा विधा *भाष्यकारस्या*भिप्रेता, तेन 'स्वमोर्नपुंसकात्' इत्यमो लुकि कृते श्रिमन्यमिति भवति। यद्येवम्, 'सुपो धातुप्रातिपदिकयोः' इत्यस्यापि लुकोऽतिदेशः प्राप्नोति; तस्याप्यमि दृष्टत्वात्, अथाम्विधानसामर्थ्यादस्य लुको नातिदेशः, 'स्वमोर्नपुंसकात्' इत्यस्यापि न स्यात्? उच्यते; 'येन नाप्राप्ते' इति वा, 'मध्येऽपवादाः' इति वा 'सुपो धातुप्रातिपदिकयोः' इत्यस्यैव लुको विधानसामर्थ्याद्बाधः, न 'स्वमोर्नपुंसकात्' इत्यस्य। एवमप्येकपदाश्रयत्वाल्लुगन्तरङ्गो विपर्ययादागमो बहिरङ्ग इत्यन्तरङ्गे लुकि कर्तव्ये बहिरङ्गोऽमागमो नास्त्येव, तत्कुतो लुक्? नात्र बहिरङ्गपरिभाषा शक्याऽऽश्रयितुम्। अनुस्वारोऽपि हि न स्याद्— अरुन्तुदः, द्विषन्तप इति। तस्मादत्र लुकि सति श्रिमन्यमिति भवति, येषां त्वमो मकार इत्संज्ञकः, प्रयोगे तु मुमः श्रवणम्, तेषामकारमात्रस्य लुकि सति मुमः श्रवणप्रसङ्गः ॥

### न्यासः

ननु च श्रीशब्दोऽयं स्त्रीलिङ्गोऽर्थान्तरेऽपि वर्त्तमानः स्वलिङ्गमजहदेव वर्त्तते, तथा च प्रयोगोऽपि दृश्यते— शिरो मे श्रीः, यशो मे श्रीरिति; तत् कथं श्रिमन्यमिति भाष्ये व्यवस्थापितम्? इत्याह— तत्रेत्यादि। यथा प्रष्ठादयः शब्दाः पुंयोगात् स्त्रियां वर्त्तमानाः परित्यक्तस्वलिङ्गा एव वर्त्तन्ते— प्रष्ठी, प्रवरी, गणकीति; तथा श्रीशब्दोऽप्यत्र कुलविषये वर्त्तमान इति भाष्यकारस्य मतम्। अतस्तन्मतेन 'स्वमोर्नपुंसकात्' इत्यमो लुकि कृते—श्रिमन्यमिति। ननु च नाप्राप्ते लुक्ययमारभ्यते, यथैव 'सुपो धातुप्रातिपदिकयोः' इतीमं लुकं बाधते, तथा 'स्वमोर्नपुंसकात्' इतीममपि लुकं बाधेत? अपि च लुगेकपदाश्रयत्वादन्तरङ्गो विपर्ययाच्चामागमो बहिरङ्गः, ततः 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्यन्तरङ्गे लुकि कर्तव्ये बहिरङ्गोऽमागमो नास्त्येव, तत् कुतोऽत्र लुक्? नैष दोषः; 'मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्' इति। एवमयममागमः 'सुपो धातुप्रातिपदिकयोः' इतीमं लुकं बाधिष्यते, न 'स्वमोर्नपुंसकात्' इतीमम्। बहिरङ्गपरिभाषाप्यत्राशक्याऽऽश्रयितुम्, इह हि दोषः स्याद्—अरुन्तुद इति। तदाश्रयणे तु संयोगान्तलोपो न

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## वाचंयमपुरन्दरौ च ॥ ६९ ॥

वाचंयम, पुरन्दर – इत्येतौ निपात्येते । वाचंयम आस्ते । पुरं दारयतीति पुरन्दरः ॥

## कारे सत्यागदस्य ॥ ७० ॥

कारशब्द उत्तरपदे सत्य, अगद – इत्येतयोर्मुमागमो भवति । सत्यं करोतीति, सत्यस्य वा कारः सत्यङ्कारः । एवम् – अगदङ्कारः ।

* अस्तुसत्यागदस्य कार इति वक्तव्यम् * । अस्तुङ्कारः ।

* भक्षस्य छन्दसि कारे मुम् वक्तव्यः * । भक्षं करोतीति, भक्षस्य वा कारः भक्षङ्कारः । छन्दसीति किम् ? भक्षकारः ।

* धेनोर्भव्यायां मुम्वक्तव्यः * । धेनुम्भव्या ।

### पदमञ्जरी

*वाचंयमपुरन्दरौ च* ॥ *वाचंयम इति* । 'वाचि यमो व्रते' इति खच् । *पुरंदर इति* । 'पूःसर्वयोर्दारिसहोः' इति खच्, 'खचि ह्रस्वः' । उभयस्यापि पूर्वपदस्यामन्तत्वं निपात्यते ॥

*कारे सत्यागदस्य* ॥ सत्यङ्कारः—समयकरणम् । अशपथेऽपि परत्वाद् डाचं बाधित्वा कारे मुमेव भवति, अगदङ्कारः = विषप्रतिपक्षद्रव्यविशेषकरणम् ।

*भक्षङ्कारः* = यागविशेषे द्रव्यभक्षणस्य करणम् । भक्षङ्करोतीति वा भक्षङ्कारः, 'कर्मण्यण्' ।

*धेनुम्भव्येति* । भविष्यन्ती धेनुरुच्यते, 'भव्यगेय' इति यत्कर्त्तरि ।

### न्यासः

स्यात् । संयोगान्तलोपे चान्तरङ्गे कर्त्तव्ये बहिरङ्गस्य मुमागमस्यासिद्धत्वेन संयोगान्ततानुपपत्तेः । तस्मात् प्राप्तनिमित्ता सतीयमिह नाश्रीयते । दोषा एव हि तस्या एवमादयः ॥

वाचंयमपुरन्दरौ च ॥ वाचंयम इति । वाचं यच्छतीति 'वाचि यमो व्रते' इति खच् । तत्र वाक्शब्दस्यामन्तता निपात्यते । पुरन्दर इति । 'पूःसर्वयोर्दारिसहोः' इति खच्, 'खचि ह्रस्वः' इति ह्रस्वत्वम् । अत्रापि पूःशब्दस्यामन्तता निपात्यते । चकारोऽनुक्तसमुच्चयार्थः । तेन 'अस्तुसत्यागदस्य कारे' इति सर्वं न वक्तव्यं भवति ॥

कारे सत्यागदस्य ॥ सत्यं करोतीत्यनेन कर्मण्यणं सूचयति । सत्यस्य कार इत्यनेनापि घञम् । एवमगदङ्कार इत्यत्राप्यणघञौ वेदितव्यौ ।

अस्तुङ्कार इति । भावे घञ् । अस्तुशब्दो विभक्तिप्रतिरूपको निपातोऽभ्युपगमे वर्त्तते । अस्त्वित्यभ्युपगमस्य करणमस्तुङ्कारः ।

भक्षङ्कार इति । भावे घञ् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



* लोकस्य पृणे मुम्वक्तव्यः * लोकम्पृणः ।

* इत्येऽनभ्याशस्य मुम्वक्तव्यः * । अनभ्याशमित्यः ।

* भ्राष्ट्राग्न्योरिन्धे मुम्वक्तव्यः । भ्राष्ट्रमिन्धः । अग्निमिन्धः ।

* गिलेऽगिलस्य मुम्वक्तव्यः * । तिमिङ्गिलः । अगिलस्येति किम् ? गिलगिलः ।

* गिलगिले चेति वक्तव्यम् * । तिमिङ्गिलगिलः ।

* उष्णभद्रयोः करणे मुम्वक्तव्यः * । उष्णङ्करणम् । भद्रङ्करणम् ।

पदमञ्जरी

*लोकम्पृणेति* । पृणोतिः पूरणकर्मा, मूलविभुजादित्वात्कः ।

*अनभ्याशमित्य इति* । 'एतिस्तुशासु' इत्यादिना क्यप्—एतव्यम्, इत्यम् । अनभ्याशम् = दूरम्, अनभ्याशमित्यः, दूरतः परिहर्तव्य उच्यते ।

*भ्राष्ट्रमिन्धः, अग्निमिन्ध इति* । 'कर्मण्यण्', घञन्तेन वा षष्ठीसमासः ।

*तिमिङ्गिल इति* । मत्स्यविशेषः । तिमिङ्गिलतीति पूर्ववत्कः, इत्वम् । 'अचि विभाषा' इति लत्वम् । *तिमिङ्गिलगिलः* । अयमपि मत्स्यविशेष एव ।

*गिलगिले चेति* । यदा गिलं गिलतीति गिलगिलः तिमिङ्गिलगिल इति व्युत्पत्तिस्तदेदमुपसंख्यानम् । यदा हि तिमिङ्गिलं गिलतीति तिमिङ्गिलगिल इति व्युत्पाद्यते, तदा नार्थ एतेन । *उष्णङ्करणम्, भद्रङ्करणमिति* । षष्ठीसमासौ ।

न्यासः

धेनुम्भव्येति । 'भव्यगेय' इत्यादिना कर्त्तरि कृत्यः । धेनुश्चासौ भव्या चेति धेनुम्भव्या ।

लोकम्पृण इति । 'पृण प्रीणने', लोकं पृणतीति मूलविभुजादित्वात् कः ।

अनभ्याशमित्यमिति । अनभ्याशं दूरमित्यं गन्तव्यमस्येत्यनभ्याशमित्यः । इन्धनमिन्धः, भावे घञ् । भ्राष्ट्रस्येन्धो भ्राष्ट्रमिन्धः । अग्नेरिन्धोऽग्निमिन्धः । तिमिङ्गिल इति । 'गॄ निगरणे' । तिमिं गिलतीति पूर्ववत् कः, 'ऋत इद्धातोः' इतीत्वम्, रपरत्वम्, 'अचि विभाषा' इति लत्वम् । गिलगिल इति । गिलं गिलतीति पूर्ववत् कः, इत्वादि च ।

गिलगिले चेति । गिलं गिलतीति गिलगिलः । 'आतश्चोपसर्गे' इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वात् कः । पूर्वत्राप्येवं कविधाने न दोषः । तिमीनां गिलगिल इत्यस्मिन्नर्थे विवक्षित इदं वक्तव्यम् । अथ तिमिं गिलतीति तिमिङ्गिलः, तिमिङ्गिलं गिलतीत्येषोऽर्थो

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


* सूतोग्रराजभोजमेर्वित्येतेभ्य उत्तरस्य दुहितृशब्दस्य पुत्रडादेशो वा वक्तव्यः * । सूतपुत्री । सूतदुहिता । उग्रपुत्री । उग्रदुहिता । राजपुत्री । राजदुहिता । भोजपुत्री । भोजदुहिता । मेरुपुत्री । मेरुदुहिता ।

केचित्तु शार्ङ्गरवादिषु पुत्रशब्दं पठन्ति, तस्य पुत्रीति भवति ।

अन्यत्रापि हि दृश्यते — शैलपुत्रीति ॥

**श्येनतिलस्य पाते ञे ॥ ७१ ॥**

श्येन, तिल — इत्येतयोः पातशब्द उत्तरपदे ञप्रत्यये परे मुमागमो भवति । श्येनपातोऽस्यां क्रीडायाम् श्यैनम्पाता मृगया । तैलम्पाता ।

ञ इति किम्? श्येनपातः ॥

पदमञ्जरी

*पुत्रड्वेति* । टकारो ङीबर्थः ।

*केचित्त्वित्यादि* । तेषां पक्ष उपसंख्यानमिदं नारब्धव्यम् ।

*अन्यत्रापि हीत्यादिना* शार्ङ्गरवादिपाठमेव द्रढयति । अन्ये तु शार्ङ्गरवादिपाठं नेच्छन्ति ॥

*श्येनतिलस्य पाते ञे ॥ श्येनपातोऽस्यां क्रियायामिति* । यद्यपि 'घञः सास्यां क्रियेति ञः' इत्यतः क्रियाग्रहणं प्रकृत्यर्थविशेषणम्, न प्रत्ययार्थः, श्येनपातोऽस्यां तिथौ श्येनपाता तिथिरिति तत्रोदाहृतत्वात्; तथाप्यस्यामिति स्त्रीलिङ्गमात्रस्य प्रत्ययार्थत्वात्क्रियाया अपि प्रत्ययार्थत्वमविरुद्धम् । *श्यैनम्पातेति* । पतनं पातः, श्येनस्य पातः, कर्तरि षष्ठ्या समासः, ततः 'घञः सास्याम्' इति ञः ॥

न्यासः

यदा विवक्ष्यते तदा पूर्वेणैव सिद्धमिति नार्थ एतेन ।

उष्ट्रङ्करणम्, भद्रङ्करणमिति । षष्ठीसमासौ । पुत्रडिति । टकारो ङीबर्थः ।

केचित् तु शार्ङ्गरवादिषु पुत्रशब्दं पठन्तीति । तान् प्रति नेदमुपसङ्ख्यानं कर्त्तव्यम् ।

अन्यत्रापि दृश्यत इति । अनेन शार्ङ्गरवादिषु पुत्रशब्दस्य पाठं द्रढयति ।

श्येनतिलस्य पाते ञे ॥ ञप्रत्यये परं इति । ञः प्रत्ययो यस्मादुत्तरपदात् तद् तथोक्तम् । श्यैनम्पातेति । पतनं पातः, भावे घञ्, श्येनस्य पातः श्येनपातः । 'कृद्योगा च षष्ठी समस्यते' इति समासः, ततः 'घञः सास्यां क्रियेति ञः' ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


## रात्रेः कृति विभाषा ॥ ७२ ॥

रात्रेः कृदन्ते उत्तरपदे विभाषा मुमागमो भवति । रात्रिञ्चरः, रात्रिचरः । रात्रिमटः, रात्र्यटः । अप्राप्तविभाषेयम् ।

खिति हि नित्यं मुम् भवति – रात्रिम्मन्यः ॥

पदमञ्जरी

रात्रेः कृति विभाषा ॥ *कृदन्त उत्तरपद इति* । यद्यप्याचारक्विबन्तस्य रात्रिशब्दस्यानन्तरस्तृजादिः कृत्सम्भवति, तथापि तस्य गौणार्थत्वादग्रहणमिति सामर्थ्यादुत्तरपदाधिकारेऽप्यत्र तदन्तविधिर्भवति । *रात्रिञ्चर इति* । रात्रौ चरतीति 'चरेष्टः' । *रात्रिमट इति* । अटतीत्यटः, पचाद्यच्, साधनं कृतेति समासः । *अप्राप्तविभाषेयमिति* ।

ननु चोभयत्रविभाषेयं युक्ता, रात्रिम्मन्येत्यादौ खिदन्ते प्राप्ते, अन्यत्राप्राप्ते ? इत्यत आह–*खिति हि नित्यं मुम् भवतीति* । पूर्वविप्रतिषेधेनेति भावः ॥

न्यासः

रात्रेः कृति विभाषा ॥ कृदन्त उत्तरपद इति । कथं पुनस्तदन्तविधिर्लभ्यते, यावता ज्ञापितमेतत्—उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तविधिर्नास्तीति, रात्रिशब्दादनन्तरस्य कृत्प्रत्ययस्यासम्भवात् तदन्तविधिर्विज्ञायत इति चेत् ? अयुक्तमेतत्; सम्भवति हि रात्रेरनन्तरः कृत्प्रत्ययः । रात्रिरिवाचरतीति 'आचारे सर्वप्रातिपदिकेभ्यः क्विब् वा' इति क्विप्, 'सनाद्यन्ता धातवः' इति धातुसंज्ञा, तृच्, इट्, गुणायादेशौ— रात्रयितेति । तदेवं सम्भवत्यनन्तरे कृत्प्रत्यये तत्रैव स्यात्, न तदन्ते ? नैष दोषः; 'अरुर्द्विषदजन्तस्य' इत्यतोऽन्तग्रहणमनुवर्त्तते, तेन तदन्त एव कार्यं विज्ञायत इति । एवं तर्ह्याचारक्विबन्तस्यापि रात्रिशब्दस्य कृदन्त उत्तरपदे स्यात् । भवतु । अथ तु नेष्यते ? व्यवस्थितविभाषाङ्गीकर्त्तव्या । गौणत्वाद्वा रात्रिशब्दस्य न भविष्यति । गौणत्वं पुनः प्राथमकल्पिकादर्थादपेतत्वात्, यथा—वाहीको गौरित्यत्र गोशब्दस्य । रात्रिञ्चर इति । रात्रौ चरतीति 'चरेष्टः' इति टः, उपपदसमासः । रात्रिमट इति । अटतीत्यटः, पचाद्यच्, रात्रावट इति 'सप्तमी' इति योगविभागात्समासः । अप्राप्तविभाषेयमिति । ननु च खिदपि कृदस्ति– रात्रिम्मन्यमिति, अत्र हि 'अरुर्द्विषदजन्तस्य' इति नित्यं प्राप्नोति, रात्रिञ्चर इत्यादौ न केनचित् प्राप्नोति; एवञ्च प्राप्ते चाप्राप्त इयं विभाषा युक्तेत्यत आह—खिति हि नित्यं मुम् भवतीति । पूर्वविप्रतिषेधेनेत्यभिप्रायः । अत्र हि पूर्वविप्रतिषेध आश्रीयते, खिति पूर्वेण नित्यम् मुम्भवति । एवञ्च खितोऽन्यदेव कृदन्तमस्य वचनस्यावकाशः । न च केनचित् तत्र प्राप्नोतीति युक्तमस्याप्राप्तविभाषात्वम् ॥



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

## नलोपो नञः ॥ ७३ ॥

नञो नकारस्य लोपो भवत्युत्तरपदे। अब्राह्मणः। अवृषलः। असुरापः। असोमपः।

* नञो नलोपोऽवक्षेपे तिङ्युपसंख्यानं कर्त्तव्यम् *। अपचसि त्वं जाल्म। अकरोषि त्वं जाल्म॥

पदमञ्जरी

नलोपो नञः॥ नञः सानुबन्धकस्य ग्रहणम्, पामादिभ्यो नः—पामनपुत्र इत्यादौ मा भूत्। अथ क्रियमाणेऽपि सानुबन्धकग्रहणे स्त्रैणपुत्र इत्यत्र कस्मान्न भवति? प्रत्ययञित्त्वस्य वृद्धिस्वरयोश्चरितार्थत्वात्, निपातञित्त्वस्य चाचरितार्थत्वात्, पूर्वपदेन वा नञ् विशेष्यत इति अपूर्वपदत्वान्न भविष्यति। एवं च कृत्वाऽनुबन्धोच्चारणमपि न कर्त्तव्यम्, अपूर्वपदत्वादेव पामनपुत्रे न भविष्यति।

अवक्षेपे *तिङीति*। अवक्षेपः = निन्दा। नञोऽशिति वा नञोऽनिति वा सिद्धे लोपवचनं साकच्कार्थमित्याहुः॥

न्यासः

नलोपो नञः॥ सानुबन्धकग्रहणमिह मा भूत्। पामनपुत्र इति। पामान्यस्य सन्तीति 'लोमादिपामादि' इत्यादिना नप्रत्ययः। तदन्तस्य पुत्रशब्देन षष्ठीसमासः। अथ क्रियमाणे सानुबन्धकग्रहणे स्त्रिया अयमिति 'स्त्रीपुंसाभ्याम्' इत्यादिना नञ्—स्त्रैणः, स्त्रैणश्चासावर्थश्चेति स्त्रैणार्थ इत्यत्र कस्मान्न भवति? पूर्वपदभूतस्य नञो ग्रहणात्। कुत एतत्? उत्तरपदस्य सम्बन्धिशब्दत्वात्। पूर्वपदं ह्यपेक्ष्योत्तरपदं सम्भवति। अत उत्तरपदाधिकारात् पूर्वपदभूतस्यात्र नञो ग्रहणम्। अथ वा—विभाषाग्रहणमनुवर्त्तते, तस्य व्यवस्थितविभाषात्वविज्ञानान्न भविष्यति। यद्येवम्, पामनपुत्र इत्यत्राप्यत एव न भविष्यतीति नार्थः सानुबन्धकग्रहणेन? एवं तर्हि विस्पष्टार्थं सानुबन्धकग्रहणम्। न च 'नस्य' इत्युच्यमाने कश्चिल्लाघवकृतो विशेषो भवति।

अवक्षेपे तिङ्युपसंख्यानं कर्त्तव्यमिति। अवक्षेपः = निन्दा। उत्तरपदे नलोपो विधीयमानस्तिङन्ते न प्राप्नोति, तस्मात् तस्योपसंख्यानं कर्त्तव्यम्। ननु चास्त्येवाकारः प्रतिषेधवाची, 'अ मा नो नाः प्रतिषेधवचनाः' इति वचनात्, ततश्च तस्यैवावक्षेपे तिङि प्रयोगो भविष्यतीति किमुपसंख्यानेन? नञोऽपि तह्यवक्षेपे तिङि परतः प्रयोगः प्राप्नोति। तस्मादवक्षेपे नञोऽकृतनलोपस्य प्रयोगनिवृत्त्यर्थमुपसंख्यानं कर्त्तव्यमिति। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। तत्रेदं प्रतिपादनम्—'वाचंयम-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


## तस्मान्नुडचि ॥ ७४ ॥

तस्माल्लुप्तनकारान्नञः नुडागमो भवति अजादावुत्तरपदे। अनजः। अनश्वः।

तस्मादिति किम्? नञ एव हि स्यात्। पूर्वान्ते हि 'ङमो ह्रस्वादचि ङमुण्नित्यम्' इति ङमुट् प्राप्नोति ॥

### पदमञ्जरी

*तस्मान्नुडचि ॥ नञ एव हि स्यादिति*। 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति वचनात्। नञश्च नुटि सत्यनिष्टं रूपं स्यात्, नलोपविधानमनजाद्यर्थं स्यात्, तस्माद्ग्रहणे तु सति पञ्चमीनिर्देशस्य बलीयस्त्वादुत्तरस्यैव भवति। ननु यदि तत्रैव स्यान्नाचीति नलोपमेव प्रतिषेधेत्। तद्वचनं तूत्तरपदस्यैव भविष्यति। तस्मादेवं वक्तव्यम्—नाप्राप्ते नलोपे आरभ्यमाणो नुट् तस्य बाधकः स्यात्, तस्माद्ग्रहणे तु सति निमित्तमेव नुटो नलोपो भवति।

अथ नुगिति पूर्वान्त एवायं कस्मान्न कृतः, एवं हि नञ एव स्यादित्येवमपि दोषो न भविष्यति; तत्रायमप्यर्थः—'तदोः सः सौ' इत्यत्र 'तदोः' इत्यपनीय 'तोः' इति वर्गग्रहणमेव कर्त्तव्यम्; परादौ ह्यनेष करोतीत्यत्र नुटो नकारस्यापि प्रसङ्गादशक्यं वर्गग्रहणम्? तत्राह—*पूर्वान्ते हीति*। *ङमुट् प्राप्नोतीति*। 'नलोपः प्रातिपदिकान्तस्य' इति नलोपो विधानसामर्थ्यान्न भवतीति भावः।

### न्यासः

पुरन्दरौ च' इत्यतश्चकारोऽनुवर्त्तते, स चानुक्तसमुच्चयार्थः। तेन तिङन्तेऽप्यवक्षेपे गम्यमाने नञो नलोपो भविष्यतीति ॥

तस्मान्नुडचि ॥ नञ एव हि स्यादिति। अचीति सप्तमीनिर्देशात्, 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति वचनात्। नञो नुडागमे सत्यनिष्टं रूपं स्यात्। तस्माद्ग्रहणे तु सति 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' इत्युत्तरपदस्यैव भवति, अतो न भवत्यनिष्टप्रसङ्गः। ननु च यदि नञो नुट् स्यात् नलोपवचनमनर्थकं स्यात्? नानर्थकम्; अब्राह्मणः, अवृषल इत्यनजादौ नकारश्रवणं मा भूदित्येवमर्थत्वात्।

यदि नञो मा भूदित्येवमर्थं 'तस्मात्' इत्युच्यते, तर्हि न वाच्यम्, पूर्वान्तो ह्ययं नुक् करिष्यते? इत्याह—पूर्वान्ते हीत्यादि। पूर्वान्ते नुटि क्रियमाणे ङमन्तस्य पदस्य विधीयमानः 'ङमो ह्रस्वादचि ङमुण् नित्यम्' इति नुट् प्राप्नोति, ततश्च स एवानिष्टप्रसङ्गः। तस्मान्नुडेव कर्त्तव्यः। अस्मिंस्तु क्रियमाणे नञ एव मा भूदित्येवमर्थं तस्माद्ग्रहणम् ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

## नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसक-नक्षत्रनक्रनाकेषु प्रकृत्या ॥ ७५ ॥

नभ्राट्, नपात्, नवेदाः, नासत्याः, नमुचि, नकुल, नख, नपुंसक, नक्षत्र, नक्र, नाक – इत्येतेषु नञ् प्रकृत्या भवति। न भ्राजत इति नभ्राट् – भ्राजतेः क्विबन्तस्य नञ्समासः। न पातीति नपात् – पातिः शत्रन्तः। न वेत्तीति नवेदाः – वेत्तिरसुन्प्रत्ययान्तः। नासत्याः – सत्सु साधवः सत्याः, न सत्या असत्याः, न असत्याः नासत्याः। न मुञ्चतीति नमुचिः – मुचेरौणादिकः किप्रत्ययः। नास्य कुलमस्ति

पदमञ्जरी

अत्रापि पक्षे इदं कर्तव्यम्—नाप्राप्ते नलोपे आरभ्यमाणो नुक् तस्य बाधकः स्यादिति ॥

*नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या ॥* *नभ्राडिति*। 'भ्राजभास' इत्यादिना क्विप्, व्रश्चादिषत्वम्, जश्त्वम्—डकारः, तस्य 'वावसाने' इति पक्षे चर्त्वम्—टकारः। *पादिति शत्रन्तमिति*। तनूनपादुच्यते, अपान्नपादित्यादावनपुंसकेऽपि दर्शनाद् 'उभे वनस्पत्यादिषु' इत्यत्र पातेः क्विपि निपातनात्तुगित्यभिधानाच्चापपाठोऽयम्। पादिति क्विबन्तमिति पाठः। शत्रन्तमित्यस्य वानन्तरं नरैर्न मन्तव्यमित्यध्याहार्यम्। *औणादिकः किप्रत्यय इति*। 'इगुपधात्किः' इत्यनेन। कम् = सुखम्, अकम् = दुःखम्, तद्यत्र नास्ति स नाकः स्वर्गः[1]।

दुःखेन यन्न सम्भिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतं च सुखं स्वर्गपदास्पदम्[1] ॥

न्यासः

नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या ॥ नभ्राडिति। 'भ्राजृ दीप्तौ'—अस्माद् 'भ्राजभास' इत्यादिना क्विप्, जकारस्य 'व्रश्च' इत्यादिना षकारः, तस्य जश्त्वम्—डकारः, तस्यापि चर्त्वम्—टकारः। नपादिति। नपुंसकत्वादसत्यां सर्वनामस्थानसंज्ञायामुगिल्लक्षणो नुम् न भवति। नवेदा इति। 'अत्वसन्तस्य चाधातोः' इति दीर्घः। सत्सु साधवः सत्या इति। अनेन 'तत्र साधुः' इति सच्छब्दात् प्राग्घितीयं यतं दर्शयति। औणादिकः किप्रत्यय इति। 'इगुपधात् कित्'

---

१–१. वाचस्पतिमिश्रास्तु—'यन्न दुःखेन सम्भिन्नं ... तत्सुखं स्वःपदास्पदम्' इति पठन्ति सांख्यतत्त्वकौमुद्यां द्वितीयकारिकायाः।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



नकुलः । नख — नास्य खमस्तीति नखम् । नपुंसक — न स्त्री न पुमान्नपुंसकम् — स्त्रीपुंसयोः पुंसकभावो निपात्यते । नक्षत्र — न क्षरते क्षीयत इति वा नक्षत्रम् — क्षियः, क्षरतेर्वा क्षत्रमिति निपात्यते । नक्र — न क्रामतीति नक्रः — क्रमेर्डप्रत्ययो निपातनात् । नाक — नास्मिन्नकमस्ति नाकम् ।

## एकादिश्चैकस्य चादुक् ॥ ७६ ॥

एकादिश्च नञ्प्रकृत्या भवति एकशब्दस्य चादुगागमो भवति । एकेन न विंशतिः एकान्नविंशतिः । एकान्नत्रिंशत् । 'तृतीया' इति योगविभागात्समासः ।

### पदमञ्जरी

इति हि पठन्ति । अत्र नपुंसकादित्रये निपात्यमस्तीति ते तथैव ग्राह्याः । इतरेषु तूत्तरपदमात्राणि गृहीत्वा नञ् ऽकृत्येत्येव वाच्यम् । एवं सिद्धे सति समुदायपाठः प्रसिद्ध्युपसंग्रहार्थः । तेन नासत्यावित्याश्विनोरेव भवति, अन्यत्रानसत्या इत्येव । एवमन्यत्रापि यथासम्भवं द्रष्टव्यम् ।

*प्रकृत्येति* वचनमुत्तरार्थम्, इह तु निपातनादेव सिद्धम् ॥

*एकादिश्चैकस्य चादुक्* ॥ एकादिरिति बहुव्रीहिः । आदिशब्दो व्यवस्थावचनः । *एकान्नविंशतिरिति* । पूर्वं नञो विंशत्यादिभिः समासं कृत्वा पश्चात् तृतीयासमासः कर्तव्यः ।

किमर्थं पुनः पूर्वान्तोऽयमादुक् क्रियते, न परादिरादुट् क्रियेत, एवमेकस्येत्यागमिनिर्देशार्थं न कर्तव्यं भवति, प्रकृतस्य नञ एवागमित्वात् ? इत्यत

### न्यासः

इति क्विप्रत्ययः । क्षिय इति । 'क्षिष् हिंसायाम्', 'क्षि निवासगत्योः' इति । क्षरतेर्वेति । 'क्षर सञ्चलने' । नक्षत्रमिति निपात्यते । किमत्र निपात्यते ? यदि क्षियः, तदा त्रप्रत्यय इकारस्यात्वम्; यदि क्षरतेस्तदापि त्रप्रत्ययो रेफलोपश्च । नास्मिन्नकमस्तीति नाकमिति । कमिति सुखमुच्यते । न कम् = दुःखम् । नास्मिन्नकमस्तीति नाकः = स्वर्गः । रूढिशब्दा ह्येते यथाकथञ्चिद् व्युत्पाद्यन्ते ॥

एकादिश्चैकस्य चादुक् ॥ एकादिरिति बहुव्रीहिः । एकान्नविंशतिरिति । पूर्वं नञो विंशतिशब्देन समासं कृत्वा ततस्तृतीयासमासः कर्त्तव्यः ।

किमर्थं पुनरयं पूर्वान्त आदुक् क्रियते, न परादिरेवादुट् क्रियेत ? तत्राप्ययमर्थः— एकस्य चेत्येष आगमिनो निर्देशो न कर्त्तव्यो भवति । परादौ हि क्रियमाणे नञेवागमो

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पूर्वान्तोऽयमदुक् क्रियते । पदान्तलक्षणोऽत्रानुनासिको विकल्पेन यथा स्याद् इति ॥

नगोऽप्राणिष्वन्यतरस्याम् ॥ ७७ ॥

नञ्प्रकृत्या भवत्यन्तरस्याम् । नगा वृक्षाः, अगा वृक्षाः । नगाः पर्वताः, अगाः पर्वताः । न गच्छन्तीति नगाः । गमेर्डप्रत्ययः ।

पदमञ्जरी

आह—*पूर्वान्तश्चायमिति* । 'यरोऽनुनासिकेऽनुनासिको वा' इत्यत्र 'न पदान्ताट्टोरनाम्' इत्यतः पदान्तग्रहणमनुवर्तते, अविघ्नः, बध्नातीत्येवमादिषु मा भूदिति । परादौ सति दकारः पदान्तो न स्यादिति अनुनासिको न स्यात् । अथानुट् क्रियेत, एवमपि पक्षे दकारश्रवणं न स्यात् ? तदिदमुक्तम्—*अनुनासिको विकल्पेन यथा स्यादिति* । किमर्थं पुनरादुक् क्रियते, अदुगेव नोच्येत, सवर्णदीर्घत्वे तावत् सिद्धम्, 'अतो गुणे' इति पररूपत्वं चाकारोच्चारणसामर्थ्यादेव न भविष्यति, यदि स्याद् दुकमेव विदध्यात् । सवर्णदीर्घत्वं तु 'यं विधिं प्रत्युपदेशोऽनर्थकः' इति न्यायाद्भविष्यति । *वृत्तिकारेण* तु प्रतिपत्तिलाघवार्थमादुगयं व्याख्यातः ॥

*नगोऽप्राणिष्वन्यतरस्याम्* ॥ *गमेर्डप्रत्यय इति* । 'डप्रकरणे अन्यत्रापि दृश्यते' इति ॥

न्यासः

भवति, स च प्रकृतत्वादेव लभ्यते; तत्रायं वाक्यार्थो भवति—एकादिश्च नञ् प्रकृत्या भवति, आदुट् च तस्यागमो भवति—इति सिद्धमिष्टम् ? इत्याह—पूर्वान्तोऽयमित्यादि । 'यरोऽनुनासिकेऽनुनासिको वा' इत्यत्र हि 'न पदान्ताट्टोरनाम्' इत्यतः पदान्तादित्यनुवर्त्तते । तत्र यदि परादिः क्रियते पदान्तताऽस्य न स्यात्, ततश्च पदान्तलक्षणोऽनुनासिकविकल्पो न स्यात्, इष्यते च । तस्माद् विकल्पेन यथा स्यादित्येवमर्थं पूर्वान्त आदुक् क्रियते ।

अथ किमर्थमादुक् क्रियते ? अदुगेव नोच्येत, अदुक्यपि क्रियमाणेऽकः सवर्णे दीर्घत्वेन सिध्यति ? न सिध्यति; 'अतो गुणे' पररूपत्वं प्राप्नोति, तदप्यकारोच्चारणसामर्थ्यान्न भविष्यति, यदि ह्यत्र पररूपत्वं स्याद् दुकमेव विदध्यात्, तर्हि सवर्णदीर्घत्वमप्यकारोच्चारणसामर्थ्यान्न स्यात् ? नैतदस्ति; तथा हि—यं विधिं प्रत्युपदेशोऽनर्थकः स्यात् स विधिर्बाध्यते, यस्य तु विधेस्तदेव निमित्तं नासौ विधिर्बाध्यते । पररूपत्वं च प्रत्यकारोच्चारणमनर्थकम्, सवर्णदीर्घत्वं तु प्रति निमित्तमेव । एवं तर्ह्यदुगेवायम् । तुल्या हि संहिता ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अप्राणिष्विति किम् ? अगो वृषलः शीतेन ॥

सहस्य सः संज्ञायाम् ॥ ७८ ॥

सहशब्दस्य स इत्ययमादेशो भवति संज्ञायां विषये । साश्वत्थम् । सपलाशम् । सशिंशपम् ।

संज्ञायामिति किम् ? सहयुध्वा । सहकृत्वा ।

सादेश उदात्तो निपात्यते । उदात्तानुदात्तवतो हि सहशब्दस्यान्तर्यतः स्वरितः स्यात् । स च निपातस्वरः पूर्वपदप्रकृतिस्वरत्वं यत्र, तत्र उपयुज्यते । अन्यत्र समासान्तोदात्तत्वेन बाध्यत एव — सेष्टि, सपशुबन्धमिति ॥

पदमञ्जरी

*सहस्य सः संज्ञायाम्* ॥ *सहयुध्वेति* । युध्यतेः क्वनिप् 'राजनि युधि कृञः', 'सहे च' इति सादेशः ।

*उदात्तो निपात्यत इति* । अन्यथा तु किं स्यात् ? इत्यत आह—*उदात्तानुदात्तवतो हीति* । सहशब्दे 'निपाता आद्युदात्ताः' इति सशब्द उदात्तः, शेषनिघाते हशब्दोऽनुदात्तः, तेनासावुदात्तानुदात्तवान् तस्य स्थाने भवन् सशब्द आन्तर्यतः स्वरितः स्यात् , तन्मा भूदेष दोष इति उदात्तो निपात्यते । यद्येवम् , अव्ययीभावेऽपि तस्यैवोदात्तत्वं श्रूयेत ? तत्राह—*स चेति* । अयमभिप्रायः— समासे कृते समासस्वरश्च प्राप्नोति, अयं चादेशः; तत्र परत्वादस्मिन्नादेशे उदात्तेऽभिनिर्वृत्ते पुनःप्रसङ्गविज्ञानात् समासस्वरः, स च सतिशिष्ट इति

न्यासः

नगोऽप्राणिष्वन्यतरस्याम् ॥ गमेर्डप्रत्यय इति । 'डप्रकरणे अन्यत्रापि दृश्यते' इति वचनात् ॥

सहस्य सः संज्ञायाम् ॥ साश्वत्थमिति । सहाश्वत्थेनेति 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः । सहयुध्वा, सहकृत्वेति । 'दृशेः क्वनिप्' इत्यनुवर्त्तमाने 'राजनि युधि कृञः', 'सहे च' इति क्वनिप् , उपपदसमासः, 'सर्वनामस्थाने' इति दीर्घः ।

किं पुनः कारणं सादेश उदात्तो निपात्यते ? इत्यत आह—उदात्तानुदात्तवतो हीत्यादि । 'निपाता आद्युदात्ता भवन्ति' इति सहशब्द आद्युदात्त एव, शेषमनुदात्तम् । तेनासावुदात्तानुदात्तवान् , ततश्चान्तर्यतस्तस्य स्थाने सशब्दः स्वरितः । तस्मान्मा भूदेष दोष इत्युदात्तो निपात्यते । यद्येवम् , अव्ययीभावेऽपि उदात्त एव स्वरः प्राप्नोति ? इत्यत आह—स च निपातस्वर इत्यादि । यत्रेत्यादि । बहुव्रीहौ, तत्पुरुषे वा ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## ग्रन्थान्ताधिके च ॥ ७९ ॥

ग्रन्थान्ते, अधिके च वर्त्तमानस्य सहशब्दस्य स इत्ययमादेशो भवति । सकलं ज्यौतिषमधीते । समूहूर्तम् । ससंग्रहं व्याकरणमधीयते । कलान्तम्, मुहूर्त्तान्तम्, संग्रहान्तमिति अन्तवचने – अव्ययीभावः समासः । तत्र 'अव्ययीभावे चाकाले' इति कालवाचिन्युत्तरपदे सभावो न प्राप्नोतीत्ययमारम्भः ।

पदमञ्जरी

तस्यैव श्रवणम् । उदात्तनिपातनस्य तु यत्र पूर्वपदप्रकृतिस्वरत्वं बहुव्रीहितत्पुरुषयोस्तत्रैव श्रवणमिति । *सेष्टि, सपशुबन्धमिति* । अन्तवचनेऽव्ययीभावः ॥

*ग्रन्थान्ताधिके च* ॥ *सकलमिति* । कला = कालविशेषः, तत्सहचरितो ग्रन्थोऽपि कला । एवं *समुहूर्तमित्यत्रापि* । *ससंग्रहमिति* । एतत्तु प्रमादाल्लिखितम्, अत्र हि 'अव्ययीभावे चाकाले' इति वक्ष्यमाणेनैव सिद्धः सभावः । *कालवाचिन्युत्तरपद इति* । कालादयः शब्दा यद्यपि तत्सहचरितग्रन्थपराः, तथाप्यधीत इति

न्यासः

'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इति सहेत्येतस्य समासान्तोदात्तत्वापवादः प्रकृतिस्वरत्वं भवति । तत्पुरुषेऽपि 'तत्पुरुषे तुल्यार्थ' इत्यादिना । तस्मात् तत्रैव स निपातस्वरः प्रसज्यते । अव्ययीभावे तु समासान्तोदात्तत्वापवादः प्रकृतिस्वरो न केनचिद्विहित इति तत्र समासान्तोदात्तत्वेनैव भवितव्यम् । अतस्तेन बाध्यत एव । सेष्टि, सपशुबन्धमिति । इष्टिरन्तो यस्य, पशुबन्धोऽन्तो यस्येति, 'अव्ययं विभक्ति' इत्यादिना समासः, अन्तवचने । अत्र परत्वात् प्रथमस्तावन्निपातस्वरः, ततः समासान्तोदात्तत्वम् । तच्च सति निपातस्वरे शिष्यत इति सतिशिष्टम्, अतस्तेन निपातस्वरो बाध्यते; सतिशिष्टस्वरस्य बलीयस्त्वात् ॥

ग्रन्थान्ताधिके च ॥ सकलमिति । कला = कालविशेषः, तत्सहचरितो ग्रन्थस्तथोच्यते । सह कलया वर्त्तत इति सकलम् । एवं समुहूर्त्तमित्येतदपि वेदितव्यम् । ससंग्रहमिति एतदुदाहरणं प्रमाददिदानीन्तनैः कुलेखकैर्लिखितम्, तत्र हि 'अव्ययीभावे चाकाले' इत्येवं सिद्धः सभावः । अन्तवचनेऽव्ययीभावः समास इति । यद्येवम्, ग्रन्थान्तेऽपार्थकोऽयं सभावस्यारम्भः, यावता 'अव्ययीभावे चाकाले' इत्येवं सभावः सिद्धः ? इत्याह—तत्रेत्यादि । कथं पुनर्न प्राप्नोति, यावता कालमुहूर्त्तशब्दौ तावत् साहचर्यादत्र ग्रन्थे वर्तेते ? एवं मन्यते—प्रकरणादिना वाक्येन ग्रन्थविषयता तयोर्गम्यते । मुख्यस्तु काल एवाभिधेय इति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अधिके — सद्रोणा खारी । समाषः कार्षापणः । सकाकिणीको माषः ॥

## द्वितीये चानुपाख्ये ॥ ८० ॥

द्वयोः सहयुक्तयोरप्रधानो यः स द्वितीयः । उपाख्यायते = प्रत्यक्षत उपलभ्यते यः स उपाख्यः, उपाख्यादन्योऽनुपाख्यः=अनुमेयस्तस्मिन् द्वितीयेऽनुपाख्ये सहस्य स इत्ययमादेशो भवति । साग्निः कपोतः । सपिशाचा वात्या । सराक्षसीका शाला । अग्न्यादयः साक्षादनुपलभ्यमानाः कपोतादिभिरनुमीयमानास्तदुपाख्या भवन्ति ॥

### पदमञ्जरी

पदान्तरप्रयोजनसमधिगम्यत्वाद् ग्रन्थपरत्वं बहिरङ्गमिति कालाश्रयः प्रतिषेध एव स्यादिति मन्यते ।

*सद्रोणेति* । 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिरयम् । तेन 'वोपसर्जनस्य' इति विकल्पे प्राप्ते नित्यार्थं वचनम् ॥

*द्वितीये चानुपाख्ये* ॥ *अप्रधानो यः सः द्वितीय इति* । तत्रैव लोके द्वितीयशब्दस्य प्रयोगात्, स्वामिभृत्ययोर्हि स्वामिनं प्रति भृत्यो द्वितीय इत्युच्यते, न विपर्ययेण । *उपाख्यायते* इत्यस्य विवरणम्—*प्रत्यक्षेणोपलभ्यत इति* । 'घञर्थे कविधानम्' इति कः कर्मणि । *साग्निरिति* । पूर्ववद्बहुव्रीहिः, इदमपि नित्यार्थं वचनम् । 'अग्न्यादयः' इत्यादिना अनुपाख्यत्वं दर्शयति, कपोतश्चेदगारमुपहन्यात्ततश्च कपोतेनाग्निरनुमीयते । विद्युद्वात्ययोश्च रक्षःपिशाचं वर्तत इति वार्त्ता ॥

### न्यासः

सद्रोणा खारीत्यादि । 'तेन सह' इत्यादिना बहुव्रीहिः ॥

द्वितीये चानुपाख्ये ॥ द्वयोः सहप्रयुक्तयोरप्रधानो यः स द्वितीय इति । प्रधानेतरसन्निपाते सत्यप्रधान एव द्वितीयशब्दस्य प्रयोगात् । तथा हि—स्वामिभृत्ययोः सहयुक्तयोर्भृत्य एव स्वामिनं प्रति द्वितीय उच्यते, न तु भृत्यं प्रति स्वामी । उपाख्यायते यः स उपाख्य इति । 'आतश्चोपसर्गे' इति कः, स च भवन् 'कृत्यल्युटो बहुलम्' इति कर्मणि भवति । साग्निः कपोत इति । पूर्ववद् बहुव्रीहिः । अत्राग्निसहयुक्तः कपोतः, तयोर्हि साहचर्यं लोके प्रसिद्धम् । तत्राग्निरप्रधानः । तथा ह्यग्निः कपोतमनुविधत्ते—यत्र हि कपोतस्तत्राग्निनावश्यं भवितव्यम्, न तु यत्राग्निस्तत्र कपोतेनेति नासावग्निमनुविधत्ते, तेन कपोतस्य प्राधान्यम् । अग्न्यादयः पुनरप्रधाना एव । अग्न्यादय इति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## अव्ययीभावे चाकाले ॥ ८१ ॥

अव्ययीभावे च समासेऽकालवाचिन्युत्तरपदे सहस्य स इत्ययमादेशो भवति । सचक्रं धेहि । सधुरं प्राज ।

अकाल इति किम् ? सहपूर्वाह्णम् ॥

## वोपसर्जनस्य ॥ ८२ ॥

पदमञ्जरी

*अव्ययीभावे चाकाले* ॥ *अकालवाचिनीति* । स्वरूपग्रहणं न भवति; 'ग्रन्थान्ताधिके च' इत्यत्र ग्रन्थग्रहणात्, तद्धि समुहूर्तमित्यादौ यथा स्यादित्येवमर्थम् । यदि चात्र स्वरूपग्रहणं भवति, तदा मुहूर्त्तादौ निषेधाभावादनेनैव सिद्धत्वादनर्थकं तत्स्यात् । *सचक्रमिति* । यौगपद्येऽव्ययीभावः । *सपुरमिति* । 'ऋक्पूरब्धूः' इत्यकारः समासान्तः । *सहपूर्वाह्णमिति* । साकल्येऽव्ययीभावः ॥

*वोपसर्जनस्य* ॥ उपसर्जनस्येत्यस्य सहशब्दे विशेष्ये सहयुध्वा, सहकृत्वेत्यत्रापि स्यात्, अनर्थकञ्च विशेषणं स्यात्, सहशब्दस्य चासत्त्ववाचित्वाद् द्वन्द्वो न सम्भवति, समासान्तरे च सह उपसर्जनमेव; तस्मादुत्तरपदेन सन्निधापितस्य समासस्यैवेदं विशेषणं विज्ञायते । तत्राप्यवयवद्वारा समासस्योपर्जनसंज्ञाया अभावात् सर्वत्र च समासे कश्चिदवयव उपसर्जनमेव । उच्यते चेदमु-

न्यासः

अत्रादिशब्देन पिशाचादयो गृह्यन्ते । ते हि न क्वचित् प्रत्यक्षेण उपलभ्यन्ते, अपि तु कपोतादिभिरविनाभाविभिरनुमीयन्त इत्यनुपाख्या भवन्ति ॥

अव्ययीभावे चाकाले ॥ अकालवाचिनीति । अनेन 'काले' इति नेह स्वरूपस्य ग्रहणम्, अपि तु कालविशेषवाचिनां पूर्वाह्णादिशब्दानामिति दर्शयति । कुत एतत् पुनरवसितम् ? 'ग्रन्थान्ताधिके च' इत्यत्र ग्रन्थान्तग्रहणात् । अनेन हि कालवाचिन्युत्तरपदे प्रतिषेधः प्राप्नोति, स मा भूदिति । तत्र ग्रन्थान्तग्रहणं क्रियते, यदि चात्र 'काले' इति स्वरूपग्रहणं स्यात्, ततस्तेनैव सकलम्, समुहूर्त्तमित्यत्र सभावः सिद्ध इति तत्र ग्रन्थान्तग्रहणमनर्थकं स्यात् । सचक्रमिति । 'अव्ययं विभक्ति' इत्यादिना यौगपद्येऽव्ययीभावः । सधुरमिति । 'ऋक्पूरब्धूःपथामानक्षे' इत्यकारः समासान्तः ।

सहपूर्वाह्णमिति । तेनैव सूत्रेण साकल्येऽव्ययीभावः ॥

वोपसर्जनस्य ॥ यदि 'उपसर्जनस्य' इत्येतत् सहशब्दस्य विशेषणं स्यात् तदातिप्रसङ्गः स्यात् । विशेषानुपादानादिहापि स्यात् सहयुध्वा, सहकृत्वेति । अत्रापि सहशब्द उपसर्जनम्; 'उपपदमतिङ्' इति प्रथमानिर्देशात्, अप्राधान्याच्च । अनर्थकञ्च विशेषणं स्यात्; सर्वत्रैव हि समासे सहशब्दस्योपसर्जनत्वात् । समासश्चेहोत्तरपदेन सन्निधापितः,

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



उपसर्जनसर्वावयवः समास उपसर्जनम्, यस्य सर्वेऽवयवा उपसर्जनीभूताः स सर्वोपसर्जनो बहुव्रीहिर्गृह्यते। तदवयवस्य सहशब्दस्य वा स इत्ययमादेशो भवति। सपुत्रः। सहपुत्रः। सच्छात्रः। सहच्छात्रः।

उपसर्जनस्येति किम्? सहयुध्वा। सहकृत्वा।

सहकृत्वप्रियः, प्रियसहकृत्वेति, इह बहुव्रीहौ यदुत्तरपदं तत्परः सहशब्दो न भवतीति सभावो न भवति॥

पदमञ्जरी

पसर्जनस्येति, ततश्च सर्वावयवद्वारा विज्ञायते, तदिदमुक्तम्—*उपसर्जनसर्वावयव इति*। *तदवयवस्येति*। 'उपसर्जनस्य' इत्यवयवयोगे षष्ठीति दर्शयति। *सहकृत्वप्रिय इति*। 'वा प्रियस्य' इति पूर्वनिपातविकल्पः। *इह बहुव्रीहौ यदुत्तरपदमिति*। उत्तरपदाधिकारात्, सर्वोपसर्जनस्य बहुव्रीहेराश्रयणाच्च तत्सम्बन्धिन्येवोत्तरपदे सहशब्दस्यानन्तरे सभावेन भाव्यमिति भावः। *तत्परः सहशब्दो न भवतीति*।

न्यासः

यस्मात् समासे ह्युत्तरपदं भवति, अतस्तस्यैवेदं विशेषणमिति मन्यमान आह—उपसर्जनसर्वावयव इति। उपसर्जनं सर्वोऽवयवो यस्य स तथोक्तः; अवयवधर्मेण समुदायधर्मस्य तथा निर्देशात्, यथा—आढ्यमिदं नगरमिति। यदि कस्यचित्कश्चिदुपसर्जनमवयवः कश्चिदनुपसर्जनं सोऽप्युपसर्जनमित्युच्यते, तदातिप्रसङ्गदोषस्तदवस्थः स्यादिति सर्वग्रहणम्। कः पुनरसौ सर्वोपसर्जनावयवः समासः? बहुव्रीहिः। ननु द्वन्द्वोऽप्युपसर्जनसर्वावयव एव, तस्यापि ग्रहणं प्राप्नोति? नैष दोषः; न हि सहपदेन सहान्यस्य द्वन्द्वोऽस्ति। स हि प्रधानानां समानकक्षाणामेव भवति। सहशब्दश्च यत्रैकस्य प्राधान्यम्, अपरस्य तु गुणभावस्तत्रैव प्रयुज्यते। अथ वा—उभयगतिरिह शास्त्रे सम्भवतीति लौकिकमप्युपसर्जनमिह गृह्यते। तेन शास्त्रीयोपसर्जनेन लौकिकेन चोपसर्जनीभूताः सर्वेऽवयवा यस्य स एवोपसर्जनशब्देन विवक्षित इति विज्ञायते। न चैवंविधो द्वन्द्वः। तस्य ह्यवयवानां शास्त्रीयेणैवोपसर्जनेनोपसर्जनत्वम्, न तु लौकिकेन। बहुव्रीहिस्तु लौकिकेनापि। तस्मात् तस्यैवोपसर्जनग्रहणेन ग्रहणम्। तदवयस्येति। अनेनोपसर्जनस्येत्येषाऽवयवषष्ठीति दर्शयति। सपुत्र इति। पूर्ववद्बहुव्रीहिः।

सहयुध्वा, सहकृत्वेति। तत्पुरुषोऽयमुत्तरपदार्थप्रधानः।

अथेह कस्मान्न भवति—सहकृत्वप्रियः, प्रियसहकृत्वेति, भवति ह्यत्रापि सहशब्दो बहुव्रीह्यवयवः? इत्याह - इहेत्यादि। 'वा प्रियस्य' इति प्रियशब्दस्य विकल्पेन पूर्व-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## प्रकृत्याशिष्यगोवत्सहलेषु ॥ ८३ ॥

प्रकृत्या सहशब्दो भवति आशिषि विषयेऽगोवत्सहलेषु । स्वस्ति देवदत्ताय सहपुत्राय सहच्छात्राय सहामात्याय ।

अगोवत्सहलेष्विति किम् ? स्वस्ति भवते सहगवे, सगवे । सहवत्साय, सवत्साय । सहहलाय, सहलाय । 'वोपसर्जनस्य' इति पक्षे भवत्येव सभावः ॥

## समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु ॥ ८४ ॥

'सः' इति वर्तते । समानस्य 'स' इत्ययमादेशो भवति छन्दसि विषये मूर्द्धन् , प्रभृति, उदर्क – इत्येतान्युत्तरपदानि वर्ज्जयित्वा । अनुभ्राता सगर्भ्यः । अनुसखा सयूथ्यः । यो नः सनुत्यः । समानो गर्भः सगर्भः, तत्र भवः सगर्भ्यः । 'सगर्भसयूथसनुताद्यत्' इति यत्प्रत्ययः ।

अमूर्धप्रभृत्युदर्केष्विति किम् ? समानमूर्धा । समानप्रभृतयः । समानोदर्काः ।

'समानस्य' इति योगविभाग इष्टप्रसिध्यर्थः क्रियते । तेन सपक्षः,

पदमञ्जरी

पूर्वत्र तावन्न भवति, कृत्वशब्देन व्यवधानात् , उत्तरत्रापि सहकृत्वेत्येतदुत्तरपदम् , न कृत्वशब्दः ॥

*प्रकृत्याशिष्यगोवत्सहलेषु* ॥ 'प्रकृत्याशिषि' इत्येतावत्सूत्रम् , परिशिष्टं भाष्यवार्त्तिकदर्शनात् सूत्ररूपेण पठितम् । 'न' इति वक्तव्ये प्रकृतिवचनं वैचित्र्यार्थम् ॥

*समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु* ॥ *समानस्येति योगविभाग इति* । अपर

न्यासः

निपातः । उत्तरपदाधिकारादिह बहुव्रीह्याश्रयणाच्च बहुव्रीहौ यदुत्तरपदं तत् परं यस्मात् सहशब्दात् तस्य सभावेन भवितव्यम् । न चेह बहुव्रीहौ यदुत्तरपदं तत् सहशब्दात् परम् , शब्दान्तरेण व्यवधानादिति न भवति सभावः ॥

प्रकृत्याशिष्यगोवत्सहलेषु ॥ पूर्वेणातिप्रसक्तस्य सभावस्य प्रकृतिभावेन निवृत्तिः क्रियते । नेति वक्तव्ये प्रकृत्येति वचनं वैचित्र्यार्थम् ॥

समानस्य च्छन्दस्यमूर्धप्रभृत्युदर्केषु ॥ सगर्भः, सयूथ्य इति । समानो

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


साधर्म्यम्, सजातीयः — इत्येवमादयः सिद्धा भवन्ति ॥

ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्ण-
वयोवचनबन्धुषु ॥ ८५ ॥

ज्योतिस्, जनपद, रात्रि, नाभि, नामन्, गोत्र, रूप, स्थान, वर्ण, वयस्, वचन, बन्धु — इत्येतेषूत्तरपदेषु समानस्य 'स' इत्ययमादेशो भवति । सज्योतिः । सजनपदः । सरात्रिः । सनाभिः । सनामा । सगोत्रः । सरूपः । सस्थानः । सवर्णः । सवयाः । सवचनः । सबन्धुः ॥

चरणे ब्रह्मचारिणि ॥ ८६ ॥

चरणे गम्यमाने ब्रह्मचारिण्युत्तरपदे समानस्य स इत्ययमादेशो

पदमञ्जरी

आह—सहशब्दः सदृशवचनोऽस्ति, यथा— सदृशः सख्या ससखीति, तस्यायमस्वपदविग्रहो बहुव्रीहिः— समानो धर्मोऽस्य, समानः पक्षोऽस्य, समाना जातिरस्य; 'वोपसर्जनस्य' इति सभावः । समानशब्दस्य तु समानजातीय इत्यादि भवति । योगविभागे तु तस्य नित्यत्वान्नैतत्सिध्यति । अत एव भाष्यवार्त्तिकयोर्योगविभागस्य नोपन्यास इति ॥

*ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु* ॥ *सज्योतिरिति* । समानं ज्योतिरस्येति बहुव्रीहिः, यस्मिञ्ज्योतिष आदित्ये नक्षत्रे वा उपनिपतितमानस्यास्तमयादनुवर्तमानमाशौचं सज्योतिरित्युच्यते, 'सरूपाणामेकशेषः', 'स्थानान्ताद्विभाषा', 'सस्थानेन' इति निर्देशाद्बहुव्रीहावप्ययं सभावो भवति, न तु 'पूर्वापरप्रथमचरमजघन्यसमान' इति प्रतिपदोक्त एव तत्पुरुषे ॥

*चरणे ब्रह्मचारिणि* ॥ चरणशब्दः कठकलापादौ शाखाविशेषे मुख्यः,

न्यासः

गर्भः, समानं यूथमिति विगृह्य 'पूर्वापरप्रथम' इत्यादिना कर्मधारयः । साधर्म्यमिति । बहुव्रीहेर्भावप्रत्ययः । सजातीय इति । अत्रापि बहुव्रीहेरेव 'जात्यन्ताच्छ बन्धुनि' इति च्छः । सस्थानीय इति । 'स्थानान्ताद्विभाषा सस्थानेनेति चेत्' इति च्छप्रत्ययः ॥

ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु ॥ सज्योतिरिति । समानं ज्योतिरस्येति बहुव्रीहिः । एवं सजनपदादयो वेदितव्याः । तत्पुरुषेऽपि भवितव्यमेव; विशेषानुपादानात् । सनामेति । 'सर्वनामस्थाने च' इत्यादिना दीर्घः । सवया इति । अत्रापि 'अत्वसन्तस्य' इति दीर्घः ॥

चरणे ब्रह्मचारिणि ॥ चरणशब्दोऽयमध्ययननिमित्तमुपादाय पुंवादिषु वर्तते ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

भवति। समानो ब्रह्मचारी सब्रह्मचारी। ब्रह्म=वेदः, तदध्ययनार्थं यद् व्रतं तदपि ब्रह्म, तच्चरतीति ब्रह्मचारी। समानः, तस्यैव ब्रह्मणः समानत्वादित्ययमर्थो भवति। समाने ब्रह्मणि व्रतचारी= सब्रह्मचारीति॥

## तीर्थे ये॥ ८७॥

### पदमञ्जरी

तदध्यायिषु पुरुषेषु गौणः, तदिह मुख्यो गृह्यते—समानो ब्रह्मचारी सब्रह्मचारीति, तच्चरति तदनुतिष्ठतीत्यर्थः। *ब्रह्मचारीति*। 'व्रते' इति णिनिः। एवं ब्रह्मचारिशब्दं निरूप्य सब्रह्मचारिशब्दं निर्वक्तुकामः समानशब्दस्यार्थमाह—*समानस्तस्यैव ब्रह्मणः समानत्वादिति*। *तस्यैवेति*। पूर्वमुक्तस्य। इतिकरणो हेतौ, यस्माद् ब्रह्मचारिणां समानत्वं तद्विवक्षितं तस्मादयं वक्ष्यमाणस्सब्रह्मचारिशब्दस्यार्थो भवति। तमेव दर्शयति—*समाने ब्रह्मणीति*। समाने साधारण इत्यर्थः। एकस्मिन्काले एकेन ब्रह्मणा एकशाखाध्ययनार्थं ययोर्व्रतमादिष्टं तावन्योऽन्यं सब्रह्मचारिणावित्यर्थः। एतच्च चरणग्रहणाल्लभ्यते, तद्धि चरणे समाने यथा स्यादाकारादौ मा भूदित्येवमर्थं कृतम्। एवं *चरणे गम्यमाने* इत्यस्यापि चरणे समानत्वेन गम्यमान इत्ययमर्थो द्रष्टव्यः॥

### न्यासः

ब्रह्म चरतीति ब्रह्मचारी, 'व्रते' इति णिनिः। सब्रह्मचारीति। पूर्ववत् कर्मधारयः। सब्रह्मचारीत्यस्यायमर्थोऽभिमतः—समाने ब्रह्मणि व्रतं चरतीति। एष चात्रार्थो यथोपपद्यते, तथा दर्शयितुमाह—ब्रह्म वेद इत्यादि। तदध्ययनार्थं यद् व्रतं तदपि ब्रह्मेति। तादर्थ्यात् ताच्छब्द्यम्, यथा—इन्द्रार्था स्थूणा इन्द्र इति। तच्चरतीति तत् सम्पादयति, परिपालयतीत्यर्थः। केन पुनरसौ समानः ? इत्याह – समानस्तस्यैवेत्यादि। तस्यैवेति वेदाख्यस्य ब्रह्मणः। इतिकरणो हेतौ। यत एवमुपचारेण लब्धब्रह्मव्यपदेशं व्रतं यश्चरति ब्रह्मणश्च समानत्वाद् यः समानः स सब्रह्मचारी। तेन सब्रह्मचारीत्यस्यायमर्थो भवति—समाने ब्रह्मणि व्रतचारीति। यदि ह्यसमाने ब्रह्मणि व्रतं चरेत् तदा समानत्वं न स्यात्। तथापि ब्रह्माख्यं व्रतं न चरेदेवमपि ब्रह्मचारित्वं न स्यात्। तस्माद् यः समाने ब्रह्मणि ब्रह्मचारी, सोऽवश्यं समाने ब्रह्मणि व्रतचारीति भवति। सब्रह्मचारीत्ययमस्यार्थः सम्पद्यते—समाने ब्रह्मणि व्रतचारीति। अथ वा—तस्यैवेत्युपचारेण लब्धब्रह्मव्यपदेशस्य व्रतस्यात्र पक्षे परामर्शः। समाने ब्रह्मणि इत्यत्र ब्रह्मशब्दो वेदे वर्त्तते, प्रतिवेदं हि भिद्यते, तदध्ययनार्थं यद् व्रतं तत्र यः समाने वेदेऽध्येतव्ये व्रतं चरति स एव सब्रह्मचारीत्युच्यते॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


तीर्थशब्दे उत्तरपदे यत्प्रत्ययपरे परतः समानस्य स इत्ययमादेशो भवति । सतीर्थ्यः । 'समानतीर्थे वासी' इति यत्प्रत्ययः ॥

विभाषोदरे ॥ ८८ ॥

उदरशब्द उत्तरपदे यत्प्रत्ययान्ते समानस्य विभाषा स इत्ययमादेशो भवति । सोदर्यः, समानोदर्यः । 'समानोदरे शयित ओ चोदात्तः' इति यत् ॥

दृग्दृशवतुषु ॥ ८९ ॥

दृक्, दृश, वतु — इत्येतेषु परतः समानस्य स इत्ययमादेशो भवति । सदृक्, सदृशः । 'त्यदादिषु दृशोऽनालोचने कञ्च' इत्यत्र 'समानान्ययोश्चेति वक्तव्यम्' इति क्विन्कनौ प्रत्ययौ क्रियेते ।

॥ दृक्षे चेति वक्तव्यम् ॥ । सदृक्षः ॥

पदमञ्जरी

*तीर्थे ये* ॥ सतीर्थ्यः = एकगुरुकः ॥

*विभाषोदरे* ॥ *यप्रत्ययान्त इति* । पूर्वसूत्रे 'ये' इति यकारादेः प्रत्ययस्य ग्रहणं यप्रत्ययोऽन्ते समीपे यस्य स तथोक्तः । तत्र यदा सभावः, तदा 'सोदराद्यः', यदा तु न तदा 'समानोदरे शयितः' इति यत् ॥

*दृग्दृशवतुषु* ॥ *वतुग्रहणमुत्तरार्थमिति* । समानशब्देऽसम्भवात् ।

*दृक्षे चेति* । छान्दसमेतदिति केचित् । *भाष्ये* 'सदृक्षम्' इत्यनुदाहृतत्वात्तस्मिन्पक्षे क्सप्रत्ययोऽपि छन्दस्येव ॥

न्यासः

तीर्थे ये ॥ सतीर्थ्य इति । पूर्ववत् कर्मधारयं कृत्वा तद्धितः कर्त्तव्यः । समाने तीर्थे वसतीति सतीर्थ्यः ॥

विभाषोदरे ॥ दृग्दृशवतुषु ॥ समानमात्मानं पश्यतीति सदृक्, उपपदसमासः, 'क्विन्प्रत्ययस्य कुः' इति कुत्वम् । कथं पुनरिह क्विन्कनौ, यावता त्यदादिषूपपदेषु तौ विहितौ, न च समानशब्दस्त्यदादिषु पठ्यते ? इत्यत आह—त्यदादिष्वित्यादि ।

दृक्षे चेति वक्तव्यमिति । दृक्षशब्दे चोत्तरपदे समानस्य सभावो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्— पूर्वकाद् योगविभागाद् दृक्षेऽपि भविष्यतीति । अत एव तत्र (६.१.८४) वृत्तिकृतोक्तम्— एवमादयः सिद्धा भवन्तीति ।

केन पुनरत्र दृशेः क्सप्रत्ययो विहितो येन दृक्षशब्द उत्तरपदं भवति ? इत्यत आह—

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

* दृशेः क्सप्रत्ययोऽपि तत्रैव वक्तव्यः * । वतुग्रहणमुत्तरार्थम् ॥

## इदंकिमोरीश्की ॥ ९० ॥

इदम्, किम् – इत्येतयोरीश्, की – इत्येतौ यथासङ्ख्यमादेशौ भवतो दृग्दृशवतुषु । ईदृक्, ईदृशः, इयान् । कीदृक्, कीदृशः, कियान् । 'किमिदम्भ्यां वो घः' इति वतुप् ।

* दृक्षे चेति वक्तव्यम् * । ईदृक्षः । कीदृक्षः ॥

## आ सर्वनाम्नः ॥ ९१ ॥

सर्वनाम्न आकारादेशो भवति दृग्दृशवतुषु । तादृक्, तादृशः, तावान् । यादृक्, यादृशः, यावान् ।

* दृक्षे चेति वक्तव्यम् * । तादृक्षः । यादृक्षः ॥

### पदमञ्जरी

*इदंकिमोरीश्की* ॥ *इयान्कियानिति* । घस्येयादेशे कृते 'यस्येति च' इतीकारलोपः । *किमिदम्भ्यां वो घ इति वतुबिति* । नासतो वतुपो वकारस्य घकारः शक्यो विधातुमिति वतुपोऽप्यनेनैव विधानमिति भावः ॥

*आ सर्वनाम्नः* ॥ अकारोच्चारणमतो गुणे पररूपत्वं मा भूत् । अकारविधानं त्वन्तस्य निवृत्त्यर्थं स्यात्, लोपविधौ तु गौरवं भवति ॥

### न्यासः

दृशेः क्सप्रत्ययोऽपीत्यादि । तत्रैवेति । 'त्यदादिषु' इत्यादौ सूत्रे । अथ वतुग्रहणं किमर्थम्, यावता समानशब्दादुत्तरो वतुप् न सम्भवत्येव, स हि 'यत्तदेतेभ्यः परिमाणे वतुप्' इति यदादिभ्य एव विहितः ? इत्याह — वतुब्ग्रहणमुत्तरार्थमिति ॥

इदंकिमोरीश्की ॥ शकारः सर्वादेशार्थः । इदमिव पश्यतीति ईदृक्, ईदृशः । पूर्ववत् कञ्क्विनौ । किमिव पश्यतीति कीदृक्, कीदृशः । व्युत्पत्तिमात्रार्थो विग्रहः कृतः । नात्रावयवार्थो विग्रहवाक्योपदर्शितो विद्यते । तथा हीदृग्, ईदृश इत्यनेन तुल्य इत्येषोऽर्थः समुदायादेव प्रतीयते । कीदृक्, कीदृश इत्यत्रापि केन तुल्य इति । किं परिमाणमस्येति कियान् । इदं परिमाणमस्येति इयान् । 'किमिदम्भ्यां वो घः' इति वतुपो घत्वम्, तस्येयादेशे कृते 'यस्येति च' इतीकारलोपः । ननु च वतुपो वकारस्येयादेशोऽनेन विधीयते, न तु वतुप् किमिदम्भ्यां विधीयते ? एवं मन्यते — वतुबस्मादादेशवचनाद् विज्ञायते, न ह्यन्यद् वतुपो लक्षणमस्ति । न चासतो वतुपो घादेशः शक्यो विज्ञातुमिति ॥

आ सर्वनाम्नः ॥ दृक्षे चेति वक्तव्यमिति । दृक्षशब्दे परतः सर्वनाम्न आत्वं

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## विष्वग्देवयोश्च टेरद्र्यञ्चतौ वप्रत्यये ॥ ९२ ॥

विष्वक् , देव – इत्येतयोः सर्वनाम्नश्च टेः अद्रीत्ययमादेशो भवति अञ्चतौ वप्रत्ययान्त उत्तरपदे । विष्वगञ्चतीति विष्वद्र्यङ् । देवद्र्यङ् । सर्वनाम्नः – तद्र्यङ् । यद्र्यङ् ।

अद्रिसध्र्योरन्तोदात्तनिपातनं कृत्स्वरनिवृत्त्यर्थम् । तत्र यणादेशे कृते 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' इत्येष स्वरो भवति ।

पदमञ्जरी

*विष्वग्देवयोश्च टेरद्र्यञ्चतौ वप्रत्यये* ॥ व प्रत्ययो यस्मात्स वप्रत्ययः । *विष्वद्र्यङिति* । अञ्चतेः क्विनि लोपे 'उगिदचाम्' इति नुम् , संयोगान्तलोपः, 'क्विन्प्रत्ययस्य कुः' इति कुत्वम्—नकारस्य ङकारः । *अद्रिसध्र्योरिति* । वार्त्तिकस्य साधारणत्वादिह सध्रिशब्दोपादानम् , अश्वमञ्चतीति अश्वाची, 'अञ्चतेश्चोप-

न्यासः

भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—उत्तरसूत्रादिह सिंहावलोकित-न्यायेन चकारोऽनुवर्त्तते, स चानुक्तसमुच्चयार्थः । तेन दृक्षशब्दे चोत्तरपदे भविष्यतीति । अथ किमर्थो दीर्घो विधीयते, न ह्रस्व एव विधीयताम्, ह्रस्वेऽप्यादेशे सवर्णदीर्घत्वेन सिध्यति ? न; यस्माद् 'अतो गुणे' पररूपत्वं प्राप्नोति । न च शक्यते वक्तुम्–अकारोच्चारणसामर्थ्यान्न भविष्यतीति; अकारविधेर्दकारनिवर्त्तनार्थत्वात्, लोपविधौ हि गौरवं स्यात् । किञ्च—त्वादृक्, त्वादृश इत्यत्र दीर्घश्रवणं न स्यात् । तस्माद् दीर्घ एव विधेयः ॥

विष्वग्देवयोश्च टेरद्र्यञ्चतौ वप्रत्यये ॥ विष्वद्र्यङिति । विश्वगञ्चतीति ऋत्विगादिसूत्रेण क्विन् , 'उगिदचाम्' इति नुम् , हल्ङ्यादिसंयोगान्तलोपौ, 'क्विन्प्रत्ययस्य कुः' इति कुत्वम् ।

अद्रिसध्र्योरन्तोदात्तनिपातनमित्यादि । विष्वद्र्यङित्यत्रानेनाद्र्यादेशे कृते सध्र्यङित्यत्र सहस्य सध्र्यादेशे च 'गतिकारकोपपदात् कृत्' इति प्रकृतिस्वरेणोत्तर-पदस्यान्तोदात्तत्वं प्राप्नोति, स्वरितत्वं चेष्यते । तस्मादुत्तरपदान्तोदात्तत्वविधानार्थ-मिहाद्रिसध्र्योरन्तोदात्तत्वं निपात्यते । तेन शेषं भवत्यनुदात्तम् । तत्र यणादेशे कृते सति 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' इति स्वरितत्वमुत्तरपदस्य सिद्धम् ।

अथ वप्रत्ययग्रहणं किमर्थम्, यावता 'अञ्चतौ' इत्युक्ते केवल एवाञ्चतावुत्तरपदे कार्येण भवितव्यम् । वप्रत्ययान्त एवाञ्चतिः केवलमुत्तरपदं भवति । तत्रैतद्वक्तव्यमञ्चता-वित्याह—वप्रत्ययग्रहणमित्यादि । अन्यत्र धातुग्रहणे, धात्वादेः प्रकृतिप्रत्ययसमुदायस्य प्रतिपत्तिः = प्रतीतिर्यथा स्यादित्येवमर्थं वप्रत्ययग्रहणम् । अनेन ह्ययमर्थो विज्ञाप्यते—



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



विष्वग्देवयोरिति किम्? अश्वाची। अञ्चताविति किम्? विष्वग्युक्। वप्रत्यय इति किम्? विष्वगञ्चनम्।

वप्रत्ययग्रहणमन्यत्र धातुग्रहणे तदादिविधिप्रतिपत्त्यर्थम्। तेनायस्कृतम्, अयस्कार इत्यत्र 'अतः कृकमिकंसकुम्भपात्र' इति सत्वं भवति।

* छन्दसि स्त्रियां बहुलमिति वक्तव्यम् *। विश्वाची च घृताची

पदमञ्जरी

संख्यानम्' इति ङीप्, 'अचः' इत्यकारलोपः, 'चौ' इति दीर्घत्वम्। विष्वग्युनक्तीति *विष्वग्युक्*, 'सत्सूद्विष' इत्यादिना क्विप्। *विष्वगञ्चनमिति*। ल्युट्।

कथं पुनरत्र प्रसङ्गः, यावता 'उत्तरपदे' इत्युच्यते, न चात्राञ्चतिरुत्तरपदम्, किं तर्हि? ल्युडन्तम्, न च तदादिविधिरस्ति, अल्ग्रहण एव तदादिविधिः? इत्यत आह—*वप्रत्ययग्रहणमिति*। यदि धातुग्रहणे तदादिविधिर्न स्याद्वप्रत्ययग्रहणमकर्तव्यं स्यात्, कृतं तु तदादिविधिं ज्ञापयति। अत्र प्रयोजनमाह—*तेनेति*। *अयस्कृतमिति*। असति तु ज्ञापने अयस्कृदित्यादौ यत्र करोतिमात्रमुत्तरपदं तत्रैव स्यात्।

*विश्वाची च घृताची चेति*। वेदपाठोऽयं प्रदर्शितः, न तु घृताचीत्युदाहरणम्; प्राप्त्यभावात्। उपसंख्याने 'स्त्रियाम्' इत्येतेन नार्थः, पुंस्यपि हि

न्यासः

इतोऽन्यत्र धातुग्रहणे सति न केवलं धातुरेव गृह्यते, अपि तु धात्वादिः शब्द इति। तेनायस्कृतम्, अयस्कार इत्यत्र 'अतः कृकमि' इत्यादिना विसर्जनीयस्य सकारः सिद्धो भवति। यदि पुनरयमर्थो न विज्ञाप्येत, तदा करोतेरेव केवलस्य ग्रहणं स्यात्, ततो यत्र करोतेः केवलस्य प्रत्ययरहितस्य प्रयोगस्तत्रैव स्याद्—अयस्कृदिति। अत्र तुगागमः करोतेरेव भक्तत्वात् तद्ग्रहणेनैव गृह्यत इति करोतेरेव केवलस्य प्रयोगः। अश्वाचीति। अश्वमञ्चतीति क्विन्, 'अञ्चतेश्चोपसंख्यानम्' इति ङीप्, 'अचः' इत्यकारलोपः, 'चौ' इति दीर्घः। विष्वग्युगिति। विष्वग् युनक्तीति 'सत्सूद्विष' इत्यादिना क्विप। विष्वगञ्चनमिति। 'ल्युट् च' इति ल्युट्।

छन्दसीत्यादि। छन्दसि विषये स्त्रियामभिधेयायां बहुलमद्र्यादेशो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—'विभाषोदरे' इत्यतो विभाषाग्रहणमनुवर्त्तते, सा च व्यवस्थितविभाषा। इह वा चकारोऽनुक्तसमुच्चयार्थः, तेन च्छन्दसि विषये विष्वगादेरन्यत्रापि क्वचिदद्र्यादेशो भवतीति, क्वचिन्न भवत्येव। ननु च सर्वनाम्नोऽनुकर्षणार्थश्चकारः? नैतदस्ति; स्वरितत्वादेव हि सर्वनाम्नोऽनुवृत्तिर्भविष्यति। विश्वाचीत्यादि। विश्वघृतकिंशब्देषूपपदेष्वञ्चतेः पूर्ववत् क्विन्, ङीबादिकार्यञ्च॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



चेत्यत्र न भवति । कद्रीचीत्यत्र तु भवत्येव ॥

## समः समि ॥ ९३ ॥

समित्येतस्य 'समि' – इत्ययमादेशो भवति अञ्चतौ वप्रत्ययान्ते उत्तरपदे । सम्यक्, सम्यञ्चौ, सम्यञ्चः ॥

## तिरसस्तिर्यलोपे ॥ ९४ ॥

'तिरस्' इत्येतस्य 'तिरि' इत्ययमादेशो भवत्यञ्चतौ वप्रत्ययान्त उत्तरपदेऽलोपे = यदाऽस्य लोपो न भवति । तिर्यङ्, तिर्यञ्चौ, तिर्यञ्चः ।

अलोप इति किम् ? तिरश्चा । तिरश्चे । 'अचः' इत्यकारलोपः ॥

## सहस्य सध्रिः ॥ ९५ ॥

सहेत्यस्य 'सध्रि' इत्ययमादेशो भवत्यञ्चतौ वप्रत्ययान्ते उत्तरपदे । सध्र्यङ्, सध्र्यञ्चौ, सध्र्यञ्चः । सध्रीचः । सध्रीचा ॥

## सध मादस्थयोश्छन्दसि ॥ ९६ ॥

छन्दसि विषये माद, स्थ–इत्येतयोरुत्तरपदयोः सहस्य 'सध' – इत्ययमादेशो भवति । सधमादो द्युम्निनीरापः । सधस्था ॥

### पदमञ्जरी

क्वचिदद्र्यादेशो न दृश्यते । तस्माद्विष्वञ्चौ प्राणापानाविति । *कद्रीचीति* । किंशब्दस्य टेरद्र्यादेशः, पूर्ववन्ङीब्लोपदीर्घत्वादि ॥

*तिरसः तिर्यलोपे* ॥ *यदाऽस्य लोपो न भवतीति* । अकारस्य लोपे सतीत्ययं त्वर्थो न भवति; व्याख्यानात् ॥

*सध मादस्थयोश्छन्दसि* ॥ 'सधमादो द्युम्नीः'[1] इति केचिदाहुः । अस्मिन्मन्त्रे

### न्यासः

समः समि ॥ तिरसस्तिर्यलोपे ॥ सहस्य सध्रिः ॥ सध्रीचेति । पूर्ववदकारलोपः, दीर्घत्वञ्च ॥

सधमादस्थयोश्छन्दसि ॥ सधमाद इति । सह मादेन वर्त्तत इति 'तेन सह' इत्यादिना बहुव्रीहिः, मादशब्दो घञन्तः । ननु च 'मदोऽनुपसर्गे' इत्यपा भवितव्यम् ? नैष दोषः; तत्र हि 'स्वनहसोर्वा' इत्यतो वाग्रहणमनुवर्त्तते, सा च व्यवस्थितविभाषा ।

---

१. उवटेन ( वाज० सं० १०।७ ) अयमेव पाठः स्वीकृत इति प्रतीयते ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



द्व्यन्तरुपसर्गेभ्योऽप ईत् ॥ ९७ ॥

द्वि, अन्तर् – इत्येताभ्यामुपसर्गाच्चोत्तरस्याबित्येतस्य ईकारादेशो भवति । द्वीपम् । अन्तरीपम् । उपसर्गात्—समीपम् । वीपम् । नीपम् ।

❋ समाप ईत्वे प्रतिषेधो वक्तव्यः ❋ । समापं नाम देवयजनम् ।

अपर आह – ❋ ईत्वमनवर्णादिति वक्तव्यम् ❋ । इह मा भूत्—प्रापम्, परापम् ।

अप्शब्दं प्रति क्रियायोगाभावाद् उपसर्गग्रहणं प्राद्युपलक्षणार्थम् ।

पदमञ्जरी

द्युम्निरित्यादिकमपां विशेषणम्, सधमाद इत्यपि तत्समानाधिकरणं शसन्तम्, मादयतेः क्विबन्तस्य रूपम् । मादः छन्दसि सधादेशो दृश्यते बहुलम्—'आ त्वा बृहन्तो हरयो युजानाः', 'अर्वागिन्द्रसधमादो वहन्तु' इत्यादावपीति । अपर आह—मदनं मादः, 'मदोऽनुपसर्गे' इत्यपि प्राप्ते छान्दसो घञ्, तेन सह वर्तत इति सधमाद इति । 'रेवतीस्थः सधमादः' इत्यादौ तु सधमादो यज्ञः, सह माद्यन्ति देवा अस्मिन्निति कृत्वा ॥

*द्व्यन्तरुपसर्गेभ्योऽप ईत्* ॥ उदाहरणेषु द्विर्गता आपोऽस्मिन्नित्यादिविग्रहः, 'ऋक्पूरब्धूः' इत्यकारः समासान्तः ।

*समापं नामेति* । ईत्वे प्रतिषिद्धे 'अन्येषामपि दृश्यते' इत्यकारस्य दीर्घः । अपर आह—समशब्दस्यात्र प्रयोगः, समा आपोऽस्मिन्निति समाप इति ।

*अप्शब्दं प्रतीत्यादि* । इह यत्क्रियायुक्ताः प्रादयस्तं प्रति तेषामुपसर्गत्वम्,

न्यासः

तेन छन्दसि घञेव भविष्यति । अत एव निर्देशाद्वा । सधस्थेति । सह तिष्ठतीति 'सुपि स्थः' इति कः ॥

द्व्यन्तरुपसर्गेभ्योऽप ईत् ॥ द्वीपमिति । द्विर्गता आपोऽस्मिन्नित्यस्वपदविग्रहो बहुव्रीहिः । यथा – शोभनं मुखमस्याः सुमुखीति । 'ऋक्पूरब्धूः' इत्यादिनाऽकारः समासान्तः । अन्तर्गता आपोऽस्मिन्नित्यन्तरीपम् । सङ्गता विगता निर्गता आपोऽस्मिन्निति समीपम्, वीपम्, नीपम् ।

वक्तव्यमिति । व्याख्येयमित्यर्थः । उत्तरत्रापि वक्तव्यशब्दस्यायमेवार्थः । व्याख्यानं त्विहापि पूर्ववद् 'विभाषोदरे' इत्यतो विभाषाग्रहणानुवृत्तेर्व्यवस्थितविभाषात्वाल्लभ्यते । अन्यदपि चात्र व्याख्यानं करिष्यामः ।

अप्शब्दं प्रतीत्यादि । इह यं प्रति क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञका भवन्तीति अप्शब्दस्य तु क्रिया न सम्भवति; द्रव्यवाचित्वात् । तस्मात् तं प्रति नास्ति

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


## ऊदनोर्देशे ॥ ९८ ॥

अनोरुत्तरस्याप ऊकारादेशो भवति देशाभिधाने । अनूपो देशः । देश इति किम् ? अन्वीपम् ।

दीर्घोच्चारणमवग्रहार्थम् । अनु ऊपोऽनूप इति ॥

## अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोति-कारकरागच्छेषु ॥ ९९ ॥

अषष्ठीस्थस्य अतृतीयास्थस्य चान्यशब्दस्य दुगागमो भवति आशिस्, आशा, आस्था, आस्थित, उत्सुक, ऊति, कारक, राग, छ—इत्येतेषु परतः । अन्या आशीः अन्यदाशीः । अन्या आशा अन्य-

पदमञ्जरी

अप्शब्दश्च न क्रियावचनः, तस्माद्यस्य प्रादेरन्यत्रोपसर्गत्वं तदुपलक्षणार्थमुपसर्ग-ग्रहणं विज्ञायते ॥

ऊदनोर्देशे ॥ *अवग्रहार्थमिति* । यत्र समासावयवानां रूपाणि प्रदर्श्यन्ते पदकारैः सः = अवग्रहः ॥

*अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु* ॥

न्यासः

कस्यचिदुपसर्गसंज्ञेति । क्रियते चेदमुपसर्गग्रहणम् । तत्सामर्थ्याद् यत्र प्रादेरन्यत्रोपसर्गत्वं दृष्टं तदुपलक्षणार्थमुपसर्गग्रहणं विज्ञायते । यद्येवम्, अन्तःशब्दस्य ग्रहणं न कर्त्तव्यम्, यथैव हि प्रादय उपसर्गग्रहणेन लक्ष्यन्ते तथान्तःशब्दोऽपि, तस्याङ्किविधिणत्वेषूपसर्गत्वं दृष्टमेव ? एवं तर्ह्यन्तर्ग्रहणेन ज्ञाप्यते—उपसर्गग्रहणोपलक्षितमीत्त्वमनित्यमिति । तेन समापम्, परापम्, प्रापमिति सिद्धं भवति ॥

ऊदनोर्देशे ॥ अनूप इति । अनुगता आपोऽस्मिन्निति विग्रहः, पूर्ववत् समा-सान्तः, सवर्णदीर्घः । अथ दीर्घोच्चारणं किमर्थम्, यावता ह्रस्वेऽपि विहितेऽकः सवर्णे दीर्घत्वेनानूप इति सिध्यत्येव ? अत आह—दीर्घोच्चारणमित्यादि । असति दीर्घोच्चा-रणे संहितायामेव दीर्घत्वं स्यात्, नावग्रहे । तस्मादवग्रहेऽपि यथा स्यादित्येवमर्थं दीर्घोच्चारणम् ॥

अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु ॥ अन्याशीरन्यदाशीरित्यादि । विग्रहविशेषेण सर्वत्र विशेषणसमासं दर्शयति । अन्ये-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



दाशा। अन्या आस्था अन्यदास्था। अन्य आस्थितः अन्यदास्थितः। अन्य उत्सुकः अन्यदुत्सुकः। अन्या ऊतिः अन्यदूतिः। अन्यः कारकः अन्यत्कारकः। अन्यो रागः अन्यद्रागः। अन्यस्मिन् भवः अन्यदीयः। गहादिष्वन्यशब्दो द्रष्टव्यः।

अषष्ठ्यतृतीयास्थस्येति किम्? अन्यस्य आशीः अन्याशीः। अन्येन आस्थितः अन्यास्थितः॥

दुगागमोऽविशेषेण वक्तव्यः कारकच्छयोः।
षष्ठीतृतीययोर्नेष्ट आशीरादिषु सप्तसु॥

अन्यस्य कारकम् अन्यत्कारकम्। अन्यस्येदम् अन्यदीयम्।

अस्य च द्विर्नञ्ग्रहणं लिङ्गम्॥

## अर्थे विभाषा॥ १००॥

अर्थशब्दे उत्तरपदे अन्यस्य विभाषा दुगागमो भवति। अन्यदर्थः, अन्यार्थः॥

### पदमञ्जरी

उदाहरणेषु विशेषणसमासः। *गहादिष्वन्यशब्दो द्रष्टव्य इति*। तेषामवृत्क्रुतत्वात्।

*दुगागमोऽविशेषेणेत्यादि*। छप्रत्यये परतोऽविशेषेण सामान्येन दुक्कर्तव्यः, कीदृशे छे? सकारके, कारकशब्दसहिते कारकशब्दे चेत्यर्थः। *कारकच्छयोरिति* पाठे पूर्वनिपातलक्षणस्यानित्यत्वात्तस्य परनिपातः। अन्येष्वाशीरादिषु सप्तसु षष्ठीतृतीययोर्नेष्टस्तेष्वेव प्रतिषेध इत्यर्थः।

कथमेतल्लभ्यते? इत्याह—*अस्य चेति*। 'अषष्ठीतृतीयास्थस्य' इत्येव सिद्धे.

### न्यासः

नास्थितोऽन्यदास्थित इति। 'कर्तृकरणे कृता बहुलम्' इति समासः।

दुगागमोऽविशेषेणेत्यादि। कारकशब्दे छप्रत्यये परतोऽविशेषेण सामान्येन दुगागमः कर्त्तव्यः। अन्येष्वाशीरादिषु सप्तसूत्तरपदेषु षष्ठीतृतीयास्थयोर्नेष्टो नाभिमतः।

किं पुनरस्यार्थस्य लिङ्गं यतोऽयमवसीयते? इत्यत आह—अस्य चेत्यादि। अषष्ठीतृतीयास्थस्येत्येवं सिद्धे द्विर्नञुपादानमस्य प्रतिषेधस्यानित्यत्वे लिङ्गम्। तेन क्वचित् षष्ठीतृतीयास्थस्यापि समासे दुगागमो भवत्येव॥

अर्थे विभाषा॥ अन्यार्थं इति। अन्यस्मै इदमिति 'चतुर्थी तदर्थार्थ' इत्यादिना समासः॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## कोः कत्तत्पुरुषेऽचि ॥ १०१ ॥

'कु' इत्येतस्य कदित्ययमादेशो भवति तत्पुरुषे समासेऽजादावुत्तरपदे । कदजः । कदश्वः । कदुष्ट्रः । कदन्नम् ।

तत्पुरुष इति किम् ? कूष्ट्रो राजा । अचीति किम् ? कुब्राह्मणः । कुपुरुषः ।

* कद्भावे त्रावुपसंख्यानम् * । कुत्सितास्त्रयः कत्त्रयः ॥

## रथवदयोश्च ॥ १०२ ॥

'रथ', 'वद'—इत्येतयोश्चोत्तरपदयोः कोः 'कत्' इत्ययमादेशो भवति । कद्रथः । कद्वदः ॥

## तृणे च जातौ ॥ १०३ ॥

तृणशब्दे उत्तरपदे जातावभिधेयायां कोः कदादेशो भवति । कत्तृणा नाम जातिः ।

जाताविति किम् ? कुत्सितानि तृणानि कुतृणानि ॥

## का पथ्यक्षयोः ॥ १०४ ॥

### पदमञ्जरी

द्विर्नञ उपादानं प्रतिषेधस्यानित्यत्वज्ञापनार्थम्, व्याख्यानप्रकारश्चायम् । शक्यं हि वक्तुं द्विर्नञ उपादानं दार्ढ्यार्थमिति ।

कोः कत्तत्पुरुषेऽचि ॥ उदाहरणेषु 'कुगतिप्रादयः' इति समासः । कूष्ट्र इति । एतदेव तत्पुरुषग्रहणं ज्ञापकम्—अस्मिन्प्रकरणेऽप्रतिपदोक्तोऽपि समासो गृह्यत इति, तेन 'ज्योतिर्जनपद' इति सभावो बहुव्रीहावपि भवति ।

त्रावुपसंख्यानमिति । 'कत्र्यादिभ्यः' इति वचनात्सिद्धम् ॥

### न्यासः

कोः कत्तत्पुरुषेऽचि ॥ कदज इति । कुत्सितोऽज इति 'कुगतिप्रादयः' इति समासः । कूष्ट्रो राजेति बहुव्रीहिः ।

कद्भाव इत्यादि । अजादावुत्तरपदे कद्भाव उच्यमानस्त्रिशब्द उत्तरपदे न प्राप्नोति । तस्मात् त्रिशब्दादुत्तरपदात् पूर्वो यः कुशब्दस्तस्य कद्भावस्योपसंख्यानम् = प्रतिपादनं कर्त्तव्यम् । तत्रेदं प्रतिपादनम्— उत्तरसूत्रे चकारः क्रियते, स चानुक्तसमुच्चयार्थः । तेन त्रिशब्देऽप्युत्तरपदे परतः कद्भावो भविष्यतीति ॥

रथवदयोश्च ॥ अनबाधार्थोऽयं योगः । एवमुत्तरत्रापि ॥

तृणे च जातौ ॥ का पथ्यक्षयोः ॥ अनीषदर्थ आरम्भः । कापथ इति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पथिन्, अक्ष—इत्येतयोरुत्तरपदयोः कोः 'का' इत्ययमादेशो भवति कापथः। काक्षः॥

ईषदर्थे च॥ १०५॥

ईषदर्थे वर्त्तमानस्य कोः 'का' इत्ययमादेशो भवति। कामधुरम्। कालवणम्। अजादावपि परत्वात् कादेश एव भवति। काम्लम्। कोष्णम्॥

विभाषा पुरुषे॥ १०६॥

पुरुषशब्दे उत्तरपदे विभाषा कोः 'का' इत्ययमादेशो भवति। कापुरुषः। कुपुरुषः। अप्राप्तविभाषेयम्।

ईषदर्थे तु पूर्वविप्रतिषेधेन नित्यं का भवति। ईषत्पुरुषः कापुरुषः॥

पदमञ्जरी

*का पथ्यक्षयोः*॥ अनीषदर्थं आरम्भः। कुत्सितः पन्थाः *कापथः*। पूर्ववत्समासान्तः। *काक्ष इति*। अक्षशब्देन तत्पुरुषः, अक्षिशब्देन बहुव्रीहिर्वा, 'बहुव्रीहौ सक्थ्यक्ष्णोः' इति षच्॥

*ईषदर्थे*॥ *कामधुरमिति*। 'कुगति' इति समासः। 'कुः पापार्थः' इत्येतत्तु प्रायिकम्। *काम्लमिति*। ननु चात्र 'कोः कत्तत्पुरुषेऽचि' इति कद्भावः प्राप्नोति, अस्य त्वनजादिरवकाशः? तत्राह—*अजादावपीति*॥

*विभाषा पुरुषे*॥ *अप्राप्तविभाषेयमिति*। 'ईषदर्थे' इत्यस्य निवृत्तत्वात्।

नन्वेवं सत्युभयत्रविभाषेयं युक्ता, ईषदर्थे प्राप्तत्वात्, अन्यत्र चाप्राप्तत्वाद्? अत आह—ईषदर्थे *त्विति*। 'ईषदर्थे च' इत्यस्यावकाशः—कामधुरमिति,

न्यासः

कुत्सितः पन्थाः कापथः, 'ऋक्पूः' इत्यादिनाकारः समासान्तः। काक्ष इति। कुत्सितोऽक्ष इति तत्पुरुषः। अथ वा—कुत्सिते अक्षिणी अस्येति बहुव्रीहिः, 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्' इति षच् समासान्तः॥

ईषदर्थे॥ ईषन्मधुरं कामधुरमिति। 'कुगतिप्रादयः' इति समासः। 'कुशब्दः पापार्थः' इत्येतत् तु प्रायिकमुपाधिवचनमित्युक्तम्। तत्र प्रायिकत्वे चैतदेव कादेशवचनं ज्ञापकम्। काम्लमिति। ननु चात्र 'कोः कत्तत्पुरुषे' इति कदादेशेन भवितव्यम्? इत्यत आह—अजादावपीत्यादि॥

विभाषा पुरुषे॥ अप्राप्ते विभाषेयमिति। ईषदर्थस्य निवृत्तत्वात्। ननु

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


## कवञ्चोष्णे ॥ १०७ ॥

उष्णशब्द उत्तरपदे कोः कवमित्ययमादेशो भवति, का च विभाषा । कवोष्णम् । कोष्णम् । कदुष्णम् ॥

## पथि चच्छन्दसि ॥ १०८ ॥

पथिशब्द उत्तरपदे छन्दसि विषये कोः कव, का – इत्येतावादेशौ भवतो विभाषा । कवपथः । कापथः । कुपथः ॥

## पृषोदरादीनि यथोपदिष्टम् ॥ १०९ ॥

पृषोदरप्रकाराणि शब्दरूपाणि, येषु लोपागमवर्णविकाराः शास्त्रेण न विहिताः, दृश्यन्ते च, तानि यथोपदिष्टानि साधूनि भवन्ति । यानि यथोपदिष्टानि = शिष्टैरुच्चारितानि, प्रयुक्तानि, तानि तथैवानुग-

### पदमञ्जरी

'विभाषा पुरुषे' इत्यस्यावकाशः—कुत्सितः पुरुषः कापुरुषः; ईषत्पुरुष इत्यत्रोभयप्रसङ्गे पूर्वविप्रतिषेधः ॥

कवञ्चोष्णे ॥ छन्दस्यन्यत्रापि दृश्यते—न कवादिभ्यो न हि ते पृणन्तीति, कवाशब्दोऽपि दृश्यते केवलः—कवातियँदि वोपतिष्ठेतेति, ईषत्तिर्यङित्यर्थः ॥

*पृषोदरादीनि यथोपदिष्टम्* ॥ *निरुक्तादिशास्त्रसिद्धानामसमासपदानाम्* 'उणादयो बहुलम्' इति सिद्धिरुक्ता, अनेन तु समासपदानां जीमूतबलाहका-

### न्यासः

चानीषदर्थे केनचिदप्राप्ते, ईषदर्थे पूर्वेण प्राप्त इत्युभयत्र विभाषेयं युक्तेत्याह—ईषदर्थे तु पूर्वविप्रतिषेधेनेत्यादि । 'ईषदर्थे च' इत्यस्यावकाशः ईषन्मधुरं काममधुरम्, 'विभाषा पुरुषे' इत्यस्यावकाशः—कुत्सितः पुरुष कापुरुष इति; इह चोभयं प्राप्नोति—ईषत्पुरुषः कापुरुष इति । अन्रेषदर्थं इत्यनेनैव भवति पूर्वविप्रतिषेधेन ॥

कवञ्चोष्णे ॥ पथि च च्छन्दसि ॥ पृषोदरादीनि यथोपदिष्टम् ॥ आदिशब्दः प्रकारवचन इति । यद्यत्रादिशब्दो व्यवस्थावचन आश्रीयेत, ततो यान्येव गणे पठ्यन्ते तेषामेव साधुत्वं स्यात्, नान्येषाम् । प्रकारवचन आदिशब्द आश्रीयमाणे सत्यपरिपठितानामपि साधुभावो भवतीत्येतत् सर्वं चेतसि कृत्वाऽऽदिशब्दोऽयं प्रकारवचन इति दर्शयन्नाह – पृषोदरप्रकाराणीत्यादि । प्रकारः – सादृश्यम् । अतस्तद्दर्शयितुमाह—येष्वित्यादि । यथा पृषोदरशब्दे लोपकार्यं शास्त्रेणाविहितं दृश्यते, तथान्यत्रापि लोपादिकार्यं शास्त्रेणाविहितं दृश्यते । तानि च पृषोदरप्रकाराणि भवन्ति । यथोपदिष्ट-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



न्तव्यानि । पृषदुदरं यस्य पृषोदरम् । पृषद् उद्वानं यस्य पृषोद्वानम् । अत्र तकारलोपो भवति । वारिवाहको बलाहकः । पूर्वशब्दस्य बशब्द आदेश उत्तरपदादेश्च लत्वम् । जीवनस्य मूतो जीमूतः । वनशब्दस्य लोपः । शवानां शयनं श्मशानम् । शवशब्दस्य श्मादेशः शयनशब्दस्यापि शानशब्द आदेशः । ऊर्ध्वं खमस्येति उलूखलम् । ऊर्ध्वखशब्दयोरुलू, खल — इत्येतावादेशौ भवतः । पिशिताशः पिशाचः । पिशिताशशब्दयोर्यथायोगं पिशाचशब्दावादेशौ । ब्रुवन्तोऽस्यां सीदन्तीति बृसी । सदेरधिकरणे डट् प्रत्ययः । ब्रुवच्छब्दस्य चोपपदस्य बृशब्द आदेशो भवति । मह्यां रौतीति मयूरः । रौतेरचि टिलोपः । महीशब्दस्य

पदमञ्जरी

दीनां सिद्धिरुच्यते । प्रकारवचनोऽयमादिशब्द इति दर्शयति *पृषोदरप्रकाराणीति* । व्यवस्थार्थे त्वादिशब्दे यथोपदिष्टमित्यनर्थकमिति भावः । प्रकारमाह— *येष्विति* । *यथोपदिष्टमिति* । वीप्सायामयमव्ययीभाव इत्याह—*यानियानीति* । दिशिरुच्चारणक्रियः, उच्चार्य हि वर्णानाह—'उपदिष्टा इमे वर्णाः' इति, कैः पुनरुपदिष्टानि ? *शिष्टैः* । शिष्टाः पुनरकामात्मानो यथार्थवेदिनो यथाविहितभाषिणश्च किञ्चिदन्तरेण कस्याश्चिद्विद्यायाः पारगाः, यानधिकृत्येदमुच्यते —

> आविर्भूतप्रकाशानामनुपप्लुतचेतसाम् ।
> अतीतानागतज्ञानं प्रत्यक्षान्न विशिष्यते ॥
> अतीन्द्रियानसंवेद्यान् पश्यन्त्यार्षेण चक्षुषा ।
> ये भावान्वचनं तेषां नानुमानेन बाध्यते ॥ इति ।

यदि तर्हि शिष्टाः शब्देषु प्रमाणम्, किमष्टाध्याय्या क्रियते ? शिष्टपरिज्ञानार्थाष्टाध्यायी । कथम् ? अष्टाध्यायीमधीयानोऽन्यं पश्यत्यनधीयानम्, ये चानुविहितास्तान् प्रयुञ्जानम् । स पश्यति— नूनमस्य दैवानुग्रहः स्वभावो वा यदसौ

न्यासः

मिति । 'यथासादृश्ये' इति वीप्सायामव्ययीभावः । अत एवास्य विवरणं करोति—यानि यान्युपदिष्टानीत्यादि । दिशिरत्रोच्चारणक्रियः । उपदिष्टान्युच्चारितानीत्यर्थः । कैः पुनरुपदिष्टानि ? शिष्टैः । शिष्टाः पुनराचारनिवासादिना वेदितव्याः । तानि तथैवानुमन्तव्यानीति । यथा तैः प्रयुक्तानि तथैव तानि साधुत्वेनानुगन्तव्यानीत्यर्थः । यदि शिष्टाः शब्देषु प्रमाणं तदा किमनयाष्टाध्याय्या, शिष्टवचनादेव हि शब्दानां साधुत्वं विज्ञास्यते ? उच्यते; शिष्टपरिज्ञानार्थाष्टाध्यायी । अष्टाध्यायीमधीयानोऽनधीताष्टाध्यायीक-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


मयूभावः । एवमन्येऽपि अश्वत्थकपित्थप्रभृतयो यथायोगमनुगन्तव्याः ।

* दिक्शब्दस्य उत्तरस्य तीरस्य तारभावो वा भवति * । दक्षिण-तीरम्, दक्षिणतारम् । उत्तरतीरम्, उत्तरतारम् ।

* वाचो वादे डत्वं च लभावश्चोत्तरपदस्येञि प्रत्यये भवति * । वाचं वदतीति वाग्वादः । तस्यापत्यं वाड्वालिः ।

* षष उत्वं दतृदशधासूत्तरपदादेष्टुत्वं च भवति * । षड् दन्ता अस्य षोडन् । षट् च दश च षोडश ।

* धासु वा षष उत्वं भवति उत्तरपदादेश्च ष्टुत्वम् * । षोढा, षड्धा

पदमञ्जरी

नाष्टाध्यायीमधीते, अथ चात्र तु विहिताः शब्दास्तान्प्रयुङ्क्ते, नूनमन्यानपि अयं जानाति । सैषा शिष्टपरिज्ञानार्थाष्टाध्यायी ।

जीवनस्य जलस्य मूतो भाजनं जीमूतः, यथा कुसूलो धान्यानाम्, खम् = विलम् । पिशितम् = मांसम् । बृसी = तृणमयमासनम् । *एवमन्येऽपीत्यादि* । कप्यश्वमहीशब्देषूपपदेषु 'सुपि स्थः', सकारस्य तकारः, महीशब्दस्य ह्रस्वः ।

*दक्षिणतारमिति* । विशेषणसमासः । *वाग्वाद इति* । कर्मण्यण् । *षोडन्निति* । 'वयसि दन्तस्य दतृ', उगित्त्वान्नुम् ।

*धासु वेति* । उत्वस्यायं विकल्पः । उत्वपक्षे तु ष्टुत्वं नित्यमेव भवति, अत्रो-

न्यासः

मपि येऽस्यामष्टाध्याय्यां विहिताः शब्दास्तान् प्रयुञ्जानं पश्यन्नेवमध्यवस्यति—शिष्टोऽय-मिति, न चासावष्टाध्यायीमधीतवान्, अथ च तस्यां ये व्युत्पादिताः शब्दास्तान् प्रयुङ्क्ते, नूनमयमन्यानपि जानाति—इत्येषा शिष्टपरिज्ञानार्थाऽष्टाध्यायी ।

एवमन्येऽपीत्यादि । कप्यश्वमहीशब्देषूपपदेषु 'सुपि स्थः' इति तिष्ठतेः कप्रत्ययः । सकारस्य तकारः क्रियते । महीशब्दस्यापि ह्रस्वत्वम् ।

दक्षिणतारमिति । षष्ठीसमासः । 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावो वक्तव्यः' इति पुंवद्भावः । अथ वा—दक्षिणशब्दस्यायं तीरशब्देन षष्ठीसमासः, कर्मधारयो वा ।

वाचोवाद इति । वाक्शब्दस्य वादशब्द उत्तरपदे परतो डकारादेशो भवति । उत्तरपदस्य च वादशब्दस्य वल इत्ययमादेशो भवतीञि प्रत्यये परत इति । वाचं वदतीति 'कर्मण्यण्'- वाग्वादः, तस्यापत्यम् 'अत इञ्'—वाड्वलिः ।

षष उत्वमित्यादि । षष्शब्दस्योत्वं भवति दतृ, दश—इत्येतयोरुत्तरपदयोः, उत्तर-पदादेः ष्टुत्वञ्च । षड् दन्ता यस्येति बहुव्रीहिः । 'वयसि दन्तस्य दतृ' इति दत्रादेशः—षोडन् । षट् च दश चेति द्वन्द्वः—षोडश ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



कुरु। बहुवचननिर्देशो नानाधिकरणवाचिनो धाशब्दस्य प्रतिपत्त्यर्थः। इह मा भूत्—षट् दधाति धयति वा षड्धेति ॥

*दुरो दाशनाशदभध्येषूत्वं[1] वक्तव्यमुत्तरपदादेश्च ष्टुत्वम्*। कृच्छ्रेण दाश्यते नाश्यते दभ्यते च यः स दूडाशः। दूणाशः। दूडभः। दम्भेः खल्वनुनासिकलोपो निपातनात्। दुष्टं ध्यायतीति दूढ्यः। दुःशब्दोपपदस्य ध्यायतेः, 'आतश्चोपसर्गे' इति कप्रत्ययः।

*स्वरो रोहतौ छन्दस्युत्वं वक्तव्यम्*। जाय एहि सुवो रोहाव।

*पीवोपवसनादीनां च लोपो वक्तव्यः*। पीवोपवसनानाम्। पयोपवसनानाम् ॥

पदमञ्जरी

त्तरपदशब्देन धाप्रत्ययोऽभिधीयते। पद्यते गम्यतेऽनेनार्थ इति पदम्, उत्तरं च तत्पदं च उत्तरपदम्। *षड्धेति*। 'न पदान्ताट्टोरनाम्' इति ष्टुत्वप्रतिषेधः। *नानाधिकरणवाचिन इति*। अर्थगतं बहुत्वं शब्दे समारोप्य धास्विति बहुवचननिर्देशः, तेन 'अधिकरणविचाले च' इति विहितस्य धाप्रत्ययस्येदं ग्रहणम्। *षड्धेति*। 'आतोऽनुपसर्गे कः', स्त्रियां टाप्प्रत्ययः। लाक्षणिकत्वादस्याग्रहणमिति चेत्? एवमपि क्विबन्ते प्रसङ्गः।

*नाश्यत इति*। 'णश अदर्शने' ण्यन्तः। *दभ्यत इति*। 'दम्भु दम्भे'।

सुवो *रोहावेति*। लोडुत्तमद्विवचने।

न्यासः

धासु वेति। उत्वस्यैवायं विकल्पः। ष्टुत्वं तु नित्यमेव भवति। षोढा, षड्धेति। 'अधिकरणविचाले च' इति धाप्रत्ययः। अथ किमर्थं धास्विति बहुवचननिर्देशः क्रियते? इत्याह—बहुवचननिर्देश इत्यादि। षड्धेति। धाञो धेटो वा स्त्रियाम् 'आतोऽनुपसर्गे कः' इति कप्रत्ययः।

दाश्यत इति 'दाशृ दाने', नाश्यत इति 'णश अदर्शने', दभ्यत इति 'दम्भ दम्भे'—एतेभ्यः कर्मणि घञ्। दुःशब्दस्य दाशशब्दादिभिः प्रादिसमासे—दूडाशः, दूणाशः, दूडभः। दम्भेरनुनासिकलोप इत्यादि। यदेतद् 'दाशनाशदभध्येषु' इत्यत्र कृतानुनासिकलोपस्य दम्भेरुच्चारणं तन्निपातनम्, तत एवात्र दम्भेरनुनासिकलोपो भवति।

पीव उपवसनं येषां ते पीवोपवसनाः। एवं पयोपवसनाः। उभयत्र सकारलोपः।

---

१. 'दुरो दाशनाशदभेषु' इति क्वचित् पाठान्तरम्।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥

**संख्याविसायपूर्वस्याह्नस्याहनन्यतरस्यां ङौ ॥ ११० ॥**

संख्या, वि, साय इत्येवम्पूर्वस्याह्नशब्दस्य स्थाने अहनित्ययमादेशो भवत्यन्यतरस्यां ङौ परतः । द्वयोरह्नोर्भवः द्व्यह्नः । त्र्यह्नः । द्व्यह्नि, द्व्यहनि । त्र्यह्नि, त्र्यहनि । द्व्यह्ने । त्र्यह्ने । व्यपगतमहो व्यह्नः ।

पदमञ्जरी

*वर्णागम इत्यादि* । कौ जीर्यत इति कुञ्जर इत्यत्र नकारस्य वर्णस्यागमः । हिनस्तीति सिंह इत्याद्यन्तयोर्वर्णयोर्विपर्ययो व्यत्यासः । षोड इत्यत्र षकारस्योकाररूपापत्तिः, वर्णविकारः । पृषोदर इत्यादौ तकारादेर्वर्णस्य विनाशः । यस्य धातोर्योऽर्थः प्रसिद्धः, तस्मादर्थान्तरेण योगस्तदर्थातिशयेन योग इति । एतत्पञ्चविधं निरुक्तम् = निर्वचनप्रकारः, शब्दानां तदन्तेन सूत्रेणोच्यत इति श्लोकार्थः ॥

*संख्याविसायपूर्वस्याह्नस्याहनन्यतरस्यां ङौ* ॥ *द्व्यह्न इति* । 'तद्धितार्थे' इति समासः, 'कालाट्ठञ्', तस्य 'द्विगोर्लुगनपत्ये' इति लुक्, 'राजाहःसखिभ्यष्टच्', 'अह्नोऽह्न एतेभ्यः' इत्यह्नादेशः । *द्व्यह्नीति* । 'विभाषा ङिश्योः' इत्यल्लोपविकल्पः ।

न्यासः

वर्णागम इति । निरुक्तशास्त्रे ये शब्दा व्युत्पाद्यन्ते तेषां पृषोदरादित्वादेव साधुत्वमिष्यत इतीमं श्लोकमाह— वर्णागम इत्यादि । अपूर्वस्य वर्णस्यागमो वर्णागमः = नकारादेरपूर्वस्य वर्णस्य प्राप्तिः, यथा— कौ जीर्यते कुञ्जर इति । अत्र कुशब्दस्य नुगागमः क्रियते । वर्णविपर्ययः = वर्णस्थानव्यत्यासः, यथा— 'हिसि हिंसायाम्', हिनस्तीति सिंह इत्यत्र पचाद्यचि कृते हकारसकारयोः स्थानव्यत्यासः । वर्णविकारः = वर्णस्य रूपान्तरापत्तिः, यथा—षोडशिति । अत्र षकारस्योत्वरूपापत्तिः, दकारस्य च डकाररूपापत्तिः । वर्णनाशः = वर्णस्य लोपः, यथा— पृषोदर इति । अत्र तकारस्य लोपः । अर्थातिशयः = अर्थविशेषः, प्रसिद्धादर्थादर्थान्तरम्, तेन धातोर्योगः = सम्बन्धः, यथा— मह्यां रौतीति मयूरः । अत्र रौते रमणेनार्थेनातिशयेन योगः । एतत् पञ्चविधं पञ्चप्रकारं निरुक्तम्, निश्चयेनोच्यतेऽर्थोऽनेनेति निरुक्तम् ॥

संख्याविसायपूर्वस्याह्नस्याहन्नन्यतरस्यां ङौ ॥ द्व्योरह्नोर्भव इति । भवार्थविवक्षायाम् 'तद्धितार्थे' इति समासः, ततः 'कालाट्ठञ्' इति ठञ्, तस्य 'द्विगोर्लुगनपत्ये' इति लुक्, 'राजाहःसखिभ्यष्टच्' इति टच् समासान्तः, 'अह्नोऽह्न एतेभ्यः' इत्यह्नादेशः । द्व्यह्नीति । 'विभाषा ङिश्योः' इत्यकारलोपः पाक्षिकः । द्व्यह्न इति । 'आद्

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



व्यह्नि, व्यहनि । व्यह्ने । सायमह्नः सायाह्नः । सायाह्नि, सायाहनि । सायाह्ने ।

एकदेशिसमासः पूर्वादिभ्योऽन्यस्यापि भवतीत्येतदेव विसायपूर्वस्याह्नस्य ग्रहणं ज्ञापकम् । तेन मध्यमह्नो मध्याह्न इत्यपि भवति ।

संख्याविसायपूर्वस्येति किम् ? पूर्वाह्णे । अपराह्णे ॥

पदमञ्जरी

*व्यह्न इति* । प्रादिसमासः, शेषं पूर्ववत् । *सायाह्न इति* । एकदेशिसमासः ।

ननु चायं पूर्वापरादिसूत्रे न पठ्यते, तत्कथमस्यैकदेशिसमासः ? तत्राह—*एकदेशिसमास इत्यादि* । 'अह्नोऽह्न एतेभ्यः' इत्यत्र 'तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः', 'अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः' इति प्रक्रान्ताः संख्यादयः परामृश्यन्ते । यदि च पूर्वादय एवैकदेशिना समस्येरन्न सायंशब्दात्परस्याह्नोऽह्नादेशः स्यात् ; 'एतेभ्यः' इत्यनेन तस्यापरामृष्टत्वात् । ततश्च तत्र पूर्वस्याह्नशब्दस्येह ग्रहणमनुपपन्नं स्यात् । तस्मात्सायशब्दस्य समासस्तावदनुमीयते । तत्र सामान्येन ज्ञापकमाश्रीयते—अन्यस्यापि भवतीति । एवं हि प्रयोजनान्तरमपि सिध्यति, तद्दर्शयति—*तेनेति* । स्यतेरन्तकर्मणः सायशब्दो घञन्तोऽहरवसानवचनः । *पूर्वाह्ण इति* । समासादि पूर्ववत् , 'अह्नोऽदन्तात्' इति णत्वम् ।

न्यासः

गुणः' । व्यह्न इति प्रादिसमासः । शेषं पूर्ववत् । सायाह्न इति । एकदेशिसमासोऽयम् । तत्रेदं चोद्यमाशङ्क्यते—ननु च 'पूर्वापराधरोत्तरम्' इत्यादिना समासो विहितः, न च सायंशब्दस्तत्र पठ्यते, तत् कथमिह सायंशब्दस्याहःशब्देन समासः सम्भवतीति ? एतन्निराकर्तुमाह—एकदेशिसमासः पूर्वादिभ्योऽन्यस्यापीत्यादि । तत्पुरुषसमासे 'अह्नोऽह्न एतेभ्यः' इत्यनेनाह्नादेशो विधीयते, 'एतेभ्यः' इत्यनेन च 'तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः' इति, तथा 'अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः' इति प्रक्रान्ताः संख्याव्ययादयः प्रत्यवमृश्यन्ते । तत्र यदि पूर्वादय एवैकदेशिना समस्येरन् , तदा न सायंशब्दः 'एतेभ्यः' इत्यनेन प्रत्यवमृश्येत; तस्य संख्यादिष्वपरिपठितत्वात् । ततश्च सायंशब्दात् परस्याह्नादेशो न स्यात् । एवञ्च सायम्पूर्वस्याह्नशब्दस्याभावात् तस्येह ग्रहणं न क्रियेत, कृतञ्च, तस्मादेतदेव सायंपूर्वस्याह्नशब्दस्य ग्रहणं ज्ञापयति—पूर्वादिभ्योऽन्यस्याप्येकदेशिसमासो भवतीति । तेन मध्यमह्नो मध्याह्न इति सिद्धं भवति । पूर्वाह्ण इति । 'अह्नोऽदन्तात्' इति णत्वम् । 'संख्याविसायेभ्यः' इत्येव वक्तव्ये पूर्वशब्दस्याधिकस्य ग्रहणं तदधिककार्यविधानसूचनार्थम् । तेन सायाह्न इत्यत्र मकारलोपः सिद्धो भवति ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## ढ्रलोपे पूर्वस्य दीर्घोऽणः ॥ १११ ॥

ढकाररेफयोर्लोपो यस्मिन् स ढ्रलोपः, तत्र पूर्वस्याणो दीर्घो भवति। लीढम्। मीढम्। उपगूढम्। मूढः। रलोपे—नीरक्तम्। अग्नीरथः। इन्दूरथः। पुनारक्तं वासः। प्राताराजक्रयः।

पूर्वग्रहणमनुत्तरपदेऽपि पूर्वमात्रस्य दीर्घार्थम्।

### पदमञ्जरी

*ढ्रलोपे पूर्वस्य दीर्घोऽणः* ॥ रेफे अकार उच्चारणार्थः। यद्ययं षष्ठीतत्पुरुषः स्यात्, तदाणः पूर्वत्वं नोपपद्यते, लोपस्याभावरूपत्वात्। अथापि बुद्धिपरिकल्पितं पौर्वापर्यमाश्रीयते? एवमपि करणीयमित्यादावप्यनीयरो रेफस्य लोपे परतः पूर्वस्य दीर्घप्रसङ्ग इति तत्पुरुषे एवं दोषं दृष्ट्वा कण्ठेकालवद्व्यधिकरणपदो बहुव्रीहिरित्याह—*ढकाररेफयोर्लोपो यस्मिन्निति*। अत्र लिङ्गम्—'भव्यगेयप्रवचनीय' इति निर्देशः। *लीढमिति*। 'लिह आस्वादने', निष्ठा, ढत्वधत्वष्टुत्वढलोपेषु रूपम्, 'मिह सेचने', 'गुह संवरणे', 'मुह वैचित्त्ये'। पूर्वग्रहणमनर्थकम्, 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति सिद्धेः? इत्यत आह—*पूर्वग्रहणमित्यादि*।

### न्यासः

ढ्रलोपे पूर्वस्य दीर्घोऽणः ॥ ढ्रलोप इति तत्पुरुषोऽयं वा स्याद्, बहुव्रीहिर्वा? तत्र यदि तत्पुरुषः स्याद्-ढ्रयोर्लोपो ढ्रलोप इति, तदाणः पूर्वत्वं नोपपद्यते; लोपस्याभावरूपत्वात्, अभावे च पौर्वापर्यासम्भवात्। अथापि स्थानिद्वारकं पौर्वापर्यमाश्रित्य पूर्वत्वमुच्यते, करणीयः—इत्यत्राप्यनीयरो रेफस्य लोपे कृते पूर्वस्य दीर्घत्वं स्यादितीमं दोषं दृष्ट्वा बहुव्रीहिरयमिति दर्शयन्नाह—ढकाररेफयोर्लोपो यस्मिन्नित्यादि। गमकत्वाद् वैयधिकरण्येऽपि बहुव्रीहिर्भवत्येव, यथा—कण्ठेकाल इति। लीढमिति। 'लिह आस्वादने', निष्ठा, 'हो ढः', 'झषस्तथोर्धोऽधः', 'ष्टुना ष्टुः', 'ढो ढे लोपः'—इत्येते विधयः कर्त्तव्याः। मीढमिति। 'मिह सेचने'। उपगूढमिति। 'गुहू संवरणे'। मूढ इति। 'मुह वैचित्त्ये'। नीरक्तमिति। 'कुगतिप्रादयः' इति समासः, 'रो रि' इति रेफस्य लोपः।

अथ पूर्वग्रहणं किमर्थम्, यावता 'ढ्रलोपे' इति सप्तम्या निर्देशः, तत्रान्तरेणापि पूर्वग्रहणम् 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति पूर्वस्यैव भविष्यति? इत्यत आह—पूर्वग्रहणमित्यादि। असति पूर्वग्रहणे, उत्तरपदाधिकारादुत्तरपद एव स्यात्-नीरक्तमित्यादौ, अनुत्तरपदे न स्यात्—लीढमित्यादौ। यद्यपि ढलोपस्योत्तरपदेऽसम्भवादनुत्तरपदेऽपि वचनप्रामाण्याद्दीर्घत्वं स्याद्, रलोपे त्वनुत्तरपदे न प्राप्नोति; उत्तरपदे रलोपस्य

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अण इति किम् ? आतृढम् , आवृढम् ॥

सहिवहोरोदवर्णस्य ॥ ११२ ॥

सहि, वहि—इत्येतयोरवर्णस्योकार आदेशो भवति ढ्रलोपे। सोढा, सोढुम् , सोढव्यम् । वोढा, वोढुम् , वोढव्यम् ।

पदमञ्जरी

सति पूर्वग्रहणे यद्यपि ढलोपे वचनप्रामाण्यादनुत्तरपदेऽपि स्यात् , रलोपे त्वनुत्तरपदे न स्यात् ; नीरक्तमित्यादावुत्तरपदस्यापि सम्भवात् । *आतृढमिति* । 'तृहू हिंसायाम्' 'यस्य विभाषा' इतीट्प्रतिषेधः । क्वचि*दादृढमिति* पाठः; तदसत् ; सेट्त्वादस्य धातोः 'दृढः स्थूलबलयोः' इति ह्लोपो निपात्यते । *आवृढमिति* 'वृहू उद्यमने' ॥

*सहिवहोरोदवर्णस्य* ॥ *ऊढ इति* । अत्रासत्यवर्णग्रहणे वह् + त इति स्थिते न तावदोत्वं ढलोपनिमित्तत्वात् । अत्र 'पूर्वत्रासिद्धम्' इति ढत्वादीनामसिद्धत्वात्पूर्वं यजादित्वात्सम्प्रसारणम् , तस्मिन्कृते पूर्वत्वे वोकारस्योत्वं प्राप्नोति ।

*भाष्ये* त्ववर्णग्रहणं प्रत्याख्यातम् । अन्तरङ्गाणि ढत्वादीनि, वर्णाश्रयत्वात् बहिरङ्गं सम्प्रसारणम् , प्रत्ययविशेषत्वात्तस्याप्यसिद्धत्वात् 'पूर्वत्रासिद्धम्' इत्यस्यानुपस्थानम् । यद्वा—ढलोपस्यौत्वदीर्घविधौ निमित्तत्वेनाश्रयणादत्र विषये

न्यासः

सम्भवात् । तस्मादनुत्तरपदेऽपि पूर्वमात्रस्याणो दीर्घो यथा स्यादिति पूर्वग्रहणम् । आतृढमिति । 'तृहू तुन्हू हिंसार्थौ' । आ:दृढमिति क्वचित् पाठः । 'दृह दृहि बृह बृहि वृद्धौ' इत्यस्य निष्ठायां किलेदं रूपम्, एतत् तु नोपपद्यते; दृहेः सेट्त्वात् तस्येटा भवितव्यम् । अथापि कथञ्चिन्न स्यात् , एवमपि 'दादेर्धातोर्घः' इति घत्वेन भवितव्यम् । स्थूलबलवद्विवक्षायाम् 'दृढः स्थूलबलयोः' इति निर्देशादुभयं न भविष्यतीति चेद् ? दीर्घत्वमप्यत एव तर्हि न स्यात् । केचिदत्रानित्यत्वादागमशासनस्याभावमिटो वर्णयन्ति । 'वा द्रुह' इत्यादौ सूत्रे 'वा' इति योगविभागात् पक्षे घत्वस्याभावः । आवृढमिति । 'वृहू उद्यमने' ।

सहिवहोरोदवर्णस्य ॥ ऊढः, ऊढवानिति । यजादित्वात् सम्प्रसारणम् । 'सम्प्रसारणाच्च' इति परपूर्वत्वम्, दीर्घत्वञ्च । तत्रेदानीमसत्यवर्णग्रहणे ऊकारस्याप्योत्वं स्यात् । ननु च सम्प्रसारणादिभ्यः परत्वादोत्त्वेन भवितव्यम् , तथा च भाष्ये—'उभयोर्नित्ययोः परत्वादोत्त्वेन भवितव्यम्, ओत्वे कृते सम्प्रसारणम् , सम्प्रसारणे कृते सम्प्रसारणपरपूर्वत्वम्, कृतकार्यत्वात् पुनरोत्वं न भविष्यति' इति । तस्माद् भवितव्यमेवौत्त्वेन, तस्मिन् सति पश्चात् सम्प्रसारणादिभिः । न चैवं किञ्चिदनिष्टमापद्यत इति नार्थो

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


अवर्णस्येति किम्? ऊढः। ऊढवान्। वर्णग्रहणं किम्? कृतायामपि वृद्धौ यथा स्यात्—उदवोढाम्। उदवोढम्। तादपि परस्तपरः, तपरत्वादाकारस्य ग्रहणं न स्यात्॥

पदमञ्जरी

ढत्वादीनामसिद्धत्वं नास्ति, ततः प्रागेव सम्प्रसारणात्परत्वात् ढत्वादिषु कृतेषु वढ इति स्थिते सम्प्रसारणं च प्राप्नोति, ओत्त्वं च; परत्वादोत्त्वम्, ततः सम्प्रसारणम्। पूर्वत्वं च न पुनरोत्त्वम्, तस्मिन्नेव प्रयोगे कृतत्वात्तदभावे निमित्तसद्भावाद् दीर्घत्वं प्रवर्तिष्यत इति।

*वर्णग्रहणं किमिति*। ओदस्येति वक्तव्यमिति प्रश्नः। *कृतायामपीत्यादि*। उत्पूर्वाद्वहेर्लुङि तामादिषु सिचि वृद्धौ सलोपढत्वादीनि। तत्रेदानीमसति वर्णग्रहणे मात्रिकस्योच्यमानो दीर्घस्य न स्यात्। नन्ववर्णः सवर्णान् गृह्णातीत्याकारस्यापि ग्रहणं भवति? तत्राह—*तादपि परस्तपर इति*। इदमेव वर्णग्रहणं लिङ्गं 'तपरस्तत्कालस्य' इत्यत्र पञ्चमीसमासोऽप्याश्रीयत इति। तेनैतन्न चोदनीयम्—'सह्रिवहोरस्यौत्' इत्येवं कस्मान्न कृतमिति॥

न्यासः

वर्णग्रहणेन। एवं तह्यवर्णग्रहणं कुर्वन्नेतज्ज्ञापयति—क्वचित् सम्प्रसारणं तदाश्रयञ्च कार्यं बलीयो भवतीति। तेन यदुक्तम्—'सम्प्रसारणं सम्प्रसारणाश्रयञ्च कार्यं बलीयो भवति' इति, तदुपपन्नं भवति।

वर्णग्रहणं किमिति। 'ओदस्य' इतावत्यपि सति सोढा, सोढुमित्यादि सिध्यत्येवेत्यभिप्रायः। कृतायामपीत्यादि। उत्पूर्वाद्वहेर्लुङि च्लिः, 'च्लेः सिच्', तसस्ताम्, थसस्तम्, अडागमः, ढत्वादेरसिद्धत्वात् ततः पूर्वम् 'वदव्रज' इत्यादिना वृद्धिः, ततो ढत्वादि। अथेदानीमसति वर्णग्रहणे मात्रिकस्याकारस्योच्यमानमोत्त्वं दीर्घस्य न स्यात्, वर्णग्रहणाद्वर्णमात्रस्य भवतीति सिद्धम्—उदवोढाम्, उदवोढमिति? ननु च 'अणुदित् सवर्णस्य चाप्रत्ययः' इत्यकारो गृह्यमाण आकारमपि ग्राहयिष्यति, तत् किं वर्णग्रहणेन? इत्यत आह—तादपि पर इत्यादि। 'तपरस्तत्कालस्य' इत्यत्र तादपि परस्तपर इत्ययमपि समास आश्रितः खट्वैडका, खट्वैतिकायनः—इत्येवमादिषु त्रिमात्रिके चतुर्मात्रिके वर्तमानस्यैकारस्य वृद्धिसंज्ञा मा भूदित्येवमर्थम्। तत्रासति वर्णग्रहणेऽकारस्य तपरत्वादाकारो न गृह्येत, ततश्च तस्यौत्त्वं न स्यात्। तस्मादवर्णमात्रस्य यथा स्यादित्येवमर्थं वर्णग्रहणं कर्त्तव्यम्। तादपि परस्तपरः—इत्यस्य च समासस्यैतदेव वर्णग्रहणं ज्ञापकं वेदितव्यम्॥



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


## साढ्यै साढ्वा साढेति निगमे ॥ ११३ ॥

साढ्यै, साढ्वा, साढा – इति निगमे निपात्यन्ते । साढ्यै समन्तात् । साढ्वा शत्रून् । सहेः क्त्वाप्रत्यये ओत्वाभावः । पक्षे क्त्वाप्रत्ययस्य ध्यैभावः । साढा – इति तृचि रूपमेतत् ।

निगम इति किम् ? सोढ्वा, सोढेति भाषायाम् ॥

## संहितायाम् ॥ ११४ ॥

'संहितायाम्' इत्ययमधिकारः । यदित ऊर्ध्वमनुक्रमिष्यामः संहितायामित्येवं तद्वेदितव्यम् । वक्ष्यति–"'द्व्यचोऽतस्तिङः' इति । विद्मा हि त्वा गोपतिं शूर गोनाम् । संहितायामिति किम् ? विद्म, हि, त्वा, गोपतिं, शूर, गोनाम्" ॥

### पदमञ्जरी

*साढ्यै साढ्वा साढेति निगमे* ॥ *साढेति तृचि रूपमिति* । अपपाठोऽयम्, 'आषाढोऽग्निर्बृहद्वयाः', 'आषाढमुग्रं सहमानम्', 'आषाढं युत्सु पृतनासु', 'आषाढाय सहमानाय' इत्यादौ निष्ठायामात्वदर्शनात् । तस्मा*न्निष्ठायां रूपमिति* पाठः । सूत्रवृत्तौ च साढेति ह्रस्वान्तं छेत्तव्यम् । यदि तृजन्तेऽपि क्वचिदात्वं दृश्यते, तदान्यतरत्सूत्रे इतिकरणस्य प्रकारार्थत्वात्साध्यम् ॥

*संहितायाम्* ॥ अनन्तरैर्योगैरुत्तरपदे कार्यं विधीयते, उत्तरपदं च समासे भवति । तत्र नित्यमेव संहितया भवितव्यम्; संहितैकपदे नित्येति वचनात् । अवग्रहेऽपि क्वचित्कार्यं दृश्यते, क्वचिन्न, 'इकः काशे' अनूकाशमित्यनु + काशमिति, 'अष्टनः संज्ञायाम्', अष्टावन्धुरमित्यष्टा + बन्धुरमिति । अतो न तेष्ववश्यमस्योपयोग इति । यत्रानुत्तरपदे कार्यं विधीयते तदुदाहरति—*वक्ष्यति द्व्यचोऽतस्तिङ इति* । अत्र हि तिङन्तस्य समासासम्भवादुत्तरपद इति न सम्बध्यते । *विद्मा हि त्वेति* । विदेर्लट्, मस्, 'विदो लटो वा' ॥

### न्यासः

साढ्यै साढ्वा साढेति निगमे ॥ साढ्वेत्यादौ ओत्वाभावो निपात्यते । दीर्घस्तु 'ढ्रलोपे' इत्यादिनैव सिद्धः ॥

संहितायाम् ॥ 'उत्तरपदे' इति वर्त्तते, उत्तरपदञ्च समासे भवति, तत्र चान्तरेणापि वचनं नित्यमेव संहितया भवितव्यम्, तस्मादुत्तरपदे परतो वक्ष्यमाणानां यत् कार्यं न तदर्थताधिकारस्योपपद्यत इति यदनुत्तरपदे कार्यं तदर्थमेवायमधिकारः । तेन यैर्योगैरुत्तरपदे कार्यं विधीयते तानुल्लङ्घ्य येन योगेनानुत्तरपदे कार्यं विधीयते तत्रास्यो-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


## कर्णे लक्षणस्याविष्टाष्टपञ्चमणिभिन्नच्छिन्नच्छिद्र-स्रुवस्वस्तिकस्य ॥ ११५ ॥

कर्णशब्दे उत्तरपदे लक्षणवाचिनो दीर्घो भवति विष्ट, अष्टन्, पञ्चन्, मणि, भिन्न, छिन्न, छिद्र, स्रुव, स्वस्तिक — इत्येतान्वर्जयित्वा। दात्राकर्णः[1]। द्विगुणाकर्णः। त्रिगुणाकर्णः। द्व्यङ्गुलाकर्णः। अङ्गुलाकर्णः।

यत्पशूनां स्वामिविशेषसम्बन्धज्ञापनार्थं दात्राकारादि क्रियते तदिह लक्षणं गृह्यते।

पदमञ्जरी

*कर्णे लक्षणस्याविष्टाष्टपञ्चमणिभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्य* ॥ *तदिह लक्षणं गृह्यत इति*। तत्रैव लक्षणशब्दस्य प्रसिद्धत्वात् विष्टादिपर्युदासाच्च। दात्रादिशब्द उपमानात्तदाकारे चिह्ने वर्तते ॥

न्यासः

पयोगं दर्शयन्नाह— वक्ष्यति द्व्यचोऽतस्तिङ इत्यादि। विद्मा हि त्वेत्यादि। विदेर्लोटि मसः 'स उत्तमस्य' इति सकारलोपः, अदादित्वाच्छपो लुक् ॥

कर्णे लक्षणस्याविष्टाष्टपञ्चमणिभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्य ॥ लक्ष्यतेऽनेन स्वामिविशेषस्य सम्बन्ध इति लक्षणम् = चिह्नम्। दात्राकर्ण इति। दात्रमिव दात्रम्, साहश्यात् तदाकारं चिह्नमुच्यते। दात्रं कर्णे यस्य स दात्राकर्णः। एवमुत्तरत्रापि बहुव्रीहिरेव वेदितव्यः। द्वौ गुणौ यस्य स द्विगुणः। तदाकारमपि चिह्नं द्विगुणम्। गुणशब्दोऽयं बन्धनवचनः। द्वयोरङ्गुल्योः समाहारो द्व्यङ्गुलम्, 'तत्पुरुषस्याङ्गुलेः' इत्यादिना च समासान्तः, द्व्यङ्गुलाकारमपि चिह्नं द्व्यङ्गुलम्। तदहि लक्षणं गृह्यत इति। कुत एतत्? लक्षणग्रहणाद् यदिह सामान्येन येन केनचिल्लक्ष्यते तल्लक्षणं गृह्येत चिह्नस्येत्येवं ब्रूयात्, लघु ह्येवं सूत्रं भवति। तस्माच्चिह्नग्रहणे कर्त्तव्ये यल्लक्षणग्रहणं कृतं तेन लक्षणविशेषोऽत्र ग्राह्यः, न तु लक्षणमात्रमित्यस्यार्थस्य प्रतिपादनं कृतमिति लक्ष्यते। तथा चोक्तम्— इङ्गितेनोन्मिषितेन महता सूत्रप्रबन्धेन वेहाचार्याणामभिप्राया लक्ष्यन्त इति। ननु च लक्षणग्रहणेन लक्षणविशेषोऽत्राभिमतः, न तु लक्षणमात्रमित्येतावन्मात्रं गम्यते, स तु विशेषो न वृत्तिकारेणोपदर्शितः कुतोऽवसेयः? आचार्याणां स्वीकर-

---

१. 'दत्ताकर्णः' इति पाठान्तरम्।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



लक्षणस्येति किम् ? शोभनकर्णः। अविष्टादीनामिति किम् ? विष्टकर्णः। अष्टकर्णः। पञ्चकर्णः। मणिकर्णः। भिन्नकर्णः। छिन्नकर्णः। छिद्रकर्णः। स्रुवकर्णः। स्वस्तिककर्णः॥

नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ॥ ११६॥

नहि, वृति, वृषि, व्यधि, रुचि, सहि, तनि — इत्येतेषु क्विप्रत्ययान्तेषूत्तरपदेषु पूर्वपदस्य दीर्घो भवति संहितायां विषये। नहि — उपानत्, परीणत्। वृति — नीवृत्, उपावृत्। वृषि — प्रावृट्, उपावृट्। व्यधि — मर्मावित्, हृदयावित्, श्वावित्। रुचि — नीरुक्, अभीरुक्। सहि — ऋतीषट्। तनि — तरीतत्।

गमः क्वाविति गमादीनामिष्यते। ततस्तनोतेरप्यनुनासिकलोपः।

क्वाविति किम् ? परिणहनम्॥

पदमञ्जरी

*नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ*॥ उपनह्यते इत्युपानत्, सम्पदादित्वात्कर्मणि क्विप्, 'नहो धः'। *परीणदिति*। 'उपसर्गादसमासेऽपि' इति णत्वम्। *नीवृदिति*। नीवृदादौ कर्तरि क्विप्, व्यधेर्ग्रहिज्यादिसम्प्रसारणम्। *ऋतीषाहमिति*। 'पूर्वपदात्' इति षत्वम्। *परीतदिति*। अनुदात्तेति लोपस्य क्ङिज्झल्निमित्तकत्वात् क्वौ च तदभावाद् गमादीनामितीत्यनुनासिकलोपे तुक्॥

न्यासः

णात्। शोभनकर्ण इति। यद्यप्यनेनापि लक्ष्यते, न त्वेवंविधस्य लक्षणस्येह ग्रहणम्। नापि शोभनत्वं लोके लक्षणत्वेन प्रतीयत इति भवत्येतत् प्रत्युदाहरणम्॥

नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ॥ 'णह बन्धने'। उपनह्यत इति उपानत्, सम्पदादित्वात् क्विप्, 'नहो धः' इति धत्वम्, ततो जश्त्वम्, चर्त्वञ्च। परिणह्यतीति परीणत्। 'उपसर्गादसमासे' इत्यादिना णत्वम्। निवर्त्तत इति नीवृत्। 'अन्येभ्योऽपि दृश्यते' इति क्विप्। एवमुत्तरत्रापि क्विबेव वेदितव्यः। 'वृषु सेचने', प्रवर्षतीति प्रावृट्। षकारस्य जश्त्वम्—डकारः, तस्य चर्त्वे टकारः। 'व्यध ताडने', मर्माणि विध्यतीति मर्मावित्। ग्रह्यादिसूत्रेण सम्प्रसारणम्। 'रुच दीप्तौ', निरोचणं नीरुक्। 'चोः कुः' इति कुत्वम्। ऋतिं सहत इति ऋतीषट्। 'सहेः पृतनर्ताभ्याञ्च' इत्यत्र 'सहेः' इति योगविभागादनुक्तसमुच्चयार्थत्वाद्वा चकारस्य षत्वम्। परितनोतीति परीतत्। अनुनासिकलोपे कृते तुक्।

केन पुनरत्रानुनासिकलोपः ? इत्याह—गमः क्वावित्यादि। गतिकारकयोरेवेष्यत

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## वनगिर्योः संज्ञायां कोटरकिंशुलकादीनाम् ॥ ११७ ॥

वन, गिरि – इत्येतयोरुत्तरपदयोर्यथासंख्यं कोटरादीनां किंशुलकादीनां च दीर्घो भवति संज्ञायां विषये। वने कोटरादीनाम् – कोटरावणम्, मिश्रकावणम्, सिध्रकावणम्, सारिकावणम्।

गिरौ किंशुलकादीनाम् – किंशुलकागिरिः। अञ्जनागिरिः।

कोटरकिंशुलकादीनामिति किम्? असिपत्रवनम्। कृष्णगिरिः।

कोटर। मिश्रक। पुरक। सिध्रक। सारिक। कोटरादिः।

किंशुलक। शाल्वक। अञ्जन। भञ्जन। लोहित। कुक्कुट। किंशुलकादिः॥

## वले ॥ ११८ ॥

वले परतः पूर्वस्य दीर्घो भवति। आसुतीवलः। कृषीवलः। दन्तावलः। 'रजःकृष्यासुतिपरिषदो वलच्' इति वलच्प्रत्ययो गृह्यते, न प्रातिपदिकम्।

अनुत्साहभ्रातृपितृणामित्येव[1]। उत्साहवलः। भ्रातृवलः॥ पितृवलः[1]॥

### पदमञ्जरी

*वनगिर्योः संज्ञायां कोटरकिंशुलकादीनाम्* ॥ *कोटरावणमिति*। 'वनं पुरगा' इति णत्वम्॥

*वले* ॥ *वलच्प्रत्ययो गृह्यत इति*। वक्ष्यमाणेन मतुपा साहचर्यात्। तेन 'वल संवरणे' इत्यतः पचाद्यचि यत्प्रातिपदिकं तत्र दीर्घो न भवति।

अण इत्येव – *भर्तृवलः*॥

### न्यासः

इति। तदर्थम् 'विभाषा पुरुषे' इत्यतो विभाषाग्रहणमनुवर्त्तते, सा च व्यवस्थितविभाषा विज्ञेया॥

वनगिर्योः संज्ञायां कोटरकिंशुलकादीनाम्॥ कोटरावणमिति। षष्ठीसमासः। 'वनं पुरगा' इत्यादिना णत्वम्॥

वले॥ वलच्प्रत्ययो गृह्यते, न प्रातिपदिकमिति। एतच्च वक्ष्यमाणस्येह बहुल-

१-१. अयमंशः क्वचिन्नास्ति।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## मतौ बह्वचोऽनजिरादीनाम् ॥ ११९ ॥

मतौ परतो बह्वचोऽजिरादिवर्जितस्य दीर्घो भवति संज्ञायां विषये । उदुम्बरावती । मशकावती । वीरणावती । पुष्करावती । अमरावती । 'नद्यां मतुप्' इति मतुप्प्रत्ययः । 'संज्ञायाम्' इति मतोर्वत्वम् ।

बह्वच इति किम् ? व्रीहिमती । अनजिरादीनामिति किम् ? अजिरवती । खदिरवती । पुलिनवती । हंसकारण्डववती । चक्रवाकवती ।

'संज्ञायाम्' इत्येव – वलयवती ॥

## शरादीनां च ॥ १२० ॥

शरादीनां च मतौ दीर्घो भवति संज्ञायां विषये । शरावती । वंशावती ।

शर । वंश । धूम । अहि । कपि । मणि । मुनि । शुचि । हनु । शरादिः ।

'संज्ञायाम्' इति मतोर्वत्वम् । यवादित्वाद् व्रीह्यादिभ्यो न भवति ॥

## इको वहेऽपीलोः ॥ १२१ ॥

पदमञ्जरी

*मतौ बह्वचोऽनजिरादीनाम्* ॥ *संज्ञायामिति मतोर्वत्वमिति* । यद्यप्युदाहृतेषु 'मादुपधायाः' इति वत्वं सिद्धम्, तथापि संज्ञायामत्रापि परत्वादनेनैव वत्वं युक्तम् । प्रत्युदाहरणे च *व्रीहिमती*त्यत्रापि नानेन वत्वमित्येतदुपन्यस्तम् । अजिरादिष्वबह्वचां पाठ उपसमस्तार्थः ॥

*इको वहेऽपीलोः* ॥ ऋषीवहादयः षष्ठीसमासाः । वहशब्दः पचाद्यजन्तः ॥

न्यासः

ग्रहणस्य सिंहावलोकितन्यायेनोपस्थानाल्लभ्यत इत्येके । अनन्तरं वक्ष्यमाणेन मतुपा प्रत्ययेन साहचर्याच्चेत्यपरे ॥

मतौ बह्वचोऽनजिरादीनाम् ॥ व्रीहिमतीत्यादौ पूर्ववन्मतुप् ।

वलयवतीत्यत्र तु—'तदस्यास्त्यस्मिन्निति मतुप्' ॥

शरादीनाञ्च ॥ अबह्वचर्थोऽयमारम्भः । शरावतीति । 'नद्यां मतुप्' इति मतुप् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



इगन्तस्य पूर्वपदस्य पीलुवर्जितस्य वह उत्तरपदे दीर्घो भवति। ऋषीवहम्। कपीवहम्। मुनीवहम्।

इक इति किम्? पिण्डवहम्। अपीलोरिति किम्? पीलूवहम्।

* अपील्वादीनामिति वक्तव्यम् *। इह मा भूत्—दारुवहम्।

## उपसर्गस्य घञ्यमनुष्ये बहुलम् ॥ १२२ ॥

उपसर्गस्य घञन्ते उत्तरपदेऽमनुष्येऽभिधेये बहुलं दीर्घो भवति। वीक्लेदः। नीमार्गः। अपामार्गः। न च भवति—प्रसेवः, प्रसारः॥

* सादकारयोः कृत्रिमे दीर्घो भवति *। प्रासादः। प्राकारः। कृत्रिम इति किम्? प्रसादः। प्रकारः।

* वेशादिषु विभाषा दीर्घो भवति *। प्रतिवेशः, प्रतीवेशः। प्रतिरोधः, प्रतीरोधः।

अमनुष्य इति किम्? निषादो मनुष्यः॥

### पदमञ्जरी

*उपसर्गस्य घञ्यनुष्ये बहुलम्* ॥ उपसर्गाद् घञोऽविधानादुत्तरपदाधिकारेऽप्यत्र तदन्तविधिर्विज्ञायत इत्याह—*घञन्त उत्तरपदे इति*। *वीमार्ग इति*। मृजेर्वृद्धिः।

कृत्रिमम्=करणेन निर्वृत्तम्। पुरुषव्यापाराभिनिर्वृत्तमित्यर्थः।

निषीदत्यस्मिन्पापमिति *निषादः*, 'हलश्च' इति घञ्॥

### न्यासः

इको वहेऽपीलोः॥ ऋषीवह इति। षष्ठीसमासः। वहशब्दः पचाद्यजन्तः।

अपील्वादीनामित्यादि। यदेतदिको दीर्घविधानं तत् पील्वादीनां न भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—इहापि तदेव बहुलग्रहणं पूर्ववदुपतिष्ठते, तेन पीलुशब्दादन्येषामपि केषाञ्चिद् दीर्घत्वं न भविष्यतीति॥

उपसर्गस्य घञ्यमनुष्ये बहुलम्॥ उपसर्गात् केवलं घञ्प्रत्ययो न सम्भवति, अतो घञन्त उत्तरपदे कार्यं विज्ञायते इत्याह—घञन्त उत्तरपद इत्यादि। वीक्लेद इति। 'क्लिद आर्द्रीभावे', 'अकर्त्तरि च कारके' इत्यादिना घञ्। वीमार्ग इति। 'मृजू शुद्धौ', 'मृजेर्वृद्धिः', 'चजोः कु घिण्यतोः' इति कुत्वम्। प्रसेव इति। 'षिवु तन्तुसन्ताने'।

कृत्रिममिति। करणेन निर्वृत्तं कृत्रिमम्। पुरुषव्यापारादिभिर्निर्वृत्तमित्यर्थः।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## इकः काशे ॥ १२३ ॥

इगन्तस्योपसर्गस्य काशशब्द उत्तरपदे दीर्घो भवति। नीकाशः। वीकाशः। अनूकाशः। पचाद्यजन्तोऽयं काशशब्दः, न तु घञन्तः।

इक इति किम्? प्रकाशः॥

## दस्ति ॥ १२४ ॥

'दा' इत्येतस्य यस्तकारादिरादेशस्तस्मिन्परत इगन्तस्योपसर्गस्य दीर्घो भवति। नीत्तम्। वीत्तम्। परीत्तम्। 'अच उपसर्गात्तः' इत्यन्तस्य

### पदमञ्जरी

*इकः काशे* ॥ *पचाद्यच्प्रत्ययान्तोऽयं काशशब्द इति*। न घञन्तः, तत्र पूर्वेणैव सिद्धम्। यथा निगमे—प्राकाशावध्वर्यवे ददातीति। 'इको वहेऽपीलोः' इत्यत्र पूर्वपदमात्रस्येष्यते, इह तूपसर्गस्य; तेन द्विरिक इत्युक्तम्॥

*दस्ति* ॥ *दा इत्येतस्यादि*। अत्र तकारादिशब्दः कर्मधारयः। *तस्मिन्परत इति*। 'यस्मिन्विधिस्तदादौ' इति वचनात्तदादावुत्तरपदे परत इत्यर्थः। 'दा' इत्येतस्य सम्बन्धी यस्तकारस्तदादावुत्तरपदे दीर्घ इत्येषोऽर्थो विवक्षितः। *नीत्तमिति*। ननु चात्र तकार आदिर्न भवति, यस्तावद् 'अच उपसर्गात्तः' इति तकारः स 'अलोऽन्त्यस्य' इत्यन्तस्य क्रियते, योऽपि दकारस्य 'खरि च' इति तकारः, सोऽप्यस्मिन्दीर्घे कर्तव्येऽसिद्धः? अत आह—*अच उपसर्गात्त इत्यादि*।

### न्यासः

निषाद इति। 'षद्लृ विशरणगत्यवसादनेषु', निषीदत्यस्मिन् पापमिति निषादः। 'हलश्च' इति घञ्॥

इकः काशे॥ नीकाश इति। 'काशृ दीप्तौ'। पचाद्यजन्तोऽयं काशशब्दः, न तु घञन्त इति। तत्र पूर्वेणैव सिद्धमित्यभिप्रायः। 'पूर्वेणैव सिद्धे नियमार्थमेतत्—इक एव काशे नान्यस्य' इति क्वचिद् ग्रन्थः, एष तु नोपपद्यते; घञि पूर्वेण दीर्घविधानात्, एतस्य च काशशब्दस्य पचाद्यजन्तत्वात्। अथ बहुलग्रहणात् पचाद्यजन्तेऽपि पूर्वेणैव सिद्धमित्युच्यते, तथा च तत एव बहुलग्रहणादिकोऽन्यस्य न भविष्यतीति न कर्तव्यमेवेदं सूत्रम्। क्रियमाणञ्च पूर्वस्यैव प्रपञ्चार्थं द्रष्टव्यम्॥

दस्ति॥ 'दा' इत्येतस्य यस्तकारादिरादेश इति। एतेन स्थान्यादेशसम्बन्धे 'दः' इत्येषा षष्ठीति विज्ञायते। वीत्तमिति। ददातेर्निष्ठायां रूपम्। ननु चात्र तकारादिरादेशः परो न सम्भवत्येव, तथा हि—यस्तावद् 'अच उपसर्गात्तः' इति तकारः सः 'अलोऽन्त्यस्य' इति वचनादन्त्यस्य क्रियते, स च वर्णान्तरो व्यवधानादनन्तरस्तकारः परो

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



यद्यपि तकारः क्रियते, तथापि चर्त्वस्याश्रयात्सिद्धत्वमिति तकारादि-र्भवति। एक इत्येव – प्रत्तम्, अवत्तम्।

द इति किम्? वितीर्णम्। नितीर्णम्। तीति किम्? सुदत्तम्॥

## अष्टनः संज्ञायाम्॥ १२५॥

अष्टन् – इत्येतस्योत्तरपदे संज्ञायां दीर्घो भवति। अष्टावक्रः। अष्टाबन्धुरः। अष्टापदम्।

संज्ञायामिति किम्? अष्टपुत्रः। अष्टभार्यः॥

## छन्दसि च॥ १२६॥

छन्दसि विषयेऽष्टन उत्तरपदे दीर्घो भवति। आग्नेयमष्टाकपालं

### पदमञ्जरी

उच्यते चेदं तकारादावुत्तरपद इति। यदि चर्त्वमसिद्धं स्याद्, दीर्घविधिरनर्थकः स्यात्, अत आश्रयात्सिद्धं चर्त्वम्। तेन तकार आदिरुत्तरपदस्य सम्भवतीत्यर्थः। *यद्यपीति*। अनेनैतद्दर्शयति—द्वितकारपक्षस्याश्रयणे न किञ्चिद्वक्तव्यमिति। *सुदत्तमिति*॥

'अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि।
सुदत्तमनुदत्तं च निदत्तं चेति चेष्यते'॥

इत्यनयेष्ट्याऽत्र ददादेशः॥

छन्दसि च॥ *अष्टाकपालमिति*। 'आन्महतः' इत्यत्राष्टनः कपाले हविषीति

### न्यासः

न सम्भवति; योऽपि 'खरि च' इति दकारस्य तकारो विधीयते, सोऽपि न सम्भवत्येव; दीर्घत्वे कर्त्तव्ये चर्त्वस्यासिद्धत्वेनाविद्यमानत्वादित्यत आह – अच उपसर्गात्त इत्यादि। आश्रयणमाश्रयः = अङ्गीकरणम्। 'दा' इत्यत्र यस्तकारादिरादेशः, तस्मिन् परत इगन्त-स्योपसर्गस्य दीर्घो भवतीति ब्रुवता चर्त्वमाश्रितम्, न ह्यन्यथा तकारादिरादेशः परः सम्भवति। तस्मात् चर्त्वस्याश्रयणात् सिद्धम्। अतस्तकारादिरादेशो भवतीति। नितीर्णमिति। 'तॄ प्लवनतरणयोः', 'ॠत इद् धातोः' इतीत्वम्, 'हलि च' इति दीर्घः। 'अट्कुप्वाङ्' इत्यादिना णत्वम्। सुदत्तमिति। 'दो दद् घोः' इत्यत्र—

'अवदत्तं विदत्तंच प्रदत्तंचादिकर्मणि।
सुदत्तमनुदत्तंच निदत्तमिति चेष्यते'॥

इत्यनयेष्ट्या ददातेर्ददादेशः॥

अष्टनः संज्ञायाम्॥ अष्टावक्र इति। अष्टौ वक्राण्यस्येति बहुव्रीहिः॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



निर्वपेत् । अष्टाहिरण्या दक्षिणा । अष्टापदी देवता सुमती । अष्टौ पादावस्या इति बहुव्रीहौ पादस्य लोपे कृते 'पादोऽन्यतरस्याम्' इति ङीप् ।

* गवि च युक्ते भाषायामष्टनो दीर्घो भवतीति वक्तव्यम् * । अष्टागवं शकटम् ॥

चितेः कपि ॥ १२७ ॥

चितिशब्दस्य कपि परतो दीर्घो भवति । एकचितीकः । द्विचितीकः । त्रिचितीकः ॥

विश्वस्य वसुराटोः ॥ १२८ ॥

विश्वशब्दस्य वसु, राट् – इत्येतयोरुत्तरपदयोर्दीर्घं आदेशो भवति । विश्वावसुः । विश्वाराट् ।

राडिति विकारनिर्देशः – यत्रास्यैतद्रूपं तत्रैव यथा स्यात् । इह न भवति–विश्वराजौ । विश्वराजः ॥

पदमञ्जरी

अष्टागवं शकटमिति च व्युत्पादितम्, इदं तु व्युत्पत्तिविकल्पप्रदर्शनार्थमात्वं वा, दीर्घो वेति ॥

*विश्वस्य वसुराटोः* ॥ *विश्वाराडिति* । विश्वस्मिन्राजत इति 'सत्सूद्विष' इत्या-

न्यासः

छन्दसि च ॥ अष्टाकपालमिति । अष्टसु कपालेषु संस्कृतमिति 'संस्कृतम्' इत्यण्, तस्य 'द्विगोर्लुगनपत्ये' इति लुक् । अष्टाहिरण्येति । बहुव्रीहिः । पादस्य लोपे कृत इति । 'पादस्य लोपोऽहस्त्यादिभ्यः' इत्यनेन ।

गवि च युक्त इत्यादि । वक्तव्यमिति । अस्य व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—चकारोऽत्र क्रियते, स चानुक्तसमुच्चयार्थः । तेन गवि च युक्ते भाषायामप्यष्टनो दीर्घो भवति ॥

चितेः कपि ॥ एकचितीक इति । एका चितिरस्येति बहुव्रीहिः, ततः 'स्त्रियाः पुंवत्' इत्यादिना पुंवद्भावः, 'शेषाद्विभाषा' इति कप् ॥

विश्वस्य वसुराटोः ॥ विश्वावसुरिति । विश्वं वसु यस्येति बहुव्रीहिः । विश्वाराडिति । विश्वस्मिन् राजत इति 'सत्सूद्विष' इत्यादिना क्विप्, व्रश्चादिसूत्रेण षत्वम्, तस्य 'झलां जशोऽन्ते' इति जश्त्वम्—डकारः, डकारस्यापि चर्त्वम्—टकारः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



### नरे संज्ञायाम् ॥ १२९ ॥

नरशब्द उत्तरपदे संज्ञायां विषये विश्वस्य दीर्घो भवति। विश्वानरो नाम यस्य वैश्वानरिः पुत्रः।

संज्ञायामिति किम्? विश्वे नरा यस्य स विश्वनरः॥

### मित्रे चर्षौ॥ १३० ॥

मित्रे चोत्तरपदे ऋषावभिधेये विश्वस्य दीर्घो भवति। विश्वामित्रो नाम ऋषिः।

ऋषाविति किम्? विश्वमित्रो माणवकः॥

### मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ ॥ १३१ ॥

मन्त्रविषये सोम, अश्व, इन्द्रिय, विश्वदेव्य—इत्येतेषां मतुप्प्रत्यये परतो दीर्घो भवति। सोमावती। अश्वावती। इन्द्रियावती। विश्वदेव्यावती॥

### ओषधेश्च विभक्तावप्रथमायाम् ॥ १३२ ॥

'मन्त्रे' इति वर्तते। ओषधिशब्दस्य विभक्तावप्रथमायां परतो दीर्घो भवति। ओषधिभिरपीपतत्। नमः पृथिव्यै नम ओषधीभ्यः।

विभक्ताविति किम्? ओषधिपते। अप्रथमायामिति किम्? स्थिरेयमस्त्वोषधिः॥

### ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम् ॥ १३३ ॥

ऋचि विषये तु, नु, घ, मक्षु, तङ्, कुत्र, उरुष्य — इत्येषां दीर्घो

पदमञ्जरी

दिना क्विप्। *यत्रास्यैतादिति*। पदसंज्ञाविषय इत्यर्थः॥

*ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम्*॥ 'मन्त्रे' इति प्रकृते ऋग्ग्रहणं मन्त्र-

न्यासः

यत्रास्यैतद्रूपमिति। क्व पुनरस्यैतद्रूपम्? यत्र पदसंज्ञा; पदाधिकारे षकारादीनां विधानात्। विश्वराजौ, विश्वराज इति। अत्र पदसंज्ञा नास्ति; 'असर्वनामस्थाने' इति प्रतिषेधात्॥

नरे संज्ञायाम्॥ मित्रे चर्षौ॥ मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ॥ ओषधेश्च विभक्तावप्रथमायाम्॥ ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम्॥ तङिति

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



भवति। आ तू न इन्द्र वृत्रहन्। नु–नू करणे। घ–उत वा घा स्यालात्। मक्षु–मक्षू गोमन्तमीमहे। तङ्–भरता जातवेदसम्। तङिति थादेशस्य ङित्त्वपक्षे ग्रहणम्, तेनेह न भवति–शृणोत ग्रावाणः। कु–कूमनः। त्र–अत्रा गौः। उरुष्य–उरुष्या णो॥

पदमञ्जरी

विशेषप्रतिपत्त्यर्थम्। 'घ' इति स्वरूपग्रहणम्, न तरप्तमपोः; छन्दसि घशब्दस्यैव दीर्घदर्शनात्। *उत वा घा स्यालादिति*। भार्याया भ्राता स्यालः, ततः पञ्चमी। *तङिति थादेशस्य ङित्त्वपक्षे ग्रहणमिति*। लोण्मध्यमपुरुषबहुवचनस्य थस्य 'लोटो लङ्वत्' इत्यतिदेशेन यस्तादेशस्तस्य यदा ङित्त्वं तदा ग्रहणमित्यर्थः। *शृणोत ग्रावाण इति*। 'तप्तनप्तनथनाश्च' इति तबादेशः। अत्र पित्त्वान्ङित्त्वं नास्ति। *तङिति प्रत्याहारग्रहणमिति* तु वृत्तौ न क्वापि पाठो दृश्यते। यच्च तत्रोक्तम्–'लोण्मध्यमपुरुषबहुवचनादारभ्य आ महिङो ङकारात्प्रत्याहारः' इति, तदप्ययुक्तम्; असन्निविष्टेन प्रत्याहारायोगात्। *उरुष्या ण इति*। रुष्यतिः कण्ड्वादियगन्तो रक्षतिकर्मा लोट्, सेर्हिः, 'अतो हेः' इति लुक्, न इत्यस्य 'नश्च धातुस्थोरुषुभ्यः' इति णत्वम्॥

न्यासः

प्रत्याहारग्रहणम्—लोण्मध्यमपुरुषबहुवचनादारभ्य महिङो ङकारेण। आ तू न इन्द्र वृत्रहन्निति। आ तु न इति प्राप्ते। एवमुत्तरत्रापि ह्रस्वप्रयोगे प्राप्ते दीर्घो वेदितव्यः। स्यालादिति। 'लस श्लेषणक्रीडनयोः' इत्यस्याशिषि लिङि रूपमेतत्। अथ घग्रहणेनात्र तरप्तमपोः प्रत्यययोर्ग्रहणं कस्मान्न भवति? तदन्तस्य कृतदीर्घस्य ऋग्विषये प्रयोगासम्भवात्। भरता इति। 'भृ भरणे' इत्यस्माद्धातोर्लोण्मध्यमपुरुषस्य बहुवचने रूपमेतत्। शृणोत ग्रावाण इति। अत्र तु न भवति; 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति वचनात्। अत्रा इति। त्रलन्तमेतत्। 'सप्तम्यास्त्रल्' इति त्रलि कृते 'एतदोऽश्' इत्यनेनैतदोऽशादेशः। उरुष्या ण इति। आत्मन उरुमिच्छति 'सुप आत्मनः क्यच्' इति क्यच्, ततः 'सर्वप्रातिपदिकेभ्यो लालसायामसुग् वक्तव्यः' इत्यौपसंख्यानिकोऽसुक्, 'सुषामादिषु च' इति षत्वम्, लोण्मध्यमपुरुषस्यैकवचनम्, 'अतो हेः' इति हेर्लुक्। न इति। 'बहुवचनस्य वस्नसौ' इत्यस्मदादेशोऽयम्। णत्वं तु वर्णव्यत्ययेन। 'उपसर्गाद्बहुलम्' इति बहुलवचनाद्वा। अन्ये तु—'उरुष्य इति निपातः' इत्याचक्षते॥

१. 'लस्यात्' इति मुद्रितः पाठोऽवैदिकः।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


## इकः सुञि ॥ १३४ ॥

सुञ् निपातो गृह्यते । इगन्तस्य सुञि परतो मन्त्रविषये दीर्घो भवति । अभी षु णः सखीनाम् । उर्ध्वं ऊ षु ण ऊतये । 'सुञः' इति षत्वम् , 'नश्च धातुस्थोरुषुभ्यः' इति णत्वम् ॥

## द्व्यचोऽतस्तिङः ॥ १३५ ॥

'ऋचि' इति वर्तते । द्व्यचस्तिङन्तस्यात ऋग्विषये दीर्घो भवति । विद्मा हि त्वा गोपतिं शूर गोनाम् । विद्मा शरस्य पितरम् ।

द्व्यच इति किम् ? अश्वा भरत वाजिनः । अत इति किम् ? आ देवान्वक्षि यक्षि च ॥

## निपातस्य च ॥ १३६ ॥

'ऋचि' इत्येव । निपातस्य च ऋग्विषये दीर्घ आदेशो भवति । एवा ते । ते त्वामच्छा[1] ॥

### पदमञ्जरी

*इकः सुञि* ॥ सुञिति निपातस्य ग्रहणम् , तस्य च ञकारोऽत्रैव विशेषणार्थः । ऊ षु ण इति । उकारस्य दीर्घः ॥

*द्व्यचोऽतस्तिङः* ॥ *भवतेति* । लोण्मध्यमपुरुषबहुवचनम् । *वक्षि, यक्षीति* । वहेर्यजेश्च लेट् , सिप् । 'सिब्बहुलं लेटि' इत्ययं तु विधिर्न भवति; बहुलवचनात् । 'बहुलं छन्दसि' इति शपो लुक् , वहेर्ढत्वम् , यजेः षत्वम् , 'षढोः कः सि' द्वयोरपि । 'देवानावह यज च' इत्यग्निं प्रति *भरद्वाजस्य* वचनम् ॥

*निपातस्य च* ॥ एवशब्दश्चादिषु पाठान्निपातः, 'अच्छ गत्यर्थवदेषु' इत्यच्छशब्दः ॥

### न्यासः

इकः सुञि ॥ सुञिति निपातस्य ग्रहणम् । अभी षु ण इति । अभिशब्दस्य दीर्घत्वम् । 'सुञः' इति षत्वम् । 'नः' इत्ययमस्मदादेशः, तस्य 'नश्च धातुस्थोरुषुभ्यः' इति णत्वम् । ऊर्ध्वं ऊ षु ण इति । उकारस्य दीर्घः ॥

द्व्यचोऽतस्तिङः ॥ अश्वा भरत वाजिन इति । 'भृ' इत्येतस्य लोण्मध्यमपुरुषस्य बहुवचने रूपमेतत् । वक्षि, यक्षीति । वचेर्यजेश्च परस्य लेटः सिप् , 'कर्तरि शप्' । वचेरदादित्वाच्छपो लुक् । यजेरपि 'बहुलं छन्दसि' इति ॥

---

1. 'अच्छा ते' इति मुद्रितः पाठः ।

CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


## अन्येषामपि दृश्यते ॥ १३७ ॥

अन्येषामपि दीर्घो दृश्यते स शिष्टप्रयोगादनुगन्तव्यः । यस्य दीर्घत्वं न विहितम्, दृश्यते च प्रयोगे, तदनेन कर्तव्यम् । केशाकेशि । कचाकचि । जलाषाट् । नारकः पूरुषः ॥

* शुनो दन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु * । श्वादन्तः । श्वादंष्ट्रः । श्वाकर्णः । श्वाकुन्दः । श्वावराहः । श्वापुच्छः । श्वापदः ॥

## चौ ॥ १३८ ॥

चौ परतः पूर्वपदस्य दीर्घो भवति । 'चौ' इत्यञ्चतिर्लुप्तनकाराकारो गृह्यते । दधीचः पश्य । दधीचा । दधीचे । मधूचः पश्य ।

### पदमञ्जरी

*अन्येषामपि दृश्यते* ॥ 'मन्त्रे' इति निवृत्तम् । *केशाकेशीति* । 'तत्र तेनेदम्' इत्यादिना बहुव्रीहिः, 'इच् कर्मव्यतिहारे' । *जलाषाडिति* । 'छन्दसि सहः' इति ण्विः, 'सहेः साडः सः' इति षत्वम् । *पूरुष इति* । पुरुषशब्दस्याद्यचो दीर्घः ।

*शुनो दन्तेत्यादि* । तत्र *श्वादंष्ट्र इति* बहुव्रीहिः । अन्यत्र तत्पुरुषः, बहुव्रीहिर्वा । दंष्ट्रेति ह्रस्वान्तस्य ग्रहणाद्दीर्घान्ते नायं दीर्घो भवतीत्याहुः । अन्ये तु दीर्घान्तमेव पठन्तोऽविशेषेणेच्छन्ति ॥

चौ ॥ *अञ्चतिर्गृह्यत इति* । चवर्गस्य तु ग्रहणं न भवति; व्याख्यानात् । *दधीच इति* । ननु चान्तरङ्गत्वाद्यणादेशेनैव प्राग्भवितव्यम्, अकारलोपो भस्य

### न्यासः

निपातस्य च ॥ एवा ते, अच्छा त इति । एवाच्छशब्दौ निपातौ; चादिपाठात् ॥

अन्येषामपि दृश्यते ॥ ऋचीति निवृत्तम् । केशाकेशीति । केशेषु केशेषु गृहीत्वेदं युद्धं वृत्तमिति 'तत्र तेन' इत्यादिना बहुव्रीहिः, 'इच् कर्मव्यतीहारे' इतीच् समासान्तः । जलाषाडिति । बलं सहत इति 'छन्दसि सहः' इति ण्विः, 'सहेः साडः षः' इति षत्वम् ।

श्वादन्त इति । शुनो दन्त इति षष्ठीसमासः । श्वादंष्ट्र इति । शुन इव दंष्ट्रा अस्येति बहुव्रीहिः । श्वाकर्ण इत्यादयः षष्ठीतत्पुरुषाः, बहुव्रीहयो वा ॥

चौ ॥ दधीच इति । दध्यञ्चतीति ऋत्विगादिना क्विन्, ततः शस्, 'अचः' इत्यकारलोपः । ननु चान्तरङ्गत्वाद् यणादेशेनात्राकारलोपाद् दीर्घाच्च प्राग् भवितव्यम्, स हि वर्णाश्रयत्वादन्तरङ्गः, इतरौ तु बहिरङ्गौ, अकारलोपो हि तस्य विधीयते, भसंज्ञा च

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


मधूचा । मधूचे । अन्तरङ्गोऽपि हि यणादेशो दीर्घविधानसामर्थ्यान्न प्रवर्तते ॥

## सम्प्रसारणस्य ॥ १३९ ॥

'उत्तरपदे' इति वर्तते । सम्प्रसारणान्तस्य पूर्वपदस्योत्तरपदे दीर्घो भवति । कारीषगन्धीपुत्रः । कारीषगन्धीपतिः । कौमुदगन्धीपुत्रः । कौमुदगन्धीपतिः । करीषस्येव गन्धोऽस्य, कुमुदस्येव गन्धोऽस्य – 'अल्पाख्यायाम्', 'उपमानाच्च' इति इकारः समासान्तः । करीष-

### पदमञ्जरी

विधीयते, भसंज्ञा च यकारादावजादौ च सम्भवतीति बहिरङ्गः, दीर्घत्वं तु लोपमपेक्षत इति बहिरङ्गम् ? अत आह–*अन्तरङ्गोऽपीति* । एवं मन्यते–इह दीर्घश्रुत्या 'अचश्च' इत्युपतिष्ठते, तत्राचा पूर्वपदं विशेष्यते–अजन्तस्य पूर्वपदस्येति । यदि च यणादेशः स्यान्न क्वाप्यजन्तपूर्वपदं स्यात् । प्राच इत्यादावपि पूर्वमेव सवर्णदीर्घत्वप्रसङ्गः, तस्मादन्तरङ्गोऽपि विधिर्बाध्यत इति । अत्र च लिङ्गं प्रतीच इति निर्देशः ॥

*सम्प्रसारणस्य* ॥ *अकृत एवेत्यादि* । कारीषगन्धिपुत्र इति स्थिते ह्रस्वत्वं च

### न्यासः

यकारादावजादौ च स्वादौ विधीयते, दीर्घत्वमप्युत्तरपदे परतः पूर्वपदस्य विधीयमानं द्विपदाश्रयत्वाद् बहिरङ्गम्, ततश्चान्तरङ्गे यणादेशे कृते पूर्वं चौ दीर्घत्वं न सिध्यति ? इत्यत आह– अन्तरङ्गोऽपीत्यादि । यदि यणादेश एव प्रवर्त्तते, तदा दीर्घवचनमनर्थकं स्यात् । तस्माद् दीर्घवचनसामर्थ्याद् यणादेशो न प्रवर्त्तते ।

ननु च कृते यणादेशेऽनन्तरो दीर्घभावो नास्तीति कृत्वा व्यवहितस्यापि दीर्घत्वं भविष्यति, यथा—'शमामष्टानां दीर्घः श्यनि' इति शमादीनां श्यनि दीर्घत्वम् , तस्माद् भवितव्यमेवात्र यणादेशेन, तथा च व्यवहितस्य दीर्घत्वे कृतेऽनिष्टं रूपं स्यात् ? नैतदस्ति; इदं च तावद् विचार्यताम् । किं तत् ? 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इत्येषा परिभाषा बाध्येत, आहोस्विदन्तरङ्गपरिभाषेति ? तत्रान्तरङ्गपरिभाषाया लिङ्गादनुमानाद्वा सिद्धा, तस्या हि 'वाह ऊठ्' इत्यूड्वचनं लिङ्गम् । यथा चैतल्लिङ्गं तथा तत्रैव वृत्तिकारो दर्शयिष्यति । इतरा तु परिभाषा साक्षात् श्रुता । तत्र युक्तं यदनुमितोऽर्थो बाध्यते, न तु साक्षाद् दृष्ट इत्यन्तरङ्गपरिभाषा बाध्यते, नेतरेति । तथा चानन्तरस्यैव दीर्घत्वेन भवितव्यमिति यणादेशो न प्रवर्त्तते ॥

सम्प्रसारणस्य ॥ कारीषगन्धीपुत्र इति । कारीषगन्धेरपत्यमिति 'तस्यापत्यम्'

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


गन्धेरपत्यं कारीषगन्ध्या, कुमुदगन्धेरपत्यं कौमुदगन्ध्या, तस्याः पुत्रः कौमुदगन्धीपुत्रः, कौमुदगन्धीपतिः ।

'इको ह्रस्वोऽङ्यो गालवस्य' इत्येतन्न भवति; व्यवस्थित-विभाषा हि सा। अकृत एव दीर्घत्वे ह्रस्वाभावपक्षे कृतार्थेनापि दीर्घेण पक्षान्तरे परत्वाद् ह्रस्वो बाध्यते ।

पुनःप्रसङ्गविज्ञानं च न भवति; 'सकृद्गतौ विप्रतिषेधे' यद्बाधितं तद्बाधितम्' एवेति ॥

इति श्रीवामनविरचितायां काशिकावृत्तौ
षष्ठस्याध्यायस्य तृतीयः पादः ॥

पदमञ्जरी

प्राप्नोति, अनेन दीर्घत्वं च; तस्यावकाशः—ग्रामणि कुलम्, ह्रस्वाभावपक्षे दीर्घस्यावकाशः; पक्षान्तरे उभयप्रसङ्गः। यद्यपि ह्रस्वाभावपक्षे सावकाशं दीर्घत्वम्, तथापि तेन परत्वाद् ह्रस्वो बाध्यते।

अथेदानीं दीर्घे कृते पुनःप्रसङ्गः कस्मान्न भवति? तत्राह—पुनः प्रसङ्ग-विज्ञानं चेति ॥

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां
षष्ठस्याध्यायस्य तृतीयः पादः ॥

न्यासः

ष्यण्, 'अणिञोरनार्षयोः' इत्यादिना ष्यङादेशः, ततः 'यङश्चाप्' इति चाप् प्रत्ययः, ततः कारीषगन्ध्यायाः पुत्र इति षष्ठीसमासः, ततः 'ष्यङः सम्प्रसारणम्' इत्यादिना सम्प्रसारणम्, अनेन दीर्घत्वम्।

व्यवस्थितविभाषा हि सेति। इकोह्रस्वादौ सूत्रे 'एकहलादौ' इत्यतः सूत्रादन्यतरस्याग्रहणमनुवर्त्तते, सा च व्यवस्थितविभाषा विज्ञायते। तेन कारीषगन्धीपुत्र इत्यत्र न भवति। अकृत एवेत्यादि। अथ वा—अकृत एव सम्प्रसारणदीर्घत्वे कारीषगन्धिपुत्र इति स्थिते ह्रस्वत्वं प्राप्नोति, सम्प्रसारणदीर्घत्वं च; उभयञ्चैतत् सावकाशम्, इकोह्रस्वत्वस्यावकाशः—ग्रामणिपुत्र इति, सम्प्रसारणस्यावकाशः—ह्रस्वाभावः; पक्षे तूभयं प्राप्नोति। तत्र यद्यपि ह्रस्वाभावपक्षे कृतार्थं दीर्घत्वम्, तथापि तेन परत्वाद् ह्रस्वो बाध्यते। अथ कृते दीर्घत्वे कस्मात् पुनःप्रसङ्गविज्ञानान्न भवति? अत आह—पुनः-प्रसङ्गविज्ञानञ्चेत्यादि। गतार्थम् ॥

बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां
काशिकाविवरणपञ्जिकायां षष्ठाध्यायस्य
तृतीयः पादः समाप्तः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# अथ षष्ठाध्याये चतुर्थः पादः

## अङ्गस्य ॥ १ ॥

अधिकारोऽयमा सप्तमाध्यायपरिसमाप्तेः । यदित ऊर्ध्वमनुक्रमिष्यामोऽङ्गस्येत्येवं तद्वेदितव्यम् । वक्ष्यति—"'ह्लः' । हूतः । जीनः । संवीतः" ।

### पदमञ्जरी

*अङ्गस्य ॥ अधिकारोऽयमिति* । स्वरितत्वात् । इह केचिन्मन्यन्ते–प्रागभ्यासविकारेभ्योऽयमङ्गाधिकारः । एवं हि 'गुणो यङ्लुकोः' इत्यत्र लुग्ग्रहणं न कर्त्तव्यं भवति, कथम् ? प्रत्ययलक्षणेनैव सिद्धम् । यदि त्वभ्यासविकारेऽप्ययमधिकारः स्यात्, ततोऽङ्गाधिकारविहितमिति 'न लुमताङ्गस्य' इति प्रतिषेधः स्यादिति । *वृत्तिकारस्तु* मन्यते—यदि प्रागभ्यासविकारेभ्योऽङ्गाधिकारः, वव्रश्चेति वृश्चतेर्लिटि 'लिट्यभ्यासस्योभयेषाम्' इति रेफस्य सम्प्रसारणे उरदत्वे

### न्यासः

अङ्गस्य ॥ अधिकारोऽयमिति । स्वरितलिङ्गासङ्गात् । इह केचित् प्रागभ्यासविकारेभ्योऽयमङ्गाधिकारो युक्त इति मन्यन्ते । एवं हि 'गुणो यङ्लुकोः' इत्यस्मिन् सूत्रे लुग्ग्रहणं न कर्तव्यं भवति; यङ्लुक्यपि प्रत्ययलक्षणेन गुणस्य सिद्धत्वात् । यदि पुनरा सप्तमाध्यायपरिसमाप्तेरयमङ्गाधिकारः स्यात्, ततोऽवश्यं लुग्ग्रहणं कर्त्तव्यम्, न ह्यन्यथा यङ्लुकि गुणः सिध्यति; 'न लुमताङ्गस्य' इति प्रतिषेधादित्येवं तेषामभिप्रायः । वृत्तिकारस्तु–यदि प्रागभ्यासविकारेभ्योऽयमङ्गाधिकारः स्यात्, ततो वव्रश्चेत्यत्र वृश्चतेर्लिटि द्विर्वचने कृते हलादिशेषात् प्राक् सम्प्रसारणम् पूर्वविप्रतिषेधेन 'उभयेषाम्' इति वचनसामर्थ्याद्वा परमपि हलादिशेषं बाधित्वा सम्प्रसारणं स्यात्, ततश्च 'सम्प्रसारणाच्च' इति पूर्वरूपत्वे 'उरत्' इत्यत्त्वे रपरत्वे हलादिशेषे च कृते वकारस्यापि सम्प्रसारणं प्रसज्येत । आ सप्तमाध्यायपरिसमाप्तेः पुनरङ्गाधिकारे सति 'उरत्' इत्यस्य परनिमित्तत्वात् प्रत्ययो निमित्तत्वेनाश्रीयते । तेन परनिमित्तत्वादुरदत्त्वस्य सम्प्रसारणे कर्त्तव्ये 'अचः परस्मिन् पूर्वविधौ' इति स्थानिवद्भावः, ततश्च 'न सम्प्रसारणे सम्प्रसारणम्' इति वकारस्य सम्प्रसारणं प्रतिषिध्यते । प्रागभ्यासविकारेभ्यः पुनरङ्गाधिकारे सत्यपरनिमित्तत्वादुरदत्त्वस्य स्थानिवद्भावो न स्यात्, ततश्च 'न सम्प्रसारणे सम्प्रसारणम्' इत्यस्य प्रतिषेधस्याभावाद् वकारस्य सम्प्रसारणं स्यादेव । ततश्चोव्रश्चेत्यनिष्टं रूपं स्यात् । तस्मादा सप्तमाध्यायपरिसमाप्तेरङ्गाधिकारो युक्तः, न तु प्रागभ्यासविकारेभ्य इति मन्यमान आह—आ सप्तमाध्यायपरिसमाप्तेरिति ।


CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अङ्गस्येति किम् ? निरुतम् । दुरुतम् । नामि दीर्घः—अग्नीनाम् । वायूनाम् । अङ्गस्येति किम् ? क्रिमिणां पश्य । पामनां पश्य । 'अतो भिस ऐस्'—वृक्षैः । प्लक्षैः ।

पदमञ्जरी

हलादिशेषे च कृते वकारस्यापि सम्प्रसारणं प्राप्नोति, तस्य 'न सम्प्रसारणे सम्प्रसारणम्' इति प्रतिषेध इष्यते, स न प्राप्नोति; उरदत्वस्यासम्प्रसारणत्वात् । न च तस्य स्थानिवत्त्वम्, अपरनिमित्तत्वात् । आ सप्तमाध्यायपरिसमाप्तेः पुनरङ्गाधिकारे सत्युरदत्वं परनिमित्तकं भवति; अङ्गेन स्वनिमित्तस्य प्रत्ययस्याक्षेपात् । यदप्युक्तम्–लुग्ग्रहणं न कर्त्तव्यं भवतीति, तदपि न; न हि तत्राङ्गाधिकारविहितस्यैव प्रतिषेधः, कस्य तर्हि ? लुमता लुप्ते प्रत्यये वस्तुतो यदङ्गं तस्य प्राप्तं यत्कार्यमाङ्गमनाङ्गं वा तस्य सर्वस्य प्रतिषेधः । तस्मादासप्तमाध्यायपरिसमाप्तेरयमङ्गाधिकारो युक्त इति । हूत इत्यादौ यजादित्वात्सम्प्रसारणम् । *जीन इति* । 'ग्रहिज्या' इति सूत्रेण सम्प्रसारणम्, 'ल्वादिभ्यः' इति निष्ठानत्वम् ।

*निरुतम्, दुरुतमिति* । 'वेञ् तन्तुसन्ताने', यजादिः, अत्राङ्गेऽनन्तर्भूतयोर्निर्दुरोरवयवौ यौ हलौ तदाश्रयं दीर्घत्वं न भवति । *क्रिमिणामिति* । क्रिमिपामन्शब्दाभ्यां मत्वर्थे पामादिभ्यो नः, पामनो नलोपः, स्त्रियां टाप्, द्वितीयैकवचनम् । अत्र नामिति समुदायस्याप्रत्ययत्वान्न तदपेक्षं पूर्वस्याङ्गत्वमिति नप्रत्ययापेक्षयाऽङ्गत्वेऽपि दीर्घत्वं न भवति, पामनामित्यत्र नलोपे कृतेऽजन्तत्वाद् दीर्घप्रसङ्गः । न च नलोपस्यासिद्धत्वम्, असुब्विधित्वात् । न ह्यस्यां दशायां दीर्घत्वं सुब्विधिर्भवति । अस्तु वाऽसिद्धत्वम्, 'नोपधायाः' इति दीर्घत्वप्रसङ्गः ।

न्यासः

सप्तमाध्यायपरिसमाप्तेस्तु परेण 'पदस्य' इत्यधिकृत्य कार्यं विधीयते । तेन तत्राङ्गाधिकारो नानुवर्त्तते । हूत इति । 'ह्वेञ् स्पर्द्धायाम्', निष्ठा, यजादित्वात् सम्प्रसारणम् । जीन इति । 'ज्या वयोहानौ' ग्रह्यादिसूत्रेण सम्प्रसारणम्, 'ल्वादिभ्यः' इति निष्ठानत्वम् । संवीत इति । 'व्येञ् संवरणे', वच्यादिना सम्प्रसारणम् ।

निरुतम्, दुरुतमिति । 'वेञ् तन्तुसन्ताने', पूर्ववत् सम्प्रसारणम् । असत्यङ्गाधिकारे निर्दुरोरवयवो यो हल् ततोऽप्युत्तरस्य सम्प्रसारणस्य दीर्घः स्यात् । अङ्गाधिकारे पुनरङ्गावयवो यो हल् तदुत्तरं यत् सम्प्रसारणं तदन्तस्याङ्गस्य दीर्घत्वं विज्ञायत इति न भवति दीर्घत्वप्रसङ्गः । न ह्यत्राङ्गावयवाद्धल उत्तरं सम्प्रसारणम् । अग्नीनामिति । 'ह्रस्वनद्यापो नुट्' । क्रिमिणां पश्य, पामनां पश्येति । क्रिमयोऽस्यां सन्तीति, पामानोऽ-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अङ्गस्येति किम् ? ब्राह्मणभिस्सा । ओदनभिस्सिटा । अङ्गाधिकारः कृतोऽन्यार्थः 'नामि'-दीर्घत्वाद्यपि व्यवस्थापयतीति तदर्थमर्थवद्ग्रहणपरिभाषा नाश्रयितव्या भवति ।

**पदमञ्जरी**

भिस्सा=ओदनः, भिस्सदा=दधि । ननु क्रिमिणामित्यत्र प्रत्ययस्यार्थवत्त्वेऽपि समुदायोऽनर्थकः, परस्परासम्बन्धात्, एवं भिस्साभिस्सदयोर्भिस्शब्दः, ततश्च 'अर्थवद्ग्रहणे नानर्थकस्य' इत्येव न भविष्यति ? तत्राह–*अङ्गाधिकार इत्यादि* । नन्सम्प्रसारणदीर्घत्वैत्वतातङियङुवङ्नुट्ह्रस्वत्वतत्वे चाङ्गस्येत्यधिकारे प्रयोजनम् । सनि दीर्घः प्रयोजनम्–दधि सनोतीति दधिसेत्यत्र मा भूत् । सम्प्रसारणदीर्घत्वम्–निरुतम्, दुरुतमित्यत्र मा भूत् । एत्वम्–'एर्लिङि', 'वान्यस्य संयोगादेः', निर्यायात्, निर्वायादित्यत्र मा भूत् । तातङ्—निपातस्य तोर्मा भूत्, जीव तु त्वम् । इयङुवङ्–श्यर्थम्, वर्थम् इत्यत्र मा भूत् । नुट्—'ह्रस्वनद्यापो नुट्', कुमारी आमित्याहेत्यत्र मा भूत् । ह्रस्वत्वम्—'केऽणः', कुमारी कस्मै स्पृहयति, कुमार्याः कं सुखं कुमारीकमित्यत्र मा भूत् । तत्वम्–'अपो भिः' अब्भार इत्यत्र मा भूदित्येवमर्थं कर्तव्योऽङ्गाधिकारः । सोऽन्यार्थः कृतो नामीत्यत्रापि दीर्घत्वं व्यवस्थापयति=अभिमते विषये नियमयति । *अर्थवद्ग्रहणपरिभाषयेति* । उपलक्षणमेतत् । 'आने मुक्', प्राण इत्यत्र मा भूत् । 'अकृत्सार्वधातुकयोर्दीर्घः' दधि यातमित्यत्र मा भूत्—इत्येवमर्थं लक्षणप्रतिपदोक्तपरिभाषा, नञिवयुक्तन्यायश्च नाश्रयितव्यो भवति ।

'षष्ठी स्थानेयोगा' इति वचनादङ्गस्येति स्थानषष्ठीयम्, ततश्च 'अतो भिस ऐस्' इत्यत्रात इति पञ्चम्यन्तमङ्गस्येत्यस्य षष्ठ्यन्तस्य सामानाधिकरण्येन

**न्यासः**

स्यां सन्तीति 'लोमादि' इत्यादिना नप्रत्ययः, ततष्टाप्, द्वितीयैकवचनम् । 'अमि पूर्वः' इति पूर्वरूपत्वम् । यद्यङ्गस्येति नाधिक्रियते, ततोऽत्रापि क्रिमिशब्दस्य पामशब्दस्य च नामि परतो दीर्घत्वं स्यात् । अङ्गाधिकारे तु न दोषः, न ह्यत्र क्रिमिपामशब्दयोर्नामि परतोऽङ्गत्वमस्ति, अपि तु नप्रत्यये । ब्राह्मणभिस्सा, ओदनभिस्सिटेति । भिस्साभिस्सिटाशब्दौ टाबन्तौ । तत्रैक ओदनस्य वाचकः, अपरस्तु तद्दग्धिकायाः । ताभ्यां यथाक्रमं ब्राह्मणौदनशब्दयोः षष्ठीसमासः । तत्रासत्यङ्गाधिकारे अनङ्गाभ्यामपि ब्राह्मणौदनशब्दाभ्यां परस्य भिस ऐस्भावः प्रसज्येत ।

ननु च 'अर्थवद्ग्रहणे नानर्थकस्य' इति वचनाद् यथा क्रिमिणां पश्य, पामनां पश्येत्यत्र दीर्घत्वं न भविष्यति, तथा ब्राह्मणभिस्सौदनभिस्सिटेत्यत्राप्यैस्भावः, न ह्यत्र नामोऽर्थवत्त्वम्, नापि भिसः, तत् किं तन्निवृत्त्यर्थेनाङ्गाधिकारेण ? इत्याह–अङ्गाधिकार इत्यादि । नामिदीर्घत्वाद्यपीत्यादि । आदिशब्देन 'अतो भिस ऐस्' इत्यैस् गृह्यते ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



**अङ्गस्येति सम्बन्धसामान्ये एषा षष्ठी यथायोगं विशेषेष्ववतिष्ठते ।**

पदमञ्जरी

विशेषणं नोपपद्यते इत्यकारमात्रस्य ग्रहणात् ब्राह्मणभिस्सेत्यादावपि प्रसङ्गः । अवयवषष्ठ्यादीनां चाप्रसिद्धिः, ततश्च 'ऊदुपधायां गोहः' 'अङ्गस्य' इति स्थानषष्ठ्या अन्त्येऽल्युपसंहाराद् गोहश्चान्त्यस्य स्यात्, 'उपधायाश्च' इति वचनादुपधामात्रस्य च । एवं 'शास इदङ्हलोः' इत्यादावपीत्याशङ्कायामाह—*अङ्गस्येति सम्बन्धसामान्ये षष्ठीति* । अयमभिप्रायः—अधिकारोऽयम्, स च परार्थः, 'षष्ठीस्थाने योगा' इत्यपि परिभाषा परार्था, न च परार्थयोः परस्परं सम्बन्धोऽस्ति, यथोक्तम्—'गुणानां च परार्थत्वादसम्बन्धः समत्वात्स्यात्' इति, ततश्चाङ्गस्येति षष्ठी स्वभावप्रयुक्तं सम्बन्धसामान्यमेवार्थमभिधत्त इति । *यथायोगमिति* । यस्मिन्योगे यस्य सम्बन्धविशेषस्याभिव्यञ्जकमस्ति तस्मिन्योगे तत्रैव विशेषे पर्यवस्यतीत्यर्थः ।

तद्यथा 'हन्तेर्जः' इत्यादौ स्थानषष्ठी, 'ऊदुपधाया गोहः' इत्यवयवषष्ठी, 'युवोरनाकौ' इत्यादौ निमित्तनिमित्तिसम्बन्धे षष्ठी, लोकवत्, तद्यथा—लोके देवदत्तस्येत्यभेदेन प्रवृत्ता षष्ठी-पुत्रः पाणिः कम्बल इति प्रतिसम्बन्धवशात्तत्रतत्र विशेषे पर्यवस्यति ।

न्यासः

इतिकरणो हेतौ । यस्मादसत्यङ्गाधिकारे 'हलः' इति दीर्घत्वं यथा हूतः, जीन इत्यत्र भवति, तथा निरुतम्, दुरतमित्यत्रापि स्यात् । 'अज्झनगमां सनि' इति दीर्घत्वं यथा चिकीर्षतीत्यत्र भवति, तथा दधि सनोति, मधु सनोतीत्यत्रापि स्यात् । 'एर्लिङि' 'वान्यस्य संयोगादेः' इत्येत्त्वं यथा ग्लेयादित्यत्र भवति, तथा निर्यायाद्, निर्वायादित्यत्रापि भवेत् । तस्मादेवमाद्यर्थोऽवश्यकर्त्तव्योऽङ्गाधिकारः । सोऽन्यार्थः क्रियमाणो नामि दीर्घत्वाद्यपि व्यवस्थापयति=विषयान्तराद् व्यावर्त्त्याभिमते विषये नियमयति । तेन तदर्थमेषा परिभाषा नाश्रयितव्या भवति । अगत्या हि खलु परिभाषाऽऽश्रीयत इति भावः ।

ननु 'षष्ठी स्थानेयोगा' इति वचनादङ्गस्येति स्थानषष्ठीयम्, ततश्च 'अतो भिस ऐस्' इत्येतत् पञ्चम्यन्तेनाङ्गस्येत्येतत्षष्ठ्यन्तस्य समानाधिकरणत्वं न स्यात्; भिन्नविभक्तिकत्वात् । तथा च सत्यकारान्तात् परस्य भिस्सेत्यत्रास्यैस्भावः प्रसज्येत । ततश्चात्रापि स्यात्—ब्राह्मणभिस्सा, ओदनभिस्सिटेति । अवयवषष्ठ्यादयश्च न प्रसिद्धेयुः, ततश्च 'उदुपधाया गोहः' इत्यत्र 'गोहः' इत्यस्याः स्थानषष्ठ्या 'अलोऽन्त्यस्य' इत्यन्तेऽल्युपसंहारादुपधाग्रहणसामर्थ्याच्च गोहश्चान्त्यस्य स्यादूत्वम् । उपधामात्रस्य च 'शास इदङ्हलोः' इत्यत्रापि शास इति स्थानषष्ठीत्वेन विज्ञातायाः षष्ठ्या अन्तेऽल्युपसंहारादुपधाग्रहणानुवृत्तिसामर्थ्याच्च शासश्चान्त्यस्येत्त्वम्, उपधामात्रस्य चेत्येतद् देश्यमपाकर्तुमाह—अङ्गस्येति सम्बन्धसामान्य एषा षष्ठीत्यादि ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

अथ वा—प्रातिपदिकार्थमात्रमविवक्षितविभक्त्यर्थमधिक्रियते । तदुत्तरत्र यथायोगं विपरिणम्यते । ततोऽकारान्तादङ्गाद् भिस ऐसित्येवमाद्यपि सम्यक् सम्पन्नं भवति ॥

पदमञ्जरी

*अथ वेत्यादि* । पूर्वं विवक्षितोऽपि षष्ठ्यर्थः सामान्यरूप इत्युक्तम्, इदानीं तु प्रयोगसाधुत्वायैव षष्ठ्युच्चार्यते, न स्वर्थविवक्षयेत्युच्यते । अवश्यं च यया कयाचन विभक्त्या निर्देष्टव्यम् । षष्ठ्यनुरोधस्तु बाहुल्येन तदर्थस्योपयोक्ष्यमाणत्वात् । *यथायोगं विभक्तिषु विपरिणम्यत इति* । लोकवदेव । तद्यथा–उच्चानि देवदत्तस्य गृहाणि, आढ्यो वैधवेयो देवदत्तः, आमन्त्रयस्वैनं देवदत्तम्, किमनेन

न्यासः

सम्बन्धसामान्ये = अविशेषितसम्बन्धमात्रे । तत्रानेकसम्बन्धानुग्रहार्थमनाश्रितविशेषं सम्बन्धसामान्यमुपादाय प्रवृत्ता सत्युत्तरेषु भिन्नार्थेषु लक्षणवाक्येषु यथायोगं विशेषेष्ववतिष्ठते । सा क्वचित् स्थानेयोगा भवति, यथा–'हन्तेर्जः' इत्येवमादौ । क्वचिदवयवयोगा भवति, यथा–'उदुपधाया गोहः', 'शास इदङ्हलोः' इत्येवमादौ । क्वचिन्निमित्तनिमित्तिसम्बन्धविषया, यथा–'युवोरनाकौ' इत्यादौ । यथैव हि देवदत्तस्येत्येका षष्ठ्यभेदेन प्रवृत्ता ज्ञात्यवयवादिषु सम्बन्धभेदैर्भिद्यमाना जन्यजनकभावाद्यैः सम्बन्धविशेषे यथायोगमुपतिष्ठते—देवदत्तस्य पुत्रः पाणिः कम्बल इति, तथाङ्गस्येत्येषापि । तत्र यस्मिन् वाक्ये 'शास इदङ्हलोः' इत्येवमादौ सम्बन्धिविशेषो विद्यते–अवयवोऽन्यो वा, तत्र यथायोगमवयवादिसम्बन्धे षष्ठी वेदितव्या । यत्र न विद्यते तत्र स्थाने षष्ठी, यथा–'हन्तेर्जः' इत्येवमादौ । कथं पुनरेषा सम्बद्धसामान्ये षष्ठीति लभ्यते, यावता 'षष्ठी स्थानेयोगा' इत्युक्तम् ? एवं मन्यते—न हि सर्वा षष्ठी स्थानेयोगा भवति, अपि तु यस्याः कलादिकं लिङ्गं प्रतिज्ञायते; अन्यथा हि 'उदीचामातः स्थाने' इति स्थानग्रहणमनर्थकं स्यात् । तस्माद् विशिष्टैव या षष्ठी यस्याः कलादिकं लिङ्गं प्रतिज्ञायते सा स्थानेयोगेत्युक्तम् । न चास्याः कलादिकं लिङ्गं प्रतिज्ञायते । ततो नेयं स्थानेयोगा भवितुमर्हति ।

अथ वेत्यादि । अङ्गशब्दस्य प्रातिपदिकस्य योऽर्थस्तन्मात्रमधिक्रियते, न त्वङ्गस्येत्येतच्छब्दरूपम् । मात्रशब्दो विभक्त्यर्थव्यवच्छेदाय । अत एवाह—अविवक्षितविभक्त्यर्थमिति । न विवक्षितो विभक्त्यर्थो यस्मिन्नर्थमात्रे तत् तथोक्तम् । यतश्चैतदेवं तेन षष्ठी स्थानेयोगेति । नात्रेयं परिभाषोपतिष्ठते । अनेकसम्बन्धप्रसङ्गे हि सम्बन्धान्तरव्यवच्छेदार्थमेषा प्रणीता । ततो यत्र सम्बन्धो विवक्ष्यते तत्रैव नियमार्थमुपतिष्ठते, न चात्र कश्चित् सम्बन्धः षष्ठ्या विवक्षितः । केवलं निर्देशार्थ एवास्याः प्रयोगः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


## हलः ॥ २ ॥

अङ्गावयवाद्धलो यदुत्तरं सम्प्रसारणम् तदन्तस्याङ्गस्य दीर्घो भवति । हूतः । जीनः । संवीतः ।

### पदमञ्जरी

कृत्यं देवदत्तेनेति, तेन 'अतो भिस ऐस्' इत्यत्र पञ्चम्या विपरिणामे सति अकारान्तादङ्गादित्ययमर्थो भवति । आदिशब्देन 'युष्मदस्मद्भ्यां ङसोऽश्' इत्येवमादिर्गृह्यते । अपिशब्देनैतद्दर्शयति—न केवलं षष्ठ्यर्थ एव सस विशेषः सिध्यति, अपि तु पञ्चम्यर्थेऽपीति । पूर्वत्र तु पक्षे 'अतो भिस ऐस्' इत्यत्र निमित्तनिमित्तिसम्बन्धे षष्ठी—अङ्गस्य निमित्तं यो भिस् । कश्चाङ्गस्य निमित्तम् ? यस्मिन्नङ्गमित्येतद्भवति । कस्मिंश्चैतद्भवति ? प्रत्यये ॥

### न्यासः

अवश्यं हि यया कयाचिद् विभक्त्या निर्देशः कर्त्तव्य इति षष्ठ्या निर्देशः कृतः । ननु च स्वरितेनाधिकारः, स च शब्दधर्मः, नार्थधर्मः, तत् कथं स्वरितरहितोऽर्थः शक्यतेऽधिकर्तुम् ? नैष दोषः; अङ्गशब्दप्रतिपादितो योऽर्थः स शब्दात्मक एव । तथा हि यस्मात् प्रत्ययविधिस्तदादेः शब्दस्याङ्गसंज्ञा विहिता । तदुत्तरत्र यथायोगं विपरिणम्यत इत्यादि । अर्थवशात् क्वचित् षष्ठ्यन्तत्वेनैव, क्वचिद् विभक्त्यन्तरत्वेन यथा—आढ्यो वैधवेयो देवदत्तः, उच्चान्यस्य गृहाणि, आमन्त्रयस्वैनं देवदत्तमिति । तेन 'अतो भिस ऐस्' इत्यत्र पञ्चम्यन्ततया विभक्तिविपरिणामे हि सत्यकारान्तादङ्गादुत्तरस्य भिस ऐसादेशो भवतीत्येवमाद्यर्थरूपं सम्पन्नं भवति । आदिशब्देन युष्मदस्मद्भ्यामुत्तरस्य ङसोऽश् भवतीति परिगृह्यते । अपिशब्दादवयवषष्ठ्यादयोऽपि परिसम्पन्ना भवन्ति । पूर्वत्र तु परिहारे 'अतो भिस ऐस्' इत्यत्रात इत्येषा निमित्तनिमित्तिसम्बन्धे षष्ठी द्रष्टव्या । तत्रायं सूत्रार्थः—अकारान्तस्याङ्गस्य यो भिस् तस्यैस्भवतीति । तेन ब्राह्मणभिस्सेत्येवमादौ न भवति । अङ्गस्य हि को भिस् ? यस्तस्य निमित्तम् । कस्तस्य पुनर्निमित्तम् भिस् ? परभूते यस्मिन्नङ्गमित्येवं भवति । कस्मिंश्चैतद् भवति ? प्रत्यये । न च ब्राह्मणभिस्सेत्येवमादौ भिस्प्रत्यय इति कुतस्तस्यैस्प्रसङ्गः ! ॥

हलः ॥ अण्ग्रहणं सम्प्रसारणग्रहणं दीर्घग्रहणञ्चैतत् त्रयमनुवर्त्तते । कुतः पुनः प्रकृतमण्ग्रहणम् ? 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इत्यतः । ननु तत् 'इकः काशे' इतीग्ग्रहणेन व्यवच्छिन्नम्, तत् कथमिहानुवर्त्तते ? नैष दोषः; इग्ग्रहणेन ह्यणेव विशिष्यते—अणिणिति । ततो विरोधाभावान्नेग्ग्रहणेनाण्ग्रहणं व्यवच्छिद्यते । ननु च यदीग्ग्रहणेनाण्ग्रहणं विशिष्यते तदा—अवाचा, स्वराचेत्यत्र दीर्घत्वं न स्यात् । 'चौ' इत्यत्राण्ग्रहणमेवात्रानुवर्त्तिष्यते, इग्ग्रहणं तु निवृत्तमित्येषोऽप्यदोषः । अथ वा—यद्यपीग्ग्रहणेनाण्ग्रहणं व्यवच्छिन्नम्, तथापीह मण्डूकप्लुतिन्यायेनानुवर्त्तते ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

हल इति किम् ? उतः । उतवान् । अङ्गावयवादिति किम् ? निरुतम् । तदन्तस्येति किम् ? विद्धः । विचितः ।

अण इत्येव—तृतीयः, तृतीयेति वा निपातनादत्र दीर्घाभावः ।

पदमञ्जरी

हलः ॥ *हल इति किमिति* । केनेदानीमुदाहरणेषु दीर्घसिद्धिः ? एवं मन्यते—यथा 'शेषे' इति लक्षणं चाधिकारश्च; तथाङ्गस्येत्येतदपि, ततश्चाभिमते विषये दीर्घो भविष्यतीति । अतिप्रसङ्ग इति तूत्तरम् । *विद्धः, विचित इति* । 'व्यध ताडने', 'व्यच व्याजीकरणे', 'ग्रहिज्या' इत्यादिना सम्प्रसारणम् ।

*अण इत्येवेति* । 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इत्यतः । न च तस्य 'इकः काशे' इतीग्ग्रहणेन विच्छेदः । तत्र हि विरोधाभावादिग्ग्रहणेनाणेव विशेष्यते—इकोऽण इति । अथेदानीम् 'चौ' इत्यारभ्याण इत्येवानुवर्तिष्यते, नेक इति । *तृतीयेति वा निपातनादिति* । मा नामाण इत्येतदनुवृतत्, द्वितीयतृतीयचतुर्थेति योऽयं निर्देशस्तस्मादेव निपातनादनणो दीर्घत्वं न भविष्यतीत्यर्थः ।

न्यासः

ननु यथा 'शेषे' इत्येतल्लक्षणं विधिरधिकारश्च, तथा 'अङ्गस्य' इत्येतदपि, ततश्चानेनैव रूतः, जीन इत्यादेः सिद्धत्वादपार्थकम् 'हलः' इत्येतद्वचनम् । अतो न कर्त्तव्यमेवेति मन्यमान आह—हल इति किमिति । किमर्थं हल इत्येतत् सूत्रमारभ्यत इत्यर्थः । उतः, उतवानिति । असत्यस्मिन् सूत्रे सम्प्रसारणान्तस्याङ्गस्य दीर्घो भवतीत्युच्यमान इहापि दीर्घत्वं स्यात् । भवति ह्येतदपि व्यपदेशिवद्भावेन सम्प्रसारणान्तमङ्गम्, तस्माद्धल इति सूत्रं कर्त्तव्यम् । विद्धः, विचित इति । 'व्यध ताडने', 'व्यच व्याजीकरणे' निष्ठा, ग्रह्यादिसूत्रेण सम्प्रसारणम् । सम्प्रसारणान्तस्याङ्गस्य ग्रहणादिह न भवति दीर्घः । यद्यपि 'विध्यत्यधनुषा', 'ग्रहिज्यावयिव्यधिवष्टिविचति' इति निर्देशाद् हलन्तस्य यत् सम्प्रसारणं तस्य दीर्घो न भविष्यतीति विज्ञायते, तथापि ज्ञापकद्वारेणास्मिन्नर्थे प्रतिपाद्यमाने प्रतिपत्तिगौरवं स्यादित्येतत्परिहारार्थं सम्प्रसाराणान्तस्येत्युक्तम् । तृतीय इति । 'द्वेस्तीयः' इति, 'त्रेः संप्रसारणञ्च' इति तीयप्रत्ययः सम्प्रसारणञ्च । सर्वमत्रास्ति, न त्वण् । कस्मान् नास्त्यण् ? यस्माद् 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इत्यत इहाण्ग्रहणमनुवर्त्तते, तत्र च पूर्वेणैव णकारेण प्रत्याहारग्रहणम्, नच तत्र ऋकारः सन्निविष्ट इति भवत्येव प्रत्युदाहरणम् । तृतीयेति वेत्यादि । अथ वा 'अण' इत्येतन्निवृत्तमेव । तथाप्यत्र न भवत्येव दीर्घः; 'कर्तृकरणयोस्तृतीया' इति निपातनात् ।

'हलः' इत्येतस्य त्रयोऽर्थाः सम्भाव्यन्ते । हल उत्तरस्य सम्प्रसारणान्तस्याङ्गस्य दीर्घो भवति—अयमेकोऽर्थः, अङ्गावयवाद्धल उत्तरस्य सम्प्रसारणस्य दीर्घो भवति—इति द्वितीयः, तृतीयस्तु वृत्तिकारेणैव दर्शितः । तत्र यदि प्रथमः पक्ष आश्रीयते, तदा निरुतम्, दुरुतमित्यत्रापि स्यात् । भवति ह्येतदपि हल उत्तरं सम्प्रसारणान्तमङ्गम् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अङ्गग्रहणमावर्तयितव्यम्—हल्विशेषणार्थम्, अङ्गकार्यप्रतिपत्त्यर्थं च ॥

## नामि ॥ ३ ॥

'नाम्'—इत्येतत्षष्ठीबहुवचनमागतनुट्कं गृह्यते । तस्मिन्पर-

### पदमञ्जरी

नन्वेकमङ्गग्रहणं प्रकृतं तद्धलो यदि ।
विशेषणं स्यात्कार्यित्वमङ्गस्येह न लभ्यते ॥
ततश्च विद्धमित्यादावपि दीर्घः प्रसज्यते ।
अथ निर्दिश्यते कार्यी नाहलः स्याद्विशेषणम् ॥
ततो निरुतमित्यादावपि दीर्घत्वमापतेत् ।
सकृच्छ्रुतस्य चैकस्य युज्यते नोभयार्थता ? ॥

अत आह—*अङ्गग्रहणमित्यादि* ।

आवर्त्तमानं वस्त्वेकमप्यनेकस्य शेषताम् ।
भजते भाजनं यद्वन्नृणामसहभोजने ॥

*नामि* ॥ नामित्येतस्य शास्त्रे क्वचिदप्यविहितत्वात्तत्परिज्ञानार्थमाह—*नामिति*

### न्यासः

अथ द्वितीयस्तदा विद्धः, विचित इत्यत्रापि स्यात् । अत्राप्याङ्गावयवाद्धल उत्तरं सम्प्रसारणमिति । अथ 'विध्यत्यधनुषा', 'ग्रहिज्यावयिव्यधिवष्टिविचति' इति निर्देशान्न भविष्यति ? ततश्च ज्ञापकद्वारेणैवंविधे दीर्घत्वाभावे प्रतिपत्तगौरवं स्यादेव । तस्मादेतस्यैव दोषस्य परिजिहीर्षया तृतीयोऽर्थो वृत्तिकारेण दर्शितः । अत्रापि देश्यमिदमाशङ्क्यते—ननु चायमर्थोऽस्य सूत्रस्य नोपपद्यत एव, यस्मादङ्गस्येत्येकमङ्गग्रहणं प्रकृतम् । तच्च हलो विशेषणं वा स्याद्, अङ्गस्य कार्यप्रतिपत्त्यर्थं वा । तत्र यदि पूर्वकः पक्ष आश्रीयते,तदाङ्गविशिष्टस्य सम्प्रसारणान्तस्याङ्गस्येति यावद् दीर्घो न लभ्यते । अथ द्वितीयस्तदा हल् विशेषितो न स्यात् । तस्माद् द्वितीयमङ्गग्रहणं कर्त्तव्यं स्यात् । न ह्येकेन शक्यमेतदुभयं प्रतिपादयितुम् । अतोऽस्य देश्यस्य निरासायाऽऽवृत्तिन्यायमाश्रित्याह—*अङ्गग्रहणमित्यादि* । एकमपि हि वस्त्वावर्त्यमानमनेकत्रोपयुज्यते । यथैकं भाजनमसहभुजामनेकेषां भुजिक्रियायाम्, तथेदमङ्गग्रहणमावर्त्यते । तत्रानावृत्तेन हल् विशिष्यते, आवृत्तेन त्वङ्गस्य दीर्घत्वं भवतीत्युभयथार्थप्रतिपत्तिर्भवति ॥

नामि ॥ अङ्गाधिकारान्नामि परतोऽङ्गस्य दीर्घो विधीयते । अङ्गञ्च प्रत्यये परतो भवति । न चेह शास्त्रे क्वचिन्नाम्प्रत्ययो विहितः, ततो न ज्ञायते—नामीति कस्येदं ग्रहणमिति ? अतस्तत्परिज्ञानार्थमाह—नामिति षष्ठीबहुवचनमित्यादि । आगतः प्राप्तो

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

तोऽङ्गस्य दीर्घो भवति । अग्नीनाम् । वायूनाम् । कर्तॄणाम् । 'अणः' इत्येतदत्र निवृत्तम् ।

आगतनुट्कग्रहणमुत्तरार्थम्, कृते च नुटि दीर्घप्रतिपत्त्यर्थम्, अन्यथा हि नुडेव न स्यात् ॥

पदमञ्जरी

षष्ठीबहुवचनमित्यादि । नामीति दीर्घपाठस्तु न समीचीनः । *आगतनुट्कमिति* । गत्यर्थत्वाद्गमेः कर्मणि कर्तरि वा क्तः । आगतो नुड्येन आगतो वा नुड्यं तदागतनुट्कम् । *अग्नीनामित्यादि* । अकारान्तस्य तु 'सुपि च' इति दीर्घः सिद्धः । *कर्तॄणामिति* । नन्वण इति वर्त्तते ? तत्राह—*अण इत्येतदिति* । 'न तिसृचतसृ' इति प्रतिषेधादिति भावः ।

*उत्तरार्थमिति* । 'नोपधायाः' इति दीर्घत्वं सनुट्के आमि यथा स्यात्—पञ्चानाम्, सप्तानाम्, 'षट्चतुर्भ्यश्च' इति नुट्; चर्मणामित्यादावनुट्के मा भूत् । *कृते च नुटि दीर्घत्वप्रतिपत्त्यर्थमिति* । आगतनुट्कस्य ग्रहणमित्यनुषङ्गः । *अन्यथा हीत्यादि* । यद्यागतनुट्कस्य ग्रहणं न क्रियेत, ततः अग्नि+आम् इति स्थिते दीर्घत्वं च प्राप्नोति, नुट् च; परो नुट्, नित्यं दीर्घत्वम्, कृतेऽपि नुटि प्राप्नोत्यकृतेऽपि, ततो दीर्घे कृतेऽह्रस्वत्वान्नुडेव न स्यात्, योऽयं सिद्धान्ते निमित्तत्वेनोपादानादयत्नेन सिद्धो नुट्, स एव न स्यादित्येवशब्दस्यार्थः । ननु चाह

न्यासः

नुड् येन तदागतनुट्कम् । अथ वा आगतः=प्राप्तो नुड् यत्र तदागतनुट्कम् । कर्तॄणामिति । कथं पुनरत्र दीर्घत्वम्, यावताऽण्ग्रहणमत्रानुवर्त्तते ? अत आह—अण इत्येतन्निवृत्तमिति । 'न तिसृचतसृ' इति तिसृचतस्रोर्दीर्घत्वप्रतिषेधादित्यभिप्रायः ।

उत्तरार्थमिति । 'नोपधायाः' इति । अत्र नामि परतो नोपधाया दीर्घत्वं यथा स्यात्, आमि मा भूदिति—एवमर्थमागतनुट्कग्रहणम् । तेन चर्मणामित्यत्र दीर्घो न भवति । कृते च नुटि दीर्घत्वप्रतिपत्त्यर्थमित्यागतनुट्कस्य ग्रहणमिति प्रकृतेन सम्बन्धः । अन्यथा हीत्यादि । अन्यथा यद्यागतनुट्कस्यामो ग्रहणं न क्रियते तदा नुट आम्भक्तत्वादाम्ग्रहणेन ग्रहणे कृते सति नुटि दीर्घत्वेन भवितव्यम्, अकृतेऽपि । ततश्च कृताकृतप्रसङ्गो यो विधिः स नित्य इति नित्यत्वात् परमपि नुटं बाधित्वा दीर्घत्वमेव स्यात् । एवञ्च सति ह्रस्वान्तमङ्गं न भवतीति नुडेव न स्यात् । ननु न नुड् ह्रस्वान्ताद् विधीयते, न च नित्यत्वाद् दीर्घत्वे कृते ह्रस्वान्तमङ्गमस्ति, तत्र वचनसामर्थ्याद् भूतपूर्वगतिर्भविष्यति, भूतपूर्वगत्या ह्रस्वान्तादङ्गादुत्तरस्यामो नुड् भवतीति, न च

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


पदमञ्जरी

चायं ह्रस्वान्तान्नुडिति, न च नित्यत्वाद्दीर्घे कृते क्वचिदपि ह्रस्वान्तमस्ति, तत एवं विज्ञास्यामः—भूतपूर्वं यद् ह्रस्वान्तमिति, ननु चेदं सम्प्रति ह्रस्वान्तमस्ति, 'न तिसृचतसृ' तिसृणाम्, चतसृणाम्? नैतदस्ति; इह तावच्चतसृणामिति 'षट्चतुर्भ्यश्च' इति नुट् सिद्धः, तिसृणामित्यत्रापि 'ह्रस्वनद्यापो नुट्' इत्यत्र 'त्रेस्त्रयः' इत्यतस्त्रेरित्यनुवृत्तेरेव नुट् सिद्धः। यदा तर्हि 'नृ च' इति दीर्घत्व-प्रतिषेधस्तदास्यवकाशः? न चैकमुदाहरणं योगारम्भं प्रयोजयति, यद्येतावत्प्रयो-जनं स्यात् 'नृनद्यापो नुट्' इत्येव ब्रूयात्, ह्रस्वग्रहणात्तु भूतपूर्वगतिर्विज्ञायते। यद्येवम्, अस्थ्नाम्, दध्नाम्, 'अस्थिदधिसक्थ्यक्ष्णाम्' इत्यनङि कृतेऽपि भूत-पूर्वमेतद् ह्रस्वान्तमिति नुट् प्राप्नोति, ततश्च 'नोपधायाः' इति दीर्घत्वे नलोपे च अस्थानामिति प्राप्नोति। यद्वा—यदा नुड्विधौ भूतपूर्वगतिस्तदा नुण्नित्यो भवति, अनङ् त्वनित्य इति पूर्वं नुटि कृतेऽस्थीनामिति प्राप्नोति, द्विपदा-मित्यादौ पादस्य लोपे कृते नुट्प्रसङ्गः। एवम् 'पद्दन्नोमास्' इत्यत्र ये ह्रस्वान्त-स्यादेशास्तेष्वपि प्रसङ्गो योज्यः, तस्मान्न शक्यं भूतपूर्वगतिविज्ञानम्। यच्चो-क्तम्—त्रेरित्यनुवृत्तेरेव तिसृणामित्यत्र नुट् सिद्ध इति; तदप्यप्रमाणम्; न हि द्वयोरन्यतरस्य वाऽपेक्षायामसत्यां चकारे चासत्यनुवृत्तिः स्वध्यवसाना। तस्माद्—अन्यथा हि नुडेव न स्यादिति स्थितमेतत्।

न्यासः

शक्यते वक्तुम्; तिसृणाम्, चतसृणामित्यत्र 'न तिसृचतसृ' इति प्रतिषेधात्। ह्रस्व-वचनं सावकाशमिति। यस्माद् 'ह्रस्वनद्यापो नुट्' इत्यत्र 'त्रेस्त्रयः' इत्यतस्त्रिग्रहण-मनुवर्तते, तेन त्रिग्रहणानुवृत्तेरेव स्थानिवद्भावेन तिसृणामित्यत्र नुड् भविष्यति। तथा चतसृणामित्यत्रापि 'षट्चतुर्भ्यश्च' इत्यनेन स्थानिवद्भावादिति। नापि शक्यते वक्तुम्—नृणामित्यत्र 'नृ च' इति पक्षे दीर्घत्वाभावाद् ह्रस्ववचनस्य सावकाशत्वमिति। न ह्येकमुदाहरणं प्रति ह्रस्ववचनं प्रयोजयति। यदि ह्येतावत् प्रयोजनं स्यात् 'नृनद्यापो नुट्' इत्येवं ब्रूयात्। तदेवं ह्रस्ववचनमनवकाशम्। अतः कृतेऽपि दीर्घत्वे, अग्नीना-मित्यादौ भूतपूर्वगत्या नुड् भविष्यति; ह्रस्वग्रहणसामर्थ्यात्। तस्मादयुक्तमिदमुक्तम्—अन्यथा हि नुडेव न स्यादिति।

एवं तर्ह्यन्यथा व्याख्यायते वृत्तिग्रन्थे—'आगतनुट्कस्य ग्रहणमुत्तरार्थम्' इत्युक्ते चोदक आह—कृते च नुटीत्यादि। कस्मान्न भवतीति वाक्यशेषः। कृते च नुटि दीर्घस्य प्रतिपत्तिर्यथा स्यादित्येवमर्थमागतनुट्कस्य ग्रहणं कस्मान्न भवतीति। युक्तञ्चैतत्, तथा हि यद्यागतनुट्कस्य ग्रहणं न स्यात् ततो नित्यत्वाद्दीर्घत्वे कृते ह्रस्वाभावादग्नी-नामित्यादौ नुड् न स्यात्। सनुट्कस्य ग्रहणे तु भवतीत्येवं चोदकेनोक्ते सतीदमाह—अन्यथा हीत्यादि। हिशब्दोऽयमपिशब्दार्थे वर्तते। नशब्दोऽपि नन्वित्यर्थे वर्त्तते।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

नामिदीर्घं आमि चेत्स्यात् कृते दीर्घे न नुड् भवेत् ।
वचनाद्यत्र तन्नास्ति नोपधायाश्च चर्म्मणाम् ॥

पदमञ्जरी

उक्त एवार्थे संग्रहश्लोकं पठिति । *नामिदीर्घ इति* । यदि नुटमकृत्वा आमीत्येव सूत्रं क्रियेतेत्यर्थः । *वचनादिति* । वचनसामर्थ्याद् भूतपूर्वगतिविज्ञायत इति भावः । *यत्र तन्नास्तीति* । तिसृणामित्यत्र यत्र दीर्घत्वं नास्ति स वचनस्यावकाश इत्यर्थः । *नोपधायाश्चेति* । चशब्दः समुच्चये ॥

न्यासः

अनेकार्थत्वान्निपातानाम् । एवकारो भिन्नक्रमः स्यादित्यस्यानन्तरं द्रष्टव्यः । तदयमत्रार्थः—अन्यथापि ननु नुट् स्यादेव, न केवलं सनुट्कस्य ग्रहणे सत्यग्नीनामित्यादौ नुड् भवति, अपि त्वन्यथाप्यनागतनुट्कस्यापि ग्रहणे नुट् स्यादेवेति ।

अथ किमर्थमागतनुट्कस्य ग्रहणम्, 'आमि दीर्घः' इत्येव नोच्येत ?—अस्मिन् पर्यनुयोगे सति नामि दीर्घ इत्यादेः श्लोकस्योपन्यासः । योऽयं नामि दीर्घ उक्तः स यद्यामि भवेदामीत्येवं सूत्रप्रणयने सति कृताकृतप्रसङ्गित्वेन नित्यत्वात् परमपि नुटं बाधित्वा दीर्घत्वमेव स्यात् , ततश्च नुड् न स्यादेव, अह्रस्वान्तत्वादङ्गस्य ? नैष दोषः; वचनादिति । वचनान्नुड् भविष्यति । यदि दीर्घत्वे नुड् न स्यात्, तदा 'ह्रस्वनद्यापो नुट्' इत्यत्र ह्रस्ववचनमनर्थकं स्यात्; अनवकाशत्वात् । तस्माद् ह्रस्ववचनसामर्थ्यादसति साम्प्रतिके ह्रस्वान्तेऽङ्गे भूतपूर्वगत्या कृतेऽपि दीर्घत्वेऽङ्गस्य नुड् भविष्यति । यत्र तन्नास्तीति तत्र वचनस्यावकाश इति वाक्यशेषः । यत्र दीर्घत्वं नास्ति—तिसृणाम्, चतसृणामिति तत्र ह्रस्ववचनस्यावकाशः । अतोऽग्नीनामित्यादौ दीर्घत्वे कृते भूतपूर्वगत्या नुडागमो न लभ्यते । साम्प्रतिकाभावे हि भूतपूर्वगतिर्भवति । ननु तिसृणामित्यादावपि नैव ह्रस्ववचनस्यावकाशः । अन्यथैवात्र नुटः सिद्धत्वादिति भावः । इह तावत् तिसृणामिति विनापि ह्रस्वग्रहणेनानेनैव सूत्रेण नुड् भविष्यति, त्रिग्रहणानुवृत्तेः । चतसृणामित्यत्र 'षट्चतुर्भ्यश्च' इत्यनेनैव नृणामित्यत्र यद्यपि ह्रस्वान्तमङ्गं तथापि नैकमुदाहरणं प्रति ह्रस्ववचनं प्रयोजयति, अन्यथा हि नृग्रहणमेव कुर्यात्, न ह्रस्वग्रहणम् । तस्मान्नास्त्येव ह्रस्ववचनस्यावकाशः । तदेतदपार्थकं मा भूदिति ह्रस्ववचनसामर्थ्यात् कृतेऽपि नुड् भवतीत्यविचलमेतत् । एवमक्रियमाणेऽपि सनुट्कस्य ग्रहणे दीर्घत्वे कृतेऽपि नुड् भविष्यतीति परमतमाशङ्क्य प्रयोजनान्तरमाह—नोपधायाश्चेत्यादि । चशब्दस्तदर्थं । एवं तर्हि 'नोपधायाः' इति दीर्घत्वं नामि परभूते या नोपधा तस्या यथा स्यात्—पञ्चानाम्, सप्तानामित्यादौ । अत्र हि 'षट्चतुर्भ्यश्च' इत्यनेन पञ्चानामित्येवमादेर्नान्तादङ्गादामो नुटि कृते नामि परतो नोपधा भवति । यदि पुनः 'आमि' इत्येवोच्येत, तदा वर्मणामित्यादावपि दीर्घत्वं

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## न तिसृचतसृ ॥ ४ ॥

तिसृ, चतसृ—इत्येतयोर्नामि दीर्घो न भवति । तिसृणाम् । चतसृणाम् ।

इदमेव 'नामि' इति दीर्घप्रतिषेधवचनं ज्ञापकम्—'अचि र ऋतः' इत्येतस्मात्पूर्वविप्रतिषेधेन नुडागमो भवतीति ।

## छन्दस्युभयथा ॥ ५ ॥

छन्दसि विषये तिसृचतसृ—इत्येतयोर्नामि परत उभयथा दृश्यते—दीर्घश्च, अदीर्घश्च । तिसृणां मध्यंदिने, तिसॄणां मध्यंदिने । चतसृणां मध्यंदिने, चतसॄणां मध्यं दिने ॥

### पदमञ्जरी

*न तिसृचतसृ* ॥ सूत्रे षष्ठीद्विवचनस्य लुका निर्देशः । *तिसृणाम्, चतसृणामिति* । कथं पुनरत्र दीर्घप्रसङ्गः, यावताऽजन्तस्य दीर्घो नामीति, न चात्राजन्तता सम्भवति, कथम् ? तिसृ+आम् इति स्थिते नुट् प्राप्नोति, 'अचि र ऋतः' इति रादेशश्च, परत्वाद्रादेशः ? तत्राह—*इदमेवेति* ॥

*छन्दस्युभयथा* ॥ *तिसृ चतसृ इत्येतयोरिति* । अविशेषेण तु विकल्पो दृश्यते—अयं पितृणामग्निः, धाता धातृणामिति तैत्तिरीयके ह्रस्वः, बह्वृचे दीर्घः ॥

### न्यासः

प्रसज्येत । सनुट्कस्य ग्रहणे सति न भवति, नुटो लक्षणाभावात् । अत्र हि केवल आमि नोपधा, न तु सनुट्के । तदेवं वर्मणामित्यत्र 'नोपधायाः' इति दीर्घत्वं मा भूदित्येवमर्थं नामीत्युक्तम् ॥

**न तिसृचतसृ** ॥ तिसृचतस्रिति 'सुपां सुलुक्' इति षष्ठीद्विवचनस्य लुकं कृत्वा निर्देशः कृतः । तिसृणाम्, चतसृणामिति । 'त्रिचतुरोः स्त्रियां तिसृचतसृ' इति तिसृचतस्रादेशौ भवतः । ननु चात्र दीर्घत्वस्य प्राप्तिरेव नास्ति । तत् किं प्रतिषेधेनेति ? तथा ह्यत्रादेशयोः कृतयोरुभयं प्राप्नोति—नुडागमः, 'अचि र ऋतः' इति रेफादेशश्च, तत्र परत्वाद्रेफादेशे सत्यनजन्तमङ्गं भवति । अजन्तस्य दीर्घत्वेन भवितव्यम्, दीर्घग्रहणेन 'अचश्च' इत्यस्या उपस्थापितत्वादित्यत आह—इदमेवेत्यादि । यद्यत्र रेफादेशः स्यादयं प्रतिषेधो न कृतः स्यात्, कृतश्च, तस्मादयं प्रतिषेधो ज्ञापयति—'अचि र ऋतः' इत्यस्मात् पूर्वविप्रतिषेधेन नुडागमो भवतीति । तेन 'नुमचिरऋतवृज्वद्भावेभ्यो नुड् भवति पूर्वविप्रतिषेधेन' इत्येतदुक्तं भवति ॥

**छन्दस्युभयथा** ॥ वेति वक्तव्ये 'उभयथा' इति वचनं वैचित्र्यार्थम् ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## नृ च ॥ ६ ॥

'नृ' इत्येतस्य नामि परे उभयथा भवति । त्वं नृणाम् नृपते, त्वं नॄणाम् नृपते ।

केचिदेतत् 'छन्दसि' इति नानुवर्तयन्ति, तेन भाषायामपि विकल्पो भवति ॥

## नोपधायाः ॥ ७ ॥

नान्तस्याङ्गस्योपधाया नामि परतो दीर्घो भवति । पञ्चानाम् । सप्तानाम् । नवानाम् । दशानाम् ।

न इति किम् ? चतुर्णाम् । नामीत्येव---चर्मणाम् ॥

### पदमञ्जरी

नृ च ॥ *केचिदत्रेति* । 'छन्दस्युभयथा' इत्यतः । ये त्वनुवर्त्तयन्ति ते पूर्वसूत्रे तिसृचतसृग्रहणमनुवर्त्तयन्ति ॥

*नोपधायाः* ॥ अनजन्तार्थ आरम्भः, न इति षष्ठ्येकवचनान्तम् । सौत्रत्वान्निर्देशस्य यकारलोपस्यासिद्धत्वमनाश्रित्याद्गुणः । अपर आह—नेत्यविभक्तिको निर्देशः, अकारश्चोच्चारणार्थ इति । पञ्चानामित्यादौ सुब्विधौ नलोपस्यासिद्धत्वान्नान्तत्वम् । उपधाग्रहणमाचचो मा भूत् । नैतदस्ति प्रयोजनम्—दीर्घश्रुत्योपस्थापितमचं नाम्परतया विशेषयिष्यामः, उत्तरत्र च सर्वनामस्थानपरतया, तत्र येन नाव्यवधानमित्येकेन वर्णेन व्यवधाने भविष्यति ? उत्तरार्थं तु; 'इन्हन्पूषार्यम्णां शौ' इत्यत्र 'दीर्घविधेरुपधानियमात्' इति वक्ष्यति, तदर्थमुपधाग्रहणम् ॥

### न्यासः

नृ च ॥ केचिदेतच्छन्दसीति नानुवर्त्तयन्तीति । त एवं मन्यन्ते—यद्ययं योगश्छन्दस्येव स्यात् 'छन्दसि नृ चोभयथा' इत्येकयोगमेव कुर्यात् । चकारो हि तिसृचतस्रोरनुकर्षणार्थः । तत्रैकयोगेनैव सिद्धे पृथग्योगकरणान्निश्चीयते—भाषायामप्येष योग इति ॥

नोपधायाः ॥ अनजन्तार्थ आरम्भः । न इति षष्ठ्येकवचनान्तम्, सौत्रत्वान्निर्देशस्य यकारलोपस्यासिद्धत्वमनाश्रित्य 'आद् गुणः' कृतः । न इति वर्णग्रहणम्, तत्र वर्णग्रहणे सर्वत्र तदन्तविधिं प्रयोजयन्तीति नकारान्तस्याङ्गस्योपधाया तस्या दीर्घत्वं विज्ञायत इत्याह—नकारान्तस्याङ्गस्येति । पञ्चानामिति । 'नलोपः प्रातिपदिकान्तस्य' इति नकारलोपः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## सर्वनामस्थाने चासम्बुद्धौ ॥ ८ ॥

सर्वनामस्थाने च परतोऽसम्बुद्धौ नोपधाया दीर्घो भवति । राजा, राजानौ, राजानः । राजानम्, राजानौ । सामानि तिष्ठन्ति । सामानि पश्य ।

सर्वनामस्थान इति किम् ? राजनि । सामनि । असम्बुद्धाविति किम् ? हे राजन् । हे तक्षन् ॥

## वा षपूर्वस्य निगमे ॥ ९ ॥

षपूर्वस्याचो नोपधाया निगमविषये सर्वनामस्थाने परतोऽसम्बुद्धौ वा दीर्घो भवति । स तक्षाणं तिष्ठन्तमब्रवीत् । स तक्षणं तिष्ठन्तमब्रवीत् । ऋभुक्षाणमिन्द्रम् । ऋभुक्षणमिद्रम् ।

निगम इति किम् ? तक्षा, तक्षाणौ, तक्षाणः ॥

### पदमञ्जरी

*सर्वनामस्थाने चासम्बुद्धौ* ॥ *राजनीति* । 'विभाषा ङिश्योः' इत्यल्लोपाभावपक्षे दीर्घत्वप्रसङ्गः । एवं चर्मणामित्यादावपि प्रसङ्गः ॥

*वा षपूर्वस्य निगमे* ॥ अत्र दीर्घश्रुत्योपस्थापितस्याचो विशेषणमुपधाग्रहणम् । 'षपूर्वस्य' इत्येतदपि तस्यैव विशेषणम्, तेन पुंल्लिङ्गस्याविरोध इति मन्यमान आह—*षपूर्वस्याच इति* । *ऋभुक्षणमिति* । ऋभुक्षिशब्द उणादिषु निपातितः, 'इतोऽत्सर्वनामस्थाने' इत्यकारः ॥

### न्यासः

**सर्वनामस्थाने चासम्बुद्धौ** ॥ **सामानीति** । 'जश्शसोः शिः' इति शिभावः । **राजनीति** । सप्तम्येकवचनान्तम् । चकारः 'नोपधायाः' इत्यनुकर्षणार्थः । यद्येवम्, 'चानुकृष्टं नोत्तरत्राभिसम्बध्यते' इत्येतदनुवृत्तिर्न प्राप्नोति ? एवं तर्ह्येतदसन्देहार्थश्चकार इति । असति हि चकारे सर्वनामस्थाने सम्बुद्धावित्युच्यमाने सन्देहः स्यात्—किमयमसम्बुद्धावथ सम्बुद्धाविति । यद्येतत् प्रयोजनं स्याद् 'असम्बुद्धौ सर्वनामस्थाने' इत्येवं ब्रूयात् । एवं तर्हि वैचित्र्यार्थश्चकारः ॥

**वा षपूर्वस्य निगमे** ॥ अत्र दीर्घग्रहणेन 'अचश्च' इत्यस्याः परिभाषाया उपस्थाने सत्यच् सन्निधापितः । 'नोपधायाः' इत्यधिकारादुपधापि । **षपूर्वस्येति** । षः पूर्वो यस्मादिति बहुव्रीहिः । तत्र यद्युपधाऽन्यपदार्थत्वेनाश्रीयेत, 'षपूर्वस्य' इत्यस्त्रीलिङ्गेन निर्देशो नोपपद्यते, तस्मादजत्रान्यपदार्थत्वेनाश्रीयत इत्याह—**षपूर्वस्याच इत्यादि** । 'उपधायाः' इत्येतदचः समानाधिकरणं विशेषणम् । **ऋभुक्षाणमिति** । ऋभुक्षोऽस्यास्तीति 'अत इनिठनौ' इतीनिः, 'यस्येति च' इत्यकारलोपः, ऋभुक्षिन्निति

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## सान्तमहतः संयोगस्य ॥ १० ॥

सकारान्तस्य संयोगस्य यो नकारः महतश्च तस्योपधाया दीर्घो भवति सर्वनामस्थाने परतः सम्बुद्धौ । श्रेयान्, श्रेयांसौ, श्रेयांसः ।

**पदमञ्जरी**

*सान्तमहतस्संयोगस्य* ॥ सकारेऽकार उच्चारणार्थः, सोऽन्तो यस्य स सान्तः । सान्तेति पृथक्पदं लुप्तषष्ठीकं संयोगस्य विशेषणम्, तद्विशिष्टसंयोगो नकारस्य विशेषणम्, महच्छब्दोऽपि तस्यैव विशेषणम्, 'सर्वनामस्थाने' इत्यनेनानुवृत्तेन सान्तः संयोगो महच्छब्दश्च विशेष्यते, तेन हंसः, हंसावित्यत्र दीर्घाभावः । *महतश्चेति* । यो नकार इत्यपेक्ष्यते । *तस्येति* नकारस्य, कः पुनर्नकारस्योपधायाश्च सम्बन्धः, यावता यस्मिन्समुदाये योऽन्त्यादलः पूर्वः स तं प्रत्युपधा ? सत्यम्; इह तु गत्यभावात् सामीप्यलक्षणः सम्बन्धः, नकारसमीपवर्त्तिन्यास्तमेव नकारान्तं समुदायं प्रत्युपधाया इत्यर्थः । कल्पसूत्रेषु च प्रौढोऽयं व्यवहारः, तद्यथा—विसर्जनीयोऽनत्यक्षरोपधो रिषित इति ।

**न्यासः**

स्थिते द्वितीयैकवचनम्, 'पथिमथ्यृभुक्षाणाम्' इत्यनुवर्त्तमाने 'इतोऽत्सर्वनामस्थाने' इत्यत्त्वम् । पूर्वग्रहणमुत्तरार्थम् । इह तु 'वा षो निगमे' इत्येतावत्युच्यमाने षकारात् परस्याचः 'नोपधायाः' इति विकल्पेन दीर्घत्वं लभ्यत एव ।

**सान्तमहतः संयोगस्य** ॥ सकारेऽकार उच्चारणार्थः । सोऽन्तोऽस्य स तथोक्तः । 'सान्त' इत्यविभक्तिकोऽयं निर्देशः; तत्रोत्पन्नायाः षष्ठ्या लुप्तत्वात् । सकारान्तस्य संयोगो नकारो महतश्चेति । तत्रापि नकार इत्यपेक्ष्यते । सकारान्तस्य महतश्चेति द्वे अप्यवयवषष्ठ्यौ, सान्तसंयोगो यो नकारोऽवयवो महच्छब्दस्य च योऽवयव इत्यर्थः । एतेन सान्तसंयोगो महच्छब्दश्चोभयमप्येतन्नकारस्य विशेषणमिति दर्शयति । तस्योपधाया इति । तस्येत्यनेन नकारः प्रत्यवमृश्यते । तस्य नकारस्य सम्बन्धिन्या उपधाया इत्यर्थः । एतेनापि नकार उपधाया विशेषणमित्याचष्टे । कः पुनर्नकारस्योपधायाश्च सम्बन्धः येनासौ तस्येति व्यपदिश्यते ? निमित्तनिमित्तिभावः । अन्त्यनकारापेक्षया हि पूर्वत्वे सत्यन्त्यनकारात् पूर्वो वर्ण उपधा भवति । तस्मान्नकारो निमित्तम्, उपधा निमित्तिनी । अथ वा—समीपसमीपिलक्षणः सम्बन्धः, एतेन नकारसमीपवर्त्तिन्य उपधाया इत्यर्थः । श्रेयानिति । प्रशस्योऽयम्, प्रशस्योऽयम्, अनयोरयमप्रकर्षेण प्रशस्य इति 'द्विवचनविभज्योपपदे तरबीयसुनौ' इतीयसुन्, 'प्रशस्यस्य श्रः' इति श्रादेशः, 'प्रकृत्यैकाज्' इति प्रकृतिवद्भावाट् टिलोपः, 'यस्येति च' इति लोपश्च न भवति । 'उगिदचाम्' इत्यादिना नुम्, हल्ङ्याब्भ्यादिसंयोगान्तलोपौ । श्रेयांसि, पयांसीति । पूर्ववज्जसः शिभावः, 'नपुंसकस्य झलचः' इति नुम् । कथं पुनरत्र नकारात् पूर्वस्योपधा-

Digitized by Arya Samaj Foundation Chennai and eGangotri



श्रेयांसि । पयांसि । यशांसि । महतः खल्वपि—महान् । महान्तौ । महान्तः[1] ।

पदमञ्जरी

*श्रेयानिति* । 'प्रशस्यस्य श्रः', 'उगिदचाम्' इति नुम् । *श्रेयांसीति* । 'जश्शसोः शिः', 'नपुंकस्य झलचः' इति नुम् । *महानिति* । 'बृहन्महच्छतृवच्च' इति वचनाद् 'उगिदचाम्' इति नुम् ॥

न्यासः

त्वम्, यावता 'अलोऽन्त्यात् पूर्व उपधा' इत्यलां सन्निविष्टानां योऽन्त्योऽल् ततः पूर्वस्योपधासंज्ञा विहिता । न चात्र नकारोऽन्त्यः, किं तर्हि ? सकारः ? नैष दोषः; अपेक्षितं ह्यन्त्यत्वम् । तत् सकारात् पूर्वे ये वर्णास्तेषां नकारोऽन्त्य इति । ततः पूर्वो वर्ण उपधा भवति । यद्येवम्, तक्षको रक्षक इत्यत्रापि सकारात् पूर्वे ये वर्णास्तेषां ककारोऽन्त्य इति, ततः पूर्वोऽवर्ण उपधा स्यात्, ततश्च 'अत उपधायाः' इति वृद्धिः स्यात् ? नैतदस्ति; अङ्गस्य योऽकार उपधा तस्या वृद्धिर्विधीयते । न चात्राकारोऽङ्गस्योपधा, अतो न भविष्यतीति—एतच्चाशक्यं वक्तुम्, अकारस्याङ्गावयवत्वात् । पाचक इत्यादावप्यङ्गावयवत्वादकारोऽङ्गस्योपधेत्युच्यते, तस्मात् प्राप्नोत्येव वृद्धिः ? नैष दोषः, 'अत उपधायाः' इत्यत्र हि 'ञ्णिति' इत्यनुवर्त्तते, तेनोपधा विशिष्यते—ञिति प्रत्यये परतो योपधेति, तत्र येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादित्येकेन वर्णेन व्यवधानमाश्रीयते, न पुनरनेकेन । तक्षकः, रक्षक इत्यत्रानेकेन वर्णेन व्यवधानम्, अतो न भवति वृद्धिप्रसङ्गः ।

इह तु सूत्रे न सर्वनामस्थानेनोपधा विशिष्यते, किं तर्हि ? संयोगः—तेन सर्वनामस्थाने परतो यः संयोग इति । तेन यत्र संयोगादनन्तरं सर्वनामस्थानं तत्र यद्युपधायाः सर्वनामस्थानस्य चानेकवर्णकृतं व्यवधानम्, तथापि दीर्घत्वं भवत्येव । अत एव सर्वनामस्थानेन संयोगस्य विशेषणाद् हंसौ, हंसा इत्यत्र दीर्घत्वं न भवति । न ह्यत्र संयोगादनन्तरं सर्वनामस्थानमस्ति, अकारेण व्यवधानात् । अथेह कस्मान्न भवति—हंसमाचष्ट इति 'तदाचष्टे' इति णिच्, णाविष्ठवत् कार्यम्, प्रातिपदिकस्येति टिलोपः, हंसयतेः क्विप्—हन्, हंसौ, हंस इति ? 'वा षपूर्वस्य निगमे' इत्यतो वाग्रहणानुवृत्तेः । न चैवं सति सर्वत्र विकल्पप्रसङ्गः; व्यवस्थितविभाषात्वात् । एतेन 'हिसि हिंसायाम्' इत्यस्य क्विबन्तस्य सुहिन् सुहिंसौ सुहिंस इत्यत्र दीर्घत्वाभावो वेदितव्यः ।

यस्त्वाह—'इदितो नुम् धातोः' इत्यनेन नित्यो नुम्; नुम्विधावुपदेशिवद्वचनात्, ततो नुमः पृथक्सिद्धत्वं नास्ति, अत्र तु सिद्धानां सम्बन्धः समवायो भवति,

---

१. असम्बुद्धौ किम् ? हे श्रेयन् । हे महन्' इत्यपि क्वचित् पठ्यते ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


असम्बुद्धाविति किम् ? हे श्रेयन् । हे महन् ॥

**अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम् ॥ ११ ॥**

अप्—इत्येतस्य तृजन्तस्य, स्वसृ, नप्तृ, नेष्टृ, त्वष्टृ, क्षत्तृ, होतृ, पोतृ, प्रशास्तृ—इत्येतेषां चाङ्गानामुपधाया दीर्घो भवति सर्वनामस्थाने परतोऽसम्बुद्धौ । अप्—आपः । बह्वाम्पि तडागानीति केचिदिच्छन्ति, तत्र 'समासान्तो विधिरनित्यः' इति समासान्तो न क्रियते ।

पदमञ्जरी

*अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम् ॥ आप इति ।* अप्शब्दस्य नित्यं बहुवचनान्तत्वाद् द्विवचनैकवचनयोरसम्भवः । *बह्वाम्पीति ।* बहुव्रीहिः । 'अङ्गाधिकारे तस्य च तदुत्तरपदस्य च' इति तदन्तविधिरभ्युपगतः । किं पुनरत्रेष्टव्यम्, न तावद् 'ऋक्पूरब्धूः' इति प्राप्तस्य समासान्तस्याभावः ? इत्याह—

न्यासः

न तु संयोगः । तेन संयोगाभावादिह दीर्घत्वं न भवति । तन्मतेन संयोगान्तलोपोऽपि सुहन्नित्यत्र न स्यात् । नेह वैशेषिकशास्त्रप्रसिद्धोऽयं संयोगो गृह्यते, अपि तु 'हलोऽनन्तराः संयोगः' इति हलान्नैरन्तर्यलक्षण इह शास्त्रे प्रसिद्धः संयोग एव । स चेहास्त्येवेत्यसारः परिहारः । महानिति । 'वर्त्तमाने पृषद्बृहन्महज्जगच्छतृवच्च' इति निपातनसूत्रेण शतृवदित्यतिदेशादुगित्कार्यं नुम् । सान्तमहत इति किम् ? बृहन्ति ।

अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम् ॥ आप इति । अप्शब्दस्य बहुत्वादेकवचनद्विवचने न सम्भवत इति बहुवचनमुपन्यस्तम् । बह्वाम्पीति । बहव आप एष्विति बहुव्रीहिः । तदन्तविधेरिष्टत्वात् तदन्तस्यापि दीर्घत्वं भवति । तथा हि 'येन विधिस्तदन्तस्य' इत्यत्र सूत्रे 'कानि पुनरत्र प्रयोजनानि' इति प्रश्ने इदमुक्तम् प्रयोजनम्—महदप्स्वसृनप्तृनेष्टृत्वष्टृ इति । कथं पुनरिष्यमाणोऽपि तदन्तविधिर्लभ्यते, यावता 'ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते' ? नैष दोषः; 'सर्वनामस्थाने चासम्बुद्धौ' इत्यतश्चकारोऽनुवर्त्तते, स चानुक्तसमुच्चयार्थः । तेन तदन्तस्यापि दीर्घत्वं भविष्यति । केचिदिति वचनात् केचिन्नेच्छन्तीत्युक्तम् । तन्मतेन बह्वप्पीत्येवं भवति । कस्मात् पुनरत्र 'ऋक्पूरब्धूःपथामानक्षे' इत्यनेनाकारः समासान्तो न क्रियते ? इत्याह—तत्र समासान्तो विधिरनित्य इत्यादि । इयञ्च परिभाषा 'स्फिगपूतवीणाञ्जोऽध्वकुक्षिसीरनाम नाम च' इत्यत्राध्वग्रहणेन ज्ञापिता । यथाध्वग्रहणं ज्ञापकं तथा तत्रैवोक्तम् । नन्वेवमपि बह्वाम्पीति नैव सम्भवति, तथा हि—बह्वप्+शि इति स्थितेऽनेन दीर्घत्वं प्राप्नोति, 'नपुंसकस्य झलचः' इति नुम् च, तत्र कृताकृतप्रसङ्गित्वेन नित्यत्वात् परत्वाच्च नुम् कर्त्तव्यः, तस्मिन् कृत उपधाया अदीर्घभाविनीत्वाद्


CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



नित्यमपि च नुममकृत्वा दीर्घत्वमिष्यते ।

तृन्—कर्त्तारौ कटस्य । वदितारौ जनापवादान् । कर्त्तारः ।

पदमञ्जरी

*तत्रेति* । यत्पुनरेष्टव्यं तद्दर्शयति—*नित्यमपीति* । कृताकृतप्रसङ्गित्वान्नित्यो नुम् ।

*जनापवादानिति* । 'न लोकाव्यय' इत्यादिना तृन्योगे षष्ठीप्रतिषेधात् कर्मणि द्वितीयैव भवति । एतच्च तृन्नन्तत्वाभिव्यक्तये प्रयुक्तम्, एतेन कटस्येति-व्याख्यातम् । 'तुरिष्ठेमेयस्सु', 'तुश्छन्दसि' इतिवत् सामान्यनिर्देशे कर्त्तव्ये, तृन्तृचोर्भेदेनोपादाने प्रयोजनं चिन्त्यम् ।

न्यासः

दीर्घत्वं न प्राप्नोति ? इत्यत आह—नित्यमपि चेत्यादि । नित्यमपीत्यपिशब्दात् परमपि । कथं पुनरिष्यमाणं नुममकृत्वा दीर्घत्वं लभ्यते ? 'वा वपूर्वस्य निगमे' इत्यतः पूर्वग्रह-णानुवृत्तेः । तस्यैतदेव प्रयोजनम्—यदन्यत् कार्यं प्राप्नोति तदकृत्वा दीर्घत्वमेव पूर्वं कर्त्तव्यमिति ।

अन्यस्त्वाह—'नपुंसकस्य झलचः' इति नुम् विधीयते, नपुंसकञ्चार्थधर्मः, अर्थे च शब्दानुशासनेऽस्मिन् कार्याभावान्नपुंसकाभिधायी शब्दो नुम्विधावाश्रयणीयः। तञ्च शब्दं ग्रहीतुं प्रयोगोऽनुगमनीय इति नुमो बहिरङ्गत्वम् । अयं तु दीर्घः साक्षादप्शब्द-मुच्चार्य विधीयमानो यथोच्चारितस्यैव क्रियमाणोऽल्पाश्रयत्वादन्तरङ्ग इति पूर्वं दीर्घः प्रवर्त्तते, पश्चान्नुमिति । एतच्चायुक्तम्, अनेन हि न्यायेन बह्वाम्पीति न सिध्येत् । एतदपि कैश्चिदिष्यते—अस्य च न्यायस्य साधारणत्वादिहापि पूर्वमेव दीर्घत्वेन भवितव्यम्, पश्चान्नुमा । पूर्वस्मिंस्तु परिहारे न दोषः । ये हि बह्वम्पीतीच्छन्ति, ते पूर्वग्रहणमिह नानुवर्त्तयन्ति ।

**कर्त्तार इति** । तच्छीलादावर्थे तृन्निति 'ऋतो ङिसर्वनामस्थानयोः' इति गुणः । **जनापवादानिति** । द्वितीयान्तस्यानुप्रयोगस्तृन्नन्ततां दर्शयितुम् । तृनो हि प्रयोगे 'न लोकाव्ययनिष्ठा' इत्यादिना षष्ठ्यां प्रतिषिद्धायाम् द्वितीयैव भवति । एकवचनं नोदाहृतम् । तत्र 'ऋदुशनस्पुरुदंशोऽनेहसाञ्च' इत्यनङादेशे कृते 'नोपधायाः' 'सर्वनामस्थाने च' इत्यादिना दीर्घस्य सिद्धत्वात् । कटस्येति षष्ठ्यन्तस्यानुपयोगस्तृ-चोऽभिव्यक्तये । तस्य प्रयोगे कर्मणि षष्ठी भवति 'कर्तृकर्मणोः कृति' इत्यनेन । अथ यथा 'तुरिष्ठेमेयस्सु' इत्यत्र तुरिति तृंस्तृचोर्यत् समानं रूपं तस्यैव ग्रहणं कृतम्, न तु तयोर्भेदेन, तथेहापि किमर्थं न कृतम् ? 'अर्वणस्त्रसावनञः' इत्यर्वादेशस्य तृशब्दस्य ग्रहणम् मा भूदित्येवमर्थमिति चेद्, नैतत् प्रयोजनम्; अर्थवद्ग्रहणपरिभाषयैव हि तस्य ग्रहणं न भविष्यति । एवं तृंस्तृचोर्भेदेनोपादानमस्याः परिभाषाया अनित्यत्व-ज्ञापनार्थम् । तेन 'अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति' इत्युपपन्नं भवति । अथ वा—'सामान्यनिर्देशे क्वचिद् विशेष एव गृह्यते' इति ज्ञाप-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


तृच्–कर्त्तारौ कटस्य । कर्त्तारः । हर्त्तारौ भारस्य, हर्त्तारः ।

स्वसृ–स्वसा । स्वसारौ । स्वसारः ।

नप्तृ–नप्ता । नप्तारौ । नप्तारः ।

नेष्टृ–नेष्टा । नेष्टारौ । नेष्टारः ।

त्वष्टृ–त्वष्टा । त्वष्टारौ । त्वष्टारः ।

क्षत्तृ–क्षत्ता । क्षत्तारौ । क्षत्तारः ।

होतृ–होता । होतारौ । होतारः ।

पोतृ–पोता । पोतारौ । पोतारः ।

प्रशास्तृ–प्रशास्ता । प्रशास्तारौ । प्रशास्तारः ।

नप्त्रादीनां ग्रहणमव्युत्पत्तिपक्षे विध्यर्थम् । व्युत्पत्तिपक्षे नियमार्थम्–एवम्भूतानामन्येषां संज्ञाशब्दानां दीर्घो मा भूदिति । पितरौ, पितरः । मातरौ, मातरः ।

**पदमञ्जरी**

*अव्युत्पत्तिपक्षे इति* । नावश्यं व्युत्पत्तिकार्यं भवतीत्येतद् 'अतः कृकमिकंस' इत्यत्र कंसग्रहणाल्लभ्यते, ज्ञापकादिति भावः । *व्युत्पत्तिपक्ष इति* । नमेस्तृचि मकारस्य पकारः–नप्ता, नयतेस्तृनि षुक् गुणश्च–नेष्टा, त्विषेरच्चोपधायाः–त्वष्टा; क्षदेस्तृन्यनिट्त्वम्–क्षत्ता; होता, पोता–तृनेव; प्रपूर्वाच्छासेस्तृच्, अनिट्त्वं च–प्रशास्ता । *एवम्भूतानामिति* । अस्यैव विवरणम्–*संज्ञाशब्दानामिति* ॥

**न्यासः**

नार्थम् । तेन 'न कोपधायाः' इत्यत्र सामान्योक्तावपि तद्धितवुसम्बन्ध्येव ककारो गृह्यते, न ककारमात्रम् ।

अथ नप्त्रादीनां ग्रहणं किमर्थम्, यावता ते हि केचित् तृजन्ता व्युत्पाद्यन्ते, केचित् तृन्नन्ताः । तत्र तृंस्तृज्ग्रहणेनैव सिद्धम् ? इत्याह–नप्त्रादीनामित्यादि । केचिदाचार्या नप्त्रादीन्यव्युत्पन्नानि प्रातिपदिकानीच्छन्ति, केचिद् व्युत्पन्नानि । तत्रैषा व्युत्पत्तिः–नप्त्रिति नमेस्तृचि मकारस्य पकारो निपात्यते । नेष्ट्रिति–नयतेस्तृचि षुक् च । त्वष्ट्रिति-त्विषेस्तत्रैवाकार उपधाया अनिट्त्वञ्च । क्षत्त्रिति–क्षदेस्तृच् । होतृपोत्रिति–जुहोतेः पुनातेश्च स एव । प्रशास्त्रिति–शासेः प्रपूर्वाच्छासिक्षदादिभ्यः संज्ञायाञ्चानिट्त्वञ्चेति तृन्ननिट्त्वञ्च । तत्राव्युत्पत्तिपक्ष एषां तृन्तृजन्तत्वाभावात् तृंस्तृज्ग्रहणेन ग्रहणं न भवतीति विध्यर्थं पृथगुपादनम् । व्युत्पत्तिपक्षे तु तृंस्तृजन्तादेव सिद्धे नियमार्थम्–एषामेव संज्ञाशब्दानां यथा स्यात्, अन्ये य एवम्भूताः संज्ञाशब्दा-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



असम्बुद्धाविति किम् ? हे कर्तः । हे स्वसः ॥

## इन्हन्पूषार्यम्णां शौ ॥ १२ ॥

इन्, हन्, पूषन्, अर्यमन्—इत्येवमन्तानामङ्गानां शौ परत उपधाया दीर्घो भवति । बहुदण्डीनि । बहुच्छत्रीणि । बहुवृत्रहाणि । बहुभ्रूणहाणि । बहुपूषाणि । बह्वर्यमाणि ।

### पदमञ्जरी

*इन्हन्पूषार्यम्णां शौ* ॥ 'अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति' इति इन्ग्रहणेन तदन्तं गृह्यते । इतरेभ्योऽपि केवलेभ्यः शिर्न सम्भवति, कथम् ? हन्निति हन्तेः क्विबन्तस्य ग्रहणम्, ब्रह्माद्युपपदाच्च हन्तेः क्विब्विहितः, इतरौ च पुंल्लिङ्गौ, तस्मात्सर्वैरेव तदन्तविधिर्विज्ञायते, इत्याह—*इन्हन्पूषन्नर्यमन्नित्येवमन्तानामिति* । *बहुदण्डीनीति* ।

### न्यासः

स्तेषां मा भूदिति । तेन मातरौ, मातर इत्यादौ न भवति । अथ प्रशास्तॄणामित्यत्र केन णत्वम्, 'रषाभ्याम्' इत्यादिनेति चेत् ? न; यस्मात् 'रषाभ्याम्' इत्युच्यते, न चात्र रषौ स्तः । एवं तर्ह्येष निर्देशो ज्ञापयति—यतो विहितं णत्वं ततोऽन्यत्रापि भवतीति । तेन मातॄणाम्, पितॄणाम्, ग्रामणोः, अग्रणीरित्यादौ णत्वं सिद्धम्भवति । ततश्च 'रषाभ्यां णत्व ऋवर्णाच्चेति वक्तव्यम्' न वक्तव्यं भवति ॥

**इन्हन्पूषार्यम्णां शौ** ॥ 'अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति' इतीन्ग्रहणेन तदन्तं गृह्यते । इतरेभ्योऽपि केवलेभ्यः शिर्न भवतीति । तथा हि—हन्निति हन्तेः क्विबन्तस्येदं ग्रहणम्, न च केवलस्य हन्तेः क्विब् दृश्यते । इतरौ तु पुंल्लिङ्गौ । नपुंसकादुत्तरयोर्जस्शसोः शिर्विधीयते । तस्मात् तैरपि सामर्थ्यात् तदन्तविधिर्विज्ञायत इत्याह—इन्, हन्, पूषन्, अर्यमन् इत्येवमन्तानामङ्गानामिति । बहुदण्डीनीति । दण्ड एषामस्तीति मत्वर्थीय इनिः, बहवो दण्डिन एषां सन्तीति बहुव्रीहिः, ततो जश्शसौ, तयोश्च पूर्ववच्छिभावः, अनेन दीर्घत्वम् । ननु चेन्निति प्रत्ययग्रहणम्, तत्र 'प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य च ग्रहणं भवति' इति दण्डीनीत्यत्रैव दीर्घत्वेन भवितव्यम्, न तु बहुदण्डीनीत्यत्र ? नैतदस्ति; यत्र हि प्रत्ययस्यैव ग्रहणं तत्रैवेयं परिभाषा, नेदं प्रत्ययस्यैव ग्रहणम्, अपि तु प्रत्ययाप्रत्यययोः; अन्यथा वाच एषां सन्तीति 'वाचो ग्मिनिः' वाग्मीनि, स्रज एषां सन्तीति 'अस्मायामेधास्रजो विनिः' स्रग्वीणीत्येवमादौ न स्यात् । तस्मान्नात्रासौ परिभाषोपतिष्ठते । बहुवृत्रहाणीति । वृत्रं हतवन्तः 'ब्रह्मभ्रूणवृत्रेषु क्विप्' बहवो वृत्रहणो येषु तानि बहु-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सिद्धे सत्यारम्भो नियमार्थः—इन्हन्पूषार्यम्णामुपधायाः शावेव दीर्घो भवति, नान्यत्र। दण्डिनौ। छत्त्रिणौ। वृत्रहणौ। पूषणौ। अर्यमणौ॥

दीर्घविधिर्य इहेन्प्रभृतीनां तं विनियम्य सुटीति सुविद्वान्।

पदमञ्जरी

वैषम्यपरिहारार्थमाद्ययोर्बहुपूर्वयोः।
उपन्यासो बहुत्वं च पूषादौ कालभेदतः॥ इति।

इह दण्डीनि ब्राह्मणकुलानि, ब्रह्महाणि ब्राह्मणकुलानि—इत्यन्तरेणापि बहुशब्दमाद्ययोरिन्हन्नित्येतयोरुदाहरणत्वेनोपन्यासः सम्भवतीति चोद्यम्, वैषम्यपरिहारार्थं तु बहुपूर्वयोरुपन्यास इत्युत्तरम्। वृत्रहा इन्द्रः, स एकः, एवं पूषार्यमणौ, तेषां कथं बहुत्वं विशेषणमिति चोद्यम्, मन्वन्तरादिकालभेदेनेन्द्रादयो भिद्यन्ते इत्युत्तरम्। यद्वा—बहुषु यज्ञेष्वाहूता इन्द्रादयो यैर्ब्राह्मणकुलैस्तानि तथोच्यन्ते।

ननु च 'सर्वनामस्थाने चासम्बुद्धौ' इति दीर्घत्वं सिद्धम्, तत्किमर्थोऽयमारम्भः? इत्याह—*सिद्धे सत्यारम्भ इति*। *इन्नादीनामुपधायाः शावेवेति*। विपरीतस्तु नियमो न भवति—इन्नादीनामेव शाविति; 'सर्वनामानि', ता·येकवचनद्विवचनबहुवचनान्येकशः' इति निर्देशात्। *वृत्रहणाविति*। नन्वत्रास्तु 'सर्वनामस्थाने चासम्बुद्धौ' इति प्राप्तस्य दीर्घस्य नियमेन व्यावृत्तिः, 'अनुनासिकस्य क्विझलोः क्ङिति' इति प्राप्तो दीर्घः कस्मान्न भवति, न ह्यसौ तस्य नियमः, अप्रकृतत्वादसंशब्दितत्वाच्च? सत्यम्; नियमविधानसामर्थ्यात्तु तस्याप्यनेन निवृत्तिः।

अस्त्वेवं सर्वनामस्थाने, विभक्त्यन्तरे तु सर्वत्रानुनासिकलक्षणो दीर्घः प्राप्नोति? अत आह—*दीर्घविधिरिति*। य इह शास्त्रे इन्नादीनां दीर्घविधिस्तं

न्यासः

वृत्रहाणि। 'प्रातिपदिकान्तनुमविभक्तिषु च' इति णत्वम्। बहवः पूषणो येषु तानि बहुपूषाणि। बहवोऽर्यमणो येषु तानि बह्वर्यमाणि।

ननु 'सर्वनामस्थाने चासम्बुद्धौ' इत्यनेन दीर्घत्वं सिद्धम्, तत् किमर्थोऽयमारम्भः? इत्यत आह—सिद्धे सत्यारम्भ इत्यादि।

युक्तोऽस्य नियमार्थ आरम्भः, किन्त्वारभ्यमाणेऽप्येतस्मिन् नियमार्थे भ्रूणहनीत्यत्र 'अनुनासिकस्य क्विझलोः क्ङिति' इति दीर्घत्वं प्राप्नोत्येव, तथा ह्ययं शौ सर्वनामस्थाने नियम आरभ्यते। अत्र यथा विशिष्टायाः प्रकृतेर्नियम आरभ्यमाणः प्रकृत्यन्तरस्य न भवति—प्रतामौ, प्रताम इति, तथा सर्वनामसंज्ञाविशिष्टे शिप्रत्यय आरभ्यमाणः सर्वनामस्थान एव स्यात्, अन्यत्र न स्यात्; तुल्यजातीयापेक्षत्वान्नियमस्य। ततश्चासर्वनामस्थाने नियमाभावाद्दीर्घत्वं स्यादेवेत्यत आह—दीर्घविधिरित्यादि श्लोकम्। य इह

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



**शौ नियमं पुनरेव विदध्याद् भ्रूणहनीति तथास्य न दुष्येत् ॥**

पदमञ्जरी

विनियम्य=तस्य नियमं कृत्वा, क्व ? सुटि सर्वनामस्थाने । उपलक्षणमेतत् । तेन शसादेशोऽपि शिर्गृह्यते । इतिशब्दो हेतौ, स च भिन्नक्रमः श्लोकान्ते द्रष्टव्यः । ततः किं कुर्यात् ? *शौ नियमं पुनर्विदध्यात्* । एवकारो भिन्नक्रमो नेत्यस्यानन्तरं द्रष्टव्यः । एकस्मिन्योगे नियमद्वयस्य कर्तुमशक्यात्वाद्योगविभागः कर्त्तव्य इत्यर्थादुक्तं भवति । 'इन्हन्पूषार्यम्णाम्' इत्येको योगः, 'सर्वनामस्थाने' इति च वर्त्तते, इन्नादीनां च सर्वनामस्थान एव दीर्घो भवतीत्यर्थः । अत्र हन्व्यतिरिक्तानां ग्रहणमुत्तरार्थम् । ततः 'शौ' इति द्वितीयो योगः, सर्वनामस्थानेऽपि शावेव न सर्वत्र । ततः 'सौ च' इति सूत्रं विध्यर्थम् । एवं च योगद्वये क्रियमाणे च सति यदिष्टं सम्पद्यते तद्दर्शयति—*भ्रूणहनीति तथास्य न दुष्येदिति* । तथेति योगद्वये सतीत्यर्थः । *अस्येति* आचार्यस्य । भ्रूणहनीति सप्तम्येकवचने 'विभाषा ङिश्योः' इत्यल्लोपाभावपक्षेऽनुनासिकलक्षणो दीर्घो न भवतीत्यर्थः । सप्तम्येकवचनमुपलक्षणम्; सर्वत्र दीर्घप्रसङ्गस्योक्तत्वात् ।

न्यासः

शास्त्र इन्नन्तादीनां दीर्घत्वविधानं तं विनियम्य तस्य नियमं कृत्वा । क्व विनियम्य ? सुटि । सर्वनामस्थानोपलक्षणमेतत् सुड्ग्रहणम् । सर्वनामस्थान इत्यर्थः । ततः किं कुर्यात् ? इत्यत आह—शौ नियममित्यादि । सर्वनामस्थाने नियमं कृत्वा पुनः शौ नियमं कुर्यात् । एवकारोऽवधारणार्थः, स तु भिन्नक्रमः, विदध्यादित्यस्यानन्तरं द्रष्टव्यः । सुविद्वान्=सुपण्डितः । कथं पुनरेकेन योगेन द्वौ नियमौ शक्येते कर्तुम् ? एवं मन्यते—इमं योगं विभज्य द्वौ योगौ कर्त्तव्याविति । 'इन्हन्पूषार्यम्णाम्' इत्येको योगः, ततः 'शौ' इति द्वितीयः । सर्वनामग्रहणञ्चात्रानुवर्त्तते । तत्र पूर्वयोगः—दीर्घविधिर्य इहेन्प्रभृतीनां तं विधिं विनियम्य सुटीत्यनेन दर्शितः । द्वितीयस्तु 'शौ नियमं पुनरेव विदध्यात्' इत्यनेन । तत्र पूर्वेण योगेन दीर्घत्वं भवेत् ! 'सर्वनामस्थाने चासम्बुद्धौ' इत्यनेन 'अनुनासिकस्य क्विझलोः क्ङिति' इत्यनेन वा दीर्घत्वं विनियम्यते—इन्प्रभृतीनां सर्वनामस्थान एव दीर्घत्वम्, नान्यत्र । तेन सप्तम्यां दीर्घो न भवति—वृत्रहणि, भ्रूणहनीत्यत्र । द्वितीयेन तु शौ नियम्यते, तत्रापि सर्वनामस्थाने शावेव दीर्घो भवति, नान्यत्रेति । तेन बहुवृत्रहाणीत्यत्र भवति, वृत्रहण इत्यत्र न भवति । एवं योगद्वयेन नियमद्वये क्रियमाणे सति योऽर्थः सम्पद्यते तं दर्शयितुमाह—भ्रूणहनीति । तथास्य न दुष्येदिति । तथैवं योगद्वये कृतेऽस्य पाणिनेः भ्रूणहनीत्येतच्छब्दरूपं नैव दुष्येन्नासिद्धत्वदोषवद्भवतीत्यर्थः । इतिकरणो हेतौ । यस्मादेवं योगद्वयेन नियमद्वये क्रियमाणे भ्रूणहनीत्येतन्न दुष्येत्; तस्माद् दीर्घविधिर्य इहेन्प्रभृतीनां तं विनियम्य सुटि शौ नियमं सुविद्वान् पुनर्विदध्यात् । द्वितीयस्त्वितिकरणो भ्रूणहनीत्येतस्य स्वरूपपदार्थकतां द्योतयति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


शास्मि निवर्त्त्य सुटीत्यविशेषे शौ नियमं कुरु वाऽप्यसमीक्ष्य ।
दीर्घविधेरुपधानियमान्मे हन्त ! यि दीर्घविधौ च न दोषः ॥

पदमञ्जरी

एवं योगविभागेन चोद्यं परिहृत्यैकस्मिन्योगे परिहर्त्तुमाह—*शास्मीति* । शास्मि=उपदिशामि तं प्रकारम्, येनैकयोगेऽपि दोषाभावः । अत्रापि सुडिति सर्वनामस्थानं लक्ष्यते सर्वनामस्थानग्रहणं निवर्त्त्य अनाश्रितसर्वनामस्थानत्वविशेषे प्रत्ययत्वमात्राश्रयेण । *शौ नियमं कुरु वा* । एवं वा कुरु, पूर्वोक्तं वा प्रकारमित्यर्थः । असत्यपि शास्त्रीयेऽधिकारे लौकिकापेक्षालक्षणः स्यात् सम्बन्ध इति तन्निवृत्त्यर्थमाह—*अप्यसमीक्ष्येति* । अपेक्षालक्षणमपि सम्बन्धमनाश्रित्येत्यर्थः । एवं च विशेषमनपेक्ष्य शौ नियमः क्रियमाणः प्रत्ययत्वेन तुल्यजातीये सर्वत्र प्रत्ययान्तरे निवृत्तिं करोति ।

यद्येवम्, वृत्रहेवाचरति वृत्रहायते इति क्यङि 'अकृत्सार्वधातुकयोः' इत्यपि दीर्घो न स्यात् ? अत आह—*दीर्घविधेरिति* । निर्द्धारणे एषा षष्ठी, जाता-

न्यासः

एवं योगद्वयेन भ्रूणहनीत्यत्र दीर्घत्वं परिहृत्यैकस्मिन् योगे परिहर्तुमाह—शास्मीत्यादि । शास्मि=उपदिशामि तमपरमुपायम्, येनैकस्मिन् योगे सति भ्रूणहनौ, भ्रूणहन इति न दुष्यति । नापि भ्रूणहनीत्येतत् । कः पुनरसावुपायः ? इत्याह—निवर्त्त्येत्यादि । सुटीत्येकयोगेन सर्वनामस्थानं लक्ष्यते । 'सर्वनामस्थाने' इति यदेतद् प्रकृतं तं निवर्त्त्य । अविशेषे इति । नास्य विशेषो विद्यत इत्यविशेषः, तस्मिन्नविशेषे = अनाश्रितविशेषे प्रत्ययमात्रे शौ इत्येवं तं नियमं कुरु । एवं वा नियमं कुर्वित्यर्थः । वाशब्दः पक्षान्तरत्वमस्य परीहारस्य द्योतयति । अपिशब्दो भ्रूणहनीत्यत्रापि पक्षान्तर आश्रीयमाणे न दुष्यति ! शावेव दीर्घत्वस्य नियतत्वात् । इन्प्रभृतीनां यदि दीर्घत्वं भवति तदा शावेव प्रत्यये, नान्यत्रेति । निवर्त्त्य सुटीत्यनेन शास्त्रीयस्याधिकारस्य निवृत्तिर्दर्शिता । निवृत्ते तु तस्मिन् यदि लौकिकोऽधिकारोऽपेक्षालक्षण आश्रीयते तदा पूर्ववद् भ्रूणहनीत्यत्र स्यादेव दीर्घत्वम् । अतो लौकिकाधारनिरासायाह—असमीक्ष्येति । सुटीत्यनेनास्य सम्बन्धः । सर्वनामस्थानमपेक्ष्येत्यर्थः । एवं सर्वनामस्थानग्रहणनिवृत्तेऽनपेक्षिते च प्रत्ययमात्रापेक्षया शावित्ययं नियमः प्रत्ययमात्रं नियमयति, न तु तुल्यजातीयं सर्वनामस्थानमेव । तेन न केवलमन्यत्र सर्वनामस्थाने दीर्घो न भवति, अपि तु भ्रूणहनीत्यत्रापि ।

यदि तर्हि प्रत्ययमात्रमाश्रित्य सर्वनामस्थानविषयमनपेक्ष्य शौ नियमः, एवं हि सति दीर्घत्वस्य शावेव नियतत्वाद् यथा भ्रूणहनीत्यत्र न भवति, तथाचारे क्यङ्यपि 'अकृत्सार्वधातुकयोर्दीर्घः' इति दीर्घत्वं न स्यात्, ततश्च भ्रूणहेवाचरतीति 'कर्तुः क्यङ् सलोपश्च' इति क्यङि विहिते भ्रूणहयत इत्यनिष्टं रूपमापद्येतेत्यत आह—दीर्घविधेरि-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## सुट्यपि वा प्रकृतेऽनवकाशः शौ नियमोऽप्रकृतप्रतिषेधे ।

**पदमञ्जरी**

वेकवचनम् । उपधाशब्देन उपधालक्षणं दीर्घत्वमुच्यते । दीर्घविधानमध्ये उपधालक्षणस्य दीर्घस्य नियमादित्यर्थः । एतच्चोपधाग्रहणानुवृत्तेर्लक्ष्यते । हन्तेर्यो हन्तियः, तस्मिन्यो दीर्घविधिस्तत्र न दोष इत्यर्थः । क्वचित्तु—हन्तेति निपातोऽभिमुखीकरणार्थः पठ्यते । अत्रापि यिग्रहणमुपलक्षणम्, दण्डीभूत-इत्यत्र 'च्वौ च' इत्यपि दीर्घो भवत्येव ।

इदानीमसत्यपि योगविभागे सर्वनामस्थानापेक्षायां सत्यामपि न दोष इत्याह—*सुट्यपीति* । अपिशब्दः 'अप्रकृतप्रतिषेधे' इत्यनेन सम्बन्धनीयः । वाशब्दः पक्षान्तरं द्योतयति । अत्रापि सुडिति सर्वनामस्थानोपलक्षणम्, तदयमर्थः—अथ वा—सुटि सर्वनामस्थाने प्रकृते प्रकरणादपेक्ष्यमाणे । एतेन लौकिकमधिकारमभ्युपगच्छति, शास्त्रीयस्तु नैवाभ्युपगम्यते । *अनवकाश इति* । हेतुगर्भमिदं विशेषणम् । यतोऽनवकाशः शौ नियमोऽतोऽप्रकृतस्याप्यनुनासिकदीर्घस्य प्रतिषेधे व्यावृत्तौ कर्त्तव्यायामपि प्रवर्त्तते ।

**न्यासः**

स्यादि । 'नोपधायाः' इत्यत उपधाग्रहणमनुवर्त्तते, तेन न सर्वस्य दीर्घविधेरयं नियमः, अपि तूपधादीर्घविधेः । न च 'अकृत्सार्वधातुकयोः' इत्युपधादीर्घविधिः, किं तर्हि ? अजन्तदीर्घविधिः । तस्मादयमत्र प्रवर्त्तत एव । हन्त यि दीर्घविधौ च न दोष इति । यकारादौ प्रत्यये क्यङि दोषो न भवतीत्यर्थः । हन्तेति निपातो वचनारम्भेऽभिमुखीकरणे वा वर्त्तते । अन्ये तु हन्तियि दीर्घविधौ च न दोष इति पठन्ति । त एवं व्याचक्षते—हन्तेर्यो हन्तियः, 'पञ्चमी' इति योगविभागात् समासः, तस्मिन् हन्तियि । सप्तम्येकवचनमेतत् । हन्तेर्धातोर्यकारादिर्यः प्रत्यय इति । तत्र दीर्घविधौ न दोषः । चकारः पूर्वत्र परीहारे वक्ष्यमाणे च । अत एवोपधानियमाद् हन्तेर्यकारादौ प्रत्यये न दोष इत्यस्यार्थस्य द्योतनाय ।

सम्प्रति सर्वनामस्थानग्रहणेऽनुवर्त्तमाने, असति च योगविभागे भ्रूणहनीत्यत्र यथा दीर्घत्वं न भवति तथा तद्दर्शयितुमाह—सुट्यपि वेत्यादि । वाशब्दोऽत्र पक्षान्तरं द्योतयति । अपिशब्दो भिन्नक्रमः 'अप्रकृतप्रतिषेधे' इत्यस्यानन्तरं द्रष्टव्यः । अत्रापि सुटीत्येतत् सर्वनामस्थानोपलक्षणार्थं वेदितव्यम् । नास्य विद्यतेऽवकाशः, व्यावृत्तिविषयो व्यवच्छेद्य इत्यनवकाशः । प्रकृतात् सर्वनामस्थानादन्यदप्रकृतम् । सर्वनामस्थानव्यतिरिक्तं प्रत्ययान्तरमप्रकृतम्, तत्र दीर्घत्वस्य प्रतिषेधोऽप्रकृतप्रतिषेधः । अप्रकृते प्रतिषेधोऽप्रकृतप्रतिषेधः । 'सप्तमी' इति योगविभागात् समासः । अप्रकृतप्रतिषेध इति विषयसप्तमीयम् । अयं तावत् पूर्वार्धस्यावयवार्थः । समुदायार्थस्तूच्यते—अथ वाऽनु-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



यस्य हि शौ नियमः सुटि नैतत्तेन न तत्र भवेद्विनियम्यम् ॥

हन्तेः 'अनुनासिकस्य क्विझलोः क्ङिति' इति दीर्घत्वं यत् तदपि

पदमञ्जरी

कथमनवकाशत्वम्? अत आह—*यस्य हीति*। द्विविधं सर्वनामस्थानम्—शिः सुट् च, तत्र शिर्नपुंसकस्य सम्बन्धी, तत एतस्य विधानात्, सुट् तु स्त्रीपुंसयोः; 'सुडनंपुसकस्य' इति वचनात्। ततश्च यस्य नपुंसकस्य सम्बन्धिनि शौ नियमः क्रियते सुटि सर्वनामस्थानसंज्ञके नैतन्नपुंसके सम्भवति; अनपुंसकस्येति वचनात्। हिशब्दो हेतौ, यस्मादेवं तेन कारणेन तत्र सर्वनामस्थाने सुटि नियन्तव्यं व्यावर्त्त्यं दीर्घत्वं न सम्भवतीति सामर्थ्यादविशेषेण नियम आश्रीयते। एतदुक्तं भवति—यदि प्रकरणाप्राप्तं सर्वनामस्थानत्वं शेराश्रीयते, तदा नपुंसकसम्बन्धित्वमप्याश्रयणीयम्। उभयथाश्रयणे वायमर्थो भवति—इन्नादीनां नपुंसकानां शावेव सर्वनाम स्थाने दीर्घत्वमिति। एवंविधस्य नियमस्य किं तुल्यजातीयं व्यावर्त्तनीयम्? नपुंसकानामेवैषां सर्वनामस्थानान्तरं न च तदस्तीति नियमविधानसामर्थ्यात्प्रकरणप्राप्तं सर्वनामस्थानत्वं सामर्थ्यप्राप्तं च नपुंसकत्वमुभयमप्यविशेषात्परित्यज्य प्रत्ययमात्रे स्त्रीपुंससम्बन्धिनि दीर्घत्वं व्यावर्त्येत इति। *विनियम्यम्*=साधु नियम्यम्।

*हन्तेरनुनासिकस्येत्यादिना* प्रथमश्लोकं व्याचष्टे।

न्यासः

वर्त्तमानेऽपि सर्वनामस्थानग्रहणे तत्र शावित्यस्य नियमस्य किञ्चिद्व्यावर्त्त्यमस्तीत्यनवकाशः सन् सामर्थ्यादप्रकृतप्रतिषेधेऽपि कर्त्तव्यता विषयभूते प्रवर्त्तते=व्याप्रियते। अपिशब्दादन्यत्रापि सर्वनामस्थाने। कथं पुनरनवकाशः? इत्याह—यस्य हीत्यादि। यस्येति शावित्यपेक्षया षष्ठी। हि शब्दो यस्मादर्थे। द्विविधं हि सर्वनामस्थानम्—सुट्, शिश्च। तयोः पूर्वं स्त्रीपुंसयोः सम्बन्धि, न नपुंसकस्य; 'सुडनपुंसकस्य' इति वचनात्। इतरत् पुनर्नपुंसकस्य; तत एव तस्य विधानात्। तत्र यत्सम्बन्धिनि शौ सर्वनामस्थाने शावित्ययं नियमः क्रियते, सुटि नैतत्। सुटि सर्वनामस्थाने परतस्तन्नपुंसकं न भवतीत्यर्थः। अनेन सुटः सर्वनामस्थानस्यानपुंसकसम्बन्धित्वमाख्यातम्। तेन न तत्र भवेद्विनियम्यम्। यस्मादेवं सुट् सर्वनामस्थानं नपुंसकस्य सम्बन्धि न भवति, तेन कारणेन तत्रानपुंसकसम्बन्धिनि सर्वनामस्थाने शावित्यस्य नियमस्य विनियम्यं व्यावर्त्त्यं नास्तीति नपुंसकसम्बन्धिनि हि क्रियमाणो नियमो युक्तः। अनपुंसकसम्बन्धिन्येवास्मिन् सर्वनामस्थाने तुल्यजातीये निवृत्तिं कुर्यात्। न च शिव्यतिरिक्तं नपुंसकसम्बन्धि सर्वनामस्थानमस्ति, ततो नास्ति तुल्यजातीये व्यावर्त्यम्। शौ नियमस्येति तस्यानवकाशत्वम्। तस्मादप्रकृतप्रतिषेधेऽपि व्याप्रियते।

हन्तेरनुनासिकस्येत्यादिना कारिकात्रयस्यापि यथाप्रधानमर्थमाचष्टे। तत्र हन्तेर-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



नियमेन बाध्यते—वृत्रहणि, भ्रूणहनीति । कथम् ? योगविभागः क्रियते—इन्हन्पूषार्यम्णाम् सर्वनामस्थान एव दीर्घो भवति, नान्यत्रेति । ततः 'शौ' इति द्वितीयो नियमः—शावेव सर्वनामस्थाने दीर्घो भवति, नान्यत्रेति । सर्वस्योपधालक्षणस्य दीर्घस्य नियमेन निवृत्तिः क्रियते ।

यस्तु न उपधालक्षणः, स भवत्येव—वृत्रहायते, भ्रूणहायते ।

अथ वा—अनुवर्त्तमानेऽपि सर्वनामस्थानग्रहणे सामर्थ्यादयमविशेषेण नियमः । शिशब्दो हि सर्वनामस्थानं नपुंसकस्य, न च तस्यान्यत् सर्वनामस्थानमस्तीत्यविशेषेण नियमः ।

तत्र तु 'नपुंसकस्य' इत्येतन्नाश्रीयते । तेनानपुंसकस्यापि दीर्घो न भवति ।

### पदमञ्जरी

*सर्वनामस्थान इत्यादिना* द्वितीयस्य पूर्वार्द्धम् ।

*यस्त्वित्यादिना* पश्चार्द्धम् ।

*अथ वेत्यादिना* तृतीयश्लोकम् । *अनुवर्त्तमानेऽपीति* । लौकिक्यत्रानुवृत्तिर्विवक्षिता, न शास्त्रीया स्वरितत्वनिबन्धना । तथा हि सति सामर्थ्यप्राप्तस्य नपुंकत्वस्यैव परित्यागः स्यात्, न वचनप्राप्तस्य सर्वनास्थानत्वस्य । *सामर्थ्यादि*-त्युक्तम्, तदेव दर्शयति—*शिशब्दो हीति* । *अविशेषेणेति* । नपुंसकत्वं सर्वनामस्थानत्वं च विशेषमनाश्रित्येत्यर्थः । पूर्वं नपुंसकत्वाप्रसञ्जनेन केवलसर्वनामस्थानत्वाश्रयेण नियमो दोषप्रसङ्गात्तथा नाश्रीयत इत्याद्ययोः श्लोकयोरुक्तम् ।

*वृत्तिकारस्तु* सर्वनामस्थानत्वपरित्यागेन केवलनपुंसकत्वाश्रयणमपि दोषप्रसङ्गादेव सर्वथा न कार्यमित्याह—*तत्र त्विति* । तुशब्दोऽपिशब्दस्यार्थे 'भिन्नक्रमश्चैतत्' इत्यस्यानन्तरं द्रष्टव्यः । तत्रैतस्मिन्नियमे क्रियमाणे नपुंसकस्येत्येतदपि विशेषणं नाश्रीयत इत्यर्थः । किमेवं सति सिद्धं भवति ? तद्दर्शयति—*तेनेति* । तदाश्रयणे ह्ययमर्थः स्यात्—इन्नादीनां नपुंसकानां शावेव दीर्घत्वमिति, ततश्च भ्रूणहनि ब्राह्मणकुले इत्यादावेव दीर्घत्वं न स्यात्, न लिङ्गान्तरे । तस्मान्नपुंसकत्वमपि विशेषणं नाश्रयणीयमिति भावः ।

### न्यासः

नुनासिकस्येत्यादिना 'भ्रूणहनीति तथास्य न दुष्येत्' इत्यस्यार्थ आख्यातः । योगविभाग इत्यादिना 'दीर्घविधिर्य इहेन्प्रभृतीनां तं विनियम्य सुटि' इत्यस्य । तत इत्यादिना

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सर्वनामस्थानसंज्ञाविधाने तु नपुंसकस्य व्यापारोऽस्तीति तत्र नियमः क्रियमाणो नपुंसकस्य स्यात् ॥

## सौ च ॥ १३ ॥

### पदमञ्जरी

कथं पुनरप्रकृतस्यासंशब्दितस्य नपुंसकत्वस्याश्रयणप्रसङ्गः ? इत्याह— *सर्वनामस्थानविधाने त्विति* । सर्वनामस्थानमिति तटस्थमुपलक्षणम्, यदिदं सर्वनामस्थानं शिशब्दस्तस्य यद्विधानं जश्शसोरित्येतत, तत्रेत्यर्थः । सर्वनामस्थानविधाने *त्विति* पाठे योऽयं सर्वनामस्थानसंज्ञः शिशब्दस्तद्विधाने इत्यर्थः । *सर्वनामस्थानसंज्ञाविधाने तु* इति प्रसिद्धः पाठः, न तत्र समीचीनमर्थं पश्यामः । तथा हि—'शि सर्वनामस्थानम्' इत्येतत्संज्ञाविधानम्, तत्र नपुंसकग्रहणमस्ति । अथ शिशब्दस्य नपुंसकत्वाव्यभिचारादार्थान्नपुंसक-

### न्यासः

'शौ नियमं पुनरेव विदध्यात्' इत्यस्य । सर्वनामस्थान इत्यादिना द्वितीयश्लोकपूर्वार्धस्य । यस्त्वित्यादिना उत्तरार्धस्य ।

अथ वेत्यादिना 'सुट्यपि वा प्रकृतेरनवकाशः इत्यस्य । सामर्थ्यादिति । सामर्थ्यम्= अनवकाशत्वम् । अविशेषेण नियम इति अनेन शौ नियमोऽप्रकृतप्रतिषेध इत्यस्य । अविशेषेणेति सामान्येन, न प्रकृत एव, अपि तु प्रत्ययमात्र इत्यर्थः । यस्त्वप्रकृतप्रतिषेधार्थतामेवास्य नियमस्य व्याचष्टे तस्यैव तद्वचनमविशेषेणेत्यनेन वृत्तिकारवचनेन विरुध्यते । एवं ह्यविशेषेण नियमो भवति यदि सर्वत्र प्रकृते चाप्रकृते च प्रत्ययमात्रे भवति । अथ तु प्रकृतं परित्यज्याप्रकृत एव स्यात् ततो विशेषेणैव स्यात्, नाविशेषेण । अविशेषेण वास्मिन्नियमे सत्यनेनैव सर्वत्र दीर्घत्वस्य निवर्त्तितत्वात् 'सौ च' इत्ययं योगो विध्यर्थो वेदितव्यः । सामर्थ्यादविशेषेण नियम इत्युक्तम् । अतस्तत् सामर्थ्यं दर्शयन् शिशब्दो हीत्यादिना 'यस्य हि शौ नियमः' इत्यस्यार्थमाचष्टे । यत्र शिशब्दे नियमः क्रियते स यस्मान्नपुंसकस्य सर्वनामस्थानं न स्त्रीपुंसयोः; नपुंसकादुत्तरयोर्जश्शसोः श्यादेशस्य विधानात् । न च तस्यान्यत् सर्वनामस्थानमस्तीति । अनेन सुटः सर्वनामस्थानस्य नपुंसकसम्बन्धित्वं दर्शयति । इतिकरणो हेतौ । यत एवं नियमो विधीयते नपुंसकसम्बन्धिनि शौ सर्वनामस्थाने तज्जातीयमन्यत् सर्वनामस्थानं हि नास्ति । तस्मात् तुल्यजातीयव्यवच्छेद्यस्यासम्भवादविशेषेण नियमः ।

तत्र स्वित्यादि । तुशब्दोऽवधारणार्थो भिन्नक्रमश्च नेत्यस्यानन्तरं द्रष्टव्यः । तत्रैतस्मिन्नियमे क्रियमाण इन्नादीनां नपुंसकस्येत्येतद्विशेषणं नैवाश्रीयते । अनाश्रीयमाणे च तस्मिन्नेषोऽर्थः सम्पद्यते—इन्नादीनां शावेव दीर्घो भवति, नान्यत्रेति । तेनानपुंसकस्यापि भ्रूणहनीत्यत्र नियमेन व्यावर्त्तितत्वाद् दीर्घो न भवति । यदि नपुंसकस्येत्येतद् विशेषणं तेषामाश्रीयते, ततोऽयमर्थः स्यात्—इन्प्रभृतीनां नपुंसकानां शावेव दीर्घो भवति,

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सावसम्बुद्धौ परत इन्हन्पूषार्यम्णामुपधाया दीर्घो भवति । दण्डी । वृत्रहा । पूषा । अर्यमा ।

असम्बुद्धाविति किम् ? हे दण्डिन् । हे वृत्रहन् । हे पूषन् । हे अर्यमन् ॥

पदमञ्जरी

स्याश्रयणम् ? तदत्रैव सूत्रे शक्यते वक्तुम्, किमुच्यते-संज्ञाविज्ञाने त्विति ! अथावश्यमयमेव पाठो योज्यस्तदाङः प्रश्लेषः, स च धात्वर्थानुवादी, सर्वनामस्थानसंज्ञस्याविधानं सर्वनामस्थानसंज्ञाविधानम्, तत्रेति, स एवार्थो यं पूर्वमवोचाम । तुशब्दो हेतौ, अपि स्यादिति सम्भावनायाम् । यस्मान्नपुंसकादेव शेर्विधानं तस्मात्तत्र शिशब्दे क्रियमाणस्य नियमस्य नपुंसकविषयता सम्भाव्यते इत्यर्थः ॥

न्यासः

नान्यत्रेति । ततश्च नपुंसक एव नियमः स्यात् । तत्र को दोषः ? भ्रूणहनि ब्राह्मणकुले इत्यत्रैव दीर्घनिवृत्तिः स्यात्, भ्रूणहनि ब्राह्मणे इत्यत्र न स्यात् । तस्मात् तद्दोषपरिजिहीर्षया नपुंसकस्येत्येतद् विशेषणं नाश्रीयते । यद्येवम्, यदुक्तम्—'अनवकाशः शौ नियमः' इति, तन्नोपपद्यते, अनाश्रिते ह्येतस्मिन् विशेषणे तेषामनाश्रितविशेषणानां नपुंसकानामनपुंसकानाञ्च सम्बन्धिनि शौ सर्वनामस्थाने नियमः स्यात्, तथाभूतानाञ्च तेषामन्यदपि सुट्सर्वनामस्थानमस्त्येव, ततश्च तुल्यजातीयव्यवच्छेदविषये सति कुतो नियमस्यानवकाशत्वम् ? नैतदस्ति; नियमविधानवेलायां तेषां नपुंसकत्वं विशेषणं यद्यपि नाश्रीयते, तथापि तेषां नपुंसकादेव शेर्विधानान् नपुंसकस्य निमित्तभावः, शेस्तु निमित्तिभाव इति निमित्तनिमित्तिभावलक्षणेन सम्बन्धेन शेः सर्वनामस्थानस्य नपुंसकसम्बन्धित्वं विद्यत एव । न चान्यन्नपुंसकसम्बन्धि सर्वनामस्थानं विद्यत इत्युपपन्नमेतत्—अनवकाशः शौ नियम इति ।

ननु चात्र नपुंसकस्येति न प्रकृतम्, नाप्युपात्तम्, ततश्च तदाश्रयणशङ्का नास्त्येवेति तन्निवृत्तये न युक्तमिदम्, तत्र तु 'नपुंसकस्य' इत्येतन्नाश्रीयते ? इत्यत आह—सर्वनामस्थानसंज्ञाविधाने त्वित्यादि । तुशब्दो हेतौ । यतो नपुंसकेनोत्पादितस्य शिशब्दस्य 'शि सर्वनामस्थानम्' इति सर्वनामस्थानसंज्ञा विधीयते, तस्मात् सर्वनामस्थानसंज्ञाविधानं प्रति नपुंसकमिति निमित्तभावमापद्यते । तदेवं निमित्तभावोपगमनं नपुंसकस्य सर्वनामस्थानसंज्ञाविधाने व्यापारः । तस्माद् यत्र शिशब्दः सर्वनामस्थानसंज्ञकस्तत्रावश्यं नपुंसकेनोपस्थातव्यम् । इह तु सर्वनामस्थानग्रहणानुवृत्तेः सर्वनामस्थानसंज्ञकस्य शिशब्दस्य ग्रहणम् । ततो नपुंसकं सामर्थ्यात् सन्निहितम् । तेन सम्भाव्यते तदाश्रयणमित्यभिप्रायः ॥

सौ च ॥ पूर्वेण नियमेन सौ दीर्घत्वं न प्राप्नोतीति विध्यर्थोऽयमारम्भः । चकार इन्प्रभृतीनामनुकर्षणार्थः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


## अत्वसन्तस्य चाधातोः ॥ १४ ॥

अतु, अस्—इत्येवमन्तस्य अधातोरुपधायाः सावसम्बुद्धौ परतो दीर्घो भवति। डवतु—भवान्। क्तवतु—कृतवान्। मतुप्—गोमान्। यवमान्। अत्र कृते दीर्घे नुमागमः कर्त्तव्यः। यदि हि परत्वान्नित्यत्वाच्च नुम् स्यात्, दीर्घस्य निमित्तमतूपधा विहन्येत। असन्तस्य—सुपयाः। सुयशाः। सुश्रोताः।

अधातोरिति किम्? पिण्डं ग्रसते इति पिण्डग्रः, चर्म वस्ते इति चर्मवः। अनर्थकोऽप्यसशब्दो गृह्यते; 'अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति' इति।

### पदमञ्जरी

*अत्वसन्तस्य चाधातोः॥ अत्रेत्यादि*। ननु च परत्वान्नित्यत्वाच्च नुमेव पूर्वं प्राप्नोति? तत्राह—*यदि हीति*। इह दीर्घश्रुत्याचः स्थानित्वम्, तच्च न स्वरूपेण, किं तर्हि? 'उपधायाः' इत्यनुवृत्तेरुपधात्वनिबन्धनम्, अत एवाजन्तस्य दीर्घाभावः। तस्मात्स्थानिन्येवात्र निमित्तशब्दः प्रयुक्तः।

*पिण्डग्रश्चर्मव इति*। 'ग्रसु ग्लसु अदने', 'वस आच्छादने', क्विप्। ननु चानर्थकत्वादेवात्र न भविष्यति, मूलोदाहरणेषु त्वसुन्प्रत्ययस्यार्थवत्त्वात्सिद्धम्? अत आह—*अनर्थकोऽपीति*। अत्रैव हेतुमाह—*अनिनस्मिन्ग्रहणानीति*। अयमेव

### न्यासः

**अत्वसन्तस्य चाधातोः॥ अत्र कृते दीर्घत्वे नुमागम इति**। कथं पुनरेतल्लभ्यते, यावता कृताकृतप्रसङ्गित्वात् परत्वाच्च नुमेव भवितव्यं पूर्वमित्याह—यदि हीत्यादि। इह दीर्घग्रहणेन 'अचश्च' इत्युपस्थापिते सत्यज्लक्षणाया उपधाया दीर्घो विधीयते। यदि च परत्वान्नित्यत्वान्नुम् प्राग् विधीयते, अच उपधात्वं विहन्येत। तस्माद् वचनसामर्थ्याद्दीर्घः प्राग् भवति, ततो नुमागमः। सुपयाः, सुयशाः, सुस्रोता इति। असुन्निति वर्त्तमाने 'पिबतेरिच्च' इति, 'अशेर्देवने युट् च', 'स्रुरिभ्यां तुट् च' इति—एते यथाक्रममसुन्प्रत्ययान्ताः पयोयशःस्रोतःशब्दा व्युत्पाद्यन्ते।

**पिण्डग्रश्चर्मव इति**। 'ग्रसु ग्लसु अदने', 'वस आच्छादने', 'अन्येभ्योऽपि दृश्यते' इति क्विप्। ननु चार्थवद्ग्रहणपरिभाषयार्थवानेवासित्ययं शब्दो गृह्यते, यथा मूलोदाहरणेषु, पयःप्रभृतीनामसुन्प्रत्ययान्तत्वात् प्रत्यार्थेनार्थवानसौ, न तथा प्रत्युदाहरणयोः, धात्ववयवस्तत्र दीर्घत्वस्याप्रसङ्गादपार्थकोऽधातोरिति प्रतिषेधः? इत्यत आह—अनर्थकोऽपीत्यादि। कथमेतल्लभ्यते? इत्याह—अनिनस्मन्ग्रहणानीत्यादि। अथेह कथं

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अन्तग्रहणमुपदेशप्रयोगैकदेशस्याप्यत्वन्तस्य परिग्रहार्थम्, अन्यथा मतुपो ग्रहणं न स्याद्—उपदेशे रूपनिर्ग्रहहेतौ नायमत्वन्त इति ।

पदमञ्जरी

धातुप्रतिषेधो ज्ञापयति—अस्तीयं परिभाषेति । नैतदस्ति ज्ञापकम्, अस्यर्थमेतत्स्यात्–शत्रूनस्यात्, शत्रूनस्यतीति शत्रूव इति, तस्माद्वचनमेवेदम् । अतुग्रहणे त्वर्थवतोऽतुशब्दस्याभावाद्देवानर्थकस्य ग्रहणम् ।

अन्तग्रहणमनर्थकम्, केवलयोरत्वसोरभावादेव सिद्धम् ? अत आह—*अन्तग्रहणमित्यादि* । उपदेशः=लक्षणवाक्यानि गणपाठश्च, प्रयुज्यत इति प्रयोगः, उपदेशे प्रयोग उपदेशप्रयोगः । उपदेशे यत्प्रयुज्यते शब्दरूपं तदेकदेशस्याप्यत्वसन्तस्य परिग्रहार्थमित्यर्थः । असति पुनरन्तग्रहणे कस्य ग्रहणं न स्यात् ? इत्यत आह—*इतरथा हीति* । मतुब्ग्रहणमुपलक्षणम् । 'कुमुदनडवेतसेभ्यो ड्मतुप्' इत्यस्यापि ग्रहणं न स्यात् । किं कारणमित्यत आह—*उपदेश इति* । रूपनिर्ग्रहः=रूपनिश्चयः । स यद्यपि लौकिके प्रयोगे भवति, अनुबन्धयुक्तं तु रूपमुपदेश एव निश्चीयत इत्युपदेश इत्युक्तम् । *नायमत्वन्त इति* । यद्यपि तावतोऽवधेरतुरन्तः, तथापि न तत्पर उपदेशः, यत्परश्चोपदेशो न सोऽत्वन्तः;

न्यासः

दीर्घत्वम्—गोमन्तमिच्छति गोमत्यति, 'सुप आत्मनः क्यच्', गोमत्यतेरप्रत्ययो गोमानिति, कथञ्च न स्यात् ? अधातोरिति प्रतिषेधात्, अस्य 'सनाद्यन्ता धातवः' इति धातुत्वात् ? नैतदस्ति; 'अधातोः' इति प्रतिषेध आनन्तर्यादनन्तरस्यैव, नान्तरस्य ।

अथ वा चकारोऽत्र क्रियते, स चानुक्तसमुच्चयार्थः, तेनेह धातोरपि भविष्यति । अथान्तग्रहणं किमर्थम्, यावता 'अङ्गस्य' इत्यनुवर्त्तते, तत्र गृह्यमाणेनातुशब्देनासशब्देन च प्रकृतेऽङ्गे विशिष्यमाणे विशेषणेन च तदन्तविधिर्भवतीत्यन्तरेणाप्यन्तग्रहणं तदन्तस्यैव दीर्घत्वं भविष्यति ? इत्यत आह—अन्तग्रहणमित्यादि । उपदेशः=लक्षणवाक्यानि, गणपाठः, प्रातिपदिकपाठः । प्रयुज्यत इति प्रयोगः, कर्मणि घञ् । उपदेशे प्रयोग उपदेशप्रयोग इति ! सप्तमीति योगविभागात् समासः । तदयमस्य वाक्यस्यार्थः—उपदेशे प्रयुज्यते यच्छब्दरूपं तदेकदेशस्याप्यत्वन्तस्य परिग्रहो यथा स्यादित्येवमर्थमन्तग्रहणमिति । कस्य पुनरसत्यन्तग्रहण उपदेशे प्रयोगैकदेशस्य ग्रहणं न स्यात्, यतस्तत्परिग्रहार्थमन्तग्रहणं क्रियते ? इत्याह—अन्यथा हीत्यादि । किं कारणं न स्यात् ? इत्याह—उपदेशे रूपनिर्ग्रहहेताविस्यादि । निर्ग्रहणं निग्रहः=निश्चय इत्यर्थः । रूपस्य स्वरूपस्य शब्दस्य निर्ग्रहो निश्चयनो रूपनिर्ग्रहः, तस्य हेतू रूपनिर्ग्रहहेतुः । उपदेशग्रहणमुपलक्षणमात्रम् । लौकिकोऽपि हि प्रयोगो गृह्यते । उपदेशाद्धि शब्दरूपं निश्चीयते, लौकिकाद्वा प्रयोगात् । मतुप् चायं लौकिके प्रयोगे नात्वन्तः श्रूयते, नाप्युपदेशे; अतोऽत्वन्ततया नावधार्यते । ततश्चानवधा-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


असम्बुद्धावित्येव—हे गोमन् ! । हे सुपयः ! ॥

**अनुनासिकस्य क्विझलोः क्ङिति ॥ १५ ॥**

अनुनासिकान्तस्याङ्गस्य उपधाया दीर्घो भवति क्विप्रत्यये परतो झलादौ च क्ङिति । प्रशान् । प्रतान् । झलादौ किति—शान्तः । शान्तवान् । शान्ता । शान्तिः । ङिति खल्वपि—शंशान्तः । तन्तान्तः । यङ्लुगन्तादयं तस् ।

अनुनासिकस्येति किम् ? ओदनपक् । पक्वः । पक्ववान् । क्विझलोरिति किम् ? गम्यते । रम्यते । क्ङितीति किम् ? गन्ता । रन्ता ॥

**पदमञ्जरी**

पकारान्तत्वात् । ततश्च तस्य ग्रहणं न स्यात्, अन्तग्रहणसामर्थ्यात्तु तावतोऽप्यवधेरत्वन्तस्य ग्रहणम् ॥

*अनुनासिकस्य क्विझलोः क्ङिति* ॥ अङ्गाक्षिप्तस्य झला विशेषणात्तदादिविधिः । कितीत्येतत्सम्भवव्यभिचाराभ्यां झलादेरेव विशेषणम । *प्रतानित्यादि* । 'तमु काङ्क्षायाम्', 'शमु उपशमे', दमु ग्लानौ'—एतेभ्यः क्विप्, 'मो नो धातोः' इति नत्वम् । *यङ्लुगन्तात्तसिति* । तस्य 'सार्वधातुकमपित्' इति ङित्त्वम् । वस्तुकथनं चैतत्, न त्वनेन निष्ठाशङ्का वार्यते; 'ङिति खल्वपि' इत्युपक्रमात् । किञ्च निष्ठायामिटा भवितव्यम्, न चोदित्त्वाद् 'यस्य विभाषा' इति प्रतिषेधः; 'एकाच' इति तत्रानुवृत्तेः ॥

**न्यासः**

र्यमाणत्वान्न गृह्यते । अन्तग्रहणे च सत्यन्तग्रहणसामर्थ्यादत्वन्तमात्रग्रहणे विज्ञायमाने यो ह्युपदेशे प्रयोगैकदेशभूतस्तस्यापि ग्रहणं भवतीत्युपपद्यते मतुपो ग्रहणम् ॥

अनुनासिकस्य क्विझलोः क्ङिति ॥ क्विप्प्रत्यये परतो झलादौ च क्ङितीति । अत्र 'क्ङिति'त्येतज्झलादावित्यनेनैव सम्बध्यते, न तु क्विप्प्रत्ययेन; यतः सम्भवव्यभिचारे हि विशेष्यविशेषणभावो भवति । कित्त्वङित्त्वयोस्तु सम्भवव्यभिचारावुभावपि झलादौ स्तः, न तु क्वौ । तथा हि कित्त्वस्य क्वावव्यभिचारः, ङित्त्वस्य त्वसम्भवः । प्रशान्, प्रतान्, प्रदानिति । 'शमु उपशमे', 'तमु कांक्षायाम्', दमु उपशमे'—एतेभ्यः प्रपूर्वेभ्यः क्विपि 'मो नो धातोः' इति नत्वम् । शंशान्त इति । शमेर्यङ्, द्विवचनम्, 'नुगतोऽनुनासिकान्तस्य' इति नुक्, 'यङोऽचि च' इति यङो लुक्, लट्, तस्, तस्य 'सार्वधातुकमपित्' इति ङित्त्वम्, 'चर्करीतञ्च' इत्यदादौ पाठाददादित्वाच्छपो लुक् ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## अज्झनगमां सनि ॥ १६ ॥

अजन्तानामङ्गानां हनिगम्योश्च सनि झलादौ परे दीर्घो भवति । अजन्तानाम्—विवीषति । तुष्टूषति । चिकीर्षति । जिहीर्षति । हन्–जिघांसति । गम्–अधिजिगांसते ।

॥ गमेरिङादेशस्येति वक्तव्यम् ॥ । इह मा भूत्–संजिगंसते वत्सो

### पदमञ्जरी

*अज्झनगमां सनि* ॥ अत्र यद्युपधाया इत्यनुवर्त्तेत, अजन्तेषु व्यञ्जनस्य दीर्घप्रसङ्गः । तस्मान्निवृत्तम् । यद्येवम्, हनिगम्योरलोऽन्त्यस्य दीर्घप्रसङ्गः ? तन्न, 'अचश्च' इत्युपस्थानात् । न चैवमभ्यासस्य प्रसङ्गः, हन् स इति स्थिते परत्वाद्दीर्घत्वे कृते पुनः प्रसङ्गविज्ञानात् द्विर्वचनम् । अस्तु वाऽभ्यासस्यापि दीर्घः, 'ह्रस्वः' इति ह्रस्वो भविष्यति । *जिघांसतीति* । 'अभ्यासाच्च' इति कुत्वम् । *अधिजिगांसत इति* । 'इङश्च' इति गमिरादेशः ।

इह बहवो गमयः—'गम्लृ सृप्लृ गतौ' इति धातुः, 'णौ गमिरबोधने', सनि चेतीणादेशः, 'इण्वदिक इति वक्तव्यम्' इतीक आदेशः, 'इङश्च' इतीङादेशश्चेति; तत्राविशेषात्सर्वत्र प्रसङ्गे सत्याह—*गमेरिङादेशस्येति वक्तव्यमिति* । इण इक इङश्चैक एवादेशः स इहोपलक्ष्यते, अतो धातुमेकं वर्जयित्वा त्रयाणामादेशस्य ग्रहणम्, तथा च वक्ष्यति–अजादेशस्य गमेरिति । एवं चेणिकोरादेशस्यापि गमेर्भावकर्मणोरात्मनेपद इडभावे झलादौ सनि 'अज्झन' इति दीर्घो भवत्येव—सञ्जिगांस्यते इति । *सञ्जिगंसत इति* । गमेः 'समो गम्यृच्छि' इत्यात्मनेपदं

### न्यासः

**अज्झनगमां सनि** ॥ 'उपधायाः' इति निवृत्तम्, अत एव वृत्तौ 'उपधायाः' इति नोक्तम् । कः पुनस्तदनुवृत्तौ दोषः स्यात् ? व्यञ्जनस्यापि दीर्घत्वं प्रसज्येत । चिकीर्षति, तुष्टूषतीत्यत्र हि यथा 'अचः' इति वचनादचो भवति, तथा 'उपधायाः' इति वचनादनचोऽपि स्यात् । यद्येवम्, हनिगम्योरच्युपधाया दीर्घत्वं न स्यात्, कस्य तर्हि स्यात् ? 'अलोऽन्त्यस्य' इत्यन्त्यस्य ? नैतदस्ति; अत्र हि दीर्घग्रहणेन यद् 'अचः' इत्युपस्थापितं तद्धनिगमिभ्यां विशेषयिष्यामः–अचो दीर्घो भवति स चेद्धनिगम्योरिति । यद्येवम्, अभ्यासस्यापि स्यात् ? नैतत्; कृतदीर्घस्यैव द्विर्वचनविधानात् । कुत एतत् ? द्विर्वचनाद्, दीर्घस्य परत्वात् । तुष्टूषतीति । 'शर्पूर्वाः खयः शेषः' । चिकीर्षतीति । 'ऋत इद्धातोः' इतीत्वम्, रपरत्वम्, 'हलि च' इति दीर्घः, अभ्यासस्य 'कुहोश्चुः' इति चुत्वम् । जिघांसतीति । 'अभ्यासाच्च' इति हन्तेः कुत्वम्—घकारः, अभ्यासस्य पूर्ववच्चुत्वम्–झकारः, तस्य 'अभ्यासे चर्च' इति जकारः । अधिजिगांसत इति । 'इङश्च' इतीङो गमिरादेशः 'पूर्ववत् सनः' इत्यात्मनेपदम् । सञ्जिगंसत इति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

 Digitized by Arya Samaj Foundation Chennai and eGangotri 

मात्रेति । स्वर्गं लोकं समजिगांसदिति छन्दसि यदनिङादेशस्यापि दीर्घत्वं दृश्यते, तद् 'अन्येषामपि दृश्यते' इत्यनेन भवति ।

अथ वा—इहाज्ग्रहणं न कर्त्तव्यम्, सनि दीर्घो भवतीत्येतावदेव सूत्रं कर्त्तव्यम् । तत्राचा गृह्यमाणस्य विशेषणे सति सिद्धम-

पदमञ्जरी

विहितम्, तत्र च 'अकर्मकात्' इति वर्तते, तेन सनन्तादपि 'पूर्ववत्सनः' इत्यात्मनेपदमकर्मकादेव भवति, ततश्च मातरमित्यपपाठः, । *मात्रेति* तृतीयान्तं पठितव्यम् । *सञ्जिगांसदिति* । सम्पूर्वाद् गमेः सन्, सकर्मकत्वात् परस्मैपदम्, छान्दसत्वादिडभावः, 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडभावः । प्रायेण तु वृत्तौ साट्कं पठ्यते ।

*इहेत्यादिना* 'गमेरिङादेशस्येति वक्तव्यम्' इत्येतत्प्रत्याचष्टे । कथं पुनः 'सनि दीर्घः' इत्येतावति सूत्रे क्रियमाणेऽजन्तस्यैव दीर्घत्वं लभ्यते ? अत आह—*तत्राचेत्यादि* । 'सनि दीर्घः' इति सूत्रे क्रियमाणेऽङ्गस्येति वर्त्तते, दीर्घश्रुत्या वा 'अचश्च' इत्युपतिष्ठते, तत्र विशेषणविशेष्यभावं प्रति कामचारादुत्तरत्र हनिगम्योदीर्घविधानाद् गृह्यमाणमङ्गमचा विशेष्यते, तेन त्वचाङ्गम्, विशेषणेन तदन्तविधिर्भवतीति सिद्धमजन्तस्य दीर्घत्वम्, यथा 'अकृत्सार्वधातुकयोः' इत्यत्र ।

न्यासः

अत्रापि 'पूर्ववत् सनः' इति तङ् । गमेर्ह्यसनन्तात् 'समो गम्यृच्छि' इत्यादिनात्मनेपदं विहितम्, इङोऽपि 'अनुदात्तङितः' इत्यादिना यदि गमेरिङादेशस्येति वचनं तत् कथं छन्दस्यनिङादेशस्यापि स्वर्गं लोकं समजिगांसदित्यत्र दीर्घत्वं दृश्यते ? इत्याह—छन्दसि यदनिङादेशस्यापीत्यादि । समजिगांसदिति । गमेः सनन्ताल्लुङ्, 'गमेरिट् परस्मैपदेषु' इतोडागमो न भवति; 'न वृद्भ्यश्चतुर्भ्यः' इत्यत्र नेति योगविभागात् ।

इहेत्यादिना यदुक्तम् 'गमेरिङादेशस्य' इति, तत् प्रत्याचष्टे । 'सनि' इति प्रथमो योगः, हनिगम्योस्तु दीर्घविधानाय 'हनिगम्योः' इति द्वितीयो योगः कर्त्तव्य इत्यभिप्रायः । कथं पुनरेतावति योगे क्रियमाणेऽजन्तस्यैव दीर्घत्वं सिध्यति ? इत्यत आह—तत्रेत्यादि । गृह्यमाणस्येति । कृद्योगे कर्मणि षष्ठी । विशेषण इति । भावे ल्युट् । विशेषणमनजन्तव्यवच्छेदाय । यत्र ह्रस्वदीर्घप्लुताः शिष्यन्ते तत्र 'अचश्च' इत्येतदुपतिष्ठते, तत्राङ्गस्य दीर्घो भवति, किंविशिष्टस्याचः ? एवमचा गृह्यमाणस्याङ्गस्य विशेषणे व्यवच्छेदे सति विनाप्यज्ग्रहणेनान्तस्यैव दीर्घत्वं सिद्धम्, यथा—'अकृत्सार्वधातुकयोः' इत्यत्र । तस्मादर्थकत्वान्न कर्त्तव्यमेव । किमर्थं तर्हि क्रियते ? इत्याह—तत् क्रियत इत्यादि । प्रवर्त्तनं प्रवृत्तिः=व्यापारः, तस्य भेदो नानात्वम् । प्रवृत्तिभेदश्चैकस्यां सत्यामावृत्तो न सम्भवतीत्यावृत्तिरभ्युपगन्तव्या । ननु च 'अचश्च' इत्यस्योप-



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


जन्तस्य दीर्घत्वम् ? तत्क्रियते प्रवृत्तिभेदेन गमेरपि विशेषणार्थम्—अजन्तस्याङ्गस्य दीर्घो भवति, अजादेशस्य गमेरिति । ततो न वक्तव्यमिदम्—गमेरिङादेशस्येति ॥

तनोतेर्विभाषा ॥ १७ ॥

तनोतेरङ्गस्य सनि झलादौ विभाषा दीर्घो भवति । तितांसति । तितंसति ।

झलीत्येव—तितनिषति । 'सनीवन्तर्ध' इत्यत्र तनोतेरुपसंख्यानादिडागमो भवति विकल्पेन ॥

क्रमश्च क्त्वि ॥ १८ ॥

क्रम उपधाया विभाषा दीर्घो भवति क्त्वाप्रत्यये झलादौ परतः । क्रन्त्वा, क्रान्त्वा ।

पदमञ्जरी

तस्मादिहाज्ग्रहणं न कर्त्तव्यम् । किमर्थं तर्हि क्रियते ? इत्याह—*तत्क्रियत इति* । प्रवृत्तिभेदेन = व्यापारभेदेन । तमेव दर्शयति—*अजन्तस्येति* । एवं च 'अज्ग्रहणं सामर्थ्यादावर्त्तते' इत्युक्तं भवति ॥

*तनोतेर्विभाषा* ॥ *उपसंख्यानेनेति* । 'तनिपतिदरिद्राणामुपसंख्यानम्' इत्यनेन ।

*क्रमश्च क्त्वि* ॥ 'अनुनासिकस्य क्विझलोः क्ङिति' इति नित्यस्य दीर्घस्यापवादोऽयं विकल्पः । *उपधाया इति* । यद्यप्युपधाग्रहणं पूर्वमेव निवृत्तम्, तथापि 'अचश्च' इत्युपस्थानाद्, अन्यस्य चाचोऽसम्भवादेवमुक्तम् ।

न्यासः

स्थाने सति द्वे अज्ग्रहणे भवत इति किमित्यावृत्तिराश्रीयते ? नैतदस्ति; असति ह्यज्ग्रहणे 'अचश्च' इत्यस्योपस्थानं भवति । अत्राज्ग्रहणे तु सति निर्दिष्टस्थानिकत्वाद् 'अचश्च' इत्येतन्नोपतिष्ठते, यथा 'अचो ञ्णिति' इत्यत्रेक्परिभाषा अजन्तस्याङ्गस्येत्यादिना प्रवृत्तिभेदेनाङ्गमचा गमिञ्च विशेषयति । ततो न वक्तव्यमिदमिति । अज्ग्रहणेनैवैतत्प्रतिपाद्यस्यार्थस्यासिद्धत्वात् । न हीङादेशमुक्त्वाऽन्यो गमिरचः स्थाने सम्भवति ॥

तनोतेर्विभाषा ॥ तनोतेरुपसंख्यानादिति । 'तनिपतिदरिद्राणाम्' इत्यस्मात् । श्तिपानिर्देशो यङ्लुङ्निवृत्त्यर्थः । प्रकृतिग्रहणपरिभाषया तदन्तादपि विकल्पः सम्भवेत्—तन्तंसति ॥

क्रमश्च क्त्वि ॥ 'अनुनासिकस्य क्विझलोः' इत्यादिना नित्ये प्राप्ते विकल्पार्थं वचनम् । उपधाया इति । कुत एतत् ? 'अचश्च' इत्यस्योपस्थानात् उपधाया एव क्रमोऽच्त्वात् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

झलीत्येव—क्रमित्वा। प्रक्रम्य, उपक्रम्येति बहिरङ्गोऽपि ल्यबादेशः 'अन्तरङ्गानपि विधीन्बाधते' इति पूर्वमेव, दीर्घत्वं न प्रवर्त्तते॥

## च्छ्वोः शूडनुनासिके च॥ १९॥

'छ' इत्येतस्य सतुक्कस्य, वकारस्य च स्थाने यथासंख्यं श्, ऊठ्—इत्येतावादेशौ भवतः, अनुनासिकादौ प्रत्यये परतः क्वौ झलादौ

### पदमञ्जरी

*क्रमित्वेति*। 'उदितो वा' इति पक्षे इट्। *बहिरङ्गोऽपि ल्यबादेश इति*। एतच्च 'अदो जग्धिर्ल्यप्ति किति' इत्यत्र ल्यब्ग्रहणेन ज्ञापितम्॥

*च्छ्वोः शूडनुनासिके च*॥ यद्यत्र केवलस्य छस्य ग्रहणं स्यात्, तदा पृच्छेरुपदेशानन्तरं तुकि कृते क्तप्रत्यये परतश्छकारमात्रस्य शादेशे षत्वे तुकः ष्टुत्वे पृट्ष्ट इत्यनिष्टं रूपं स्यात्। न च 'निमित्ताभावे नैमित्तिकस्याप्यभावः' इति तुको निवृत्तिः; न हीदं वचनं नापि न्यायः, न हि कृतस्य निवृत्तौ कश्चिन्न्यायः। कथं तर्हि स्थातेत्यत्र सत्वे कृते ष्टुत्वस्य निवृत्तिः, नात्र कृतमेव ष्टुत्वं निवर्त्तते, किं तर्हि? तस्यासिद्धत्वात्पूर्वमेव सत्वम्, तत्र ष्टुत्वस्य प्राप्त्यभावः? तदेवं वितुक्कस्य ग्रहणे दोषं दृष्ट्वाऽऽह—*छ इत्येतस्य सतुक्कस्येति*। कथं पुनर्ज्ञायते—छेत्यस्य सतुक्कस्य ग्रहणमिति? 'यजयाच' इति नङो ङित्करणात्। तद्धि विश्न इत्यत्र गुणो मा भूदिति, सतुक्कस्यैव शादेशे लघूपधत्वाद् गुणप्रसङ्गः। वितुक्कस्य

### न्यासः

*क्रमित्वेति*। 'उदितो वा' इति पक्ष इडागमः। *प्रक्रम्येति*। समासेऽनञ्पूर्वे क्त्वो ल्यप्। ननु दीर्घत्वं क्त्वाप्रत्ययमपेक्षत इत्यन्तरङ्गम्। ल्यबादेशस्त्वनेकपदाश्रयत्वात् समासमपेक्षमाणो बहिरङ्गो भवति। तत्रान्तरङ्गत्वाल्ल्यबादेशात् प्रागेव झलादौ दीर्घत्वं कस्मान्न भवति? इत्याह—*बहिरङ्गोऽपीत्यादि*। 'अदो जग्धिर्ल्यप्ति किति' इत्यत्र ज्ञापितमेतत्—'बहिरङ्गो ल्यबादेशोऽन्तरङ्गान् विधीन् बाधते' इति॥

*च्छ्वोः शूडनुनासिके च*॥ यदि केवलस्य छकारमात्रस्य ग्रहणं क्रियते, तदा 'प्रच्छ ज्ञीप्सायाम्' इत्यस्य क्तप्रत्यये कृतेऽन्तरङ्गत्वात् 'छे च' इति तुकि कृते छकारमात्रस्य शकारादेशे कृते पृट्ष्ट इत्यनिष्टं रूपं स्यात्। सतुक्कस्य ग्रहणे तु सति स्थान्यन्तर्भावात् तुगप्यादेशेन निवर्त्स्यत इति न भवत्येव दोषप्रसङ्ग इत्येतदालोच्य सतुक्कस्य ग्रहणमिति दर्शयितुमाह—*छ इत्येतस्य सतुक्कस्येति*। सतुक्कस्य ग्रहणम् 'यजयाचयतविच्छप्रच्छरक्षो नङ्' इति ङित्करणादवगम्यते। तस्य हि ङित्करणस्यैतत् प्रयोजनम्—विश्न इत्यत्र 'पुगन्तलघूपधस्य' इति गुणो मा भूदिति; यदि चात्र तुग्रहितः केवल एवच्छकारः स्थानित्वेन परिगृह्यते तदा तुकि कृते छकारमात्रस्य शकारे कृते गुरूपधत्वादेव गुणो न भविष्यतीति ङित्करणमनर्थकं स्यात्। सतुक्कस्य

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



च क्ङिति । प्रश्नः । विश्नः । अन्तरङ्गत्वात् 'छे च' इति तुकि कृते सतुक्कस्य शादेशः ।

पदमञ्जरी

तु शादेशे तकार उपधा, नेकारः, 'संयोगे गुरु' इति गुरुसंज्ञश्च । पृच्छेस्तु क्ङिति सम्प्रसारणार्थं नङो ङित्त्वं न भवति; 'प्रश्ने चासन्नकाले' इति निपातनात् । तस्मात्सतुक्कस्य ग्रहणम् । एवं च कृत्वा 'पृष्टप्रतिवचने' इति निर्देशोपपत्तिः । ननु सतुक्कस्य ग्रहणेऽपि 'अलोऽन्त्यस्य' इति छमात्रस्य प्रसङ्गः ? न ह्यनर्थके-ऽलोन्त्यविधिरस्ति । अथ सतुक्केन च्छेनाङ्गस्य विशेषणात्तदन्तस्याङ्गस्यालो-ऽन्त्यस्य प्रसङ्गः ? तदापि 'निर्दिश्यमानस्यादेशा भवन्ति' इति सह तुका भवि-ष्यति । *अन्तरङ्गत्वादिति* । उपदेशान्तरं प्रसङ्गादन्तरङ्गत्वम्, शस्तु बहिरङ्गः, कथम् ? उत्पन्ने प्रत्ययेऽङ्गसंज्ञा, अङ्गस्य च शादेशः । न च वार्णादाङ्गं बलीयः; भिन्नकालत्वात् ।

न्यासः

तु ग्रहणे कृते तुकि सतुक्कस्यैव शकारादेशः क्रियते, ततश्च लघ्व्यामुपधायां समुप-जातायां गुणः प्राप्नोतीति तत्प्रतिषेधार्थं ङित्करणं क्रियमाणमर्थवद्भवतीत्येके वर्णयन्ति, एतच्चायुक्तम्; सतुक्कस्याप्यादेशे कृते निष्ठितमङ्गं भवति, प्रयोगार्हत्वात् । तत्र 'अङ्गवृत्ते पुनरङ्गवृत्तावविधिर्निष्ठितस्य' इत्यनया परिभाषया गुणो न भविष्य-तीति । तस्मात् सतुक्कस्याप्यादेशे क्रियमाणे सति ङित्करणमनर्थकमेव, कथं तेन सतुक्कस्य ग्रहणमवसीयते ? एवं तर्हि 'ननौ पृष्टप्रतिवचने' इति निर्देशात् सतुक्कस्य ग्रहणमवसीयते । तुग्रहितस्य ग्रहणे पृट्ष्टेत्येवं यथोक्तं प्राक् । नङस्तु ङित्करणम-नित्यमागमशासनमिति ज्ञापनार्थम् । अनित्यत्वे हि तस्य यदा तुगभावस्तदाऽसति ङित्करणे गुणः प्रसज्येत । ननु चासति प्रयोजने ज्ञापकं भवति, अस्ति च तस्य ङित्करणस्य प्रयोजनम्, किं तत् ? ग्रह्यादिसूत्रेण प्रच्छेः सम्प्रसारणं यथा स्यादिति ? नैतदस्ति; न हि प्रच्छेर्नङि सम्प्रसारणमिष्यते । कथमेतज् ज्ञायते ? 'प्रश्ने चासन्नकाले' इति निर्देशात् । तदेतत् 'ङित्करणमनित्यमागमशासनम्' इत्यस्य ज्ञापकमेव । अथ तु सतुक्कस्यापि ग्रहणे कथं सतुक्कस्यादेशो भवति, यावता 'अलोऽन्त्यस्य' इति वचनादन्त्यस्यैव स्यात् ? नैतदस्ति; सतुक्कस्य ग्रहणसामर्थ्यान्न भविष्यति । एवमपि तदन्तस्याङ्गस्य स्यात् । 'निर्दिश्यमानस्यादेशा भवन्ति' इति तदन्तस्य न भविष्यति । प्रश्नः, विश्न इति । 'प्रच्छ ज्ञीप्सायाम्', विच्छ गतौ', 'यजयाच' इति नङ् ।

अन्तरङ्गत्वादित्यादि । 'छे च' इति ह्रस्वस्य वर्णस्य तुग् विधीयत इति वर्णाश्रय-त्वात् तुगन्तरङ्गः, शकारस्त्वङ्गाश्रयः । तत्राङ्गस्यैव तावत् प्रत्ययाश्रयत्वाद् बहिरङ्गत्वम् । किं पुनस्तदाश्रयस्य शकारस्य, ननु च 'वार्णादाङ्गं बलीयः' इति शकारस्यैव बली-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



वकारस्य ऊठ्—स्योनः। सिवेरौणादिके नप्रत्यये लघूपधगुणात् पूर्वमूठ् क्रियते, तत्र कृतेऽन्तरङ्गत्वाद् यणादेशो नानाश्रयत्वाच्च न वार्णादाङ्गं बलीयो भवति।

पदमञ्जरी

*औणादिके नप्रत्यय इति*। साक्षात्सिवेरविहितोऽपि बाहुलकान्नप्रत्ययः। *पुगन्तलघूपधगुणात्पूर्वमूठ् क्रियते इति*। अन्तरङ्गत्वादिति वक्ष्यमाणो हेतुरिहाप्यपकृष्टव्यः, गुणो हि बह्वपेक्षो बहिर्भूतप्रत्ययापेक्षश्च, ऊठ् तु विपर्ययादन्तरङ्गः, तेन स एव पूर्वं क्रियते। *तत्र कृतेऽन्तरङ्गत्वाद्यणादेश इति*। अन्तर्भूताजपेक्षत्वाद्यणोऽन्तरङ्गत्वम्, गुणस्तु पूर्ववदेव बहिरङ्गः। *नानाश्रयत्वाच्चेति*। यत्रैकमेव निमित्तीकृत्याङ्गवर्णयोर्युगपत्प्राप्तिस्तत्र 'वार्णादाङ्गं बलीयः', तथा 'अचो ञ्णिति' इति वृद्धेरवकाशः—गौरिति, यणोऽवकाशः—दध्यत्रेति; चकारेत्यत्र कृ+अ इति स्थिते उभयप्रसङ्गे परामपि वृद्धिं बाधित्वान्तरङ्गत्वाद्यणि प्राप्ते 'वार्णादाङ्गं बलीयः' इति वृद्धिर्भवति।

न्यासः

यस्त्वम्? नैतदस्ति; यत्र ह्याङ्गवार्णयोर्युगपदेकनिमित्तमाश्रित्य प्राप्तिस्तत्रास्या उपस्थानं भवति। यथेयायेत्यत्र हि यमेवाकारमाश्रित्य 'इको यणचि' इत्यभ्यासेकारस्य यणादेशः प्राप्नोति, तमेवाकारमाश्रित्य 'अभ्यासस्यासवर्णे' इतीयङपि। तत्र युगपदेकत्रोभयप्राप्तौ 'वार्णादाङ्गं बलीयः' इत्यस्या उपस्थाने सत्यङ्गकार्यमिङेव भवति। इह तु प्रागेव नङुत्पत्तेश्छकारमाश्रित्य तुक् प्राप्नोति, उत्तरकालं नङि विहिते तदाश्रयः शकार इति भिन्नाश्रयत्वम्, अतो नेयमुपतिष्ठते।

सिवेरिति। 'षिवु तन्तुसन्ताने' इत्यस्य। औणादिके नप्रत्यय इति। 'धापृवस्यजतिभ्यो नः' इति वादिभ्यो विधीयमानो नप्रत्ययो बहुलवचनात् सिवेरपि भवति। केनचित् 'सिवेष्टेर्यू च' इत्यनेन सूनशब्दस्य व्युत्पत्तये नकारो विधीयते, दीर्घोच्चारणसामर्थ्यात्, तत्र गुणो न भवति। ये तु स्योनशब्दव्युत्पत्तय एवेदं सूत्रं वर्णयन्ति, तेषां दीर्घोच्चारणमर्थकं स्यात्। न हि ह्रस्वस्य दीर्घस्य वा गुणे कृते कश्चिद् विशेषोऽस्ति। लघूपधगुणात् पूर्वमूठ् क्रियत इति। अन्तरङ्गत्वादिति। वक्ष्यमाणो हेतुरिहापि द्रष्टव्यः। गुणो ह्यार्द्धधातुकमङ्गसम्बन्धिनीञ्चोपधां लघ्वीमिग्लक्षणां विशिष्टामेवाश्रयति। ऊडादेशस्त्वनुनासिकादिं प्रत्ययमङ्गसम्बन्धिताविशिष्टं वकारमात्रम्। तस्माद् गुणो बहिरङ्गः। ऊडादेशस्त्वन्तरङ्गः। अतोऽन्तरङ्गत्वाल्लघूपधगुणात् पूर्वमेवोठ् क्रियत। तत्र कृतेऽन्तरङ्गत्वाद् यणादेश इति लघूपधगुणात् पूर्वं क्रियत इति प्रकृतेन सम्बन्धः। अन्तरङ्गत्वं तु वर्णाश्रयत्वाद् यणादेशस्य। ननु च 'वार्णादाङ्गं बलीयः' इत्याङ्गस्य गुणस्यैव बलीयस्त्वम्, ततः स एव यणादेशात् पूर्वं कस्मान्न क्रियते? इत्याह—नानाश्रयत्वादित्यादि। यत्र ह्युभावप्याङ्गवार्णौ विधी एकं निमित्त-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



क्वौ छस्य—शब्दप्राट्। 'क्विब्वचि' इत्यादिनौणादिकः क्विप्, दीर्घश्च। गोविट्। वकारस्य—अक्षद्यूः। हिरण्यष्ठ्यूः। 'असिद्धं बहिरङ्गमन्तरङ्गे' इति 'नाजानन्तर्ये' इति प्रतिषिध्यते।

झलादौ छस्य—पृष्टः। पृष्टवान्। पृष्ट्वा। वकारस्य—द्यूतः।

पदमञ्जरी

*शब्दप्राडिति*। व्रश्चादिषत्वम्, जश्त्वचर्त्वे। *गोविडिति*। 'विच्छ गतौ', गां विच्छायतीति विगृह्य 'आयादय आर्धधातुके वा' इत्यायप्रत्ययाभावपक्षे क्विप्। *अक्षद्यूः, हिरण्यष्ठ्यूरिति*। दिविष्ठिविभ्यां क्विप्, 'सुब्धातुष्ठिवुष्वष्कतीनां प्रतिषेधः' इति सत्त्वाभावः। ननु चान्तरङ्गे यणि बहिरङ्गस्योठोऽसिद्धत्वाद्यणादेशेन नात्र भवितव्यम्? अत आह—*असिद्धं बहिरङ्गमन्तरङ्ग इति*। *नाजानन्तर्य इति*। अस्यायमर्थः—यत्रान्तरङ्गे बहिरङ्गे वाऽचोरानन्तर्यमाश्रीयते तत्र बहिरङ्गपरिभाषा न प्रवर्त्तत इति। एतच्च 'षत्वतुकोरसिद्धः' इत्यत्र ज्ञापि-

न्यासः

माश्रित्य प्राप्नुतस्तत्रेयमुपतिष्ठत इत्युक्तम्। इह तु यणादेश ऊडाश्रयः, गुणस्त्वार्द्धधातुकाश्रय इति भिन्नाश्रयत्वम्। अतो नेयं परिभाषोपतिष्ठते।

शब्दप्राडिति। शब्दं पृच्छतीति 'क्विब् वचि' इत्यादिना क्विप्, दीर्घश्च, व्रश्चादिसूत्रेण शकारस्य षकारः, तस्यापि जश्त्वं डकारः, तस्यापि चर्त्वं टकारः। गोविडिति। विच्छ गतौ'। गां विच्छतीति क्विप्। 'क्विप्च' इत्यनेन। तथा अक्षद्यूर्हिरण्यष्ठ्यूरित्यत्रापि दिविष्ठिविभ्याम्। ननु च यणादेशोऽन्तरङ्गो वर्णाश्रयत्वात्। ऊडादेशस्तु प्रत्ययाश्रयत्वाद् बहिरङ्गः, तत्र 'असिद्धं बहिरङ्गमन्तरङ्गे' इति यणादेशेनात्र न भवितव्यम्? इत्यत आह—असिद्धं बहिरङ्गमन्तरङ्ग इत्यादि। यत्र द्वयोरच्चोरानन्तर्य्यं तत्रैषा प्रतिषिध्यते 'नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः' इति। अस्या अयमर्थः—अचोरानन्तर्ये सति बहिरङ्गपरिभाषा न प्रकल्पते न भवतीत्यर्थः। अत्रार्थे ज्ञापकम्—'षत्वतुकोरसिद्धः' इति तुकि कर्त्तव्येऽसिद्धवचनम्। तस्य ह्येतदेव प्रयोजनम्—अधीत्येत्यत्र सवर्णदीर्घस्यासिद्धत्वाद् ह्रस्वलक्षणस्तुग् यथा स्यादिति। यदि चाचोरानन्तर्य्ये बहिरङ्गपरिभाषा स्यात् तदैकपदाश्रयत्वादन्तरङ्ग तुकि कर्त्तव्ये पदद्वयाश्रयत्वाद् बहिरङ्गस्यैकादेशस्यासिद्धत्वं भविष्यतीति किमसिद्धवचनेन? तत् क्रियतेऽजानन्तर्ये बहिरङ्गपरिभाषा नास्तीति ज्ञापनार्थम्। हिरण्यष्ठ्यूरित्यत्र 'धात्वादेः षः सः' इति सत्वं न भवति; 'सुब्धातुष्ठिवुष्वष्कतीनां प्रतिषेधो वक्तव्यः' इति वचनात्।

पृष्ट इति। ग्रह्यादिसूत्रेण सम्प्रसारणम्, पूर्ववत् षत्वं ष्टुत्वञ्च। द्युभ्यामिति। 'दिव उत्' इत्युत्त्वम्।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



द्यूतवान् । द्यूत्वा । क्ङितीत्येव—द्युभ्याम् । द्युभिः ।

केचिदत्र 'क्ङिति' इति नानुवर्त्तयन्ति । कथं द्युभ्याम्, द्युभिरिति, ऊठि कृते ? 'दिव उत्' इति तपरत्वान्मात्राकालो भविष्यति ।

**पदमञ्जरी**

तम् । *द्युभ्यामिति* । ऊठोऽवकाशः—द्यूतः, द्यूतवान्, उत्वस्यावकाशः—अहर्विमलद्यु; द्युभ्यामित्यादावुभयप्रसङ्गे परत्वादूठ्प्रसङ्गः, । तस्मात् क्ङितीत्यत्रानुवर्त्तयितव्यमिति भावः ।

*केचिदित्यादि* । तेषां मते हि दिविप्रभृतीनां यङ्लुगन्तानां तिप्सिपोरीडभावपक्षे ऊठि सति देदिवीति देद्योति, देदिवीषि, देद्योषीति । पूर्वत्र तु पक्षे वलिलोपे—देदेति, देदेवीति ।

*कथं द्युभ्यां द्युभिरिति ऊठि कृत इति* । क्ङितीत्यस्यानुवृत्तत्वात् अत्रापि परत्वादूठा भाव्यम्, ऊठि च कृते द्यूभ्यां द्यूभिरिति भवितव्यमिति प्रश्नः । *दिव उदिति तपरकरणादित्यादि* । अत्र हि तपरकरणं न कर्त्तव्यम्; यतोऽर्द्धमात्राकालस्य व्यञ्जनस्य मात्राकालो ह्रस्व एव सिद्धः, तत्क्रियते लक्षणान्तरेणापि दीर्घो मा भूदिति । तेन परमप्यूठं बाधित्वा 'दिव उत्' इत्यनेन मात्राकालो भविष्यतीत्यर्थः ।

*अथ वा*—'ऊठि कृते' इत्यस्य परेण परिहारग्रन्थेन सम्बन्धः । तत्रायमर्थः—क्रियतां सामान्येन क्ङिति चान्यत्र च ऊठ्, कृते तु तस्मिन्नेकदेशविकृतस्यानन्यत्वात्तस्यैवोठः स्थाने तपरत्वान्मात्राकालो भविष्यति । *तेषामित्यादि* । क्ङिद्ग्रहणे हि निवृत्ते सति वृजादावपि शस्थानेन विधानाद् व्रश्चादिसूत्रे छग्रहणं न कर्त्तव्यम्; शकारस्य षत्वविधानेनैव सर्वस्य सिद्धत्वात् । ये तु क्ङिद्ग्रहणमनुवर्तयन्ति, तेषां वृजादौ शत्वस्याभावाच्छस्येव षत्वं विधातव्यम् । तत्रापि सतुक्कस्य ग्रहणम् ।

**न्यासः**

येऽत्र क्ङितीति नानुवर्त्तयन्ति तेषामन्यत्राप्यनेन विधिना भवितव्यम्, ततः द्युभ्यां द्युभिरिति न सिध्यतीति मन्यमान आह—कथं द्युभ्यां द्युभिरिति ऊठि कृत इति । ऊठि कृते न किञ्चित् सिध्यतीत्यर्थः । दिव उदिति तपरत्वान्मात्राकालो भविष्यतीति । 'दिव उत्' इत्यत्र तपरकरणं न कर्त्तव्यम् । यद्यपि हि 'भाव्यमान उकारः सवर्णान् गृह्णाति', तथाप्यान्तरतम्यादर्धमात्राकालस्य व्यञ्जनस्य मात्राकाल एवोकारो भविष्यति । न दीर्घ इति किं तन्निवृत्त्यर्थेन तपरकरणेन ? तत् क्रियते लक्षणान्तरेणापि यो दीर्घः प्राप्नोति स मा भूदित्येवमर्थम् । तेनात्र 'दिव उत्' इत्यनेनैव तपरत्वान्मात्राकालो भविष्यति, अन्यथा यदि 'च्छ्वोः शूडनुनासिके च' इत्यनेन दीर्घः स्यात्, ततो निष्फलं 'दिव उत्' इत्यत्र तपरकरणं स्यात्; व्यावर्त्याभावात् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



'छशां षः' इत्यत्र छग्रहणं न कर्त्तव्यम् । अनेनैव हि सर्वत्र शकारो विधीयते ।

पदमञ्जरी

ऊडयं यदि टित्स्याद् 'आद्यन्तौ टकितौ' इत्यादिः प्रसज्येत, अस्तु वकारस्य, वलि लोपे सति अक्षद्यूरित्यादि सिद्धम् । न च नाप्राप्ते वलिलोपे आरभ्यमाण ऊड्लोपस्य बाधकः स्यादिति शङ्कनीयम्; भिन्नजातीयत्वात्—ऊडागमः, लोप आदेशः, न च भिन्नजातीयं बाधकं भवति । न हि दधि ब्राह्मणेभ्यो दीयतां कम्बलः कौण्डिन्यायेति दध्नः कम्बलो बाधको भवति ? सत्यम्; उत्तरसूत्रे त्वागमिभेदाद् द्वावूठौ स्याताम्-एको वकारात्पूर्वः, अपर उपधायाः, तस्मादूठ-

न्यासः

अथ वा-'ऊठि कृते' इत्युत्तरेण परिहारग्रन्थेन सम्बध्यते । तत्रायमर्थः—क्रियतां नाम सामान्येन क्ङिति चाक्ङिति चोठ् । कृतेऽपि तत्र 'एकदेशविकृतमनन्यवद्भवति' इति तस्यैव स्थाने 'दिव उत्' इत्यनेन तपरत्वाद् ह्रस्वो भविष्यति । एतदेव हि तस्य प्रयोजनम्—ऊठ्स्थाने भवन् मात्रिको यथा स्यात्, आन्तरतम्याद्दीर्घो मा भूदिति । अस्मिंश्च व्याख्याने यदुक्तम्-'दिव उदिति तपरकरणमूठो निवृत्त्यर्थम्, द्युभ्यां द्युभिरित्यत्र परत्वादूठ् प्राप्नोति' इति तद्विरुध्यते । नहि तेनोत्त्वस्योठः स्थान्यादेभाव उपपद्यते, किं तर्हि ? बाध्यबाधकभावः । तथा हि तस्यायमर्थो वर्ण्यते-ऊठो निवृत्त्यर्थं बाधनार्थं तपरकरणम् । असति हि तस्मिन् परत्वादूठ् प्राप्नोति, तस्मात् तद्बाधनार्थं तपरकरणम् । परमप्यूठं बाधित्वाऽनेनैव मात्रिक उकारो यथा स्यादिति नास्ति विरोधः । ये हि स्थान्यादेशभावमिच्छन्ति त एवं ग्रन्थं व्याचक्षते । ऊठो निवृत्त्यर्थं स्थानिभूतस्योठो निवृत्त्यर्थमित्यर्थः । ऊडादेशे कृत ऊठ्स्थतिमतो निवृत्तिर्यथा स्यादित्येवमर्थं तपरकरणमित्यर्थः । परत्वादूठ् प्राप्नोतीत्यत्र विहितश्च । श्रुतिमानित्यध्याहार्य्यम् । तदेतदुक्तं भवति—अत्र हि परत्वादूड् विहितः सन् श्रुतिमानेव प्राप्नोति, निवृत्तिमांश्चेष्यते । तस्मात् तस्य निवृत्तये तपरत्वमिति । अतपरेऽप्यादेशे विधीयमाने सत्यूठो निवृत्तिर्भवत्येव; निवृत्तिधर्मत्वात् स्थानिनः । उच्यते चेदं तपरकरणमूठो निवृत्त्यर्थमिति । तत्र वचनसामर्थ्याद् यस्यां निवृत्तौ सत्यां विशेषो भवति तदर्थं तपरकरणमिति विज्ञायते । ततश्च सामर्थ्यादिदमुक्तम्—भवत्यूठो ह्रस्वादेशार्थं तपरकरणमिति । यतस्तपर आदेशे सत्यूठो या निवृत्तिः क्रियते तस्यां सत्यां विशेषो भवति, नातपरे । अतपरे ह्यादेशे सत्यान्तरम्याद्दीर्घस्य दीर्घ एव स्यादिति कुतो विशेषः !

किं पुनः क्ङिद्ग्रहणे निवृत्ते सतीष्टं सिध्यति, यदर्थं केचिदत्र क्ङितीति नानुवर्त्तयन्तीत्याह-छशां ष इत्यत्रेत्यादि । क्ङिद्ग्रहणे निवृत्ते सत्यविशेषेण क्ङिति चाक्ङिति चानेन च्छकारस्य शकारो विधीयते, तेन व्रश्चादिसूत्रे छग्रहणं न कर्त्तव्यं

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



ऊठष्ठित्करणम् 'एत्येधत्यूठ्सु' इति विशेषणार्थम्। 'वाह ऊठ्' इत्ययमपि ठिदेव ॥

## ज्वरत्वरस्रिव्यविमवामुपधायाश्च ॥ २० ॥

ज्वर, त्वर, स्रिवि, अव, मव—इत्येतेषामङ्गानां वकारस्य उप-

### पदमञ्जरी

ष्ठित्वमवश्याङ्गीकर्त्तव्यमिति मन्यमानस्तदङ्गीकरणे प्रयोजनमाह—*ऊठष्ठित्करणमिति*। एवं ब्रुवता 'एत्येधत्यूठ्सु' इति ठकारस्य चर्त्त्वेन निर्देश इत्युक्तं भवति। यत्र ठकारो न क्रियते ततो वृद्धिविधावपि नोपादीयेत, ततश्च प्र+ऊहते प्रोहत इत्यत्रापि स्यात्। *वाह ऊडित्ययमपि ठिदेवेति*। अन्यथा तस्य वृद्धिविधौ ग्रहणं न स्यात्, अत्रापि ठकारस्याश्रवणं जश्चत्वचर्त्वाभ्याम् ॥

*ज्वरत्वरस्रिव्यविमवामुपधायाश्च* ॥ 'ज्वर रोगे', 'ञित्वरा सम्भ्रमे', 'स्रिवु

### न्यासः

भवेत्। शकारस्य षत्वविधानेनैव सवस्य षत्वस्याभावाच्छकारस्य षत्वविधानार्थं व्रश्चादिसूत्रे छग्रहणं कर्त्तव्यमेव। अथ तेषां कथं प्रष्टेति सिध्यति, यावता तुकि कृते छकारमात्रस्य षत्वे प्रट्ष्टेत्यनिष्टं रूपं प्राप्नोति? नैष दोषः; ते हि व्रश्चादिसूत्रे सतुक्कस्य च्छकारस्य ग्रहणमिच्छन्ति।

ऊडयं यदि टित् स्याद् 'आद्यन्तौ टकितौ' इत्यादौ स्यात्। तत्र यद्यपि वकारस्य वलि लोपे कृते सत्यक्षद्यूरित्यादि सिध्यति, जूरित्यादि तु न सिध्येत्। टित्त्वे हि सति ज्वरत्वरादिसूत्रेणैको वकारात् पूर्वमूडपरोऽकारादिति द्वावूठौ स्याताम्। तस्मादूठष्ठित्त्वमङ्गीकर्त्तव्यम्, न टित्वम्। तस्यापि ठित्त्वस्य यदि प्रयोजनं न स्याद् वैयर्थं स्यादित्येतच् चेतसि कृत्वोडादेशस्य यट् ठित्त्वं तस्य प्रयोजनं दर्शयितुमाह—ऊठष्ठित्करणमित्यादि। एवं ब्रुवता 'एत्येधत्यूठ्सु' इत्यत्रापि ठित एव ग्रहणं भवति। एवं ह्यूठष्ठित्करणस्य विशेषणार्थतोपपद्यते, यदि तत्रापि ठित एव ग्रहणं भवति, नान्यथा। यद्यत्र ठकारोऽनुबन्धो न क्रियते तदा 'एत्येधत्यूठ्सु' इत्यत्रापि न कर्त्तव्यम्; ठकारानुबन्धवत ऊकारस्य क्वचिदसम्भवात्। एवञ्चोच्यमाने प्रऊहते, प्रोहत इत्यत्रापि वृद्धिः स्यात्। तस्माद् विशेषणार्थं ठित्करणं क्रियते। ठकारस्य तु श्रवणं न भवति; कृतचर्त्वस्य निर्देशात्। यदि तर्हि ठिदयम् 'एत्येधत्यूठ्सु' इत्यत्रापि ठित एव ग्रहणम्, एवं सति 'वाह ऊठ्' इत्यस्य तत्र ग्रहणं न स्यात्, ततश्च प्रष्ठौह इत्यत्र वृद्धिर्न स्यादित्यत आह—वाह ऊठित्ययमपीत्यादि। ठकारस्यापि पूर्ववदेवाश्रवणम् ॥

ज्वरत्वरस्रिव्यविमवामुपधायाश्च ॥ स्रिव्यविमवां वकारस्य पूर्वेणैव सिद्धम्। उपधायास्तु न सिध्यतीति तदर्थमेषां ग्रहणम्। ज्वरत्वरोस्तु वकारस्यापि पूर्वेण न सिध्यति; अनयोरकाररेफाभ्यां झलादेः क्विपश्च व्यवधानात्। तस्मात् तयोर्वकारार्थमुपधार्थञ्च

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



धायाश्च स्थाने ऊडित्ययमादेशो भवति क्वौ परतोऽनुनासिके झलादौ च क्ङिति। जूः, जूरौ, जूरः। जूर्त्तिः। त्वर–तूः, तूरौ, तूरः। तूर्त्तिः। स्रिवि–स्रूः, स्रुवौ, स्रुवः। स्रुतः। स्रुतवान्। स्रुतिः। अव्–ऊः, उवौ, उवः। ऊतिः। मव–मूः, मुवौ, मुवः। मूतः। मूतवान्। मूतिः।

ज्वरत्वरोरुपधा वकारात् परा, स्रिव्यवमवां पूर्वा ॥

राल्लोपः ॥ २१ ॥

रेफादुत्तरयोश्छ्वोर्लोपो भवति क्वौ परतो झलादौ क्ङिति च परतः। मुर्छा–मूः, मुरौ मुरः। मूर्त्तः। मूर्त्तवान्। मूर्त्तिः। 'न ध्याख्यापॄमूर्छिमदाम्' इति निष्ठानत्वाभावः। हुर्छा–हूः, हुरौ,

पदमञ्जरी

गतिशोषणयोः', 'अव रक्षणे', 'मव बन्धने'। ज्वरत्वरेत्यादि। वस्तुकथनम् ॥

*राल्लोपः ॥ मुर्छेति* । 'मुर्छा मोहसमुच्छ्राययोः'। *हुर्छेति* । 'हुर्छा कौटिल्ये'।

न्यासः

ग्रहणम्। जूः, जुरौ, जुर इति। 'ज्वर रोगे' क्विप्, वकारस्योपधायाश्चोठि कृते 'सम्प्रसारणाच्च' इति पूर्वरूपत्वम्। जूर्त्तिरिति। क्तिन्। तूरिति। 'ञित्वरा सम्भ्रमे'। तूर्णं इति। 'रदाभ्यां निष्ठातो नः' इति नत्वम्। स्रूरिति। 'स्रिवु गतिशोषणयोः'। सवर्णदीर्घः। स्रुवौ, स्रुव इति। 'अचि श्नुधातु' इत्यादिनोवङ्। ऊरिति। 'अव रक्षणे'। मूरिति। 'मव बन्धने'।

इह ज्वरादिसम्बन्धिन्या उपधाया ऊड् विधीयते, उपधा चालोऽन्त्यात् पूर्वो वर्णः, अन्त्यत्वञ्चापेक्षितम्; तत्र यथा–श्रेयान्, श्रेयांसावित्यत्र सकारात् पूर्वे ये वर्णास्तेषामन्त्यो यो नकारस्तस्मात् पूर्वो वर्ण उपधा, तथा ज्वरादीनामपि यौ पूर्वौ वर्णौ तयोर्योऽन्त्यो वर्णस्तस्मात् पूर्व उपधा, सा च ज्वरदीनां सम्बन्धिनी; तदवयवत्वात्, ततश्च तस्या अप्युपधाया ऊठा भवितव्यमिति कस्यचित् भ्रान्तिः स्यात्। अतस्तां निराकर्तुं यस्या उपधाया ऊठा भवितव्यं तां दर्शयितुमाह—ज्वरत्वरोरुपधा वकारात् परेत्यादि। यस्या उपधाया ऊठा भवितव्यम्, सेहोपधाशब्देन विवक्षिता। किं पुनः कारणमस्या वृत्तिकारोपदर्शिताया उपधाया ऊड् भवति, नान्यस्याः? क्विझल्भ्यां क्ङिता चोपधाविशेषणात्। अत्र क्विप्प्रत्ययेन झलादिना क्ङिता चोपधा विशिष्यते—ज्वरादीनां योपधा क्वौ झलादौ च परतस्तस्या उपधाया ऊड् भवतीति। अत्र 'येन नाव्यवधानं तेन व्यवहितेऽपि' इत्यादिना यत्रैकेन वर्णेन व्यवधानं वृत्तिकारेणोक्ताया उपधायाः सम्भवति तस्या एवोड् भवति, नान्यस्याः ॥

राल्लोपः ॥ मूर्छेति। 'मुर्छा मोहसमुच्छ्राययोः'। हुर्छेति। 'हुर्छा कौटिल्ये'।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



हुरः । हूर्णः । हूर्णवान् । हूर्त्तिः । राल्लोपे सतुक्कस्य छस्याभावात् केवलो गृह्यते । वकारस्य—'तुर्वी'—तूः, तुरौ, तुरः । तूर्णः । तूर्णवान् । तूर्त्तिः । 'धुर्वी'—धूः । धुरौ । धुरः । धूर्णः । धूर्णवान् । धूर्त्तिः ॥

**असिद्धवदत्रा भात् ॥ २२ ॥**

असिद्धवदित्ययमधिकारो यदित ऊर्ध्वमनुक्रमिष्याम आ अध्यायपरिसमाप्तेस्तद् असिद्धवद्भवतीत्येवं वेदितव्यम् । आ भादिति विषय-

**पदमञ्जरी**

ननु च पूर्वत्र सतुक्कस्य छकारस्य ग्रहणं वितुक्कश्चायम्, तत्कथमत्र लोपः ? इत्याह—*राल्लोप इत्यादि* । ननु यदि नाम रेफात्परः सतुक्कश्छकारो न सम्भवति, किमेतावताऽप्रकृतस्यासंस्थितस्य केवलस्य छस्य ग्रहणं भवति ? तस्मादेवं व्याख्येयम्—पूर्वत्र द्विच्छकारो निर्देशः, तत्रैकः सतुक्कः, अपरस्तु केवलो गृहीतः, त त्र च राल्लोपे सतुक्कस्य छस्यासम्भवात्केवलो गृह्यत इति । यदि द्विच्छकारकः पूर्वत्र निर्देशः, च्छ्वोरिति निर्देशो नोपपद्यते, कथम् ? समाहारद्वन्द्वे एकवचनप्रसङ्गः ? नैष दोषः; पूर्वं द्वयोश्छकारयोः समाहारद्वन्द्वं कृत्वा पश्चाद्वकारेणेतरेतरयोग द्वन्द्वः करिष्यते । एवमपि 'द्वन्द्वाच्चुदषहान्तात्समहारे' इति समासान्तः प्राप्नोति ? तर्हि छकारवकारयोः समाहारद्वन्द्वं कृत्वा तेन सह सतुक्कस्य छस्येतरेतरयोगे द्वन्द्वो भविष्यति । यदि पूर्वत्र वितुक्को गृह्यते, वाञ्छतेः क्विपि शत्वं प्राप्नोति ? इष्टमेवैतत्संगृहीतम्—वांशौ, वांश इत्येव भवितव्यम् ॥

*असिद्धवदत्रा भात्* ॥ आ भादितिनिर्देशः 'आ कडारात्' इत्यनेन व्याख्यातः ।

**न्यासः**

कथं पुनरत्र च्छकारलोपो भवति, यावता नात्र सूत्रे छकार उपात्तः; योऽपि प्रकृतः सोऽपि सतुक्कः, नात्र तुगस्ति, न हि रेफस्य च्छे क्वचित् तुग् विहितः ? इत्याह—राल्लोपे सतुक्कस्येत्यादि । उत्तरत्रानुवृत्तिर्यथा स्यादिति पूर्वसूत्रे च्छकारस्य स्वरितत्वं प्रतिज्ञातम्, न च रः परः सतुक्कः सम्भवति । तत्र सामर्थ्यात् तुग्रहित एवानुवर्त्तते । अथ वा—पूर्वसूत्रे द्विच्छकारनिर्देशः; तत्रैकः सतुक्कः, परस्तुग्रहितः । सम्भवति चागमशासनस्यानित्यत्वाद्वा तुग्रहितश्छकारः । एवञ्च कृत्वा यदुक्तम्—नञो ङित्त्वं गुणप्रतिषेधार्थमिति, तदुपपन्नं भवति । तदेवं यद्यपि पूर्वसूत्रे छकारौ प्रकृतौ, तथापि रेफात् परः सतुक्को न सम्भवति । केवलो यस्तुग्रहितः स एवानुवर्त्तते । तूः, धूरिति । 'तुर्वी थुर्वी दुर्वी धुर्वी हिंसार्थाः' ॥

असिद्धवदत्रा भात् ॥ असिद्धवद् भवतीत्येवं वेदितव्यमिति । सिद्धशब्दोऽयं परिनिष्पन्नवचनः । यथा—सिद्ध ओदन इति । न सिद्धमसिद्धम्, सिद्धकार्याकरणसाध-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



निर्देशः । आभसंशब्दनाद् यदुच्यते तत्र कर्त्तव्ये ।

अत्रेति समानाश्रयत्वप्रतिपत्त्यर्थम् । तच्चेदत्र यत्र भवति तदा

पदमञ्जरी

सिद्धशब्दो निष्पन्नवचनः, न सिद्धोऽसिद्धः—यः पुनः सिद्धोऽपि सिद्धकार्यं न करोति, स तेन तुल्यं वर्त्तत इति असिद्धवत् । किं पुनस्तत् ? प्राधान्यात्कार्यमिति प्राप्तम्, शास्त्रं हि कार्यार्थत्वादप्रधानम् । कार्यस्य चासिद्धत्वे आदेशलक्षणप्रतिषेध एव सिद्ध्येत्—आगहि, जहीति; न तूत्सर्गलक्षणस्य भावः—एधि, शाधीति । कार्यस्यासिद्धत्वे ह्ययमर्थः—आ भाच्छास्त्रीयं कार्यं प्रवृत्तमपि प्रवृत्तकार्यं न करोतीति, अतः प्रवृत्तकार्यनिबन्धनस्यैव कार्यस्य प्रतिषेधः स्यात् । न च एधि, शाधीत्यत्र एत्वशाभावनिबन्धनं किञ्चित्कार्यं प्राप्तं यस्य प्रतिषेधो विज्ञायेत । आभीयं तु शास्त्रं स्वकार्यं कुर्यादेव । अत एत्वशाभावशास्त्राभ्यां स्वकार्ययोरेत्वशाभावयोः प्रवर्त्तितयोः स्थानिनोरभावात्तन्निबन्धनं धित्वं न स्यादेव । शास्त्रासिद्धत्वे त्वयमर्थः—आभीयं शास्त्रं निष्पन्नमपि स्वकार्यं न करोतीति । अत एत्वशाभावशास्त्राभ्यां स्वकार्ययोरेत्वशाभावयोरप्रवृत्तत्वादनिवर्त्तितत्वाच्चैत्वधिभावशास्त्रस्य स्थानिबुद्धिरेव वर्त्तते इति तन्निबन्धनं कार्यं सिध्यति । अतो व्यापकत्वाच्छास्त्रस्यैवासिद्धत्वम्, आ भादिति शास्त्रस्यैव विषयत्वेन निर्देशाच्च ।

यद्ययं स्वतन्त्रविधिः स्यात्, तदा भाद्ग्रहणं विषयनिर्देशार्थं वा स्यात्—आ भाच्छास्त्रेऽत्र कर्त्तव्येऽसिद्धवदिति; असिद्धवद्भवतो वा निर्देशार्थम्; अत्रग्रहणं

न्यासः

र्म्येणासिद्धेन तुल्यं वर्त्तत इत्यसिद्धवत् । किं पुनस्तत् ? प्राधान्यात् कार्यमित्येके—शास्त्रं हि कार्यार्थम्, अतः शास्त्रापेक्षया कार्यस्य प्राधान्यम्; व्याप्तेर्न्यायात् । शास्त्रमित्यन्ये—शास्त्रस्यासिद्धत्वे हि कार्यस्याप्यसिद्धत्वं लभ्यते, शास्त्रनिमित्तकत्वात् कार्यस्य । आ भादिति शास्त्रस्यावधित्वेनोपादानाच्च शास्त्रस्यासिद्धवदभावो युक्तः; अन्यथा हि कार्यमेव किञ्चिदवधित्वेनोपादीयेत । अथाभाद्ग्रहणं किमर्थम्, यावता स्वरितलिङ्गासङ्गादन्तरेणाप्याभाद्ग्रहणमा पादपरिसमाप्तेरसिद्धवदित्यनुवर्त्तिष्यते ? इत्याह—आ भादिति विषयनिर्देश इति । असति ह्या भाद्ग्रहणे न ज्ञायते—कस्मिन् कर्त्तव्य इदं प्रकरणमसिद्धवद्भवति; तस्मादा भादिति विषयनिर्देशः क्रियते—आ भसंशब्दनाद् यद् वक्ष्यते तस्मिन् कर्त्तव्यतया विषयभूतेऽसिद्धवद्भवतीत्यस्यार्थस्य परिज्ञानाय । यद्येवम्, अत्रेत्यतदपार्थकमेतद्विषयनिर्देशार्थं क्रियते, स च विषय आ भादित्यनेनैव निर्दिष्टः ? इत्यत आह—अत्रेत्यादि । समान एक आश्रयो निमित्तं

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


भाद् शास्त्रीयं विधीयते तदाश्रयमेव भवति। व्याश्रयं तु नासिद्ध-वद्भवतीत्यर्थः।

पदमञ्जरी

तु विषयार्थम्—आ भाद्यच्छास्त्रं तदसिद्धवद्भवति अत्रैवाभीये शास्त्रे कर्त्तव्य इति? तत्राद्ये पक्षे असिद्धवद्भवतो निर्देशाभावाद्यत्किञ्चनाष्टाध्याय्यां कार्यं तत्सर्वमाभीये कर्तव्ये असिद्धवत्, ततश्च 'धिन्विकृण्व्योर च' इत्यस्यासिद्ध-त्वाद्धिनुते, कृणुत इत्यतो लोपो न स्यात्। अत्रग्रहणं चानर्थकं स्यात्; अपरि-पूर्णत्वादध्याहारेणैवा भाद्यत्तत्र कर्त्तव्य इत्यर्थलाभात्। द्वितीये तु पक्षे समाना-श्रयत्वं विशेषो न लभ्येत, ततश्च प्रशमय्येति मितो ह्रस्वस्यासिद्धत्वाल्लघुपूर्वो मकारो न भवतीति 'ल्यपि लघुपूर्वात्' इत्ययादेशो न स्यात्; प्रवेभिदय्येति, भिदेर्यङन्ताद् णिचि 'यस्य हलः' इति यलोपस्यासिद्धत्वाल्लघुपूर्वादुत्तरो णिज्न भवति, यकारेण व्यवधानादित्ययादेशो न स्यात्; प्रस्तनय्येति, अदन्तात्स्तन-शब्द इत्यस्माद् णिच्यल्लोपस्यासिद्धत्वाल्लघोरेव परो णिच्, न तु लघुपूर्वादित्य-यादेशाप्राप्तिः; पशुं सनोतीति 'जनसनखन' इति विट्, 'विड्वनोः' इत्यात्वम्, 'सनोतेरनः' इति शत्वम्—पशुषाः, ततः शसि पशुषो नवाजानित्यादावा-त्वस्यासिद्धत्वात् 'आतो धातोः' इत्यालोपो न स्यात; चाखायतेति, खनेर्यङि द्विर्वचनात्परत्वात् 'ये विभाषा' इत्यात्वे द्विर्वचने तृचि आत्वस्यासिद्धत्वात् 'यस्य हलः' इति यलोपः स्यात्; पपुष इत्यादौ च दोषो वक्ष्यते।

अधिकारे आ भाद्ग्रहणं चानर्थकं स्यात्, अधिकारादेव तदर्थलाभात्। तथा हि—'श्नान्नलोपः' इत्यत्रास्मिन्नुपस्थिते सति श्नादुत्तरस्य नकारस्य लोपो भवति स चासिद्धवद्भवतीत्ययमर्थो भवति। एवम् 'अनुदात्तोपदेश' इत्यादावपि, तत्किमसिद्धवद्भवतो निर्देशार्थेनाभाद्ग्रहणेन। न चासिद्धवद्भवत इयत्तावधारणार्थमाभाद्ग्रहणम्, अधिकारे ह्यस्मिन्नवध्यनिर्देशाद् 'युवोरनाकौ'

न्यासः

यस्य तत् समानाश्रयम्, तस्य भावः समानाश्रयत्वम्। तस्य प्रसिद्धये परिज्ञानायात्र-ग्रहणम्, तच्चेतदत्रेति भवतीति वाक्यशेषः। तदित्यनेन यस्यासिद्धवद्भावो विधीयते तन्निर्दिश्यते। अत्रेत्यनेनापि यत्र ततोऽन्यदाभाच्छास्त्रीयं तत् तदाश्रयमेव भवतीति। असिद्धवदिति वक्ष्यमाणेनाभिसम्बध्यते। तदित्यनेन यत्रा भाच्छास्त्रीयं विधीयते तस्य परामर्शः। स आश्रयो निमित्तं यस्य तत् तदाश्रयम्। एवकारोऽवधारणार्थः। तदेवा-सिद्धवद्भवतीति यावत्। व्याश्रयस्तु नासिद्धवद्भवतीति। एवकारेण यद्व्यवच्छिन्नं तद् दर्शयति। यत्र तदाभाच्छास्त्रीयं कार्यं विधीयते ततो भिन्नोऽर्थान्तरभूत आश्रयो यस्य तत् तथोच्यत इत्यर्थ इति। इति करणेनानन्तरं व्याख्यातोऽर्थः प्रत्यवमृश्यते। अत्रग्रहणे समानाश्रयत्वप्रसिद्ध्यर्थे सत्येषोऽस्य सूत्रस्यार्थः सम्पद्यत इति यावत्।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


पदमञ्जरी

इत्यादीनामपि असिद्धत्वं स्यादिति वाच्यम्, 'ङ्याप्प्रातिपदिकात्' इतिवदन्तरेणाप्यवधिनिर्देशमधिकारपरिमाणावगतेः। नन्वसत्याभाद्ग्रहणेऽधिकारेऽस्मिन् सति यत्रैतदधिकृतं तदेव सूत्रं तद्विहितं वा कार्यमत्रग्रहणेन परामृश्येत, अन्यस्य सन्निहितस्याभावात्, ततश्च 'श्नान्नलोपः' इत्यस्यायमर्थः स्यात्—श्नादुत्तरस्य नकारस्य लोपो भवति, स चासिद्धवद्भवत्यत्रैव श्नान्नलोपे कर्त्तव्य इति। एवं सर्वत्र। ततश्च 'चिणो लुक्' इत्यत्रैवेष्टं सिध्येत्-अकारितरामिति, गतः, गतवानित्यादावन्यस्मिन्नाभीयेऽन्यस्याभीयस्यासिद्धत्वानापादनादतो लोपादि स्यादेव। आ भाद्ग्रहणं तु कृत्वा विधावाश्रीयमाणे तस्यैव सन्निहितस्यात्रग्रहणेन परामर्शादाभीयमाभीयेऽसिद्धवत्स्वस्मिन्नन्यस्मिन्वेत्ययमर्थो लभ्यते? उच्यते; अधिकारेऽप्यस्मिन्सति 'अनुदात्तोपदेश' इत्यादौ तत्रैव कर्त्तव्ये तस्यैवासिद्धवचने न किञ्चित्प्रयोजनमस्तीति तत्कार्यविशेषरूपपरित्यागेन इदमसिद्धवद्भवति। 'अत्र कर्त्तव्ये' इत्येवं सामान्यरूपेण परामर्शादन्यस्मिन्नप्यन्यस्यासिद्धत्वं भविष्यति, तदेवमा भाद्ग्रणमतिरिच्यमानं विषयार्थं विज्ञायते। अधिकाराच्चासिद्धवद्भवतोऽवगतिः।

अत्रग्रहणं तु समानाश्रयत्वप्रतिपत्त्यर्थम्, यद्युभे अप्याभीये एकमेव निमित्तमाश्रित्य प्राप्नुतः, एवमन्योऽन्यस्मिन्नसिद्धवद्भवति, किमत्रग्रहणमतिरिच्यते इत्यतः समानाश्रयत्वप्रतिपत्तिः? नेत्याह; अक्षरार्थ एवायम्; तथा हि—'अनुदात्तोपदेश' इत्यत्रास्मिन्नुपस्थिते सत्ययमर्थो भवति—अनुदात्तोपदेशानां लोपो भवति झलादौ क्ङिति परतः, स चासिद्धवद्भवति। कुत्र कर्त्तव्ये? अत्र यदा भात्तत्रेति। कोऽर्थः? क्ङित्यनुनासिकलोपो भवतीत्युक्तम्, अत्रैव क्ङिति निमित्ते सति यदाभीयं प्राप्नोति तत्र कर्त्तव्य इति। एवं सर्वत्र। एवं च विस्पष्टमक्षरैरेव समानाश्रयत्वं प्रतिपादितं भवति।

यद्ययमधिकारस्ततो यत्रास्योपस्थानं तत एवारभ्य यदा भात्तत्रैव तस्यासिद्धत्वं स्यात्, न तु स्वस्मात्पूर्वेष्वितरेषु, यद्देशस्थेन हि वक्ता आङुच्चार्यते तत एवारभ्य मर्यादाभिविधिप्रतिपत्तिः, यथा—आ पाटलिपुत्राद्वृष्टो देव इति, एवं च 'ध्वसोरेद्धौ' इत्यस्यायमर्थो भवति—अस्तेर्हौ एकारः, स चेत आरभ्य यदा भात्तत्रासिद्धवदिति, ततश्च पूर्वत्र घित्वे नासिद्धवत्स्यात्; स्वतन्त्रे तु विधौ अत्रैव प्रदेशे आङर्थं प्रतिपादयन् अत एवारभ्य यदा भात्तदसिद्धवद्भवत्यत्रैव कर्त्तव्य इति 'श्नान्नलोपः' इत्यारभ्य 'ऋत्व्यवास्त्व्य' इत्येवमन्तानां सर्वेषामेवान्योऽन्यस्मिन्नसिद्धत्वमापादयति? उच्यते; द्वौ पक्षौ—शब्दाधिकारश्चार्थाधिकारश्च; ततश्च शब्दाधिकारे स्यादेष दोषः; अर्थाधिकारे त्वस्मिन्नेव प्रदेशे आङर्थं प्रतिपादयन् पूर्ववत्प्रतिपादयति, स च प्रतिपादितार्थादुत्तरत्रोपतिष्ठते,

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

असिद्धवचनमुत्सर्गलक्षणभावार्थम्, आदेशलक्षणप्रतिषेधार्थं च । एधि, शाधीत्यत्र एत्वशाभावयोः कृतयोर्झल्लक्षणं धित्वं न प्राप्नोति, असिद्धत्वाद्भवति । आगहि, जहीत्यत्रानुनासिकलोपे जभावे च 'अतो हेः' इति लुक् प्राप्नोति, असिद्धत्वान्न भवति ।

पदमञ्जरी

उपस्थितश्च तत्रतत्रोपस्थितेनात्रग्रहणेन विशेष्यत इति सर्वमिष्टं सिद्धम् । तदनेन सूत्रेणायमर्थः सम्पादितः—'श्नान्नलोपः' इत्यारभ्यापादपरिसमाप्तेर्यानि सूत्राणि तान्यन्योऽन्यस्मिन्नसिद्धवद्भवन्ति, तानि चेत्तुल्यनिमित्तानीति । तदेतत्सर्वं वृत्तौ यथास्थानं योज्यम् । तदाश्रयमेव भवतीत्यत्रासिद्धवदिति वक्ष्यमाणमपकृष्टव्यम् । विभिन्नाश्रयम्=व्याश्रयम्, विभिन्ननिमित्तमित्यर्थः ।

*असिद्धवचनमित्यादि* । उत्सृज्यते आदेशेन निवर्त्येत इत्युत्सर्गः=स्थानी, स लक्षणं निमित्तं यस्य तदुत्सर्गलक्षणम्, तस्य भावः=प्रवृत्तिर्यथा स्यात् । एतच्च शास्त्रासिद्धत्वाश्रयणाल्लभ्यत इत्युक्तम् । *आगहीति* । 'बहुलं छन्दसि' इति शपो लुक्, 'अनुदात्तोपदेश' इत्यादिनानुनासिकलोपः । *जहीति* । 'हन्तेर्जः' ।

न्यासः

किमर्थं पुनरसिद्धवद्भवतीत्यत आह—असिद्धवचनमित्यादि । उत्सर्गशब्देन स्थान्यत्रोपदिश्यते, उत्सृज्यत आदेशेन निवर्त्यत इति कृत्वा । उत्सर्गसाधर्म्याद्वोत्सर्गः । यथा ह्युत्सर्गस्य सामान्येन प्रवृत्तस्य सतः कुतश्चिद्विशेषान्निवृत्तिर्भवति, एवं स्थानिनोऽप्यादेशात् । उत्सर्गो लक्षणम्=निमित्तं यस्य तदुत्सर्गलक्षणम्, आदेशो लक्षणं निमित्तं यस्य तदादेशलक्षणम्, तयोर्यथाक्रमं भावप्रतिषेधौ यथा स्याताम्—इत्येवमर्थमसिद्धवचनम् । एधि, शाधीति । उत्सर्गलक्षणभावस्योदाहरणम् । 'अस भुवि', 'शास अनुशिष्टौ', लोट्, सिप्, 'सेर्ह्यपिच्च' इति हिरादेशः, अदादित्वाच्छपो लुक्, 'श्नसोरल्लोपः' इत्यकारलोपः । परत्वान्नित्यत्वाच्च धिभावात् पूर्वम् 'घ्वसोरेद्धावभ्यासलोपश्च' इत्येत्त्वम् । शासेरपि नित्यत्वात् 'शा हौ' इति शादेशः पूर्वं धिभावात् तयोरेत्त्वशाभावयोः 'हुझल्भ्यो हेर्धिः' इति झलन्तलक्षणं धित्वं न प्राप्नोति, निमित्ताभावात् । असिद्धत्वाद्भवति । आगहि, जहीति । आदेशलक्षणप्रतिषेधस्योदाहरणम् । आगहीति—गमेराङ्पूर्वाल्लोट्, सिप्, तस्य हिरादेशः, 'बहुलं छन्दसि' इति शपो लुक्, 'अनुदात्तोपदेश' इत्यादिनानुनासिकलोपः । जहीति—हन्तेर्लोडादि पूर्ववत्, अदादित्वाच्छपो लुक्, 'हन्तेर्जः' इति जभावः । अत्रेदानीमनुनासिकलोपजादेशयोरुत्तरकालम् 'अतो हेः' इति हेर्लोपः प्राप्नोति; असिद्धत्वान्न भवति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



आ भादिति किम् ? अभाजि । रागः । 'अत उपधायाः' इति वृद्धौ कर्तव्यायां नलोपो नासिद्धो भवति ।

अत्रग्रहणं किम् ? पपुषः पश्य । चिच्युषः पश्य । लुलुवुषः पश्य । वसुसम्प्रसारणमाल्लोपे यणादेशे उवङादेशे च कर्तव्ये नासिद्धं भवति । आल्लोपादोनि वसौ, वस्वन्तस्य विभक्तौ सम्प्रसारणमिति

**पदमञ्जरी**

*अभाजीति* । 'भञ्जेश्च चिणि' इत्यनुनासिकलोपः । *राग इति* । 'रञ्जेश्च' 'घञि च भावकरणयोः' इत्यनुनासिकलोपः ।

*अत्रग्रहणं किमिति* । यद्यपि समानाश्रयत्वप्रतिपत्त्यर्थमिति पूर्वमेवात्र-ग्रहणस्य प्रयोजनमुक्तम्, तथापि समानाश्रयत्वप्रतिपत्तेः किं फलमिति प्रश्ना-वसरोऽस्त्येव । *पपुष इति* । 'पा पाने', 'आतो लोप इटि च' । *चिच्युष इति* । 'चिञ् चयने', 'एरनेकाचः' इति यणादेशः । *लुलुविष इति* । 'लूञ् छेदने' । कथं पुनरत्र व्याश्रयत्वम् ? इत्याह—*आल्लोपादीनि हीति* । नन्वेवमपि नैवात्रा-ल्लोपादीनि सिध्यन्ति, अन्तरङ्गाणि हि तानि, तदन्तर्भूतसम्प्रसारणापेक्षत्वात्; बहिरङ्गं सम्प्रसारणम्, बहिर्भूतविभक्त्यपेक्षत्वात्, ततः किम् ? 'असिद्धं बहि-

**न्यासः**

अभाजीति । 'भन्जो आमर्द्दने', लुङ्, कर्मण्यात्मनेपदम्, 'चिण् भावकर्मणोः' इति च्लेश्चिण्, 'चिणो लुक्' इति तकारलोपः, 'भञ्जेश्च चिणि' इत्यनुनासिकलोपः । तस्य समानाश्रयस्यापि वृद्धावनाभाच्छास्त्रीयायां कर्त्तव्यायामा भादिति वचनादसि-द्धत्वं न भवति । राग इति । रञ्जेर्घञ्, 'घञि च भावकरणयोः' इत्यनुनासिकलोपः । तस्यापि समानाश्रयायामपि साप्तमिक्यां वृद्धौ कर्त्तव्यायामा भादिति वचनाद् असि-द्धत्वं न भवति । पपुषः, चिच्युषः, लुलुवुष इति । पातेश्चिनोतेर्लुनातेश्च लिटः क्वसुः, द्विर्वचनम्, 'वसोः सम्प्रसारणम्' तस्य व्याश्रयत्वाद् 'आतो लोप इटि च' इत्याकार-लोपः, 'एरनेकाचोऽसंयोगपूर्वस्य' इति यणादेशो 'अचि श्नुधातु' इत्यादिनोवङादेशो च कर्त्तव्येऽसिद्धवत्त्वं न भवति । ननु च 'उस्यपदान्तात्' इत्यनेनैव पररूपेण सर्वं सिद्धम् ? नैतदस्ति; प्रतिपदोक्तस्य ह्युस्शब्दस्य तत्र ग्रहणम्, लाक्षणिकश्चात्रोस् ।

कथं पुनरत्र व्याश्रयत्वमित्याह—आल्लोपादीनि हीत्यादि । हिशब्दो यस्मादर्थे । इति करणस्तस्मादर्थे । नन्वेवमपि 'असिद्धं बहिरङ्गमन्तरङ्गे' इति अन्तरङ्गेष्वाल्लोपादिषु बहिरङ्गस्य सम्प्रसारणस्यासिद्धत्वादाल्लोपादयो न प्राप्नुवन्त्येव । अत्र हि विभक्तेः पूर्वो वस्वन्तो भागः, तदाश्रया लोपादय इति, सम्प्रसारणं तु विभक्त्याश्रयम्, प्रकृत्या-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


समानाश्रयत्वं नास्ति। 'असिद्धं बहिरङ्गमन्तरङ्गे' इति ? एतदप्यत्र न भवति, किं कारणम् ? एषा हि परिभाषा आ भाच्छास्त्रीया, तस्यां प्रवर्तमानायां वसुसम्प्रसारणादीनामाभाच्छास्त्रीयाणामेवासिद्धत्वादन्तरङ्गबहिरङ्गयोः युगपत्समुपस्थानं नास्तीति परिभाषा न प्रवर्तते।

❀ वुग्युटावुवङ्यणोः सिद्धौ भवत इति वक्तव्यम् ❀। वुग् उव-

पदमञ्जरी

रङ्गमन्तरङ्गे'; तत्राह–*असिद्धं बहिरङ्गमन्तरङ्गे इत्यादि*। *एतदिति* वचनापेक्षं नपुंसकत्वम्। किमिति न प्रवर्त्तते ? अत आह–*एषा हीति*। *आ भाच्छास्त्रीयेति*। 'वाह ऊठ्' इत्यत्र ज्ञापितत्वात्। ततः किम् ? इत्याह—*तस्यामिति*। अन्तरङ्गबहिरङ्गयोर्युगपत्सन्निधानं नास्तीति परिभाषया सह यौगपद्यमेष्टव्यम्। परिभाषासन्निधावन्तरङ्गबहिरङ्गयोरवस्थानाभावादित्यर्थः। वसुसम्प्रसारणं चैकं परिभाषाया आल्लोपादीनां चाश्रय इति समानाश्रयत्वमप्यस्ति। एतच्च 'नाजानन्तर्ये' इत्यनाश्रित्योक्तम्। आल्लोपादयो हि अचोरानन्तर्यमाश्रित्य प्राप्नुवन्ति।

*वुग्युटाविति*। तत्र युटा तावत्सिद्धत्वं न वक्तव्यम्, युड्विधानसामर्थ्यात् यण् न भविष्यति। तत्र यकारद्वयश्रवणार्थं युड्विधानम्; 'यणो मयो द्वे भवतः' इति द्विर्वचनविधानात्। 'हलो यमां यमि लोपः' इति पक्षे लोपविधानाच्च पक्षे यकारद्वयश्रवणस्य सिद्धत्वात्। वुकोऽपि सिद्धत्वं न वक्तव्यम्, कथम् ? नाप्राप्ते उवङ्यारभ्यमाणो वुक् तस्यापवादो भविष्यति। ननु च बाधकप्रवृत्ति-

न्यासः

श्रयञ्चान्तरङ्गम्, प्रत्ययाश्रयं च बहिरङ्गमित्याह–असिद्धं बहिरङ्गमित्यादि। एतदपीति। एतदपीति वचनापेक्षया नपुंसकेन निर्देशः। एषा हीत्यादिना परिभाषाया अप्रवृत्तौ कारणमाह। यत्रान्तरङ्गबहिरङ्गयोर्युगपदुपस्थानं तत्रैषा परिभाषा प्रवर्त्तते, अन्तरङ्गे कर्त्तव्ये बहिरङ्गस्यासिद्धतामापादयितुम्। इयञ्चः परिभाषा 'वाह ऊठ्' इत्यत्राभाच्छास्त्रे ज्ञापितत्वादाभाच्छास्त्रीया। अतोऽस्यां कर्त्तव्यायाम् 'असिद्धवदत्रा भात्' इति 'वसोः सम्प्रसारण'स्याल्लोपादीनाञ्चासिद्धत्वाद् अन्तरङ्गबहिरङ्गयोर्युगपदुपस्थानं नास्तीति न प्रवर्त्तते। तदप्रवृत्तौ नास्ति बहिरङ्गसम्प्रसारणस्यासिद्धत्वम्। तेन भवन्त्येवाल्लोपादयः।

वुग्युटावित्यादि। वुग्युडित्येतौ यथाक्रममुवङि यणि च कर्त्तव्ये सिद्धौ भवत इत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्–इह वतिग्रहणं न कर्त्तव्यम्, विनापि तेनातिदेशः सिद्ध एव, यथा–'षत्वतुकोरसिद्धः', 'पूर्वत्रासिद्धम्' इति च। तत् क्रियते क्वचित् स्वाश्रयमपि सिद्धं यथा स्यादित्येवमर्थम्। तेन वुग्युटावुवङ्यणोः


CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



ङादेशे—बभूव, बभूवतुः, बभूवुः । युट् यणादेशे—उपदिदीये, उपदिदीयाते, उपदिदीयिरे ।

पदमञ्जरी

वेलायां यद्विरुध्यते तद्बाधकेन निवर्त्तितं न प्रवर्त्तते, उवङ्निरवकाशे वुकि प्रवर्त्तमानेऽसिद्धत्वात्स्वमात्मानमदर्शयन्नशक्यो बाधितुमिति वुकि कृते तस्यासिद्धत्वात्स्यादेव ? एवं तर्हि वुग्न करिष्यते, 'भुवो लुङ्लिटोरुदुपधायाः' इति सूत्रमस्तु, तत्र च 'ओः सुपि' इत्यतः ओरित्यनुवर्त्तिष्यते, तेन भुवोऽङ्गस्योपधाया उकारस्य ऊद्भवतीत्याश्रयणे उवङि कृत ऊकारो भविष्यति । यद्येवम्, बभूव, बभूविथेति गुणवृद्ध्योरवावोश्च कृतयोरुवर्ण उपधा न भवतीत्यूत्वं न स्यात् ? तत्रापि 'इन्धिभवतिभ्यां च' इति पितोऽपि लिटः कित्त्वाद् गुणवृद्ध्योरभावे उवङि ऊद्भविष्यति । यद्येवम्, 'इन्धिभवतिभ्यां च' इति सूत्रं कर्त्तव्यं स्यात्, वुकि पुनः क्रियमाणे इन्धेश्छन्दोविषयत्वाद्भुवो वुको नित्यत्वादिति न्यायात्तन्न कर्त्तव्यं भवति; अवश्यं च वुको नित्यत्वमाश्रित्य बभूवेति साधयितव्यम्; अन्यथा 'अचो ञ्णिति' इत्यत्रेक इत्यनुपस्थानादनिग्लक्षणा वृद्धिः स्यादेव ? एवं तर्हि नार्थो वुका, नापि कित्त्वेन, 'ओः सुपि' इत्यत्रावर्णमपि प्रश्लिष्यते, अकारोकारयोराद्गुणे कृते 'ङसिङसोश्च' इति पूर्वैकादेशेन निर्देशात् । तेन बभूविथेति गुणवृद्ध्योरवावोश्च कृतयोरवर्णस्याप्युपधाया ऊद्भविष्यति, बभूवतुरित्यादावुवङि कृते उवर्णस्यापि । यद्येवम्, 'ओः सुपि' इत्यवर्णस्यापि निर्देशात्कीलालपः पश्येत्यादावपि यण् स्यात् ? परत्वाद् 'आतो धातोः' इति लोपो बाधको भविष्यति, लोपस्यावकाशः—संयोगपूर्वाकारान्तो धातुः, अकारप्रश्लेषस्योत्तरत्रावकाशः—बभूव, बभूविथ; कीलालपः पश्येत्यत्रोभयप्रसङ्गे परत्वादाकारलोपः, विप्रतिषेधे ह्यसिद्धत्वं नास्तीति ज्ञापयिष्यते । एवमपि कीलालपौ सर्वनामस्थाने भसंज्ञाया अभावादाकारलोपाप्रसङ्गाद्यण् स्यात् ? एवं तर्हि 'ओः सुपि' इत्यत्र 'अचि श्नुधातु' इत्यतः 'य्वोः' इत्यनुवर्त्तिष्यते, ततश्चाकारोकारसमुदायनिर्देशेऽपि 'य्वोः' इत्यनेन विशेषणसामर्थ्यादुकारस्यैव यण् भविष्यति, न त्ववर्णस्येति सामर्थ्यादवर्णग्रहणमुत्तरार्थमेव सम्पद्यते । तदेवं सत्यप्यस्मिन्योगे वुग्युटोः सिद्धत्वं न वक्तव्यमिति *भाष्ये* स्थितम् ।

न्यासः

सिद्धौ भविष्यतः । बभूव इति । 'भवतेरः' इत्यभ्यासस्यात्वम्, 'भुवो वुग् लुङ्लिटोः' इति वुक् । तत्र यद्यसिद्धं स्याद् 'अचिश्नुधातु' इत्यादिना उवङ् स्यात्, तस्य सिद्धत्वान्न भवति । उपदिदीय इति । 'दीङ् क्षये', लिट्, तस्य 'लिटस्तझयोः' इत्यादिनेश्, 'दीङो युडचि क्ङिति' इति युट् । तस्यापि यद्यसिद्धत्वं स्याद् 'एरनेकाचोऽसंयोगपूर्वस्य' इति यणादेशः स्यात् । सिद्धत्वान्न भवति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पदमञ्जरी

ये त्वाहुः–'भुवो वुग्लुङ्लिटोः' इत्यत्र 'ओः' इत्यनुवर्तनीयम्, उवर्णान्तस्य भुवो वुग्यथा स्यात्–बोभाव, बोभविथेति यङ्लुकि पिति लिटि 'इन्धिभवतिभ्यां च' इत्यत्र श्तिपा निर्देशादसति कित्त्वे गुणवृद्ध्योः कृतयोरनुवर्णान्तस्य मा भूदित्येवमर्थम्। एवं च बभूव, बभूविथत्यत्रापि गुणवृद्ध्योः कृतयोः वुकोऽप्रसङ्गादनित्यत्वात् 'इन्धिभवतिभ्यां च' इति कित्त्वमारम्भणीयम्। तत्र च ङिदित्यधिकारात्कित्त्वङित्त्वयोरुभयोरपि विधानाद् बभूवेत्यनिग्लक्षणापि वृद्धिर्न भवति। एष एव च कित्त्वे श्तिपा निर्देशं वुकि च तदभावं कुर्वतः सूत्रकारस्याभिप्राय इति तेषां वुकः सिद्धत्वं वक्तव्यमेव। न च वत्करणं स्वाश्रयमपि यथा स्यादिति वुकः सिद्धत्वं लभ्यते, सत्यसति वा वतावतिदेशेष्वातिदेशिकाविरुद्धस्वाश्रयकार्यानिवर्तनात्सिद्धत्वासिद्धत्वयोस्तु विरोधात्कथं वतिना सिद्धत्वप्रापणम्? कथं वा विषयविभागो लभ्येत? स्थानिवदित्यादौ तु वतिमन्तरेण संज्ञा स्यादिति वत्करणमतिदेशार्थं सत् स्वाश्रयप्रतिपत्त्यर्थं वर्ण्यते? एवं तर्हि 'श्नसोरल्लोपः' इति तपरकरणाल्लिङ्गात् क्वचित्सिद्धत्वमनुमीयते, तद्धि आस्तामित्यादावाटो मा भूदिति। यदि चेदमसिद्धत्वं नित्यं स्यात्, आटोऽसिद्धत्वादेव लोपो न भविष्यतीति किं तपरकरणेन! वत्करणं तु प्रतिपत्तिलाघवार्थमेव। तथा च 'षत्वतुकोरसिद्धः', 'गोतो णिद्' इत्यादौ वतिमन्तरेणापि परत्र परशब्दप्रयोगादेवातिदेश आश्रितः, तत्रापि चाविरुद्धं स्वाश्रयं भवत्येव।

अत्राङ् मर्यादायां यदि स्याद्, भाधिकारीयस्यासिद्धत्वं न स्यात्। न चाभाद्ग्रहणं विषयार्थम्, असिद्धवद्भवतस्तु परिज्ञानमधिकारादेवेत्युक्तम्। अतो मर्यादार्थेऽप्याङि भाधिकारेऽप्यस्योपस्थानं न विहन्यते। तस्मादेवं वक्तव्यम्—भाधिकारीये कर्त्तव्ये भाधिकारीयस्य पूर्वस्यैव प्रकरणस्याप्यसिद्धत्वं नोक्तं स्यादिति? सत्यम्; अयमेव दोषः—तत्र सूर्येणैकदिगिति अणि कृते यस्येतिलोपः, ङीप्, पुनरणो यस्येतिलोपः, अत्रेदानीम् 'सूर्यतिष्य' इति यलोप इष्यते–सौरी बलाकेति, स न प्राप्नोति; भाधिकारीये यलोपे यस्येति लोपस्यासिद्धत्वाभावाद्यकारस्यानुपधात्वात्। स्थानिवद्भावश्च यलोपविधिं प्रति

न्यासः

आ भादित्याङ् मर्यादायां वा स्याद्? अभिविधौ वा? तत्र यद्याद्यः पक्ष आश्रीयेत, भाधिकारीयस्यासिद्धत्वं न स्यात्। ततश्च 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्यस्याः परिभाषाया अनाभाच्छास्त्रीयत्वाद् अस्यां प्रवर्त्तमानायां वसोः सम्प्रसारणस्याल्लोपादीनां चासिद्धत्वं न स्यात्। एवमपि वसोः सम्प्रसारणस्य बहिरङ्गस्यान्तरङ्गाणामाल्लोपादीनां युगपदुपस्थाने इति तया परिभाषया प्रवर्त्तमानया वसोः सम्प्रसारणस्यासिद्धत्वे उत्पा-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



आ भादित्ययमभिविधावाङ्। तेन भाधिकारेऽप्यसिद्धवद्भवति॥

पदमञ्जरी

निषिद्धः, तमिमं मर्यादापक्षे दोषं दृष्ट्वाऽऽह—*आ भादित्ययमभिविधावाङिति* । *भाधिकारेऽप्यसिद्धवद्भवतीति* । भाधिकारेऽपि तदवस्थितम्, तत्रापि कर्त्तव्ये तत्रत्यमन्यच्चासिद्धवद्भवतीत्यर्थः । एवं व्याख्याता वृत्तिः ।

कानि पुनरस्य योगस्य प्रयोजनानि ? इह पादोऽस्यास्तीति 'अत इनिठनौ', पादिकः; उदकं वहतीत्यण् 'संज्ञायामुदभावः,उदवाहस्यापत्यम् 'अत इञ्' औदवाहिः; सारणवारणशब्दाभ्यां ल्युडन्ताभ्यामत इञ्, सारणिः, वारणिः; शातनपातनशब्दाभ्यां टित्त्वान्ङीप्, शातनी, पातनी; स्रंसेर्ध्वंसेर्ण्यन्ताद्यकि स्रंस्यते, ध्वंस्यते, अत्र यस्येतिलोपे णिलोपे च कृते पद्भावः, ऊठ्, 'नस्तद्धिते', 'अल्लोपोऽनः', 'अनिदिताम्' इत्येते विधयः प्राप्नुवन्ति,लोपस्यासिद्धत्वान्न भवन्ति ? तत्र, 'अचः परस्मिन्' इति स्थानिवद्भावेनाप्येतानि सिद्धानि । 'शा हौ' इत्यत्र 'शास् हौ' इति पदच्छेदः, शासः शासित्ययमादेशो भवति, किमर्थमिदम् ? इत्वबाधनार्थम्; ततः 'हुझल्भ्यः' इति धित्वम्, 'धि च' इति सलोपः, शाधीति सिद्धम्, धि सकारे सिचो लोप इति नाश्रीयते, चकाधीत्येव भवितव्यमिति निर्णेष्यते । 'घ्वसोरेद्धावभ्यासलोपश्च' इत्यत्रापि 'श्नसोरल्लोपः' इत्यतो विषयार्थमल्लोप इत्यनुवृत्तेरल्लोपविषयत्वं भवदकारस्यैव भविष्यति, ततः पूर्ववद् ह्रस्वसलोपयोरेधीति सिद्धम् । इह च कुरु इति कृ+उहि इति स्थिते हिलुक्च प्राप्नोति गुणश्च, परत्वाद् गुणे कृते 'अत उत्सार्वधातुके' इत्युत्वं च प्राप्नोति हिलुक्च, नित्यत्वाद्धिलुकि कृतेऽपि सार्वधातुकग्रहणसामर्थ्यादभूतपूर्वेऽपि तस्मिन्नुत्वं सिद्धम् । 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इत्यत्रोपदेश इत्यनुवृत्तेः, द्विलकारकनिर्देशाश्रयणाद्वा लुङादिषु लावस्थायामेवाडाटौ भवत इति अकारि, ऐक्षीत्यत्र 'चिणो लुक्' इति नित्ये लुकि कृतेऽडाटौ सिद्धौ । एवं चासन्नित्यत्रापि प्रागेव श्नसोरल्लोपादाटि कृते तपरकरणाल्लोपाभावः । एवं चायन्नित्यत्रापि 'इणो यण्' इति यणादेशात्प्रागाटि सति सिद्धमिष्टम् । यद्येवम्, ऐज्यत, औप्यतेति लङो लावस्थायां यजिवप्योरनजादित्वादटि सति 'आटश्च' इति वृद्धिर्न स्यात् ? अत्र परिहारम् 'आडजादीनाम्' इत्यत्र वक्ष्यामः । 'अतो हेः' इत्यत्र च 'उतश्च प्रत्ययात्' इत्यतः प्रत्ययग्रहणापकर्षणाज्जहीत्यत्र हन्तेर्जभावे लुग्न भविष्यति । 'अतो लोपः' इत्यत्र च 'अनुदात्तोपदेश' इत्यत उपदेशग्रहणानुवृत्तेः 'उपदेशे यदकारान्तं तस्य लोपः' इति गतः, गतवानित्यत्रानुनासिकलोपे कृते सम्प्रत्यकारान्तत्वेऽपि तदभावः ।

न्यासः

दितेऽन्तरङ्गत्वादल्लोपादयः पपुषः, चिच्युषः, लुलुवष इत्यत्र न स्युः ? इतीमं मर्यादापक्षे दोषं दृष्ट्वा द्वितीयं पक्षमाश्रित्याह—आ भादित्ययमभिविधावाङिति । गतार्थश्च ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पदमञ्जरी

इहापि तर्हि न स्यात्—'धिन्विकृण्व्योर च', धिनुतः ? नोपदेशग्रहणेनाङ्गमभिसम्बध्यते—यदङ्गमुपदेशकालेऽकारान्तमिति, अपि तु आर्द्धधातुकमभिसम्बध्यते—आर्द्धधातुकोपदेशे यदकारान्तमिति । एतदुक्तं भवति–यदार्द्धधातुकमुत्पन्नं न मुहूर्त्तमात्रमप्यनकारान्तात्परं तत्र तदन्तस्य लोप इति; धिनुत इत्यत्र चोप्रत्ययसन्नियोगेनाकारविधानादुप्रत्यय उत्पन्नो न कदाचिदपि अनतः पर इति ।

इह च मघमस्यास्तीति 'छन्दसीवनिपौ च' इति वनिबन्ताच्छस्, 'श्वयुवमघोनाम्' इति सम्प्रसारणम्, मघ+उन्+अस् इति स्थिते सम्प्रसारणमाश्रित्य यस्येति लोपः प्राप्तस्तस्यासिद्धत्वान्न भवति ? नात्रासिद्धत्वं लभ्यते, व्याश्रयत्वात्—शसि सम्प्रसारणम्, सम्प्रसारणे यस्येति लोपः । तस्मान्मघवच्छन्दो व्युत्पन्नं प्रातिपदिकम्, ततश्च तद्धिताभावादेव लोपाभावः ।

इह च कंस्विद् गर्भं प्रथमं दध्र आप इति ? दधातेर्लिटि धा+इरे इति स्थिते नित्यत्वात् 'इरयोरे' इति छान्दसोः रेभावः, लिट्, छन्दसि सार्वधातुकमपीति शप्, शपः श्लुः, द्विर्वचनम्, 'ई हल्यघोः' इति प्रतिषेधात्तु 'श्नाभ्यस्तोरातः' इति सिद्धो लोपः, घुव्यतिरिक्तेषु माप्रभृतिषु छान्दसत्वाद्यथादर्शनं भविष्यति ।

इह तर्हि कुर्वः, कुर्मः, कुर्यादिति, कृउ+वस्, कृउ+मस्, कृउ+यात् इति स्थिते 'नित्यं करोतेः', 'ये च' इति लोपश्च प्राप्नोति करोतेर्गुणश्च, तत्रोभयोर्नित्ययोः परत्वाद् गुणे कृते 'अत उत्सार्वधातुके' इत्युत्वं बाधित्वा नित्यत्वादुकारलोपे कृते सार्वधातुकपर उप्रत्यये विधीयमानमुत्वं न स्यात्, न च सार्वधातुक एव परतः शक्यमुत्वं विधातुम्, तथा हि सति कुरुत इत्यादौ विकरणव्यवायेऽपि न स्यात्, क्व तर्हि स्यात् ? यत्र विकरणस्य लोपः – कुर्यात्, कुर्मं इत्यादौ ? यद्यप्यत्रापि स्थानिवद्भावाद्व्यवधानं तथापि वचनादीदृशं व्यवधानमाश्रीयते, तस्माद्भवतीदं प्रयोजनम् ? न प्रयोजनम्; सत्यप्युकारलोपे तस्य स्थानिवद्भावात्प्रत्ययलक्षणेन वा 'अत उत्' इत्यत्र श्नोर्य इत्यनुवृत्तेर्वा उत्वं भविष्यति ।

इह तर्हि करिष्यते इति चिण्वदिटोऽसिद्धत्वाण्णिलोपो भवति, अन्यथा अनिटीति प्रतिषेधः स्यात् ? तत्र चिण्वदिट् चेति चकारः समुच्चये—इट् च यच्चान्यत्प्राप्नोति, किं चान्यत्प्राप्नोति ? णिलोपः, अवश्यं चकारेणैव णिलोपः समुच्चेतव्यः, अन्यथा चिण्वदिटोऽसिद्धत्वेऽपि वलादिलक्षणेनेटा सेड्बुद्धिरेव णिलोपशास्त्रस्यास्मिन्विषये वर्त्तत इति लोपो नैव स्यात्, 'चिणो लुग्' इत्यत्र च 'अनुदात्तोपदेश' इत्यतः क्ङिद्ग्रहणमनुवर्त्य तस्य 'चिणः' इति पञ्चम्या षष्ठ्यां

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



# श्नान्नलोपः ॥ २३ ॥

**पदमञ्जरी**

प्रकल्पितायां चिण उत्तरस्य क्ङितो लुग्विधीयते, तेनाकारितरामित्यादौ तरपो न भविष्यति।

इह तर्हि शुन इति 'श्वयुवमघोनाम्' इति सम्प्रसारणे शु+अन् अस् सम्प्रसारणपूर्वत्वं बाधित्वा 'अल्लोपोऽनः' इत्यकारलोपे सति विभक्तेरनुदात्त-निवृत्तिस्वरः प्राप्नोति, कृतेऽस्मिन्योगे सम्प्रसारणस्यासिद्धत्वात् 'न संयोगा-द्वमन्तात्' इति प्रतिषेधादल्लोपेऽसति सम्प्रसारणपूर्वत्वे सति 'एकादेश उदात्ते-नोदात्तः' इत्याद्युदात्तं पदं भवति। नात्राल्लोपे सत्युदात्तनिवृत्तिस्वरस्य प्रसङ्गः; 'न गोश्वन्साववर्ण' इति प्रतिषेधात्। नैष उदात्तनिवृत्तिस्वरस्य प्रतिषेधः; कस्य तर्हि? तृतीयादिस्वरस्य। स च श्वभ्याम्, श्वभिरिति हलादौ विभक्ता-वुदात्तलोपाभावे चरितार्थः? एवं तर्हि न लक्षणप्रतिषेधं शिष्मः, किं तर्हि? येन केनचित्प्राप्तस्य तृतीयादिस्वरस्य। यत्र तर्हि तृतीयादिर्नास्ति—शुनः पश्येति, तत्रोदात्तनिवृत्तिस्वरः प्राप्नोति? एवं तर्हि तृतीयादिग्रहणमपि निवर्त्तिष्यते, अविशेषेण विभक्तिस्वरमात्रस्य प्रतिषेधः। ज्ञापकाद्वा सिद्धम्, यदयं श्वन्-शब्दं गौरादिषु पठति, तज्ज्ञापयति—नोदात्तनिवृत्तिस्वरः शुन्यवतरतीति।

एवमपि विद्यते विशेषः, अल्लोपेन वा निवृत्तौ सत्यां पूर्वत्वेन वा अल्लोपे सति, बह्वः श्वानो यस्यामिति बहुव्रीहेरुपधालोपित्वाद् 'अन उपधालोपिनः' इति ङीपा भाव्यम्—बहुशुनीति, तदभावे तु बहुश्वेति भवति। गौरादिङीषो-ऽप्यनुपसर्जनाधिकारादत्राप्रसङ्गः। किञ्च—ज्ञापकात्सामान्येन वा निषेधादुद-त्तनिवृत्तिस्वराभावेऽपि कथमाद्युदात्तं पदं भवति, न ह्यल्लोपे सत्येकादेशस्वरो-ऽस्ति, ततश्च सर्वानुदात्तं पदं स्यात्, तदेतद्भवति प्रयोजनम्? न प्रयोजनम्; अन्तरङ्गत्वात्पूर्वत्वं भवति। न च वार्णादाङ्गस्य बलीयस्त्वम्; व्याश्रयत्वात् विभक्तिरल्लोपस्य निमित्तम्, पूर्वत्वस्य तु श्वन्शब्दाकारः।

इह तर्हि भूयानिति भूभावस्यासिद्धत्वादोर्गुणो न भवेदिति? दीर्घोच्चा-रणसामर्थ्यान्न भविष्यति। अस्ति दीर्घोच्चारणे प्रयोजनम्, किम्? भूम्नेति, निपातनादप्येतसिद्धम् उत्तरपदभूम्नीति। इदं च सूर्येणैकदिक् सौरी बलाकेति? द्वयोरकारयोर्यस्येति लोपेऽपि वचनसामर्थ्याद् भूतपूर्वगत्योपधाश्रयणाल्लोपो भविष्यति।

तदेवं न सन्ति प्रयोजनानि, प्रतिपत्तिगौरवपरिहारार्थं सूत्रमारब्धम्॥

**श्नान्नलोपः॥** पृथक्पदं लुप्तषष्ठीकम्, तेनोत्तरत्रोपधाग्रहणेन नकारो

**न्यासः**

**श्नान्नलोपः॥** अन्यस्य श्नशब्दस्यासम्भवादसत्यपि श्नमो मकारस्य श्रवणे साम-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



श्नादिति—श्नमयमुत्सृष्टमकारो गृह्यते, तत उत्तरस्य नकारस्य लोपो भवति । अनक्ति । भनक्ति । हिनस्ति ।

शकारवतो ग्रहणं किम् ? यज्ञानाम्, यत्नानाम्—'सुपि च' इति परत्वात् कृतेऽपि दीर्घत्वे स्थानिवद्भावान्नलोपः स्यादेव ।

**पदमञ्जरी**

विशेष्यते । *श्नमयमुत्सृष्टमकारो गृह्यत इति* । अन्यस्य श्नस्यासम्भवात् । *अनक्तीति* । 'अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु', 'भञ्जो आमर्दने', 'हिसि हिंसायाम्' ।

शकारवतो ग्रहणं किम् ? इह मा भूत्, नन्दिता—नन्दकः । एवं वक्ष्यामि—'नान्नलोपोऽनिदिताम्' इति, ततः 'हल उपधायाः क्ङिति' इति 'अनिदिताम्' इत्येव, इहापि न स्यात्—हिनस्तीति । पामादिभ्यो नः—अस्य च ग्रहणं स्यात् ? एवं तर्हि क्ङितीति वर्त्तते, सत्सप्तमी चैषा—क्ङिति सतीति, तेन हिनस्तीत्यत्र तिपः पित्त्वादङित्त्वेऽपि श्नममेव ङितमाश्रित्य लोपो भविष्यति । इहापि तर्हि प्राप्नोति—नन्दमान इति, चानशो ङित्त्वात् ? एवं तर्हि नशब्दमेव क्ङित्त्वेन विशेषयिष्यामः—क्ङितो नशब्दादिति, तस्मात् 'नान्नलोपः' इति वक्तव्यमिति पृच्छति—*शकारवतो ग्रहणं किमिति* । *यज्ञानामिति* । 'यजयाच' इत्यादिना नङ्, श्चुत्वम्, तस्यासिद्धत्वान्नशब्द एवायम् । ननु यद्यपि नामि दीर्घादयं लोपः परः, 'सुपि च' इत्येतद्दीर्घत्वमस्मात्परम्, तत्र कृते नादिति व्यपदेशाभावादेव लोपो न भविष्यति ? अत आह—*सुपि चेत्यादि* । *स्थानिवद्भावादिति* । पूर्वस्मादपि विधौ स्थानिवद्भावात् ।

**न्यासः**

र्थ्यात् श्नम एव ग्रहणं विज्ञायते, इत्यत आह—**श्नमयमुत्सृष्टमकार इति** । उत्सृष्टः=परित्यक्तो मकारो यस्य स तथोक्तः । **अनक्तीत्यादि** । 'अन्जू व्यक्तिम्रक्षणकान्तिगतिषु', 'भन्जो आमर्दने', 'हिसि हिंसायाम्', अस्योदित्वान्नुम्, रुधादित्वात् श्नम् ।

शकारवतो ग्रहणमेतदर्थं क्रियते—नन्दिता, नन्दक इत्यत्र मा भूदिति, एतच्चाप्रयोजनम्; 'प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणम्' इत्यनया परिभाषयाऽत्र न भविष्यति । ज्ञापकाच्च, यदयं नन्दिनन्दनशब्दौ क्षुभ्नादिषु पठति, तज्ज्ञापयति—नन्देर्नकारलोपो न भवतीति । सामान्यापेक्षञ्च ज्ञापकम्, तेन नन्दिता, नन्दक इत्यत्रापि न भविष्यति । तस्माद् 'नान्नलोपः' इत्येवं वक्तव्यमित्यभिप्रायेणाह—**शकारवतो ग्रहणं किमिति** । **यज्ञानाम्, यत्नानामिति** । 'यजयाच' इति नङ्, तदन्तात् षष्ठीबहुवचनम्, नुट् । यदि शकारवतो ग्रहणं न क्रियेत तदा तत्र नलोपः स्यादेव । स्यादेतत्—दीर्घे कृते नादिति व्यपदेशाभावान्न भविष्यतीति ? अत आह—**सुपि चेत्यादि** । 'सुपि च' इत्ययं

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



विश्नानाम्, प्रश्नानामित्यत्र 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव' इत्येवं न भवति ॥

## अनिदितां हल उपधायाः क्ङिति ॥ २४ ॥

### पदमञ्जरी

अथ गृह्यमाणेऽपि शकारवतो ग्रहणे विश्नानाम्, प्रश्नानामित्यत्र कस्मान्न भवति, ननु सम्प्रति श्नरूपत्वादत्रैव प्राप्नोति ? अत आह—*विश्नानामिति*। अत्र संग्रहश्लोकः—

नान्नस्यायं विधेयो ननु लुबनिदितां नन्दिता चापि सिध्येद्
हिंसेने प्राप्तिरेवं क्ङिति सति तु तथा नन्दमानो न सिध्येत्।
क्ङिन्नाच्चेच्चाथ यत्नाद्बहुवचनविधौ दुष्यति स्थानिवत्त्वाद्
विश्नानां लक्षणोक्तप्रतिपदवचनात्सिद्ध एवेत्यदोषः ॥

लोपनं लुप्, लोप इत्यर्थः। 'राल्लोपः' इति प्रकृते लोपग्रहणं विस्पष्टार्थम् ॥

*अनिदितां हल उपधायाः क्ङिति* ॥ इकार इत्संज्ञको येषा ते इदितः,

### न्यासः

दीर्घोऽजादेशः, तस्य नकारलोपपूर्वविधौ कर्त्तव्ये 'अचः परस्मिन् पूर्वविधौ' इति स्थानिवद्भावेन तद्रूपतामापन्ने परत्वाद्दीर्घत्वे यदि कृतेऽपि शकारविशिष्टस्य ग्रहणं न क्रियते तदा स्यादेवात्र नलोपः। कृताकृतप्रसङ्गित्वाच्च। दीर्घत्वं तु नकारलोपे कृते निमित्तविहितत्वान्न प्राप्नोतीति तदनित्यम्। ननु च पूर्वविधौ स्थानिवद्भाव उक्तः, न चायं पूर्वविधिः ? नैष दोषः; अयमपि पूर्वविधिरेव। 'पूर्वस्माद् विधिः पूर्वविधिः' इत्यस्यापि समासस्य तत्राश्रयणात्।

अथ क्रियमाणेऽपि शकारवतो ग्रहणे कस्मादिह न भवति—विश्नानाम्, प्रश्नामिति, भवति ह्यत्रापि शकारवान्नकारः ? इत्याह—विश्नानां प्रश्नामित्यत्रेत्यादि। इह हि लक्षणप्रतिपदोक्तपरिभाषया प्रतिपदोक्तो यः साक्षान्निर्दिष्टः श्नशब्दस्तस्य ग्रहणम्, न तु लाक्षणिकस्य। विश्नानाम्, प्रश्नानामित्यत्र हि 'च्छ्वोः शूडनुनासिके च' इति शकारे कृते श्नशब्दः सम्पद्यते, स च लाक्षणिकः। तस्मात् ततः परस्य लोपो न भवति। 'राल्लोपः' इत्यतो मण्डूकप्लुतिन्यायेन लोपग्रहणानुवृत्तौ सत्यां सिद्धायां यत् पुनर्लोपग्रहणं क्रियते तद् योगविभागार्थम्। 'श्नान्न' इत्येको योगः, अत्र च नेत्यविभक्तिकोऽयं निर्देशः, लोपग्रहणञ्चानुवर्त्तते, तेनायमर्थो भवति—श्नादुत्तरस्य नकारस्य लोपो भवतीति; ततः 'लोपः' इति द्वितीयो योगः, ततः श्नान्नेत्यतो नेत्यनुवर्त्तते—इष्टे विषये नकारलोपो यथा स्यादिति। तेन लङ्गिकम्पिप्रभृतीनामुपतापशरीरविकारादिषु नलोपः सिद्धो भवति ॥

अनिदितां हल उपधायाः क्ङिति ॥ इद् इद् येषां त इदितः, न इदितोऽनिदित

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अनिदितामङ्गानां हलन्तानामुपधाया नकारस्य लोपो भवति क्ङिति प्रत्यये परतः। स्रस्तः, ध्वस्तः। स्रस्यते, ध्वस्यते। सनीस्रस्यते, दनीध्वस्यते।

अनिदितामिति किम्? नन्द्यते, नानन्द्यते। हल इति किम्? नीयते, नेनीयते। उपधाया इति किम्? नह्यते, नानह्यते। क्ङितीति किम्? स्रंसिता, ध्वंसिता।

॥ अनिदितां नलोपे लङ्गिकम्प्योरुपतापशरीरविकारयोरुपसंख्यानं कर्त्तव्यम् ॥। विलगितः। विकपितः। उपतापशरीरविकारयोरिति किम्? विलङ्गितः। विकम्पितः।

**पदमञ्जरी**

ततोऽन्येऽनिदितः, तेषां विशेषणम्—'हलः' इति। व्यत्ययेन त्वेकवचनम्। *सनीस्रस्यत इति*। 'नीग्वञ्चु' इत्यादिनाऽभ्यासस्य नीगागमः। *नानन्द्यत इति*। 'टुणदि समृद्धौ', यङ्, 'दीर्घोऽकितः'। *नह्यत इति*। क्त्परत्वेन नकारो विशेष्यते। येन नाव्यवधानमित्येकेन व्यवधानमाश्रीयते—इत्येतत्तु दुर्ज्ञानमिति भावः।

*लङ्गिकम्प्योरिति*। इदित्त्वाद्वचनम्। कृच्छ्रप्राप्तिरत्रोपतापः, न रोगः; शरीरविकार इत्येव सिद्धत्वात्। शरीरविकारोऽत्र व्याधिरुच्यते, न स्वाभाविकः स्थौल्यादिः। *विलगितः, विकपित इति*। 'गत्यर्थाकर्मक' इत्यादिना कर्त्तरि क्तः।

**न्यासः**

इति षष्ठीबहुवचनस्य स्थाने सुब्व्यत्ययेनैकवचनम्, तच्चानिदितां विशेषणम्, विशेषणेन च तदन्तविधिर्भवतीत्यत आह—हलन्तानामित्यादि। उपधाया नकारस्येति। उपधाया इत्येतन्नकारस्य विशेषणम्। स्रस्तः, ध्वस्त इति। 'स्रन्सु ध्वन्सु अधःपतने', निष्ठा। स्रस्यते, ध्वस्यत इति। भावे कर्मणि वा लकारः। सनीस्रस्यते, दनीध्वस्यत इति। यङन्ते एते। 'नीग्वञ्चु' इत्यादिनाऽभ्यासस्य नीगागमः।

नन्द्यत इति। 'टुणदि समृद्धौ'। नानन्द्यत इति। यङन्तम्। 'दीर्घोऽकितः' इत्यभ्यासस्य दीर्घः। नेनीयत इति। नयतेः 'गुणो यङ्लुकोः' इति गुणोऽभ्यासस्य। नह्यत इति। 'णह बन्धने।

लङ्गिकम्प्योरित्यादि। लङ्गिकम्प्योरिदित्त्वान्नलोपो न प्राप्नोति, अतस्तयोरुपतापशरीरविकारयोरुपसंख्यानं कर्त्तव्यम्। उपसंख्यानम्=प्रतिपादनम्। उत्तरत्राप्युपसंख्यानशब्दस्य प्रतिपादनमर्थः। प्रतिपादनं तु कृतमेव। उपतापः=व्याधिः। शरीरविकारः=शरीरस्यान्यथात्वम्। स पुनरिहोपतापादन्यो गृह्यते, अन्यथा 'उपताप' इत्येवं सिद्धे शरीरविकारग्रहणमनर्थकं स्यात्। विलगित इति। 'अगि वगि लगि गत्यर्थाः'। उप-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



❀ रञ्जेर्णौ मृगरमण उपसंख्यानं कर्त्तव्यम् ❀। रजयति मृगान्। 'जनीजृष्क्नसुरञ्जोऽमन्ताश्च' इति मित्त्वादुपधाह्रस्वत्वम्। मृगरमण इति किम्? रञ्जयति वस्त्राणि।

❀ घिनुणि च रञ्जेरुपसंख्यानं कर्तव्यम् ❀। रागी। 'त्यजरजभज' इति निपातनाद्वा सिद्धम्।

❀ रजक-रजन-रजःसूपसंख्यानं कर्त्तव्यम् ❀। रजकः। रजनम्। रजः॥

## दंशसञ्जस्वञ्जां शपि॥ २५॥

### पदमञ्जरी

*मित्त्वादुपधाह्रस्वत्वमिति*। एतदेव मित्त्ववचनं ज्ञापकम्—रञ्जेरक्ङित्यप्युपधालोपो भवतीति।

*रजकरजनरजःसूपसंख्यानमिति*। कित्त्वात्सिद्धम्। कित एते औणादिकाः प्रत्ययाः, 'क्वुन् शिल्पिसंज्ञयोः'—*रजकः*। पुंयोगान्ङीष्—रजकी। अपुंयोगे तु नैव ङीषा भवितव्यम्। रञ्जेः क्युन्—*रजनः*। स च बाहुलकाट्टित्, रजनी। 'भृरञ्जिभ्यां किच्च' इत्यसुन्, शिरः, *रजः*॥

### न्यासः

तापे विलङ्गित इत्येव प्रयोगो मा भूदित्येवमर्थं लङ्गेर्ल्लोपो विधीयते, न तु रूपसिद्ध्यर्थम्; 'लगे सङ्गे' इत्यस्य प्रकृत्यन्तरस्य तस्य सिद्धत्वात्।

रञ्जेर्णावित्यादि। अक्ङिदर्थं वचनम्। मृगरमणम्=मृगक्रीडा। रजयति मृगानिति। रममाणान् मृगान् प्रयुङ्क्ते इत्यर्थः।

रजनरजकरजःसूपसंख्यानमिति। अत्र भूयः प्रतिपादनं क्रियते—'घञि च भावकरणयोः' इत्यत्र चकारोऽनुक्तसमुच्चयार्थः, तेन रजकादिषु प्रतिपाद्येषु रञ्जेः ष्वुन्नादिप्रत्यये परतो नलोपो भवति। रजक इति। 'शिल्पिनि ष्वुन्'। रजनमिति। ल्युट्। रज इति 'सर्वधातुभ्योऽसुन्' इत्यसुन्।

घिनुणि चेत्यादि। रागीति। सम्पृचान्वादिसूत्रेण घिनुण्, 'चजोः कु घिण्ण्यतोः' इति कुत्वम्। 'त्यजरजभज' इति निपातनात् सिद्धमिति। यतोऽयमक्ङिति निमित्ते सम्पृचादिसूत्रे रञ्जेरनुनासिकलोपं कृत्वा निर्देशं करोति, तज्ज्ञापयति–घिनुण्यपि नलोपो भवतीति। ननु च 'रञ्जेश्च' इति लक्षणेनैव शपि नलोपोऽभिनिर्वृत्तः? नवदस्ति; यथैव 'इन्धिभवतिभ्याञ्च' इत्यागन्तुकेनेकारेणेन्धेर्निर्देशः, तथेहाप्यागन्तुकेनाकारेण, न तु शपा। न हि 'इन्धिभवतिभ्याञ्च' इत्यत्रेका निर्देशः; अन्यथा हि 'अनिदिताम्' इत्यनुनासिकलोपः स्यात्॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


दंश, सञ्ज, ष्वञ्ज—इत्येतेषामङ्गानां शपि परत उपधाया नकारस्य लोपो भवति । दशति । सजति । परिष्वजते ॥

रञ्जेश्च ॥ २६ ॥

रञ्जेश्च शपि परत उपधाया नकारस्य लोपो भवति । रजति, रजतः, रजन्ति । पृथग्योगकरणमुत्तरार्थम् ॥

घञि च भावकरणयोः ॥ २७ ॥

भावकरणवाचिनि घञि परतो रञ्जेरुपधाया नकारस्य लोपो भवति । भावे—आश्चर्यो रागः । विचित्रो रागः । करणे—रज्यतेऽनेनेति रागः ।

भावकरणयोरिति किम् ? रजन्ति तस्मिन्निति रङ्गः ॥

स्यदो जवे ॥ २८ ॥

जवेऽभिधेये 'स्यदः' इति घञि निपात्यते । स्यन्देर्नलोपो वृद्ध्य-

पदमञ्जरी

*दंशसञ्जस्वञ्जां शपि* ॥ *परिष्वजत इति* । 'ष्वञ्ज परिष्वङ्गे', अनुदात्तेत्, 'उपसर्गात्सुनोति' इत्यादिना षत्वम् ॥

*रञ्जेश्च* ॥ *पृथग्योगकरणमुत्तरार्थमिति* । उत्तरत्र रञ्जेरेवानुवृत्तिर्यथा स्यात्, दंशिप्रभृतीनां मा भूत् ॥

*घञि च भावकरणयोः* ॥ *राग इति* । 'हलश्च' इति करणाधिकरणयोर्घञ्, 'चजोः कु घिण्ण्यतोः' इति कुत्वम् ॥

*स्यदो जवे* ॥ जवः—वेगः ।

न्यासः

दंशसञ्जस्वञ्जां शपि ॥ 'दन्श दशने', ष्वञ्ज परिष्वङ्गे' । परिष्वजते इति । 'उपसर्गात् सुनोति' इत्यादिना षत्वम् ॥

रञ्जेश्च ॥ अथ पृथग्योगकरणं किमर्थम्, न पूर्वयोग एव रञ्जेर्ग्रहणं क्रियते ? इत्याह—पृथग्योगकरणमित्यादि । उत्तरसूत्रे रञ्जेरेवानुवृत्तिर्यथा स्यात्, दंशप्रभृतीनां मा भूदिति ॥

घञि च भावकरणयोः ॥ रज्यतेऽनेनेति राग इति । 'हलश्च' इति घञ् । एवं रङ्ग इत्यत्रापि ॥

स्यदो जवे ॥ जवः—वेगः, गतिविशेषः । वृद्ध्यभावश्चेति । 'अत उपधायाः' इति । नलोपे कृते 'अत उपधायाः' इति वृद्धिः प्राप्नोति, अतस्तदभावो निपात्यते । ननु च 'न धातुलोप आर्धधातुके' इत्यनेनैव वृद्धिप्रतिषेधः सिद्धः, तत् किमर्थं वृद्ध्यभावो

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



भावश्च । इक्प्रकरणात् 'न धातुलोपः' इति प्रतिषेधो नास्ति—गोस्यदः, अश्वस्यदः ।

जव इति किम् ? तैलस्यन्दः । घृतस्यन्दः ॥

**अवोदैधोद्मप्रश्रथहिमश्रथाः ॥ २९ ॥**

अवोद, एध, ओद्म, प्रश्रथ, हिमश्रथ—इत्येते निपात्यन्ते ।

अवोद इति, उन्देरवपूर्वस्य घञि नलोपो निपात्यते ।

एध इति, इन्धेर्घञि नलोपो गुणश्च निपात्यते 'न धातुलोप आर्धधातुके' इति हि प्रतिषेधः स्यात् ।

ओद्म इति, उन्देरौणादिके मन्प्रत्यये नलोपो गुणश्च निपात्यते ।

प्रश्रथ इति, प्रपूर्वस्य श्रन्थेर्घञि नलोपो वृद्ध्यभावश्च निपात्यते ।

हिमश्रथ इति, हिमपूर्वस्य श्रन्थेर्घञ्येव निपातनम् ।

**पदमञ्जरी**

*गोस्यद इति* । गोर्गतिविषयो वेग इत्यर्थः । *तैलस्यन्द इति* । तैलस्य स्रवणमित्यर्थः ॥

*अवोदैधोद्मप्रश्रथहिमश्रथाः* ॥ 'उन्दी क्लेदने', 'इन्धी दीप्तौ', 'श्रन्थ मोचनहर्षयोः' ॥

**न्यासः**

निपात्यते ? इत्याह—इक्प्रकरणादित्यादि । तत्र 'इको गुणवृद्धी' इत्यत इगिति प्रकृतमनुवर्त्तते, तेनेग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः, न चेयमिग्लक्षणा वृद्धिः, किन्तूपधालक्षणा । न चेयमुपधालक्षणा वृद्धिरिग्लक्षणा भवति, निर्दिष्टस्थानिकत्वात् । तेन नास्त्यत्र तस्याः प्रतिषेधः । गोस्यद इति । भावे घञ् । गवां स्यद इति गोस्यदः, 'कृद्योगा षष्ठी समस्यते' इति समासः । तैलस्यन्द इति । तैलस्य स्रवणमित्यर्थः । 'स्यन्दू स्रवणे' ॥

**अवोदैधोद्मप्रश्रथहिमश्रथाः** ॥ अवोद इति । उपसर्गेण सह 'आद् गुणः' । 'न धातुलोपः' इत्यादिना प्रतिषेधो न भवति; अनिग्लक्षणत्वाद् गुणस्य ।

**गुणश्च निपात्यत इति** । ननु च 'पुगन्तलघूपधस्य' इत्येवं गुणः सिद्धः, तत् किमर्थं निपात्यते ? इत्याह—न धातुलोप इत्यादि ।

**औणादिके मन्प्रत्यय इति** । 'अर्त्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन्' इत्यर्त्यादिभ्यो विधीयमानो बहुलवचनादुन्देरपि भवति ।

**श्रन्थेरिति** । 'श्रन्थ मोचनप्रतिहर्षणयोः' इत्यस्य ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


## नाञ्चेः पूजायाम् ॥ ३० ॥

अञ्चेः पूजायामर्थे नकारस्य लोपो न भवति । अञ्चिता अस्य गुरवः । अञ्चितमिव शिरो वहति । 'अञ्चेः पूजायाम्' इति इडागमः ।

पूजायामिति किम् ? उदक्तमुदकं कूपात् । उद्धृतमित्यर्थः । 'यस्य विभाषा' इतीट्प्रतिषेधः ॥

## क्त्वि स्कन्दिस्यन्दोः ॥ ३१ ॥

क्त्वाप्रत्यये परतः स्कन्द, स्यन्द–इत्येतयोर्नकारलोपो न भवति । स्कन्त्वा । स्यन्त्वा । स्यन्देरूदित्वात्पक्षे इडागमः–स्यन्दित्वा । तत्र यदा इडागमस्तदा 'न क्त्वा सेट्' इति कित्त्वप्रतिषेधादेव नलोपाभावः ॥

### पदमञ्जरी

*नाञ्चेः पूजायाम्* ॥ उदाहरणे 'मतिबुद्धिपूजार्थे' इत्यादिना वर्त्तमाने क्तः, 'क्तस्य च वर्त्तमाने' इति कर्त्तरि षष्ठी । अथ 'नाञ्चेरिटि' इत्येव कस्मान्नोक्तम् ? नैवं शक्यं वक्तुम्; इह हि न स्यात्—समञ्चते गुरुः, गुरुं समञ्च्यागत इति । इड्विधौ वृत्तिकारो वक्ष्यति–"निष्ठायाम् 'यस्य विभाषा' इति प्रतिषेधे प्राप्ते क्त्वायाम्, तथा 'उदितो वा' इति विकल्पे प्राप्ते पूजायां नित्यमिड्विधीयते" इति । तेन गुरुमङ्क्त्वेति पूजायामसाधुरेव ॥

*क्त्वि स्कन्दिस्यन्दोः* ॥ *न क्त्वा सेडिति कित्त्वप्रतिषेधादेवेति* । तेन सेटः क्त्वाप्रत्ययस्योदाहरणं न प्रदर्शितमिति भावः ॥

### न्यासः

नाञ्चेः पूजायाम् ॥ 'अनिदिताम्' इत्यनेन प्राप्तस्य नलोपस्यायं प्रतिषेधः । एतस्मादेव प्रतिषेधान्नकारोऽयं कृतचुत्वो निर्दिश्यत इति गम्यते । अथ 'नाञ्चेरिटि' इत्येव कस्मान्नोक्तम्, एवमपि ह्युच्यमाने पूजायामेव प्रतिषेधो लभ्येत, तथा हि—पूजायामेवाञ्चतेरिड् विहितः ? अशक्यमेवं वक्तुम्, 'अञ्चेः पूजायाम्' इत्यनेन क्त्वानिष्ठयोर्नित्यमिड् विहितः । यस्तु क्त्वाप्रत्ययः 'उदितो वा' इति पाक्षिक इडागमः, स पूजायामपि भवति, तत्रैवमुच्यमाने यदा क्त्वाप्रत्ययस्य पूजायामिण् न स्यात्, तदा प्रतिषेधो न स्यात्—गुरुमङ्क्त्वेति । नेत्येतत् प्रतिषेधवचनमुत्तरार्थम् । इह 'अञ्चेर्-पूजायाम्' इत्युच्यमाने सतीष्टं सिध्यत्येव । अञ्चिता अस्य गुरव इति । 'मतिबुद्धि' इत्यादिना क्तः, 'क्तस्य च वर्तमाने' इति षष्ठी । यस्य विभाषेतीट्प्रतिषेध इति । अञ्चतेः 'उदितो वा' इति विकल्पेनेड्विधानात् ।

क्त्वि स्कन्दिस्यन्दोः ॥ स्कन्त्वेति । 'स्कन्दिर् गतिशोषणयोः' । पक्षे इडागम इति । 'स्वरति' इत्यादिना । कित्त्वप्रतिषेधाद नलोपाभाव इति । 'अनिदिताम्' इत्यादिना

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## जान्तनशां विभाषा ॥ ३२ ॥

जान्तानामङ्गानां नशेश्च क्त्वाप्रत्यये परतो विभाषा नकारलोपो न भवति । रङ्क्त्वा, रक्त्वा । भङ्क्त्वा, भक्त्वा । नशः–नष्ट्वा, नंष्ट्वा ।[1] इट्पक्षे – नशित्वा[1] ॥

## भञ्जेश्च चिणि ॥ ३३ ॥

भञ्जेश्च चिणि परतो विभाषा नकारलोपो भवति । अभाजि, अभञ्जि ।

### पदमञ्जरी

*जान्तनशां विभाषा* ॥ *मक्त्वा, मङ्क्त्वा, नष्ट्वा, नंष्ट्वा* । 'मस्जिनशोर्झलि' इति नुम् । अन्तग्रहणं विस्पष्टार्थम्; वर्णग्रहणादेव तदन्तविधिलाभात् ॥

### न्यासः

हि क्ङिति नलोपो विधीयते । सेट्क्त्वाप्रत्ययस्य 'न क्त्वा सेट्' इति कित्त्वप्रतिषेधः कृतः, ततश्चेडागमपक्षे कित्त्वाभावादेव नलोपाभाव इति नासाविमं योगं प्रयोजयति । तेन न सेट्क्त्वाप्रत्ययस्योदाहरणं प्रदर्शितमित्यभिप्रायः ॥

जान्तनशां विभाषा ॥ नष्ट्वा, नंष्ट्वेति । नशेर्व्रश्चादिसूत्रेण षत्वम्, ष्टुत्वम् । 'मस्जिनशोर्झलि' इति नुमागमः । 'ज' इति वर्णग्रहणम्, तत्र वर्णग्रहणे सर्वत्र तदन्तविधिं प्रयोजयतीत्यन्तरेणाप्यन्तग्रहणेन तदन्तविधौ सिद्धे यदिहान्तग्रहणं क्रियते तद्विस्पष्टार्थम् । यत्त्वाह—अनुपधाया अपि पक्षे लोपस्य प्रतिषेधार्थमन्तग्रहणम्, तद्यथा–भक्त्वा, भङ्क्त्वेति, तन्न; केन पुनरनुपधाभूतस्य नकारस्य लोपः प्राप्नोति, यतोऽसौ पक्षे प्रतिषिध्यते । उपधानकारस्य लोप उक्तः, न चायमुपधानकारः । एवं तर्हि विधिविषयादन्यत्रापि क्वचिल्लोपो नकारस्य भवतीति ज्ञापयति । तेनैतत् सिद्धं भवति—मग्नः, मग्नवानिति । ततश्चैतदर्थम् 'मस्जेरन्त्यात् पूर्वं नुममिच्छन्त्यनुषङ्गलोपार्थम्' इत्येतन्न वक्तव्यं भवति । तत्र यदीदं नोच्येत, तदा यस्मिन् पक्षे क्त्वाप्रत्ययेन लोपो न भवति तस्मिन् पक्षे 'स्कोः संयोगाद्योरन्ते च' इति सलोपोऽपि न स्यात्; असंयोगादित्वात् । तस्माद् वक्तव्यमेवेदम्—मस्जेरन्त्यात् पूर्वं नुममिच्छन्तीति । ततश्चानुपधाभूतस्य नकारस्य लोपभाविनोऽसम्भवादनुपधाभूतस्य नकारस्य लोपप्रतिषेधो यथा स्यादेवमर्थमन्तग्रहणं न युज्यते ॥

भञ्जेश्च चिणि ॥ चकारः 'विभाषा' इत्यनुकर्षणार्थः । अभाजीति । पूर्वमेव व्युत्पादितम् ।

---

१-१. इदं क्वचिन्नास्ति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


अप्राप्तोऽयं नलोपः पक्षे विधीयते, ततो नेति नानुवर्त्तते ॥

**शास इदङ्हलोः ॥ ३४ ॥**

शास उपधाया इकारादेशो भवति अङि परतो हलादौ च क्ङिति । अन्वशिषत्, अन्वशिषताम्, अन्वशिषन् । हलादौ किति—शिष्टः । शिष्टवान् । ङिति—आवां शिष्वः । वयं शिष्मः । इत्त्वे कृते 'शासिवसिघसीनां च' इति षत्वम् ।

अङ्हलोरिति किम् ? शासति । शशासतुः, शशासुः ।

❀ क्वौ च शास इत्वं भवतीति वक्तव्यम् ❀ । आर्यान् शास्तीति आर्यशीः । मित्रशीः ।

**पदमञ्जरी**

*शास इदङ्हलोः* ॥ अङ्गाक्षिप्तस्य प्रत्ययस्य हला विशेषणात्तदादिविधिरित्याह—*हलादौ च क्ङितीति* ।

*क्वौ च शास इति* । नित्यत्वात्क्विपो लोपे हलादेरभावाद्वचनम् । प्रत्ययलक्षणेन तु सिद्धम्, यत्र कार्ये वर्णरूपमेव निमित्तत्वे नाश्रीयते तद्वर्णाश्रयत्वात् प्रत्ययलक्षणेन न भवति, यथा—रायः कुलं रैकुलमित्यायादेशः । यत्तु वर्णविशिष्टप्रत्ययनिमित्तं तद्भवत्येव, यथा—अतृणेडिति, हलादौ पिति सार्वधातुके विधीयमानस्तृणह इमागमः, इदमपीत्वं हलादौ क्ङिति प्रत्यये विधीयमानं लोपेऽपि भवति । *आर्यशीरिति* । सकारस्य रुत्वे 'र्वोरुपधायाः' इति दीर्घः ।

**न्यासः**

**अप्राप्तोऽयं नकारलोप इति** । क्ङिति नलोपविधानात्, चिणश्चाक्ङित्वात् । अतः प्रतिषेध्याभावान्नेति नानुवर्त्तते । तेन विधिरेवायमित्यभिप्रायः ॥

**शास इदङ्हलोः** ॥ **अन्वशिषदिति** । 'सर्त्तिशास्त्यर्त्तिभ्यश्च' इति च्लेरङादेशः । **शिष्वः, शिष्म इति** । वस्मसोरुदाहरणे, अदादित्वाच्छपो लुक् । **शासतीति** । 'जक्षित्यादयः षट्' इत्यभ्यस्तसंज्ञा, 'अदभ्यस्तात्' इति झेरदादेशः । **शशासतुः, शशासुरिति** । लिट्यतुस्युसि रूपे ।

**क्वौ च शास इति** । क्वौ परतः शासेरित्त्वं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—यद्यपि कृताकृतप्रसङ्गित्वेन नित्यत्वादत्र पूर्वमित्त्वात् क्विब्लोपस्य विधानम्, तथापि लुप्तेऽपि तस्मिन् प्रत्ययलक्षणेनात्रेत्त्वं भविष्यति ।

'वर्णाश्रये प्रत्ययलक्षणं नास्ति' इत्येतत्तु प्रायिकम् । तथा हि—वर्णाश्रयेऽपि क्वचिद् भवति । तद्यथा—अतृणेडिति । अत्र 'तृणह इम्' इतीमागमः । अथ वा—वर्णाश्रयमेवेदमित्त्वं न भवति । कथम् ? अङ्गग्रहणेनात्र प्रत्ययः सन्निधापितः स हल्ग्रहणेन

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



यस्मात् शासेरङ् विहितः 'शासु अनुशिष्टौ' इति, तस्यैवेदं ग्रहणमिष्यते। 'आङः शासु इच्छायाम्' इत्यस्य न भवति— आशास्ते, आशास्यमानः।

❀ क्विप्प्रत्यये तु तस्यापि भवतीति वक्तव्यम् ❀। आशीः, आशिषौ, आशिषः। 'क्षियाशीःप्रैषेषु तिङाकाङ्क्षम्' इति निपातनाद्वा सिद्धम् ॥

पदमञ्जरी

अथाऽऽशास्ते, आशास्यमान इत्यत्र कस्मान्न भवति ? इत्याह—*यस्माच्छासेरिति*। अङ्विधौ तावत्परस्मैपदिभ्यामर्तिसर्तिभ्यां साहचर्यात्परस्मैपदिनः शासेर्ग्रहणम्, इहाप्यङ्संसर्गाद्विशिष्टस्य शासेर्ग्रहणं संसर्गस्य विशेषावगतिहेतुत्वात्। यथा—सवत्सा धेनुरानीयतां सकलभा सकिशोरेति गवादिर्धेनुः प्रतीयते। ननु च नात्राङ् केवलो निमित्तम्, अपि तु हलादिरपि, स चात्मनेपदिनोऽपि सम्भवति, तत्कुतः संसर्गाद्विशिष्टस्य प्रतीतिः ? नैष दोषः; साधारणा-

न्यासः

विशिष्यते। अत एव वृत्तावुक्तम्—'हलादौ क्ङिति' इति। तेन यद्यपि क्विब् वर्णात्मकः प्रत्ययः, तथापि नासौ वर्णरूपत्वेनाश्रीयते, किं तर्हि ? प्रत्ययरूपत्वेन।

आर्यंश्चीरिति। सकारस्य रुत्वे कृते 'र्वोरुपधाया दीर्घः' इति दीर्घः।

अथाशास्ते, आशास्यमान इत्यत्र कथमित्त्वं न भवति ? इत्याह—यस्माच्छासेरित्यादि। द्वाविमौ शासी—एकः परस्मैपदी, अपरस्त्वात्मनेपदी, तत्र यस्मात् शासेरङ् विहितम् तस्येदं ग्रहणम्, स च 'शासु अनुशिष्टौ' इत्यस्य 'सर्त्तिशास्त्यर्त्तिभ्यश्च' इति विधीयते, तत्र 'परस्मैपदेषु' इत्यनुवर्त्तते, अस्यैव परस्मैपदे सम्भवात्। कथं पुनः सामान्येनोपादाने परस्मैपदिन एव विज्ञायते ? अङः संसर्गात्। संसर्गे हि सति विशेषपरिच्छेदो भवति, तथा हि—सकिशोरा धेनुरानीयतामित्युक्ते किशोरेण संसर्गाद् वडवायामेव सम्प्रत्ययो भवति। इह शासेरित्त्वं प्रत्यङ् निमित्तत्वेनोपात्तः, अतस्तेन संसर्गाद् विशिष्ट एव परस्मैपदी शासिः प्रतीयते। ननु चाङेवात्र केवलो निमित्तत्वेन नोपात्तः, किं तर्हि ? हलपि, स चात्मनेपदिनोऽपि सम्भवति, तत् कुतोऽङ्संसर्गाद् विशिष्टस्य शासेः प्रतीतिः ? नैतदस्ति; साधारणासाधारणसम्बन्धिसन्निपाते यस्यासाधारणः सन्निहितः सम्बन्धी तत्रैव प्रत्ययो जायते। तथा हि—वृद्धानां किशोराणाञ्च मध्ये धेनवोऽनुबध्यन्तामित्युक्ते वडवा एव प्रतीयन्ते। तस्मादङ्हलोरुपादानेऽपि यस्मादङ् विहितस्तस्यैव ग्रहणं युक्तम्।

यदि तर्हि यतोऽङ् विहितस्तस्येदं ग्रहणम्, एवं सति यथाशास्ते, आशास्यमान इत्यत्र न भवति तथा क्विप्प्रत्ययेऽपि न स्यात् ? इत्यत आह—क्विप्प्रत्यये त्वित्यादि। क्षिया-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## शा हौ ॥ ३५ ॥

शासो हौ परतः 'शा' इत्ययमादेशो भवति। अनुशाधि। प्रशाधि।

'उपधायाः' इति निवृत्तम्, ततः 'शासः' इति स्थानेयोगा षष्ठी भवति।

'क्ङिति' इत्येतदपि निवृत्तम्। तेन यदा 'वा छन्दसि' इति

**पदमञ्जरी**

साधारणसम्बन्धिसन्निपाते यस्यासाधारणः सम्बन्धी सन्निहितस्तस्यैव ग्रहणं भवति, यथा 'वृद्धानां किशोरीणां च मध्ये धेनवो बध्यन्ते' इत्युक्ते बडवा धेनवो बध्यन्ते। तस्मादङ्हलोर्द्वयोरप्युपादाने यस्माच्छासेरङ् विहितस्तस्यैव ग्रहणम्। 'शासिवसिघसीनां च' इति षत्वविधौ शासिमात्रस्य ग्रहणं द्रष्टव्यम्; 'आशिषि लिङ्लोटौ' इत्यादिनिर्देशात्॥

*शा हौ॥ उपधाया इति निवृत्तमिति*। तद्धि उपधाग्रहणं क्ङितीत्यनेन सम्बद्धम्, इह च 'क्ङिद्ग्रहणं निवृत्तम्' इति वक्ष्यति, तेन तत्सम्बद्धमुपधाग्रहणं च निवृत्तम्। *स्थानेयोगा षष्ठी भवतीति*। एतच्च शब्दाधिकारपक्षस्याश्रयणाल्लभ्यते, अर्थाधिकारे त्विहाप्यवयवसम्बन्धान्न सर्वस्य स्यात्।

*क्ङितीत्यपि निवृत्तमिति*। उत्तरत्र पुनः क्ङिद्ग्रहणात्। *तेनेति*। अन्यथा

**न्यासः**

शीरित्यादि। अथ वा—नैव तस्या ह्यपि क्विप्प्रत्यय इत्येवं वक्तव्यमिति। विकल्पार्थो वाशब्दः। अथ तच्छब्दः किमर्थः, आन्तरतम्याद् दीर्घो मा भूदिति चेत्? नैतदस्ति; भाव्यमानोऽण् सवर्णान्न गृह्णातीति न भविष्यति? एवं तर्हि विस्पष्टार्थः। अथासन्देहार्थः कस्मान्न भवति? 'शास यङ्हलोः' इत्युच्यमाने सन्देहः स्यात्—किमयमिकारः कृतयणादेशो निर्दिष्टः? आहोस्विदीकारः? अथवा यकार इति? नास्ति सन्देहः, यदयम् 'तदशिष्यं संज्ञाप्रमाणत्वात्' इति निर्देशं करोति, ततो निश्चीयते—इकारोऽयम्, न हीकारः, नापि यकार इति॥

शा हौ॥ यद्यत्र 'उपधायाः' इति वर्त्तते, ततो यथा पूर्वसूत्रे 'शासः' इत्यवयवभूता षष्ठी, तथेहापि स्यात्, एवञ्चोपधाया एवायमादेशः प्रसज्येत, सर्वादेशश्चेष्यत इति मनसि कृत्वाह—उपधाया इति निवृत्तमिति। तद्धि उपधाग्रहणं क्ङिद्ग्रहणेन सम्बद्धम् इह च क्ङिद्ग्रहणं निवृत्तम्। तस्माद् 'उपधायाः' इत्यस्यापि निवृत्तिर्भवति।

क्ङितीत्येतदपि निवृत्तमिति। 'अनुदात्तोपदेश' इत्यादौ सूत्रे पुनः क्ङिद्ग्रहणात् तेनेत्यादिना क्ङिद्ग्रहणे निवृत्ते यदिष्टं सम्पद्यते तद्दर्शयति। यद्यत्र 'क्ङिति' इत्येतदनु



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पित्त्वं हिशब्दस्य, तदाप्यादेशो भवत्येव । शाधीत्याद्युदात्तमपि छन्दसि दृश्यते ॥

## हन्तेर्जः ॥ ३६ ॥

हन्तेर्धातोर्ज इत्ययमादेशो भवति हौ परतः । जहि शत्रून् ॥

### पदमञ्जरी

'सार्वधातुकमपित्' इति वचनात्पित्त्वपक्षे ङित्त्वाभावाच्छाभावो न स्यात् । मा भूत्पित्त्वपक्षे, दृश्यमानस्तु प्रयोगोऽपित्त्वपक्षेऽप्युपपद्यते ? अत आह–*शाधीत्याद्युदात्तमपीति* । यदि तु पिति शाभावो न स्यात्, तदा शाधीत्येतत्सतिशिष्टेन प्रत्ययस्वरेणान्तोदात्त एव स्यात् । आद्युदात्तमपि दृश्यते, तस्मात्पित्त्यपि शाभाव एव द्रष्टव्यः ।

इह 'आ हौ' इति वक्तव्यम्, उपधाया इत्येव, आकारस्याकारवचनमित्त्वबाधनार्थम्, ततः 'हुझल्भ्यो हेर्धिः' इति धित्वम्, 'धि च' इति सकारलोपः । येषां तु 'धि सकारे सिचो लोपः' इति पक्षः, तेषां शाभाव एव विधेय; अन्यथा उपधायाः' इत्यस्य निवृत्तावपि सकारस्याकारे तस्यासिद्धत्वाद्यद्यपि धित्वं लभ्यते, उपधायास्तु पूर्वेणेत्वमाशङ्क्येत, अविरोधात् ॥

हन्तेर्जः ॥ श्तिपा निर्देशो यङ्लुग्निवृत्त्यर्थः ॥

### न्यासः

वर्त्तेत ततो 'वा च्छन्दसि' इति यस्मिन् पक्षे हेरपित्त्वं न भवति तस्मिन् पक्षे 'सार्वधातुकमपित्' इति वचनात् ङित्त्वं नास्तीति शाभावो न स्यात् । क्ङिद्ग्रहणे तु निवृत्तेऽपित्त्वपक्षेऽपि भवत्येव । स्यादेतत्—व्यवस्थितविभाषाविज्ञानाच्छास उत्तरस्य हेः पित्त्वं न भविष्यति, ततो नार्थः क्ङिद्ग्रहणेन निवर्तितेन ? इत्यत आह—शाधीत्येतदित्यादि । यदि शास उत्तरस्य हेः पक्षे पित्त्वं न स्यात्, तदा शाधीत्येतत् सतिशिष्टत्वेन प्रत्ययस्वरेणान्तोदात्तमेव स्यात् । आद्युदात्तमपि च्छन्दसीष्यते । तच्च हेः पित्त्वे सति धातुस्वरेण सम्पद्यते, नान्यथा । तस्मादवश्यं छन्दसि पक्षे पित्त्वं विधेयम् ।

अथ 'आ हौ' इत्येवं कस्मान्नोक्तम्, अकारेऽपि हि 'अलोन्त्यस्य' इति सकारस्य विहिते सवर्णदीर्घत्वेन शाधीत्येतत् सिद्धं भवति ? न सिध्यति; पूर्वसूत्रेणोपधाया इत्त्वं स्यात् । न चायं तस्य बाधको युज्यते; असति च सम्भवे बाधनं भवति, अस्ति च सम्भवो यदुभयं स्यात्, अत्रास्ति सम्भवः । तस्मादकारेऽन्त्यस्य विहित उपधाया इत्त्वं स्यादेव ॥

हन्तेर्जः ॥ हन्तेरिति श्तिपा निर्देशो यङ्लुग्निवृत्त्यर्थः—[1]जङ्घहि ॥

---

१. अत्र सायणः—"'हन्तेर्जः' इत्यत्र च न्यासे 'हन्तेरिति श्तिपा निर्देशाद् यङ्लुकि जभावाभावाज् जङ्घहीति भवति' इति कृतानुनासिकलोपः प्रत्युदाहृतः । अत्रात्रेयः–'न्यासे प्रत्युदाहरणं जङ्घनीहि' इति पठन् 'भाषायां हेरपित्त्वादोऽभावाच्छान्दसमुदाहरणम्' इत्याह ।" इति । ( मा० धातु० पृ० ३१२ ) ( प्र० सं० स० )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



**अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति ॥३७॥**

अनुदात्तोपदेशानामङ्गानां वनतेस्तनोत्यादीनां चानुनासिकलोपो भवति झलादौ क्ङिति प्रत्यये परतः । यमु—यत्वा । यतः । यतवान् । यतिः ।

रमु—रत्वा । रतः । रतवान् । रतिः । अनुदात्तोपदेशा अनुनासिकान्ता यमिरमिनमिगमिहनिमन्यतयः ।

वनति—वतिः । क्तिनो रूपमेतत् । क्तिचि तु 'न क्तिचि दीर्घश्च' इति भवति । अन्यत्र झलादाविटा भवितव्यम् ।

तनोत्यादयः—ततः । ततवान् । सनोतेरात्वं वक्ष्यति । क्षणु—

पदमञ्जरी

*अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति* ॥ उपदिश्यन्ते इत्युपदेशाः, अनुदात्ताश्च ते उपदेशाश्च अनुदात्तोपदेशाः । उपदिश्यमानावस्थायामनुदात्ता इत्यर्थः । अनुनासिकेति पृथक्पदं लुप्तषष्ठीकमनुदात्तोपदेशानां विशेषणम्, तेन तदन्तविधिः ।

*यमिरमीत्यादि* । 'यमिर्यमन्तेषु' इति श्लोको वक्ष्यते । *वनतेरिति* । 'वन षण सम्भक्तौ' ।

न्यासः

अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति ॥ 'अनुनासिक' इति षष्ठ्या बहुवचनस्य लुकं कृत्वाऽविभक्तिकोऽयं निर्देशः । अत एवाह—अनुनासिकान्तानामिति । 'अनुनासिकस्य क्विझलोः क्ङिति' इति दीर्घत्वे प्राप्ते लोपोऽयं विधीयते । अत्र लोपे कृतं दीर्घत्वं न प्राप्नोति; विहतनिमित्तत्वात् । यमिरमिगमिनमिहनिमन्यतय इति । 'यम उपरमे', 'रमु क्रीडायाम्', 'गम्लृ सृप्लृ गतौ', 'णम प्रह्वत्वे', 'हन हिंसागत्योः', 'मन ज्ञाने' ।

वतिरिति । 'वन षण सम्भक्तौ' । 'तितुत्रतथ' इत्यादिनेट्प्रतिषेधः । 'क्तिनि' इत्यनेन क्तिन्येव वनतेरुदाहरणं सम्भवति, नान्यत्रेति दर्शयति । किं कारणम् ? इत्याह—क्तिचि त्वित्यादि । क्तिचि तु 'न क्तिचि दीर्घश्च' इति प्रतिषेधं वक्ष्यति । ये त्वन्ये झलादयः प्रत्ययास्तेष्वपीटा भवितव्यम्, ततो झलादित्वाभावाद्वनतेरनुनासिकलोपं प्रति ते निमित्तभावं नोपयान्तीति पारिशेष्यात् क्तिन्येव वनतेरनुनासिकलोपेन भवितव्यम् ।

सनोतेरात्वं वक्ष्यतीति । तेन तस्यानुनासिकलोपोदाहरणं न भवतीति भावः ।

---

१. 'प्रतिषेधो' इत्यधिकं क्वचित् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



क्षतः । क्षतवान् । ऋणु—ऋतः । ऋतवान् । तृणु—तृतः । तृतवान् । घृणु—घृतः । घृतवान् । वनु—वतः । वतवान् । मनु—मतः । मतवान् । ङिति—अतत । अतथाः ।

अनुदात्तोपदेशवनतितनोत्यादीनामिति किम् ? शान्तः । शान्तवान् । तान्तः । तान्तवान् । दान्तः । दान्तवान् । अनुनासिकस्येति किम् ? पक्वः । पक्ववान् । झलीति किम् ? गम्यते । रम्यते । क्ङितीति किम् ? यन्ता । यन्तव्यम् । उपदेशग्रहणं किम् ? इह च यथा स्यात्—गतिः । इह च मा भूत्—शान्तः, शान्तवानिति ॥

**वा ल्यपि ॥ ३८ ॥**

ल्यपि परतोऽनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो वा भवति । व्यवस्थितविभाषा चेयम्, तेन मकारान्तानां विकल्पो भवति । अन्यत्र नित्यमेव लोपः । प्रयत्य, प्रयम्य । प्ररत्य, प्ररम्य ।

**पदमञ्जरी**

*सनोतेरात्वं वक्ष्यतीति* । 'जनसनखनां सञ्झलोः' इत्यनेन । *अतत, अतथा इति* । 'तनादिभ्यस्तथासोः' इति सिचो लुक् ।

*इह च यथा स्यादिति* । अन्यथा क्तिनि नित्स्वरेण सम्प्रत्युदात्तत्वान्न स्यात् । *इह च मा भूदिति* । अन्यथा प्रत्ययस्वरे कृते शेषनिघाते सम्प्रत्यनुदात्तत्वाच्छान्त इत्यादावपि स्यात् ॥

**न्यासः**

आत्वं पुनः 'जनसनखनाम्' इत्यादिना वक्ष्यति । क्षत इति । 'क्षणु हिंसायाम्' । ऋत इति । 'ऋणु गतौ' । तृत इति । 'तृणु दाने' । घृत इति । 'घृणु दीप्तौ' । वत इति । 'वनु याचने' । मत इति । 'मनु अवबोधने' । अतत, अतथा इति । तनोतेर्लुङ् । आत्मनेपदप्रथममध्यमपुरुषैकवचने । 'तनादिभ्यस्तथासोः' इति सिचो लुक् ।

शान्तः, तान्तः, दान्त इति । शमितमिदमीनां रूपाणि । एते नानुदात्तोपदेशाः । इह चेत्यादि । गमिरमिभ्यां क्तिनि कृते तयोर्नित्स्वरेणाद्युदात्तत्वेऽनुदात्तत्वाभावादसत्युपदेशग्रहणे लोपो न स्यात्, अस्मिंस्तु सति भवति । किञ्च—असत्युपदेशग्रहणे शान्तः, दान्त इत्यत्रापि स्यात् । भवति हि शमिः सतिशिष्टप्रत्ययस्वरे कृते 'अनुदात्तं पदमेकवर्जम्' इति शेषस्यानुदात्तत्वेऽनुदात्तः । उपदेशग्रहणात् तु न भवति, न ह्ययमुपदेशेऽनुदात्तः ॥

वा ल्यपि ॥ अप्राप्तविभाषार्थ आरम्भः । प्रयत्येति । प्रादिसमासे कृते 'समासेऽनञ्पूर्वे क्त्वो ल्यप्', 'ह्रस्वस्य पिति कृति तुक्' ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रणत्य, प्रणम्य । आगत्य, आगम्य । आहत्य । प्रमत्य । प्रवत्य । प्रक्षत्य ॥

न क्तिचि दीर्घश्च ॥ ३९ ॥

क्तिचि परतोऽनुदात्तोपदेशादीनामनुनासिकलोपो दीर्घश्च न भवति । यन्तिः । वन्तिः । तन्तिः ।

अनुनासिकलोपे प्रतिषिद्धे 'अनुनासिकस्य क्विझलोः क्ङिति' इति दीर्घः प्राप्नोति, सोऽपि प्रतिषिद्ध्यते ॥

गमः क्वौ ॥ ४० ॥

गमः क्वौ परतोऽनुनासिकलोपो भवति । अङ्गगत् । कलिङ्गगत् । अध्वगतो हरयः ।

❀ गमादीनामिति वक्तव्यम् ❀ । इहापि यथा स्यात्—संयत् । परीतत् ।

पदमञ्जरी

*गमः क्वौ* ॥ *अध्वगत इति* । अध्वनो गन्तार इत्यर्थः । अनुनासिकलोपे कृते ह्रस्वस्य तुक् ।

*संयदिति* । सम्पूर्वाद्यमेः क्विप् । *परीतदिति* । तनोतेः क्विप्, 'नहिवृतिवृषि' इत्यादिना पूर्वपदस्य दीर्घः ।

न्यासः

न क्तिचि दीर्घश्च ॥ यन्तिरित्यादि । 'क्तिच्क्तौ च संज्ञायाम्' इति क्तिच् । अत्र चानुदात्तोपदेशादिग्रहणमनुवर्त्तते, तेन कान्तिः, शान्तिरित्यत्र दीर्घप्रतिषेधो न भवति । अनुनासिकलोपस्य त्वत्र प्राप्तिरेव नास्ति; उदात्तोपदेशत्वात् ।

अनुनासिकलोपे प्रतिषिद्ध इत्यादिना दीर्घग्रहणस्य प्रयोजनमाचष्टे । ननु च प्रकरणापेक्षया यदस्मिन् प्रकरणे विहितं तन्न भवतीति विज्ञायमानेऽन्तरेणापि दीर्घग्रहणं दीर्घस्यापि प्रतिषेधो भविष्यति, तत् किं दीर्घग्रहणेन ? एवं तर्ह्येतज्ज्ञापयति—अस्तीयं परिभाषा 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति ॥

गमः क्वौ ॥ अयमप्यझलाद्यर्थ आरम्भः । अध्वगतो हरय इति । अध्वानं गच्छन्तीति क्विप्, तदन्ताज्जस् ।

गमादीनामित्यादि । गमादीनामनुनासिकलोपः क्वौ भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—पूर्वसूत्राच्चकारोऽनुवर्त्तते, स चानुक्तसमुच्चयार्थः, तेन गमादीनां भविष्यति, न तु गमेरेव केवलस्येति । संयदिति । संपूर्वाद् यमेः क्विप् । परीतदिति । परिपूर्वात् तनोतेः, 'नहिवृति' इत्यादिना दीर्घः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



॥ ऊ च गमादीनामिति वक्तव्यम् ॥ । अग्रेगूः । अग्रेभ्रूः ॥

विड्वनोरनुनासिकस्यात् ॥ ४१ ॥

विटि वनि च प्रत्यये परतोऽनुनासिकान्तस्याङ्गस्याकार आदेशो भवति । अब्जा गोजा ऋतजा अद्रिजा । गोषा इन्द्रो नृषा असि । कूपखाः । शतखाः । सहस्रखाः । दधिक्राः । अग्रेगा उन्नेतॄणाम् । 'जनसनखनक्रमगमो विट्' इति विट् प्रत्ययः । 'सनोतेरनः' इति षत्वम्—गोषा इन्द्रो नृषा असीत्यत्र । वन्—विजावा । अग्रेजावा । 'अन्येभ्योऽपि दृश्यन्ते' इति वनिप्प्रत्ययः ।

'अनुनासिकस्य' इति वर्त्तमाने पुनरनुनासिकग्रहणमनुनासिकमात्रपरिग्रहार्थम्,अन्यथा ह्यनुदात्तोपदेशवनतितनोत्यादीनामेव स्यात् ॥

पदमञ्जरी

ऊ चेति । चकारादनुनासिकलोपश्च । *अग्रेगूरिति* । अनुनासिकलोपे कृते अकारस्य ऊकारः । क्वचिद् *ऊङिति* ङकारः पठ्यते, न तस्य प्रयोजनमस्ति । 'ओः सुपि' इति यणादेशो धातुत्वाद्भवति—अग्रेग्वौ, अग्रेग्वः । *अग्रेभ्रूरिति* । एवं च कृत्वा 'अचि श्नुधातु' इत्यत्र भ्रूग्रहणं न कर्त्तव्यं धातुत्वादेव सिद्धम् ॥

*विड्वनोरनुनासिकस्यात्* ॥ *अग्रेगा इत्यादि* । यद्यप्यकारविधानेऽपि सवर्णदीर्घेण सिद्ध्यति, 'अतो गुणे' इति पररूपत्वे हि अतोलोपमेव विदध्यात् । ये त्वकारोपधा न भवन्ति, तदर्थं दीर्घोच्चारणम्-'घुण घूर्ण भ्रमणे', 'अन्येभ्योऽपि दृश्यन्ते' इति वनिप्, घ्वावा, घूरावा । क्षिणु—क्षावा, ऋणु-रावा, ओणृ-अवावा ॥

न्यासः

ऊ चेत्यादि । चकारादनुनासिकलोपः । क्वचिद् ऊङ् चेति पठ्यते, तत्र ङकारस्य प्रयोजनं चिन्त्यम् । अलोऽन्त्यपरिभाषयैवात्र भविष्यति । अग्रेगूः । अग्रेभ्रूरिति । गमेः, भ्रमेश्चानुनासिकलोपे कृतेऽकारस्योकारः ॥

विड्वनोरनुनासिकस्यात् ॥ अब्जा इति । अप्सु जायत इत्युपपदसमासः, पकारस्य जश्त्वम्—बकारः । गोषा इति । 'षणु दाने' । विजावा इति । 'जन जनने' । 'जनी प्रादुर्भावे' इति वा । अग्रेगा इति । 'तत्पुरुषे कृति बहुलम्' इति सप्तम्या अलुक् ।

अथानुनासिकग्रहणं किमर्थम्, यावतानुदात्तोपदेशेत्यादेः सूत्रादनुनासिकग्रहणमनुवर्त्तत एव ? इत्याह—अनुनासिकस्येति वर्त्तमान इत्यादि । तद्धि प्रकृतमनुनासिकग्रहणमनुदात्तोपदेशग्रहणेन सम्बद्धम्, अतस्तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यात् । तस्मादिदमन्यदनुनासिकग्रहणं क्रियते—अनुनासिकमात्रस्य यथा स्यात् । अथेह दीर्घोच्चारणं किम-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


## जनसनखनां सञ्झलोः ॥ ४२ ॥

'झलि', 'क्ङिति' इति चानुवर्त्तते। जन, सन, खन—इत्येतेषाम-ङ्गानां सनि झलादौ क्ङिति झलादौ प्रत्यये परत आकार आदेशो भवति। जन्—जातः। जातवान्। जातिः। सन्—सनि, सिषासति। सातः। सातवान्। सातिः। खन्—खातः। खातवान्। खातिः।

झल्ग्रहणं सन्विशेषणार्थं किमर्थमनुवर्त्यते? इह मा भूत्—जिजनिषति। सिसनिषति। चिखनिषति। सनोतेः 'सनीवन्तर्ध' इति पक्षे इडागमः।

तदिह सनोत्यर्थमेव सन्ग्रहणम्। अत्र झलादौ क्ङिति सनोते-र्विप्रतिषेधाद् आत्त्वमनुनासिकलोपं बाधते।

**पदमञ्जरी**

*जनसनखनां सञ्झलोः* ॥ झल्शब्देनात्र झलादिर्गृह्यते; अङ्गेनाक्षिप्तस्य प्रत्य-यस्य झला विशेषणात्। क्ङिद्ग्रहणं तस्य विशेषणम्। प्रकृतं तु झल्ग्रहणं सनो विशेषणम्।

*तदिहेति*। वाक्योपन्यासे। *विप्रतिषेधादिति*। सनोतेस्तनोत्यादिपाठस्या-

**न्यासः**

र्थम्, ह्रस्व एवोच्येत, ह्रस्वेऽपि कृते सत्यकः सवर्णे दीर्घत्वेन सिद्ध्यत्येव; अतो गुणे पररूपत्वं प्राप्नोति, अतो न सिध्यतीत्येतन्नाशङ्कनीयम्, अकारविधानसामर्थ्यात्; यदि ह्यतो गुणे पररूपत्वं स्यात् तदा प्रकृतं लोपग्रहणमेव विदध्यात्, ततो ह्रस्व एव कर्त्तव्यः। नैतदस्ति; ह्रस्वे हि सति 'घुण घूर्णने' इत्यस्माद्वनिपि विहिते घ्वावा इति न सिध्येत्? ततो दीर्घस्यैव विधानं युक्तम्॥

जनसनखनां सञ्झलोः ॥ झलि क्ङिति चानुवर्त्तत इति यथाक्रमं सनो झलश्च विशेषणम्। सूत्रोपात्तेन तु झल्ग्रहणेन न शक्यते सन् विशेषयितुम्, विशेषणं ह्यप्रधानं भवति, विशेष्यं तु प्रधानम्। सञ्झलोरिति चायं द्वन्द्वः। तत्र सर्वेषां द्वन्द्वपदानां प्राधान्यादन्योऽन्यं प्रधानगुणभावो नोपपद्यते। सन्ग्रहणञ्चाक्ङिदर्थम्।

तदिहेत्यादि। यस्मात् सनोतेः पक्ष इडागमस्तस्मात् तत एव परो झलादिः सन् सम्भवतीति तदर्थमेव सन्ग्रहणम्, न तु जनखनार्थम्। न हि ताभ्यां परो झलादिः सन् सम्भवति, तयोर्नित्यं सेट्त्वात्। यद्येवम्, सनोतेः सनि कृतार्थत्वादात्त्वं न स्यात्, अन्यत्र निष्ठादौ झलादौ क्ङितिप्रत्यये 'अनुदात्तोपदेश' इत्यादिना नलोपः स्यात्? इत्यत आह—अन्यत्रेत्यादि। सनोतेस्तनोत्यादिषु पाठस्यावकाशोऽन्यत् तनादिकं कार्यम्—'तनादिभ्यस्तथासोः' इत्यादि, आत्त्वविधौ च सन्ग्रहणस्यावकाशः—सन्, सिषासतीति; इहोभयं प्राप्नोति—सातः, सातवानिति। अत्रानुनासिकलोपं बाधित्वात्वं

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

'घुमास्थागापाजहातिसां हलि' इति हल्ग्रहणं ज्ञापकम्—अस्मिन्नसिद्धप्रकरणे विप्रतिषेधो भवतीति ॥

पदमञ्जरी

वकाशोऽन्यत्तनादि कार्यम्—'तनादिकृञ्भ्य उः', तनादिभ्यस्तथासोः' इति, इह त्वास्त्वविधौ सन्ग्रहणस्यावकाशः—सन्, शिषासति; स्यतः, सातवानित्यत्रोभयप्रसङ्गे परत्वादात्वं भवति ।

ननु चासिद्धकाण्डे वक्ष्यति—पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्येति, यत्र किलैकस्याप्यसिद्धत्वे विप्रषेधाभावस्तत्र का कथा द्वयोरप्यसिद्धत्वे ? इत्यत आह—*घुमास्थागापाजहातीत्यादि* । *विप्रतिषेधो भवतीति* । विप्रतिषेधेन व्यवस्थायां क्रियमाणायामसिद्धत्वं न भवतीत्यर्थः । कथं कृत्वा ज्ञापकम् ? हल्ग्रहणस्यैतत्प्रयोजनम्—हलादौ यथा स्यात्, इह मा भूत्—गोदः, कम्बलद इति । यदि चात्र विप्रतिषेधो न स्याद्धल्ग्रहणमनर्थकं स्यात् । अस्त्वत्रेत्वम्, तस्यासिद्धत्वादियङादेशे असत्याल्लोपे तत्सिद्धं स्यात्, सति विप्रतिषेधे आल्लोपस्यावकाशः—पार्ष्णित्रम्, अङ्गुलित्रमिति, ईत्वस्य—दीयते, मीयते; गोद इत्याद्यावसति हल्ग्रहणे परत्वादीत्वं स्यादिति हल्ग्रहणमर्थवद्भवति ? नैतदस्ति ज्ञापकम्; व्यवस्थार्थमेतत्स्यात् । असति हि तस्मिन्नीत्वस्यासिद्धत्वादालोपः, तस्यासिद्धत्वादीत्वमिति चक्रकमव्यवस्था प्राप्नोति ? नास्ति चक्रकप्रसङ्गः, न ह्यव्यवस्थाकारिणा शास्त्रेण भवितव्यम्, शास्त्रतो नाम व्यवस्था । तत्र पूर्वमीत्वम्, तस्यासिद्धत्वादाल्लोपः, लोपेनावस्थानं भविष्यति । एवमपि कुत एतत्—ईत्वास्यासिद्धत्वादाल्लोपः, लोपेनावस्थानमिति; न पुनर्विपर्ययः स्यात्—पूर्वमाल्लोपः, तस्यासिद्धत्वादीत्वमीत्वेन व्यवस्थानमिति ? एवं तर्हि यदि व्यवस्थार्थमेतत्स्यात्, नैवायं हल्ग्रहणं कुर्वीत, अविशेषेणायमीत्वं कृत्वा तस्याजादौ

न्यासः

भवति विप्रतिषेधेन । ननु चोभयोः सिद्धयोर्विप्रतिषेधो भवति, इह च 'असिद्धवदत्रा भात्' इत्युभयमप्यसिद्धम्, तत् कुतो विप्रतिषेधः ? इत्यत आह—घुमास्थागेत्यादि । कथं कृत्वा ज्ञापकम् ? हल्ग्रहणस्यैतदेव प्रयोजनम्—हलादावीत्त्वं यथा स्यात्, इह मा भूत्—'आतोऽनुपसर्गे कः' गोदः, कम्बलद इति । यदि चात्र विप्रतिषेधो न स्याद् हल्ग्रहणमनर्थकं स्यात् । अस्त्वत्रेत्त्वम्, तस्यासिद्धत्वाल्लोपो भविष्यति । पश्यति त्वाचार्यः—भवतीह प्रकरणे विप्रतिषेधः इति; यतो हल्ग्रहणं करोति । ननु चासति हल्ग्रहणेऽजादावपीत्त्वं स्यात्, ततश्चेयङ् प्रसज्येतेत्यनिष्टं रूपमपद्येत । तस्मादनिष्टनिवृत्त्यर्थत्वाद्धल्ग्रहणस्य न युज्यते ज्ञापकत्वम् ? नैष दोषः; असिद्धत्वादेवेत्त्वस्येयङादेशो न भविष्यति । व्यवस्थार्थं तर्हि हल्ग्रहणं स्यात्, असति हि

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## ये विभाषा ॥ ४३ ॥

यकारादौ क्ङिति प्रत्यये परतो जनसनखनामाकार आदेशो भवति विभाषा। जायते, जन्यते। जाजायते, जञ्जन्यते। सायते, सन्यते। सासायते, संसन्यते। खायते, खन्यते। चाखायते, चङ्खन्यते। जनेः श्यनि 'ज्ञाजनोर्जा' इति नित्यं जादेशो भवति॥

**पदमञ्जरी**

लोपमपवादं विदधीत, कथम्? इदमस्तु 'आतो लोप इटि च', ततो घुमास्थागापाजहातिसां लोपो भवति—इटि चाजादौ च क्ङितीति, किमर्थं पुनरिदमीत्त्वम्? वक्ष्यति—तस्य बाधनार्थं तत्, ईद्भवति घ्वादीनाम्, ततः 'एर्लिङि', 'वान्यस्य संयोगादेः', 'न ल्यपि', 'मयतेरिदन्यतरस्याम्', ततः 'यति च', यति च ईद्भवति 'आतः' इत्येव, सोऽयमेवं लघीयसा न्यासेन सिद्धे सति यति यद्धल्ग्रहणं करोति तद् गरीयांसं यत्नमारभते, तज्ज्ञापयत्याचार्यः—भवतीह विप्रतिषेध इति।

इह झल्ग्रहणं शक्यमकर्त्तुम्। कथम्? योगविभागः कर्त्तव्यः—जनसनखनामनुनासिकस्याकारादेशो भवति, झलि क्ङिति; ततः सनि च, जनसनखनामाकारादेशो भवति झलीत्येव॥

*ये विभाषा* ॥ *जायत इति*। यक्। *नित्यं जादेशो भवतीति*। तस्यानवकाशत्वात्। तेन श्यनि जायते इत्येव भवति, न तु कदाचित् जन्यत इति॥

**न्यासः**

तस्मिन्नीत्त्वस्यासिद्धत्वादाल्लोपः, आकारलोपस्यासिद्धत्वादीत्त्वमिति चक्रवदव्यवस्था स्यात्? एतदप्यप्रयोजनम्, यदि व्यवस्थार्थं हल्ग्रहणं स्यात्, नैवायं हल्ग्रहणं कुर्वीत। अविशेषेणेकारमुक्त्वा तस्याजादौ लोपमपवादं विदध्यात्। तत् कथमिदमस्तु—'आतो लोप इटि च' इति? ततः 'घुमास्थागापाजहातिसाम्' आकारलोपो भवतीत्यजादौ च क्ङिति। किमर्थमिदम्? प्रत्ययमात्रे घ्वादीनां यदीत्त्वं वक्ष्यते, तस्यायमित्यजादौ च क्ङित्यपवादः, ततः 'ईत्' इतीत्त्वं भवति घादीनामनचि क्ङिति, ततः 'एर्लिङि' 'वान्यस्य संयोगादेः', 'न ल्यपि', 'मयतेरिदन्यतरस्याम्'; ततो यतीत्त्वं भवति—सोऽयमेवं लघीयसा न्यासेन सिद्धे यद्धल्ग्रहणं करोति, तज्ज्ञापयत्याचार्यः—भवतीह विप्रतिषेधः इति॥

ये विभाषा ॥ असञ्झलाद्यर्थ आरम्भः। जायते, जन्यत इति। भावे लकारः। जाजायत इति। यङ्, 'दीर्घोऽकितः' इत्यभ्यासस्य दीर्घत्वम्। जञ्जन्यत इति। 'नुगतोऽनुनासिकान्तस्य' इति नुगागमः। सायते, सन्यत इति। भावे कर्मणि वा

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## तनोतेर्यकि ॥ ४४ ॥

तनोतेर्यकि परतो विभाषा आकार आदेशो भवति । तायते, तन्यते ।

यकीति किम् ? तन्तन्यते ॥

## सनः क्तिचि लोपश्चास्यान्यतरस्याम् ॥ ४५ ॥

सनोतेरङ्गस्य क्तिचि प्रत्यये परत आकार आदेशो भवति लोपश्चास्यान्यतरस्याम् । सातिः, सन्तिः, सतिः ।

अन्यतरस्यांग्रहणं विस्पष्टार्थम् । ये-सम्बद्धं हि विभाषाग्रहणमिह निवृत्तमित्याशङ्क्येत ॥

### पदमञ्जरी

*सनः क्तिचि लोपश्चास्यान्यतरस्याम्* ॥ अस्यग्रहणमनन्तरस्य क्तिचो मा भूद्, व्यवहितस्यापि धातोरेव यथा स्यात् । क्रियमाणे हि तस्मिन्कार्यित्वेन प्राधान्याद्व्यवहितस्यापि धातोरेव परामर्शो भवति ।

अन्यतरस्यांग्रहणमनर्थकम्, 'विभाषा' इति प्रकृतत्वाद् ? अत आह—*अन्यतरस्यांग्रहणमिति* । ननु नैतद्विस्पष्टनीयं प्रकृतमनुवर्त्तत इति ? तदाह—ये-संबद्धं हीति ॥

### न्यासः

लकारः । जनेः श्यन्यपि विभाषात्त्वेन भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात्, अतस्तां निराकर्तुमाह—जनेः श्यनीत्यादि । जनेर्दिवादित्वात् श्यनि विहिते सत्युभयं प्राप्नोति, अनेन विभाषाऽऽत्त्वम्, 'ज्ञाजनोर्जा' इति जाभावश्च, तत्र जादेशस्यानवकाशत्वात् स एव नित्यं भवति । तेन श्यनि 'जायते' इत्येवं नित्यं भवति, न तु कदाचित् 'जन्यते' इति ॥

तनोतेर्यकि ॥ सनः क्तिचि लोपश्चास्यान्यतरस्याम् ॥ अस्य ग्रहणमनन्तरस्य क्तिचो लोपो मा भूत् । व्यवहितस्यापि नलोपो यथा स्यादित्येवमर्थम् । अथ क्रियमाणेऽप्यस्यग्रहणे कस्मादेव क्तिचो लोपो न भवति ? अस्यग्रहणसामर्थ्यात् ।

अथान्यतरस्यांग्रहणं किमर्थम्, यावता विभाषेत्यनुवर्त्तते ? इत्याह—अन्यतरस्यांग्रहणमित्यादि । कथं पुनर्विभाषाग्रहणस्य निवृत्तिराशङ्क्यते, यतो विस्पष्टार्थमन्यतरस्यांग्रहणं कृतम् ? इत्याह—यकारसम्बन्धेन हीत्यादि । तद्विभाषाग्रहणं यकारादिप्रत्ययस्य सम्बन्धेन । इह च य इत्येतस्मिन् निवृत्ते क्तिचो निमित्तान्तरस्योपादानादतस्तन्निवृत्तौ विभाषाग्रहणमपि निवृत्तमिति कस्यचिदाशङ्का स्यात्, अतो विस्पष्टार्थमन्यतरस्यांग्रहणं क्रियते ॥

---

CC-0.Panini Kanya Maha Vidyalaya Collection.

१ [illegible]

Digitized by Arya Samaj Foundation Chennai and eGangotri



## आर्धधातुके ॥ ४६ ॥

'आर्धधातुके' इत्यधिकारः । 'न ल्यपि' इति प्रागेतस्माद्यदित ऊर्ध्वमनुक्रमिष्यामः 'आर्धधातुके' इत्येवं तद्वेदितव्यम् । वक्ष्यति—

"'अतो लोपः' । चिकीर्षिता । जिहीर्षिता । आर्धधातुक इति किम् ? भवति । भवतः ।" अदिप्रभृतिभ्यः शपो लुग्वचनं प्रत्ययलोपलक्षणप्रतिषेधार्थं स्यादित्येतन्न ज्ञापकं शपो लोपाभावस्य ।

"'यस्य हलः' । बेभिदिता । बेभिदितुम् । बेभिदितव्यम् । आर्धधातुक इति किम् ? बेभिद्यते ।"

### पदमञ्जरी

*आर्धधातुके* ॥ *चिकीर्षितेति* । सनन्तात्तृच् भवतीति सर्वत्रातो लोपे कृते 'अतो दीर्घो यञि' इत्यस्य कोऽवकाशः, वचनात्पचाव इत्यादौ लोपं बाधित्वा दीर्घोऽस्तु । तत्र चरितार्थम् 'अदुपदेशाल्लसर्वधातुकानुदात्तत्वम्' इति ? तदपि न ज्ञापकं सार्वधातुकेऽतो लोपाभावस्य; यत्तर्ह्यदिप्रभृतिभ्यः शपो लुकं शास्ति तज्ज्ञापयति—न शपोऽतो लोप इति ? तत्राह—*अदिप्रभृतिभ्यः शप इति* । ये तर्हि न गुणवृद्धिभाजोऽदिप्रभृतयस्तेषामदादिषु पाठोनर्थकः ? सत्यम्; वृक्षत्वम्, वृक्षतेत्यादावतो लोपे आर्द्धधातुकाधिकारस्य प्रयोजनम्—बेभिद्यते इत्यत्र शपि सार्वधातुके न भवति । यङो यकारोपशस्तु हलन्तेषु चरितार्थः ।

### न्यासः

आर्धधातुके ॥ चिकीर्षितेति सन्नन्तात् तृच् ।

भवति, भवत इति । 'आर्धधातुके' इत्यधिकारात् सार्वधातुकेऽत्र शपो लोपो न भवति । यद्यत्र शपो लोपो मा भूदित्येवमर्थं आर्धधातुकाधिकारः क्रियते, तर्हि न कर्त्तव्यः, ज्ञापकादेव शपो लोपो न भविष्यति, आचार्यप्रवृत्तिर्ज्ञापयति—नानेन शपो लोपो भवतीति यदयम् 'अदिप्रभृतिभ्यः शपः' इति शपो लुकं शास्ति ? इत्यत आह—अदिप्रभृतिभ्य इत्यादि । इतिकरणो हेतौ । असति हि प्रयोजने ज्ञापकं भवति । अस्ति चादिप्रभृतिभ्यः शपो लुग्वचनस्य प्रयोजनम् । किं तत् ? वित्त इत्यत्र गुणो मा भूत् । यदि वित्त इत्यत्र लोपः स्यात्, प्रत्ययलक्षणेन 'पुगन्तलघूपधस्य' इति गुणः स्यात् । मृष्ट इत्यत्र 'मृजेर्वृद्धिः' लुकि तु सति न भवति, 'न लुमताङ्गस्य' इति प्रत्ययलक्षणप्रतिषेधात् । तस्माददिप्रभृतिभ्यः शपो लुग्वचनं प्रत्ययलक्षणप्रतिषेधार्थं स्यादिति न ज्ञापकं शपो लोपाभावस्य ।

बेभिदितेति । यङो लोपः । बेभिद्यत इत्यत्र शपि सार्वधातुके न भवति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



"'णेरनिटि'। कारणा। हारणा। आर्धधातुक इति किम्? कारयति। हारयति।"

"'आतो लोपः।' ययतुः। ययुः। ववतुः। ववुः। आर्धधातुक-इति किम्? यान्ति। वान्ति।"

"'घुमास्थागापाजहातिसां हलि'। दीयते। धीयते। आर्ध-धातुक इति किम्? अदाताम्। अधाताम्"।

"'वाऽन्यस्य संयोगादेः'। स्नेयात्, स्नायात्। आर्धधातुक इति किम्? स्नायात्। आशीर्लिङोऽन्यत्र न भवति"।

"'स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च'। कारिषीष्ट। हारिषीष्ट। आर्धधातुक इति किम्? क्रियेत। ह्रियेत। यगन्तस्याजन्तत्वाच्चिण्वद्भावे सति वृद्धिः स्यात्, ततश्च युक् प्रसज्येत"।

**पदमञ्जरी**

*कारयतीति*। णिज्विधानं प्रत्ययलक्षणार्थमियङर्थं च स्यात्।

*यान्तीति*। ननु 'श्नाभ्यस्तयोरातः' इत्येतन्नियमार्थं भविष्यत्—सार्वधातुके श्नाभ्यस्तयोरेवेति? नैतदस्ति; विपरीतोऽपि नियमः स्यात्—श्नाभ्यस्तयोः सार्वधातुक एवेति, तदा च ययतुरित्यादौ न स्यात्। श्नाग्रहणं तूत्तरार्थं स्यात्।

*अदातामिति*। लुङ्, 'गातिस्थाघु' इत्यादिना सिचो लुक्।

*चिण्वद्भावे सति वृद्धिः स्यादिति*। नन्वतो लोपो वृद्धेः पूर्वविप्रतिषेधे,

**न्यासः**

कारणेति। 'ण्यासश्रन्थो युच्'। कारयतीति शपि सार्वधातुके न भवति।

पपतुः, पपुः। ववतुः, ववुरिति। अतुसुसौ। पातेर्वातेश्च 'आतो लोप इटि च' इत्याकारलोपः।

दीयते, धीयत इति। आर्धधातुके यकोऽत्त्वम्। अदाताम्, अधातामिति। लुङ्, 'तस्थस्थ' इति तसस्ताम्, 'गातिस्था' इत्यादिना सिचो लुक्।

स्नायात्, स्नेयाद्विति। स्नातेराशिषि लिङ्, तस्य 'लिङाशिषि' इत्यार्द्धधातुक-संज्ञा, यासुट्, 'स्कोः संयोगाद्योः' इत्यादिना सकारलोपः। आशीर्लिङोऽन्यत्र न भव-तीति। आशीर्लिङोऽन्यद् विध्यादिलिङ्, तत्र न भवति; तस्य सार्वधातुकसंज्ञकत्वात्। तेन तत्र नित्यं स्नायादित्येवं भवति। अत्र 'लिङः सलोपोऽनन्त्यस्य' इति सकारलोपः।

कारिषीष्टेति। आशिषि लिङ्, सीयुट्, 'भावकर्मणोः' इत्यात्मनेपदम्, सुट्,

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अतो लोपो यलोपश्च णिलोपश्च प्रयोजनम् ।
आल्लोप ईत्वमेत्वं च चिण्वद्भावश्च सीयुटि ॥

पदमञ्जरी

तद्यथा—चिकीर्षक इति, अदिहनिमावाप्रभृतिभ्यः शपो लुग्विधानेन सार्वधातुकेऽतोलोपाभावस्य ज्ञापितत्वात्तत्राश्रयोऽतो लोपो मा भूच्चिण्वद्भावात्तु चिणि तस्य दर्शनात्स्यादेव । *वृत्तिकारेण* तु 'प्राप्तिमात्रमाश्रित्य वृद्धिः स्यात्'-इत्युक्तम् । दोषोपलक्षणं वृद्धिग्रहणम्, लोपेऽपि रूपासिद्धिरेव ।

*ततो युक् प्रसज्येतेति* । 'आद्गुणः' इति तु वार्णत्वान्न लभ्यते, इट्प्रसङ्गस्तु विशेषाभावान्नोक्तः ।

प्रयोजनसंग्रहश्लोको गतार्थः । 'भ्रस्जो रोपधयोरमन्यतरस्याम्', 'दीङो युडचि क्ङिति' इत्यत्र तु नास्य प्रयोजनम्, कथम् ? भृज्जतेः सार्वधातुके तुदादित्वाच्छः, तत्र ग्रहिज्यादिसूत्रेण सम्प्रसारणम् । दीङोऽपि दिवादित्वान् श्यना भाव्यमित्युक्तान्येव प्रयोजनानि ।

असिद्धत्वनिवृत्त्यर्थं द्वितीयाध्यायगोचराः ।
आदेशा नेह विहिता वुगाल्लोपौ प्रयोजनम् ॥
अन्यथा—अस्त्यादेशस्य भवतेरसिद्धत्वान्न वुग्भवेत् ।
न चाचख्युतुरित्यादावाल्लोपः ख्यात्रसिद्धितः ॥

न्यासः

तिथोः' इति सुट्, चिण्वदभावाद् वृद्धिः । क्रियेतेति । विध्यादिलिङ्, पूर्ववदात्मनेपदम्, सार्वधातुके यक्, सीयुडीकारेण सह 'आद्गुणः', लोपो व्योर्वलि' इति यकारलोपः, रिङ् शयग्लिङ्क्षु' इति रिङादेशः । अत्र चिण्वद्भावेन यो दोषः स्यात् तं यगन्तस्येत्यादिना दर्शयति । यद्यत्र चिण्वद्भावात् वृद्धिः स्यात्, ततश्च 'आतो युक् चिण्कृतोः' इति युक् प्रसज्येत ।

**अतो लोपो यलोपश्चेत्यादि** । आर्धधातुकाधिकारप्रयोजनसंग्रहश्लोकः । गतार्थः ।

नन्वत्र 'भ्रस्जो रोपधयो रमन्यतरस्याम्' इति रम्, 'दीङो युडचि क्ङिति' इति युडार्धधातुकाधिकार एव विधास्यते, तत् कस्मात् तौ तत्र प्रयोजनत्वेन नोपात्तौ ? एवं मन्यते—भ्रस्जो रम्भाव आर्धधातुकाधिकारं न प्रयोजयति, स तु तुदादौ पठ्यते, ततः सार्वधातुके परतः शेन भवितव्यम्, शे च सति पूर्वविप्रतिषेधाद् ग्रहिज्यादिसूत्रेण सम्प्रसारणेन भवितव्यम् । युडपि नैव प्रयोजयति, दीङो हि दिवादित्वात् सार्वधातुके श्यना भवितव्यम् । ततोऽजादित्वाभावादेव युडागमस्याभाव एव । 'आर्धधातुके' इति यदार्धधातुकसामान्यं विवक्ष्यते तदा सामान्ये पौर्वापर्यासम्भवात् विषयसप्तमीयम् । यदार्धधातुकव्यक्तिस्तदा परसप्तमी । प्रतिपादितञ्चास्माभिः 'न धातुलोप' इत्यत्र ज्ञापकद्वारेण परसप्तमीत्वं विषयसप्तमीत्वञ्चास्येति ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## भ्रस्जो रोपधयो रमन्यतरस्याम् ॥ ४७ ॥

भ्रस्जो रेफस्योपधायाश्च रमन्यतरस्यां भवति। 'रोपधयोः' इति स्थानषष्ठीनिर्देशादुपधा, रेफश्च निवर्त्तेते। मित्त्वाच्चायमचोऽन्त्यात्परो भवति। भ्रष्टा, भर्ष्टा। भ्रष्टुम्, भर्ष्टुम्। भ्रष्टव्यम्, भर्ष्टव्यम्। भ्रज्जनम्, भर्ज्जनम्।

भृष्टः, भृष्टवान् इत्यत्र पूर्वविप्रतिषेधेन सम्प्रसारणं भवति।

पदमञ्जरी

*भ्रस्जो रोपधयो रमन्यतरस्याम्* ॥ रमित्ययं रोपधयोर्यदि स्थाने भवति मित्त्वमस्यानर्थकं स्यात्, अथाचोऽन्त्यात्पर आगमो रोपधयोः श्रवणं प्राप्नोति? तत्राऽऽह–*रोपधयोरिति स्थानषष्ठीनिर्देशादिति*। 'रोपधयोः' इति तावत्स्थानषष्ठी, स्थानं च प्रसङ्गः, रोपधयोः प्रसङ्गे रम् प्रयुज्यते, रोपधे न प्रयुज्येते इत्यर्थः। प्रयुज्यमानश्च रम् मित्त्वादन्त्यादचः परः प्रयुज्यते। यस्य तु देशान्तरे विधानं नास्ति स स्थानिदेश एव भवति, तत्प्रसङ्गे हि तस्य विधानम्, विशिष्टदेशश्च स्थानिनः प्रसङ्गः। इह तु मित्त्वेनायं न्यायो बाध्यते. स्थानषष्ठीनिर्देशसामर्थ्यात्तु देशान्तरे प्रयुज्यमानोऽपि रोपधे निवर्त्तयतीति सर्वमवदातम्। *भारद्वाजीयास्तु* 'सनः क्तिचि' इत्यतो लोपग्रहणमनुवर्त्त्य रोपधयोर्लोपं रमागमं चान्यतरस्यां विदधति। *भ्रज्जनमिति*। ल्युटि सकारस्य जश्त्वम्–दकारः, तस्य चुत्वम्–जकारः।

*पूर्वविप्रतिषेधेनेति*। रमोऽवकाशः–भ्रष्टा, भ्रष्टुम्, सम्प्रसारणस्यावकाशः—

न्यासः

भ्रस्जो रोपधयो रमन्यतरस्याम्॥ रमयं यदि रेफोपधयोः स्थाने स्यात् मित्त्वमनर्थकं स्यात्। अथायं रमागमोऽचोऽन्त्यात् परो भवति रेफोपधयोः श्रवणमापद्येत?–इत्येतच्चोद्यमाशङ्क्याह—रोपधयोरित्यादि। मित्त्वाद्रमनेनावश्यमचोऽन्त्यात् परेण भवितव्यम्, अन्यथा तदनर्थकं स्यात्। तत्र यदि रेफोपधयोः श्रवणं स्याद् 'रोपधयोः' इति षष्ठीनिर्देशोऽनर्थकः स्यात्। तस्मात् षष्ठीनिर्देश एव तयोर्निवृत्तिमाचष्टे। तस्या ह्येतदेव प्रयोजनम्—षष्ठ्या निर्दिश्यमानस्य यो धर्मो निवृत्तिः सा यथा स्यात्। न ह्यन्यत् षष्ठीनिर्देशस्य प्रयोजनमस्ति। तस्मान् मित्त्वादचोऽन्त्यात् परो भवति रम्। षष्ठीनिर्देशसामर्थ्याद् रेफोपधे स्थानिधर्मनिवृत्तिं प्रतिपद्येते। भ्रष्टेति। 'भ्रस्ज पाके' व्रश्चादिसूत्रेण षत्वम्। भ्रज्जनमिति। सकारस्य जश्त्वम्—दकारः, तस्यापि श्चुत्वम्—जकारः।

अथेह कस्मान्न भवति—भृष्टः, भृष्टवान्? इत्याह—भृष्टः, भृष्टवानित्यादि। रमोऽवकाशः—भर्ष्टा, भ्रष्टा, सम्प्रसारणस्यावकाशः—भृज्जतीति; इहोभयं प्राप्नोति–

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



उपदेश इत्येव—बरीभृज्यने ॥

पदमञ्जरी

भृज्जति, सार्वधातुकत्वादत्र रमोऽप्रसङ्गः, भृष्टः भृष्टवानित्यत्र पूर्वविप्रतिषेधः।

अथैवं कस्मान्नोक्तम्—'भ्रस्जो रस ऋदन्यतरस्याम्' इति 'भ्रस्जेः सम्बन्धी रसिति योऽयं सङ्घातस्तस्य 'ऋ' इत्ययमादेशो भवतीत्यर्थः। तस्याक्ङिति गुणे कृते भर्जनमित्यादि रूपं भवति, ऋकाराभावपक्षे तु भ्रज्जनमिति; क्ङिति ऋकारपक्षे भृष्टमिति, तदभावपक्षे तु, ग्रहिज्यादिसूत्रेण सम्प्रसारणे सति तदेव रूपं भवतीति पूर्वविप्रतिषेधो न वक्तव्यो भवति; उपदेशग्रहणमपि नानुवर्त्यम्, न ह्यत्र पक्षे रीकः प्रसङ्गोऽस्ति ? अत्रापि पक्षे पूर्वविप्रतिषेधो वक्तव्यः, क्व ? सिचि वृद्धौ अभार्क्षीदिति; अन्यथा ऋकारविकल्पं बाधित्वा परत्वाद्धलन्तलक्षणा वृद्धिर्नित्यं प्राप्नोति। रम्भावे तु क्रियमाणे परत्वाद्वृद्धौ कृतायामपि पुनः प्रसङ्गविज्ञानमिति सिद्धम्—अभार्क्षीदिति। न चान्तरङ्गत्वात्पूर्वमृकारः; न सिच्यन्तरङ्गमस्तीति वक्ष्यमाणत्वात्। एवं तर्हि नित्यत्वादृभावः, स हि कृतायामपि वृद्धौ प्राप्नोत्यकृतायामपि; एकदेशविकृतस्यानन्यत्वात्; शब्दान्तरप्राप्तिरपि नास्ति; वृद्धिस्तु कृते ऋभावे ऋकारस्याकृते त्वकारस्येति शब्दान्तरप्राप्तेरनित्या, तस्मादृकार एव विधेयः ? तथा तु न कृतमित्येव। भ्रस्जेर्भृज्जिरित्युच्यमाने यङ्लुकि दोषः, साभ्यासे भृज्जिभावः प्राप्नोति, इष्यते तु तत्रापि रोपधयोरेवं निवृत्ती, रम्भावश्च।

*बरीभृज्यत इति*। यङि सम्प्रसारणे 'रीगृत्वत इति वक्तव्यम्' इति रीक्, तस्य तन्मध्यपतितस्य तद्ग्रहणात्प्रसङ्गः॥

न्यासः

भृष्टः, भृष्टवानिति, ग्रह्यादिसूत्रेण सम्प्रसारणमेव भवति पूर्वविप्रतिषेधेन। पूर्वविप्रतिषेधश्चेष्टवाचित्वात् परशब्दस्य लभ्यते।

बरीभृज्यत इति। यङ्। 'रीगृदुपधस्य' इति रीगागमः। अत्र 'उपदेश' इत्यधिकारात् बरीशब्दावयवस्य रेफस्योपधायाश्च निवृत्तिर्न भवतीति। न ह्ययमुपदेशे रेफः। किं तर्हि ? उत्तरकालभावी।

अन्यतरस्यांग्रहणमिहापि स्पष्टार्थम्। सनः 'क्रिचि लोपश्चास्यान्यतरस्याम्' इत्यतो हि यदन्यतरस्यांग्रहणं प्रकृतं तत् सनादिसम्बद्धम्, इह च सनादेर्निवृत्तिः। अतस्तन्निवृत्तौ तस्यापि निवृत्तिराशङ्क्येत। अनन्तरयोगस्य चान्यार्थत्वात्, तत्रान्यतरस्यांग्रहणस्य प्रयोजनाभावात्।

अथ भ्रस्जो भर्जेत्येवं कस्मान्नोक्तम् ? अशक्यमेवं वक्तुम्। एवं ह्युच्यमाने 'प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणं भवति' इति यङ्लुगन्तादार्धधातुक उत्पन्ने ह्रस्वभ्यासस्य भ्रस्जो भर्जादेशः स्यात् ? नैष दोषः; उपदेशग्रहणेन भ्रज्जिं विशेष-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## अतो लोपः ॥ ४८ ॥

अकारान्तस्यार्धधातुके लोपो भवति। चिकीर्षिता। चिकीर्षितुम्। चिकीर्षितव्यम्। धिनुतः। कृणुतः।

अत इति किम्? चेता। स्तोता। तपरकरणं किम्? याता। वाता। आर्धधातुक इति किम्? वृक्षत्वम्। वृक्षता।

❀ वृद्धिदीर्घाभ्यामतो लोपः पूर्वविप्रतिषेधेन ❀। चिकीर्षकः।

### पदमञ्जरी

*अतो लोपः ॥ धिनुतः, कृणुत इति।* 'इवि दिवि धिवि प्रीणनार्थाः', 'कृवि हिंसाकरणयोः', लट्, तस्य तस्, 'धिन्विकृण्व्योर च' इति उप्रत्ययः, अकारोऽन्तादेशश्च, तस्य चोप्रत्ययेऽतो लोपः। एकवचने त्वन्तरेणातो लोपमुप्रत्ययस्य गुणे कृते 'अतो गुणे' इति पररूपेणापि सिद्धिः।

*चेता, स्तोतेति।* तपरकरणस्य पृथग्व्यावर्त्यस्य दर्शयिष्यमाणत्वात्तद्रहितस्याकारमात्रस्येदं प्रत्युदाहरणम्, एवं च गुणवृद्ध्योर्दीर्घेषु चरितार्थत्वाद् ह्रस्वेषु लोपप्रसङ्गः। ननु च परत्वाद् गुणो भविष्यति, तस्मात्कुटादिषु 'गु पुरीषोत्सर्गे', 'ध्रुव गतिस्थैर्ययोः' इत्यत्र लोपप्रसङ्ग उदाहार्यः। *याता, वाता इति।* असति तकारेऽत्रापि लोपप्रसङ्गः, 'आतो लोप इटि च' इत्येतन्नियमार्थं भविष्यति—आत इट्येवाजादौ च क्ङिति, नान्यत्रेति? नैतदस्ति; विपरीतोऽपि नियमः स्यात्—आत एवेटि, नान्यस्येति। तथा च चिकीर्षितेत्यत्र न स्यात्।

*वृद्धिदीर्घाभ्यामिति।* 'अचो ञ्णिति' इति वृद्धेरवकाशः—नौरिति, अतो

### न्यासः

यिष्यामः—उपदेशे यो भ्रज्जिरिति। श्तिपा निर्देशोऽत्र वा करिष्यते—भृज्जतेर्भर्ज इति; तेन यङ्लुगन्तस्य ग्रहणं न भविष्यति। एवमपि भृज्ज्यत इत्यत्र प्राप्नोति, भवति ह्यत्रोपदेशे भ्रस्जिरिति? नैतदस्ति; अत्र हि पूर्वविप्रतिषेधात् सम्प्रसारणेन भवितव्यम्, यथा—भृष्ट इत्यत्र। एवं तर्हि वैचित्र्यार्थं तथा नोक्तम् ॥

**अतो लोपः ॥** धिनुतः, कृणुत इति। 'हिवि दिवि धिवि प्रीणनार्थाः', 'कृवि हिंसाकरणयोः', इदित्वान्नुम्, लट्, तस्, 'धिन्विकृण्व्योर च' इत्युप्रत्ययः, अकारश्चान्तादेशः, तस्यानेन लोपः। अथ तपरकरणं किमर्थम्, यावता धातेत्यत्र मा भूत्? ननु च 'अतो लोप इटि च' इति नियमार्थं भविष्यति—आकारस्येट्येवाजादौ क्ङिति लोपो भवति? नैतदस्ति; विपरीतनियमोऽपि सम्भाव्येत—आत एवेटि क्ङिति नान्यस्येति। तथा च चिकीर्षितेत्यत्र न स्यात्। तस्माद् विपरीतनियमसम्भावनानिवृत्त्यर्थं तपरकरणम्। विस्पष्टार्थं वा।

**वृद्धिदीर्घाभ्यामित्यादि।** 'अचो ञ्णिति' इत्यस्यावकाशः—कारयति, हारयति,

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



जिहीर्षकः । चिकीर्ष्यते । जिहीर्ष्यते ॥

यस्य हलः ॥ ४९ ॥

हल उत्तरस्य यशब्दस्यार्धधातुके लोपो भवति । बेभिदिता । बेभिदितुम् । बेभिदितव्यम् ।

'यस्य' इति सङ्घातग्रहणमेतत् । तत्र 'अलोऽन्त्यस्य' इत्येतन्न भवति; 'अतो लोपः' इत्यनेनैव तस्य सिद्धत्वात् ।

पदमञ्जरी

लोपस्यावकाशः–चिकीर्षितेति; चिकीर्षकः–इत्यत्रोभयप्रसङ्गे पूर्वविप्रतिषेधः । वृद्धौ तु युकि–चिकीर्षायक इति स्यात् । 'अकृत्सार्वधातुकयोः' इत्यस्य दीर्घस्यावकाशः–चीयते, अतो लोपस्यावकाशः–स एव; चिकीर्ष्यते–इत्यत्रोभयप्रसङ्गे पूर्वविप्रतिषेधः ॥

*यस्य हलः ॥* यस्येति यद्यागन्तुकोऽकारः, ततो वर्णग्रहणम्; अन्यथा तु सङ्घातग्रहणमिति पक्षद्वयसम्भवादाह—*यस्येति सङ्घातग्रहणमिति* । श्रुतस्याकारस्याविवक्षायां कारणाभावादिति भावः । *अतो लोप इत्यनेनैव सिद्धत्वादिति* । अस्तु तर्हि नियमः–यस्य हल एव नान्यतः, लोलूयिता, पोपूयिता, कैमर्थ्याद्धि नियमो भवति विधेयं नास्तीति कृत्वा ? इह चास्ति विधेयम्, किम् ? अन्त्यस्य लोपः प्राप्तः सर्वस्य विधेयः । तत्रापूर्वो विधिरस्तु, नियमो वेति ? अपूर्वो विधिरेव भविष्यति ।

न्यासः

अतो लोपस्यावकाशः—चिकीर्षिता, जिहीर्षितेति; इहोभयं प्राप्नोति—चिकीर्षकः, जिहीर्षक इति, अतो लोप एव भवति पूर्वविप्रतिषेधेन । 'अकृत्सार्वधातुकयोर्दीर्घः' इत्यस्यावकाशः–चीयते, लूयत इति, अतो लोपस्यावकाशः स एव; इहोभयं प्राप्नोति–चिकीर्ष्यते, जिहीर्ष्यत इति, लोप एव भवति पूर्वविप्रतिषेधेन ॥

**यस्य हलः ॥** बेभिदितेति । यङन्तादार्धधातुकं तृच्, तस्मिन् परतो यशब्दस्य लोपः । 'यस्य' इतीदं वर्णनिर्देशो वा स्याद्, यकाराकारग्रहणं वा ? तत्र यद्याद्यः पक्ष आश्रीयेत तदेर्ष्यिता, मव्यितेत्यत्रापि स्यादिति द्वितीयं पक्षमाश्रित्याह— यस्येति सङ्घातग्रहणमिति । कुत एतत् ? निर्देशात् । यदि वर्णग्रहणं स्यात्, तदा 'यो हलः' इत्येवं ब्रूयात् । यदि तर्हि सङ्घातग्रहणम् ? एवं तर्हि 'अलोऽन्त्यस्य' इत्यन्त्यस्य स्यादित्यत आह—तत्रालोऽन्त्यस्येत्यादि । कस्मान्न प्रवर्त्तते ? इत्याह—अतो लोप इत्यादि । पूर्वेणाप्यलोऽन्त्यस्य लोपः सिद्धः; तत्रारम्भसामर्थ्यात् सर्वस्य भवति ।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



'हलः' इति वा पञ्चमीनिर्देशः, तत्र 'आदेः परस्य' इति यकारोऽनेन लुप्यते ।

सङ्घातग्रहणं किम् ? ईर्ष्यिता । मव्यिता । हल इति किम् ? लोलूयिता । पोपूयिता ॥

## क्यस्य विभाषा ॥ ५० ॥

क्यस्य हल उत्तरस्य विभाषा लोपो भवति आर्धधातुके । समिधिता, समिध्यिता । दृषदिता, दृषद्यिता । समिधमात्मन इच्छति,

### पदमञ्जरी

एवमपि क्यस्य विभाषायां दोषः—समिधमिच्छति समिध्यति, समिध्यतेस्तृच, इट्, समिधिता, यदा लोपस्तदा सर्वस्य लोपः, यदा त्वलोपपक्षस्तदा सर्वस्यालोपः प्राप्नोति, सङ्घातग्रहणे हि 'यस्य हलः' इत्यनेन येननाप्राप्तिन्यायेन अतो लोपो बाध्यः, यलोपोऽपि 'क्यस्य विभाषा' इति विकल्पेन बाध्यः, ततश्च पक्षे सङ्घातस्यैव श्रवणं स्यात्, यलोपवदल्लोपस्यापि विकल्पेन बाधनात् ? इत्यत आह—*हल इति वेत्यादि* । एवं च 'क्यस्य विभाषा' इति यकारस्यैव विकल्पेन लोपः, अकारस्य तु 'अतो लोपः' इत्यनेन नित्यमिति ? सिद्धमिष्टम्; अवश्यं चातो लोप एवात्रैष्टव्यः; अन्यथा पापचक इत्यादौ 'अत उपधायाः' इति वृद्धिः स्यात्, स्थानिवद्भावान्न भवति । तस्मात्सङ्घातस्य ग्रहणम्, अवयवशस्तु लोप इति, तदेव युक्तम् ।

*मव्यितेति* । मव्यतिः संयोगान्तोऽस्ति, ज्वरत्वरादिसूत्रे तु वकारान्त उदाहृतः ॥

*क्यस्य विभाषा* ॥ 'क्यस्य' इति क्यच्क्यङोः सामान्येन ग्रहणम्, क्यषस्तु हलन्तादसम्भवः । *समिधमिवात्मानमाचरतीति* । अपपाठोऽयम्; एवं हि क्यङो वाक्यं

### न्यासः

हल इति वेत्यादिना परीहारान्तरमाह । 'हलः' इति पञ्चमीनिर्देशः, तत्र 'हल उत्तरो यो यशब्दस्तस्य लोपः' इत्युच्यमाने 'आदेः परस्य' इति वचनाद् यकारस्यैवानेन लोपो भवति । अकारस्य तु 'अतो लोपः' इत्यनेन ।

ईर्ष्यिता, मव्यितेति । 'ईर्क्ष्य ईर्क्ष्य ईर्ष्य ईर्ष्यार्थाः', 'मव्य बन्धने' । अत्र सङ्घातात्मको यशब्दो न भवतीति न प्रवर्त्तते लोपः । लोलूयितेति । यङ् 'गुणो यङ्लुकोः' इति गुणः ॥

क्यस्य विभाषा ॥ 'क्य' इति क्यच्क्यङोरुत्सृष्टानुबन्धयोः सामान्येन ग्रहणम्; विशेषानुपादानात् । समिधमिवात्मानमाचरतीति । वेति वाशब्दः समुच्चये वर्त्तमानः

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



समिधमिवात्मानमाचरति—इति वा क्यच्क्यङौ यथायोगं कर्त्तव्यौ ॥

णेरनिटि ॥ ५१ ॥

अनिडादावार्धधातुके णेर्लोपो भवति । इयङ्यण्गुणवृद्धिदीर्घाणामपवादः । अततक्षत् । अररक्षत् । आटिटत् । आशिशत् । कारणा । हारणा । कारकः । हारकः । कार्यते । हार्यते । ज्ञीप्सति ।

पदमञ्जरी

न प्रदर्शितं स्यात्, क्यचश्च द्वितीयं वाक्यमनर्थकं स्यात् । विधिभेदान्नानर्थकमिति चेत् ? यद्येवम्, 'अधिकरणाच्चेति वक्तव्यम्' इत्यस्यापि प्रदर्शनीयं स्यात् । तस्मात्*समिदिवाचरतीति* पाठः । अत्र केचित्कण्ड्वादियकोऽपि ग्रहणमिच्छन्ति, 'क्यस्य' इति कितो यकारस्य ग्रहणे तात्पर्यम्, आदित्वं ककारस्याविवक्षितं वदन्ति; नेति वयम्; आदित्वाविवक्षायां प्रमाणाभावात् ॥

*णेरनिटि* ॥ इयङादिभिरेव सर्वस्य विषयस्यावष्टब्धत्वादनवकाशो णिलोपस्तेषां बाधक इत्याह—*इयङ्यणित्यादि* । ननु पाचयतेः पाक्तिः, याजयतेर्याष्टिरित्युदाहरिष्यति, 'ण्यासश्रन्थो युच्' इति युचि प्राप्ते 'क्तिन्नजादिभ्यः' इति क्तिन्प्रत्ययः, क्त्विा पुनरयं द्रष्टव्यः, तत्कथमनवकाशः ? उच्यते; यद्येतावत् प्रयोजनं स्यात्, अनिटीति न वक्तव्यं स्यात्, अतोऽनिटीति वचनादार्धधातुकमात्रविषयतास्यात्रसीयते, ततश्च युक्तमियङादीन्प्रत्यपवादत्वम् । *वार्तिककारेण* तु पूर्वविप्रतिषेधः पठितः—'ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेन' इति । *अततक्षदिति* । अत्र चङो ङित्त्वाद् गुणस्याप्रसङ्गः, संयोगपूर्वत्वाद् 'एरनेकाचः' इति यणोऽप्यप्रसङ्गः । इयङ एवायं विषयः, अत्रयङि सति पुनःप्रसङ्गविज्ञानात् भवन्नपि लोपोऽन्त्यस्य स्यात् । *आशिशदिति* । 'एरनेकाचः'

न्यासः

समिदिवाचरतीत्यमुमर्थं ग्राहयति । यथायोगमिति । यदात्मनः समिधमिच्छतीत्यर्थो विवक्ष्यते तदा 'सुप आत्मनः क्यच्' इति क्यच् कर्त्तव्यः, यदा समिधमिवात्मनमाचरतीति तदा 'उपमानादाचारे' इति क्यजेव, यदा समिदिवाचरतीति तदा 'कर्तुः क्यङ् सलोपश्च' इति क्यङ्—इत्येष यथायोगशब्दार्थः ॥

णेरनिटि ॥ णेरिति—णिङ्णिचोर्विशेषकरावनुबन्धावुत्सृज्य यत् सामान्यं णिमात्रं तस्य ग्रहणम् । इयङादिभिः सर्वस्य विषयस्यावष्टब्धत्वादनवकाशोऽयं णिलोपस्तेषामपवादोऽयं विज्ञायत इत्यत आह—इयङ्यणित्यादि । अततक्षत्, अररक्षदिति । तक्षिरक्षिभ्यां हेतुमण्णिच्, तदन्ताल्लुङ्, 'णिश्रिद्रुस्रुभ्यः' इत्यादिना च्लेश्चङ्, ङित्त्वाद् गुणस्य प्रसङ्ग एव नास्तीतीयङादेशः स्यात् । अतस्तस्यापवादो णिलोपः । आटिटत्, आशिशत् । अटयशिभ्यां पूर्वं णिजादिषु कृतेषु 'अजादेर्द्वितीयस्य' इति टिशब्दशिशब्दौ

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अनिटीति किम् ? कारयिता । हारयिता ।

निष्ठायां सेटि ॥ ५२ ॥

निष्ठायां सेटि परतो णेर्लोपो भवति । कारितम् । हारितम् । गणितम् । लक्षितम् ।

पदमञ्जरी

इति यणोऽत्र प्रसङ्गः । अत्र सत्यपि यणि असिद्धत्वात्पुनःप्रसङ्गविज्ञानेन वा णिलोपे सति सिद्धमिष्टम् । एवं गुणवृद्धिदीर्घविषयेऽपि द्रष्टव्यम् । न च गुणवृद्ध्योरयादेशप्रसङ्गः, 'वार्णादाङ्गं बलीयः' इति णिलोपः । *ज्ञीप्सतीति* । 'आप्ज्ञप्यृधामीत्' 'अज्झनगमां सनि' इति दीर्घप्रसङ्गः ।

अनिटीति शक्यमकर्त्तुम् । कथं कारयिता ? 'निष्ठायां सेटि' इत्येतन्नियमार्थं भविष्यति—सेटि यदि भवति निष्ठायामेवेति । विपरीतस्तु नियमो न भवति—निष्ठायां सेटयेवेति; अनिटो निष्ठाया असम्भवात् । असम्भवश्चोत्तरसूत्रे वक्ष्यते ।

अथ वा—'अयामन्ताल्वाय्येत्न्विष्णुषु' इत्यत्र णेरिति योगविभागः क्रियते, सेट्यार्द्धधातुके णेरयादेशो भवति लोपस्यापवादः ॥

*निष्ठायां सेटि* ॥ *सेटीति किमिति* । अनिटि पूर्वेण सिद्धत्वात्सेडर्थमेवेदं सूत्रं भविष्यतीति प्रश्नः । सामर्थ्यात्पूर्वसूत्रप्राप्तेरेव व्यावृत्तिरित्युत्तरम् ।

न्यासः

द्विरुच्येते । अत्र 'एरनेकाचः' इत्यादिना प्राप्तस्य यणादेशस्यायमपवादः । कारणा, हारणेति । अत्र 'सार्वधातुकार्धधातुकयोः' इति प्राप्तस्य गुणस्य । कारकः, हारक इति । अत्र 'अचो ञ्णिति' इति वृद्धेः । कार्यते, हार्यत इति । अत्र 'अकृत्सार्वधातुकयोः' इति प्राप्तस्य दीर्घस्य । ज्ञीप्सतीति । 'अज्झनगमां सनि' इति प्राप्तस्य दीर्घस्यैव । जानातेर्णिचि 'अर्त्तिह्री' इत्यादिना पुक्, 'मारणतोषणनिशामनेषु ज्ञा' इति घटादिपाठाद् 'घटादयो मितः' इति मित्संज्ञा, 'मितां ह्रस्वः' इति ह्रस्वत्वम्, ततः सन्, 'सनीवन्तर्ध' इत्यादिना पक्ष इडागमाभावः, 'आप्ज्ञप्यृधामीत्' इतीत्त्वम्, 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोपः ।

कारयिता, हारयितेति । 'अनिटि' इति वचनादिह न भवति ।

अनिटीति शक्यमकर्तुम् । कथम् ? 'निष्ठायां सेटि' इति नियमार्थं भविष्यति—निष्ठायामेव सेटि, नास्त्यत्रेति ? अयुक्तमेतत्, विपरीतनियमोऽप्याशङ्क्येत—सेट्येव निष्ठायामिति । तथा च सति कारयितेत्यत्र स्यादेव णिलोपः । तस्माद् विपरीतनियमाशङ्कानिरासार्थमनिटीत्युक्तम् ॥

निष्ठायां सेटि ॥ गणितम्, लक्षितमिति । 'गण संख्याने', 'लक्ष दर्शनाङ्कनयोः', चुरादौ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सेटीति किम् ? संज्ञपितः पशुः । इड्ग्रहणसामर्थ्यादिह पूर्वेणापि न भवति । 'सनीवन्तर्ध' इति ज्ञपेरिटि विकल्पिते 'यस्य विभाषा' इति निष्ठायां प्रतिषेधः ।

अथ पुनः 'एकाचः' इति तत्रानुवर्त्तते, तदा नित्यमत्र भवितव्यमेवेडागमेनेति सेड्ग्रहणमनर्थकम् ? तत् क्रियते कालावधारणार्थम्—इडागमे कृते णिलोपो यथा स्यात् । अकृते हि तत्र णिलोपें सति कारितमित्यत्र 'एकाच उपदेशेऽनुदात्तात्' इतीटः प्रतिषेधः प्रसज्येत ॥

पदमञ्जरी

*संज्ञपित इति* । 'वा दान्तशान्तपूर्ण' इत्यत्र ज्ञपेर्निपातनमाश्रीयते—ज्ञप्तः, ज्ञपित इति । *अथ पुनरिति* । प्रतिपत्तृविप्रतिपत्त्या सन्दिग्धाभिधानम् ।

*कालावधारणार्थमिति* । सेड्ग्रहणे क्रियमाणे यदा निष्ठा सेड् भवति तदा लोपो भवति न प्रागिति कालावधारणं लभ्यते । किं पुनः स्याद्यद्येवमर्थं सेड्ग्रहणं न क्रियेत ? तत्राह—*अकृते हीति* । *णिलोपे सतीति* । नित्यत्वात् । स हि कृतेऽपीटि प्राप्नोत्यकृतेऽपि, इट् पुनरनित्यः, णिलोपे सत्येकाच इति प्रतिषेधात् ।

न्यासः

**संज्ञपितः पशुरिति** । ननु चात्र यदि सेटीति वचनादनेन न भवितव्यं तदा पूर्वसूत्रेण कस्मान्न भवति ? इत्याह—सेड्ग्रहणसामर्थ्यादित्यादि । यदि ह्यनिटि पूर्वेण णिलोपः स्यात् सेड्ग्रहणमनर्थकं स्यात्, निष्ठायामित्येवं ब्रूयात्, आरम्भसामर्थ्यादेव हि सेडर्थो भविष्यति । तस्मात् सेड्ग्रहणसामर्थ्यात् पूर्वेणापि-संज्ञपितः पशुरित्यत्र णिलोपो न भवति । कथं पुनरत्र सेड् निष्ठा न भवति ? इत्याह—सनीवन्तर्धेत्यादि । अथेत्यादि । अथ 'यस्य विभाषा' इत्यत्र 'एकाच उपदेशेऽनुदात्तात्' इत्यत एकाज्ग्रहणमनुवर्त्तते, ततोऽनेकाच्त्वाज् ज्ञपेः प्रतिषेधाभावाद् भवितव्यमिडागमेन निष्ठायाम् । तस्मात् सेड्ग्रहणमनर्थकं स्यात्; व्यावर्त्त्याभावात् । ननु च ज्ञप्त इत्यत्र मा भूदित्येवमर्थं सेड्ग्रहणं भविष्यति ? नैतदस्ति; क्रियमाणेऽपि सेड्ग्रहणे 'वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः' इति निपातनादत्र भवितव्यमेव णिलोपेन ।

यदि तर्ह्यनर्थकं सेड्ग्रहणम्, तत् किमर्थं क्रियते ? इत्याह—तत् क्रियत इत्यादि । पूर्वमिडागमे कृते सेटि निष्ठायां जातायां पश्चाण्णिलोपो यथा स्यादित्येवमर्थं सेड्ग्रहणं कृतम् । कः पुनरकृत इटि णिलोपे सति दोषः स्याद्, यन्निवृत्त्यर्थं पूर्वमिडागम इष्यते ? इत्याह—अकृते हीत्यादि । असति सेड्ग्रहणे, कारित इति स्थिते णिलोपः प्राप्नोति, इट् च, तत्र कृताकृतप्रसङ्गित्वेन णिलोपेनैव भवितव्यम्, णिलोपे च सत्येकदेशविकृतस्यानन्यत्वात् स एवायं करोतिरिति 'एकाच उपदेशेऽनुदात्तात्' इतीट्प्रतिषेधः प्रसज्येत, ततश्च कारितमित्येतन्न सिध्येत् । तस्मात् सेड्ग्रहणं कर्त्तव्यम् ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## जनिता मन्त्रे ॥ ५३ ॥

जनितेति मन्त्रविषये इडादौ णिलोपो निपात्यते । यो नः पिता जनिता ।

मन्त्र इति किम् ? जनयिता ॥

## शमिता यज्ञे ॥ ५४ ॥

यज्ञकर्मणि शमितेति इडादौ तृचि णिलोपो निपात्यते । शृत हविः शमितः । तृचि सम्बुद्धयन्तमेतत् ।

### पदमञ्जरी

यस्य च निमित्तं लक्षणान्तरेण विहन्यते न तदनित्यम्, न हि बालिसुग्रीवयोर्युध्यमानयोर्भगवता रामेण बालिनि हते सुग्रीवापेक्षया बालिनो दौर्बल्यं मन्यन्ते शूरमानिनः ? सत्यम्; कार्यगतभावाभावविवक्षायां तु तत्राश्रीयते । *इट्प्रतिषेधः प्रसज्येतेति* । एकदेशविकृतस्यानन्यत्वात् । एतच्च पूर्वस्मादपि विधौ स्थानिवद्भावमनाश्रित्योक्तम् ।

*भाष्ये* तु सूत्रमिदं प्रत्याख्यातम् । सप्तमे 'णेरध्ययने वृत्तम्' इत्ययं योगद्वेधा विभक्तव्यः, क्रमविपर्ययश्चाश्रयणीयः—'णेः' इत्येको योगः, तत्र निष्ठायां नेडिति वर्तते–ण्यन्तादुत्तरस्या निष्ठाया इण्न भवति; ततः 'वृत्तम्'—वृत्तमिति निपात्यते, णिलोपः । किमर्थमिदम् ? नियमार्थम्–अत्रैव निष्ठायां णेर्लोपो भवति, नान्यत्रेति । क्व मा भूत् ? कारितम्, हारितम्, कैमर्थक्यान्नियमो भवति, विधेयं नास्तीति कृत्वा । इह चास्ति विधेयम्, किम् ? गुणाभावः । एवं तर्हि तन्त्रावृत्त्येकशेषाणामन्यतमाश्रयणादेकस्य नियमार्थत्वमपरस्य गुणनिषेधार्थत्वं भवति, ततोऽध्ययने, वर्तेरध्ययन एव णिलोप इति ॥

*शमिता यज्ञे* ॥ *तृचि सम्बुद्धयन्तमेतदिति* । उदाहृताभिप्रायमेतत् । सूत्रे तु शुद्धप्रथमैकवचनान्तम् । सर्वासु च विभक्तिषु निपातनम्; प्रथमैकवचनस्याविवक्षितत्वात् । तथा च सूत्रार्थकथनसमये 'इडादौ तृचि' इति सामान्येनोक्तम् ।

### न्यासः

**जनिता मन्त्रे** ॥ **इडादौ णिलोपो निपात्यत इति** । जनितेति तृजन्तम्, तत्रानिटीति प्रतिषेधादिडादौ न प्राप्नोति, अतो निपात्यते । ह्रस्वत्वं तु 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च' इति मित्संज्ञकत्वात् 'मितां ह्रस्वः' इत्यनेनैव सिद्धम् ॥

**शमिता यज्ञे** ॥ शमितरित्यत्र पूर्ववद् ह्रस्वत्वम् । 'ऋतो ङिसर्वनामस्थानयोः' इति गुणः, हल्ङ्यादिना सुलोपः, रेफस्य विसर्गः । तृचि सम्बुद्धयन्तमेतदिति । निष्ठान्तमेतदिति कस्यचिदाशङ्का स्यात्, अतस्तां निराकर्तुमिदमुक्तम् । शमयितरित्येतदपि तृचि सम्बुद्धयन्तम् ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



यज्ञे इति किम् ? श्रृतं हविः शमयितः ॥

अयामन्ताल्वाय्येत्न्विष्णुषु ॥ ५५ ॥

आम्, अन्त, आलु, आय्य, इत्नु, इष्णु—इत्येतेषु परतो णेरयादेशो भवति । कारयाञ्चकार । हारयाञ्चकार । अन्त—गण्डयन्तः । मण्डयन्तः । आलु—स्पृहयालुः । गृहयालुः । आय्य—स्पृहयाय्यः । गृहयाय्यः । इत्नु—स्तनयित्नुः । इष्णु—पोषयिष्णुः । पारयिष्णवः ।

'न' इति वक्तव्ये अयादेशवचनमुत्तरार्थम् ॥

पदमञ्जरी

प्रयोगोऽपि तथाविध एव—शमितारो यदत्र सुकृतमिति, शमितृभ्यश्चैवैनन्तन्निगृहीतृभ्यश्चेति च । शामित्रमिति तद्धितेऽपि भवति । सूत्रे च सम्बुद्ध्यन्तं विवक्षितं चेच्छमितर्यज्ञ इति प्राप्नोति ॥

*अयामन्ताल्वाय्येत्न्विष्णुषु* ॥ *गण्डयन्त इति* । 'गडि सेचने' घटादिः, 'मडि भूषायाम्'—आभ्यामौणादिको झच्, 'झोऽन्तः' । *स्पृहयालुरिति* । 'स्पृहिगृहि' इत्यादिना आलुच् । *स्पृहयाय्य इति* । 'भृदक्षिस्पृहिभ्य आय्यः' । *स्तनयित्नुरिति* । औणादिक इत्नुच् । *पारयिष्णव इति* । 'णेश्छन्दसि' इति इष्णुच् ॥

नेति वक्तव्ये इति । णिलोपे हि प्रतिषिद्धे गुणे सत्ययादेशः सिद्धः,

न्यासः

अयामन्ताल्वाय्येत्न्विष्णुषु ॥ कारयाञ्चकारेति । 'कास्प्रत्ययात्' इत्यादिना 'आमः' इति लेर्लुक्, 'कृञ्' इत्यादिना लिट्परस्य कृञोऽनुप्रयोगः, द्विर्वचनमभ्यासकार्यम् । गण्डयन्तः, मण्डयन्त इति । 'गडि सेचने' मडि भूषायाम्', हेतुमण्णिच्, गडेर्घटादित्वान्मित्त्वे सति पूर्ववद् ह्रस्वत्वम् । 'जॄविशिभ्यां झच्' इत्यनुवर्त्तमाने 'तॄभूवहिवसभासिसाधिगमिमण्डिजिनन्दिभ्यश्च' इति झच्, अन्तादेशः । स्पृहयालुः, गृहयालुरिति । 'स्पृह ईप्सायाम्' 'गृह ग्रहणे'—चौरादिकावदन्तौ, 'अतो लोपः' इत्यकारलोपः, तस्य स्थानिवत्त्वाल्लघूपधगुणाभावः; 'स्पृहिगृहि' इत्यादिनाऽऽलुच् । स्पृहयाय्य इति । 'तनुदक्षिस्पृहिगृहिभ्य आय्यः' इति आय्यप्रत्ययः । स्तनयित्नुरिति । 'स्तन गदी देवशब्दे', चुरादावदन्तः, 'अतो लोपः' । तत्राकारलोपस्य स्थानिवद्भावाद् 'अत उपधायाः' इति वृद्धिर्न भवति । 'स्तनिहृषिपुषिगदिमदिभ्यो णेरित्नुच्' इतीत्नुच्प्रत्ययः । पोषयिष्णुः, पारयिष्णव इति । 'पुष पुष्टौ', हेतुमण्णिच्, 'पार तीर कर्मसमाप्तौ', चुरादिणिच्, 'णेश्छन्दसि' इतीष्णुच् ।

अथ 'न' इत्येवं कस्मान्नोक्तम्; णिलोपे हि प्रतिषिद्धे गुण एव स्यात्, तत्र 'एचोऽयवायावः' इत्ययादेशो भविष्यति; लघु चैवं सूत्रं भवति, अयेत्युच्याने मात्राधिक्येन सूत्रं गुरु भवतीति मत्वाऽऽह—नेति वक्तव्ये इत्यादि । 'ल्यपि लघुपूर्वात्' इत्यत्र

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

## ल्यपि लघुपूर्वात् ॥ ५६ ॥

ल्यपि परतो लघुपूर्वाद्वर्णादुत्तरस्य णेरयादेशो भवति । प्रणमय्य, प्रतमय्य, प्रदमय्य, प्रशमय्य, सन्दमय्य गतः । प्रबेभिदय्य गतः । प्रगणय्य गतः ।

ह्रस्वयलोपाल्लोपानामसिद्धत्वं न भवति, असमानाश्रयत्वात्— ह्रस्वादयो हि णौ, ल्यपि णेरयादेशो भवति ।

लघुपूर्वादिति किम् ? प्रपात्य गतः ॥

### पदमञ्जरी

मात्रालाघवं च भवति । *उत्तरार्थमिति* । 'ल्यपि लघुपूर्वात्' इत्यत्र न गुणः, नाप्ययादेशः ॥

*ल्यपि लघुपूर्वात्* ॥ अत्र केचिदाचार्येण 'ल्यपि लघुपूर्वस्य' इति षष्ठ्यन्त-मध्यापिताः, अन्ये पञ्चम्यन्तम् ; तत्राद्यपक्षे प्रशमय्येत्यादौ व्यञ्जनान्ते न स्यात्, न ह्यत्र णिर्लघुपूर्वः, किं तर्हि ? व्यञ्जनपूर्वः । न चाव्यवहिते सम्भवति व्यवहितं पूर्वमाश्रयितुं युक्तम् । प्रचकास्य गत इत्यादावतिप्रसङ्गश्च । क तर्हि स्यात् ? प्रगणय्य, प्रस्तनय्येत्यादौ ? यद्यप्यत्राल्लोपे कृते णिर्लघुपूर्वो न भवति, व्याश्रयत्वादल्लोपस्यासिद्धिरपि नास्ति; तथापि भूतपूर्वलघुपूर्वतामाश्रित्यात्रैव स्यात् । तथा प्रचिकीर्ष्येत्यादावपि प्रसङ्गः, सम्प्रति गुरुपूर्वत्वेऽपि भूतपूर्व-गत्या । तस्माद् द्वितीयं पक्षमाश्रित्य व्याचष्टे–*लघुपूर्वाद्वर्णादिति* ।

नन्वत्रापि पक्षे प्रशमय्येत्यादौ ह्रस्वादीनामसिद्धत्वादयादेशाप्रसङ्गः, क तर्हि स्यात् ? मृदमाचष्ट इति णिचि 'प्रकृत्यैकाच्' इति प्रकृतिभावाट्टिलोपाभावे प्रमृदय्य गत इत्यादौ स्यादत आह—*ह्रस्वयलोपाल्लोपानामिति* ॥

### न्यासः

गुणाभावादयादेशो न स्याद् यदि नेत्युच्यते । तस्मादुत्तरार्थमयादेशवचनम् ॥

ल्यपि लघुपूर्वात् ॥ लघुपूर्वादिति—लघुः पूर्वो यस्मादिति बहुव्रीहिः । वर्णोऽन्य-पदार्थः । प्रणमय्य, प्रतमय्य, प्रदमय्य, प्रशमय्येति । अत्र नमादीनां मित्त्वात् पूर्ववद् ह्रस्वत्वे कृते मकारो लघुपूर्वः । प्रबेभिदय्य गत इति । भिदेर्यङन्ताण्णिच् । यस्य हलः' इति यकारलोपः । अत्रापि दकारो लघुपूर्वः । प्रगणय्येति । 'गण संख्याने', चुरादावदन्तः, पूर्ववदल्लोपः । अत्रापि णकारो लघुपूर्वः ।

ननु ह्रस्वादय एवाभाच्छास्त्रीयाः, अयादेशोऽपि; तत्र 'असिद्धवदत्रा भात्' इति ह्रस्वादीनामसिद्धत्वाल्लघुपूर्वत्वं मकारादेर्वर्णस्य नोपपद्यते ? इत्यत आह— ह्रस्वयलोपाल्लोपानामित्यादि । कथमसमानाश्रयत्वम् ? इत्याह–ह्रस्वादयो हीत्यादि ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


## विभाषाऽऽपः ॥ ५७ ॥

आप उत्तरस्य णेर्ल्यपि परतो विभाषाऽयादेशो भवति। प्रापय्य गतः। प्राप्य गतः।

इङादेशस्य लाक्षणिकत्वान्न भवति—अध्याप्य गतः ॥

## युप्लुवोर्दीर्घश्छन्दसि ॥ ५८ ॥

यु, प्लु—इत्येतयोर्ल्यपि परतश्छन्दसि विषये दीर्घो भवति। दान्त्यनुपूर्वं वियूय। यत्रा यो दक्षिणा परिप्लूय।

### पदमञ्जरी

*विभाषाऽऽपः॥* 'आप्लृ लम्भने' चुरादिः, 'आप्लृ व्याप्तौ' स्वादिः—द्वयोरपि ग्रहणम्। इह 'इङ् अध्ययने', णिच्, 'क्रीङ्जीनां णौ' इत्यात्वम्, 'अर्त्तिह्री' इत्यादिना पुक्, अध्याप्य गत इत्यत्रापि प्राप्नोति; आप्रूपस्य भावात्, तस्मात् सानुबन्धको निर्देश्यः।

आपुलिति पठितव्यम्, आप्लृशब्दान्ङसिः, ऋकारलृकारयोः सवर्णत्वात् 'अत उत्' इत्युत्वम्, 'उरण्रपरः' इत्यत्र रप्रत्याहारग्रहणाल्लपरत्वम्, सकारस्य संयोगान्तलोपः, तर्हि तथा पठितव्यम्? नेत्याह—*इङादेशस्येति*॥

### न्यासः

अथ पूर्वग्रहणं किमर्थम्, न लघोरित्येवोच्येत? अशक्यमेवं वक्तुम्; एवमुच्यमाने लघोरुत्तरस्य णेर्ल्यप्यथादेशो भवतीत्येष वाक्यार्थः। तथा च प्रतमय्येत्यादौ न स्यात्, हला व्यवधानात्। क्व तर्हि स्यात्? प्रगणय्येत्यादौ। ननु चात्राप्यतो लोपे कृते लघोरुत्तरो णिर्न सम्भवत्येव, तत्र वचनसामर्थ्याद्व्यवधानमाश्रयिष्यते? नैतदेवम्; वचनसामर्थ्याद् भूतपूर्वगतिराश्रयिष्यते। कुत एतल्लभ्यते—वचनसामर्थ्याद्व्यवधानमाश्रयितव्यम्, न तु भूतपूर्वगतिरिति? भूतपूर्वगतावाश्रीयमाणायां प्रगणय्येत्यादावेव स्यात्, प्रणमय्य गत इत्यादौ तु न स्यात्। तस्मात् पूर्वग्रहणं कर्त्तव्यम्॥

विभाषाऽऽपः॥ प्रापय्येति। 'आप्लृ लम्भने', आप्लृ व्याप्तौ'—द्वयोरपि ग्रहणम्। पूर्वकश्चुरादिः, अपरः स्वादिः।

अथाध्याप्य गत इत्यत्र कस्मान्न भवति, अत्रापि 'क्रीङ्जीनां णौ' इतीङ आत्वे कृते 'अर्त्तिह्री' इत्यादिना पुक्याप उत्तरो णिर्भवति? इत्यत आह—इङादेशस्येत्यादि। यद्येवम्, अप आचष्ट इत्यप्-शब्दाण्णिचि कृते प्रापय्येत्यादि न स्यात्, लाक्षणिकत्वादेव मा भूदनेन, पूर्वेण सूत्रेण भविष्यति, ननु चैकादेशे कृते सत्यलघुपूर्वत्वान्न प्राप्नोति? एकादेशस्यासिद्धत्वान्न दोषः। कथम्? 'असिद्धं बहिरङ्गमन्तरङ्गे' इति बहिरङ्गत्वं त्वेकादेशस्य द्विपदाश्रयत्वात्। अयादेशस्य पुनर्णिमात्राश्रयत्वादन्तरङ्गत्वम्॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



छन्दसीति किम् ? संयुत्य । आप्लुत्य ॥

**क्षियः ॥ ५९ ॥**

क्षियश्च दीर्घो भवति ल्यपि परतः । प्रक्षीय ॥

**निष्ठायामण्यदर्थे ॥ ६० ॥**

ण्यतः कृत्यस्यार्थो भावकर्मणी, ताभ्यामन्यत्र या निष्ठा तस्यां क्षियो दीर्घो भवति । आक्षीणः । प्रक्षीणः । परिक्षीणः । अकर्मकत्वात् क्षियः कर्त्तरि क्तः ।

प्रक्षीणमिदं देवदत्तस्येति 'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' इत्यधिकरणे क्तः ।

अण्यदर्थ इति किम् ? अक्षितमसि मा मेक्षेष्ठाः । क्षितमिति भावे दीर्घाभावात् 'क्षियो दीर्घात्' इति निष्ठानत्वमपि न भवति ॥

**पदमञ्जरी**

*निष्ठायामण्यदर्थे ॥ ण्यतः कृत्यस्यार्थो भावकर्मणी इति ।* यद्यपि भव्यगेयादावासाव्यापात्यशब्दयोः कर्त्तापि पक्षे ण्यदन्तयोर्वाच्यः; तथापि क्षियः सन्निधानात्तदीयो ण्यदर्थ एव पर्युदस्यते ।

*प्रक्षीणमिदं देवदत्तस्येति ।* 'अधिकरणवाचिनश्च' इति कर्त्तरि षष्ठी । *अधिकरण इति ।* क्तः प्रत्यय इत्यनुषङ्गः । एवमक्षितमिति *भावे* इत्यत्रापि ॥

**न्यासः**

द्युप्लुवोर्दीर्घश्छन्दसि ॥ 'द्यु मिश्रणे', 'प्लुङ् गतौ'—अनयोर्धात्वोस्तुकि प्राप्ते दीर्घार्थं वचनम् ॥

क्षियः ॥ छन्दसीति निवृत्तम् । 'क्षियः' इति 'निरनुबन्धकग्रहणे न सानुबन्धकस्य' इति 'क्षि क्षये', क्षि निवासगत्योः'—इत्यनयोर्ग्रहणम्, न 'क्षिष् हिंसायाम्' इत्यस्य ॥

निष्ठायामण्यदर्थे ॥ ण्यतः कृत्यस्यार्थो भावकर्मणी इति । 'तयोरेव कृत्यक्तखलर्थाः' इति वचनात् । ताभ्यामन्यत्रेति । कर्त्तर्यधिकरणे च । आक्षीण इति । 'क्षियो दीर्घात्' इति निष्ठानत्वम् । अकर्मकात् क्षियः कर्त्तरि क्तप्रत्ययोऽयमिति । 'गत्यर्थ' इत्यादिना ।

प्रक्षीणमिदं देवदत्तस्येति । 'अधिकरणवाचिनश्च' इति कर्त्तरि षष्ठी । अधिकरण इति । क्तप्रत्ययोऽयमिति प्रकृतेन सम्बन्धः । प्रक्षीयतेऽस्मिन्निति प्रक्षीणम्—अधिकरणभूतं द्रव्यमुच्यते । क्षितमिति भाव इति । अस्यापि पूर्ववत् सम्बन्धः । कर्मणि न प्रत्युदाहरति; क्षियोऽकर्मकत्वात् ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## वाऽऽक्रोशदैन्ययोः ॥ ६१ ॥

आक्रोशे गम्यमाने, दैन्ये च क्षियो निष्ठायामण्यदर्थे वा दीर्घो भवति । क्षितायुरेधि । क्षीणायुरेधि । दैन्ये—क्षितकः । क्षीणकः । क्षितोऽयं तपस्वी । क्षीणोऽयं तपस्वी ॥

## स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च ॥ ६२ ॥

स्य, सिच्, सीयुट्, तासि—इत्येतेषु भावकर्मविषयेषु परत उपदेशेऽजन्तानामङ्गानाम्, हन्, ग्रह, दृश्—इत्येतेषां च चिण्वत्कार्यं भवति

पदमञ्जरी

*वाऽऽक्रोशदैन्ययोः ॥ क्षितायुरिति ।* पूर्ववत्कर्त्तरि क्तः । *क्षीणक इति ।* 'अनुकम्पायाम्' इति कन् । प्राप्तविभाषेयम् । अण्यदर्थ इत्येव—क्षितं सर्वमस्य, क्षितमस्य तपस्विनः ॥

*स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च ॥* चिणीव चिण्वत्, 'तत्र तस्येव' इति सप्तमीसमर्थाद्वतिः; 'स्यसिच्सीयुट्तासिषु' इति प्रतियोगिनि सप्तमीनिर्देशात्, यथा—मथुरावत्पाटलिपुत्रे प्रासाद इति । *भावकर्मविषयेष्विति ।* अनेन 'भावकर्मणोः' इति विषयसप्तमीति दर्शयति । भावकर्मणोर्ये स्यादयो वर्त्तन्ते तेष्विति तु विज्ञायमाने सीयुडेको विशेषितः स्यात्, स्यादयो न विशेषिताः स्युः; भावकर्मणोर्लादेशवाच्यत्वात्सीयुटश्च तद्भक्तत्वात् । अथ यदाभावकर्माभिधायी प्रत्ययो भावकर्मशब्दाभ्यामभिधीयते, तदायमर्थः स्यात्—भावकर्मवाचिनि प्रत्यये परतो ये स्यादय इति । तदा स्यादयो विशेषिताः, सीयुडविशेषितः, न हि तद्भक्तस्य तेन सह पौर्वापर्यं

न्यासः

वाऽऽक्रोशदैन्ययोः ॥ क्षितायुरिति । पूर्ववत् कर्त्तरि क्तः । एवमुत्तरत्रापि । क्षितक इति । अनुकम्पायां कन् । आक्रोशदैन्याभ्यामन्यत्र पूर्वेण नित्यं भवति ।

अण्यदर्थ इति किम् ? क्षितं जाल्मस्य, क्षितकमस्य तपस्विनः ॥

स्यसिचसीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च ॥ 'स्यसिच्सीयुट्तासिषु' इति सप्तम्या प्रतियोगिनो निर्देशाच्चिणीव चिण्वदिति सप्तमीसमर्थाद्वतिर्विज्ञायते, यथा—मथुरावत् पाटलिपुत्रे प्राकार इति । भावकर्मविषयेष्विति । अनेन 'भावकर्मणोः' इत्यस्य विषयसप्तमीत्वं दर्शयति । भावकर्मणी विषयौ येषां ते तथोक्ताः । के पुनः स्यादयो भावकर्मविषयाः ? ये स्यादयो लादेशेन भावकर्मणोर्वि-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


वा। यदा चिण्वत् तदा इडागमो भवति। कस्य ? स्यसिच्सीयुट्तासीनामेवेति वेदितव्यम्; ते हि प्रकृताः। अङ्गस्य तु लक्ष्यविरोधान्न क्रियते।

पदमञ्जरी

सम्भवति। तस्मात्सर्वानुग्रहाय विषयसप्तम्येव युक्ता। *यदा चिण्वत्तदेडागमो भवतीति*। चकारस्य सन्नियोगार्थत्वात्। *कस्येति*। षष्ठीनिर्दिष्टस्यागमो भवति, स्यादयश्च सप्तमीनिर्दिष्टाः, 'अञ्जनग्रहदृशाम्' इति षष्ठीनिर्दिष्टम्, 'अङ्गस्य' इति च वर्तते, अतोऽजन्तादीनामङ्गानामेवागमित्वं युक्तमिति विपर्ययं मन्यमानस्य प्रश्नः। *स्यसिच्सीयुट्तासीनामेवति*। कथम्? इत्याह–*ते हि प्रकृता इति*। सन्निहिता इत्यर्थः। नन्वङ्गमपि प्रकृतं योग्यविभक्तिकं च? तत्राह–*अङ्गस्य त्विति*। *लक्ष्यविरोधादिति*। यद्वा–सप्तमे योगविभागः क्रियते, आर्धधातुकस्येट्, परिभाषेयम्, यो यावान्कश्चिदिडागमः स सर्व आर्धधातुकस्यैव द्रष्टव्यः, तेनायमपीडागमः स्यादीनामेव भवति, नाङ्गस्य।

न्यासः

वक्षितयोर्भवन्ति। चकारोऽत्र सन्नियोगार्थः क्रियते। तेन यदा चिण्वद्भावो भवति तदेडागमो भवति। यदा तु चिण्वद्भावो न भवति तदा त्विडागमो न भवतीति दर्शयन्नाह—यदेत्यादि। कस्येति। षष्ठीनिर्दिष्टस्य ह्यागमा भवन्ति, स्यादयश्चेह सप्तम्या निर्दिष्टाः; न चान्य आगमी श्रूयत इति प्रश्नः। यद्यपि ते सप्तम्या निर्दिष्टाः, तथापि यथा 'हनश्च वधः' इति पञ्चमीनिर्दिष्टोऽपि हन्तिः प्रत्ययमुत्पाद्यादेशेन सम्बन्धमनुभवन् षष्ठ्यन्ततां प्रतिपद्यते, तथा स्यादयोऽपि यदागमेन सम्बन्धमनुभवन्ति तदा षष्ठ्यन्ततां प्रतिपद्यन्त इत्यभिप्रायेणाह—स्यसिजित्यादि। अत्रैव हेतुमाह—ते हि प्रकृता इत्यादि। इडयमागमलिङ्गः, तस्यावश्यमागमिना भवितव्यम्, तत् किमश्रुतानामागमित्वं परिकल्प्य, तस्यैव विधीयतामुत प्रकृतानामेव स्यादीनामिति? युक्तं यत् प्रकृतानामेव विधीयते; अश्रुतप्रकल्पनाया गरीयस्त्वात्। ननु चाङ्गमपि प्रकृतम्, तस्य कस्मान्न क्रियते? इत्यत आह—अङ्गस्येत्यादि। अङ्गस्य न क्रियते, लक्ष्यविरोधात्। यद्यङ्गस्य स्यात्, तदेटि कृते लक्ष्यविरोधादनिष्टं स्यात्। न ह्यनिष्टार्था शास्त्रे प्रक्लृप्तिर्युक्ता। तस्मान्मा भूल्लक्ष्यविरोध इति यद्यप्यङ्गमपि प्रकृतम्, तथापि स्यादीनामेव क्रियते, नाङ्गस्य।

इह द्वौ पक्षौ सम्भवतः--चिणिनिमित्तं यत् कार्यम्, यदाहत्य चिणि विधीयते तद्वातिदिश्यते। यद्वा चिणि यद् दृष्टं चिण्निमित्तमचिण्निमित्तं च तत् सामान्येन। तत्र यदि पूर्वकः पक्ष आश्रीयेत, तदा 'आतो युक् चिण्कृतोः' इति युगागमः, 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' इति दीर्घत्वञ्च—एते द्वे एवाङ्गकार्ये अतिदिश्ये स्याताम्। नान्यद् वृद्ध्यादिकम्, न हि तदाहत्य चिणि विधीयते। आहत्य=उच्चार्येत्यर्थः। यद्धि साक्षाच्चिणं

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



कानि पुनरस्य योगस्य प्रयोजनानि ?

चिण्वद्वृद्धिर्युक्च हन्तेश्च घत्वं दीर्घश्चोक्तो यो मितां वा चिणीति ।

पदमञ्जरी

*कानि पुनरिति* । चिणि यदेवाहत्य विहितं तदेवातिदिश्यते, आहोस्वित् चिणि दृष्टमात्रमिति प्रश्नः । तत्र द्वितीयः पक्ष आश्रीयत इति श्लोकेन दर्शयति– *चिण्वद्वृद्धिरिति* । यथा चिणि वृद्धिः तथा स्यादिष्वपीष्यते–घानिष्यते । एतदेकं प्रयोजनम्. एवमुत्तरत्रापि । प्रत्येकं सम्बन्धेन यथायोगमतिदेशो योज्यः । दायिष्यत इति, 'आतो युक् चिण् कृतोः' इति युक्, एतच्चिण्याहत्य विहितम् । यच्च 'हो हन्तेर्ञ्णिन्नेषु' इति कुत्वमघानीत्यत्र दृष्टम्, तदपि प्रयोजनम्— घानिष्यत इति । यच्च 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' इति दीर्घविकल्पविधानं तदपि प्रयोजनम् । एतदपि चिण्याहत्य विहितम्—शमिष्यते, शामिष्यत इति शमेर्णिचि 'मितां ह्रस्वः' लृटि स्ये चिण्वद्भावेन दीर्घविकल्पः, 'णेरनिटि' इति णिलोपः ।

न्यासः

निमित्तमुपादाय विधीयते तच्चिण्याहत्य विधीयते, न चैवं वृद्ध्यादिकं विधीयते । अथ द्वितीयस्ततो न भवत्येष दोषप्रसङ्गः; वृद्ध्यादीनामपि चिणि दृष्टत्वात् ।

यदि चिणि यद् दृष्टं तदतिदिश्यते, तर्हि हनिणिङामादेशा अपि प्राप्नुवन्ति, तेषामपि तत्र दृष्टत्वादिति ? अनेनाभिप्रायेणाह—कानि पुनरित्यादि ।

द्वितीये पक्षे यो दोषस्तमुत्तरत्र परिहरिष्यामीति चेतसि कृत्वा चिणि यद्दृष्टं कार्यं तन्निमित्तमितरद्वा तदिह सामान्येन निर्दिश्यत इति दर्शयन्नस्य योगस्य यानि प्रयोजनानि तेषां संग्रहश्लोकमाह—वृद्धिश्चिण्वदित्यादि ।

चायिष्यत इत्यत्र वृद्धिः प्रयोजनम् । चिनोतेर्लृट्, स्यप्रत्ययः । 'भावकर्मणोः' इत्यात्मनेपदम्, अत्रेदानीं चिण्वद्भावाद् वृद्धिर्भवति । यथा—चिणि 'अचो ञ्णिति' इति वृद्धिर्भवत्यचायीति, एवमुत्तरत्रापि चिण्वदित्येतस्य प्रत्येकमभिसम्बन्धं कृत्वा यथायोगमतिदेशो योजनीयः । अचायिष्यत इति । लृङ्, शेषं पूर्ववत् । युक् च प्रयोजनम्—दायिष्यत इत्यत्र । दीर्घश्चोक्तो यो मितां वा चिणीति स च । प्रयोजनम्-शमिष्यते, शामिष्यते इत्यत्र । शमेः 'जनिजृष्क्नसुरञ्जोऽमन्ताश्च' इति मित्संज्ञा, स च ण्यन्तः 'सनाद्यन्ता धातवः' इत्यत्रोपदिष्ट इत्युपदेशेऽजन्तो भवति । यत्तु हन्तेः 'हो हन्तेर्ञ्णिन्नेषु' इति कुत्वं विधास्यते, तच्च प्रयोजनम्—घानिष्यत इत्यत्र । हनिष्यत इत्यत्र तु 'ऋद्धनोः स्ये' इतीट् ।

सन्त्येतानि प्रयोजनानि, किन्त्वनेनेनेटि कृते शमिष्यते, शामिष्यत इत्यत्र 'णेरनिटि'

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



इट् चासिद्धस्तेन मे लुप्यते णिर्नित्यश्चायं वल्निमित्तो विघाती ॥

अजन्तानां तावत्–चायिष्यते, चेष्यते, अचायिष्यत, अचेष्यत। दायिष्यते, दास्यते, अदायिष्यत, अदास्यत। शामिष्यते, शमिष्यते, शमयिष्यते, अशामिष्यत, अशमिष्यत, अशमयिष्यत। हन्–घानिष्यते, हनिष्यते, अघानिष्यत, अहनिष्यत। ग्रह–ग्राहिष्यते, ग्रहीष्यते,

### पदमञ्जरी

नन्वनिटीत्युच्यते, सेट् चायम्? अत आह—*इट् चासिद्ध इति*। आ भाच्छास्त्रीये णिलोपे कर्त्तव्ये आ भाच्छास्त्रीयश्चिण्वदिडसिद्धः, तेनानिडादित्वात्सिद्धो णिलोप इत्यर्थः। *मे इति*। सूत्रकारायमाणस्य वचनम्। ननु चास्य चिण्वदिटोऽवकाशः येऽनिटः, येषु 'ऋद्धनोः स्ये' इत्यादि प्रतिपदविधानं नास्ति; आर्द्धधातुकस्येत्यस्यावकाशः-सेड् योऽस्य विषयो न भवति; यस्तु सेडस्य च सूत्रस्य विषयः, तत्र परत्वात् 'आर्धधातुकस्येड्वलादेः' इत्ययमेव प्राप्नोति, तत्कथमसिद्धत्वम्? अत आह–*नित्यश्चायमिति*। अयं चिण्वदिण्णित्यः, कृतेऽपि वलादिलक्षण इट् प्राप्नोति, अकृतेऽपि, न ह्ययं वलादित्वमपेक्षते। अस्मिंस्तु कृते वलादिलक्षण इण्न प्राप्नोति, तस्माद् *वल्निमित्त* इडनित्यः। विघातः=निमित्ताभावादप्रवृत्तिः, सोऽस्यास्तीति *विघाती*। तदेवं नित्यत्वात्सेड्भ्योऽप्यनेनैवेड् भवति, अयं चासिद्ध इति न भवति णिलोपाभावदोषः। अवश्यं चानेनैव सेड्भ्योऽपीडेष्टव्यः, अन्यथा एतदिट्सन्नियुक्तश्चिण्वद्भावोऽपि न स्यात्। न च शब्दान्तरप्राप्तेरस्याप्यनित्यत्वम्;आकृतिपक्षे शब्दान्तरत्वाभावात्।

### न्यासः

इति णिलोपो न सिध्यति; सेट्त्वात्। अत आह—इट् चासिद्ध इत्यादि। 'असिद्धवदत्रा भात्' इत्यसिद्धोऽयं चिण्वदिट्, तेन णिलोपो भविष्यति। स्यादेतत्—येऽनुदात्तोपदेशाश्चिनोत्यादयस्तेभ्यः परेषां स्यादीनामनेनेड् विधीयत इति युक्तमसिद्धत्वम्, ये तूदात्तोपदेशाः शमिप्रभृतयस्तेभ्यः परत्वाद् 'आर्धधातुकस्येड् वलादेः' इति वल्निमित्तेनेटा भवितव्यम्, स च सिद्ध एव; तस्मिंस्तु तदवस्थ एव दोषः? इत्यत आह–नित्यश्चायमित्यादि। कृताकृतप्रसङ्गी यो विधिः स नित्यः–इत्येतदाश्रित्यायं चिण्वदिड् नित्यः। कृतेऽपि हि वलादिलक्षण इटि प्राप्नोत्यकृतेऽपि, न ह्ययं बलादित्वमपेक्षते। अस्मिंस्तु कृते वलादिलक्षण इड् न प्राप्नोति; वलादित्वस्य विहतत्वात्। वल्निमित्तो विघातीति। वल् निमित्तं कारणं यस्य स तथोक्तः। विघातोऽस्यास्तीति विघाती। विघातः=निमित्ताभावादप्रवृत्तिः। तदेवं नित्यत्वादुदात्तेभ्योऽप्यनेनैव चिण्वदिटा भवितव्यम्, अयञ्चासिद्ध इति न भवति णिलोपाभावप्रसङ्गः।

ग्राहिष्यत इति। 'अत उपधायाः' इति वृद्धिः प्रयोजनम्। अथेह 'ग्रहोऽलिटि

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अग्राहिष्यत, अग्रहीष्यत । 'ग्रहोऽलिटि दीर्घः' इति प्रकृतस्येटो दीर्घत्वम् । दृश्–दर्शिष्यते, द्रक्ष्यते, अदर्शिष्यत, अद्रक्ष्यत ।

सिच्यजन्तानाम्–अचायिषाताम्, अचेषाताम् । अदायिषाताम्, अदिषाताम् । अशामिषाताम्, अशमिषाताम्, अशमयिषाताम् । हन्–अघानिषाताम्, अवधिषाताम्, अहसाताम् । ग्रह्–अग्राहिषाताम्, अग्रहीषाताम् । दृश्–अदर्शिषाताम्, अदृक्षाताम् ।

सीयुटि अजन्तानाम्—चायिषीष्ट, चेषीष्ट । दायिषीष्ट, दासीष्ट । शामिषीष्ट, शमिषीष्ट, शमयिषीष्ट । हन्–घानिषीष्ट, वधिषीष्ट । ग्रह–ग्राहिषीष्ट, ग्रहीषीष्ट । दृश्–दर्शिषीष्ट, दृक्षीष्ट ।

तासावजन्तानाम्–चायिता, चेता । दायिता, दाता । शामिता, शमिता, शमयिता । हन्–घानिता, हन्ता । ग्रह–ग्राहिता, ग्रहीता । दृश्–दर्शिता, दर्ष्टा, द्रष्टा ।

स्यसिच्सीयुट्तासिष्विति किम् ? चेतव्यम्, दातव्यम् । भावकर्मणोरिति किम् ? चेष्यति । दास्यति । उपदेश इति किम् ?

**पदमञ्जरी**

*प्रकृतस्येटो दीर्घत्वमिति* । वलादिलक्षणस्य प्रकृतत्वात् ।

**न्यासः**

दीर्घः' इति दीर्घः कस्मान्न भवति ? इत्याह—ग्रहोऽलिटीत्यादि । वलादिलक्षणस्तत्रेट् प्रकृत इति तस्यैव दीर्घो विज्ञायते, नान्यस्य । द्रक्ष्यत इति । 'सृजिदृशोर्झल्यमकिति' इत्यमागमः, व्रश्चादिना षत्वम्, 'षढोः कः सि' इति कत्वम्, 'इण्कोः' इति षत्वम् । दर्शिष्यत इति । 'पुगन्तलघूपधस्य' इत्यनेनात्र गुणः सिद्ध्यत्येव । इडर्थस्तु चिण्वद्भावो विधीयते ।

**अचेषाताामिति** । आताम्, सिचि रूपम् । **अदिषाताामिति** । 'स्थाघ्वोरिच्च' इतीत्त्वम्, 'सिचश्च' कित्त्वम् । **अवधिषाताामिति** । 'आत्मनेपदेष्वन्यतरस्याम्' इति वधादेशः । **अहसाताामिति** । 'लिङ्सिचावात्मनेपदेषु' इति कित्त्वम् । तेनामागमगुणौ न भवतः, षत्वादि पूर्ववत् ।

**चेतेति** । लुट्, तासिः, 'लुटः प्रथमस्य डारौरसः' इति डादेशः, टिलोपः । द्रष्टेति । पूर्ववदमादिः । **चेतव्यमिति** । कर्मणि तव्यः । **चेष्यतीति** । अत्र कर्तुर्लदेशेन विवक्षितत्वात् कर्तृविषयः स्यप्रत्ययः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



कारिष्यते—इति गुणे कृते रपरत्वे च न प्राप्नोति, उपदेशग्रहणाद् भवति । अज्झनग्रहदृशामिति किम् ? पठिष्यते ।

अङ्गाधिकारविहितं कार्यमिहातिदिश्यते, तेन हनिणिङामादेशा न भवन्ति । हनिष्यते, घानिष्यते । एष्यते, आयिष्यते । अध्येष्यते, अध्यायिष्यते । 'हनो वध लिङि,' 'लुङि च', 'इणो गा लुङि', 'विभाषा लुङ्लृङोः' इत्येते विधयो न भवन्ति ॥

पदमञ्जरी

*गुणे कृत इति ।* परत्वान्नित्यत्वाच्च । *उपदेशग्रहणाद् भवतीति ।* यद्यपि करोतिरुत्तरकालमनजन्तः, उपदेशे त्वजन्त एव ।

यदि चिणि दृष्टमात्रस्यातिदेशः, हनिणिङादेशा अपि प्राप्नुवन्ति, तेषामपि तत्र दृष्टत्वात् ? अत आह-*अङ्गाधिकारविहितमिति ।* अङ्गस्येति प्रकृत्य यद्विहितं चिणि दृष्टं तदेवातिदिश्यते, सन्निहितत्वात् । न च हनिणिङामादेशा एवंविधा इति तेषामनतिदेशः । अत्र *वार्त्तिकम्*—'वधभावात्सीयुटि चिण्वद्भावो विप्रतिषेधेन' इति । वधभावस्यावकाशः—वध्यात्, वध्यास्ताम्, वध्यासुः; चिण्वद्भावे हन्ग्रहणस्यावकाशः—घानिष्यते, अघानिष्यत, अघानिषाताम्; अघानिषत, घानिषीष्टेत्यत्रोभयप्रसङ्गे चिण्वद्भावो भवति विप्रतिषेधेन । अथेदानीं चिण्वद्भावे पुनःप्रसङ्गविज्ञानाद् वधादेशः कस्मान्न भवति ? सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति । ननु द्वितीयाध्याये, तत्र 'आर्धधातुके' इति विषयसप्तमी, ततः किमन्तरङ्गो वधभावः ? नैतदस्ति; लिङीति विशेषनिर्देशात्पर-

न्यासः

**गुणे कृते रपरत्वे च न प्राप्नोतीति ।** कृ + ष्यत इति स्थिते गुणः प्राप्नोति, चिण्वद्भावश्च; तत्र परत्वाद् गुणः, तत्र कृते रपरत्वम् । यद्युपदेशग्रहणं न क्रियेत ततोऽनजन्तत्वादिह न स्यात् । **उपदेशग्रहणाद् भवति ।** यद्यपि करोतिरुत्तरकालमनजन्तः, उपदेशे त्वजन्त एव ।

**यदि चिणि यद् दृष्टं कार्यं तदतिदिष्टं हनिणिङादेशा अपि प्राप्नुवन्ति । तेषामपि तत्र दृष्टत्वात् ?** इत्यत आह—**अङ्गाधिकारविहितमित्यादि ।** अङ्गस्येत्यधिकारे सति प्रत्यासत्तेरङ्गाधिकारे विहितं कार्यं यच्चिणि दृश्यते सामान्येन तदतिदिश्यते, न तु यद्विप्रकृष्टं प्रकरणान्तरविहितम् । न च हनिणिङामादेशा अङ्गाधिकारे विहिताः, अपि तु प्रकरणान्तरे । तस्मान्न तेऽतिदिश्यन्त इति न भवन्ति तत्र । **घानिष्यते** इत्यत्र 'लुङि च' इत्यनेन विहितो वधादेशो न भवति । **आयिष्यत इति ।** 'इणो गा लुङि' इत्यनेन विहितो गादेशः । **अध्यायिष्यते इति ।** अत्र 'विभाषा लुङ्लृङोः' इत्यनेन विहितो

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## दीङो युडचि क्ङिति ॥ ६३ ॥

दीङो युडागमो भवति अजादौ क्ङिति प्रत्यये परतः। उपदिदीये, उपदिदीयाते, उपदिदीयारे।

'दीङः' इति पञ्चमीनिर्देशादजादेर्युडागमो भवति। विधानसामर्थ्याच्च 'एरनेकाचः' इति यणादेशे कर्त्तव्ये तस्यासिद्धत्वं न भवति।

पदमञ्जरी

सप्तमी। यत्र तु विशेषनिर्देशाभावः—'अस्तेर्भूः' इत्यादौ, तत्रैव विषयसप्तमी भव्यादिसिद्धये॥

दीङो युडचि क्ङिति॥ *दीङ इति पञ्चमीनिर्देशादिति*। षष्ठ्यां त्वस्यां दीङ एवादितो युट् स्यात्, पञ्चम्यां तूभयनिर्देशे पञ्चमीनिर्देशो बलीयानिति अचीति सप्तम्याः षष्ठ्यां प्रकल्पितायामजादेर्युड् भवति। सप्तमीनिर्देशस्तूत्तरार्थः, तदादिविध्यर्थश्च। *विधानसामर्थ्याच्चेति*। यदि युटोऽसिद्धत्वेन यणादेशः स्यात्, युड्विधानमनर्थकं स्यात्; उपदिय्य इति रूपे विशेषाभावात्। न च यकारद्वयश्रवणाद्विशेषः; 'हलो यमां यमि लोपः' इति पक्षे यलोपविधानात्। न च पक्षे श्रुतिभेदः; 'यणो मये द्वे' इति द्विर्वचनविधानादेव सिद्धत्वात्। श्रुतिभेदोऽपि व्यञ्जनात्परस्यैकस्यानेकस्य वा यकारस्य क्वीदृश इति चिन्त्यम्।

न्यासः

गाङादेशः। एवमपि स्यादिभ्यः परस्य प्रत्ययस्य लुक् प्राप्नोति; अङ्गाधिकारे चिण उत्तरस्य प्रत्ययस्य 'चिणो लुक्' इति लुग्विधानात्? नैष दोषः; इह हि सप्तमीसमर्थाद् विहितस्य वतेराश्रयणम्। तेन चिणि यद् दृष्टं कार्यं पूर्वस्य सम्भवति तदतिदिश्यते, न तूत्तरस्य यत् कार्यं तदपि॥

दीङो युडचि क्ङिति॥ उपदिदीय इति। 'दीङ् क्षये', असंयोगाल्लिट् कित्' इति कित्त्वम्, लिटस्तझयोरेशिरेचौ।

'दीङः' इति षष्ठीयं वा स्यात्, पञ्चमी वेति द्वौ पक्षौ। तत्र यद्याद्यः पक्ष आश्रीयेत, तदा 'आद्यन्तौ टकितौ' इत्यादौ युटि कृते धातोरनिष्टं रूपमापद्येत; अत इदं षष्ठीपक्षे दूषणमालक्ष्य पञ्चमीपक्षं पुरस्कृत्याह—दीङ इति पञ्चमीनिर्देशादित्यादि। पञ्चमीनिर्देशे हि सति 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' इति 'दीङः' इति पञ्चम्या अचोति सप्तम्याः षष्ठीत्वे प्रकल्पिते 'तस्मादित्युत्तरस्य' इत्यजादेरादिर्युडागमो भवति। 'अचि' इति सप्तमीनिर्देशस्तूत्तरार्थः। ननु चात्र 'एरनेकाचः' इति यणादेशे कर्त्तव्ये युडसिद्ध इति यणादेशेन भवितव्यम्, ततश्चोपदिदीय इति न सिध्येत्, उपदिद्ये इत्यनिष्टं रूपं प्राप्नोति। अत आह—विधानसामर्थ्यादित्यादि। यदि यणादेशे कर्त्तव्ये युटोऽसिद्धत्वं स्यात्, तदा युटो विधानमनर्थकं स्यात्; विशेषाभावात्।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अचीति किम् ? उपदेदीयते । क्ङितीति किम् ? उपदानम् ॥

**आतो लोप इटि च ॥ ६४ ॥**

इटचजादावार्धधातुके क्ङिति चाकारान्तस्याङ्गस्य लोपो भवति । इटि—पपिथ । तस्थिथ । किति—पपतुः, पपुः । तस्थतुः, तस्थुः । गोदः । कम्बलदः । ङिति—प्रदा । प्रधा ।

**पदमञ्जरी**

*उपदानमिति* । 'मीनातिमिनोतिदीङां ल्यपि च' 'इत्यात्वम्, 'दीङः' इत्यनुबन्धनिर्देशो यङ्लुकि मा भूदिति ॥

*आतो लोप इटि च* ॥ इह 'अचि', 'क्ङिति', आर्द्धधातुके' इति त्रयाणां प्रकृतत्वाद्विशेषणविशेष्यभावे च कामचारात्तेषामन्यतमेनानुभूतान्यतरविशेषणेन, अनुभूतोभयविशेषणेन, अननुभूतविशेषणेन वा इटः समुच्चयसम्भवाद् द्वादश पक्षाः सम्भवन्ति । तत्र यदि तावद्विशेषणसम्बन्धात् प्रागेवाचा इटः समुच्चयः, अङ्गाक्षिप्तश्च प्रत्ययो वा विशेष्यते, 'इट्यजादौ च प्रत्यये' इति विज्ञायते, तदेड्ग्रहणमनजाद्यर्थं भवति; अजादेरिटोऽजादिना प्रत्ययेन समुच्चयासम्भवात् । तदा च ङिदार्धधातुके अजादेरेव विशेषणे व्यवतिष्ठेते, नेटः; हलादेरिटः क्ङित्त्वासम्भवात्, आर्धधातुकत्वाद्, व्यभिचाराच्च । ततश्च दासीयेत्यादौ लोपप्रसङ्गः । अथ किद्विशिष्टेनाचा समुच्चयः—क्ङित्यजादौ भवतीटि चेति, ततो-

**न्यासः**

कथं पुनर्विशेषाभावः, यावताऽसति हि युट्येकस्य यकारस्य श्रवणं भवति, सति तु द्वयोः ? नैषोऽस्ति विशेषः; न हि व्यञ्जनपरस्यैकस्यानेकस्य वा हलः श्रवणं प्रति विशेषोऽस्ति । ये तु विशेषमिच्छन्ति, तन्मतेनास्माभिः पूर्वमेव यणादेशे युटः सिद्धत्वमन्यथा प्रतिपादितम् ।

उपदेदीयत इति । यङ् । उपदानमिति । ल्युट , 'मीनातिमिनोतिदीङां ल्यपि च' इत्यात्त्वम् । दीङ इत्यनुबन्धनिर्देशो यङ्लुकि मा भूदित्येवमर्थः—देद्यतुः, देद्युरिति । ननु चात्र 'कास्प्रत्ययादाममन्त्रे' इत्यामा भवितव्यम्, तेनाक्ङित्त्वादेव न भविष्यति ? सत्यमेतत्; अमन्त्रे न भविष्यति, मन्त्रे तु स्यादेव; तत्रामोऽभावात् । अथ यङ्लुगन्तस्य मन्त्रे प्रयोगो न दृश्यते, तदा विस्पष्टार्थम् ॥

आतो लोप इटि च ॥ इट्यजादावार्धधातुके क्ङिति चेति । 'अजादावार्धधातुके' इति प्रत्येकमभिसम्बध्यते—इट्यजादावार्धधातुके, क्ङिति चाजादावार्धधातुक इति । इड्ग्रहणमक्ङिदर्थम् । पपिथेति । पातेः पिबतेर्वा लिट् , सिप् , 'परस्मैपदानाम्' इत्यादिना तस्य थल् , 'ऋतो भारद्वाजस्य' ति नियमादिट् । गोद इति । 'आतोऽनुपसर्गे कः' ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



'आर्धधातुके' इत्येव—यान्ति । वान्ति । व्यत्यरे । व्यत्यले । रातेर्लातेश्च लङि इटि रूपम् ।

अचीत्येव—ग्लायते । दासीय ॥

## ईद्यति ॥ ६५ ॥

### पदमञ्जरी

ऽक्ङिदर्थमनजाद्यर्थं चेड्ग्रहणं भवति—पपिथ, दासीयेति; अथार्द्धधातुकविशिष्टेनाचा समुच्चयः, ततोऽक्ङिदर्थमनजाद्यर्थमनार्धधातुकार्थं चेडग्रहणम्—पपिथ, दासीय, व्यत्यरे—इतीण्मात्रे लोपप्रसङ्गः; तदेवमचा समुच्चये चत्वारः पक्षाः । एवमार्धधातुकेन; एवं क्ङितेति द्वादश पक्षाः । तयोरप्युभयविशिष्टयोस्त एव दोषाः, यांस्त्ववोचाम ।

अथाविशेषितेनार्धधातुकेन समुच्चयस्तदा नार्धधातुकार्थमिडग्रहणमिति 'व्यत्यरे' इत्यत्रैव प्रसङ्गः; अथ क्ङिद्विशिष्टेनार्धधातुकेन समुच्चयस्तदाऽक्ङिदर्थमनार्धधातुकार्थमिड्ग्रहणम्—पपिथ, व्यत्यरे; अथाज्विशिष्टेनार्धधातुकेन समुच्चयः, अनजाद्यर्थमनार्धधातुकार्थं चेड्ग्रहणम्—दासीय, व्यत्यरे; अथाज्विशिष्टेन क्ङिता समुच्चयः, ततोऽनजाद्यर्थमक्ङिदर्थं चेड्ग्रहणम्—दासीय, पपिथ । अथार्धधातुकविशिष्टेन क्ङिता समुच्चयः, तदानार्धधातुकार्थमक्ङिदर्थं चेड्ग्रहणम्—व्यत्यरे, पपिथ । तदेवमेकादशपक्षा दुष्टाः । द्वादशः पक्षः शिष्यते—अविशिष्टेन क्ङिता समुच्चय इति, अत्र च पक्षे 'अच्यार्धधातुके' इति विशेषणद्वयमविशेषाद् द्वावपि क्ङिदिटावुपनिपततीति अक्ङिदर्थमेवेड्ग्रहणं भवति । तेन पपिथेत्यादावाल्लोपो भवति; दासीय, व्यत्यरे—इत्यनजादावनार्धधातुके च न भवति । स एष निर्दोषः पक्षः, तमिममाश्रयति—इत्यजादावार्धधातुक इति । क्ङिति चेति । 'अजादावार्धधातुके' इत्यनुषङ्गः । दासीयेति । आशिषि लिङ्, उत्तमैकवचनमिट्, 'इटोऽत्' । अत्र सीयुट इड्भक्तत्वादिटोऽजादित्वाभावः ॥

### न्यासः

व्यत्यरे, व्यत्यले इति । 'कर्त्तरि कर्मव्यतीहारे' इत्यात्मनेपदम्, उत्तमपुरुषैकवचनम्—इट्, तस्य 'सार्वधातुकमपित्' इति ङित्त्वम् । तत्रार्धधातुकत्वं नास्तीति न भवति लोपः ।

ग्लायत इति । भावे लकारः । दासीयेति । आशिषि लिङ्, आत्मनेपदोत्तमैकवचनम्, तस्य 'इटोऽत्' इत्यदादेशः । अत्र सीयुटस्तद्भक्तत्वादिटोऽजादित्वं नास्तीति सत्यप्यार्धधातुकाजादित्वे लोपाभावः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



ईकार आदेशो भवति आकारान्तस्याङ्गस्य यति परतः। देयम्। धेयम्। हेयम्। स्तेयम्॥

घुमास्थागापाजहातिसां हलि ॥ ६६ ॥

घुसंज्ञकानामङ्गानां मा, स्था, गा, पा, जहाति, सा—इत्येतेषां हलादौ क्ङिति प्रत्यये परत ईकारादेशो भवति। दीयते, देदीयते।

पदमञ्जरी

*ईद्यति* ॥ दीर्घविधानमुत्तरार्थम्—अध्यगीष्ट। इह तु गुणेन भवितव्यमिति ह्रस्व एव विधेयः॥

*घुमास्थागापाजहातिसां हलि* ॥ माग्रहणेन 'मेङ् प्रणिदाने', 'माङ् माने', 'मा माने' इति सर्वेषां ग्रहणम्। एवं गा इत्यत्रापि 'गाङ्गतौ', 'गै शब्दे', 'गा स्तुतौ छन्दसि', 'इणो गा लुङि', 'इण्वदिक इति वक्तव्यम्', 'गाङ् लिटि' इति सर्वेषां गारूपाणां ग्रहणम्; 'गामादाग्रहणेष्वविशेषः' इति वचनात्।

न्यासः

*ईद् यति* ॥ क्ङितीत्युत्तरार्थमनुवर्त्तमानमपीह नाभिसम्बध्यते; यतः क्ङित्त्वासम्भवात्। तकार उच्चारणार्थः; अनण्त्वादेव हि सवर्णग्रहणं न भविष्यति। असत्यपि वा जातिपक्षे सवर्णग्रहण आन्तरतम्याद् दीर्घ एव भविष्यति; न ह्रस्वः। दीर्घोच्चारणमुत्तरार्थम्। इह तु गुणेन भवितव्यम्। न चात्र दीर्घस्य ह्रस्वस्य वा गुणे कृते कश्चिद् विशेषोऽस्ति। देयमिति। 'अचो यत्'॥

*घुमास्थागापाजहातिसां हलि* ॥ दीयत इति। कर्मणि लकारः। देदीयत इति। यङ्। अथ मेति कस्येदं ग्रहणम्, किम् 'मेङ् प्रणिदाने' इत्यस्य भौवादिकस्य? उत 'माङ् माने' इत्यस्य जौहोत्यादिकस्य? आहोस्विद् 'मा माने' इत्यस्यादादिकस्य? तत्र केचिदाहुः—'निरनुबन्धकग्रहणे न सानुबन्धकस्य' इत्यादादिकस्य ग्रहणम्। अन्ये त्वाहुः—'लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणम्' इत्यलुग्विकरणयोर्माङ्मेङोरिति। अपरे ब्रुवते—'गामादाग्रहणेष्वविशेषः' इति त्रयाणामपीति; एतदेव वृत्तिकारस्याभिमतमिति लक्ष्यते। तथा हि—'पातेरिह ग्रहणं नास्ति, लुग्विकरणत्वात्' इति ब्रुवता 'पा रक्षणे' इत्यस्य ग्रहणाभावः स्वयमेवोक्तः। यदि चात्रालुग्विकरणयोर्लुग्विकरणस्य वा ग्रहणमभिमतं स्यात्, तदपि प्रतिपादयेत्, न च प्रतिपादितम्, अतोऽवगम्यते—त्रयाणामपि ग्रहणमभिमतमिति। गा इति। गाङ् गतौ' 'कै गै शब्दे—एतौ भौवादिकौ; 'गा स्तुतौ छन्दसि' इति जौहोत्यादिकः, 'इणो गा लुङि' इतीणो गादेशः; 'इण्वदिक इति वक्तव्यम्' इतीको गादेशः 'गाङ् लिटि', 'विभाषा लुङ्लृङोः' इति चेङो गाङादेशः—एषां पूर्ववत् सर्वेषामविशेषेण ग्रहणम्। सत्यपि सर्वेषां ग्रहणे यस्य क्ङिदार्धधातुकपरं सम्भवति तस्यैवेत्त्वं भवति, नेतरस्य;

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



धीयते, देधीयते। मीयते, मेमीयते। स्थीयते, तेष्ठीयते। गीयते, जेगीयते। अध्यगीष्ट, अध्यगीषाताम्, अध्यगीषत। पीयते, पेपीयते।

पातेरिह ग्रहणं नास्ति; लुग्विकरणत्वात्। पायते—इत्येव तस्य भवति।

हीयते। जेहीयते। जहातेरिह निर्देशाद् जिहातेर्ग्रहणं न भवति। हायते। 'षोऽन्तकर्मणि'—अवसीयते, अवसेसीयते।

हलीति किम्? ददतुः, ददुः। आतो लोपाद्धि परत्वादीत्वं स्यात्। एतदेव हल्ग्रहणं ज्ञापकम्—अस्मिन् प्रकरणे विप्रतिषेधेनासिद्धत्वं भवति।

'क्ङिति' इत्येव—दाता। धाता॥

पदमञ्जरी

*जहातेरिति*। 'ओहाक् त्यागे'। *जिहातेरिति*। 'ओहाङ् गतौ' इत्यस्य। 'भृञामित्' इत्यभ्यासस्येत्वे सति जहातीति निर्देशो नोपपद्यते।

कामं हागित्यपि निर्देशेन भवति जिहातेः प्रसङ्गः, तथा तु न कृतमित्येव।

*एतदेवेत्यादि*। यथा चैतज्ज्ञापकं तथा 'जनसनखनाम्' इत्यत्रोक्तम्। ईत्वे वकारप्रतिषेधः, वकारस्य निमित्तभावेन प्रतिषेधो वकारप्रतिषेधः। वकारादावीत्वं न भवतीत्यर्थः। 'आतो मनिन्क्वनिब्वनिपश्च'—घृतं पिबन्ति घृत-

न्यासः

निमित्ताभावात्। गीयते, जेगीयत इति। भौवादिकयोरुदाहरणे। अध्यगीष्टेत्यादि। इङो गाङ्, गाङ्कुटादिसूत्रेण सिचो ङित्त्वम्, 'आत्मनेपदेष्वनतः' इत्यदादेशः।

अथ किमर्थं जहातीति श्तिपा निर्देशः क्रियते, न हेत्येवोच्येत? इत्यत आह—जहातेरित्यादि। यदि हेति निर्देशः क्रियते, तदा जिहातेः 'ओहाङ् गतौ' इत्यस्यापि स्यात्, जहातीति निर्देशे तु न भवति। अत्र हिनिर्देशे सति यस्यैतद्रूपं भवति तस्यैव ग्रहणेन भवितव्यम्। कस्य चैतद्रूपम्? 'ओहाक् त्यागे' इत्यस्य, इतरस्य 'भृञामित्' इत्यभ्यासस्येत्त्वे कृते जिहातीति रूपं भवतीति। कामं हागित्यपि निर्देशे न भवति जिहातेः प्रसङ्गः, वैचित्र्यार्थस्तु न तथा निर्देशः कृतः।

अवसीयत इति। 'षोऽन्तकर्मणि'।

ददतुरित्यादि। ननु चात्र 'आतो लोपः' इत्यादिनाकारलोपो भविष्यति, तत् किमेतन्निवृत्त्यर्थेन हलीत्यनेन? इत्यत आह—आतो लोपाद्धीत्यादि। आतो लोपस्यावकाशः—ययतुः, ययुरिति, ईत्वस्यावकाशः—दीयते, धीयत इति; इहोभयं प्राप्नोति—

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## एर्लिङि ॥ ६७ ॥

घुमास्थागापाजहातिसामङ्गानां लिङि परत एकारादेशो भवति। देयात्। मेयात्। धेयात्। स्थेयात्। गेयात्। पेयात्। अवसेयात्।

'क्ङिति' इत्येव—दासीष्ट। धासीष्ट॥

## वाऽन्यस्य संयोगादेः ॥ ६८ ॥

घ्वादिभ्योऽन्यस्य संयोगादेराकारान्तस्य वा एकारादेशो भवति लिङि परतः। ग्लेयात्, ग्लायात्। म्लेयात्, म्लायात्।

अन्यस्येति किम्? स्थेयात्। संयोगादेरिति किम्? यायात्।

### पदमञ्जरी

पावानः, वसां पिबन्ति वसापावानः। क्वनिपीत्वं न भवति। धीवरी, पीवरीत्यत्र त्वौणादिकमीत्वं ध्याप्योर्वा सम्प्रसारणम्; तथा च 'स्थः क च' इत्यत्र क्विपि ईत्वाभाव उदाहृतः॥

*वान्यस्य संयोगादेः॥ स्थेयादिति।* अन्यस्य ग्रहणेऽक्रियमाणे पूर्वयोगोऽन्येषु सावकाशः, अयमपि ग्लायादित्यादिषु; स्थेयादित्यत्रोभयप्रसङ्गे परत्वादयमेव विधिः स्यादित्यन्यस्य ग्रहणम्॥

### न्यासः

ददतुः, ददुरिति। तत्र यदि हल्ग्रहणं न क्रियेत, तदा परत्वादीत्त्वं स्यात्। ननु सिद्धयोर्द्वयोर्विप्रतिषेध उपपद्यते, इह तु 'असिद्धवदत्रा भात्' इति द्वयोरप्यसिद्धत्वम्, तत् कुतो विप्रतिषेधः; अस्मिंश्च सति परत्वादीत्त्वं स्यादिति न युक्तं वक्तुम्, तथा हि—'विप्रतिषेधे परं कार्यम्' इत्युक्तम्? अत आह—एतदेवेत्यादि। यद्यत्र विप्रतिषेधे कर्त्तव्येऽसिद्धत्वं स्याद्, हल्ग्रहणमनर्थकं स्यात्। भवत्वत्रेत्त्वम्, तस्यासिद्धत्वादातो लोपो भविष्यति, तत् किं हल्ग्रहणेन? तदेतत् कथमर्थवद् भवति? यदि विप्रतिषेधे कर्त्तव्ये सिद्धत्वं स्यात्, नान्यथा॥

एर्लिङि॥ पूर्वेणेत्त्वे प्राप्त एत्वं विधीयते। मेयादिति। 'मा माने' इत्यस्येदमुदाहरणम्, न तु माङ्-मेङोः; तयोर्ह्यात्मनेपदित्वात् परस्मैपदं न सम्भवति। गेयादिति। 'कै गै' इत्यस्योदाहरणम्, न तु गाङः; तस्य परस्मैपदासम्भवात्। नापोणिगिङादेशानाम्; तेषामपि लिङ्यसम्भवात्। इङादेशस्य तु पूर्वस्माच्च हेतोः॥

वान्यस्य संयोगादेः॥ अन्यस्येति किम्? स्थेयादिति। यद्यन्यस्येति न क्रियेत, तदा पूर्वयोगोऽन्येषु घ्वादिषु सावकाशः, अयमपि ग्लायादित्यादिषु; स्थेयादित्यत्रोभयप्राप्तौ परत्वादनेन विकल्पः स्यादित्यन्यग्रहणम्।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



'क्ङिति' इत्येव—ग्लासीष्ट । 'अङ्गस्य' इत्येव—निर्वायात् ॥

न ल्यपि ॥ ६९ ॥

ल्यपि प्रत्यये परतो घुमास्थागापाजहातिसां यदुक्तं तन्न । प्रदाय । प्रधाय । प्रमाय । प्रस्थाय । प्रगाय । प्रपाय । प्रहाय । अवसाय ॥

मयतेरिदन्यतरस्याम् ॥ ७० ॥

मयतेरिकारादेशो वा भवति ल्यपि परतः । अपमित्य, अपमाय ॥

लुङ्लङ्लृङ्क्ष्वडुदात्तः ॥ ७१ ॥

लुङ्, लङ्, लृङ्—इत्येतेषु परतोऽङ्गस्याडागमो भवति, उदात्तश्च स

पदमञ्जरी

*न ल्यपि* ॥ *यदुक्तमिति* । ईत्वम्, न त्वनन्तरमेत्वम्; प्राप्त्यभावात् ॥

*मयतेरिदन्यतरस्याम्* ॥ *अपमित्येति* । 'उदीचां माङो व्यतीहारे' इति क्त्वा-प्रत्ययः, इत्त्वे कृते तुक् ॥

न्यासः

यदि पूर्वयोगस्तिष्ठत्यत्यर्थोऽप्यारभ्येत, तदा तदर्थस्य तस्यारम्भसामर्थ्यात् पूर्वेण नित्यमेत्त्वं भविष्यति, अन्यथा तदर्थस्य तस्यारम्भो निष्फलः स्यादिति शक्यमन्यग्रहण-मकर्तुम् । तत् क्रियते विस्पष्टार्थम् ॥

न ल्यपि ॥ वेति निवृत्तम्; उत्तरसूत्रे पुनरन्यतरस्यांग्रहणात् । यदुक्तमिति । ईत्त्वम्, न पुनरनन्तरमेत्त्वम्; तस्य ल्यपि प्राप्त्यभावात् । प्रतिषेधस्य च प्राप्तिपूर्वकत्वात् ॥

मयतेरिदन्यतरस्याम् ॥ 'न ल्यपि' इति प्रतिषेधादाकारस्य श्रवणे प्राप्ते सतीत्त्व-मारभ्यते । अपमित्येति । 'मेङ् प्रणिदाने' । 'उदीचां माङो व्यतीहारे' इति क्त्वा, इत्त्वे कृते तुक् । ननु च 'अपमित्ययाचिताभ्यां कक्कनौ' इति निपातनात् सिद्धमेतत्, तदपार्थकोऽयमारम्भः ? नैतदस्ति; 'बाधकान्यपि निपातनानि भवन्ति' इति पक्षे अपमायेति न स्यात् । 'माङ् माने' इत्यस्य भविष्यतीति चेत् ? न; अर्थभेदात् । अथापि 'अबाधकान्यपि निपातनानि' स्युः ? एवमप्यारब्धव्यमेवेदमसन्देहार्थम् । असति ह्यस्मिन् सन्देहः स्यात्—किं मयतेरिदं निपातनम्, अथ धात्वन्तरस्येति ! उपसर्गनियमश्च विज्ञायेत—अपपूर्वस्यैवेति । अस्मिंस्तु सत्यन्योपसर्गस्यापि भवतीत्ये-तदर्थो युक्त आरम्भः ॥

लुङ्लङ्लृङ्क्ष्वडुदात्तः ॥ उदात्तश्च स भवतीति । आगमानुदात्तत्वे प्राप्ते उदात्तत्वं विधीयते । एतच्चोदात्तवचनम् 'अभेदका इह शास्त्रे गुणाः' इत्यस्यार्थस्य

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


भवति । लुङ्—अकार्षीत्, अहार्षीत् । लङ्—अकरोत्, अहरत् । लृङ्—अकरिष्यत्, अहरिष्यत् ॥

## आडजादीनाम् ॥ ७२ ॥

आडागमो भवत्यजादीनां लुङ्लङ्लृङ्क्षु परतः, उदात्तश्च स भवति । ऐक्षिष्ट । ऐहिष्ट । औब्जीत् । औम्भीत् । लङ्—ऐक्षत । ऐहत । औब्जत् । औम्भत् । लृङ्—ऐक्षिष्यत । ऐहिष्यत । औब्जिष्यत् । औम्भिष्यत् ।

इह ऐज्यत, औप्यत, औह्यतेति लङि कृते लावस्थायामडागमा-

### पदमञ्जरी

आडजादीनाम् ॥ ऐज्यतेत्यादौ यजिवपिवहीनां हलादित्वादाण्न प्राप्नोति, सम्प्रसारणे कृतेऽजादित्वाद्भविष्यति, परत्वाल्लादेशेभ्यः प्रागटा भवितव्यम्, ततो लादेशैः, ततो यका, ततः सम्प्रसारणेन, अत आह—इहेति । लादेशस्यान्तरङ्गत्वं लकारमात्रापेक्षित्वात् । अडागमस्तु लकारविशेषमङ्गं चापेक्षते इति बहिरङ्गः, कृताकृतप्रसङ्गित्वाद्विकरणस्य नित्यत्वम् । नन्वडागमोऽपि कृतेऽपि

### न्यासः

ज्ञापकम् । कथं कृत्वा ? यदि च भेदका गुणाः स्युः, तदोदात्तयुक्तेनैवाटं समुच्चारयेत् । पश्यत्याचार्यः—'अभेदका इह शास्त्रे गुणाः' इति, यतः स्वरान्तरनिवृत्त्यर्थमुदात्तवचनं कृतवान् । किमेतस्य ज्ञापनेन प्रयोजनम् ? 'वृद्धिरादैच्' इत्यत्रोदात्तादिभेदभिन्नानामपि वृद्धिसंज्ञा सिध्यतीति ॥

आडजादीनाम् ॥ ऐक्षिष्ट, ऐहिष्टेति । 'ईक्ष दर्शने', 'ईह चेष्टायाम्'—अनुदात्तेतौ, 'आटश्च' इति वृद्धिः । औब्जीत्, औम्भीदिति । 'उब्ज आर्जवे', 'उभ उम्भ पूरणे', 'आर्धधातुकस्येट्', 'अस्तिसिचोऽपृक्ते' इतीट्, 'इट ईटि' इति सिचो लोपः ।

अथैज्यत, औप्यत, औह्यतेत्यत्र कथमाट्; यतो यजिवपिवहिभ्यो लङ् विहितः कर्मणि, ते च हलादयः, नाजादयः । न च शक्यते वक्तुम्—सम्प्रसारणे कृतेऽजादित्वं भविष्यतीति । यस्मात् प्रागेव लादेशात् परत्वादडागमेन भवितव्यम्, ततो लादेशेन, ततो यका, ततः सम्प्रसारणेन ? इत्यत आह—इहेत्यादि । यद्यप्यडागमः परः, तथाप्यन्तरङ्गत्वादादेशस्य पूर्वं स एव क्रियते । लादेशो हि धातोर्विहितं लकारमात्रमपेक्ष्य भवतीत्यन्तरङ्गः । अडागमस्तु लकारविशेषम्; अङ्गस्य विधीयमानत्वात् । अङ्गं च प्रत्ययमपेक्षत इति बहिरङ्गः । पूर्वोत्पत्तिनिमित्तोपलक्षणमात्रं चेहान्तरङ्गत्वम्, तेन नित्यत्वमप्युक्तं भवति । लादेशो हि नित्यः, कृतेऽप्यटि प्राप्नोति अकृतेऽपि; अडागमस्त्वनित्यः, शब्दान्तरप्राप्तेः । कृते हि लादेशे नित्यत्वाद् विकरणेन भवितव्यम् । विकरणे च कृते विकरणान्तरस्याङ्गस्य तेन भवितव्यम्, अकृते तु धातुमात्रस्य । तस्मादन्त-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



दन्तरङ्गत्वाल्लादेशः क्रियते, तत्र कृते विकरणो नित्यत्वादडागमं बाधते। शब्दान्तरप्राप्तेरडागमस्यानित्यत्वम्; कृते हि विकरणान्तस्याङ्गस्य तेन भवितव्यम्, अकृते तु धातुमात्रस्य शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवति।

पदमञ्जरी

विकरणे प्राप्नोत्यकृतेऽपीति नित्य एव, ततश्च परत्वादडागम एव प्राप्नोति, तत्राह—*शब्दान्तरप्राप्तेरिति*। शब्दान्तरप्राप्तिमेव दर्शयति—*कृते हीति*। अङ्गस्याडागमः कृते विकरणे विकरणान्तमङ्गम्, अकृते तु धातुमात्रमित्यस्ति शब्दान्तरप्राप्तिः। ननु विकरणोऽपि शब्दान्तरप्राप्तेरनित्यः, तथा हि—स कृतेऽडागमे तदादेर्धातोर्भवति, अकृते तु धातुमात्रात्? अत आह—*शब्दान्तरस्येति*। षष्ठीनिर्दिष्टस्य यद्विधीयते आगम आदेशो वा तत्रैषा परिभाषा, न पञ्चमीनिर्देश इत्यर्थः।

*नित्यत्वादेवेति*। एवकारः पौनर्वचनिकः, नित्यत्वादडागमं बाधते इति पूर्वमुक्तम्, तत्रापि स एव हेतुरिति। अडागमस्तु सम्प्रसारणे कृते न प्राप्नोति; आटा बाधितत्वात्। 'यस्य निमित्तं लक्षणान्तरेण विहन्यते' इति तु न सार्वत्रिकमिति भावः।

अयं योगः शक्योऽकर्तुम्, अजादीनामपि पूर्वसूत्रेण अडेवास्तु। कथम् 'आटश्च' इति वृद्धिः? 'अटश्च' इति वक्ष्यामि। इहापि तर्हि प्राप्नोति—अकार्षीत्? अचीति वर्त्तते। एवमपि स्वपेर्लङ्, सिप्, 'अड् गार्ग्यगालवयोः' इति सिपोऽट्, रुत्वम्, 'हशि च' इत्युत्वम्—अस्वपो हसतीत्यत्र वृद्धिप्रसङ्गः?

न्यासः

रङ्गत्वान्नित्यत्वाच्चाडागमात् पूर्वं लादेशः क्रियते। तत्र कृत इति। लादेशे कृते। स विकरण इति। यक्। नित्यत्वादिति। कृताकृतप्रसङ्गित्वेन विकरणस्य नित्यत्वम्। स हि कृतेऽप्यटि प्राप्नोति, अकृतेऽपि। स्यादेतत्—अडागमोऽपि कृते विकरणे प्राप्नोति अकृतेऽपि, अतस्तस्यापि नित्यत्वम्, तत्रोभयोर्नित्यत्वे परत्वादडागम एव पूर्वं भविष्यति? इत्यत आह—शब्दान्तरप्राप्तिरित्यादि। कथं पुनः शब्दान्तरप्राप्तिः? इत्याह—कृते हीत्यादि। अङ्गस्याडागमो विधीयते; कृते च विकरणे तदादिग्रहणस्य स्यादिति नुमर्थत्वाद् विकरणान्तमङ्गं भवति, अकृते तु धातुमात्रम्। अन्यच्च विकरणान्तादङ्गाद् धातुमात्रमङ्गम्, अतोऽन्यस्य कृते प्राप्नोति, अकृते त्वन्यस्येति स्फुटैव शब्दान्तरप्राप्तिः, तत्रैतत् स्यात्। विकरणस्यापि शब्दान्तरप्राप्तेरेवानित्यत्वम्, तथा हि—तेनापि कृते सत्यडागमे तदादेर्धातोर्भवितव्यम्; अकृते धातुमात्रादित्यत आह—शब्दान्तरस्य चेत्यादि। यद्यप्यटः कृताकृतयोरेवावस्थयोर्विकरणः शब्दान्तरात्

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



ननु शब्दान्तरादिति विकरणोऽनित्यः ? विकरणे कृते सम्प्रसारणमडागमान्नित्यत्वादेव भवति, सम्प्रसारणे च कृतेऽजाद्यङ्गं जातमिति 'आडजादीनाम्' इत्याडागमः ॥

## छन्दस्यपि दृश्यते ॥ ७३ ॥

छन्दसि विषये आडागमो दृश्यते । यतो हि विहितस्ततोऽन्यत्रापि

### पदमञ्जरी

अजादौ धातौ वृद्धिं वक्ष्यामि । तर्हि धाताविति वक्तव्यम् ? न वक्तव्यम्; यदेतद् 'उपसर्गादृति धातौ' इति, तत्पूर्वत्रापकृष्यते, 'अटश्च' इत्यत्र चकारस्तस्यैव विधेः समुच्चयार्थः—अटो विध्यन्तरं बाधित्वा वृद्धिरेव यथा स्यात् । तेनाटिटदित्यादौ परमप्यतो गुणे पररूपं बाधित्वा वृद्धिरेव भवति । यथा सिद्धान्तेऽपि, औसीयत् औङ्कारीयत् 'उस्यपदान्तात्', 'ओमाङोश्च' इति पररूपं न भवति । उत्तरार्थं तर्ह्याङ्वचनम् 'छन्दस्यपि दृश्यते'—सुरुचो वेन आवः ? अट एवात्र छान्दसं दीर्घत्वं भविष्यति—पूरुषो नारक इति । यथा आसन्नित्यत्रापि लावस्थायामेवाटि कृते अ+अस्+ल् इति स्थिते 'अटश्च' इति वृद्धिश्च प्राप्नोति, लादेशश्च, तत्रान्तरङ्गत्वाल्लादेशः । वृद्धिर्ह्यटमचं च निमित्तमपेक्षते, कृते लादेशे वृद्धिश्च प्राप्नोति, 'श्नसोरल्लोपः' च, तत्रान्तरङ्गत्वाद्वृद्धिः । नानाश्रयत्वाच्च 'वार्णादाङ्गं बलीयः' इति नास्ति कृतायां वृद्धौ तपरकरणादाकारस्य लोपाभावः । इह च आयन्निति इणो लङि अटि अ + इ + अन्, 'अटश्च' इति वृद्धिः प्राप्नोति, 'इणो यण्' इति यणादेशश्च, तत्रान्तरङ्गत्वाद्वृद्धिः; नानाश्रयत्वाच्च

### न्यासः

प्राप्नोति, तथापि न तस्यानित्यत्वमुपपद्यते, यस्मात् 'शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवति' इत्येषा हि शास्त्रव्यवस्था; न तु 'शब्दान्तरात् प्राप्नुवन् विधिरनित्यः' इत्येषा । न च विकरणः कस्यचिच्छब्दस्यागम आदेशो वा विधीयते; यतः 'शब्दान्तरस्य प्राप्नुवन् विधिरनित्यः' स्यात् । तथा हि—सार्वधातुके परे धातोः परः प्रत्ययो विधीयते, न तु तस्यागमः, आदेशो वेति कुतो विकरणस्यानित्यत्वम् !

विकरणे तर्हि कृते सम्प्रसारणात्पूर्वमाडागमो भविष्यति ? इत्यत आह—विकरणे कृते सम्प्रसारणमित्यादि । नित्यत्वं तु सम्प्रसारणस्य पूर्ववत्; कृताकृतप्रसङ्गित्वात् । आडागमस्तु कृते सम्प्रसारणे प्राप्नोति, कृते हि सम्प्रसारणेऽजादित्वादाटा भवितव्यमित्यनित्योऽयमाडागमः ॥

छन्दस्यपि दृश्यते ॥ यतो विहितस्ततोऽन्यत्रापि भवतीति । अपिशब्दात् तत्रापि । आवरिति । गुणे रपरत्वे च कृते तिपो हल्ङ्यादिना लोपः, रेफस्य विसर्जनीयः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



दृश्यते । 'आडजादीनाम्' इत्युक्तम्, अनजादीनामपि दृश्यते—सुरुचो वेन आवः । आनक् । आयुनक् । 'आवः' इति वृञो लुङि 'मन्त्रे घसह्वर' इति लेर्लुकि कृते च भवति, तथा 'आनक्' इति नशेः । 'आयुनक्' इति युजेर्लङि ॥

## न माङ्योगे ॥ ७४ ॥

माङ्योगे लुङ्लङ्लृङ्क्षु यदुक्तं तन्न भवति । मा भवान्

### पदमञ्जरी

'वार्णादाङ्गं बलीयः' इति नास्ति, 'इणो यण् एः' इति योगविभागादिवर्णान्तस्येणो यण्विधानादेकारस्य तदभावादायादेशे सिद्धमिष्टम् । अत्र श्लोकौ—

अजादीनामटा सिद्धं वृद्ध्यर्थमिति चेदटः ।
अस्वपो ह्रसतीत्यत्र धातौ वृद्धिमटः स्मरेत् ॥
पररूपं गुणेनाट ओमाङोरुसि तत्समम् ।
छन्दोऽर्थं बहुलं दीर्घे इणस्त्योरन्तरङ्गतः ॥ इति ।

न माङ्योगे ॥ यद्ययमनन्तरस्याट एव प्रतिषेधः स्यात्, तत्संयुक्तमेव प्रतिषेधं कुर्यात्—'आडजादीनाममाङ्योगे' इति, असंयुज्य तु प्रतिषेधात्सर्वस्य प्राकरणिकस्य प्रतिषेधो विज्ञायत इत्याह—लुङ्लङ्लृङ्क्षु यदुक्तं तन्न *भवतीति* । तत्र लृङ उदाहरणं न प्रदर्शितम्; माङ्योगे तदसम्भवात् । ङिद्विशिष्टस्योपादानम्—अस्मदादेशो यो माशब्दः 'त्वामौ द्वितीयायाः' इति तद्योगे प्रतिषेधो मा भूत्—सुखिनं मा अकार्षीदिति । अथ कथम्—'मा बालिपथमन्वगाः' ?

स्वच्छन्दमनुवर्त्तन्ते न शास्त्रमृषयः किल ॥

### न्यासः

तथेत्यादि । यथावरिति 'मन्त्रे घसह्वर' इत्यादिना लेर्लुकि कृते भवति, तथानगिति लेर्लुकि कृते नशेर्भवतीत्यर्थः । तत्र 'नशेर्वा' इति कुत्वम् । आयुनगिति । 'युजिर् योगे', रुधादित्वात् श्नम्, 'चो कुः' इति कुत्वम्—गकारः, तस्य चर्त्वम्—ककारः । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति वक्ष्यति, तस्यैवायं प्रपञ्चः ॥

न माङ्योगे ॥ 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इत्याट एवायं प्रतिषेध इति कस्यचिद् भ्रान्तिः स्यात्, अतस्तां निराकर्तुमाह—माङ्योगे लुङ्लङ्लृङ्क्षु परतो यदुक्तं तन्न भवतीति । एतेनोभयोरप्यडाटोः प्रतिषेध इति दर्शयति । उभावपि तौ लुङ्लङ्लृङ्क्षूक्तौ । कथं पुनर्द्वयोरपि प्रतिषेधो लभ्यते ? आटाप्यत्रानुवृत्तेः । न च तस्मिन्ननुवर्त्तमाने सत्यजादीनामप्यट् प्राप्नोतीत्येष दोषः प्रसज्यते; मण्डूकप्लुतिन्याये-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


कार्षीत् । मा भवान् हार्षीत् । मा स्म करोत् । मा स्म हरत् । मा भवानोहिष्ट, मा स्म भवानीहत । मा भवानोक्षिष्ट । मा स्म भवानोक्षत ॥

बहुलं छन्दस्यमाङ्योगेऽपि ॥ ७५ ॥

छन्दसि विषये माङ्योगेऽपि बहुलमडाटौ भवतः । अमाङ्योगेऽपि न भवतः । अमाङ्योगे तावत्—जनिष्ठा उग्रः । काममूनयोः ।

पदमञ्जरी

*बहुलं छन्दस्यमाङ्योगेऽपि* ॥ *मा वः क्षेत्र इति* । वः युष्माकं क्षेत्रे भार्यायां परबीजानि परेषां वीर्याणि मा वाप्सुः, उप्तानि मा भूवन् । वपेः कर्मणि लुङ्, व्यत्ययेन परस्मैपदम्, झेर्जुस्, सिच्, 'वदव्रज' इति वृद्धिः । क्वचित्तु *माङ्योगेऽपि भवति* इति प्रक्रम्य *अवाप्सुरिति* पठ्यते, तथाध्ययनं तु न क्वचिदृष्टम् ।

न्यासः

नात्राटोऽनुवृत्तेः । योगविभागाद्वा, अयमटोऽपि प्रतिषेध इत्यवसीयते; यदि ह्याट एव प्रतिषेधोऽभिमतः स्यात्, तदा 'आडजादीनां न माङ्योगे' इत्येकमेव योगं कुर्यात् ।

अथ वा—'लुङ्लङ्लृङ्क्षु' इत्येतावन्मात्रमनुवर्त्तते, तेन लुङादिषु यदुक्तं तस्य सर्वस्य प्रतिषेधो न विज्ञायते । न चैवमतिप्रसङ्गः; यतः प्रत्यासत्तेरस्मिन्नेव लुङ्लङ्लृङ्प्रकरणे यत् कार्यं विहितं तस्यैव प्रतिषेधो लभ्यते, न सर्वस्य प्रकरणान्तरविहितस्य । अत्र तु प्रकरणेऽडाटावेव विहितौ, अतस्तयोरेव प्रतिषेधः ।

मा भवान् कार्षीदिति । 'माङि लुङ्' इति लुङ् । मा स्म करोदिति । 'स्मोत्तरे लङ् च' इति लङ् । माङिति ङकारानुबन्धवत उपादानम्—अस्मदादेशो यो माशब्दस्तस्य ग्रहणं मा भूदित्येवमर्थम्; अन्यथा भवान् सुखिनं मात्राकार्षीदित्यत्रापि प्रतिषेधः स्यादिति केचित् । लाक्षणिकत्वादेवास्मदादेशस्याग्रहणमित्ययुक्तमेतत् । निपात एवं त्वन्योऽङिन्माशब्दोऽस्ति—मा बालिपथमन्वगाः । मा भवतु तस्य पापमिति तु यस्य प्रयोगस्तद्योगे प्रतिषेधो मा भूदित्येवमर्थं ङिद्विशिष्टस्य ग्रहणम् । योगग्रहणं तु—योगमात्रे प्रतिषेधो यथा स्यादिति, तेन व्यवहितेऽपि भवति ॥

बहुलं छन्दस्यमाङ्योगेऽपि ॥ अमाङ्योगेऽपि न भवत इत्यादिनाऽमाङ्योगेऽपीत्यस्यार्थमाचष्टे । अत्र च वाक्यद्वयेऽपि 'बहुलं छन्दसि' इत्येतत्सम्बध्यते । 'बहुलं छन्दसि' इत्येतावतैव सिद्धेऽमाङ्योगेऽपीति वचनं विस्पष्टार्थम् । अनुच्यमाने ह्येतस्मिन् माङ्योगस्य प्रकृतत्वात् तत्रैव छन्दसि बहुलमडाटौ न भवत इत्याशंक्येत । जनिष्ठा इति । जनेर्लुङ्, थास्, इट्, षत्वम्, ष्टुत्वञ्च । ऊनयीत्, अर्दयीदिति । ऊन परिहाणे', 'अर्द हिंसायाम्'—चुरादौ । 'ह्ययन्तक्षण' इत्यादिना वृद्धिप्रतिषेधः । 'इट

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



काममर्द्दयीत् । माङ्योगेऽपि भवतः—मा वः क्षेत्रे परबीजान्यवाप्सुः । मा अभित्थाः । मा आवः ॥

## इरयो रे ॥ ७६ ॥

'इरे'—इत्येतस्य छन्दसि विषये बहुलं 'रे' इत्ययमादेशो भवति । गर्भं प्रथमं दध्र आपः । याऽस्य परिदध्रे । परिददृश्रे[1] । धाञो रेभावस्यासिद्धत्वादातो लोपो भवति ।

न च भवति—परमाया धियोऽग्निकर्माणि चक्रिरे । अत्र रेशब्दस्य सेटां धातूनामिटि कृते पुना रेभावः क्रियते, तदर्थम् 'इरयोः'

### पदमञ्जरी

*अभित्था इति* । भिदेस्थास्, 'झलो झलि' इति सिचो लोपः । *आवरिति* । पूर्वसूत्रे वृत्तावेव व्युत्पादितम् ॥

इरयो रे ॥ *दध्र इति* । ननु चात्र परत्वाद्रेभावे कृते अनजादित्वादाल्लोपो न प्राप्नोति ? अत आह—*धाञो रेभावस्यासिद्धत्वादिति* ।

नन्वेवमपि रेभावे कृते तस्यैवेडागमः प्राप्नोति, न च रेभावस्य वैयर्थ्यम्; कृसृभृप्रभृतिष्वनिट्सु चरितार्थत्वात् ? इत्यत आह—*अत्रेति* । कथं पुनर्लाक्षणिकस्य तस्य इरेशब्दस्य रेभावो भवति ? कथं वा स्वप्रवृत्तिमपेक्ष्य तस्मिन्निडागमे कृते पुनः स्वयं प्रवर्त्तमानस्यात्माश्रयदोषो न भवति ? तत्राह—*तदर्थ*

### न्यासः

ईटि' इति सिचो लोपः, गुणायादेशौ । अवाप्सुरिति । 'आप्लृ व्याप्तौ', अवपूर्वः । 'सिजभ्यस्तविदिभ्यश्च' इति झेर्जुसादेशः । मा अभित्था इति । भिदेस्थास्, 'झलो झलि' इति सिचो लोपः । माऽऽवरिति । पूर्वमेव व्युत्पादितम् ॥

इरयो रे ॥ दध्र इति । दधातेर्लिट्, 'लिटस्तझयोरेशिरेच्' इतीरेच्, तस्यानेन रयादेशः, 'आतो लोपः' इत्याकारलोपः । परिदद्ध्र इति । दृशः परिपूर्वाल्लिडादिरातोलोपवर्जं विधेयः । अथ दध्र इत्यत्र कथमातो लोपः, यावता दधा+इरे इति स्थित आकारलोपः प्राप्नोति, रेभावश्च, तत्र परत्वाद्रेभावः; तस्मिन् कृतेऽनजादित्वादाकारलोपो न प्राप्नोति ? अत आह—धाञो रेभावस्यासिद्धत्वादित्यादि । असिद्धत्वं तु 'असिद्धवदत्रा भात्' इत्यनेन ।

चक्रिर इति । कृञो रूपम् । ननु च रेभावे कृते दृशिप्रभृतयो ये लिटि सेटो धातवः, क्रादिनियमात् तेभ्यो र इत्यस्येटि कृते ददृश्रे इति रूपं न सिध्येत्, ददृशिर इत्यादिना रूपेण भवितव्यम्, न च शक्यते वक्तुम्—रेभावविधानसामर्थ्यादिड् न भविष्यति; रेभावस्य क्रादिषु चरितार्थत्वात् तेभ्यो हि परस्य लिटः 'कृसृ' इत्यादिनेट्प्रतिषेधः ? इत्यत आह—अत्रेत्यादि । कथं पुना रेभावो लभ्यते ? इत्याह—तदर्थं चेत्यादि । इटि कृते

---

१. उदाहरणमिदं न्यासानुसारि, नान्यत्रोपलभ्यते ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



इत्ययं द्विवचननिर्देशः ॥

अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ॥ ७७ ॥

श्नुप्रत्ययान्तस्याङ्गस्य धातोरिवर्णोवर्णान्तस्य 'भ्रु' इत्येतस्य च इयङ्, उवङ्—इत्येतावादेशौ भवतोऽजादौ प्रत्यये, परतः। आप्नुवन्ति। राध्नुवन्ति। शक्नुवन्ति। धातोः—चिक्षियतुः, चिक्षियुः। लुलुवतुः, लुलुवुः। नियौ, नियः। लुवौ, लुवः। भ्रुवौ, भ्रुवः।

अचोति किम्? आप्नुयात्। शक्नुयात्। राध्नुयात्। श्नुधातुभ्रुवामिति किम्? लक्ष्म्यै। वध्वै। य्वोरिति किम्? चक्रतुः। चक्रुः।

पदमञ्जरी

चेति। द्विवचननिर्देशाद् दोषद्वयं न भवतीत्यर्थः ॥

*अचि श्नुधातुभ्रुवां य्वोरियङुवङौ* ॥ इश्च उश्च यू, तयोर्य्वोः। ह्रस्वयोरिदं ग्रहणम्, दीर्घयोरपि तु कार्यं भवति सवर्णग्रहणात्। य्वोरिति वर्णग्रहणात्ताभ्यां श्न्वादीनां तदन्तविधिः। तत्र 'निर्दिश्यमानस्यादेशा भवन्ति' इत्येवान्तस्य सिद्धेर्ङकारो विस्पष्टार्थः। *आप्नुवन्तीत्यादि*। यत्संयोगपूर्वमेकाच् तदिहोदाहरणम्, अन्यत्र 'हुश्नुवोः सार्वधातुके', 'एरनेकाचः' इति यणा भाव्यम्। लुलुवतुरित्यादिकं तु भवत्येव; 'ओः सुपि' इति वचनात्।

न्यासः

पुना रेभावो यथा स्यादित्येवमर्थमिरेश्च इरेश्चेत्येकशेषं कृत्वेरयोरिति द्विवचनेन निर्देशः। तेन यश्च झस्थान इरेच् शब्दः क्रियते, यश्चेरे इत्यस्येटि कृते सत्युत्तरकालमिरेशब्दः सम्पद्यते, तयोरपि रेभावः सिद्धो भवति ॥

**अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** ॥ 'आर्धधातुके' इति निवृत्तम्। कुतः? 'समः क्ष्णुवः', 'क्षियः' इति निर्देशात्। ह्रस्वयोरिवर्णोवर्णयोरिदं ग्रहणम्। कुत एतत्? तत एव निर्देशात्। अत्राण् गृह्यमाणः सवर्णान् ग्राहयतीति ह्रस्वौ गृह्यमाणौ दीर्घावपि ग्राहयतः, तेन तदन्तस्यापि भवतः। अचीति वर्णग्रहणम्, तत्र 'यस्मिन् विधिस्तदादावल्ग्रहणे' इत्यजादौ विज्ञायत इत्याह—अजादौ प्रत्यय इति। प्रत्ययं इत्येतत् कुतो लभ्यते? अङ्गाधिकारात्। अङ्गाधिकारो ह्यस्ति, प्रत्ययसन्निधापितत्वात्। प्रत्यये हि परतोऽङ्गसंज्ञा विधीयते। यद्यजादौ प्रत्यय इयङुवङौ भवतः, नियौ, लुवौ—इत्यत्र न प्राप्नुतः। अत्र ह्यजेव प्रत्ययः, न त्वजादिः? अत्रापि व्यपदेशिवद्भावे, नाजादित्वमस्तीत्यदोषः। इवर्णोवर्णान्तस्येति। धातोरेवेदं विशेषणम्, नेतरयोः; व्यभिचाराभावात्, असम्भवाच्च। इवर्णोवर्णान्तता चाङ्गस्य ताभ्यां विशेषणाल्लभ्यते। इयङुवङोर्ङकारोऽन्तादेशार्थः। असति त्वस्मिन्ननेकाल्त्वात् सर्वस्याङ्गस्य स्याताम्। ननु च 'निर्दिश्यमान-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



इयङुवङ्भ्यां गुणवृद्धी भवतो विप्रतिषेधेन । चयनम्, चायकः । लवनम्, लावकः ।

❀ इयङुवङ्प्रकरणे तन्वादीनां छन्दसि बहुलमुपसंख्यानं कर्त्तव्यम् ❀ । तन्वं पुषेम, तनुवं पुषेम । विष्वं पुषेम, विषुवं पुषेम स्वर्गो लोकः, सुवर्गो लोकः । त्र्यम्बकं यजामहे, त्रियम्बकं यजामहे ॥

**पदमञ्जरी**

*इयङुवङ्भ्यामिति* । गुणवृद्ध्योरवकाशः—चेता, गौः, इयङुवङोरवकाशः—चिक्षियतुः, लुलुवतुः; चयनम्, चायकः, लवनम्, लावक इत्यत्रोभयप्रसंगे विप्रतिषेधः ।

*तनुवमिति* । अधातुत्वादप्राप्त उवङ् विधीयते । *तन्वमिति* । 'वा छन्दसि' इत्यमि पूर्वत्वाभावे यण् । *विष्वमिति* । *विषुव इति*—'सत्सूद्विष' इति क्विप् । अत्र नित्यम् 'ओः सुपि' इत्यनेन यण् प्राप्तः । *स्वर्गादिषु यजुर्वेदे*–इयङुवङौ, बह्वृचे–यण् ॥

**न्यासः**

स्यादेशा भवन्ति'–इत्यन्तरेणापि ङकारमन्तस्यैव भवतः ? एवं तर्हि विस्पष्टार्थम् । आप्नुवन्ति, राध्नुवन्तीति । 'आप्लृ व्याप्तौ', राध साध संसिद्धौ' । स्वादित्वाच् श्नुः । शकारवतो ग्रहणं किमर्थम् ? 'दाभाभ्यां नुः'–दानुः, भानुरित्यत्र मा भूत् । चिक्षियतुः, चिक्षियुरिति । त्रयाणामपि क्षिधातूनामन्यतमस्य रूपम् । नियौ, नियः, लुवौ, लुव इति । अत्र 'क्विबन्ता धातुत्वं न जहति' इति धातुत्वं वेदितव्यम् । तत्र नयतेः 'सत्सूद्विष' इत्यादिना क्विप् । लुनातेस्तु 'अन्येभ्योऽपि दृश्यते' इत्यनेन ।

इयङुवङ्भ्यामित्यादि । गुणस्यावकाशः–चेतव्यम्, स्तोतव्यमित्यादि, इयङुवङोः–चिक्षियतुश्चिक्षियुः, लुलुवतुर्लुलुवुरिति; इहोभयं प्राप्नोति–चयनम्, लवनमिति । विप्रतिषेधेन गुण एव भवति । वृद्धेरवकाशः–सखायौ, सखायः, गावौ, गाव इति; इयङुवङोः स एव; इहोभयं प्राप्नोति–चायकः, लावक इति, वृद्धिरेव भवति विप्रतिषेधेन ।

इयङुवङ्प्रकरण इत्यादि । उपसंख्यानशब्दस्य प्रतिपादनमर्थः । तत्रेदं प्रतिपादनम्—'बहुलं छन्दसि' इत्यादेः सूत्राद् बहुलग्रहणमनुवर्त्तते । तेन तन्वादीनां छन्दसि विकल्पेनेयङुवङौ भविष्यतः । तन्वमिति । यत्रोवङ् नास्ति, तत्रामि परपूर्वत्वमपि नास्ति; बहुलवचनादेव । विष्वम्, विषुवमिति । सूधातोः क्विप्, 'उपसर्गात् सुनोति' इत्यादिना षत्वम् । स्वर्गः, सुवर्ग इति । 'सु' इत्येतस्मादर्गशब्दे परत उवङादेशः । योगश्चायं यणादेशापवादः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## अभ्यासस्यासवर्णे ॥ ७८ ॥

अभ्यासस्येवर्णोवर्णान्तस्यासवर्णेऽचि परत इयङ्, उवङ्--इत्येतावादेशौ भवतः । इयेष । उवोष । इयर्त्ति ।

असवर्ण इति किम् ? ईयतुः, ईयुः । ऊवतुः, ऊवुः ।

'अचि' इत्येव--इयाज । उवाप ॥

## स्त्रियाः ॥ ७९ ॥

'स्त्री'--इत्येतस्याजादौ प्रत्यये परत इयङादेशो भवति । स्त्री, स्त्रियौ, स्त्रियः । स्त्रीणाम्--इत्यत्र परत्वान्नुडागमः ।

### पदमञ्जरी

*अभ्यासस्यासवर्णे* ॥ पूर्वमङ्गस्याजादौ प्रत्यये विधानादिदमारभ्यते । *इयेषेति* । अत्र गुणस्य स्थानिवद्भावविषये यद्वक्तव्यं तद् 'द्विर्वचनेऽचि' इत्यत्रोक्तम् ॥

*स्त्रियाः* ॥ *स्त्री इत्येतस्येति* । स्त्रीप्रत्ययान्तानां स्त्र्यर्थवृत्तेर्वा शब्दस्य ग्रहणं

### न्यासः

अभ्यासस्यासवर्णे ॥ इयेष, उवोषेति । 'इषु इच्छायाम्', 'उष दाहे'—आभ्यां लिट्, णल् । अत्र च द्विर्वचनं प्राप्नोति, 'पुगन्तलघूपधस्य' इति गुणश्च, तत्र परत्वाद् गुणः—एष, ओष इति स्थिते 'द्विर्वचनेऽचि' इति स्थानिवद्भावादिषुषित्येतयोर्द्विर्वचनम् , तत इयङुवङौ । ननु च तयोः कर्त्तव्ययोः 'अचः परस्मिन् पूर्वविधौ' इति स्थानिवद्भावात् सवर्णता नास्ति ! नैतदस्ति; यो ह्यनादिष्टादचः पूर्वस्तस्य विधौ कर्त्तव्ये स्थानिवद्भावेन भवितव्यम्, आदिष्टाच्चात्राचः पूर्व एषोऽभ्यासः, तत् कुतोऽत्र स्थानिवद्भावः ! इयर्त्तीति । 'ॠ गतौ', जुहोत्यादित्वाच्छपः श्लुः, अभ्यासस्य 'उरत्' इत्यत्त्वम् , 'अर्त्तिपिपर्त्योश्च' इतीत्त्वम्, तत इयङादेशः ।

ईयतुः, ईयुरिति । ऊवतुः, ऊवुरिति । 'असंयोगाल्लिट् कित्' इति । कित्त्वाद् गुणाभावः, तेन सवर्णोऽज्न भवति ।

इयाजेति । उवापेति । यजिवप्योः 'लिट्यभ्यासस्योभयेषाम्' इति सम्प्रसारणम् ॥

स्त्रियाः ॥ स्त्रिया इति , 'आण् नद्याः', 'जातेरस्त्रीविषयादयोपधात्' इति निर्देशान्नेदं स्त्रीप्रत्ययानां ग्रहणम् , नापि स्त्र्यर्थवृत्तेः शब्दस्येति निश्चित्य स्त्रीशब्दस्यैव स्वरूपेण ग्रहणमिति दर्शयितुमाह—स्त्रीत्येतस्येत्यादि । इतिकरणः स्त्रीशब्दस्य स्वरूपपदार्थतां दर्शयति । अथ षष्ठीबहुवचने कस्मान्न भवतीत्याह—स्त्रीणामित्यादि । परत्वात् षष्ठीबहुवचने नुटा भवितव्यम्, तस्मिंश्च सत्यजादिः परः प्रत्ययो न भवतीतीयङ् न प्रवर्तते ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


पृथग्योगकरणमुत्तरार्थम् ॥

वाऽम्शसोः ॥ ८० ॥

अमि शसि परतः स्त्रियां वा इयङादेशो भवति । स्त्रीं पश्य, स्त्रियं पश्य । स्त्रीः पश्य, स्त्रियः पश्य ॥

इणो यण् ॥ ८१ ॥

इणोऽङ्गस्य यणादेशो भवति अचि परतः । यन्ति । यन्तु । आयन् । इयङादेशापवादोऽयम् । 'मध्येऽपवादाः पूर्वान्विधीन् बाधन्ते'

पदमञ्जरी

न भवति; 'आण्नद्याः', 'कुमार्यां वयसि' इत्यादिनिर्देशात् । *उत्तरार्थमिति* । उत्तरत्र 'स्त्रियाः' एवानुवृत्तिर्यथा स्यात्, श्नुधातुभ्रुवां मा भूत् ॥

*इणो यण्* ॥ अत्र सूत्रार्थकथनानन्तरं क्वचित्पठ्यते—"अन्तरङ्गत्वात् 'इको यणचि' इति सिद्धे समानाश्रये 'वार्णादाङ्गं बलीयः' इति ज्ञापनार्थं वचनम्" इति, तदयुक्तम्; 'इयङादेशापवादोऽयम्' इति वक्ष्यति, तत्कथमियङ्विषये यण्प्रवर्त्तते ! *इयङादेशापवादोऽयमिति* । इयङादेशस्यैवापवाद इत्यर्थः । कुतः इत्याह ? *मध्येऽप-*

न्यासः

अथ किमर्थं पृथग् योगः क्रियते ? न 'अचि श्नुधातुस्त्रीभ्रुवाम्' इत्येक एव योगः क्रियेतेति ? अत आह—पृथग्योगकरणमित्यादि । 'वाऽम्शसोः' इत्यत्र स्त्रीशब्दस्यैव विकल्पो यथा स्यात्, धातुभ्रुवोर्मा भूदित्येवमर्थम् पृथग्योगकरणम् ।

वाऽम्शसोः ॥ इणो यण् ॥ अत्र पक्षद्वयं सम्भाव्यते—इण इति प्रत्याहारग्रहणं स्याद्, धातुग्रहणं वा ? तत्र 'एरच्' इति, 'ओरावश्यके' इति, 'उरत्' इत्येवमादिभ्यो निर्देशेभ्य एव नेदं प्रत्याहारग्रहणम् । अतः पारिशेष्याद् धातुग्रहणमेवेदं विज्ञायते । णकारोच्चारणमिगिङोर्निवृत्त्यर्थम् । ये तु 'इणवदिकः' इति सामान्येनातिदेशमिच्छन्ति, तेषामिङ एव निवृत्त्यर्थम् । इकस्त्वधियन्तीति भवितव्यमेव यणा । अथ 'नेणः' इत्येव कस्मान्नोक्तम्, इयङादेशेऽचि प्रतिषिद्धे सति 'इको यणचि' इति यण् भविष्यति ? सत्यमेतत्; उत्तरार्थन्तु यण्ग्रहणम् । यन्तीत्याद्युदाहरणेष्वदादित्वाच्छपो लुक् । आयन्निति । लङ्, झोऽन्तादेशे संयोगान्तलोपः, असिद्धत्वादजादित्वादाट् । अथेह कस्मान्न भवति—अयनम्, आयक इति ? अत आह—इयङादेशापवादोऽयमिति । ननु यथेयङि प्राप्तेऽयमारभ्यते, तथा गुणवृद्ध्योरपि, तत् कुत एतल्लभ्यते—अयमियङोऽपवादः, न गुणवृद्ध्योः ? इत्याह—मध्येऽपवादा इत्यादि । इतिकरणो हेतौ । यस्मात् 'मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्', तस्मादियङ एव पूर्वस्य विधेरयमप-


CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



इति गुणवृद्धिभ्यां परत्वादयं बाध्यते । अयनम् । आयकः ॥

## एरनेकाचोऽसंयोगपूर्वस्य ॥ ८२ ॥

धातोरिति वर्तते, तेन संयोगो विशेष्यते । धातोरवयवः संयोगः पूर्वो यस्मादिवर्णान्न भवति असावसंयोगपूर्वः, तदन्तस्याङ्गस्यानेकाचोऽचि परतो यणादेशो भवति । निन्यतुः, निन्युः । उन्न्यौ, उन्न्यः । ग्रामण्यौ । ग्रामण्यः ।

### पदमञ्जरी

वादा इति । एवं सति यदिष्टं सिद्धम्, तद्दर्शयति—*गुणवृद्धिभ्यामिति* । यदि तु नाप्राप्ते विध्यन्तरे आरम्भात्सर्वमेव विध्यन्तरं यण्बाधेत, गुणवृद्धिविषयेऽपि स्यात् । अथ 'इणो न' इत्येव कस्मान्नोक्तम्—इयङादेशे हि प्रतिषिद्धे 'इको यणचि' इत्येव यण्भविष्यति ? अहो सूक्ष्मदर्शी देवानांप्रियः, यदिदमपि न दृष्टम्—ईयिव, ईयिम, कर्मणि ईयिरे,अत्रेयङि प्रतिषिद्धे सवर्णदीर्घः स्यात् ! तस्माद्यणेव विधेयः॥

*एरनेकाचोऽसंयोगपूर्वस्य*॥ *तेन संयोगो विशेष्यते इति*। यद्यप्यन्यपदार्थं प्रति गुणभूतः संयोगः, तथापि स एव विशेष्यते; 'धातोः' इत्यनुवृत्तस्य प्रयोजनान्तराभावात् । अस्तीदं प्रयोजनम्—इवर्णं विशेषयिष्यामीति ? नैतदस्ति; यद्यधातोरिवर्णोऽसंयोगपूर्वः, भवितव्यमेव तस्य यणा 'इको यणचि' इति, तद्यथा-कुमार्यौ, कुमार्य इति । ननु ग्रामणीवदधातोः पूर्वसवर्णं बाधित्वा यण् मा भूदिति धातुनैवेवर्णो विशेषणीयः ? नेत्याह; इयङ्बाधनार्थो यण् । न च धातोरियङः प्रसङ्गोऽस्ति, तत्कथमधातुनिवृत्त्यर्था धात्वनुवृत्तिरुपपद्यते, तस्मात्सुष्ठूक्तम्—गुणभूत एव संयोगो विशेष्यत इति ।

### न्यासः

वादः, न तु परयोर्गुणवृद्ध्योः, यतश्चैतदेवं तेन गुणवृद्धिभ्यां तु परत्वाद् बाध्यते । अस्यावकाशः—यन्ति, यन्त्विति, गुणवृद्ध्योः—चयनम्, चायक इति; अयनम्, आयक इत्यत्रोभयं प्राप्नोति । परत्वाद् यणं बाधित्वा गुणवृद्धी भवतः ॥

एरनेकाचोऽसंयोगपूर्वस्य ॥ तेन संयोगो विशेष्यत इति । ननु चान्यपदार्थे गुणीभूतत्वादुपसर्जनमत्र संयोगः । न चोपसर्जनं विशेषणेन सम्बन्धमनुभवति । तथा हि शोभनो राजपुरुष इत्युक्ते पुरुषस्येव प्रधानस्य शोभनत्वेन योगो गम्यते, नोपसर्जनस्य राज्ञः ! नैतदस्ति; धातोरित्यनुवृत्तिसामर्थ्यादुपसर्जनमपि संयोगविशेषणेन सम्बन्धमनुभविष्यति, अन्यथा धात्वनुवृत्तिरपार्थिका स्यात् । न त्विवर्णविशेषणार्थं धातुग्रहणमिहानुवृत्तं स्यात् ! नैतदस्ति; यदधातोरिवर्णान्तं तस्य हि भवितव्यमेव यणादेशेन 'इको यणचि' इत्यनेन । निन्यतुः, निन्युरिति । नयतेर्लिट् । इयङादेशे प्राप्ते यणादेशः । उन्न्यौ, उन्न्य इति । उन्नयतीति 'सत्सूद्विष' इत्यादिना क्विप् । एवं ग्रामण्यौ, ग्रामण्य इत्यत्रापि । 'अग्रग्रामाभ्याञ्च' इति णत्वम् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



एरिति किम् ? असंयोगपूर्वग्रहणमिवर्णविशेषणं यथा स्याद्, अङ्गविशेषणं मा भूदिति । लुलुवतुः, लुलुवुः—इत्येतत्तु 'ओः सुपि' इति नियमादपि सिध्यति ।

अनेकाच इति किम् ? नियौ, नियः । असंयोगपूर्वस्येति किम् ? यवक्रियौ । यवक्रियः । धातुना संयोगविशेषणं किम् ? इहापि न स्याद्—उन्न्यौ, उन्न्य इति ।

**पदमञ्जरी**

*अङ्गविशेषणं मा भूदिति* । अन्यथाधिकारेण सन्निहितस्य तस्यैव विशेषणं स्यादसंयोगपूर्वग्रहणम्, ततश्च यवक्रियौ, यवक्रियः—इत्यत्रापि प्रसज्येत, न ह्यत्राङ्गस्य संयोगः पूर्वोऽवयव इति । ननु च य्वोरिति प्रकृतम्, तत्र एरित्यनुच्यमाने ओरपि यण् स्यात्—लुलुवतुरित्यादौ, ततश्च तन्निवृत्त्यर्थमपि स्यात् ? इत्यत आह—*लुलुवतुर्लुलुवुरित्येतत्त्विति* । इह एरित्यनुच्यमानेनैवौ रपिसिद्धत्वाद् 'ओः सुपि' इत्येतन्नियमार्थं भवति—ओः सुप्येवेति । विपरीतस्तु नियमो न भवति—ओरेव सुपीति; 'न भूसुधियोः' इति यणप्रतिषेधात् । ततश्चास्मादेव नियमाल्लुलुवुरित्यादौ सिद्धत्वादेरित्येतदोर्निवृत्त्यर्थं नोपपद्यते इति पूर्वोक्तमेव प्रयोजनम् । यदि त्वसंयोगपूर्वयोरिति द्विवचननिर्देशेन य्वोरेवैतद्विशेषणमुच्येत, तह्योंरिति शक्यमकर्तुम् । *इहापि न स्यादिति* । यदि धातुना संयोगो न विशेष्येतेति भावः । क्वचिद् *इहापि यथा स्यादिति* पाठः, तत्र प्रकृतत्वाद्यणादेश इत्यर्थः ।

**न्यासः**

**असंयोगपूर्वग्रहणमित्यादि** । यद्येरिति नोच्येत, ततोऽसंयोगपूर्वमङ्गस्य विशेषणं स्यात्, एवञ्च यवक्रियौ, यवक्रिय इत्यत्रापि स्यात् । भवति ह्येतदसंयोगपूर्वमङ्गम्, तस्माद् 'एः' इत्युच्यते । असंयोगपूर्वग्रहणमिकारस्य विशेषणं यथा स्यादङ्गस्य मा भूदित्येवमर्थम् । ननु च य्वोरिति प्रकृतम्, तत्र यद्येरिति नोच्येत, तदोवर्णान्तस्यापि स्यात्; ततश्च लुलुवतुः, लुलुवुरिति न सिध्येत् । तस्मादुवर्णान्तस्यापि मा भूदित्येवमर्थमेरिति स्यादित्यत आह—लुलुवतुर्लुलुवुरित्यादि । इहैरोरित्युच्यमाने, अनेनैवोवर्णस्यापि सिद्धे सति 'ओः सुपि' इति नियमार्थं स्यात्—उवर्णान्तस्य यदि भवति तदा सुप्येव, नान्यत्रेति । ततश्चास्मादेव नियमाल्लुलुवतुर्लुलुवुरिति सिध्यतीति एरित्येतदुवर्णान्तनिवृत्त्यर्थं नोपपद्यते । तस्मात् पूर्वोक्तमेवास्य प्रयोजनं युक्तम् । यवक्रियौ, यवक्रिय इति । यवान् क्रीणातीति 'अन्येभ्योऽपि दृश्यते' इति क्विप् । अत्रेकारस्य धात्ववयवसंयोगपूर्वत्वान्न भवति । इहापि न स्यादिति । यदि धातुना संयोगो न विशिष्येतेति शेषः । क्वचिदिहापि यथा स्यादिति पाठः । तत्र प्रकृतत्वाद् यणादेश इति विज्ञायते । यदि

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


गतिकारकाभ्यामन्यपूर्वस्य नेष्यते । परमनियौ । परमनिय इति ॥

**ओः सुपि ॥ ८३ ॥**

धात्ववयवः संयोगः पूर्वो यस्मादुवर्णान्न भवति तदन्तस्याङ्गस्यानेकाचोऽजादौ सुपि परतो यणादेशो भवति । खलप्वौ, खलप्वः । शतस्वौ, शतस्वः । सक्तूल्वौ, सक्तूल्वः ।

सुपीति किम् ? लुलुवतुः, लुलुवुः ।

'अनेकाचः' इत्येव—लुवौ, लुवः ।

'असंयोगपूर्वस्य' इत्येव—कटप्रुवौ, कटप्रुवः ।

**पदमञ्जरी**

*गतिकारकाभ्यामित्यादि* । इष्टिरेवैषा । *परमनियाविति* । भावे कर्त्तरि वा क्विप् ॥

*ओः सुपि* ॥ *सक्तूल्वाविति* । क्रियाविशेषणत्वात् सक्तूदित्यस्य कारकत्वम् ।

*कटप्रुवाविति* । 'क्विब्वचि' इत्यादिना क्विप्, दीर्घश्च ॥

**न्यासः**

धातुना संयोगो न विशिष्येत, तदा धात्ववयवोऽधात्ववयवो वा संयोगः पूर्वो यस्माद् भवति तदन्तस्य न भवतीति विज्ञायते । ततश्चोन्न्यौ, उन्न्य इत्यत्रापि न स्यात्; संयोगपूर्वत्वादिवर्णस्य । धातुना संयोगे विशेषिते तु भवति । न ह्यत्रेवर्णो धात्ववयवसंयोगपूर्वः । तस्मादिहापि यथा स्यादिति धातुना संयोगो विशिष्यते ।

गतिकारकाभ्यामित्यादि । अथ कथमिदं पुनरिष्यमाणमपि न भवति ? पूर्वग्रहणात् । इह पूर्वग्रहणं न कर्त्तव्यम्, 'एरनेकाचोऽसंयोगात्' इत्येवोच्येत । तत्र, धात्ववयवसंयोगाद् य इवर्णः परो न भवति तदन्तस्याङ्गस्य यण्भवति—इत्येवं विज्ञायमाने सिध्यत्येवेष्टमिति किं पूर्वग्रहणेन ? तत् क्रियते पूर्वाचार्यैः—यस्य विहितोऽयं यण् तस्यैव कर्त्तव्यो नान्यस्येत्यस्यार्थस्य सूचनार्थम् । पूर्वाचार्याश्च क्विबन्तस्य गतिकारकपूर्वस्यैव कृतवन्तः, नान्यस्येति । तस्मादिहापि गतिकारकाभ्यामन्यपूर्वस्य न क्रियते । अथ वा—'वाम्शसोः' इत्यतो मण्डूकप्लुतिन्यायेन 'वा' इत्यनुवर्त्तते, सा च व्यवस्थितविभाषा विज्ञायते । तेन गतिकारकाभ्यामन्यपूर्वस्य न भविष्यतीति । अस्मिंश्च व्याख्याने पूर्वग्रहणं विस्पष्टार्थं वेदितव्यम् । परमनियाविति । 'सन्महत्' इत्यादिना समासः । अत्र परमशब्दो न गतिः, न च कारकमिति तत् पूर्वस्य न भवति ॥

ओः सुपि ॥ खलप्वाविति । खलं पुनातीति 'अन्येभ्योऽपि दृश्यते' इति क्विप् । शतस्वाविति अत्रापि शतं सूत इति 'सत्सूद्विष' इत्यादिना क्विप् । सक्तूल्वाविति । 'तोर्लि' इति परसवर्णः । कटप्रुवाविति । 'प्रूङ् गतौ', 'क्विब् वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणञ्च' इति क्विप् , दीर्घत्वञ्च ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



'गतिकारकाभ्यामन्यपूर्वस्य नेष्यते' इत्येव–परमलुवौ, परमलुवः ॥

**वर्षाभ्वश्च ॥ ८४ ॥**

वर्षाभू–इत्येतस्याजादौ सुपि परतो यणादेशो भवति । वर्षाभ्वौ, वर्षाभ्वः ।

❀ पुनर्भ्वश्चेति वक्तव्यम् ❀ । पुनर्भ्वौ, पुनर्भ्वः ॥

कारापूर्वस्यापीष्यते––काराभ्वौ, काराभ्वः ॥

**न भूसुधियोः ॥ ८५ ॥**

भू, सुधी–इत्येतयोर्यणादेशो न भवति । प्रतिभुवौ, प्रतिभुवः । सुधियौ, सुधियः ॥

**पदमञ्जरी**

वर्षाभ्वश्च ॥ 'न भूसुधियोः' इति प्रतिषेधे प्राप्ते वचनम् ।

पुनर्भ्वश्चेत्यादि । एवं च 'पुनर्वर्षाकारेषु भुवः' इति सूत्रन्यासः ॥

न भूसुधियोः ॥ भूशब्देन तदन्तस्य ग्रहणम्; केवलस्य यण्प्राप्त्यभावात् ।

**न्यासः**

'ओः' इति स्पष्टार्थम् । अनुकारान्तनिवृत्त्यर्थं तु न युज्यते; य्वोरित्यनुवृत्तेः । इकारस्य च पूर्वेणैव सिद्धो यण्–उन्न्यौ, ग्रामण्याविति ॥

वर्षाभ्वश्च ॥ 'न भूसुधियोः' इति प्रतिषेधे प्राप्ते तदपवादोऽयमारभ्यते । वर्षाभ्वाविति । वर्षाशब्दाद्भवतेः क्विप् ।

पुनर्भ्वश्चेति वक्तव्यमिति । न पुनर्भ्वित्येतस्याचि सुपि यणादेशो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्–चकारोऽत्र क्रियते, स चानुक्तसमुच्चयार्थः । तेन पुनर्भ्वित्यस्यापि भविष्यतीति ।

कारापूर्वस्यापीष्यत इति । सोऽपि तत एव चकाराद् भवतीति वेदितव्यम् ॥

न भूसुधियोः ॥ भूग्रहणेन तदन्तस्य ग्रहणम्, न केवलस्य । केवलस्य ह्येकाचो यणादेशप्राप्त्यसम्भवादनर्थकं वचनं स्यात् । उवङादेशप्रतिषेधार्थत्वान्नानर्थकमिति चेत् ? न; एवं हि 'वर्षाभ्वश्च' इति यणादेशविधानमनर्थकं स्यात्, यदि ह्ययं यणादेशस्य प्रतिषेधः स्यात्—एवं हि तत् सार्थकं भवति, नान्यथा ? नैतदस्ति, उवङ्प्रतिषेधार्थेऽपि ह्यस्मिंस्तन्नियमार्थं स्यात् । एवं तर्हि यणो यत्रानुवृत्तिस्तस्यैवायं प्रतिषेधो युज्यते । स चानेकाचो विहित इति केवलस्य ग्रहणं न प्राप्नोतीति युक्तमुक्तम्–भूग्रहणेन तदन्तस्य ग्रहणमिति ।

प्रतिभुवौ, प्रतिभुव इति । 'भुवः संज्ञान्तरयोः' इति क्विप् । सुधियाविति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## छन्दस्युभयथा ॥ ८६ ॥

छन्दसि विषये भू, सुधी—इत्येतयोरुभयथा दृश्यते । वनेषु चित्रं विभ्वं विशे, विभुवं विशे । सुध्यो हव्यमग्ने, सुधियो हव्यमग्ने ॥

## हुश्नुवोः सार्वधातुके ॥ ८७ ॥

'हु' इत्येतस्याङ्गस्य श्नुप्रत्ययान्तस्यानेकाचोऽसंयोगपूर्वस्याजादौ सार्वधातुके परतो यणादेशो भवति । जुह्वति, जुह्वतु । जुह्वत् । सुन्वन्ति, सुन्वन्तु, असुन्वन् ।

हुश्नुवोरिति किम् ? योयुवति । रोरुवति ।

### पदमञ्जरी

न चोवङः प्रतिषेधः; विच्छिन्नत्वात्, 'वर्षाभ्वश्च' इत्यारम्भाच्च । *सुधियाविति* । ध्यायतेः क्विप्, दृशिग्रहणात्सम्प्रसारणम् ॥

*हुश्नुवोः सार्वधातुके* ॥ अनेकाचः, असंयोगपूर्वस्य, ओरिति चानुवर्त्तते । यद्यपि हुश्नुवोरुवर्णान्तत्वमव्यभिचारि, तथाप्यसंयोगपूर्वग्रहणमोर्विशेषणं यथा स्यात्, हुश्नुवोर्मा भूदित्येवमर्थमनुवर्त्त्यमोरित्येतत् । हुश्नुवोर्विशेषणे हि तक्ष्णुवन्तीत्यादावेव प्रतिषेधादाप्नुवन्तीत्यादौ न स्यात्, तत्र श्नुप्रत्ययान्तस्यासंयोगपूर्वस्येति व्यधिकरणे षष्ठ्यौ । श्नुप्रत्ययान्तस्याङ्गस्यावयवोऽसंयोगपूर्वो य उकारस्तस्येत्यर्थः । 'अनेकाचः' इति त्वङ्गेन समानाधिकरणमेव, सार्वधातुकग्रहणं जुहोत्यर्थम्, न श्न्वर्थम्; अव्यभिचारात् । *जुह्वतीति* । 'अदभ्यस्तात्' । *जुह्वदिति* । 'नाभ्यस्ताच्छतुः' इति नुम्प्रतिषेधः ।

*योयुवति, रोरुवतीति* । 'यु', 'रु'—इत्येताभ्यां यङ्लुगन्ताभ्यां लटि पूर्ववत् झेरद्भावः ।

### न्यासः

शोभनं ध्यायतीति 'अन्येभ्योऽपि दृश्यते' इति क्विप्, 'ध्यायतेः सम्प्रसारणं च' इत्युपसंख्यानात् सम्प्रसारणम् ॥

**छन्दस्युभयथा** ॥ **हुश्नुवोः सार्वधातुके** ॥ यणिति, अनेकाचोऽसंयोगपूर्वस्य, ओरिति चानुवर्त्तते । ननु च हुरित्येतत् श्नुप्रत्ययान्तञ्चाङ्गमुकारान्ततां न व्यभिचरत्येव, तत् किमर्थमोरितीहानुवर्त्तते ? असंयोगपूर्वग्रहणमुकारस्य विशेषणं यथा स्यादित्येवमर्थम्; अन्यथा हुश्नुवोरेवैतद् विशेषणं विज्ञायेत । ततश्च तक्ष्णुवन्तीत्यादावे प्रतिषेधो विज्ञायेत, राध्नुवन्तीत्यादौ तु यणादेशः स्यादेव जुहोतेरपि—जुह्वतीत्यत्रव संयोगपूर्वत्वाद् यणादेशो न स्यात् । ननु च धातुग्रहणमनुवर्त्तते, तत्रैवं विज्ञास्यते—धात्ववयवः संयोगः पूर्वो यस्मान्न भवतीति ? एवमपि विज्ञायमाने ह्यत्र न प्राप्नोत्येव । भवति ह्यत्रापि जुहोतेर्धात्ववयवः संयोगः पूर्वः 'क्विबन्ता धातुत्वं न जहति' इति

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



इदमेव हुश्नुग्रहणं ज्ञापकम्—भाषायामपि यङ्लुगस्तीति । छन्दसि 'छन्दस्युभयथा' इत्यार्धधातुकत्वादेव यणादेशस्याप्रसङ्गः । न च यङ्-लुगन्तादन्यत् प्रत्युदाहरणम् उवर्णान्तमनेकाजसंयोगपूर्वं सार्वधातुके विद्यते ।

**पदमञ्जरी**

*इदमेवेत्यादि* । एतच्च 'यङोऽचि च' इत्यत्र छन्दोऽनुवृत्तिमाश्रित्योक्तम् । जयादित्यस्तु तत्र छन्दोऽनुवृत्तिं नाशिश्रियत् । कथं पुनरेतज्ज्ञापकम्? इत्याह—*छन्दसि हीति* । छन्दसि यङ्लुगन्तनिवृत्त्यर्थं हुश्नुग्रहणं न भवति; ततः परस्य तिङ आर्धधातुकत्वात् । यणादेशस्याप्रसङ्गादित्यर्थः । तथा चात्र वार्त्तिकम्—'यङ्लुगर्थमिति चेदार्धधातुकत्वात्सिद्धम्' इति । स्यादेतत्–यङ्लुगन्तादन्य-व्यावर्त्यं भविष्यति, अतो न ज्ञापकं हुश्नुग्रहणमिति ? अत आह—*न चेति* । *असंयोगपूर्वमिति* । असंयोगपूर्वोवर्णान्तमित्यर्थः । अत्र ओरित्यनुवृत्तेः-मिमते

**न्यासः**

कृत्वा । अन्यथाप्यवयववचनं पूर्वशब्दमाश्रित्यैवं विज्ञायते—धात्ववयवः संयोगो यस्य पूर्वो न भवतीति ? एवमपि राध्नुवन्तीत्यत्र यणादेशः स्यात्, न ह्यत्र श्नुप्रत्ययस्य धात्ववयवः संयोगपूर्वः । तस्मादोरित्येतदनुवर्त्तनीयम्, तद्विशेषणे हुश्नुवौ । तत्रासंयोग-पूर्वग्रहणं श्नुप्रत्ययस्यावयवस्योकारस्य विशेषणं वेदितव्यम्, न जुहोत्यवयवस्य; तस्याव्यभिचारात् । श्नुप्रत्ययान्तस्यासंयोगपूर्वस्येति । व्यधिकरणे षष्ठ्यौ । श्नुप्रत्य-यान्तस्याङ्गस्य योऽवयवोऽसंयोगपूर्व उकारः, तस्येत्यर्थः । 'अनेकाचः' इत्येतद् जुहोतेः श्नुप्रत्ययान्तस्य समानाधिकरणं विशेषणं वेदितव्यम् । 'सार्वधातुके' इति जुहोत्यर्थम्, न श्नुप्रत्ययान्तार्थम्; अव्यभिचारात् । जुह्वतीति । 'अदभ्यस्तात्' इत्यदादेशः । योयु-वति, रोरुवतीति । 'यु' 'रु'–इत्येताभ्यां यङ्, तस्य 'यङोऽचि च' इति लुक्, 'गुणो यङ्लुकोः' इत्यभ्यासस्य गुणः, पूर्ववज्झेरदादेशः ।

इदमेवेत्यादि । कथं पुनरिदं ज्ञापकम्? इत्याह–छन्दसीत्यादि । यदि च्छन्दस्येव यङ्लुक् स्यात्, तदा 'छन्दस्युभयथा' इत्यार्धधातुकत्वाद् एव योयुवति, रोरुवतीत्यत्र न भविष्यतीत्यनर्थकमेव हुश्नुग्रहणं स्यात् । यदा तु भाषायामपि यङ्लुगस्ति, तदार्धधातुकत्वाभावादसति हुश्नुग्रहणे योयुवतीत्यादौ प्राप्नोतीति तन्निवृत्त्यर्थमुपपद्यते हुश्नुग्रहणम् । तस्मादेतदेव ज्ञापयति—भाषायामपि यङ्लुगस्तीति । तेन बेभिदीति, चेच्छिदीतीत्यादि भाषायामप्युपपन्नं भवति । स्यादेतत्—यङ्लुगन्तादन्यद् यदु-वर्णान्तमनेकाच् संयोगपूर्वं तन्निवृत्त्यर्थमेतद् भविष्यतीति ? नेदं ज्ञापकमित्यत आह–न चेत्यादि । ननु चेदं विद्यते–अयुवन्, अरुवन्निति ? नैतदस्ति; यद्यप्येतदसं-योगपूर्वम्, अनेकाज्न भवति; अटोऽसिद्धत्वात् ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सार्वधातुक इति किम् ? जुहुवतुः, जुहुवुः ।

'असंयोगपूर्वस्य' इत्येव—आप्नुवन्ति । राध्नुवन्ति ॥

**भुवो वुग्लुङ्लिटोः ॥ ८८ ॥**

भुवो वुगागमो भवति लुङि लिटि चाजादौ परतः । अभूवन् । अभूवम् । लिट्—बभूव, बभूवतुः, बभूवुः ॥

**पदमञ्जरी**

इत्यादौ न भविष्यति, 'अनेकाचः' इत्यनुवृत्तेर्युवन्तीत्यादौ । अयुवन्, अरुवन्नित्यत्राप्यटोऽसिद्धत्वादेकाच्त्वमेव । असंयोगपूर्वस्येत्यनुवृत्तेः प्रोर्णुवन्तीत्यत्र न भविष्यति । तन्वन्तीत्यादौ च भाव्येतव्यमेव यणा । तस्माद्यङ्लुगन्तादन्यद् व्यावर्त्यं न सम्भवति । आह च—हुश्नुग्रहणमनर्थकमन्यस्याभावादिति ॥

*भुवो वुग्लुङ्लिटोः* ॥ *अभूवन्निति* । 'गातिस्था' इत्यादिना सिचो लुक् । *अभूवमिति* । मिपोऽम्भावः । लुङ्लिटोरिति किम् ? भवति, भविष्यति—शप्स्ययोर्न भवति । यदि क्ङितीत्यनुवर्तिष्यते, अभूवमित्यत्रापि तर्हि न स्यात् ? एवं तर्ह्योरित्यनुवर्तिष्यते, गुणे कृते अनुवर्णान्तत्वान्न भविष्यति, अभूवमित्यत्र 'भूसुवोस्तिङि' इति गुणप्रतिषेधादुवर्णान्तत्वम् । नात्र शक्यमोरित्यनुवर्तयितुम् । एतच्च 'इन्धिभवतिभ्यां च' इत्यत्र विस्तरेणोक्तम् ॥

**न्यासः**

भुवो वुग् लुङ्लिटोः ॥ अभूवन्निति । 'गातिस्था' इत्यादिना सिचो लुक् । झेरन्तादेशे कृते संयोगान्तलोपः । अभूवमिति । 'तस्थस्थ' इत्यादिना मिपोऽम्भावः । बभूवेत्यादि । 'भवतेरः' इत्यभ्यासस्यात्त्वम् । 'इन्धिभवतिभ्याञ्च' इति लिटः कित्त्वम्, तेन गुणवृद्ध्यौ न भवतः । किमर्थं पुनर्भवतेः परस्य लिटः कित्त्वमारभ्यते, यावता 'एकदेशविकृतमनन्यवद्भवति' इति कृतयोरपि गुणवृद्ध्योर्वुक् प्राप्नोत्यकृतयोरपि, वुकि कृतेऽनिगन्तत्वादलघूपधत्वादनजन्तत्वाच्च नास्ति गुणवृद्ध्योः प्राप्तिः, ततः कृताकृतप्रसङ्गित्वेन नित्यत्वाद् वुकि कृते गुणवृद्ध्योः प्राप्तिरेव नास्तीत्यनर्थकं कित्त्वम् ? नैतदस्ति; वुगप्यनित्य एव, न ह्यसौ कृतयोर्गुणवृद्ध्योः प्राप्नोति, ओरित्यनुवृत्तेरुवर्णान्तस्य वुका भवितव्यमिति कृत्वा । अत्रोभयोरनित्ययोः परत्वाद् गुणवृद्धी स्याताम् । तस्मात् कित्त्वमारब्धव्यम् । किमर्थं पुनरोरित्यनुवर्त्तते ? बोभाव, बोभवेति गुणवृद्ध्योः कृतयोर्वुङ् मा भूदित्येवमर्थम् । ननु च कित्त्वे सत्यत्रापि गुणवृद्धिभ्यां न भवितव्यम् ? नैतदस्ति; न हि यङ्लुगन्ताद् भवतेः परस्य लिटः कित्त्वं भवति, 'इन्धिभवतिभ्यां च' इत्यत्र भवतीति श्तिपा निर्देशात् ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## ऊदुपधाया गोहः ॥ ८९ ॥

गोहोऽङ्गस्य उपधाया ऊकारादेशो भवति अजादौ प्रत्यये परतः। निगूहति । निगूहकः । साधु निगूही । निगूहंनिगूहम् । निगूहन्ति । निगूहो वर्त्तते ।

उपधाया इति किम् ? अलोऽन्त्यस्य मा भूत् ।

'गोहः' इति विकृतग्रहणं विषयनियमार्थम्[1] यत्रास्यैतद्रूपं तत्रैव यथा स्यात्, इह मा भूत्—निजुगुहतुः, निजुगुहुः ।

### पदमञ्जरी

ऊदुपधाया गोहः ॥ उदाहरणेषु णिच्, ण्वुल्, णिनिः, 'आभीक्ष्ण्ये णमुल्', घञ्—इत्येते प्रत्ययाः । सर्वत्र गुणे कृते ओकारस्य ऊकारः ।

*उपधाया इति किमिति* । 'ओः' इत्यनुवृत्तेरेवोकारस्य भविष्यति, स चोपधैवेति प्रश्नः । ननु च ओरित्युच्यते, न चास्योपधोकारः सम्भवति ? ओरित्यनुवृत्तिसामर्थ्याद् 'गोहः' इति विषयोपलक्षणं भविष्यति, न तु कृतगुणप्रतिपत्त्यर्थम् । *अन्त्यस्य मा भूदिति* । नोपलक्षणत्वे प्रमाणमस्ति, ततश्चासम्भवादोरित्यस्य निवृत्तावन्त्यस्य स्यात् । 'गमहनजनखनघसाम्' इति लोप उपधाया यथा स्यादित्युत्तरार्थमप्यवश्यमुपधाग्रहणं कर्त्तव्यमिति भावः ।

*विकृतग्रहणं विषयनियमार्थमिति* । 'गुह' इत्युच्यमाने धातुनिर्देशोऽयं भवति, ततश्च क्ङिद्विषयेऽपि तत्स्वरूपप्रयुक्तमूत्वं स्यात् । तस्मादूत्वस्य विशिष्टो विषयो निर्दिष्टो यथा स्यादिति विकृतस्य कृतगुणस्य ग्रहणं कृतम् ।

### न्यासः

ऊदुपधाया गोहः ॥ निगूहयतीति । 'गुहू संवरणे', हेतुमण्णिच् । निगूहक इति । ण्वुल् । साधु निगूहीति । 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनिः । निगूहंनिगूहमिति । 'आभीक्ष्ण्ये णमुल् च' इति णमुल्, 'आभीक्ष्ण्ये द्वे भवतः' इति द्विर्वचनम् । निगूह इति । भावे घञ् । अलोऽन्त्यस्य मा भूदिति । उत्तरत्र इत्यभिप्रायः । इह त्वोरित्यनुवर्त्य विनाप्युपधाग्रहणेन शक्यत एवायमर्थः प्रतिपादयितुमित्येतदेव मनसि कृत्वा परं पृष्टवान्—उपधाग्रहणं किमिति ? उत्तरार्थञ्चोपधाग्रहणं क्रियमाणमत्राप्यलोऽन्त्यस्य विधिं निवर्त्तयति । तेन प्रयोजनाभावादोरित्येतन्नानुवर्त्तते ।

अथ किमर्थम् 'गोहः' इति विकृतनिर्देशः क्रियते, न 'गुहः' इत्येवोच्येत, लघु ह्येवं सूत्रं भवति ? इत्याह—गोह इति विकृतग्रहणमित्यादि । ऊत्वस्य विशिष्टविषयो यथा स्यादित्येवमर्थम् । 'गोहः' इति विकृतस्य कृतोकारस्य ग्रहणमित्यर्थः । एतदेव व्यक्तीकर्तुमाह—यत्रेत्यादि । अस्य कश्चिदमुमर्थमाचष्टे । एतदुक्तं भवति—'गुणे कृते

---

१. 'विषयार्थम्' इति क्वचित् पठ्यते ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अयादेशप्रतिषेधार्थं च केचिदिच्छन्ति। निगूह्य गत इत्यूत्वस्यासिद्धत्वाद् 'ल्यपि लघुपूर्वात्' इत्ययादेशः स्यात्। व्याश्रयत्वादेवासिद्धत्वमत्र नास्ति—णावूत्वम्, ण्यन्तस्य च ल्यप्ययादेश इति।

अचीत्येव—निगोढा। निगोढुम्॥

पदमञ्जरी

विषयार्थतां स्पष्टयति—*यत्रेति*। गुणविषये यथा स्यादित्यर्थः। *अयादेशप्रतिषेधार्थं च केचिदिच्छन्तीत्यादि*। पूर्वं विषयावधारणे तात्पर्यमित्युक्तम्, तच्चाक्ङितीत्युच्यमाने सिद्ध्यति। लाघवार्थं तु गोह इत्युक्तम्, तच्च कालावधारणार्थमप्यर्थाद्भवति, गुणोत्तरकालमूत्वमिति। इदानीं तूभयत्रापि तात्पर्यमित्युक्तं भवति। गुणविषये भवति—तत्रापि कृते गुणे इति। यदि हि प्रागेव गुणादूत्वं स्यात्, तदा 'ल्यपि लघुपूर्वात्' इत्ययादेशे तस्यासिद्धत्वाल्लघुपूर्वो ह्कार इत्ययादेशः स्यात्। यदा तु गुणे कृते तस्य स्थाने ऊत्वम्, तदा तस्यासिद्धत्वेऽप्योकारस्य गुरुत्वादयादेशाभावः सिद्ध्यतीति। तदेतद् दूषयति—*व्याश्रयत्वादिति*। कथं व्याश्रयत्वमित्याह—*णावूत्वमिति*।

न्यासः

ऊत्वेन भवितव्यम्' इति लक्ष्यते; एतच्चायुक्तम्, एवं हि व्याख्यायमाने 'अयादेशप्रतिषेधार्थं निगूह्य गत इति केचिदिच्छन्ति' इत्युक्त्वा यद्वक्ष्यति—"ऊत्वस्यासिद्धत्वात् 'ल्यपि लघुपूर्वात्' इति णेरयादेशः स्यात्" इति, तन्नोपपद्यते। यदि गुणं कृत्वौकारस्योत्त्वं विधीयते, ततश्च सत्यूकारस्यासिद्धत्वेनैव लघुपूर्वत्वमुपपद्यते, ओकारपूर्वत्वात्; तत् कुत ऊकारस्यासिद्धत्वेऽयादेशप्रसङ्गः ? तस्मादयमत्रार्थः—यस्मिन् विषये गुहेर्गोह इत्येतद्रूपं सम्भाव्यते तत्र यथा स्यात्। यत्र प्रत्यये गुणः सम्भवति तस्मिन् कृतेऽकृत एव गुणे यथा स्याद्, अन्यत्र मा भूदिति। तस्माद् विकृतनिर्देशस्य विशिष्टविषयोपलक्षणार्थत्वाद् गुणविषये सम्मुखीभूत एवाकृत एव गुण ऊत्वेन भवितव्यम्। एवञ्च सति 'ऊत्वस्यासिद्धत्वात्' इत्यादिकः प्रसङ्गग्रन्थो युज्यते, नान्यथा। ननु च गुणनिमित्ते प्रत्यय उत्पन्ने परत्वाद् गुणेनैव भवितव्यम्, तत् कथमकृत एव गुण ऊत्वं भवेत् ? कृताकृतप्रसङ्गित्वात्। तद्धि कृते गुणे प्राप्नोत्यकृतेऽपि, विकृतनिर्देशस्य विशिष्टविषयोपलक्षणार्थत्वात्। न तूत्वे कृते गुणः प्राप्नोति, अलघूपधत्वात्। तस्माद् गुणात् पूर्वमूत्वेन नित्यत्वाद् भवितव्यम्। अत एव दीर्घोच्चारणमर्थवद्भवति, नान्यथा। यदि गुणे कृते सत्ययमादेशः स्याद्, दीर्घोच्चारणमनर्थकं स्यात्। आन्तरतम्यादेव दीर्घस्य दीर्घो भविष्यति। ज्ञापितं हि 'दिव उत्' इति तपरकरणेन—'भाव्यमानोऽप्युकारः सवर्णान् गृह्णाति' इति। यदन्यत् प्राप्नोति तन्निवृत्त्यर्थं दीर्घोच्चारणमिति चेत् ? स्यादेतत्—अजुगूहदित्यत्र 'णौ चङ्युपधायाः' इति ह्रस्वो मा भूदित्येवमर्थं दीर्घोच्चारणमिति।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## दोषो णौ ॥ ९० ॥

दोष उपधाया ऊकार आदेशो भवति णौ परतः । दूषयति । दूषयतः । दूषयन्ति ।

विकृतग्रहणं प्रक्रमाभेदार्थम्[1]। पूर्वत्र हि 'गोहः' इत्युक्तम् ।

णाविति किम् ? दोषो वर्तते ॥

**पदमञ्जरी**

दोषो णौ ॥ किमर्थं दुषेर्विकृतस्य ग्रहणं क्रियते, न 'दुषः' इत्येवोच्येत ? विषयार्थमिति चेत् ? न; णाविति विषयस्य साक्षान्निर्देशात्। प्रदूष्य गत इत्यादावयादेशप्रतिषेधार्थमिति चेत् ? न; दत्तोत्तरत्वात्। उक्तोत्तरमेतत्—व्याश्रयत्वादसिद्धत्वं नास्तीति । तस्माद् 'दुषः' इत्येव वक्तव्यम्, अत आह—*विकृतग्रहणमिति* । क्रमः = प्रस्तावः, प्रकरणमित्यर्थः ॥

**न्यासः**

कुतः पुनरेष नियमोऽत्र ह्रस्वत्वेन न भवितव्यमिति ? न हीह कात्यायनस्य, भाष्यकारस्य वा वचनमस्ति, नापि शिष्टप्रयोगः, यत एष निश्चयः स्यात्। 'यथालक्षणमप्रयुक्तेषु' इति चोच्यते। तस्मादजूगुहदित्येवं भवितव्यम्। यदि गुणे कृतेऽयमादेशः क्रियेत, ततः किमनिष्टं स्यात् ? दीर्घोच्चारणमनर्थकं स्यात्। अत्रापि दीर्घोच्चारणं वैचित्र्यार्थं प्रकल्प्येत ? एवमपि प्रक्रियागौरवं स्यात्। तस्माद् दीर्घोच्चारणसामर्थ्यादकृत एव गुण ऊत्त्वेन भवितव्यम्।

निगूह्य गत इति। ण्यन्तात् क्त्वा, प्रादिसमासः। 'समासेऽनञ्पूर्वे' इत्यादिना क्त्वो ल्यप्। तत्र व्याश्रयत्वादित्यादि। एतेनायादेशप्रतिषेधार्थतां विकृतनिर्देशस्य प्रत्याचष्टे। कथं पुनर्व्याश्रयत्वम् ? इत्याह—णावूत्वमित्यादि।

निगोढेति। तृच्। 'होढः', 'झषस्तथोर्धोऽधः' इति धत्वम्, 'ष्टुना ष्टुः' इति ष्टुत्वम्, 'ढो ढे लोपः' ॥

दोषो णौ ॥ दूषयतीति। 'दुष वैकृत्ये'।

अथ किमर्थम् 'दोषः' इति विकृतस्य ग्रहणम्, न 'दुषः' इत्येवोच्येत, विषयावधारणार्थमिति चेत् ? न; णाविति साक्षाद् विषयस्य निर्देशादित्यत आह—विकृतग्रहणमित्यादि। पूर्वसूत्रे हि गोह इत्युक्तम्, अत्र यदि 'दुषः' इत्येवोच्येत, प्रक्रमस्यारम्भस्य भेदः स्यात्, अभेदश्चेष्यते। अतस्तदर्थं विकृतस्य ग्रहणम्। किमर्थं पुनः प्रक्रमस्याभेद इष्यते ? अत्यल्पमिदं पृच्छयते, वैचित्र्यस्यापि नाम प्रयोजनं प्रष्टव्यम्! वैचित्र्यस्य ह्ययं प्रकारः—प्रक्रमाभेद इति, किं तदर्थेन प्रश्नपरिश्रमेण !

---

१. 'क्रमाभेदार्थम्' इति पाठान्तरम्

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## वा चित्तविरागे ॥ ९१ ॥

चित्तविकारार्थे दोष उपधाया वा ऊकारादेशो भवति णौ परतः। चित्तं दूषयति, चित्तं दोषयति। प्रज्ञां दूषयति, प्रज्ञां दोषयति।

## मितां ह्रस्वः ॥ ९२ ॥

मितो धातवः 'घटादयो मितः' इत्येवमादयो ये प्रतिपादिताः, तेषामुपधाया ह्रस्वो भवति णौ परतः। घटयति। व्यथयति। जनयति। रजयति। शमयति। ज्ञपयति।

केचिदत्र 'वा' इत्यनुवर्त्तयन्ति, सा च व्यवस्थितविभाषा, तेन उत्क्रामयति, संक्रामयतीत्येवमादि सिद्धं भवति ॥

### पदमञ्जरी

*वा चित्तविरागे* ॥ चित्तविरागः=चित्तस्याप्रीतता। प्राप्तविभाषेयम्। णावित्येव—चित्तस्य दोषः ॥

*मितां ह्रस्वः* ॥ *रजयतीति*। 'रञ्जेर्णौ मृगरमण उपसङ्ख्यानम्' इत्युपधालोपः ॥

### न्यासः

वा चित्तविरागे ॥ पूर्वेण नित्ये प्राप्ते विकल्पोऽयमारभ्यते। चित्तविराग इति। चित्तस्याप्रीतता। चित्तं दोषयतीति। चित्तमप्रीतं विमुखं करोतीत्यर्थः।

चित्तविराग इति किम्? साधनं दूषयति—अत्र पूर्वेण नित्यं भवति। णावित्येव—चित्तस्य दोषः। भावे घञ् ॥

मितां ह्रस्वः ॥ एवमादिनेति। आदिशब्देन 'जनीजृष्क्नसुरञ्जोऽमन्ताश्च' इत्येवमादिग्रहणम्। घटयति, व्यथयति, जनयतीति। 'घट चेष्टायाम्', 'व्यथ भयचलनयोः', 'जनी प्रादुर्भावे'। ननु च जनेः 'जनिवध्योश्च' इति वृद्धिः प्रतिषिध्यते, तदयुक्तमिदमुदाहरणम्, मित्संज्ञाप्यपार्थिका? नैतदस्ति; चिण्कृतोर्हि स वृद्धिप्रतिषेधः, तत्र हि 'आतो युक् चिण्कृतोः' इत्यनुवर्त्तते। रजयतीति। 'रञ्जेर्णौ मृगरमण उपसंख्यानम्' इत्यनुनासिकलोपे कृते 'अत उपधायाः' इति वृद्धिः, तस्यानेन ह्रस्वः। शमयतीति। शमेरमन्तत्वान्मित्त्वम्। अस्यापि 'नोदात्तोपदेश' इत्यादिना वृद्धिप्रतिषेधश्चिण्कृतोरेव। ज्ञापयतीति। 'ज्ञा अवबोधने' इत्यस्य क्र्यादिपरिपठितस्य 'मारणतोषणनिशामनेषु ज्ञा, मिच्च' इति मित्संज्ञा, 'अर्त्तिह्री' इत्यादिना पुकि कृते ह्रस्वः।

केचिदत्रेत्यादि। 'क्रमु पादविक्षेपे' इत्यस्यामन्तत्वान्मित्संज्ञा, तस्य च ह्रस्वत्वे संक्रामयति, उत्क्रामयतीति न सिध्येत्। तस्मादेतत्सिद्धये 'वा चित्तविरागे' इत्यतो वाग्रहणमनुवर्त्तयन्ति। तस्मिंश्चानुवर्त्तमाने सर्वत्र विकल्पः प्रसज्येतेत्यतिप्रसङ्गपरिहारार्थं सा च व्यवस्थितविभाषेति व्याचक्षते। अथ 'मितामत्' इत्येवं कस्मान्नोक्तम्, लघु

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## चिण्णमुलोर्दीर्घोऽन्यतरस्याम् ॥ ९३ ॥

चिण्परे णमुल्परे च णौ परतो मितामङ्गानामुपधाया दीर्घो भवति अन्यतरस्याम् । अशमि, अशामि । अतमि, अतामि । शमंशमम्, शामंशामम् । तमन्तमम्, तामन्तामम् ।

दीर्घग्रहणं किम्, न ह्रस्वविकल्प एव विधीयते ? नैवं शक्यम्; शमयन्तं प्रयुंक्ते—इति द्वितीये णिचि ह्रस्वविकल्पो न स्यात् ।

**पदमञ्जरी**

*चिण्णमुलोर्दीर्घोऽन्यतरस्याम्* ॥ *न ह्रस्वविकल्प एव विधीयेतेति* । एवमपि ह्रस्वपक्षे अशमीति सिध्यति, पक्षान्तरे अशामीति यथाप्राप्तं दीर्घ एवावस्थास्यत इति भावः । *शमयन्तं प्रयुंक्ते इति* । यद्यपि चिण्विषये कर्म प्रदर्शनीयं भूतकालश्च, तथापि णिजुत्पत्तये हेतुव्यापारमात्रप्रदर्शनमत्र विवक्षितम्, न कर्त्ता, नापि वर्त्तमानः काल इति न दोषः ।

**न्यासः**

ह्येवं सूत्रं भवति ? अशक्यमेवं वक्तुम्, 'वेष्ट वेष्टने' इति घटादौ पठ्यते, तत्रैवमुच्यमाने तस्याप्यकारः प्रसज्येत । 'ह्रस्व' इत्युच्यमाने 'एच इग् ह्रस्वादेशे' इतीकारः सिद्धो भवति ॥

**चिण्णमुलोर्दीर्घोऽन्यतरस्याम्** ॥ 'णौ' इति वर्त्तते, चिण्णमुलौ च तद्विशेषणे । अशमि, अशामीति । शमेर्ण्यन्ताल्लुङ्, 'चिण् भावकर्मणोः' इति च्लेश्चिण्, 'चिणो लुक्' इति तशब्दस्य लुक्, 'णेरनिटि' इति णिलोपः । शमंशमम्, शामंशाममिति । पूर्ववण्णमुल्द्विर्वचने ।

**दीर्घग्रहणं किमिति** । एवं मन्यते—ह्रस्वस्यैवानन्तरस्य प्रकृतस्य विकल्पमात्रं विधेयम्, एवमप्यभीष्टं सिध्यत्येव । तथा हि—यस्मिन् पक्षे ह्रस्वो विधीयते, तस्मिन्नशमीत्यादि सिध्यति । यस्मिंस्तु ह्रस्वो न विधीयते, तत्र 'अत उपधायाः' इति दीर्घे वृद्धिसंज्ञके विहिते तेनैव रूपेणावस्थानाद् अशामीत्यादि सिध्यतीत्यभिप्रायः । इतरस्तु दीर्घग्रहणमन्तरेण यन्न सिध्यति, तद्दर्शयति—**शमयन्तं प्रयुङ्क्त इत्यादिना** । शमेर्ण्यन्तात् पुनः प्रयोजकविवक्षायां द्वितीयो णिच्, तत्र पूर्वस्य णेर्लोपः, लुङ्, चिण् । पक्षे दीर्घत्वम् । **अशमि, अशामि** । **शमंशमम्, शामंशाममिति** । द्वितीयणिजन्तात् णमुलि कृते पक्षे दीर्घत्वम् । **शंशमयतेरित्यादि** । अत्यर्थं शाम्यतीति यङ्, द्विर्वचनम्, 'नुगतोऽनुनासिकान्तस्य' इति नुक्—शंशम्येति स्थिते हेतुमण्णिच्, 'अतो लोपः' इत्यकारस्य लोपः, 'यस्य हलः' इति यकारस्य, शंशमीति स्थिते यदा ततः परश्चिण्भवति, तदा पक्षे दीर्घत्वे कृते अशंशम्यशंशामीति भवति । यदा तु णमुल् तदा शंशमंशंशमम्, शंशामंशंशाममिति । तत्र योऽसौ णौ निर्लुप्यते, यश्च यङोऽकारस्तयोर्दीर्घग्रहणे सति

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


णिलोपस्य स्थानिवद्भावाद् दीर्घविधौ त्वजादेशो न स्थानिवत् । शमयन्तं प्रयुक्तवान् । अशमि, अशामि । शमंशमम्, शामंशामम् । शंशमयतेः—अशंशमि, अशंशामि । शंशमम् । शंशामम् ।

योऽसौ णौ णिर्लुप्यते, यश्च यङ्कारः, तयोर्दीर्घविधौ आदेशो न स्थानिवद्भवतीति अस्थानिवद्भावाद्दीर्घः सिद्धो भवति । ह्रस्वविकल्पे तु विधीयमाने स्थानिवद्भावः स्यात् ।

**पदमञ्जरी**

*णिलोपस्य स्थानिवद्भावादिति* । स्थानिवद्भावे हि सति यश्चिण्णमुल्परो णिः न तस्मिन्मिदङ्गम्, पूर्वेण णिचा व्यवधानात्; यस्मिंश्च मिदङ्गं न स चिण्णमुल्परः, परेण णिचा व्यवधानात् ; ततश्च ह्रस्वविकल्पो न स्यात्, पूर्वेण नित्यमेव तु ह्रस्वः स्यात् । ननु दीर्घविकल्पेऽपि यावता स्थानिवद्भावः, कथमिवैतत् सिद्ध्यति ? तत्राह—*दीर्घविधौ त्विति* । 'न पदान्तद्विर्वचन' इत्यादिना स्थानिवद्भावप्रतिषेधाद्दीर्घविकल्पस्यायं विषय एवेत्यर्थः । *तथेत्यादि* । अत्र दीर्घविधौ त्वजादेशो न स्थानिवद्भवतीत्यनुषङ्गः । शमेर्यङ्, द्विर्वचनम्, नुक्, णिच्यतो लोपः, 'यस्य हलः', शंशमि इति स्थिते—यदा ततश्चिण्णमुलौ भवतः, तदा दीर्घविकल्पः सिध्यति; अजादेशस्य स्थानिवत्त्वाभावादित्यर्थः ।

एतदेव स्पष्टयति—*योऽसाविति* । *यश्च यङ्कार इति* । णौ लुप्यत इत्यनुषङ्गः । एवं तावद्दीर्घविधौ त्वजादेशो न स्थानिवद्भवतीत्येतत्स्पष्टीकृतम् । 'णिलोपस्य स्थानिवद्भावाद् ह्रस्वविकल्पो न स्यात्' इति यदुक्तम्, तत्समर्थयते—*ह्रस्वविकल्पे त्विति* । णेर्णिः णिणिः, सोऽन्तो यस्य स णिण्यन्तः । एतेन 'यङ्ण्यन्ते' इति व्याख्यातम् ।

**न्यासः**

'अचः परस्मिन् पूर्वविधौ' इति स्थानिवद्भावो न भवति; 'न पदान्त' इत्यादिना प्रतिषेधात् । तेनासति व्यवधाने दीर्घः सिद्धो भवति । स्यादेतत्—ह्रस्वविकल्पे विधीयमाने यस्मिन् पक्षे ह्रस्वो नास्ति तस्मिन् पक्षे स्वरूपेणैवावस्थितो दीर्घः स्यात् ? इत्यत आह -ह्रस्वविकल्पे त्वित्यादि । न हि ह्रस्वे विधातव्ये केनचित् स्थानिवद्भावः प्रतिषिध्यते । तत्र ह्रस्वविकल्पे विधीयमाने णेर्लोपस्य यङ्कारस्य च स्थानिवद्भावः स्यादेव । ततश्च स्थानिवद्भावाद् विकल्पेन ह्रस्वत्वं न स्यात् । चिण्णमुल्परे हि णौ परतो मितामङ्गानां ह्रस्वत्वं विधेयम् । यश्चात्र णिश्चिण्णमुल्परो न तत्र मिदङ्गम्; पूर्वेण णिचा व्यवधानात् । यस्मिंश्च णौ मिदङ्गं नासौ चिण्णमुल्परः; परेण णिचा व्यवधानात् । तस्मान्नायमस्य योगस्य विषय इति पाक्षिकं ह्रस्वत्वमनेन न स्यात् । पूर्वेणैव योगेन नित्यं स्यात्, ततश्च दीर्घो न स्यात् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



णिण्यन्ते यङ्ण्यन्ते त्वसिद्धिरेव । व्याश्रयत्वादसिद्धत्वमपि नास्ति । णौ हि णियङोर्लोपः, चिण्णमुल्परे णावङ्गस्य दीर्घत्वम् ॥

खचि ह्रस्वः ॥ ९४ ॥

खच्परे णौ परतो ह्रस्वो भवत्यङ्गस्योपधायाः । द्विषन्तपः । परन्तपः । पुरन्दरः ॥

पदमञ्जरी

*असिद्धिरेवेति* । कस्य ? प्रकृतत्वाद्दीर्घस्य, एवकारेण तुशब्देन चैतद्दर्शयति । णिचमाश्रित्य वृद्धिविधानादस्ति दीर्घस्य शङ्का, णिलोपस्य तु स्थानिवद्भावादयं विकल्पो न स्यादित्येव दोषः । यङ्ण्यन्ते तु भवतु नामायं विकल्पः, तथापि पक्षे दीर्घस्य श्रवणं न सिध्यति; णिचमपेक्ष्य वृद्धौ कर्त्तव्यायामतो लोपस्य स्थानिवद्भावाद्, दीर्घस्यानुन्मेषादिति ।

स्यादेतत्—दीर्घविकल्पे विधीयमाने यदि नाम स्थानिवद्भावो नास्ति, तथापि नैवात्र दीर्घः सिध्यति, 'असिद्धवदत्राभात्' इति णियङोर्लोपस्यासिद्धत्वादिति ? अत आह—*व्याश्रयत्वादिति* । व्याश्रयत्वमेव दर्शयति—*णौ हीत्यादि* ।

न्यासः

णिण्यन्त इत्यादि । णेर्णिरन्तः समीपो यस्मिन् स णिण्यन्तः । अथ वा—णेर्णिः णिणिः, सोऽन्तो यस्य स णिण्यन्तः । अस्मिन् पक्षेऽन्तशब्दोऽवयववचनः । यङ्ण्यन्ते त्वसिद्धिरेवेति । यङ्ण्यन्तशब्दस्यापि पूर्ववद् द्विधा व्युत्पत्तिः । कस्यासिद्धिः ? प्रकृतत्वाद्दीर्घस्येति वेदितव्यम् । एवकारेणैतद्दर्शयति—णिण्यन्ते स्यादपि केनचित् प्रकारेण दीर्घस्य सिद्धिः, यङ्ण्यन्ते त्वसिद्धिरेव । न केनचित् प्रकारेण सिद्धिरित्यर्थः । कथं पुनर्णिण्यन्ते सिद्धिर्भवति ? णिजातेराश्रयणात् । णिजातिविवक्षायां हि यद्यपि णिलोपस्य स्थानिवद्भावः, तथापि नास्ति व्यवधानम्; जातेरेकत्वात् । न हि तत्रैव तस्या व्यवधानमुपपद्यते । तेन व्यवधानाभावाण्णिण्यन्ते दीर्घस्य सिद्धिः । अथ वैतदेवकारेण दर्शयति—णिण्यन्ते पूर्वं णिचमाश्रित्य 'अत उपधायाः' इति वृद्धिविधानादस्ति दीर्घस्य सिद्धिः,तस्यास्तु ह्रस्वत्वेन निवृत्तिः क्रियते, न तु सर्वथा नास्त्येव । यङ्ण्यन्ते तु सर्वथैव दीर्घसिद्धेरभावः; तत्र वृद्धेरसम्भवादिति । स्यादेतत्—विकल्पे दीर्घत्वे विधीयमानेऽपि नैवात्र दीर्घः सिध्यति । 'असिद्धवदत्रा भात्' इति णियङोर्लोपस्यासिद्धत्वादित्यत आह—व्याश्रयत्वादित्यादि । कथं पुनर्व्याश्रयत्वम् ? इत्याह—णौ हीत्यादि ।

अन्यतरस्यांग्रहणं विस्पष्टार्थम्; शक्यते हि 'वा चित्तविरागे' इत्यतो मण्डूकप्लुतिन्यायेन वाग्रहणमनुवर्त्तयितुम् ॥

खचि ह्रस्वः ॥ द्विषन्तपः, परन्तप इति । 'द्विषत्परयोस्तापे' इति खच् , 'अरुर्द्वि-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


## ह्लादो निष्ठायाम् ॥ ९५ ॥

ह्लादोऽङ्गस्योपधाया ह्रस्वो भवति निष्ठायां परतः । प्रह्लन्नः । प्रह्लन्नवान् ।

निष्ठायामिति किम् ? प्रह्लादयति । 'ह्लाद' इति योगविभागः क्रियते, क्तिन्यपि यथा स्यात्—प्रह्लत्तिरिति[1] ॥

## छादेर्घेऽद्व्युपसर्गस्य ॥ ९६ ॥

छादेरङ्गस्याद्व्युपसर्गस्य घप्रत्यये परत उपधाया ह्रस्वो भवति । उरश्छदः । प्रच्छदः । दन्तच्छदः ।

### पदमञ्जरी

किञ्च—'हेड वेष्टने' घटादिः, तस्य ह्रस्वाभावपक्षे अहेडीति स्यात्, दीर्घे तु ह्रस्वस्य कृते—अहीडीति भवति । तस्मादतोऽपि हेतोर्दीर्घ एव विकल्पनीयः ॥

ह्लादो *निष्ठायाम्* ॥ 'ह्लादी सुखे च', ईदित्वान्निष्ठायामनिट् । क्वचित्पठ्यते—*ह्लाद इति योगविभागः क्रियते, क्तिन्यपि यथा स्यात् प्रल्हत्तिरिति* । भाष्ये तु नैतदृष्टम् ॥

*छादेर्घेऽद्व्युपसर्गस्य* ॥ *उरश्छद इति* । 'छद आवरणे', चुरादिणिच्, 'पुंसि संज्ञायाम्' इति करणे घः, कर्मणि षष्ठ्या समासः । ननु चात्र घे परतो ण्यन्तमङ्गं तस्योपधादकारः, न च सा ह्रस्वभाविनी । न च शक्यं वक्तुम्—णिलोपे कृते आकारो ह्रस्वभाविन्युपधेति; णिलोपस्य 'असिद्धवदत्रा भात्' इत्यसिद्धत्वाद्

### न्यासः

षदजन्तस्य' इति मुम् । पुरन्दर इति । 'पूःसर्वयोर्दारिसहोः' इति खच्, 'वाचंयमपुरन्दरौ च' इति निपातनान्मुमागमः ।

ह्रस्वग्रहणं विस्पष्टार्थम्; शक्यते 'मितां ह्रस्वः' इत्यतो मण्डूकप्लुतिन्यायेन ह्रस्वग्रहणमनुवर्त्तयितुम् ॥

ह्लादो निष्ठायाम् ॥ प्रह्लन्न इति । 'ह्लादी सुखे च', 'रदाभ्याम्' इत्यादिना नत्वम् । प्रह्लादयतीति हेतुमण्णिच् ॥

छादेर्घेऽद्व्युपसर्गस्य ॥ उरश्छद इति । 'छद अपवारणे', चुरादिणिच्, 'पुंसि संज्ञायां घः प्रायेण' इति घः । उरसश्छद इति विगृह्य 'कृद्योगा च षष्ठी समस्यते' इति समासः ।

---

1. अयमंशो न सर्वत्र लभ्यते ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



णिलोपस्य चासिद्धत्वं स्थानिवद्भावो वा वचनसामर्थ्यादत्र न भवतीति ह्रस्वभाविन्युपधा भवति ।

अद्व्युपसर्गस्येति किम् ? समुपच्छादः ।

❀ अद्विप्रभृत्युपसर्गस्येति वक्तव्यम् ❀ । समुपातिच्छादः । उत्तरा हि संख्या पूर्वसंख्याकृतं व्यपदेशं निवर्त्तयति, न हि त्रिपुत्रो द्विपुत्र इति व्यपदिश्यते ॥

पदमञ्जरी

'अचः परस्मिन्' इति स्थानिवद्भावाच्च । अत आह—*णिलोपस्य चेति* । अपर आह–'णाविति वर्त्तते, घे परतो यो णिस्तत्र यदङ्गं तस्योपधाया ह्रस्वः । 'छादेः' इति चेक्रा निर्देशः, न णिचा' इति ।

ननु यत्र त्रिप्रभृतयः सन्ति, द्वावपि तत्र स्तः, ततश्च 'अद्व्युपसर्गस्य' इत्येव सिद्धम्, किं सूत्रशिक्षया ? अत आह—*उत्तरा हीति* । एतदेव लोकव्यवहारेण द्रढयति—*न हीति* ॥

न्यासः

ननु च णिलोपस्य 'असिद्धवदत्रा भात्' इत्यसिद्धत्वात् 'अचः परस्मिन् पूर्वविधौ' इति स्थानिवद्भावाद्वा ह्रस्वभाविन्यज्लक्षणोपधा न सम्भवति, तत् कथं ह्रस्वत्वं प्रवर्त्तते ? इत्याह–णिलोपस्येत्यादि । यद्यत्र णिलोपस्यासिद्धत्वं स्थानिवद्भावो वा स्यात्, तदा वचनमनर्थकं स्यात् । तस्माद् वचनसामर्थ्यादुभयमपि न भवति, तेन ह्रस्वभाविन्युपधा भवति ।

अद्विप्रभृत्युपसर्गस्येति वक्तव्यमिति । ननु च त्रिप्रभृतयो यत्र सन्ति तत्र द्वावपि स्तः, ततश्चाद्व्युपसर्गस्येत्येवं सिद्धम् ? इत्यत आह–उत्तरा हीत्यादि । यद्यपि त्रिप्रभृतिषु द्वावपि स्तः, तथापि न ताविह द्विशब्देनोपात्तौ; यत उत्तरा हि संख्या पूर्वसंख्याया यः कृतो व्यपदेशस्तदभिधानं निवर्त्तयति । कथं ज्ञायते ? इत्याह–न हीत्यादि । यद्युत्तरा संख्या पूर्वसंख्याकृतव्यपदेशं न निवर्त्तयेत्, तदा त्रिपुत्रोऽपि लोके द्विपुत्र इत्यभिधीयेत, न चाभिधीयते । तथा हि द्विपुत्र आनीयतामित्युक्ते नैव त्रिपुत्र आनीयते, अपि तु यस्य द्वावेव पुत्रौ स एव ।

अद्विप्रभृतीत्यादेश्च वाक्यस्यायमर्थः–अद्विप्रभृत्युपसर्गस्य छादेर्ह्रस्वत्वं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्–द्विशब्दोऽत्रानेकोपलक्षणार्थम्, द्व्युपसर्गस्यानेकोपसर्गस्येति यावत् । अद्व्युपसर्गस्येति च प्रसज्यप्रतिषेधोऽयम् । तेनायमर्थो भवति–छादेरङ्गस्यानेकोपसर्गस्य घप्रत्यये परत उपधाह्रस्वो न भवतीति । केन पुनः प्राप्तस्य ह्रस्वस्यानेन प्रतिषेधः क्रियते ? एतस्मादेव प्रतिषेधाद्विधायकं वाक्यमनु-



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## इस्मन्त्रन्क्विषु च ॥ ९७ ॥

इस्, मन्, त्रन्, क्वि—इत्येतेषु परतश्छादेरुपधाया ह्रस्वो भवति । छदि—छद्म । छत्त्रम् । धामच्छत् । उपच्छत् ॥

## गमहनजनखनघसां लोपः क्ङित्यनङि ॥ ९८ ॥

गम, हन, जन, खन, घस—इत्येतेषामङ्गानामुपधाया लोपो भवत्यजादौ प्रत्यये क्ङित्यनङि परतः । जग्मतुः, जग्मुः । जघ्नतुः,

### पदमञ्जरी

इस्मन्त्रन्क्विषु च ॥ 'अर्चिशुचिहुसृपिच्छादिछर्दिभ्य इसिः' इतीसिप्रत्ययः । 'मनिन् सर्वधातुभ्यः' । 'ष्ट्रन् सर्वधातुभ्यः' । योगविभागाद् द्विप्रभृत्युपसर्गादपि भवति—समुपच्छदिः ॥

*गमहजनखनघसां लोपः क्ङित्यनङि* ॥ *जघ्नतुरिति* । 'अभ्यासाच्च' इति कुत्वम् । *जज्ञतुरिति* । 'जन जनने' परस्मैपदी जौहोत्यादिकः, नकारस्य चुत्वम् । *जज्ञ इति* । 'जनी प्रादुर्भावे' अनुदात्तेत् दैवादिकः । *जक्षतुरिति* । 'लिट्यन्यतरस्याम्' इत्यदेर्घस्लादेशः, घकारस्य चर्त्वम्, 'शासिवसिघसीनां च' इति षत्वम् । *अक्षन्निति* । 'लुङ्सनोर्घस्लृ', 'मन्त्रे घस' इति च्लेर्लुक् ।

### न्यासः

मीयते । योगविभागाद्वा—'छादेर्घे' इति । यदि च द्विशब्दोऽत्रानेकोपलक्षणार्थः, योगविभागश्चाभ्युपेयेतैवं तदा पर्युदासेऽप्यदोषः । कथम् ? द्व्युपसर्गादनेकोपसर्गादन्योऽद्व्युपसर्गः = एकोपसर्गः, तस्य ह्रस्वत्वं भवति । किमर्थमिदम्, न 'छादेर्घे' इत्यनेनैव सिद्धम् ? सिद्धे सत्यारम्भो नियमार्थः—एकोपसर्गस्यैव भवति, नान्यस्येति । यद्येवम्, उरश्छद इत्यत्र न प्राप्नोति ? नैष दोषः; एवं हि योगविभागोऽनर्थकः स्यात् । तुल्यजातीयापेक्षत्वान्नियमस्य, सोपसर्गस्य नियमः क्रियमाणः सोपसर्गस्यैव ह्रस्वत्वं निवर्त्तयति, नानुपसर्गस्य । तेनोरश्छद इत्यत्र प्रवर्त्तत एव ॥

इस्मन्त्रन्क्विषु च ॥ चकारश्छादेरनुकर्षणार्थः । छदिरिति । 'अर्चिशुचिहुसृपिच्छादिच्छर्दिभ्य इसिः' इतीसिप्रत्ययः । छद्मेति । 'सर्वधातुभ्यो मनिन्' इति मनिन् । छत्त्रमिति । 'सर्वधातुभ्यः ष्ट्रन्' इति ष्ट्रन् । योगविभागोऽनेकोपसर्गस्यापि यथा स्यात्—समुपातिच्छदिरिति ॥

गमहनजनखनघसां लोपः क्ङित्यनङि ॥ अनङीति अजादावयं प्रतिषेधः, तेन तत्तुल्येऽजादावेव प्रत्यये कार्यं विज्ञायते, इत्याह—अजादौ प्रत्यय इति । जग्मतुः, जघ्नुरिति । 'अभ्यासाच्च' इति कुत्वम् । जज्ञतुः, जज्ञुरिति । 'जन जनने'—परस्मैपदी जौहोत्यादिकः, 'स्तोः श्चुना श्चुः' इति श्चुत्वम् । जज्ञ इति । 'जनी प्रादुर्भावे'—

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



जघ्नुः । जज्ञे, जज्ञाते, जज्ञिरे । चख्नतुः, चख्नुः । जक्षतुः, जक्षुः । अक्षन् पितरोऽमीमदन्त पितरः ।

क्ङितीति किम् ? गमनम् । हननम् । अनङीति किम् ? अगमत् । अघसत् ।

अचीत्येव—गम्यते, हन्यते ॥

## तनिपत्योश्छन्दसि ॥ ९९ ॥

तनि, पति—इत्येतयोश्छन्दसि विषये उपधाया लोपो भवति अजादौ क्ङिति प्रत्यये परतः । वितत्निरे कवयः । शकुना इव पप्तिम ।

छन्दसोति किम् ? वितेनिरे । पेतिम ॥

## घसिभसोर्हलि च ॥ १०० ॥

घसि, भस—इत्येतयोश्छन्दसि उपधाया लोपो भवति हलादावजादौ च क्ङिति प्रत्यये परतः । सग्धिश्च मे सपीतिश्च मे । बब्धां ते हरी धानाः ।

### पदमञ्जरी

*अचीत्येवेति* । 'अचि श्नुधातु' इत्यतः । तस्य तु 'दोषो णौ' इत्यत आरभ्योपयोगो न प्रदर्शितः; क्वचिद्व्यभिचाराभावात्, क्वचिदसंभवात् । इह तूपयोगः तथा चोत्तरसूत्रे 'हलि च' इति वक्ष्यति ॥

*तनिपत्योश्छन्दसि* ॥ *वितत्निर इति* । लोपविधानसामर्थ्यादसिद्धत्वेऽपि तस्य 'अत एकहल्मध्ये' इत्येत्वाभ्यासलोपौ न भवतः । *पप्तिमेति* । लिट्, मस्, इट् ॥

*घसिभसोर्हलि च* ॥ सूत्रे चकारस्य पाठोऽनार्षः । तथा च वार्त्तिकम्—'हल्ग्रहणमपरिभाष्यम्, अन्यत्रापि दर्शनात्' इति ।

### न्यासः

आत्मनेपदी दिवादिः, 'लिटस्तझयोरेशिरेच्' इत्येश् । जक्षतुरिति । अदेः 'लिट्यन्यतरस्याम्' इति घस्लादेशः, 'खरि च' इति घकारस्य ककारः, 'शासिवसिघसीनाञ्च' इति षत्वम् । अथ वा—'घस्लृ अदने' इत्यस्यैतद्रूपम् । अक्षन्निति । लुङ्, 'लुङ्सनोर्घस्लृ' इति घस्लादेशः, 'मन्त्रे घसह्वर' इत्यादिना लेर्लुक्, झेरन्तादेशः, संयोगान्तलोपः । शेषं पूर्ववत् । अघसत्, अगमदिति । पुषादिसूत्रेणाङ् ॥

तनिपत्योश्छन्दसि ॥ वितत्निर इति । अत्र यद्युपधालोपस्यासिद्धत्वम्, तथापि लोपविधानसामर्थ्याद् 'अत एकहल्मध्ये' इत्यादिनैत्वाभ्यासलोपौ न भवतः । पप्तिमेति । लिट्, क्रादिनियमादिट् ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सग्धिरिति—अदेः क्तिनि 'बहुलं छन्दसि' इति घस्लादेशे उपधाया लोपे च कृते 'झलो झलि' इति सकारलोपः। घत्वं तकारस्य, जश्त्वं घकारस्य। ततः समाना ग्धिः सग्धिरिति समासे कृते समानस्य सभावः।

बब्धामिति—भसेर्लोटि तामि श्लौ द्विर्वचने कृते उपधालोप-सलोपधत्वजश्त्वानि कर्त्तव्यानि। द्विर्वचनात्परत्वान्नित्यत्वाच्च उपधालोपः प्राप्नोति; छान्दसत्वात् स तथा न क्रियते।

अजादौ—बप्सति। क्ङितीत्येव—अंशून् बभस्ति॥

## हुझल्भ्यो हेर्धिः॥ १०१॥

### पदमञ्जरी

*तथा न क्रियत इति*। यदि क्रियेत, अनच्कत्वाद् द्विर्वचनं न स्यादिति भावः। पूर्वत्र अचीत्यधिकारादिह हलीत्युक्तम्, तदुपादानाद्—अचि न स्यादिति चकारेण समुच्चयः।

यदि पूर्वत्रैवाचीत्यनुवर्त्तते, नेह इत्युच्येत, ततः 'हलि च' इति शक्यमकर्त्तुम्, उत्तरार्थं तु तत्कृतम्॥

*हुझल्भ्यो हेर्धिः॥ हलादेरिति*। 'हुझल्भ्यः' इति पञ्चम्या हलीति सप्तम्याः षष्ठी प्रकल्प्यते इति भावः। यद्येवम्, 'यस्मिन्विधिः' इत्यस्याभावात्तदादिविधिर्न

### न्यासः

घसिभसोर्हलि च॥ घत्वं तकारस्येति। 'झषस्तथोर्धोऽधः' इति। जश्त्वं घकारस्येति। 'झलां जश् झशि' इति। समासे कृत इति। 'पूर्वापरप्रथम' इत्यादिना। समानस्य सभाव इति। 'समानस्य च्छन्दसि' इत्यादिना।

यदि द्विर्वचनात्पूर्वमुपधालोपः क्रियते, तदैकाच्त्वाभावाद् द्विर्वचनं न प्राप्नोति? इत्यत आह—छान्दसत्वादित्यादि। बब्धामिति। छान्दसमेतत्। तत्र 'बहुलं छन्दसि' इति वचनाद् बहुलं विधयो भवन्ति। तेन यद्यपि परत्वान्नित्यत्वाच्च द्विर्वचनात् पूर्वमुपधालोपः प्राप्नोति, तथापि स तथा न क्रियते। द्विर्वचनात् पूर्वं न क्रियत इति भावः। बप्सतीति। भसेः परस्य झेरदादेशः, शपः श्लुः, 'श्लौ' इति द्विर्वचनम्, अभ्यासकार्यम्, उपधालोपे कृते भकारस्य चर्त्वम्—पकारः। बभस्तीति। तिपि रूपम्॥

हुझल्भ्यो हेर्धिः॥ हलादेरिति। कुतः पुनर्हल्ग्रहणं प्रकृतं येन हिशब्दो विशिष्यते?

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



'हु' इत्येतस्माद् झलन्तेभ्यश्चोत्तरस्य हलादेर्हेः स्थाने धिरादेशो भवति । जुहुधि । झलन्तेभ्यः—भिन्धि । छिन्धि ।

हुझल्भ्य इति किम् ? क्रीणीहि । प्रीणीहि ।

हेरिति किम् ? जुहुताम् ।

हलीत्येव—रुदिहि । स्वपिहि ।

इह जुहुतात्, भिन्तात् त्वमिति परत्वात् तातङि कृते 'सकृद् गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव' इति पुनर्धिभावो न भवति ।

भिन्धकि, छिन्धकीत्यत्र 'परत्वाद् धिभावे कृते पुनःप्रसङ्गविज्ञानादकच् क्रियते ॥

**पदमञ्जरी**

स्यात् ? हलीत्यनुवृत्तिसामर्थ्याद्धलन्तत्वाभावाच्च भविष्यति । *भिन्धीति* । 'श्नसोरल्लोपः' । *प्रीणीहीति* । 'ई हल्यघोः' । 'लोटो लङ्वत्' । *जुहुतामिति* । तसस्ताम् । *रुदिहीति* । शब्दान्तरप्रात्या द्वयोरप्यनित्ययोः परत्वादिटि कृते पुनर्द्धित्वप्रसङ्गः ।

*इहेत्यादि* । धित्वस्यावकाशोऽनाशिषि—जुहुधीति, तातङोऽवकाशो हुझल्भ्योऽन्यः—जीवतात्त्वमिति; आशिषि हुझल्भ्यस्तूभयप्रसङ्गे परत्वात्तातङ् । अथ कृतेऽपि तस्मिन् स्थानिवद्भावाद्धित्वं कस्मान्न भवति ? तत्राह—*तत्र कृते इति* । भिन्धकि, छिन्धकीत्यत्रापि तर्हि परत्वेन धित्वे कृते अकज्न स्यात् ? इत्यत आह—*भिन्धकीति* । अपर आह—'स्थान्यादेशयोर्द्वयोरपीकार उच्चारणार्थः, हकारस्य धकार आदेशः, हलीत्यपि नानुवर्त्त्यम्, न क्वाप्यनिष्टप्रसङ्गः' इति ॥

**न्यासः**

अनन्तरसूत्रादिति चेत् ? न; तद्धि सप्तमीनिर्दिष्टम्, षष्ठीनिर्दिष्टेन चेहार्थः । 'हुझल्भ्यः' इत्येषा पञ्चमी हलीत्येतस्याः सप्तम्याः षष्ठीत्वं प्रकल्पयिष्यति । 'तस्मादित्युत्तरस्य' इति वचनादित्यदोषः । भिन्धीति । 'श्नसोरल्लोपः' इत्यकारलोपः । क्रीणीहीति । 'सेर्ह्यपिच्च' इति हिरादेशः 'ई हल्यघोः' इतीत्त्वम् । जुहुतामिति । लोट्, तसस्ताम् । रुदिहि, स्वपिहीति । अदादित्वाच्छपो लुक्, 'रुदादिभ्यः सार्वधातुके' इतीट् ।

अथेह कस्मान्न भवति—जुहुतात् त्वमिति ? आह—इहेत्यादि । धिभावस्यावकाशोऽनाशिषि—जुहुधीति, तातङोऽवकाशः—जीवतात् त्वमिति; आशिषि लोटि उभयप्राप्तौ परत्वात्तातङेव भवति । अथ कृतेऽपि तस्मिंस्तस्य स्थानिवद्भावात् पुनःप्रसङ्गविज्ञानाद् धिभावः कस्मान्न भवति ? इत्याह—तत्रेत्यादि ।

यद्येवम्, भिन्धकि, छिन्धकीत्यत्र परत्वाद् धिभावे सत्यनन्तरोक्तादेव हेतोरकज् न स्यात् ? इत्यत आह—भिन्धकि, छिन्धकीत्यादि । व्यक्तौ हि पदार्थे 'सकृद्गते विप्रतिषेधे यद् बाधितं तद् बाधितमेव' इत्येतत् प्रवर्त्तते । जातौ च 'पुनःप्रसङ्गविज्ञानात् सिद्धम्'

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## श्रुशृणुपॄकृवृभ्यश्छन्दसि ॥ १०२ ॥

श्रु, शृणु, पॄ, कृ, वृ—इत्येतेभ्य उत्तरस्य हेर्धिरादेशो भवति छन्दसि विषये। श्रुधी हवमिन्द्र। शृणुधी गिरः। पूर्द्धि। उरुणस्कृधि। अपावृधि।

शृणुधीत्यत्र धिभावविधानसामर्थ्याद् 'उतश्च प्रत्ययात्' इति हेर्लुग्न भवति। 'अन्येषामपि दृश्यते' इति दीर्घत्वम्। अतोऽन्यत्र 'व्यत्ययो बहुलम्' इति शप्, तस्य 'बहुलं छन्दसि' इति लुक् ॥

### पदमञ्जरी

*श्रुशृणुपॄकृवृभ्यश्छन्दसि ॥ उरुष्कदुरुणस्कृधीति*। 'नश्च धातुस्थोरुषुभ्यः' इति णत्वम्, 'कः करत्' इति विसर्जनीयस्य सत्वम्।

*अन्येषामपि दृश्यत इति। दीर्घत्वमिति*। न केवलं शृणुधी गिर इत्यत्र; श्रुधी हवम्, अपावृधीत्यत्राप्यनेनैव दीर्घत्वम्। *अतोऽन्यत्रेति*। शृणुधीत्यतोऽन्येषु सर्वोदाहरणेषु ॥

### न्यासः

इति 'विप्रतिषेधे परं कार्यम्' इत्यत्र प्रतिपादितम्। पाणिनेस्तूभयं मतम्, लक्ष्यानुरोधात् क्वचित् किञ्चिद् आश्रीयते। तत्र तातङ्विधौ व्यक्तिपदार्थस्याश्रयणात् 'सकृद्गते विप्रतिषेधे यद् बाधितं तद् बाधितमेव' इत्यस्या उपस्थानम्; अकज्विधौ तु जातेः पदार्थस्याश्रयणात् 'पुनःप्रसङ्गविज्ञानात् सिद्धम्' इत्यस्याः। भिन्धकीति। 'अव्ययसर्वनाम्नाम्' इत्यादिनाकच्। तत्र 'तिङश्च' इत्यनुवर्त्तते ॥

श्रुशृणुपॄकृवृभ्यश्छन्दसि ॥ शृणुधीति। 'श्रुवः शृ च' इति श्नुप्रत्ययः, शृभावश्च। पूर्द्धीति। 'पॄ पालनपूरणयोः', 'उदोष्ठ्यपूर्वस्य' इत्युत्त्वम्, 'हलि च' इति दीर्घः। उरु णस्कृधीति। उरु अस्माकं कृधीति स्थिते 'बहुवचनस्य वस्नसौ' इत्यस्मदो नसादेशः, 'नश्च धातुस्थोरुषुभ्यः' इति णत्वम्, सकारस्य रुत्वम्, विसर्जनीयः। तस्य 'अतः कृकमि' इत्यादिना सत्वम्। अपावृधीति। वृङो वृञो वा रूपम्। वृङोऽपि हि 'व्यत्ययो बहुलम्' इति च्छन्दसि परस्मैपदं भवत्येव।

अथ शृणुधीत्यत्र 'उतश्च प्रत्ययादसंयोगपूर्वात्' इत्यनेन लुक् कस्मान्न भवति? इत्याह—शृणुधीत्यत्रेत्यादि। यद्यत्र लुक् स्याद् धिभावस्यानर्थक्यं स्यादिति भावः। 'अन्येषामपि दृश्यते' इति दीर्घत्वमपावृधीत्यत्र। ननु च श्रुधीत्यत्र 'श्रुवः शृ च' इति शृभावेन श्नुप्रत्ययेन च भवितव्यम्, पूर्धीत्यत्र क्र्यादित्वात् श्नाप्रत्ययेन, उरु णस्कृधीत्यत्र 'तनादिकृञ्भ्य उः' इत्युप्रत्ययेन; अपावृधीत्यत्र यदि वृङ् तदा क्र्यादित्वात् श्नाप्रत्ययेन, अथ वृञ् तदा स्वादित्वात् श्नुप्रत्ययेन; एवञ्चैतानि रूपाणि न सिध्यन्ति? इत्यत आह—अतोऽन्यत्रेत्यादि। शृणुधीत्येतस्मादुदाहरणादन्येषूदाहरणेषु 'व्यत्ययो बहुलम्' इति शप्, तस्यापि 'बहुलं छन्दसि' इति लुक् ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## अङितश्च ॥ १०३ ॥

अङितश्च हेर्धिरादेशो भवति । 'वा छन्दसि' इति पित्त्वेनास्याङित्त्वम् । सोम रारन्धि । अस्मभ्यं तद्धर्यश्व प्रयन्धि । युयोध्यस्मज्जुहुराणमेनः ।

अङित इति किम् ? हव्यं प्रीणीहि ।

रारन्धीति–रमेर्व्यत्ययेन परस्मैपदम्, शपः श्लुः, अभ्यासदीर्घत्वं छान्दसत्वात् । मलोपाभावस्तु अङित्त्वादेव । प्रयन्धीति–यमेः शपो लुक् । युयोधीति–यौतेः शपः श्लुः ॥

## चिणो लुक् ॥ १०४ ॥

चिण उत्तरस्य प्रत्ययस्य लुग्भवति । अकारि । अहारि । अलावि । अपाचि ।

### पदमञ्जरी

*अङितश्च* ॥ *मलोपाभावस्त्विति* । 'अनुदात्तोपदेश' इत्यादिना यो मलोपस्तस्याभावः । *अङित्त्वादेवेति* । नासौ यत्नसाध्य इत्येवशब्दार्थः । *यमेः शपो लुगिति* । 'बहुलं छन्दसि' इत्येव । एवमुत्तरत्रापि[1] ॥

*चिणो लुक्* ॥ चिण इति पञ्चमी, न षष्ठी; विधानसामर्थ्यात् । *प्रत्ययस्येति* । 'प्रत्ययस्य लुक्श्लुलुपः' इति वचनादङ्गाधिकाराच्चैतल्लभ्यते । तेनाकारितरामिति तशब्दस्य तरप आमश्च यः सङ्घातस्तस्य युगपल्लुग्न भवति; प्रत्येकं प्रत्ययत्वेऽपि सङ्घातोऽप्रत्ययो ह्ययम् ।

### न्यासः

अङितश्च ॥ वा छन्दसीत्यादि । 'सार्वधातुकमपित्' इत्यपितः सार्वधातुकस्य ङित्त्वं विधीयते, छन्दसि विषये 'वा छन्दसि' इत्यनेन हेर्यदपित्त्वं तद्विकल्प्यते । तेन पक्षे तस्य ङित्त्वं न भवति ।

अथ रारन्धीति कथं परस्मैपदम्, यावता रमिरयमात्मनेपदी ? कथं वात्र शपः श्रवणं न भवति ? कथञ्चाभ्यासस्य दीर्घत्वम् ? कथञ्च 'अनुदात्तोपदेश' इत्यादिना मकारलोपो न भवति ? इत्याह—रारन्धीत्यादि । 'शपः श्लुः' इति ब्रुवाणेन 'श्लौ' इति द्विर्वचनमित्युक्तं भवति । मकारलोपाभावस्त्वङित्त्वादेव सिद्ध इति नासौ यत्नसाध्य इत्यभिप्रायः । यमेः शप इति । 'बहुलं छन्दसि' इत्यनेन । यौतेः शपः श्लुरिति । 'बहुलं छन्दसि' इत्यनेन ॥

चिणो लुक् ॥ चिण उत्तरस्य प्रत्ययस्येति । अथ प्रत्यस्यैतत् कुतो लभ्यते ? 'अङ्गस्य' इत्यनेन प्रत्ययस्य सन्निधापितत्वात् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

१. युयोधीत्यत्रेत्यर्थः, न तु उत्तरमन्त्रे इत्यर्थो विवक्षितः ।

Digitized by Arya Samaj Foundation Chennai and eGangotri



अकारितराम्, अहारितमामित्यत्र तलोपस्यासिद्धत्वात् तरप्तमपोर्न लुग्भवति; 'चिणो लुक्' इत्येतद्विषयभेदाद्भिद्यते ॥

**अतो हेः ॥ १०५ ॥**

अकारान्तादङ्गादुत्तरस्य हेर्लुग्भवति । पच । पठ । गच्छ । धाव । अत इति किम् ? युहि । रुहि । तपरकरणं किम् ? लुनीहि । पुनीहि । ईत्वस्यासिद्धत्वादाकार एव भवति ॥

**पदमञ्जरी**

ननु चेदमस्मिन्नसिद्धमिति भेदनिबन्धनो विषयविषयिभावः, तत्कथं चिणो लुक्चिणो लुक्येवासिद्धो भवति ? अत आह—*चिणो लुगित्येतदिति* । अथ वा—'क्ङिति' इति वर्तते, 'चिणः' इति पञ्चमी तस्य षष्ठीं प्रकल्पयिष्यति, तेन क्ङितः प्रत्ययस्य लुग्विधीयमानस्तरपो न भविष्यति ॥

*अतो हेः* ॥ *गच्छेति* । 'इषुगमियमां छः' । *धावेति* । 'धावु गतिशुध्योः', पाघ्रादिसूत्रेण सर्त्तेर्धावादेशः ।

*लुनीहीति* । 'प्वादीनां ह्रस्वः', 'ई हल्यघोः' । ननु चात्रानवर्णान्तत्वादेव न भविष्यति ईत्वमेव हि परत्वाद्भवति ? तत्राह—*ईत्वस्येति* । नन्वेवमप्युत्तरसूत्रे 'उतः', 'प्रत्ययात्' इति यदुपात्तमुपाधिद्वयं तस्मादेवात्र प्रत्युदाहरणद्वयेऽपि न

**न्यासः**

यदि चिण उत्तरस्य प्रत्ययस्य लुग् भवति, अकारितरामकारितमामित्यत्र तरप्तमपोर्लुक् कस्मान्न भवति ? इत्याह—अकारितरामित्यादि । योऽसौ तशब्दस्य लुक्, तस्य तरप्तमपोर्लुकि कर्त्तव्ये 'असिद्धवदत्रा भात्' इत्यसिद्धत्वम् । अतस्तशब्देन व्यवधानाच्चिणोऽनन्तरौ तरप्तमपौ न भवत इति तयोर्लुग्न भवति । ननु चान्यस्यान्यस्मिन्नसिद्धवचनादेकस्य तत्रैवासिद्धत्वं नोपपद्यते ? इत्यत आह—चिणो लुगित्येतदित्यादि । 'चिणो लुक्' इत्यभेदेनापि श्रुतमिदं लक्षणं विषयस्य लक्ष्यस्य भेदाद्भिद्यते, व्यक्तौ पदार्थे प्रतिव्यक्ति लक्षणं भिद्यत इति कृत्वा, तेन भेदे सत्युपपद्यत एवासिद्धत्वम् । अकारि, अहारीति स्थिते, अतिशयविवक्षायां तरप्तमपौ 'तिङश्च' इत्यनेन, तदन्तात् 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे', इत्यामौ कृते, अकारितराम्, अहारितमामिति भवति ॥

अतो हेः ॥ गच्छेति । गमेर्लोट्, 'इषुगमियमां छः' इति छत्वम् । धावेति । 'धावु गतिशुद्धयोः' । अथ वा—सर्त्तेः 'पाघ्रा' इत्यादिना धावादेशः । युहि, रुहीति । अदादित्वाच्छपो लुक् । लुनीहि, पुनीहीति । 'प्वादीनां ह्रस्वः' इति ह्रस्वत्वम्, 'ई हल्यघोः' इतीत्वम् ।

ननु चेत्वे कृते सत्यनकारान्तत्वान्न भविष्यति, तत किमेतन्निवृत्त्यर्थेन तपरकरणेन ? इत्यत आह—ईत्वस्येत्यादि । असिद्धत्वं तु पूर्ववत् ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## उतश्च प्रत्ययादसंयोगपूर्वात् ॥ १०६ ॥

उकारो योऽसंयोगपूर्वस्तदन्तात्प्रत्ययादुत्तरस्य हेर्लुग्भवति । चिनु । सुनु । कुरु ।

### पदमञ्जरी

भविष्यति । यदि च लुनीहीत्यत्र परत्वादीत्वं भवति, ततोऽसिद्धत्वं नास्ति; विप्रतिषेधविषये तदभावस्योक्तत्वात् । तस्मादत इत्यस्य—इहि, अधीहीति प्रत्युदाहरणम्, तपरकरणस्य—याहि, वाहीति ॥

*उतश्च प्रत्ययादसंयोगपूर्वात्* ॥ उतः, प्रत्ययात्—इत्यनयोर्विशेषणविशेष्यभावे कामचारः । तत्र—

उकारस्य विशेष्यत्वात तेन नास्ति तदन्तता ।
न सम्भवति चोकारः प्रत्ययान्तो यदा पुनः ॥
विशेष्यते उकारेण प्रत्ययस्तत्तदन्तता ।
आश्रीयते प्रत्ययस्य तत्पक्षद्वयसम्भवः ॥

तत्राद्ये पक्षे तनु, कुरु—इत्यादावेव स्यात्; सुनु, चिनु—इत्यादौ तु न स्यात् । तथा उकारस्य प्रत्ययस्यासंयोगपूर्वत्वादसंयोगपूर्वग्रहणमस्मिन्पक्षे अङ्गविशेषणं विज्ञायेत, ततश्च क्षिणु इत्यादौ न स्यात्, 'क्षिणु हिंसायाम्' तानादिकः, अत्र धातोर्गुणो न भवतीत्याहुः । तस्मादुकारो विशेषणम्, तेन तदन्तविधिः । यद्येवम्, तनु, कुरु—अत्र न प्राप्नोति, इकार एवात्र प्रत्ययो न तदन्तः ? अत्रापि तदन्तः; कथम् ? व्यपदेशिवद्भावात् । एवं स्थिते—

यद्यसंयोगपूर्वत्वमुकारान्तविशेषणम् ।
आप्नुहीत्यत्र हेर्लुक्स्यात्प्रतिषेधस्तु तक्ष्णुहि ।
तस्माद्विशेषणमिदमुकारस्यैव गृह्यताम् ॥

ननु च 'येन विधिस्तदन्तस्य' इति उकारस्तदन्तस्य संज्ञा, ततः किम् ?

### न्यासः

उतश्च प्रत्ययादसंयोगपूर्वात् ॥ उकारो योऽसंयोगपूर्व इति । अविद्यमानः संयोगः पूर्वो यस्मात् स तथोक्तः । एतेनासंयोगपूर्वग्रहणमुकारविशेषणमिति दर्शयति । स एवंविध उकारः प्रत्ययस्य विशेषणम्, विशेषणेन च तदन्तविधिर्भवतीत्याह— तदन्तादित्यादि । किमर्थं पुनस्तदन्तविधिरभ्युपगम्यते ? सुनु, चिन्वित्यत्र यथा स्यात् । अस्त्वेतत् प्रयोजनम्, अयं तु दोषः—तनु, कुर्वित्यत्र न प्राप्नोति, अत्र ह्युकार एव प्रत्ययः, न तदन्तः ? अत्रापि व्यपदेशिवद्भावेन तदन्तत्वं प्रत्ययस्यास्तीत्यदोषः । कुर्विति । धातोर्गुणे रपरत्वे च कृते 'अत उत् सार्वधातुके' इत्युत्त्वम् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



उत इति किम् ? लुनीहि । पुनीहि । प्रत्ययादिति किम् ? रुहि । युहि । असंयोगपूर्वादिति किम् ? प्राप्नुहि । राध्नुहि । तक्ष्णुहि ॥

❀ उतश्च प्रत्ययाच्छन्दोवावचनम् ❀ । 'उतश्च प्रत्ययात्' इत्यत्र 'छन्दसि वा' इति वक्तव्यम् । आतनुहि यातुधानान् । धिनुहि यज्ञपतिम् । तेन मा भागिनं कृणुहि ॥

**लोपश्चास्यान्यतरस्यां म्वोः ॥ १०७ ॥**

योऽयमुकारोऽसंयोगपूर्वः तदन्तस्य प्रत्ययस्यान्यतरस्यां लोपो

**पदमञ्जरी**

संज्ञिप्रत्यायनपरा संज्ञा तस्या विशेषणम् ।
अयुक्तमिति चेदत्र समाधिरभिधीयते ।
विशेषणं तदन्तस्य संज्ञा, सत्यम्, तथापि तु ।
विशेषणत्वस्फुरणात् प्रागेवोतो विशेषणम् ।
स्यादस्य संयोगपूर्वत्वं पश्चात्तु विशेषणम् ।
प्रत्ययस्येति, नैवेह किञ्चिदस्ति तिरोहितम् ॥

तदिदमुक्तम्—*योऽयमुकारोऽसंयोगपूर्वस्तदन्तात्प्रत्ययादिति* । युहि, *रुहीति* । ननु जुहोतेः परस्य हेर्धित्वविधानादेव धातोः परस्य न भविष्यति ? सत्यम्; विशिष्टविषयमेतज्ज्ञापकं स्यादिति प्रत्ययग्रहणम् । *छन्दसि वेति* च *वक्तव्यमिति* । एवं च कृत्वोत्तरसूत्रेऽन्यतरस्यांग्रहणं न कर्त्तव्यं भवति ॥

*लोपश्चास्यान्यतरस्यां म्वोः* ॥ अस्येत्यनेनोकारान्तः प्रत्ययः प्रत्यवमृश्यते । अस्येत्यनुच्यमाने 'म्वोः' इति षष्ठ्याश्रयणे न म्वोरेव लोपो विज्ञायेत । एवं च

**न्यासः**

तक्ष्णुहीति । 'तनूकरणे तक्षः' इति श्नुः ।

छन्दोवावचनमिति । अभिधानेऽभिधेयोपचाराद् वार्थो विकल्पो वाशब्देन विवक्षितः । उच्यते व्याख्यायतेऽनेनेति वचनम्, वार्थस्य वचनं वावचनम्, छन्दसि वावचनं छन्दोवावचनमिति 'सप्तमी' इति योगविभागात् समासः । छन्दसि वेति वक्तव्यमिति । छन्दसि विषये विकल्पेनायं विधिर्भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—उत्तरसूत्रेऽन्यतरस्यांग्रहणमुभयोर्योगयोः शेषः, सा च व्यवस्थितविभाषा । तेन छन्दसि विषये विकल्पेनायं विधिर्भवतीति । धिनुहि, कृणुहीति । 'इवि, दिवि, धिवि, प्रीणनार्थाः', 'कृवि हिंसाकरणयोः' । इदित्त्वान्नुम्, 'धिन्विकृण्व्योर च' इत्युप्रत्ययः, अकारश्चान्तादेशः, तस्य 'अतो लोपः' इति लोपः ॥

लोपश्चास्यान्यतरस्यां म्वोः ॥ योऽयमुकारोऽसंयोगपूर्व इति । एतेनास्येत्यनेन प्रकृत उकारः प्रत्यवमृश्यत इति दर्शयति । ननु च 'उतः' इत्यनुवृत्तेरुकारस्यैव लोपो

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



भवति वकारमकारादौ प्रत्यये परतः । सुन्वः, सुनुवः । सुन्मः, सुनुमः । तन्वः, तनुवः । तन्मः, तनुमः ।

प्रत्ययस्येत्येव—युवः, युमः । असंयोगपूर्वस्येत्येव—शक्नुवः, शक्नुमः ।

लुगिति वर्त्तमाने, लोपग्रहणमन्त्यलोपार्थम् ॥

## नित्यं करोतेः ॥ १०८ ॥

करोतेरुत्तरस्य उकारप्रत्ययस्य वकारमकारादौ प्रत्यये परतो नित्यं लोपो भवति । कुर्वः, कुर्मः । उकारलोपस्य दीर्घविधावस्थानि-

### पदमञ्जरी

'उतश्च प्रत्ययादसंयोगपूर्वात्' इति पञ्चमी न बाधिता भवति । *लुगिति वर्त्तमाने इत्यादि* । यदि हि प्रकृत एव लुक् क्रियेत, सर्वस्यैव प्रत्ययस्य स्यात् । 'लुगादयः सर्वादेशाः' इति संज्ञाविधाववोचाम । सर्वस्य लोपे कृते सुन्वः, सुनुव इति न सिध्येत् । तस्मादन्त्यस्य लोपार्थं लोपग्रहणम् । किञ्च—कुर्वः, कुर्म इत्यत्र लुकि सति गुणो न स्यात्; 'न लुमताङ्गस्य' इति प्रतिषेधात् । लोपे तु सति भवति ॥

*नित्यं करोतेः* ॥ *करोतेरुप्रत्ययान्तस्येति* । 'उतश्च प्रत्ययाद्' इत्यनुवृत्तेर्लभ्यते । *उकारलोपस्येत्यादिना* सोपपत्तिकां दीर्घप्राप्तिमनूद्य प्रतिषेधं दर्शयति ।

### न्यासः

विज्ञास्यते, तत् किम् 'अस्य' इत्यनेन ?, षष्ठीप्रक्लृप्त्यर्थमस्येत्येतदिति चेत् ? न; 'म्वोः' इत्येषैव हि सप्तम्यकृतार्था 'उतः' इत्यस्याः पञ्चम्याः पूर्वयोगे कृतार्थायाः षष्ठीत्वं प्रकल्पयिष्यति, 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति वचनात् । स्यादेतत् । यदि 'म्वोः' इत्येषा सप्तमी विज्ञायते, एतदेव तु न विज्ञायते—किमियं षष्ठी, उत सप्तमीति ? तस्मात् षष्ठीप्रक्लृप्त्यर्थमस्येत्युक्तम् । लुगित्यनुवर्त्तमान इत्यादि । यदि प्रकृत एव लुक् क्रियते तदा सर्वस्यैव प्रत्ययस्य लुक् स्यात्, नान्त्यस्य; यतः प्रत्ययादर्शनस्य लुगित्येषा संज्ञा विहिता, न तु प्रत्ययावयवस्यादर्शनस्य । सर्वस्य तु लुकि कृते सुन्वः, सुन्म इति न सिध्यति ? लोपग्रहणाददोषः । तत्र ह्युकारमात्रस्य लोपः; 'अलोऽन्त्यस्य' इति वचनात् । तस्मादन्त्यस्य लोपार्थं लोपग्रहणम् । किञ्च कुर्वः, कुर्म इत्यत्र गुणो लुकि सति न स्यात्; 'न लुमताङ्गस्य' इति प्रत्ययलक्षणप्रतिषेधात् । लोपे तु सति भवति । ततो गुणार्थमपि लोपग्रहणं कर्त्तव्यम् ॥

नित्यं करोतेः ॥ करोतेरुकारप्रत्ययस्येति । ननु चकारेण पूर्वसूत्र उकारोऽनुकृष्टः, 'चानुकृष्टञ्चोत्तरत्र नानुवर्त्तते', तत् कथमुकारस्य लोपो लभ्यते ? नैवम्; पूर्वसूत्रे ह्युकारस्य सन्निधानमस्येत्यनेनैव लभ्यत इति तत्र तस्य चकारेण याऽनुकृष्टिः सैतदर्थैव वेदितव्या । उकारलोपस्येत्यादिना कुर्वः, कुर्म इत्यत्र सोपपत्तिकां दीर्घप्राप्तिं दर्शयति,

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



वद्भावाद् 'हलि च' इति दीर्घत्वं प्राप्तम्, 'न भकुर्छुराम्' इति प्रतिषिध्यते ॥

**ये च ॥ १०६ ॥**

यकारादौ च प्रत्यये परतः करोतेरुत्तरस्योकारप्रत्ययस्य नित्यं लोपो भवति । कुर्यात्, कुर्याताम्, कुर्युः ॥

**अत उत्सार्वधातुके ॥ ११० ॥**

उकारप्रत्ययान्तस्य करोतेरकारस्य स्थाने उकार आदेशो भवति सार्वधातुके क्ङिति परतः । कुरुतः । कुर्वन्ति ।

सार्वधातुकग्रहणं किम् ? भूतपूर्वेऽपि सार्वधातुके यथा स्यात्—कुरु ।

**पदमञ्जरी**

आरम्भसामर्थ्यादेव सिद्धे नित्यग्रहणं विस्पष्टार्थम् ॥

*अत उत्सार्वधातुके ॥ करोतेरुप्रत्ययान्तस्येति* । 'उतश्च प्रत्ययात्' इत्यनुवृत्तेर्लभ्यते ।

*सार्वधातुक इति किमिति* । सत्यपि सार्वधातुकग्रहणे स्यतास्यन्तस्य प्रसङ्गः—करिष्यावः, कर्त्ताराविति; स्यतासिभ्यां व्यवधानान्न भविष्यति । कुरुते—इत्यत्रापि तर्ह्युप्रत्ययेन व्यवधानान्न स्यात् । तस्मात्सार्वधातुके परतः करोतेरङ्गस्येत्यर्थासम्भवात्सार्वधातुके परतो यदङ्गं तदवयवस्य करोतेरित्याश्रयणीयम् । एवं च स्यतास्यन्तस्यापि प्रसङ्ग इति । 'उतश्च प्रत्ययात्' इत्यवश्यमनुवर्त्त्यम्, उप्रत्ययान्तात्करोतेः परं क्ङित्सार्वधातुकमेवेति प्रश्नः । *भूतपूर्वेऽपीति* । करु+हि इति स्थिते उत्वं च प्राप्नोति, हिलुक्च, नित्यत्वाद्धिलुकि कृते क्ङितः परस्या-

**न्यासः**

'न भकुर्छुराम्' इत्यनेन च तत्प्रतिषेधम् ।

नित्यग्रहणं विस्पष्टार्थम् । आरम्भसामर्थ्यादेव हि नित्यो विधिर्भविष्यति ॥

ये च ॥ चकारो लोपस्यानुकर्षणार्थः ॥

अत उत्सार्वधातुके ॥ उकारप्रत्ययान्तस्येति । उकारः प्रत्ययोऽन्तो यस्य स तथोक्तः । उकारप्रत्ययान्तश्च करोतिः सार्वधातुकत्वं न व्यभिचरति, अनेनाभिप्रायेणाह—सार्वधातुकग्रहणं किमिति ? भूतपूर्वेऽपीत्यादि । असति सार्वधातुकग्रहणे करोतेरुकारप्रत्ययान्तस्य क्ङिति प्रत्यये परत उत्त्वमुच्यमानं यत्र क्ङित् सार्वधातुकं परभूतं तत्रैव स्यात्—कुरुतः, कुर्वन्तीत्यादिषु; कुर्वित्यत्र हेर्लुकि कृते क्ङित्प्रत्ययस्याभावात् 'न लुमताङ्गस्य' इति प्रत्ययलक्षणप्रतिषेधात्तु न स्यात् । तस्माद् भूतपूर्वेऽपि सार्वधातुके यथा स्यादित्येवमर्थं सार्वधातुकग्रहणम् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तपरकरणं लघूपधस्य गुणनिवृत्त्यर्थम् ।

क्ङितीत्येव—करोति । करोषि । करोमि ॥

## श्नसोरल्लोपः ॥ १११ ॥

श्नस्यास्तेश्चाकारस्य लोपो भवति सार्वधातुके क्ङिति परतः । रुन्धः, रुन्धन्ति । भिन्तः, भिन्दन्ति । अस्तेः—स्तः, सन्ति ।

क्ङितीत्येव—भिनत्ति । अस्ति ।

'श्नसोः' इत्याकारस्य पररूपत्वं शकन्ध्वादिषु द्रष्टव्यम् ॥

### पदमञ्जरी

भावादुत्वं न स्यात् । प्रत्ययलक्षणं च 'न लुमताङ्गस्य' इति प्रतिषिद्धम् । तस्माद् भूतपूर्वेऽपि सार्वधातुके यथा स्यादिति सार्वधातुकग्रहणम् । असिद्धो हिलुक्, तस्यासिद्धत्वादुत्वं भविष्यति । तस्माद्विस्पष्टार्थं सार्वधातुकग्रहणम् । यथा पुनरस्योत्तरत्राप्युपयोगाभावः, तथा तत्र तत्र वक्ष्यते ।

इह यद्यपि भाव्यमानोऽप्युकारः सवर्णान् गृह्णाति, तथाप्यान्तर्यतो मात्रिकस्यातो मात्रिक उकार एव भविष्यति, नार्थस्तकारेण ? तत्राह—*तपरकरणमिति* । असति हि तस्मिन्नुप्रत्ययमाश्रित्योकारस्य लघूपधलक्षणो गुणः स्यात्, स मा भूदिति तपरकरणम् । तस्य हि प्रयोजनम्—लक्षणान्तरेणापि दीर्घो मा भूत् ॥

*श्नसोरल्लोपः* ॥ तपरकरणं किम् ? आटो मा भूत्—आस्ताम्, आसन्, असिद्ध आट् । एवं तर्ह्याभीयस्यासिद्धत्वमनित्यमिति ज्ञापनार्थं तपरकरणम् ।

### न्यासः

अथ तपरकरणं किमर्थम्, यावता यद्यपि भाव्यमान उकारः सवर्णानां ग्राहको भवति, तथाप्यान्तरतम्यान्मात्रिकस्य स्थाने मात्रिक एव भविष्यति ? इत्यत आह—तपरकरणमित्यादि । असति हि तपरकरण उकारप्रत्ययमाश्रित्य 'सार्वधातुकार्धधातुकयोः' इति गुणे कृते रपरत्वे च यदुत्वं तस्योकारस्य 'पुगन्तलघूपधस्य च' इति गुणः स्यात् । तस्मात् तपरकरणं क्रियते—ह्रस्वस्यैव श्रवणं यथा स्यात्, लक्षणान्तरेण यो दीर्घः प्राप्नोति स मा भूदिति ॥

श्नसोरल्लोपः ॥ रुन्ध इति । 'झषस्तथोर्धोऽधः' इति तकारस्य धकारः । स्त इति । अदादित्वाच्छपो लुक् ।

अथ श्नसोरिति कोऽयं निर्देशः, यावता 'अकः सवर्णे दीर्घः' इति दीर्घत्वे कृते 'श्नासोः' इति निर्देशेन भवितव्यम् ? इत्याह—श्नसोरित्याकारस्य पररूपत्वमित्यादि ।

अथ तपरकरणं किमर्थम्, आस्तामासन्नित्यत्राडागमस्य मा भूदिति चेत् ? नैतदस्ति; इह हि लङि कृते लावस्थायामाडागमात् पूर्वमन्तरङ्गत्वाल्लादेशः क्रियते । तत्र कृते विकरणः कृताकृतप्रसङ्गित्वादाडागमं बाधते । आडागमस्य त्वशब्दान्तरप्राप्तेरनित्यत्वम् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## श्नाभ्यस्तयोरातः ॥ ११२ ॥

'श्ना' इत्येतस्याभ्यस्तानां चाङ्गानामाकारस्य लोपो भवति सार्वधातुके क्ङिति परतः। लुनते। लुनताम्। अलुनत[1]। अभ्यस्तानाम्—मिमते। मिमताम्। अमिमत। सञ्जिहते। सञ्जिहताम्। समजिहत।

श्नाभ्यस्तयोरिति किम्? यान्ति। वान्ति। आत इति किम्? बिभ्रति।

पदमञ्जरी

अथात्र सार्वधातुकाधिकारस्योपयोगः? नेत्याह। श्नः सार्वधातुक एव, अस्तेरप्यार्द्धधातुके भूभावेन भाव्यम्। नन्वनुप्रयोगे भूभावो नास्ति—ईहामासुः? सत्यम्; तत्र द्विर्वचने हलादिशेषे च कृते येननाप्राप्तिन्यायेन 'अतो गुणे' इति पररूपं बाधित्वा 'अत आदेः' इति दीर्घत्वे कृते परस्याकारस्य सत्यपि लोपे सिद्धमिष्टम्॥

*श्नाभ्यस्तयोरातः*॥ *लुनत इति*। लट्, 'आत्मनेपदेष्वनतः' इति झस्यादादेशः। *लुनतामिति*। लोटि 'आमेतः'। *अलुनतेति*। लङ्। *मिमते* इत्यादौ 'भृञामित्' इतीत्वम्।

*यान्ति, वान्तीति*। असति हि श्नाभ्यस्तग्रहणे 'अतो गुणे' इत्यत्र तपर-

न्यासः

तथा हि—कृते विकरणे विकरणान्तस्याङ्गस्य तेन भवितव्यम्, अकृते धातुमात्रस्य। कृते विकरणे यद्यप्याडागमाकारलोपयोर्द्वयोरपि कृताकृतप्रसङ्गित्वेन नित्यत्वम्, तथापि परत्वादकारलोपः क्रियते, तस्मिन् कृते तस्यासिद्धत्वादाट्, तस्यासिद्धत्वादेव च लोपो न भविष्यतीति किं तपरकरणेन? एवं तर्ह्येतज्ज्ञापयति—आभाच्छास्त्रीयमसिद्धत्वमनित्यमिति। तेन 'वुग्युटावुवङ्यणोः सिद्धौ भवतः' इत्येतद् वक्तव्यं न वक्तव्यं भवति॥

श्नाभ्यस्तयोरातः॥ लुनत इति। 'आत्मनेपदेष्वनतः' इत्यदादेशः। लुनतामिति। लोट् 'आमेतः'। अलुनतेति। लङ्। मिमत इति। 'माङ् माने'। अभ्यासस्य 'भृञामित्' इतीत्वम्। एवं सञ्जिहत इत्यत्रापि 'ओहाङ् गतौ' इत्यस्य। बिभ्रतीति। पूर्ववदित्वम्। अलुनादिति। ननु चासति क्ङितीत्यस्मिन्नीत्वेनात्र भवितव्यम्, तत् कुतो लोपस्य प्रसङ्गः? नैतदस्ति; ईत्वमपि हि क्ङित्येवेष्यते। इह चोत्तरसूत्रे क्ङितीत्यनुवर्त्यम्, तत्र यदि क्ङितीति नानुवर्त्तते तदा स्यादेव लोपः।

---

१. 'लुनतः, पुनते, पुनताम्, अपुनत'—इत्यधिकं क्वचित्।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



क्ङितीत्येव--अलुनात् । अजहात् । आद्ग्रहणं स्पष्टार्थम् ॥

ई हल्यघोः ॥ ११३ ॥

श्नान्तानामङ्गानामभ्यस्तानां च घुवर्जितानामात ईकारादेशो भवति हलादौ सार्वधातुके क्ङिति परतः । लुनीतः, पुनीतः । लुनीथः, पुनीथः । लुनीते, पुनीते । अभ्यस्तानाम्--मिमीते । मिमीषे । मिमीध्वे । सञ्जिहीते । सञ्जिहीषे । सञ्जिहीध्वे ।

हलीति किम् ? लुनन्ति । मिमते । अघोरिति किम् ? दत्तः । धत्तः ।

क्ङितीत्येव--लुनाति । जहाति ॥

पदमञ्जरी

करणस्य यानमित्यादावक्ङिति चरितार्थत्वादिह लोप एव स्यादिति भावः ।

*अलुनादिति* । उत्तरसूत्रे क्ङितीत्यस्य सम्बन्धः स्थित एवेति नायमीत्वस्य विषयः । इहाकारेणाभ्यस्तविशेषणादाकारान्तस्य लोपो जाग्रतीत्यत्र न भवति । तत्र 'निर्दिश्यमानस्यादेशाः' इति वा 'अलोऽन्त्यस्य' इति वा आकारस्यैव लोप इत्यादि मत्वा व्याख्यातम्--श्न *इत्येतस्याभ्यस्तानां चाकारस्येति* । *आकारान्तानाम्* इति तु व्याख्येयम् । अत्रापि आ सार्वधातुक एव सम्भवति । एवमभ्यस्तमप्याकारान्तम् । ववतुरित्यादौ भवत्येव लोपः ॥

*ई हल्यघोः* ॥ *लुनन्तीति* । असति हल्ग्रहणे ईत्वलोपयोः पर्यायः स्यात्; एकविषयत्वात् । घुसंज्ञकेष्वेव वा लोपः स्यात् । अत्रापि पूर्ववत् सार्वधातुकमेव सम्भवति ॥

न्यासः

नन्वाद्ग्रहणं किमर्थम्, 'श्नाभ्यस्तयोरतः' इत्येवोच्येत, एवं ह्येकमात्रया लघु भवति ? इत्यत आह--आद्ग्रहणं स्पष्टार्थम् । जागर्तेः 'जक्षित्यादयः षट्' इत्यभ्यस्तसंज्ञायामपि ऋकारलोपो न भवति--जाग्रतीति । एतच्च श्नेत्यकारान्तेन साहचर्यादभ्यस्तस्याकारान्तस्यैव ग्रहणाल्लभ्यते ॥

ई हल्यघोः ॥ लुनीतः, पुनीतः; लुनीथः, पुनीथ इति । तस्थसौ । मिमीत इति । आत्मनेपदैकवचनम् । मिमीष इति । 'थासः से' । मिमीध्वमिति । ध्वम् । लुनन्ति, पुनन्तीति । झिप्रत्ययः ।

ननु च यद्यप्यजादावपीत्वं स्यात्, लोपोऽनवकाशः स्यात्, अतोऽनवकाशत्वाल्लोप ईत्वं बाधिष्यते, तत् किं हलीत्यनेन ? नैतदस्ति; असति हल्ग्रहणे वचनादुभयं स्यात् । घुसंज्ञकेष्वाल्लोपः प्रसज्येत । तस्माद्धलीति वक्तव्यम् । दत्त इति । 'खरि च' इति

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## इद्दरिद्रस्य ॥ ११४ ॥

दरिद्रातेर्हलादौ सार्वधातुके क्ङिति परत इकारादेशो भवति । दरिद्रितः । दरिद्रिथः । दरिद्रिवः । दरिद्रिमः ।

हलीत्येव—दरिद्रति । क्ङितीत्येव—दरिद्राति ।

❀ दरिद्रातेरार्धधातुके लोपो वक्तव्यः ❀ ।

❀ सिद्धश्च प्रत्ययविधौ भवतीति वक्तव्यम् ❀ । दरिद्रातीति दरिद्रः । आकारान्तलक्षणो णप्रत्ययो न भवति, पचादित्वादजेव भवति ।

### पदमञ्जरी

इद्दरिद्रस्य ॥ इदमपि सार्वधातुक एव; अन्यत्र लोपविधानात् । *सिद्धश्चेति* । यथा प्रत्ययविधौ प्रत्ययविधानकाल एव सिद्धो भवति, तथा लोपः कर्त्तव्यः, 'आर्धधातुके' इति विषयसप्तम्याश्रयणीयेति भावः ।

*आकारान्तलक्षण इति* । 'आर्धधातुके' इति परसप्तम्यां तस्योत्पत्तिं प्रतीक्ष्य लोपः कर्त्तव्यः, ततश्च 'श्याद्व्यध' इत्याकारान्तलक्षणो णप्रत्ययः स्यात्, तत्र कृतेऽनेन लोपश्च प्राप्नोति युक्च; तत्र लोपस्य शब्दान्तरप्राप्त्याऽनित्यत्वम्; युकस्तु लोपे कृतेऽप्राप्तिः, ततश्च उभयोरप्यनित्ययोः परत्वाद्युक् स्यात् । अथापि लोपः स्यात्, एवमपि अदरिद्र इत्यत्र 'अच्कावशक्तौ' इत्येष स्वरो न स्यात् । ईषद्दरिद्रमित्यत्र च 'आतो युच्' इति युच् स्यात् ।

### न्यासः

चर्त्वम् । धत्त इति । धाञो द्विर्वचने कृते 'अभ्यासे चर्च्च' इत्यभ्यासस्य जश्त्वे च 'दधस्तथोश्च' इति भष्भावेन दकारस्य धकारः, धातोस्त्वाकारलोपे कृते जश्त्वचर्त्वे ॥

इद् दरिद्रस्य ॥ दरिद्रतीति । 'जक्षित्यादयः षट्' इत्यभ्यस्तसंज्ञा, तेनाभ्यस्तलक्षण आकारलोपो भवति ।

वक्तव्य इति व्याख्येय इत्यर्थः । तत्रेदं व्याख्यानम्—'श्नसोरल्लोपः' इत्यतो मण्डूकप्लुतिन्यायेन लोपग्रहणमनुवर्त्त्य—सार्वधातुके, हलि, क्ङितीत्येतान् विशेषान् निवर्त्त्य दरिद्रातेः सामान्येनेत्त्वलोपौ विधातव्यौ । न चैवं सति तौ सङ्करेण प्रसजतः, यस्माद् वक्ष्यमाणमन्यतरस्यांग्रहणमुभयोर्योगयोः शेषभूतम् । सा च व्यवस्थितविभाषा । तेन यत्रैवेष्यते यत् तत् तत्रैव भविष्यति, नान्यत्रेति ।

सिद्धश्च प्रत्ययविधाविति । तथासौ कर्त्तव्यो यथा प्रत्ययविधौ = प्रत्ययविधानकाले सिद्धः = निष्पन्नो भवति । एतदुक्तं भवति—आर्धधातुके प्रत्यये विषयभूतेऽनुत्पन्ने एव लोपः कर्त्तव्य इति । एवं ह्यसौ प्रत्ययविधौ सिद्धो भवति, नान्यथा । 'सिद्धश्च प्रत्ययविधौ' इत्यस्योपादाने यत् फलं तद्—आकारान्तलक्षण इत्यादिना दर्शयति । यद्यार्ध-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



न दरिद्रायके लोपो दरिद्राणे च नेष्यते ।
दिदरिद्रासतीत्येके दिदरिद्रिषतीति वा ॥

❀ अद्यतन्यां वेति वक्तव्यम् ❀ । अदरिद्रीत्, अदरिद्रासीत् ।
'दरिद्रस्य' इति निर्देशे छान्दसं ह्रस्वत्वं द्रष्टव्यम् ॥

पदमञ्जरी

*दरिद्रायक इति* । ण्वुलि, युक् । *दरिद्राण इति* । ल्युट् । *दिदरिद्रासतीति* । 'तनिपतिदरिद्राणामुपसंख्यानम्' इति व्यवस्थितविभाषा, तेन लोपपक्षे इट् । अन्यत्रेडभावः ।

*अद्यतन्यामिति* । लुङ एषा पूर्वाचार्यसंज्ञा । *अदरिद्रासीदिति* । 'यमरमनमातां सक्च' इति । 'एकाचः' इति तत्रानुवर्त्तत इत्येकीयं मतम् । चिणि–अदरिद्रि, अदरिद्रायि । णलि–ददरिद्रौ[1] । *छान्दसं ह्रस्वत्वमिति* । अन्यथा 'आतो धातोः' इति लोपे दरिद्र इति निर्देशः स्यात् ॥

न्यासः

धातुक उत्पन्ने सति लोपः क्रियते, तदा 'श्याद्व्यधास्रु' इति सूत्रेण णप्रत्ययः स्यात्; दरिद्रातेराकारान्तत्वात् । ततश्च 'आतो युक् चिण्कृतोः' इति युकि कृते, दरिद्राय— इत्यनिष्टं रूपं स्यात् । 'सिद्धश्च प्रत्ययविधौ' इत्युच्यमाने तु प्रागेव प्रत्ययोत्पत्तेर्लोपः, तस्मिन् सत्यनत्कारान्तत्वात् पचाद्यजेव भवति । तेन दरिद्रः—इतीष्टं सिद्धं भवति ।

न दरिद्रायके लोप इत्यादिना श्लोकेन यत्रार्द्धधातुके लोपो नेष्यते यत्र विकल्पेन चेष्यते कैश्चित्, तद्दर्शयति । दरिद्रायक इत्यत्र ण्वुलन्ते शब्दे सिसाधयिषिते लोपो नेष्यते । दरिद्रातीति दरिद्रायक इति । पूर्ववद् युक् । दरिद्राण इति । अत्रापि ल्युडन्ते लोपो नेष्यते । दिदरिद्रासतीत्येक इति । सनि कृते द्विर्वचनम्, अभ्यासकार्यम् । दिदरिद्रिषतीति वेति । 'सनीवन्तर्ध' इत्यत्र 'तनिपतिदरिद्राणाम्' इत्युपसंख्यानाद्विकल्पेनेट् ।

अद्यतन्यामिति । लुङीत्यर्थः । लुङोऽद्यतनीति पूर्वाचार्यसंज्ञा । अदरिद्रासीदिति । 'यमरमनमातां सक्च' इति सगिटौ, 'अस्तिसिचोऽपृक्ते' इतीट्, 'इट ईटि' इति सिचो लोपः । ननु च 'आतो धातोः' इत्याकारलोपे कृते दरिद्र इति निर्देशेन भवितव्यम्, तत् कथं दरिद्रस्येति निर्देश इत्याह–दरिद्रस्येति निर्देश इत्यादि । 'छन्दोवत् सूत्राणि भवन्ति' इत्यतः 'ङ्यापोः संज्ञाछन्दसोर्बहुलम्' इति बहुलवचनाच्छान्दसमिह ह्रस्वत्वम् ।

तपरकरणं विस्पष्टार्थम् । भाव्यमानतया सवर्णाग्रहणादेव दीर्घो न भविष्यति ॥

---

१. "'आत औ णलः' इत्यत्रौकारेणैव सिद्धे औकारविधानं दरिद्रातेरालोपे कृते श्रवणार्थमिति निर्णीतत्वात्" इति पाठान्तरम् ( प्र० सं० स० ) ।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


## भियोऽन्यतरस्याम् ।। ११५ ।।

'भी' इत्येतस्याङ्गस्यान्यतरस्यामिकारादेशो भवति हलादौ क्ङिति सार्वधातुके परतः । बिभितः, बिभीतः । बिभिथः, बिभीथः । बिभिवः, बिभीवः । बिभिमः, बिभीमः ।

हलादावित्येव —बिभ्यति । क्ङितीत्येव—बिभेति । सार्वधातुक इत्येव–भीयते[1] ।।

## जहातेश्च ।। ११६ ।।

जहातेश्च इकारादेशो भवति अन्यतरस्यां हलादौ क्ङिति

### पदमञ्जरी

*भियोऽन्यतरस्याम्* ।। *हलादौ क्ङिति सार्वधातुक इति* । नैतेषामत्रोपयोगः, तथा च प्रत्युदाहरणं न प्रदर्शितम् । तथा हि—अजादावप्यस्तु बिभ्यतीति, 'एरनेकाचः इति ह्रस्वस्यापि यण् भविष्यति । न चेत्वविधेर्वैयर्थ्यम्; हलादौ-चरितार्थत्वात् । तथा बिभेतीति अक्ङित्यपि भवतु गुणो भविष्यति । इत्व-विधिश्च क्ङिति चरितार्थः । तथा 'अभ्यस्तस्य' इत्यनुवृत्तेर्भीत इत्यादावार्ध-धातुके न भविष्यति । क्वसावपि तर्हि प्राप्नोति ? छान्दसः क्वसुः, 'दृष्टानु-विधिश्छन्दसि' ।।

*जहातेश्च* ।। अत्रापि न 'सार्वधातुके' इत्यस्योपयोगः, अत एवास्य प्रत्यु-दाहरणं न प्रदर्शितम् । 'अभ्यस्तस्य' इत्यनुवृत्तेरार्धधातुके न भविष्यति, लिङजादिः ।।

### न्यासः

भियोऽन्यतरस्याम् ।। हलादौ सार्वधातुके क्ङिति परत इति । यद्यप्येते विशेषाः पूर्वस्मिन्निवर्त्तिताः, तथापीह मण्डूकप्लुतिन्यायेनानुवर्त्तन्त इत्यभिप्रायः । बिभीत इति । 'ञिभी भये', जुहोत्यादित्वाच्छपः श्लुः । हलादावित्येव—बिभ्यतीति । इत्त्वविधान-सामर्थ्यादेव 'एरनेकाचः' इति यणादेशो न स्यात् । सार्वधातुक इत्येव–भीतः, भीतवान् । क्ङितीति किम् ? बिभेति ।।

जहातेश्च ।। ईत्वापवाद इत्वमारभ्यते; अन्यतरस्यांग्रहणानुवृत्तेः । पक्षे तदपि भवत्येव । सार्वधातुक इत्येव—हीनः, हीनवान् । इह केचित् 'सार्वधातुके' इत्य-स्यानुवृत्तिं प्रत्याचक्षते । कथम् ? 'हलि परत ईत्वेत्त्वे प्राप्नुतः, द्विर्वचनञ्च; तत्र यदि परत्वादीत्वेत्त्वे स्यातां ततश्चेवर्णान्तताभ्यासस्य स्यात्; तस्मादभ्यस्तग्रहणमनुवर्त्तनीयम्, तस्मिंश्चानुवर्त्तमाने सार्वधातुकानुवृत्तिरपार्थिका' इति, एतच्चायुक्तम् ; अन्तरङ्ग-

१. 'बेभीयते' इत्यधिकं क्वचित् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सार्वधातुके परतः । जहितः, जहीतः । जहिथः, जहीथः ।

हलादावित्येव[1]—जहति । क्ङितीत्येव—जहाति । सार्वधातुक-इत्येव —हीयते । जेहीयते[1] ।

पृथग्योगकरणमुत्तरार्थम् ॥

**आ च हौ ॥ ११७ ॥**

जहातेराकारश्चान्तादेशो भवति इकारश्चान्यतरस्यां हौ परतः । जहाहि, जहिहि, जहीहि ॥

**लोपो यि ॥ ११८ ॥**

लोपो भवति जहातेर्यकारादौ क्ङिति सार्वधातुके परतः । जह्यात्, जह्याताम्, जह्युः ॥

**ध्वसोरेद्धावभ्यासलोपश्च ॥ ११९ ॥**

घुसंज्ञकानामङ्गानामस्तेश्च एकारादेशो भवति हौ परतोऽभ्यास-लोपश्च । देहि । धेहि । अस्तेः—'श्नसोरल्लोपः' इत्यकारलोपः,

पदमञ्जरी

*आ च हौ* ॥ सार्वधातुकमेव हि ॥

*लोपो यि* ॥ 'अभ्यस्तस्य' इत्यनुवृत्तेर्यकि न भविष्यति । यद्यपि यकारेण सह द्विर्वचनान्न जहातिरभ्यस्तम् ॥

*ध्वसोरेद्धावभ्यासलोपश्च* ॥ *देहि, धेहीति* । दाऽधाञो रूपे । दोदाण्धेटां तु

न्यासः

त्वाद् । द्विर्वचनेनैव प्रागीत्वेत्त्वाभ्यां भवितव्यम्, तत् कुतोऽभ्यासस्यैवर्णान्तताप्रसङ्गः! अन्तरङ्गत्वं तु द्विर्वचनस्याल्पापेक्षत्वात् । तद्धि श्लुमात्रमपेक्षते । इत्वेत्त्वयोश्च बह्वपेक्षत्वाद् बहिरङ्गता, बह्वपेक्षा च; तयोः पुनरङ्गस्य हलादौ क्ङिति सार्वधातुके विधानात् । जहातेरिति निर्देशाज्जिहीत इत्यत्र जिहातेर्न भवति ।

पृथग्योगकरणमुत्तरार्थमिति । 'आ च हौ' इत्येष विधिर्जहातेरेव यथा स्यात्, बिभेतेर्मा भूदिति ॥

**आ च हौ** ॥ चकार इत्त्वान्यतरस्यांग्रहणयोरनुकर्षणार्थः ॥

लोपो यि ॥ ध्वसोरेद्धावभ्यासलोपश्च ॥ अभ्यासलोपश्चेति घुसंज्ञकार्यमभ्यास-लोपग्रहणम्, न त्वस्त्यर्थम्; अस्तेरभ्यासस्यासम्भवात् । देहि, धेहीति । दाऽधाञो-रेते रूपे । अन्येषां तु घुसंज्ञकानामुदाहरणं न सम्भवति; विकरणेन हेर्व्यवधानात् । असम्भवाच्च यथायोगम् । तत्र 'दो' इत्येतस्य श्यना हिशब्दो व्यवधीयते, दाणो

---

१-१. अयमंशो न सर्वत्रोपलभ्यते ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


एधि। शिदयं लोपः, तेन सर्वस्याभ्यासस्य भवति ॥

**अत एकहल्मध्येऽनादेशादेर्लिटि ॥ १२० ॥**

लिटि परत आदेश आदिर्यस्याङ्गस्य नास्ति तस्य एकहल्मध्ये असहाययोर्हलोर्मध्ये योऽकारस्तस्य एकारादेशो भवति, अभ्यासलोपश्च

**पदमञ्जरी**

विकरणेन ह्निर्व्यवहितः। देङात्मनेपदी। *शिदयमिति*। न सूत्रे श्रूयमाणशकारो विभक्तिसकारस्य श्चुत्वेनागतः, किं तर्हि ? औत्पत्तिको लोपशब्दसम्बन्धी। विभक्तेषु हल्ङ्यादिलोप इति भावः। संज्ञाशब्दे च कृतोऽनुबन्धः संज्ञिनः कार्यं सम्पादयति, यथा—ङमुटष्टित्वम्। एतच्च 'नानर्थकेऽलोन्त्यविधिः' इत्यनाश्रित्योक्तम् ॥

*अत एकहल्मध्येऽनादेशादेर्लिटि* ॥ एकशब्दोऽसहायवचनः, न सङ्ख्यावचनः; मध्याभावात्। द्विवचनान्तस्य च समासः; द्वयोरेव मध्यसम्भवात्, अत्र लिटीति यदि विधीयमानयोरेत्वाभ्यासलोपयोर्निमित्तनिर्देशः स्यात्, आदेशो न विशेषितः स्यात्; ततश्च नेमतुः, नेमुः, सेहे, सेहाते, सेहिरे—अत्रापि प्रतिषेधः स्यात्, न त्वसत्वयोः कृतयोरङ्गस्यादेशादित्वात्। तस्माद् गुणभूतस्याप्यादेशस्यायं निमित्तनिर्देश इति दर्शयति—*लिटि परत इति*। लिटि परत्रावस्थिते य आदेशो विधीयते स आदिर्यस्याङ्गस्य नास्तीत्यर्थः।

**न्यासः**

धेटस्तु शपा, देङः पुनरात्मनेपदित्वाद् हेरसम्भवः। एधीति। सकारस्यैत्त्वे कृते तस्यासिद्धत्वाद् 'हुझल्भ्यो हेर्धिः' इति धिभावः। ननु च 'अलोऽन्त्यस्य' इत्यलामन्त्यस्य लोपेन भवितव्यम्, तत् कथं सर्वस्याभ्यासस्य लोपो भवति ? इत्यत आह—शिदयमित्यादि। 'लोपश्च' इत्यत्र द्वौ शकारौ निर्दिष्टौ। तत्रैको लोपस्य सम्बन्धी, द्वितीयस्तु विभक्तेः। यश्च लोपस्य सम्बन्धी तस्येत्संज्ञा प्रतिज्ञायत इति शिदयं लोपो भवति। तेन सर्वस्याभ्यासस्य लोपो भवति। 'आ च हौ' इत्यतो हौग्रहणं मण्डूकप्लुतिन्यायेन शक्यतेऽनुवर्त्तयितुम्। तत् त्वन्यतरस्यांग्रहणेन सम्बद्धमिति तदनुवृत्तौ 'अन्यतरस्याम्' इत्येतस्याप्यनुवृत्तिरित्याशङ्का स्यात्, अतस्तन्निवृत्त्यर्थम् 'हौ' इत्युक्तम्। चकारस्य सन्नियोगार्थत्वाल्लोपो भवत्येत्वञ्च ॥

**अत एकहल्मध्येऽनादेशादेर्लिटि** ॥ एकहल्मध्य इति। एकशब्दोऽयमसहायवाची। एकश्च एकश्च एकौ, एकौ च तौ हलौ चेत्येकहलौ, एकहलोर्मध्य इति द्विवचनान्तस्य षष्ठीसमासः। द्वयोरेव हि हलोर्मध्यं सम्भवति, नैकस्य। अत्र यदि लिट्यादेशो न विशेष्यते ततो नेमतुः, नेमुः, सेहे, सेहाते, सेहिरे इत्यत्र न स्यात्। अस्ति ह्यत्राप्यङ्गस्यादेश आदिरित्येतच्चेतसि कृत्वा लिट्यादेशं विशेषयितुमाह—लिटि परत इत्यादि। लिटि

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



लिटि क्ङिति परतः । रेणतुः, रेणुः । येमतुः, येमुः । पेचतुः, पेचुः । देमतुः, देमुः ।

अत इति किम् ? दिदिवतुः । दिदिवुः । तपरकरणं किम् ? ररासे, ररासाते, ररासिरे । एकहल्मध्य इति किम् ? ररक्षतुः, ररक्षुः । तत्सरतुः, तत्सरुः । अनादेशादेरिति किम् ? चकणतुः, चकणुः । जगणतुः, जगणुः । बभणतुः, बभणुः ।

लिट आदेश विशेषणं किम् ? इहापि यथा स्यात्—नेमतुः,

पदमञ्जरी

*ररक्षतुरिति* । अयुक्तमिदमादेशादित्वात् । क्वचित्तु *ततक्षुरिति* पठ्यते, तदप्ययुक्तम्; संयोगान्तत्वेन लिटः कित्त्वाभावात् । तस्मात्तत्सरतुः, तत्सरुरिति प्रत्युदाहरणम् । 'त्सर छद्मगतौ' । *चकणतुरिति* । कणतिः शब्दार्थधातुवर्गे भ्वादौ पठ्यते । *जगणतुरिति* । 'गण संख्याने', चुरादित्वात्तत्र णिच् प्राप्नोति । यदि नेष्यते, 'अनित्यण्यन्ताश्चुरादयः' । एतच्च 'घुषिरविशब्दने' इत्यत्र वक्ष्यते । यद्यपि 'कुहोश्चुः' इति चुत्वं लिट्याहत्य न विहितम्, अभ्यासनिमित्ते तु प्रत्यये

न्यासः

परभूते य आदेशो विधीयते स आदिर्यस्याङ्गस्य नास्तीत्यर्थः । तस्येति । तस्यैवंविधस्याङ्गस्येत्यर्थः । तस्येति चाङ्गस्य योऽकार इत्यनेन सम्बन्धः । अवयवषष्ठी चेयम्, तस्यैवंविधस्याङ्गस्य योऽकारोऽवयवस्तस्येत्यर्थः । एकहल्मध्य इत्यस्येदं विवरणम्—असहाययोर्हलोर्मध्य इति । तस्येत्यनन्तरोक्तोऽकारः सम्बध्यते । तस्याङ्गस्यावयवस्याकारस्येत्यर्थः । स्थानषष्ठी चेयम्—तस्य स्थान एकार आदेशो भवति । रेणतुः, रेणुरिति । 'अण रणं' इति 'रणिः शब्दार्थः' पठ्यते । येमतुः, येमुरिति । 'यम उपरमे' । देमतुर्देमुरिति । 'दमु उपशमे' ।

रराश इति । 'राशृ शब्दे', आत्मनेपदी । शश्रमतुः, शश्रमु रिति । 'श्रमु तपसि खेदे च' ।

केचित्तु, ततक्षतुः, ततक्षुरित्येतद् एकहल्मध्यस्य प्रत्युदाहरणं पठन्ति; एतच्चायुक्तम्; क्ङितीत्यनुवर्त्तते, न च तक्षेः परस्य लिटः कित्त्वमस्ति । 'असंयोगात्' इति प्रतिषेधात् । तत्सरतुः, तत्सरुरिति । 'त्सर छद्मगतौ' । चकणतुः, चकणुरिति । 'अण रण वण भण क्वण कण शब्दार्थाः' । तत्र कणतिर्भ्वादौ पठ्यते । जगणतुः, जगणुरिति । 'गण संख्याने' चुरादौ पठ्यते । ननु च चौरादिकत्वाण्णिचि कृते 'कास्प्रत्ययादाममन्त्रे लिटि' इत्यामा भवितव्यम् ? 'अनित्यण्यन्ताश्चुरादयः' इत्यदोषः । अनित्यण्यन्तत्वं तु तेषां सप्तमे ज्ञापयिष्यते । बभणतुरिति । भणतिर्भ्वादौ पठ्यते शब्दार्थ एव ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



नेमुः । सेहे, सेहाते, सेहिरे । अनैमित्तिके नत्वसत्वे, तदादिर्लिटचा-
देशादिर्न भवति ।

पदमञ्जरी

विधानाल्लिण्निमित्तमपि भवति, सर्वथा लिट्युत्पन्ने पश्चाद्भवति । *अनैमित्तिके नत्वसत्वे इति* । ततश्च प्रागेव लिडुत्पत्तेस्ताभ्यां भवितव्यम्, तेन तदाद्यङ्गं लिटि य आदेशस्तदादि न भवति, यदि लिटा आदेशो विशेष्यते, एत्वमलिट्यपि प्राप्नोति—पक्वः, पक्ववानिति ? नैष दोषः; चकारः समुच्चये, नान्वाचये; तेन यत्राभ्यासलोपस्तत्रैवैत्वम् । इह तर्हि स्यात्—पिपठिषति ? क्ङितीति वर्त्तते । एवमपि पापठ्यते—अत्रापि प्राप्नोति ? नैष दोषः; इह ह्यभ्यासकार्येषु ह्रस्वहलादिशेषावुत्सर्गौ, तयोरन्येऽपवादास्तत्रेह 'दीर्घोऽकितः' इति दीर्घत्वं च प्राप्नोति अनेन लोपश्च, तत्र दीर्घस्यावकाशः—बाभाष्यते, अस्य विधेर-वकाशः—पेचतुः, पेचुः; पापच्यते—इत्यत्रोभयप्रसङ्गे अपवादविप्रतिषेधाद्दीर्घत्वे-नायमभ्यासलोपो बाध्यते; तत्सन्नियोगशिष्टत्वादेत्त्वमपि न भविष्यति । अभ्या-सविकारेषु उभयसमावेशो यत्र सर्वेषां प्रवृत्तिस्तत्र । इह तु यद्यपि दीर्घत्वे कृतेऽपि एत्वाभ्यासलोपयोः प्रसङ्गः, तयोश्च कृतयोर्न दीर्घस्य प्रसङ्ग इति न सर्वेषां प्रवृत्तिः ।

ननु च बभणतुः, बभणुरित्यादावभ्यासजश्त्वचर्त्वयोरसिद्धत्वादनादेशादित्वात् एत्वाभ्यासलोपाभ्यां भाव्यम्, विप्रतिषेधस्य तु जहसतुर्जहसुरित्यादौ यत्र 'कुहो-

न्यासः

नेमतुरिति । 'णम प्रह्वत्वे शब्दे' । 'णो नः' इति नत्वम् । सेह इति । 'षह मर्षणे', 'धात्वादेः षः सः' इति सत्वम् । कथं पुनर्नत्वे सत्वे च लिट्यादेशादी न भवतः ? इत्यत आह—अनैमित्तिके नत्वसत्वे इत्यादि । नत्वसत्वविधाने हि न किञ्चिद् निमि-त्तमाश्रीयत इत्यनैमित्तिके एते भवतः, ततश्च प्रागेव लिडुत्पत्तेस्ताभ्यां भवितव्यम् । तेन तदादि यदङ्गं तल्लिट्यादेशादि न भवति । यदि तर्हि लिटादेशो विशिष्यत एवं सत्यङ्गमविशेषितं स्यात्, ततश्च पक्वः, पक्ववानित्यत्रापि प्रसज्येत, पचेरपि ह्यङ्गस्य लिटि परभूते य आदेशः क्रियते स इहाप्यादिर्नास्ति ? नैतदस्ति; अभ्यासलोपसन्नि-योगेन ह्येत्त्वमुच्यते । तेन यत्रैवाभ्यासलोपः, तत्रैवैत्वेन भवितव्यम् । नचात्राभ्यास-लोपः; असम्भवात् । इह तर्हि स्यात्—पापच्यत इति ? अयमप्यदोषः; इह परत्वाद् 'दीर्घोऽकितः' इति दीर्घो भविष्यति । ह्रस्वहलादिशेषावुत्सर्गौ, तयोर्दीर्घत्वमेत्त्वञ्चा-पवादः । तत्र दीर्घस्यावकाशः—बाभास्यते, एत्वस्यावकाशः—पेचतुः, पेचुरिति; इहोभयं प्राप्नोति—पापच्यत इति, अपवादविप्रतिषेधे सति परत्वाद्दीर्घत्वं भविष्यति ।

अथ बभणतुर्बभणुरित्यत्रैत्वं कस्मान्न भवति, 'अभ्यासे चर्च' इति जश्त्वे कृत आदेशादित्वादिति चेत् ? न; एत्वे कर्त्तव्ये जश्त्वस्यासिद्धत्वात् । तस्माद् भवित-व्यमेवैत्वेन । विप्रतिषेधस्य तु यत्र 'कुहोश्चुः' इति चुत्वं क्रियते—चकणतुः, चकणुः,

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



इहाभ्यासजश्त्वचर्त्वयोरसिद्धत्वं नास्ति, तेन तदादिरप्यादेशादिर्भवति । तथा च फलिभजोरेत्वं विधीयते । रूपाभेदे चादेशादिर्नाश्रीयत इति शसिदद्योः प्रतिषेधवचनं ज्ञापकम्, अन्यथा हि पेचतुः, पेचुः, देमतुः, देमुरित्येवमादीनामपि प्रकृतिजश्चरादीनामेत्वं न स्यात् ।

किङतीत्येव—अहं पपच । अहं पपठ ।

पदमञ्जरी

श्चुः' इति चुत्वं क्रियते सोऽवकाशः स्यात् ? अत आह—*इहेति* । अत्रैव ज्ञापकमाह—*तथा चेति* । *रूपाभेदे त्विति* । यत्रादेशस्य स्थानिना सह रूपभेदो नास्ति तत्रेत्यर्थः । *शसिदद्योरिति* । 'अभ्यासे चर्च' इति सर्वत्र जश्चरोः प्राप्तयोरन्तरतमपरिभाषाव्यापारलब्धमिदं वक्ष्यते—प्रकृतिचरां प्रकृतिचरः, प्रकृतिजशां प्रकृतिजश इति । तेन शसेः शकारस्य शकारो ददेर्दकारस्य दकार इति, तावप्यादेशादी भवतः । यदि चाभिन्नरूपोऽप्यादेश इहाश्रीयेत, तत आदेशादित्वादेव प्रतिषेधे सिद्धे 'न शसददवादिगुणानाम्' इति शसिदद्योः प्रतिषेधोऽनर्थकः स्यात्, कृतस्तु; ज्ञापयति—रूपाभेदे य आदेशः स इह नाश्रीयते इति । यदि पुनराश्रीयेत किं स्यात् ? इत्यत आह—*अन्यथेति* । प्रकृतिजश् प्रकृतिश्चर्श्चादिर्येषां तेषां न स्यात्, वचनं तु रेणुरित्यादौ चरितार्थम् । *अहं पपचेति* । उत्तमे णलि णित्वा-

न्यासः

जहसतुः, जहसुरित्यादाववकाशः स्यात् ? इत्यत आह—इहेत्यादि । कथमेतज्ज्ञायते—नास्त्यसिद्धत्वम् ? इत्याह—तथा चेत्यादि । तदैव 'तॄफलभजत्रपश्च' इति फलिभज्योरेत्त्वमुपपद्यते यदि जश्त्वचर्त्वयोरसिद्धत्वं न भवति, नान्यथा । अनादेशादित्वादनेनैवैत्त्वस्य सिद्धत्वात् तन्नोपपद्यते । तस्मात् फलिभज्योरेत्त्वविधानादवसीयते—जश्त्वचर्त्वयोरसिद्धत्वमिह नास्तीति । रूपाभेदे चेत्यादि । 'शब्दरूपस्य स्थानिनोऽभेदे सति य आदेशः स इह नाश्रीयते' इत्यस्यार्थस्य 'न शसददवादिगुणानाम्' इति शसिदद्योः प्रतिषेधवचनं ज्ञापकम् । 'अभ्यासे चर्च' इत्यनेन प्रकृतिजशां प्रकृतिजशः प्रकृतिचरां प्रकृतिचरो भवन्तीति शसः शकारस्य शकारो भवति, ददेर्दकारस्यापि दकारः; तेनोभावपि तावादेशादी भवतः ! तत्र यदि स्थान्यभेदे सति य आदेशः सोऽपीहाश्रीयेत, तत आदेशादित्वादेव न भविष्यतीति शसिदद्योरेत्त्वप्रतिषेधो न विधीयेत; विहितश्च, तस्मादेतदेव प्रतिषेधवचनं ज्ञापयति—रूपाभेदे सति य आदेशः स इह नाश्रीयत इति । यदि तर्ह्याश्रीयेत किं स्यात् ? इत्यत आह—अन्यथा हीत्यादि । अन्यथा योऽपि रूपाभेदादादेशः स्थानिनाभिन्नरूपः सोऽपीहाश्रीयेत, ततो यथा चकणतुरित्येवमादीनामेत्त्वं न भवति, तथा पेचतुः, पेचुरित्येवमादीनामपि प्रकृतिजश्चरादीनां न स्यात् । प्रकृतिजशः प्रकृतिचरश्चादयो येषां ते तथोक्ताः । अहं पपठ, अहं पपचेति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



❀ दम्भेरेत्वं वक्तव्यम् ❀। देभतुः। देभुः। नलोपस्यासिद्धत्वान्न प्राप्नोति।

❀ नशिमन्योरलिटचेत्वं वक्तव्यम् ❀। अनेशम्। मेनका। अनेशमिति नशेर्लुङि पुषादित्वादङ्। मेनकेति मनेराशिषि चेति वुन्। क्षिपकादिषु प्रक्षेपादित्वं न क्रियते।

पदमञ्जरी

भावपक्षे रूपम्। णित्त्वपक्षे तु परत्वाद्वृद्धौ कृतायां तपरकरणादकाराभावादेवाप्रसङ्गः।

*देभतुरिति*। 'श्रन्थिग्रन्थि' इत्यादिना लिटः कित्त्वे सति नलोपः।

*नशिमन्योरलिटयेत्त्वमिति*। अलिटीति पादपूरणार्थोऽनुवादः, श्लोको ह्येवं भाष्ये पठितः॥

नशिमन्योरलिटयेत्वं छन्दस्यमिपचोरपि।
अनेशन्मेनकेत्येतद्व्येमानं लिङि पेचिरन्॥ इति।

*अनेशमिति*। म्नोऽन्तादेशः। अनेशन्नस्येषवः। *अनेशमिति* तु प्रायेण पाठः, तत्र मिपोऽम्भावः। *क्षिपकादिष्विति*। क्षिपकादिषु हि इत्वप्रतिषेधो वक्ष्यते, एतच्च 'न यासयोः' इत्यत्र 'आशिषि चोपसङ्ख्यानम्' इत्यनाश्रित्योक्तम्, छन्द-

न्यासः

अत्र स्थानिवद्भावेन पित्त्वात् कित्त्वं नास्ति, तेनैत्त्वाभ्यासलोपौ न भवतः। वृद्धिरपि न भवति; 'णलुत्तमो वा' इति पक्षे णित्वाभावात्। णित्त्वपक्षे तु परत्वाद् वृद्ध्या बाधितत्वादेत्त्वाभ्यासलोपाभ्यां न भवितव्यम् इत्यणित्त्वपक्ष एवोदाहृतम्।

दम्भेरिति। किं पुनः कारणं दम्भेरेत्त्वं न भवति, यावता लिट्यनादेशाद् ह्येतदङ्गम्। 'अनिदिताम्' इत्यादिना नलोपे कृत एकहल्मध्य एवाकारः? इत्यत आह-नलोपस्येत्यादि। 'ग्रन्थिश्रन्थिदम्भिस्वञ्जीनाम्' इति सूत्रे दम्भेः परस्य लिटः कित्त्वमुक्तम्, तस्मिन् सति य उपधाया लोपस्तस्य 'असिद्धवदत्रा भात्' इत्यसिद्धत्वान्न प्राप्नोति। तस्माद् दम्भेरेत्त्वं वक्तव्यम्। व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—'श्नसोरल्लोपः' इत्यत्राभाच्छास्त्रीयस्यासिद्धत्वस्यानित्यत्वं ज्ञापितम्, तेन दम्भेरेत्त्वे कर्त्तव्ये लोपस्यासिद्धत्वं न भवति, ततश्च दम्भेर्लिट्येत्त्वं भविष्यतीति। अथ वा—'अत एकहल्मध्ये' इत्यत्र 'अतः' इति योगविभागः कर्तव्यः, तेन यत्र यत्रेत्त्वमिष्यते तत्र तत्र भविष्यतीति। एवञ्च कृत्वा नशिमन्योरलिटयेत्त्वमित्याद्यपि नोपसंख्येयम्; योगविभागेनैव सिद्धत्वात्। वक्तव्यशब्दस्य व्याख्येय इत्येषोऽर्थ इति सर्वत्र वेदितव्यम्। अनेशमिति। 'तस्थस्थ' इत्यादिना मिपोऽम्भावः।

अथ मेनकेत्यत्र 'प्रत्ययस्थात्' इत्यादिनेत्त्वं कस्मान्न भवति? इत्याह—क्षिपका-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



❀ छन्दस्यमिपचोरप्यलिटि एत्वं वक्तव्यम् ❀। व्येमानम्। अमेर्विपूर्वस्य चानशि मुक् न क्रियते। लिङि—पेचिरन्। पेचिरन्नित्येतस्य छान्दसं ह्रस्वत्वम्।

❀ यजिवप्योश्च ❀। आयेजे। आवेपे। यजेर्वपेश्च लङि इटि 'छन्दस्यपि दृश्यते' इत्यनजादेरप्याडागमः॥

## थलि च सेटि॥ १२१॥

थलि च सेटि परतोऽनादेशादेरङ्गस्य एकहल्मध्यगतस्यातः स्थाने एकार आदेशो भवति अभ्यासलोपश्च। पेचिथ। शेकिथ।

पदमञ्जरी

सीतिवचनात् मेनकेति भाषायां न प्राप्नोति। यदीष्यते, पृषोदरादिषु द्रष्टव्यः। लुग्न *क्रियत इति*। छान्दसत्वात्, 'बहुलं छन्दसि' इति वा शपो लुप्तत्वात्। *पेचिरन्निति*। पचेरन्निति प्राप्ते।

क्वचित्पठ्यते—*यजिवप्योश्च; आयेजे आवेपे, यजेर्वपेश्च लङि इति छन्दस्यपि दृश्यते इत्यनजादेरप्याडिति*। अपर आह—लिटि तस्य एशादेशः, सम्प्रसारणपूर्वत्वे 'वा छन्दसि' इत्यनुवृत्तेर्यणादेशः, एत्वाभ्यासलोपौ, उदात्तवता तिङेत्याङः समास इति। तथा चावगृह्णन्ति—यच्छन्दयोश्च मनुरायजे पिता, आयेज इत्यायेजे इति॥

*थलि च सेटि॥ पेचिथेति*। क्रादिनियमात्प्राप्तस्येटः 'उपदेशेऽत्वतः' इति

न्यासः

दिष्विस्यादि। क्षिपकादिष्विस्त्वस्य प्रतिषेधो वक्ष्यते। अस्य च क्षिपकादिषु प्रक्षेपः, तेनेत्त्वं न क्रियते।

चानशीति। 'ताच्छील्यवयोवचनशक्तिषु चानश्' मुक् न क्रियत इति। 'आने मुक्' इति मुक् प्राप्नोति, स न भवति 'अनित्यमागमशासनम्' इति कृत्वा। छान्दसत्वाद्वा—'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति। छान्दसं ह्रस्वत्वमिति। 'ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्' इति ङ्यापोर्विधीयमानं ह्रस्वत्वं बहुलवचनात् पेचिरन्नित्यत्रापि भवति। पचेर्लिङ्, सीयुट्, झस्य रन्, शप्, आद्गुणः। पचेरन्निति प्राप्ते एत्वे ह्रस्वत्वे च कृते पेचिरन्निति भवति॥

थलि च सेटि॥ पेचिथ। शेकिथेति। 'उपदेशेऽत्वतः' इतीट्प्रतिषेधप्राप्तः 'ऋतो भारद्वाजस्य' इति नियमाद् इहेड् भवति। तदयमत्रार्थः—ऋत एव भारद्वाजस्येति, नान्येषां धातूनामिति।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सेटीति किम् ? पपक्थ ।

थल्ग्रहणं विस्पष्टार्थम् । अक्ङिदर्थमेतद्वचनमित्यन्यस्येटोऽसम्भवात् ।

अत इत्येव—दिदेविथ । 'एकहल्मध्यगतस्य' इत्येव—ततक्षिथ । ररक्षिथ । अनादेशादेरित्येव—चकणिथ । बभणिथ ॥

**तॄफलभजत्रपश्च ॥ १२२ ॥**

पदमञ्जरी

प्रतिषेधे प्राप्ते 'ऋतो भारद्वाजस्य' इति नियमात्पक्षे इट् । *पपक्थेति* । अन्येषां मतेन प्रतिषेधः ।

थल्ग्रहणमनर्थकम्, पेचिवेत्यादावन्यत्र सेटि किच्वात्पूर्वेण भवितव्यमेव ? अत आह—*थल्ग्रहणं विस्पष्टार्थमिति* । किमत्र विस्पष्टनीयम् तद्दर्शयति—*अक्ङिदर्थमित्यादि* । आरम्भसामर्थ्यादेवायं निश्चयः स्यात्—यत्र पूर्वेण न सिद्ध्यति तदर्थमिति, बहवश्च विशेषाः प्रकृताः—'अत एकहल्मध्ये' इत्यादयः, तत्रासति थल्ग्रहणे सन्देहः स्यात्—किमनकारार्थं वचनम्—ददिविव, रराटिव इति ? अथानेकहल्मध्यार्थम्—तत्सरिवेति ? अथादेशार्थम्—बभणिवेति ? उतालिङर्थम्—पठित इति ? उताक्ङिदर्थमिति ? तत्र' अत इत्यादयो विशेषा अनुवर्त्तन्ते, क्ङितीत्येतत्तु निवर्तते—इति व्याख्यानमन्तरेण दुर्ज्ञानम् । तस्माद्विस्पष्टार्थं थल्ग्रहणं कृतम् ॥

न्यासः

पपक्थेति । अन्येषामाचार्याणां मतेनेट्प्रतिषेधो भवत्येव ।

अथ थल्ग्रहणं किमर्थम्, न सेटीत्येवोच्येत; यत्र हि पूर्वेण न सिध्यति तदर्थं वचनम्, अन्यत्रेडादौ किच्वात् पूर्वेणैव सिद्धम्, तत्रान्तरेणापि थल्ग्रहणं थल्येव भविष्यति ? इत्यत आह—थल्ग्रहणमित्यादि । असति थल्ग्रहणे, आरम्भसामर्थ्यादेतावान् निश्चयः स्याद्—यत्र पूर्वेण न सिध्यति तदर्थमेतदिति । अक्ङिदर्थमित्येतत् तु दुरवसानम् ; बहवो विशेषाः प्रक्रान्ताः, तत्र सन्देहः स्यात्—किमक्ङिदर्थमेतत् स्याद्, उतादेशार्थम् ? आहोस्विदनेकहल्मध्यार्थम् ? किमु अनेकाकारार्थमिति ? तत्रासन्देहार्थम् 'अत एकहल्मध्येऽनादेशादेर्लिटि' इत्येते विशेषाः सर्व एवेहानुवर्त्तन्ते । क्ङिद्ग्रहणन्तु निवृत्तम् । तस्माद् क्ङिदर्थोऽयमारम्भः । न च थलोऽन्यदिहाक्ङिदस्ति सेट् । ततः सामर्थ्यात् थल्येवायं विधिर्व्याख्येयः । व्याख्यानद्वारेण प्रतिपत्तौ मन्दधियां प्रतिपत्तिगौरवं स्यात् । तस्माद् विस्पष्टार्थं थल्ग्रहणं क्रियते । थलो ह्यक्ङित उपादाने सुखमेव प्रतीयते—अक्ङिदर्थोऽयमारम्भ इति ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तॄ, फल, भज, त्रप—इत्येतेषामङ्गानामत एकारादेशो भवति, अभ्यासलोपश्च लिटि क्ङिति परतस्थलि च सेटि। तेरतुः, तेरुः, तेरिथ। फेलतुः, फेलुः, फेलिथ। भेजतुः, भेजुः, भेजिथ। त्रेपे, त्रेपाते, त्रेपिरे।

तरतेर्गुणार्थं वचनम्। फलिभजोरादेशाद्यर्थम्। त्रपेरनेकहल्मध्यार्थम्।

❀ श्रन्थेश्चेति वक्तव्यम् ❀। श्रेथतुः, श्रेथुः॥

## राधो हिंसायाम्॥ १२३॥

राधो हिंसायामर्थेऽवर्णस्य एकार आदेशो भवति, अभ्यासलोपश्च लिटि क्ङिति परतस्थलि च सेटि। अपरेधतुः, अपरेधुः, अपरेधिथ।

हिंसायामिति किम्? रराधतुः, रराधुः, रराधिथ।

### पदमञ्जरी

*तॄफलभजत्रपश्च*॥ 'फल निष्पत्तौ', 'ञिफला विशरणे'—द्वयोरपि ग्रहणम्। *श्रेथतुरिति*। 'न शसददवादिगुणानाम्' इति प्रतिषेधं बाधितुमित्यर्थः। *गुणार्थमिति*। पूर्ववत्कित्त्वनलोपौ॥

*राधो हिंसायाम्*॥ अ[illegible]र्थत्वाद्धातूनां राधो हिंसायां वृत्तिः।

### न्यासः

तॄफलभजत्रपश्च॥ तेरतुः, तेरुरिति। 'ऋच्छत्यॄताम्' इति गुणः। फेलतुः, फेलुरिति। 'फल निष्पत्तौ', 'ञिफला विशरणे' इति च।

तरतेर्गुणार्थमिति। 'न शसददवादिगुणानाम्' इति प्रतिषेधं वक्ष्यति। अतस्तरतेरिदं वचनं गुण इत्येवमभिनिर्वृत्तस्यापि यथा स्यादित्येवमर्थम्।

श्रन्थेश्चेति वक्तव्यमिति। 'ग्रन्थ श्रन्थ सन्दर्भे' इत्यस्याप्येत्वं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—चकारोऽत्र क्रियते, स चानुक्तसमुच्चयार्थः, तेन श्रन्थेरपि भविष्यतीति। श्रेथतुः, श्रेथुरिति। पूर्ववदुपसंख्यानेन लिटः कित्वे नकारलोपः॥

राधो हिंसायाम्॥ राधो हिंसायामर्थं इत्यादि। यद्यपि 'राध साध संसिद्धौ' इति राधिः संसिद्धौ पठ्यते, इह तथाप्यनेकार्थत्वाद् धातूनां हिंसार्थता वेदितव्या। राधेर्हिंसायामर्थेऽवर्णस्यैकारादेशो भवतीत्युच्यते।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अत इत्येततदिहोपस्थितं तपरत्वकृतमपास्य कालविशेषमसम्भवादवर्णमात्रं प्रतिपादयति ।

अथ वा–'श्नाभ्यस्तयोरातः–इत्यनुवर्त्तते' इति व्याख्येयम् । एकहल्मध्ये वा यः स स्थानी भविष्यति ॥

**वा जॄभ्रमुत्रसाम् ॥ १२४ ॥**

जॄ, भ्रमु, त्रस–इत्येतेषामङ्गानामतः स्थाने वा एकार आदेशो भवति, अभ्यासलोपश्च लिटि क्ङिति परतस्थलि च सेटि । जेरतुः, जेरुः, जेरिथ । जजरतुः, जजरुः, जजरिथ । भ्रेमतुः, भ्रेमुः, भ्रेमिथ ।

**पदमञ्जरी**

ननु च नात्रापूर्वमवर्णग्रहणमस्ति, प्रकृतश्च मात्रिकस्तपरकरणात्, तत्कथमवर्णस्थान एत्वं भवतीत्युक्तम् ? अत आह—*अत इत्येतदिति* । 'अतः' इति तावत्स्वरितत्वादुपतिष्ठते, तत्तपरत्वकृतस्य कालविशेषस्य मात्रात्मकस्यासम्भवात् तमपास्यावर्णमात्रं प्रतिपादयति । *अथ वेति* । पूर्वत्र त्वत इति विरोध्युपादानादात इत्यस्यानभिसम्बन्धः । *एकहल्मध्ये चेति* । अत्र 'एकहल्मध्ये'

**न्यासः**

ननु च नात्र सूत्रेऽवर्णग्रहणमस्ति, योऽप्यत्रत्योऽवर्णः प्रकृतः सोऽपि मात्राकालः, न च राधेर्मात्राकालोऽवर्णोऽस्ति, तत् कथमवर्णस्य स्थान एत्वं लभ्यते ? इति यश्चोदयेत् तं प्रत्याह—त इत्येतदिहोपस्थितमित्यादि । 'अतः' इति स्वरितत्वादिहोपस्थितम्, यदिहोपस्थितं तत् तपरत्वकृतस्य कालविशेषस्याभावात् तदपास्य=परित्यज्यावर्णमात्रं स्थानित्वेन प्रत्याययति=बोधयति; अन्यथा तस्योपस्थानमनर्थकं स्यात् ।

अथ वेत्यादि । 'श्नाभ्यस्तयोः' इत्यनेन यतः सूत्रात् स्थान्यनुवर्त्तते तदुपलक्षयति । 'आतः' इत्यनेनापि यः स्थान्यनुवर्त्तते तं दर्शयति–श्नाभ्यस्तयोरात इत्यत आत इत्यनुवर्त्तत इति व्याख्येयमिति । एवञ्च व्याख्यायमाने राधेरवर्णस्यैत्वं विज्ञायते यदि तह्र्यात इत्यनुवर्त्तते, एवञ्च सति 'अत एकहल्मध्ये' इत्यत्रापि तस्यातः सन्निधानादिहापि प्राप्नोति—शशासिव, शशासिमेति ? नैष दोषः; मण्डूकप्लुतिन्यायेन तस्येहानुवृत्तिः ।

एकहल्मध्ये वेत्यादि । अथवा–एकहल्मध्य इत्यनुवर्त्तते, तत्राप्यनुवर्त्तमानेऽसम्भवादत इतीह न व्याप्रियते । तेन राधेर्य एकहल्मध्येऽवयवः स स्थानी भवति, स पुनराकार एव भवति, तस्यैवैत्वं भविष्यति ॥

वा जॄभ्रमुत्रसाम् ॥ 'जॄ वयोहानौ' इत्यस्य गुणार्थं वचनम् । भ्रमेरादेशार्थम्, अनेकहल्मध्यार्थञ्च । त्रसेश्चानेकहल्मध्यार्थम् । जजरतुरिति । पूर्ववद् गुणः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


बभ्रमतुः, बभ्रमुः, बभ्रमिथ। त्रेसतुः, त्रेसुः, त्रेसिथ: तत्रसतुः, तत्रसुः, तत्रसिथ ॥

## फणां च सप्तानाम् ॥ १२५ ॥

फणादीनां सप्तानां धातूनामवर्णस्य स्थाने वा एकार आदेशो भवति, अभ्यासलोपश्च लिटि क्ङिति परतः, थलि च सेटि।

फेणतुः, फेणुः,। फेणिथ; पफणतुः, पफणुः, पफणिथ।

रेजतुः, रेजुः, रेजिथ, रराजतुः, रराजुः, रराजिथ।

भ्रेजे, भ्रेजाते, भ्रेजिरे; बभ्राजे, बभ्राजाते, बभ्राजिरे।

भ्रेशे, भ्रेशाते, भ्रेशिरे; बभ्राशे, बभ्राशाते, बभ्राशिरे।

भ्लेशे, भ्लेशाते, भ्लेशिरे; बभ्लाशे, बभ्लाशाते, बभ्लाशिरे।

स्येमतुः, स्येमुः, स्येमिथ; सस्यमतुः, सस्यमुः, सस्यमिथ।

स्वेनतुः, स्वेनु, स्वेनिथ; सस्वनतुः, सस्वनुः, सस्वनिथ।

सप्तानामिति किम् ? दध्वनतुः, दध्वनुः, दध्वनिथ ॥

## न शसददवादिगुणानाम् ॥ १२६ ॥

### पदमञ्जरी

इत्येव, 'अतः', 'आत' इति च द्वयमपि नानुवृत्तम्। एकहल्मध्य इत्यनुवृत्तेर्यत्तच्छब्दाध्याहारेण स्थानी लभ्यत इत्यर्थः ॥

*फणां च सप्तानाम्* ॥ बहुवचननिर्देशादाद्यर्थो गम्यत इत्याह- *फणादीनामिति*। 'फण गतौ', 'राजृ दीप्तौ', 'टुभ्राश्टृ टुभ्राजृ टुभ्लाश्टृ दीप्तौ', 'स्यमुस्वनध्वन शब्दे', अन्त्यवर्जं फणादयः सप्त। अत्र राजप्रभृतीनामप्येत्वमवर्णस्य भवति। उक्तोऽत्र न्यायः 'राधो हिंसायाम्' इत्यत्र ॥

*न शसददवादिगुणानाम्* ॥ अत्र वस्तुतो यो गुणसंज्ञकोऽकारस्तत्रैव यदि

### न्यासः

फणाञ्च सप्तानाम् ॥ बहुवचननिर्देशादाद्यर्थो गम्यते। अत आह—फणादीनामित्यादि। 'फण गतौ', 'राजृ दीप्तौ', 'टुभ्राजृ टुभ्राश्टृ टुम्लाश्टृ दीप्तौ'। 'स्यमु स्वन ध्वन शब्दे'—इत्येते ध्वनवर्जिताः फणादयः सप्त। तत्राद्यस्य नित्ये प्राप्ते विकल्पार्थं वचनम्, इतरेषामप्राप्ते। तत्र राजप्रभृतीनां चतुर्णामवर्णस्यैत्त्वस्य प्रतिपत्तये 'राधो हिंसायाम्' इत्यत्र 'अत इत्येतदिहोपस्थितम्' इत्यादिना यदुक्तं तद् यथासम्भवं वेदितव्यम् ॥

न शसददवादिगुणानाम् ॥ अत्र यदि गुण इत्यनेन यस्यैत्वं विहितं स एवाकार

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


शस, दद्—इत्येतयोर्वकारादीनां च धातूनां गुण इत्येवमभिनिर्वृत्तस्य च योऽकारस्तस्य स्थाने एकारादेशो न भवति, अभ्यासलोपश्च। विशशसतुः, विशशसुः, विशशसिथ। दददे, दददाते, दददिरे।

वादीनाम्—ववमतुः, ववमुः, ववमिथ। गुणस्य—विशशरतुः, विशशरुः, विशशरिथ। लुलविथ, पुपविथ।

### पदमञ्जरी

प्रतिषेधस्तर्हि विधिप्रतिषेधयोरेकविषयत्वाद्विकल्पः स्यात्, 'ततश्च 'वा जृभ्रमुत्रसाम्' इति यद्वाग्रहणं तदेवादितः पाठ्यं स्यात्, तस्माद् गुणग्रहणेन तच्छब्दरूषितस्य तद्भाविति तस्य ग्रहणमित्याह—*गुण इत्येवमभिनिर्वृत्तस्य चेति*। तस्य सम्बन्धी योऽकार इत्यर्थः। सम्बन्धित्वमपि तस्य तत्स्थानिकत्वात्तदवयवत्वाच्च यथायोगं वेदितव्यम्। *शशसतुरिति*। 'शसु हिंसायाम्', 'दद दाने', अनुदात्तेत्, 'टुवम उद्गिरणे'। *विशशरतुरिति*। 'शॄ हिंसायाम्', 'ऋच्छत्यॄताम्' इति गुणः।

यदुक्तम्—'गुण इत्येवमभिनिर्वृत्तस्य' इति, तदुदाहरणं दर्शयति-*गुणशब्दाभिनिर्वृत्तस्येति*। 'उरण् रपरः' इत्यत्र 'सिद्धं तु प्रसङ्गे रपरत्वात्' इति वचनाद्गुणो भवन्नेव रेफशिरस्कोऽभिनिर्वर्त्तते, एवमभिनिर्वृत्तस्यार्शब्दस्यावयवोऽकारः। लुलविथेत्यत्र तु अभिनिर्वृत्तस्योकारस्य स्थानेऽवादेशस्तदवयवोऽकारः। क्वचित्पठ्यते—*गुणशब्देनात्र शसादीनां ग्रहणसामर्थ्यात्तद्भावितस्य ग्रहणमिति*। अकारमात्रस्य हि ग्रहणे शशिदद्योर्वकारादीनां च ग्रहणमनर्थकं स्यादिति किल तस्यार्थः॥

### न्यासः

उच्यते, ततोऽयमर्थः—अकारस्य गुणस्य न भवतीति। तथा चैत्वविधिरनवकाश एव स्यादित्येतद् बुद्धौ कृत्वा नात्र गुणेनाकार एवोच्यते, अपि तु गुणशब्दाभिनिर्वृत्त इति दर्शयन्नाह—गुण इत्येवमभिनिर्वृत्तस्य चेत्यादि। गुणशब्दमुच्चार्य्य योऽभिनिर्वृत्तः शब्दस्तस्य सम्बन्धी योऽकारस्तस्य स्थान एत्वं न भवतीत्यर्थः। तत्सम्बन्धित्वं पुनस्तस्य तत्स्थानिकत्वात् तदवयवत्वाच्च यथायोगं वेदितव्यम्। तदेवं गुणशब्दाभिनिर्वृत्तस्य सम्बन्ध्यकारः प्रतिषेधस्य निमित्तम्, इतरस्तु विधेरित्येव विधिप्रतिषेधयोर्विषयविभागः। विशशसतुरिति। 'शसु हिंसायाम्'। दददे इति। 'दद दाने'।

ववमतुरिति। 'टुवम उद्गिरणे'। विशशरतुरिति। 'शॄ हिंसायाम्'। गुणशब्दाभिनिर्वृत्तस्येत्यादिना यदुक्तं तस्यार्थमुदाहरणे दर्शयति। विशशरतुरित्यत्रारित्ययं शब्दो गुणशब्दाभिनिर्वृत्तः। तत्सम्बन्ध्यकारस्य तदेकदेशत्वात्। लुलविथेति। अत्रा-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


गुणशब्दाभिनिर्वृत्तस्यार्शब्दस्यौकारस्य चायमकार इति एत्वं प्रतिषिध्यते ॥

## अर्वणस्त्रसावनञः ॥ १२७ ॥

अर्वन्नित्येतस्याङ्गस्य 'तृ' इत्ययमादेशो भवति, सुश्चेत्ततः परो न भवति, स च नञ उत्तरो न भवति। अर्वन्तौ, अर्वन्तः। अर्वन्तम्, अर्वन्तौ, अर्वतः। अर्वता, अर्वद्भ्याम्, अर्वद्भिः। अर्वती। आर्वतम्।

असाविति किम्? अर्वा। अनञ इति किम्? अनर्वाणौ, अनर्वाणः। अनर्वाणं वृषभं मन्द्रजिह्वम् ॥

### पदमञ्जरी

*अर्वणस्त्रसावनञः* ॥ ऋकार उगित्कार्यार्थः, तेन सर्वनामस्थाने नुम् भवति। *स च नञ उत्तरो न भवतीति*। चेदित्यनुषङ्गः। *अर्वतीति* उगित्त्वान्नान्तत्वाद्वा ङीप्। *आर्वतमिति*। तद्धितेऽपि भवति, असाविति प्रसज्यप्रतिषेधो न पर्युदासः, तेन नञिवयुक्तन्यायाभावाद्विभक्तेरेव ग्रहणं न भवति, तथा च– सुश्चेत्परो न भवतीति प्रथमैकवचनस्य चात्र ग्रहणम्, न सप्तमीबहुवचनस्य; व्याख्यानात् ॥

### न्यासः

प्योकारो गुणशब्दाभिनिर्वृत्तः; तत्सम्बध्यकारस्य तत्स्थानिकत्वात्। ननु विशश्चरतुरित्यत्राकारमात्रं गुणशब्देनाभिनिर्वृत्तम्, नाऽर्शब्दः ? नैतदस्ति; रेफस्य गुणभक्तत्वात्। तथा च भाष्यम्–'अर्भवति गुणो भवति, आर्भवति वृद्धिर्भवति–रेफसहितो गुणवृद्धिसंज्ञो भवति' इति ॥

**अर्वणस्त्रसावनञः** ॥ 'तृ' इत्ययमादेशो भवतीति। 'नानुबन्धकृतमनेकाल्त्वम्' इत्यन्तस्य भवति; एकाल्त्वात्, ऋकारस्यानुबन्धत्वात्। उकारस्यानुबन्धत्वात् प्रथमैकवचनं सुशब्दो गृह्यते, तेन सप्तमीबहुवचने भवत्येव–अर्वत्स्विति। स च नञ उत्तरो न भवतीति चेदिति यत् प्रकृतं तदिहापि सम्बध्यते। अर्वन्ताविति। ऋकारस्योगित्कार्यार्थत्वाद् 'उगिदचाम्' इति नुम्। अर्वतीति। 'उगितश्च' इति ङीप्। आर्वतमिति। अपत्यार्थविवक्षायामण्। ननु च नञिवयुक्तन्यायेन सादृश्यात् सोरन्यत्र विभक्तावेव भवितव्यम् ? नैतत्; असाविति प्रसज्यप्रतिषेधोऽयम्। अत एव वृत्तिकृतोक्तम्–सुश्चेत् ततः परो न भवतीति। अन्यथा सोरन्यो यः सुप् स चेत् ततः परो भवतीति ब्रूयात्। अथापि पर्युदासः ? एवमप्यदोषः; अनित्यत्वान्नञिवयुक्तपरिभाषायाः। अनित्यत्वं तु तस्याः 'ओषधेश्च विभक्तावप्रथमायाम्' इत्यत्र विभक्तिग्रहणाद् विज्ञायते। यदि

CC-0.Panini Kanya Maha Vidyalaya Collection.

 Digitized by Arya Samaj Foundation Chennai and eGangotri 

## मघवा बहुलम् ॥ १२८ ॥

'मघवन्' इत्येतस्याङ्गस्य बहुलम् 'तृ' इत्ययमादेशो भवति । मघवान्, मघवन्तौ, मघवन्तः । मघवन्तम्, मघवन्तौ, मघवतः । मघवता । मघवती । माघवतम् ।

न च भवति—मघवा, मघवानौ, मघवानः । मघवानम्, मघवानौ, मघोनः । मघोना, मघवभ्याम्, मघवभिः । मघोनी । माघवनम् ॥

### पदमञ्जरी

*मघवा बहुलम्* ॥ *मघवेति* । षष्ठ्यर्थे प्रथमा । *मघोन इति* । 'श्वयुवमघोनाम्' इति सम्प्रसारणं पूर्वत्वम् 'आद्गुणः'। ननु च मघमस्यास्तीति मघवान्, मघमिति धननाम, 'छन्दसीवनिपौ वक्तव्यौ' इति वनिप्, सम्प्रसारणे कृते पूर्वस्य भसंज्ञायां यस्येतिलोपप्रसङ्गः । व्याश्रयत्वादसिद्धत्वमपि नाशङ्कनीयम्; शसि सम्प्रसारणे यस्येतिलोपः । य एवं तर्ह्यन्यदेवेदमव्युत्पन्नं भविष्यति, तथा चैतस्य भाषायां प्रयोग उपपद्यते । यथा तु *भाष्यम्*, तथा न केवलमस्यैव अर्वणोऽपि भाषायामसाधुः प्रयोगः । आह हि—

'अर्वणस्तृ मघोनश्च न शिष्यंछान्दसं हि तत् ।
मतुब्वन्योर्विधानाच्च छन्दस्युभयदर्शनात्' ॥

ऋधातोर्वनिपि गुणे च कृते अर्वन्निति रूपम् । तस्माद्विचि मतुपि अर्वन्तावित्यादि सिद्धं भवति, वनिप्यर्वणामित्यादि, मघशब्दादपि प्रत्ययद्वये सिद्धं भवति, नार्थः सूत्रद्वयेनेत्यर्थः । मघोन इत्यादौ तु यस्येतिलोपाभावश्छान्दसत्वादेव । *माघवनमिति* । 'अन्' इति प्रकृतिभावः ॥

### न्यासः

हि सा नित्या स्यात्, प्रथमापर्युदासेन विभक्तावेव भविष्यतीति विभक्तिग्रहणं न कुर्यात् । कुर्वन्नपि तज्ज्ञापयति—अनित्येयं परिभाषेति ।।

**मघवा बहुलम्** ॥ मघवेति सुब्व्यत्ययेन षष्ठ्याः स्थाने प्रथमा । मघोन इति । 'श्वयुवमघोनाम्' इति सम्प्रसारणम्, परपूर्वत्वम्, 'आद्गुणः' । ननु च मघोऽस्यातीति मत्वर्थविवक्षायाम् 'छन्दसीवनिपौ वक्तव्यौ' इति वनिप्प्रत्ययान्तोऽयं मघवन्शब्दः, तत्र वनिपः सम्प्रसारणे भसंज्ञायां सत्याम् 'यस्येति च' इति लोपेन भवितव्यम्, ततश्च मघुन इत्यनिष्टं रूपं स्यात् ? नैतत्; अन्यदेव हीदमव्युत्पन्नं प्रातिपदिकम्, तथा हि भाषायामपि तस्य प्रयोगो दृश्यते । अथापि वनिप्प्रत्ययान्तः स्याद् ? एवमपि बहुलवचनाद् 'यस्येति' इति लोपो न भविष्यतीत्यदोषः । मघोनीति । 'ऋन्नेभ्यो ङीप्' माघवनमिति । पूर्ववदण् । 'अन्' इति प्रकृतिवद्भावः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## भस्य ॥ १२९ ॥

'भस्य' इत्ययमधिकार आ अध्यायपरिसमाप्तेः। यदित ऊर्ध्वमनुक्रमिष्यामो भस्येत्येवं तद्वेदितव्यम्। वक्ष्यति—"'पादः पत्'। द्विपदः पश्य। द्विपदा कृतम्। भस्येति किम्? द्विपादौ। द्विपादः" ॥

## पादः पत् ॥ १३० ॥

'पादः' इति पादशब्दो लुप्ताकारो गृह्यते, तदन्तस्याङ्गस्य भस्य 'पत्' इत्ययमादेशो भवति। स च 'निर्दिश्यमानस्यादेशा भवन्ति' इति पाच्छब्दस्यैव भवति, न तदन्तस्य सर्वस्य। द्विपदः पश्य द्विपदा। द्विपदे। द्विपदिकां ददाति। त्रिपदिकां ददाति। वैयाघ्रपद्यः ॥

### पदमञ्जरी

*पादः पत्* ॥ *पादिति पादशब्दो लुप्ताकारो गृह्यत इति*। पादयतेः क्विबन्तस्याप्यत्र ग्रहणमिति 'येन विधिस्तदन्तस्य' इत्यत्र *भाष्यकारेणोक्तम्*। तस्मादपिशब्दाध्याहारेणायं ग्रन्थो योज्यः। लुप्ताकारः पादशब्दोऽपि गृह्यते, पादयतिः क्विबन्तोऽपि। 'अङ्गाधिकारे तस्य च तदुत्तरपदस्य च' इति वक्तव्यात्तदन्तस्याङ्गस्येत्यत्रापि तस्य चाङ्गस्येति द्रष्टव्यम्। तदन्ते तु वक्तव्यमस्तीति तस्यैव प्राधान्येनोपन्यासः, तद्दर्शयति—*स चेति*। यद्यपि पाच्छब्देन तदन्तः समुदायः प्रत्याय्यते, तथापि विशेषणत्वेन यो निर्दिश्यते तत्रापि यतः षष्ठी श्रूयते तस्यैवादेशः, न प्रतीयमानस्य समुदायस्येत्यर्थः। *द्विपद इति*। द्वौ पादावस्येति बहुव्रीहिः, 'संख्यासुपूर्वस्य' इत्यन्तलोपः। *द्विपदिकामिति*। 'पादशतस्य संख्यादेः' इति वुन्, लोपश्च। व्याघ्रपाच्छब्दो गर्गादिः ॥

### न्यासः

भस्य ॥ पादः पत् ॥ पाद इति पादशब्दो लुप्ताकारो गृह्यत इति। अथ पादयतेः क्विबन्तस्य यः पाच्छब्दः सम्पद्यते स कस्मान्न गृह्यते? तस्यासम्भवात्। पादयतेर्हि क्विब् 'अन्येभ्योऽपि दृश्यते' इत्यनेन स्यात्? स च 'दृश्यते' इति वचनान्न भवति। यत्र लोके क्विबन्तप्रयोगो दृश्यते तत्र यथा स्यादित्येवमर्थं हि तत्र 'दृश्यते' इत्युक्तम्, न च पादयतेः क्विबन्तस्य प्रयोगो दृश्यते? पादशब्दस्य समास एवाकारो लुप्यते, तेन सामर्थ्यात् तदन्तस्याङ्गस्य कार्यं विज्ञायत इत्याह—तदन्तस्याङ्गस्येत्यादि। यदि तर्हि पाच्छब्दान्तस्याङ्गस्य पदित्ययमादेशो विज्ञायेत, एवं तर्हि 'येन विधिस्तदन्तस्य' इति सर्वस्य तदन्तस्य प्राप्नोतीत्याह—स चेत्यादि। द्विपद इति। द्वौ पादावस्येति बहुव्रीहिः। 'संख्यासुपूर्वस्य' इत्यकारलोपः। द्विपदिकामिति। द्वौ द्वौ पादौ ददातीति



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## वसोः सम्प्रसारणम् ॥ १३१ ॥

वस्वन्तस्य भस्य सम्प्रसारणं भवति । विदुषः पश्य । विदुषा । विदुषे । पेचुषः पश्य । पेचुषा । पेचुषे । पपुषः पश्य ।

आकारलोपे कर्त्तव्ये वसुसम्प्रसारणस्य व्याश्रयत्वादसिद्धत्वं न भवति ।

वसुग्रहणे[1] क्वसोरपि ग्रहणमिष्यते ॥

## वाह ऊठ् ॥ १३२ ॥

'वाहः' इत्येवमन्तस्य भस्य ऊठ् इत्येतत्सम्प्रसारणं भवति ।

### पदमञ्जरी

वसोः सम्प्रसारणम् ॥ *पेचुष इति* । पक्षेः क्वसुः, एत्वाभ्यासलापौ ।

कथं पुनर्द्व्यनुबन्धकस्य क्वसोर्ग्रहणम्? इत्याह—*वसुग्रहण इति* । एतच्च शत्रादेशस्य वसोरुकारानुबन्धकरणाल्लभ्यते, तस्य ह्येतदेव प्रयोजनम्—इह सामान्यग्रहणं यथा स्यादिति; उगित्कार्यस्य स्थानिवद्भावेनैव सिद्धत्वात् ॥

*वाह ऊठ्* ॥ *वाह इति* वहेर्ण्विप्रत्ययान्तस्य ग्रहणम्, ण्विश्च सोपपदाद्विहित इति सामर्थ्यादत्र तदन्तविधिरित्याह—*वाह इत्येवमन्तस्येति* । *सम्प्रसारणं*

### न्यासः

'पादशतस्य' इत्यादिना वुन् । वैयाघ्रपद्य इति । व्याघ्रस्येव पादावस्येति बहुव्रीहिः, 'पादस्य लोपोऽहस्त्यादिभ्यः' इत्यकारलोपः, व्याघ्रपदोऽपत्यमिति गर्गादित्वाद् यञ् ॥

वसोः सम्प्रसारणम् ॥ प्रत्ययग्रहणपरिभाषया तदन्तस्य कार्यं विज्ञायत इत्याह—वस्वन्तस्येत्यादि । विदुष इति । 'विदेः शतुर्वसुः' । पेचुष इति । 'क्वसुश्च' इति लिटः क्वसुः, 'अत एकहल्मध्ये' इत्यादिनैत्त्वाभ्यासलोपौ । पपुष इति । 'आतो लोप इटि च' इत्याकारलोपः । ननु चाकारलोपे कर्त्तव्ये सम्प्रसारणमसिद्धम्, तत् कुतोऽत्राकारलोपः ? इत्याह—आकारलोपे कर्त्तव्य इत्यादि । आकारलोपः सम्प्रसारणे, तत् तु विभक्ताविति व्याश्रयत्वम्, अतो नास्त्यसिद्धत्वम् । ननु च 'एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य' इति, 'तदनुबन्धकग्रहणे नातदनुबन्धकस्य' इति वा न क्वसोरिह ग्रहणेन भवितव्यम्, तत् कथं पपुषः, पेचुष इत्यत्र सम्प्रसारणं भवति ? इत्याह—वसुग्रहण इत्यादि । एतत्तु शत्रादेशस्य वसोरुकारानुबन्धकरणाद् वेदितव्यम् । उकारानुबन्धस्य ह्येतदेव फलम्—इह सामान्येन ग्रहणं यथा स्यात् । ननु चोगित्त्वार्थं तत् स्यात् ? नैतत्; उगित्कार्यस्य स्थानिवद्भावेनैव सिद्धत्वात् ॥

वाह ऊठ् ॥ वाह इति । वहिरयं ण्विप्रत्ययान्तः, स चास्माद् सोपपदादेव

1. 'वसुसम्प्रसारणे' इति पाठान्तरम् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रष्ठौहः । प्रष्ठौहा । प्रष्ठौहे । दित्यौहः । दित्यौहा । दित्यौहे । 'एत्येधत्यूठ्सु' इति वृद्धिः ।

अथ किमर्थमूठ् क्रियते, सम्प्रसारण एव कृते गुणे च 'वृद्धिरेचि' इति वृद्धौ सत्यां सिद्धं रूपं भवति—प्रष्ठौह इति, अनकारान्ते चोपपदे

पदमञ्जरी

*भवतीति* । सम्प्रसारणग्रहणानुवृत्तिं दर्शयति । तेन वकारस्य स्थाने भवति, अन्यथान्त्यस्य स्यात् । उदाहरणेषु 'छन्दसि सहः', 'वहश्च' इति ण्विः ।

*अथेत्यादि* । वाह इत्येतावता प्रकृतं सम्प्रसारणमेव विधेयमिति प्रश्नः । का रूपसिद्धिः ? इत्याह—*सम्प्रसारणे कृत इति* । *गुणे चेति* । कृत इत्यनुषङ्गः । ण्विप्रत्ययमपेक्ष्य प्रत्ययलक्षणेन गुणः । नन्वेवं शालीन्वहतीत्यादावनकारान्त उपपदे शाल्यूह इति न सिध्यति ? तत्राह—*अनकारान्ते चेति* । चकारादकारान्त उपसर्गेऽपीति द्रष्टव्यम् । तेन प्रौह इत्यादावेङि पररूपसङ्ग इति न

न्यासः

ण्विर्विहितः । तेन सामर्थ्याद् तदन्तविधिर्विज्ञायत इत्याह—वाह इत्येवमन्तस्येत्यादि । ऊडित्येतदिति । ठिदयमूकारः । 'एत्येधत्यूठ्सु' इति विशेषणार्थः । सम्प्रसारणं भवतीति । सम्प्रसारणमित्येष विशेषः कुतो लभ्यते ? पूर्वसूत्रात् सम्प्रसारणमित्यस्यानुवृत्तेः । किमर्थं पुनः सम्प्रसारणमनुवर्त्त्यते ? स्थानिनियमार्थम् । यद्येतन्नानुवर्त्त्येत, 'अलोऽन्त्यस्य' इत्यन्त्यस्य स्यात् । सम्प्रसारणमित्यस्मिंस्त्वनुवर्त्तमाने तेनाभिसम्बध्यमानेनोठा यण एव स्थाने 'इग्यणः सम्प्रसारणम्' इति भवितव्यम् । प्रष्ठौह इति । प्रष्ठं वहतीति 'भजो ण्विः' इत्यनुवर्त्तमाने 'वहश्च' इति ण्विः ।

अथ किमर्थमूठ् क्रियते, न 'वाहः' इत्येतावदेव सूत्रं कर्त्तव्यमित्यभिप्रायः । सम्प्रसारण एव कृत इति । पूर्वसूत्रात् सम्प्रसारणग्रहणानुवृत्तेः । गुणे चेति । कृत इति सम्बन्धः । गुणस्तु 'पुगन्तलघूपधस्य च' इति लुप्तेऽपि ण्वौ प्रत्ययलक्षणेन । ननु च 'अङ्गवृत्ते पुनरङ्गवृत्तावविधिर्निष्ठितस्य' इति सम्प्रसारणे कृते गुणेन न भवितव्यम् ? 'निष्ठितस्य' इति वचनाददोषः । निष्ठा हि शब्दस्य परिसमाप्तिः, सा च तदा भवति यदा शब्दस्य प्रयोगार्हता भवति । न च यावद् गुणादिसंस्कारो न क्रियते तावदस्य प्रयोगार्हता भवति । तस्मात् कृतेऽपि सम्प्रसारणे भवत्येव गुणः, तत्रैतत् स्यात् । यद्यूड् न क्रियते, तदा शालिं वहति, दितिं वहति शाल्यूहो दित्यूह इत्येवमाद्यनकारान्ते शालिंदितिशब्द उपपदे वहेर्ण्विप्रत्यये विहिते सति न सिध्यतीत्यत आह—अनकारान्ते चोपपद इत्यादि । 'वहश्च' इत्यनेन 'छन्दसि सहः' इत्यतोऽत्र छन्दोग्रहणानुवृत्तेश्छन्दस्येव ण्विर्विधीयते, दृष्टार्थविधिश्छन्दसि, अकारान्त एव चोपपदे प्रष्ठादौ वहेश्छन्दसि ण्विर्दृश्यते न त्वकारान्ते शाल्यादौ । कथं पुनरनेन बहिरङ्गपरिभाषा ज्ञाप्यते ?

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



वहेर्ण्विर्न दृश्यते ? ज्ञापनार्थम् । एतज्ज्ञापयति—भवत्येषा परिभाषा 'असिद्धं बहिरङ्गमन्तरङ्गे' इति । तस्यां हि सत्यां बहिरङ्गस्य सम्प्रसारणस्यासिद्धत्वाद् अन्तरङ्गो गुणो न स्यात् ॥

श्वयुवमघोनामतद्धिते ॥ १३३ ॥

श्वन्, युवन्, मघवन्—इत्येतेषामङ्गानामतद्धिते प्रत्यये परतः सम्प्रसारणं भवति । शुनः, शुना, शुने । यूनः, यूना, यूने । मघोनः, मघोना, मघोने ।

अतद्धित इति किम् ? शौवं मांसम्[1] । यौवनं वर्त्तते । माघवनः स्थालीपाकः । शुनो विकारे 'प्राणिरजतादिभ्योऽञ्', द्वारादित्वादैजागमः ।

पदमञ्जरी

चोदनीयम् । *ज्ञापनार्थमिति* । कथमेतज्ज्ञापकम् ? इत्याह—*तस्यां हि सत्यामिति* । बहिरङ्गस्य बहिरङ्गत्वं बहिर्भूताजादिप्रत्ययापेक्षत्वात्, अन्तर्भूताण्यपेक्षत्वाद् गुणोऽन्तरङ्गः ॥

*श्वयुवमघोनामतद्धिते* ॥ *शौवमिति* । 'नस्तद्धिते' इति टिलोपः । *यौवनमिति* । यूनो भाव इति 'हायनान्तयुवादिभ्योऽण्', 'अन्' इति प्रकृतिभावः । मघवा देवतास्य *माघवनः* ।

न्यासः

इत्याह—तस्यां हीत्यादि । बहिरङ्गत्वं पुनः सम्प्रसारणस्य बाह्याजादिप्रत्ययनिमित्तां भसंज्ञामाश्रित्य प्रवृत्तत्वात् । गुणस्य त्वन्तरङ्गत्वम् ; अबाह्यप्रत्यये प्रवृत्तत्वात् । किं पुनरस्याः परिभाषाया ज्ञापनेन प्रयोजनम् ? पचावेदम्, यजावेदमित्यत्रासिद्धत्वं बहिरङ्गलक्षणस्य । अतोऽन्तरङ्गलक्षणमेत ऐत्वं न भवति; बहिरङ्गलक्षणत्वाद् गुणस्य । बहिरङ्गत्वं तु पदद्वयाश्रितत्वाद् । ऐत्वस्य त्वन्तरङ्गत्वं विपर्ययात् ॥

श्वयुवमघोनामतद्धिते ॥ यून इति । सम्प्रसारणे कृते परपूर्वत्वे च सवर्णदीर्घत्वम् । शौवमिति । 'नस्तद्धिते' इति टिलोपः । यौवनमिति । यूनो भाव इति 'हायनान्तयुवादिभ्योऽण्' इत्यण्, 'अन्' इति प्रकृतिभावाट् 'टेः' इति टिलोपाल्लोपौ न भवतः । माघवनमिति । मघवा देवतास्येति 'सास्य देवता' इत्यण्, पूर्ववत् प्रकृतिभावः । शौवमित्येतद् व्युत्पादयितुमाह—शुनो विकार इत्यादि । युवशब्दस्य

---

१. मुद्रितपुस्तके तु शौवनं मांसमिति पाठः । शौवमिति पाठे शुनः संकोच उपसंख्यानमिति संकोचेऽभिधेये एव टिलोपः स्यात् । शौवः सङ्कोचः । शौवनोऽन्यः । न्यासकारस्तु वार्त्तिकं नाजीगणदिति प्रतीयते । ( द्र० ६. ४. १४४ ) (प्र० सं० स०)

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



श्वादीनामेतत्सम्प्रसारणं नकारान्तानामिष्यते । इह न भवति—युवतीः पश्य । मघवतः, मघवता, मघवते । तदर्थमुत्तरत्र योगविभागं कुर्वन्ति—'अल्लोपः', 'अनः'; अन इत्युभयोः शेष इति ॥

अल्लोपोऽनः ॥ १३४ ॥

'अन्' इत्येवमन्तस्य भस्य अकारलोपो भवति । राज्ञः पश्य । राज्ञा । राज्ञे । तक्ष्णः पश्य । तक्ष्णा । तक्ष्णे ।

अनो नकारान्तस्यायं लोप इष्यते । इह न भवति—राजकीयमिति ॥

पदमञ्जरी

प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणाद् युवतिशब्दस्यापि सम्प्रसारणप्रसङ्गः, तथा मघवत इत्यादौ 'मघवा बहुलम्' इति त्रादेशे कृते एकदेशविकृतस्यानन्यत्वात्प्रसङ्गः ? इत्याह—*श्वादीनामित्यादि* । कथमेतल्लभ्यते ? इत्याह—*एतदर्थमिति* । *अन इत्युभयोः शेष इति* । न त्वनन्तरस्यैव; योगविभागसामर्थ्यात् । न चैवमपि मघवतेत्यादावेकदेशविकृतस्यानन्यत्वात्प्रसङ्गः; सामान्यातिदेशे विशेषानतिदेशात् ॥

*अल्लोपोऽनः* ॥ अदिति पृथक् पदं लुप्तविभक्तिकम्, तेन 'आतो धातोः' इत्यादौ केवलस्य लोपशब्दस्य सम्बन्धः । *राजकीयमिति* । 'गर्त्तोत्तरपदाच्छः' इत्यधिकारे 'राज्ञः क च' इति छः, ककारश्चान्तादेशः । अत्रैकदेशविकृतस्यानन्यत्वात्प्रसङ्गः ॥

न्यासः

तिप्रत्ययान्तस्यापि 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति सम्प्रसारणं प्राप्नोति । मघवन्नित्यस्यापि त्रित्यादेशे कृते 'एकदेशविकृतमनन्यवद्भवति' इति तकारान्तस्यापि प्राप्नोति । तत् कथं न भवति ? इत्याह—श्वादीनामित्यादि ।

तदर्थमिति । नकारान्तानामेव यथा स्यात्, अनकारान्तानां मा भूदित्येवमर्थम् । अन इत्युभयोः शेष इति । 'अनः' इत्यस्योभयोर्योगयोः शेषत्वेऽवयवत्वे सत्यन् इत्यनेन सम्प्रसारणशेषस्यातिदेश इति न भवति ॥

अल्लोपोऽनः ॥ तपरकरणम् 'नञ्समासोऽयम्' इत्याशङ्कानिरासार्थम् ।

राजकीय इति । 'गर्त्तोत्तरपदाच्छः' इति छे प्रकृते 'राज्ञः क च' इति छः, ककारश्चान्तादेशः । अत्रापि 'एकदेशविकृतमनन्यवद्भवति' इति ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## षपूर्वहन्धृतराज्ञामणि ॥ १३५ ॥

षकारपूर्वो योऽन् हनो धृतराज्ञश्च तस्याकारलोपो भवति अणि परतः । औक्ष्णः । ताक्ष्णः[1] । भ्रौणघ्नः । धार्त्तराज्ञः ।

षपूर्वहन्धृतराज्ञामिति किम् ? सामनः । वैमनः । 'अन्' इति प्रकृतिभावेनाल्लोपटिलोपावुभावपि न भवतः । अणीति किम् ? ताक्षण्यः ॥

## विभाषा ङिश्योः ॥ १३६ ॥

### पदमञ्जरी

षपूर्वहन्धृतराज्ञामणि ॥ किमिदं नियमार्थम्, आहोस्विद्विध्यर्थम् ? कथं चेदं नियमार्थम्, कथं वा विध्यर्थम् ? यद्यन्निति प्रकृतिभावोऽनन्तरस्यैव टिलोपस्य, तदाल्लोपस्य प्रकृतिभावेनानिवर्त्तितत्वात्पूर्वेणैव सिद्धे नियमार्थम्; अथाविशेषेणाल्लोपटिलोपयोर्द्वयोरपि प्रकृतिभावस्ततो विध्यर्थम् । तत्रापि नियमपक्षे यदि तावदेवं नियमः—षपूर्वादीनामण्येवेति, तत इह न स्यात्—ताक्षण्यः; सामनादौ तु प्रसङ्गः । अथाप्येवं नियमः—षपूर्वादीनामेवाणीति भवेत्, इह न स्यात्—सामनः, वैमनः; ताक्षण्य इत्यत्र तु प्रसङ्गः । अथाप्युभयनियमः स्यात्, षपूर्वादीनामेवाणि, षपूर्वादीनामण्येवेति; एवमपि सामनः, वैमनः, ताक्षण्य इति सिद्धम्; सामसु साधुः सामन्योऽत्र प्राप्नोति । तस्मादुभयोः प्रकृतिभाव इत्याश्रित्य विध्यर्थमिदमित्याह—*तस्याकारस्य लोपो भवतीति* । *ताक्ष्ण इति* । इदमर्थेऽण्, अपत्ये तु कारिलक्षणो ण्यो भवति । *उभावपि न भवत इति* ।

टिलोपमात्रव्यावृत्तिर्निषेधेनापि सिध्यति ।
तत्प्रकृत्येति वचनान्निवृत्तिरुभयोरपि ॥

### न्यासः

षपूर्वहन्धृतराज्ञामणि ॥ 'अन्' इति प्रकृतिभावेनाल्लोपस्य निवृत्तिर्मा भूदित्येवमर्थं वचनम् । औक्ष्णः, ताक्ष्ण इति । उक्षन्, तक्षन्-इत्येताभ्यामपत्यार्थेऽण् । भ्रौणघ्न इति । भ्रूणं हतवानिति 'ब्रह्मभ्रूणवृत्रेषु हनः' इति क्विप्, तदन्तादण्, 'हो हन्तेर्ञ्णिन्नेषु' इति कुत्वम् । धार्त्तराज्ञ इति । धृतराजशब्दाद् बहुव्रीहेरण् ।

सामनः, वैमन इति । 'तस्येदम्' इत्यण् । उभावपि न भवत इति । अल्लोपटिलोपावुभावपि चापेक्ष्य प्रकृतिभावस्य विधानात् । ताक्षण्य इति । 'कुर्वादिभ्यो ण्यः' इति ण्ये प्रकृते सेनान्तलक्षणकारित्वाण्ण्यप्रत्ययः, 'ये चाभावकर्मणोः' इति प्रकृतिभावः ॥

---

1. 'वार्त्रघ्नः' इत्यधिकं पुस्तकान्तरेषु ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



ङौ परतः शीशब्दे च अनो विभाषा अकारलोपो भवति। राज्ञि, राजनि। साम्नि, सामनि। साम्नी, सामनी॥

न संयोगाद्वमन्तात्॥ १३७॥

वकारमकारान्तात्संयोगादुत्तरस्यानोऽकारस्य लोपो न भवति। पर्वणा, पर्वणे। अथर्वणा, अथर्वणे[1]।

संयोगादिति किम्? प्रतिदीव्ना। प्रतिदीव्ने। साम्ना, साम्ने। वमन्तादिति किम्? तक्ष्णा। तक्ष्णे॥

अचः॥ १३८॥

'अचः' इत्ययमञ्चतिर्लुप्तनकारो गृह्यते, तदन्तस्य भस्य अका-

पदमञ्जरी

*विभाषा ङिश्योः॥* 'जसः शी', 'औङ आपः', 'नपुंसकाच्च' इति योऽयं शीशब्दस्तस्येह ग्रहणम्, न 'जश्शसोः शिः' इत्यस्य ह्रस्वान्तस्य; तत्र संज्ञाया अभावात्॥

न *संयोगाद्वमन्तात्॥* स्याद्वकारमकाराभ्यां संयोगस्य विशेषणात् तदन्तविधिरत्रेति विस्पष्टार्थमन्तग्रहणम्॥

*अचः॥ अच इत्ययमञ्चतिर्लुप्तनकारो गृह्यत इति।* प्रत्याहारग्रहणं तु न भवति, यदि स्याद्, अजन्तस्याङ्गस्य लोपो भवतीत्यर्थः स्यात्, ततश्च 'आतो

न्यासः

विभाषा ङिश्योः॥ शीशब्दे चेति। एतेन 'नपुंसकाच्च' इति यो विहितः शीशब्दस्तस्येदं ग्रहणम्, न तु 'जश्शसोः शिः' इति यो विहितः शिशब्दस्तस्येदं ग्रहणमिति दर्शयति। कुतः पुनरेतज्ज्ञायते? शिशब्दे भसंज्ञाया अभावात्॥

न संयोगाद् वमन्तात्॥ प्रतिदीव्नेति। 'हलि च' इति दीर्घः।

अथान्तग्रहणं किमर्थम्, न 'वमः' इत्येवोच्येत, वकारमकाराभ्यां संयोगेन विशिष्यमाणेन च तदन्तविधिर्भवतीत्यन्तरेणाप्यन्तग्रहणं तदन्तविधिर्लभ्यत एव? सत्यमेतत्, विस्पष्टार्थमन्तग्रहणम्॥

अचः॥ अच इत्ययमञ्चतिर्लुप्तनकारो गृह्यत इति। कुत एतत्, प्रत्याहारः कस्मान्न गृह्यते? अल्लोप इत्यनुवृत्तेर्न शक्यते प्रत्याहारो ग्रहीतुम्। प्रत्याहारग्रहणे सति तेनाकारो विशिष्येत, तथा चानर्थकं प्रत्याहारग्रहणं स्यात्। न ह्यकारोऽच्त्वं व्यभिचरति। ननु चाङ्गं प्रकृतम्, तत् प्रत्याहारेण विशिष्यते—अजन्तस्याङ्गस्येति?

---

१, 'चर्मणा, चर्मणे' इति, 'वर्मणा, वर्मणे' इति चाधिकं क्वचित्।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



रस्य लोपो भवति । दधीचः पश्य। दधीचा, दधीचे । मधूचः पश्य । मधूचा, मधूचे ॥

उद ईत् ॥ १३९ ॥

उद उत्तरस्याच ईकारादेशो भवति । उदीचः । उदीचा । उदीचे ॥

आतो धातोः ॥ १४० ॥

आकारान्तस्य धातोर्भस्य लोपो भवति । कीलालपः पश्य । कीलालपा, कीलालपे । शुभंयः पश्य । शुभंया, शुभंये ।

आत इति किम् ? नियः, निये । धातोरिति किम् ? खट्वाः पश्य । मालाः पश्य ।

'आतः' इति योगविभागः, तेन 'क्त्वो ल्यप्', 'हलः श्नः शानच्'—इत्येवमादि सिद्धं भवति ॥

मन्त्रेष्वाङ्यादेरात्मनः ॥ १४१ ॥

पदमञ्जरी

धातोः' इत्येतदनर्थकं स्यात् । यच्च 'द्युप्रागपागुदक्प्रतीचो यत्' इति निर्दिशति, यच्च 'चौ' इत्याह, ततो ज्ञायते—अञ्चतेरेवात्र ग्रहणमिति । एतेन पचाद्यचोऽप्यग्रहणम् ॥

*आतो धातोः ॥ एवमादि सिद्धं भवतीति ।* सूत्राद्बहिरस्मदादिप्रयोगेऽपीति भावः । सूत्रे तु सौत्रो निर्देश इत्येव सिद्धम् ॥

न्यासः

न; एवं सत्यजन्तस्याल्लोपो भवतीत्येष सूत्रार्थः स्यात् । तथा च 'यस्येति च' इति लोपोऽनर्थकः स्यात्; अनेनैव सिद्धत्वात् । अपि च 'द्युप्रागपागुदक्प्रतीचो यत्' इत्येवमादिर्निर्देशो लिङ्गं नात्र प्रत्याहारग्रहणस्य । यदि हि प्रत्याहारग्रहणं स्याद्, अत्राञ्चतेर्ग्रहणं न स्यात्, न ह्येतदजन्तमङ्गम् । अत एव निर्देशात् पचाद्यजपि न गृह्यते । न ह्येतत् पचाद्यजन्तमङ्गम् । दधीच इति । दध्यञ्चतीति ऋत्विगादिना क्विन्, 'अनिदिताम्' इत्यादिनानुनासिकलोपः, 'चौ' इति दीर्घः ॥

उद ईत् ॥ आतो धातोः ॥ कीलालप इति । 'विजुपेच्छन्दसि' इति विचि प्रकृते 'आतो मनिन्क्वनिब्वनिपश्च' इति विच् । निय इति । क्विप्, इयङ् ॥

मन्त्रेष्वाङ्यादेरात्मनः ॥ आङिति तृतीयैकवचनस्यैषा संज्ञा पूर्वाचार्यैर्विहिता ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



मन्त्रेषु आङि परत आत्मन आदेर्लोपो भवति । त्मना देवेभ्यः । त्मना सोमेषु ।

मन्त्रेष्विति किम् ? आत्मना कृतम् । आङोति किम् ? यदात्मनस्तन्नो वरिष्ठा ।

॥ आङोऽन्यत्रापि दृश्यते ॥ । त्मन्या समञ्जन् ॥

ति विंशतेर्डिति ॥ १४२ ॥

भस्य विंशतेस्तिशब्दस्य डिति प्रत्यये परतो लोपो भवति । विंशत्या क्रीतः विंशकः । विंशं शतम् । विंशतेः पूरणो विंशः । एकविंशः ।

पदमञ्जरी

*मन्त्रेष्वाङ्यादेरात्मनः॥* आङिति पूर्वाचार्यप्रक्रियया तृतीयैकवचनस्य ग्रहणम्। *आङोऽन्यत्रापि दृश्यते इति।* तस्मादाङीति न वक्तव्यमित्यर्थः। 'आतः' इत्यनुवृत्तेरादेरित्यपि शक्यमकर्त्तुम्। *त्मन्येति।* सप्तम्येकवचनस्य याशब्द आदेशः॥

*ति विंशतेर्डिति* ॥ तिग्रहणं किम्? अन्त्यस्य मा भूत्। सिद्धोऽन्त्यस्य लोप उत्तरसूत्रेण? सिद्धे सत्यारम्भो नियमार्थः स्यात्—डित्येव यथा स्यादन्यत्र यस्येतिलोपो मा भूदिति। अथापि विधिनियमसम्भवे विधेरेव ज्यायस्त्वम्? एवमप्यारम्भसामर्थ्यात् 'अलोऽन्त्यस्य' इत्येतस्मिन् बाधिते समुदायस्यैव षष्ठीनिर्दिष्टस्य लोपप्रसङ्गः, न त्वसंशब्दितस्य तिशब्दस्य लोपः सिध्यति। तिग्रहणे तु सति तत्सामर्थ्याद् 'अलोऽन्त्यस्य' इत्यस्यानुपस्थानात्सर्वस्य तिशब्दस्य भवति। विंशम्, विंशकमित्यादौ तिलोपे कृते 'अतो गुणे' पररूपत्वम्। यस्येतिलोपस्तु न भवति; तिलोपस्यासिद्धत्वात्॥

न्यासः

आङोऽन्यत्रापि दृश्यत इति। मन्त्रेष्विति बहुवचननिर्देशादेतल्लभ्यते। बहुवचननिर्देशेन ह्ययमर्थः सूचितः—बहुविषयोऽयं निर्देश इति। एवञ्च बहुविषयो भवति यद्याङोऽन्यत्रापि क्वचिद् भवति, नान्यथा। *त्मन्यासमञ्जन्निति।* सप्तम्येकवचने। अत्रादिलोपः।

आदिग्रहणमुत्तरार्थम्। इह तु पूर्वसूत्रात् 'आतः' इत्यनुवृत्तेरन्तरेणाप्यादिग्रहणमादेरेव लोपो भवतीति शक्यते विज्ञातुम्॥

ति विंशतेर्डिति ॥ विंशक इति। 'विंशतित्रिंशद्भ्यां ड्वुनसंज्ञायाम्' इति ड्वुन्, तिशब्दस्य लोपे कृते 'अतो गुणे' पररूपत्वम्। विंशं शतमिति। विंशतिरधिकाऽस्मिन्निति 'शदन्तविंशतेश्च' इति डप्रत्ययः। विंशः, एकविंश इति। 'तस्य पूरणे डट्'।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



डितीति किम् ? विंशत्या ॥

## टेः ॥ १४३ ॥

टिसंज्ञकस्य डिति प्रत्यये परतो लोपो भवति । कुमुद्वान् । नड्वान् । वेतस्वान् । उपसरजः । मन्दुरजः । त्रिंशता क्रीतः त्रिंशकः । डित्यभस्याप्यनुबन्धकरणसामर्थ्यात् टिलोपो भवति ॥

## नस्तद्धिते ॥ १४४ ॥

**पदमञ्जरी**

टेः ॥ *डित्यभस्यापीति* । श्रवणार्थस्तु डकारो न भवति, ड्मतुपि तावद् 'देशे तन्नाम्नि' इति वर्त्तते, न च डकारवता प्रत्ययेन तन्नामा गम्यते देशः । डेऽपि 'प्रावृट्शरत्कालदिवां जे' इति निर्दिष्टत्वान्न श्रवणार्थो डकारः । *मन्दुरज इति* । 'ङ्यापोः संज्ञाछन्दसोर्बहुलम्' इति ह्रस्वः ॥

*नस्तद्धिते* ॥ *तेषामिति* । 'अन्' इति प्रकृतिभावः प्राप्त इत्यनुषङ्गः । पीठेन सर्पतीति पीठसर्पी । कलापिशब्दात्प्रोक्तार्थे कलापिनोऽण्, 'छन्दोब्राह्मणानि च तद्विषयाणि', 'तदधीते' इत्यण्, प्रोक्ताल्लुक्, *कालापाः* । एवं *कौथुमाः* । किं पुनः

**न्यासः**

तिग्रहणमन्त्यस्य मा भूदित्येवमर्थम् ॥

टेः ॥ कुमुद्वानित्यादि । कुमुदनडवेतसेभ्यश्चातुरर्थिको ड्मतुप् । उपसरज इति । 'सप्तम्यां जनेर्डः' । एवं मन्दुरज इत्यत्रापि । अत्र हि 'ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्' इति पूर्वपदस्य ह्रस्वत्वम् । त्रिंशक इति । पूर्ववत् ड्वुन् । ननु च 'भस्य' इत्यनुवर्त्तते, न च ड्मतुपि डप्रत्यये च धातोर्विहिते पूर्वस्य भसंज्ञा प्राप्नोति, उभयोरनजादित्वात् अस्वादित्वाच्च यथायोगम्, तत् कथमत्र लोपो भवति ? इत्याह—डित्यभस्यापीत्यादि । यदि टिलोपो न स्यात् तदा डित्त्वमनर्थकं स्यात् । अथैवं कस्मान्न विज्ञायते—प्रयोजनाभावादत्रेत्संज्ञैव न भवतीति, तस्याञ्च सत्यां श्रवणार्थमेव डकारोच्चारणमिति ? अशक्यमेवं विज्ञातुम् । एवं तर्हि 'प्रावृट्शरत्कालदिवां जे' इति कृतटिलोपस्य जनेर्निर्देशो नोपपद्येत ? तस्मादत एव निर्देशादवसीयते—भवति धातुप्रत्ययडकारस्येत्संज्ञेति । तस्याञ्चासत्यां यदि टिलोपो न स्यात्, तस्यास्तदा वैयर्थ्यं स्यात् । ड्मतुपोऽपि यदि डकारस्य लोपो न स्यात्, तदन्तेन तन्नामादेशो न गम्येत, तत्र च 'देशे तन्नाम्नि' इति वर्त्तते । तस्मादवश्यं तत्रापि डकारस्येत्संज्ञया भवितव्यम्, तस्यां च तत्सामर्थ्याट्टिलोपेन ॥

नस्तद्धिते ॥ सात्वत इति । सत्वतोऽपत्यमित्यण् । नान्तस्य टिलोप इत्यादि ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



नकारान्तस्य भस्य टेर्लोपो भवति तद्धिते परतः । आग्निशर्मिः । औडुलोमिः । बाह्वादित्वादिञ्प्रत्ययः ।

न इति किम् ? सात्वतः । तद्धित इति किम् ? शर्मणा । शर्मणे ।

❀ नान्तस्य टिलोपे सब्रह्मचारिपीठसर्प्पिकलापिकुथुमितैतिलिजाजलिलाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणामुपसंख्यानं कर्तव्यम् ❀ । अत्र ये इन्नन्तास्तेषाम् 'इनण्यनपत्ये' इति प्रकृतिभावः प्राप्तः, ये त्वन्नन्तास्तेषाम् 'अन्' इति । सब्रह्मचारिण इमे साब्रह्मचाराः । पीठसर्पिणः—पैठसर्पाः । कलापिना प्रोक्तमधीयते कालापाः । कुथुमिनः—कौथुमाः । तैतिलिजाजलिनावाचार्यौ, तत्कृतो ग्रन्थ उपचारात् तैतिलिजाजलिशब्दाभ्यामभिधीयते, तं ग्रन्थमधीयते तैतिलाः, जाजलाः । शैषिकेष्वर्थेषु वृद्धत्वादत्र छः प्राप्नोति । एवं लाङ्गलाः । शैलालाः । शिखण्डिनः—शैखण्डाः । सूकरसद्मनः—सौकरसद्माः । सुपर्वणः—सौपर्वाः ।

### पदमञ्जरी

कारणमुपचार आश्रीयते, न पुनर्मुख्यार्थवृत्तिभ्याम् 'तेन प्रोक्तम्' इत्याद्यर्थेऽण् क्रियते ? इत्यत आह—*शैषिकेष्विति* । केचित्तितलिशब्दं पठन्ति—तिलानां तलं तितलम्, पृषोदरादिः, तदस्यास्तीति तितली । *एवं लाङ्गला इति* । उपचारादि सर्वमतिदिशति । उत्तरेषु त्रिष्विदमर्थेऽण् ।

### न्यासः

किं पुनः कारणं न सिध्यति यत उपसंख्यानं कर्त्तव्यम् ? इत्याह—**अत्र य इन्नन्ता इत्यादि** । **ये त्वन्नन्तास्तेषाम् 'अन्' इति** । **प्रकृतिभावः प्राप्त इति** प्रकृतेन सम्बन्धः । **साब्रह्मचारा इति** । 'तस्येदम्' इत्यण् । **पीठसर्पिण इति** । **इम इति** प्रकृतेन सम्बन्धः । **पैठसर्पा इति** । पूर्ववदण् । **कालापा इति** । पूर्ववत्प्रोक्तार्थे 'कलापिवैशम्पायनान्तेवासिभ्यश्च' इति वैशम्पायनान्तेवासित्वाण् णिनिप्रत्यये प्राप्ते तदपवादः 'कलापिनोऽण्', ततः 'तदधीते तद्वेद' इत्यण्, तस्य 'प्रोक्ताल्लुक्' इति लुक्, 'छन्दोब्राह्मणानि च तद्विषयाणि' इत्यध्येतृवेदितृविषयता । **कौथुमा इति** । 'तस्येदम्' इत्यण् । **तत्कृतो ग्रन्थ उपचारादित्यादि** । उपचारस्य तु तत्कृतत्वमेवात्र निबन्धनम् । भवति हि तत्कृतत्वे तदुपचारः, यथा—सर्वमिदं पुराणं कर्म शुभाशुभं भुज्यत इति । अथ कस्मादुपचार आश्रीयते, न 'अधिकृत्य कृते ग्रन्थे' इत्येवमादिशैषिकार्थविवक्षायां तद्धित एव क्रियेत ? इत्यत आह—**शैषिकेष्वर्थेष्वित्यादि** । तैतिलिजाजलिशब्दौ वृद्धसंज्ञकौ, तयोर्वृद्धत्वात्

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



❀ अश्मनो विकार उपसंख्यानम् ❀। अश्मनो विकार आश्मः। आश्मनोऽन्यः।

❀ चर्मणः कोश उपसंख्यानम् ❀। चार्मः कोशः। चार्मणोऽन्यः।

❀ शुनः सङ्कोच उपसंख्यानम् ❀। शौवः सङ्कोचः। शौवनोऽन्यः।

❀ अव्ययानां च सायम्प्रातिकाद्यर्थमुपसंख्यानम् ❀। के पुनः सायम्प्रातिकादयः? येषामव्ययानामविहितष्टिलोपः, प्रयोगे च दृश्यते, ते सायम्प्रातिकप्रकारा ग्रहीतव्याः। सायम्प्रातर्भवः सायम्प्रातिकः। पौनःपुनिकः। बाह्यः। कौतस्कुतः। 'कालाट्ठञ्' इति ठञ्प्रत्ययः।

**पदमञ्जरी**

*एवमाश्मन* इत्यत्रापि। *चार्म* इत्यत्र विकारे। *चार्मण* इत्यत्रेदमर्थे, विकारेऽपि कोशादन्यत्र।

*शौव इति*। तस्येदमित्यण्, अत्र परत्वाद्वृद्धिप्राप्तौ द्वारादित्वात्तत्प्रतिषेधे ऐजागमे च कृते टिलोपः। *शौवनोऽन्य इति*। विकारावयवयोस्तु प्राणित्वादञिति प्रकृतिभावाभावात् शौव इत्येव भवति।

*के पुनरिति*। प्रातिपदिकगणे पाठाभावात्प्रश्नः। आदिशब्दस्य प्रकारवचनत्वादाकृतिगणोऽयमित्युत्तरम्। *सायम्प्रातिकमिति*। 'यथाकथञ्चित्कालवृत्तेरपि भवति' इत्युक्तत्वात्कालसमुदायेऽपि ठञ् एव भवति, 'येषां च विरोधः शाश्व-

**न्यासः**

शैषिकेष्वर्थेषु विधीयमानोऽसौ तद्धितः 'वृद्धाच्छः' इति छः प्रसज्येत। तस्मिंश्च सति तैतिलाः, जाजला इति न सिध्येत्, तस्मान्मा भूदेष दोष इत्युपचार आश्रितः। एवमित्यनेनानन्तरोक्तां व्युत्पत्तिं दर्शयति छप्रत्ययनिवृत्तये। लाङ्गलिशब्दस्याप्येवं व्युत्पत्तिः कर्त्तव्या। लाङ्गलिः = आचार्यः, तत्कृतो ग्रन्थ उपचारात् लाङ्गलिशब्देनाभिधीयते। लाङ्गला इति। शिखण्डा इत्याद्युदाहरणत्रयेऽपि 'तस्येदम्' इत्यण्।

आश्म इति। अत्रापि 'तस्य विकारः' इत्यण्। आश्मनोऽन्यत्रेति। अत्रापि 'तस्येदम्' इत्यत्रार्थाभिधाने। चार्म इत्यत्रापि 'तस्येदम्' इत्यणेव।

चार्मणोऽन्य इति। चर्मणो विकार इति।

शौव इति। 'द्वारादीनाञ्च' इत्यैजागमः।

सायम्प्रातिकादयः प्रातिपदिकेषु न पठ्यन्त इत्यतः पृच्छति—के पुनः सायम्प्रातिकादय इति। सायम्प्रातिकप्रकारा इत्यनेन प्रकारवचनतामादिशब्दस्य दर्शयति।

ननु च 'सायञ्चिरम्' इत्यादिनाव्ययेभ्यष्ट्युट्युलौ भवितव्यम्, तत् कथं ठञ्

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


टचुटचुलौ तु नेष्येते । आरातीयः, शाश्वतिकः, शाश्वतः—इत्येवमादिषु न दृश्यते टिलोपः ॥

अह्नष्टखोरेव ॥ १४५ ॥

'अहन्' इत्येतस्य टखोरेव परतष्टिलोपो भवति । द्वे अहनी समाहृते द्व्यहः । त्र्यहः । द्वे अहनी अधीष्टो भृतो भूतो भावी वा द्व्यहीनः । त्र्यहीनः । अह्नां समूहः क्रतुः अहीनः ।

॥ अह्नः समूहे खो वक्तव्यः ॥ । सिद्धे सत्यारम्भो नियमार्थः ।

पदमञ्जरी

दिकः' इति निर्देशात् 'इसुसुक्तान्तात्कः' इति कादेशाभावः । *शाश्वतमिति* । *भाष्यकारवचनादण् प्रत्ययः* ॥

*अह्नष्टखोरेव* ॥ *द्व्यह इति* । 'न सङ्ख्यादेः समाहारे' इति अह्नादेशस्य प्रतिषेधः । *द्व्यहीन इति* । तद्धितार्थे द्विगुः, 'समायाः खः', द्विगोर्वा', 'रात्र्यहःसंवत्सराच्च' इति खः ।

*आह्निकमिति* । आर्हीयष्ठक् ।

न्यासः

भवति ? इत्याह—टचुटचुलौ तु नेष्येते इति । अनभिधानात् । अत्र च सर्वत्रोपसंख्यानशब्दस्य प्रतिपादनमर्थः । तत्रेदं प्रतिपादनम्—मन्त्रेष्वित्यादेः सूत्रादादिग्रहणमनुवर्त्तते, तद्धितग्रहणञ्चेदमर्थमेव कृतम् । तदनुवृत्तौ चायमर्थो भवति—नान्तादीनां तद्धिते परतष्टिलोपो भवतीति । आदिशब्देन सायम्प्रातिकादयो गृह्यन्ते । तेन सर्वत्र टिलोपः सिद्धो भवति । इत्येवमादिषु न दृश्यते टिलोप इति । एतेनारातीयः—इत्येवमादीनामसायम्प्रातिकत्वं दर्शयति । अथ शाश्वत इत्यत्र कथमण्, यावता 'कालाट्ठञ्' इति ठञा भवितव्यम् ? नैतदस्ति; 'कालाट्ठञ्' इत्यत्र 'कालात्' इति योगविभागः कर्त्तव्यः, तेन शश्वच्छब्दाद् यथाविहितमण् भवति । न च योगविभागेन ठञ् बाध्यते; 'येषाञ्च विरोधः शाश्वतिकः' इति निपातनात् । तेन पक्षे ठञपि भवत्येव । टचुटचुलौ तु शाश्वतशब्दान्नेष्येते, अनभिधानादेव । अथ शाश्वतिक इत्यत्र 'इसुसुक्तान्तात् कः' इति ठञः कादेशः कस्मान्न भवति ? अत एव निर्देशात् ॥

अह्नष्टखोरेव ॥ द्व्यह इति । 'तद्धितार्थोत्तरपदसमाहारे च' इति समासः, 'राजाहःसखिभ्यष्टच्' इति टच् समासान्तः । अत्र 'अह्नोऽह्न एतेभ्यः' इत्यह्नादेशः प्राप्तः । स च 'न संख्यादेः समाहारे' इति प्रतिषेधान्न भवति । द्व्यहीन इति । तद्धितार्थे 'समायाः' इति वर्त्तमाने 'रात्र्यहःसंवत्सराच्च' इति खः ।

केन पुनरहीन इत्यत्र खप्रत्ययः ? इत्याह—अह्नः समूहे खो वक्तव्य इति । ननु

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


इह मा भूत्—अह्ना निर्वृत्तमाह्निकम् ।

एवकारकरणं विस्पष्टार्थम् । अह्न एव टखोः—इत्येवं नियमो न भविष्यति; 'आत्माध्वानौ खे' इति प्रकृतिभावविधानात् ।।

ओर्गुणः ।। १४६ ।।

उवर्णान्तस्य भस्य गुणो भवति तद्धिते परतः । बाभ्रव्यः । माण्डव्यः । शङ्कव्यं दारु । पिचव्यः कार्पासः । कमण्डलव्या मृत्तिका । परशव्यमयः । औपगवः । कापटवः ।

'ओरोत्' इति वक्तव्ये गुणग्रहणं संज्ञापूर्वको विधिरनित्यो यथा

पदमञ्जरी

*एवकारकरणं विस्पष्टार्थमिति* । विपरीतनियमनिरासार्थं तु न भवतीत्याह—*अह्न एवेति* । विपरीते हि नियमे अन्यस्य खे टिलोपप्रसङ्गाद् 'आत्माध्वानौ खे' इति प्रकृतिभावविधानमनर्थकं स्यादिति भावः ।।

*ओर्गुणः* ।। बाभ्रव्यादौ गोत्रे यञ् । शङ्कव्यादौ प्राक्क्रीतीयः 'उगवादिभ्यो यत्' । *औपगवादावपत्येऽण्* ।

*संज्ञापूर्वको विधिरित्यादि* । *भाष्येऽनुक्तमपि* प्रयोगो बाहुल्यादुक्तम् । तद्धित-इत्येव—'वोतो गुणवचनात्', पट्वी ।।

न्यासः

च अह्नो नकारान्तत्वात् पूर्वेणैव सिद्धष्टिलोपः, तत् किमर्थोऽयमारम्भः ? इत्याह—सिद्धे सतीत्यादि । आह्निकमिति । आर्हीयष्ठक् ।

यदि सिद्धे सति नियमार्थोऽयमारम्भः; एवं सत्येवग्रहणमनर्थकं स्यात्, विनापि तेन सिद्धे सत्यारम्भो नियमार्थो विज्ञास्यते ? इत्याह—एवकारकरणं विस्पष्टार्थमिति । अथ विपरीतनियमाशङ्कानिरासार्थं कस्मान्न भवति ? इत्याह—अह्न एवेत्यादि । यद्यह्न एव टखोः—इत्येष विपरीतनियमः स्याद्, एवं सत्यन्यस्य खे टिलोपप्रसङ्ग एव नास्ति । 'आत्माध्वानौ खे' इति प्रकृतिवद्भावविधानमनर्थकं स्यादित्यभिप्रायः ।।

ओर्गुणः ।। बाभ्रव्य इति । 'मधुबभ्र्वोर्ब्राह्मणकौशिकयोः' इति बभ्रुशब्दादपत्यार्थे यञ् । माण्डव्य इति । अत्रापि गर्गादित्वात् । 'वान्तो यि प्रत्यये' इत्यवादेशः । शङ्कव्यमित्यादौ 'तस्मै हितम्' इत्यस्मिन्नर्थे 'उगवादिभ्यो यत्' । औपगवः, कापटव इति । अत्राप्यपत्यार्थेऽण् । तद्धित इत्येव—'वोतो गुणवचनात्' इति ङीष्, पट्वी ।

ओरोदिति वक्तव्य इत्यादि । एवमुच्यमाने लघु सूत्रं भवतीति भावः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


स्यात्, तेन स्वायम्भुव इति सिद्धं भवति ॥

**ढे लोपोऽकद्र्वाः ॥ १४७ ॥**

ढे परत उवर्णान्तस्य भस्याकद्र्वा लोपो भवति। कामण्डलेयः। शैतबाहेयः। जाम्बेयः। माद्रबाहेयः।

अकद्र्वा इति किम् ? काद्रवेयो मन्त्रमपश्यत् ॥

**यस्येति च ॥ १४८ ॥**

इवर्णान्तस्यावर्णान्तस्य च भस्य इकारे परे तद्धिते च लोपो भवति। इवर्णान्तस्य ईकारे—दाक्षी। प्लाक्षी। सखी।

**पदमञ्जरी**

*ढे लोपोऽकद्र्वाः* ॥ मद्रबाहुशब्दाद् 'बाह्वन्तात्संज्ञायाम्' इत्यूङ्, कद्रुशब्दादपि 'कद्रुकमण्डल्वोश्छन्दसि संज्ञायाम्' इत्यूङ्, ताभ्यामपत्ये 'स्त्रीभ्यो ढक्', अन्यत्र 'चतुष्पाद्भ्यो ढञ्', कमण्डलुपद आदधीतेति बह्वृचब्राह्मणम्। शृगालः = जम्बुः, शिवा = जम्बूः। जम्बुरेव जम्बजम्बुकः ॥

*यस्येति च* ॥ इश्च अश्च यम्, समाहारद्वन्द्वे 'घ्यन्तादजाद्यदन्तं विप्रतिषेधेन' इति अशब्दस्य पूर्वनिपातः सौत्रत्वान्न भवति। यशब्दस्य तु ग्रहणं न भवति, लिङ्गात्, यदयं गर्गशब्दस्य यञि कुमारशब्दस्य तु ङीपि लोपं निर्दिशति—'ओतो गार्ग्यस्य', 'कुमार्यां वयसि' इति। अत एव निर्देशादकारे तावद् ह्रस्वस्य ग्रहणम्, तत्साहचर्यादिकारेऽपि। कार्यं तु दीर्घस्यापि भवति; सवर्णग्रहणात्। *दाक्षीति*। 'इतो मनुष्यजातेः' इति ङीष्, सखिशब्दादपि 'सख्यशि-

**न्यासः**

स्वायम्भुव इति। स्वयम्भवतीति क्विप्—स्वयम्भूः, स्वयम्भुव इदमित्यण्। संज्ञापूर्वकस्य विधेरनित्यत्वादत्र गुणो न भवति, तस्मिंश्चासत्युवङेव क्रियते ॥

ढे लोपोऽकद्र्वाः ॥ कामण्डलेयः, शैतबाहेय इति। 'चतुष्पाद्भ्यो ढञ्' इति ढञ्। एवं जाम्बेय इत्यत्रापि। माद्रबाहेय इति। मद्रबाहुशब्दाद् 'बाह्वन्तात् संज्ञायाम्' इत्यूङ्, तदन्तात् 'स्त्रीभ्यो ढक्'। काद्रवेय इति। 'कद्रुकमण्डल्वोश्छन्दसि संज्ञायाम्' इत्यूङ् तदन्तात् पूर्ववड् ढक् ॥

यस्येति च ॥ अत्र यस्येति यकारस्येदं ग्रहणं वा स्यात्, इवर्णावर्णयोर्वा ? अत्र यदि यकारस्येदं ग्रहणं स्याद्, उत्तरसूत्रे पुनर्यग्रहणं न कुर्यात्, एतदेव हि तत्रानुवर्त्तिष्यते। तस्मादिवर्णावर्णयोरिदं ग्रहणम्। तत्र वर्णग्रहणं सर्वत्र तदन्तविधिं प्रयोजयतीति तदन्तविधिर्विज्ञायते—इत्येतच्चेतसि कृत्वाऽऽह—इवर्णावर्णान्तस्येत्यादि। दाक्षी, प्लाक्षीति। दाक्षिप्लाक्षिशब्दाभ्याम् 'इतो मनुष्यजातेः' इति ङीष्। सखीत्य-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


सवर्णदीर्घत्वे हि सत्यतिसखेरागच्छतीत्यत्र एकादेशस्यान्तवत्त्वादसखीति घिसंज्ञायाः प्रतिषेधः स्यात् ।

इवर्णान्तस्य तद्धिते—दुलि, दौलेयः । वलि, वालेयः । अत्रि, आत्रेयः ।

अवर्णान्तस्य ईकारे—कुमारी । गौरी । शार्ङ्गरवी ।

अवर्णान्तस्य तद्धिते—दाक्षिः । प्लाक्षिः । चौडिः । बालाकिः । सौमित्रिः ।

**पदमञ्जरी**

श्वीति भाषायाम्' इति । सर्वत्र सवर्णदीर्घत्वेन रूपं सिध्यति, किं लोपेन ? तत्राह—*सवर्णदीर्घत्वे हीति* । *अतिसखेरिति* । अतिक्रान्तः सखीमिति तत्पुरुषे लिङ्गविशिष्टपरिभाषया 'राजाहःसखिभ्यष्टच्' इति टच्न भवति; तस्यानित्यत्वात् । तत उपसर्जनह्रस्वत्वम् । *एकादेशस्येति* । ङीषा सह कृतस्य । *असखीति प्रतिषेधः स्यादिति* । कथं पुनः सखिशब्दस्योच्यमानोऽतिसखिशब्दस्य प्रतिषेधः स्यात् ? तदन्तविधिना; 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति' । एवं मन्यते—'कार्यकालं संज्ञापरिभाषम्' इति पक्षे 'घेर्ङिति' इत्यत्र घिसंज्ञाया उपस्थानाद् 'अङ्गाधिकारे तस्य च तदुत्तरपदस्य च' इत्यस्ति तदन्तविधिरिति । यद्वा-शेषस्येकारोकारमात्रस्य घिसंज्ञा, न तदन्तस्य, ततः किम् ? असखीत्यपि सखिशब्देकारस्य प्रतिषेधः, न सखिशब्दस्य । एकादेशे च सखिशब्देकार एवायमिति तदन्तेऽपि प्रतिषेधः स्यादेव । लोपे तु सति यद्यप्युपसर्जनह्रस्वत्वे कृते रूपमविशिष्टम्; तथापि तस्य लाक्षणिकत्वान्न भवति प्रतिषेधः । *दौलेयादौ* 'इतश्चा-

**न्यासः**

त्रापि 'सख्यशिश्वीति भाषायाम्' इति निपातनात् । ननु चात्र सवर्णदीर्घत्वेनाप्येतत् सिद्धम्, तत् किमर्थमत्र लोपो विधीयते ? इत्यत आह—सवर्णदीर्घत्वे हीत्यादि । अतिक्रान्ता सखी एनमिति 'प्रादिभ्यो धातुजस्य' इति बहुव्रीहिरुत्तरपदलोपश्च, उपसर्जनह्रस्वत्वम् । तत्र यदि सवर्णदीर्घत्वं क्रियेत, न तु लोपस्तदा सखीकारेकारयोरेकादेशः सखिशब्दस्यान्तवद् भवतीति 'शेषो घ्यसखि' इति घिसंज्ञायाः प्रतिषेधः स्यात् । ततश्चातिसखेरागच्छतीति 'घेर्ङिति' इति गुणो न स्यात् । लोपे सत्युपसर्जनह्रस्वत्वे सति यद्यपि प्रविशिष्टं रूपम्, तथापि लाक्षणिकम् । अतो लक्षणप्रतिपदोक्तपरिभाषया, तन्न गृह्यत इति न भवति प्रतिषेधः । तस्माल् लोप एव कर्त्तव्यः ।

दौलेय इति उदाहरणत्रये 'इतश्चानिञः' इत्यपत्यार्थे ढक् ।

कुमारीति । 'वयसि प्रथमे' इति ङीप् । गौरीति । 'षिद्गौरादिभ्यश्च' इति ङीष् । शार्ङ्गरवीति । 'शार्ङ्गरवाद्यञो ङीन्' । बालाकिः, सौमित्रिरिति । बलाकासुमित्राभ्यां बाह्वादित्वादिञ् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


❀ यस्येत्यौङः श्यां प्रतिषेधो वक्तव्यः ❀। काण्डे। कुडचे। सौर्ये हिमवतः शृङ्गे। औङः शीभावे कृते 'यस्येति च' इति, 'सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः' इति च लोपः प्राप्नोति।

❀ इयङुवङ्भ्यां लोपो भवति विप्रतिषेधेन ❀। वत्सान्प्रीणाति वत्सप्रीः, तस्यापत्यं वात्सप्रेयः। 'चतुष्पाद्भ्यो ढञ्' इति ढञ् प्रत्ययः। लेखाभ्रूः शुभ्रादिः, तस्या अपत्यं लैखाभ्रेयः॥

**सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः॥ १४९॥**

सूर्य, तिष्य, अगस्त्य, मत्स्य—इत्येतेषां यकारस्य उपधाया भस्य

**पदमञ्जरी**

निवः' इति ढक्। बलाका—सुमित्राशब्दौ बाह्वादी। सौर्ये इति। 'तेनैकदिक्' इत्यण्, एतच्च 'सूर्यागस्त्ययोश्छे च ङ्यां च' इत्यनपेक्ष्योदाहृतम्।

*इयङुवङ्भ्यामिति*। इयङुवङोरवकाशः—श्रियौ, भ्रुवौ, लोपस्यावकाशः—दौलेयः, कामण्डलेयः।

*सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः*॥ यद्यत्र भत्वेन सूर्यादयो विशेष्यन्ते-सूर्यादीनां भसंज्ञानामिति, ततः सूर्यस्य स्त्री सूरी, आगस्त्यस्य अगस्तीत्यादौ यत्र सूर्याद्येव भसंज्ञकं तत्रैव स्यात्; सौरी बलाकेत्यत्र तु न स्यात्, न ह्यत्र सूर्यशब्द इति भसंज्ञकः, किं तर्हि? अणन्तम्। तस्मादनाश्रितरूपस्य भमात्रस्य लोपेन सम्बन्धः। सूर्यादिभिर्यकारो विशेष्यते इति दर्शयन्नाह—*सूर्यतिष्यागस्त्यमत्स्ये-*

**न्यासः**

यस्येत्यादाविति। आदिशब्देनोत्तरो विधिः परिगृह्यते। वक्तव्य इति व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्—'विभाषा ङिश्योः' इत्येतत्सूत्राद्विभाषाग्रहणं मण्डूकप्लुतिन्यायेनानुवर्त्तते, सा च व्यवस्थितविभाषा। तेन चानेन सूत्रेण लोपो विधीयते, यश्चोत्तरसूत्रेण, तावुभावपि न भवत इति। काण्डे, कुड्ये इति। 'औङ आपः' इति, 'नपुंसकाच्च' इति शीभाव इति, तत्र यस्येत्यकारलोपः प्राप्नोति। सौर्ये इति। 'तेनैकदिक्' इति सूर्यशब्दादण्, तदन्तादौङः शीभावः, तत्रानेनाकारलोपः प्राप्नोति, उत्तरसूत्रेण यकारलोपश्च। इयङुवङ्भ्यामित्यादि। इयङुवङोरवकाशः—श्रियौ, श्रियः, भ्रुवौ, भ्रुवः, लोपस्यावकाशः—कामण्डलेयः, माद्रबाहेय इति; वात्सप्रेयः, लैखाभ्रेय इत्यत्रोभयं प्राप्नोति, लोपो भवति विप्रतिषेधेन। वत्सप्रीरिति। क्विबन्तमेतत्॥

सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः॥ यद्यत्र भसंज्ञया सूर्यादयो विशिष्येरन्—सूर्यादीनां भसंज्ञकानामिति, तदा सौरी, बलाकेत्यत्र लोपो न स्यात्। न हि सूर्यशब्द इह भसंज्ञक इति, किं तर्हि? अन्यदेवाणन्तं शब्दान्तरमिति बुद्धौ निधायानाश्रितरूपभेदस्य लोपेन सम्बन्धः सूर्यादिभिः सम्बन्धिभिर्यकारो विशिष्यत इति दर्शयन्नाह


CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


लोपो भवति ईति परतस्तद्धिते च। सूर्येणैकदिक् सौरी बलाका। अणि यो यस्येति लोपस्तस्यासिद्धत्वं नास्ति; व्याश्रयत्वात्। ईकारे तु यस्तस्यासिद्धत्वाद् उपधायकारो भस्याणन्तस्य सूर्यस्य सम्बन्धीति लुप्यते। तिष्य—तैषमहः। तैषी रात्रिः। अगस्त्यस्यापत्यं स्त्री, ऋषित्वादणि कृते—आगस्ती। आगस्तीयः। मत्स्य—गौरादित्वान् ङीष्, मत्सी।

उपधाया इति किम्? मत्स्यचरी।

**पदमञ्जरी**

*त्येतेषामिति*। भसंज्ञकस्य यो यकार उपधा तस्य लोपो भवति, स चेत्सूर्यादीनां सम्बन्धीत्यर्थः। *सौरीति*। अत्र ईति परतो भसंज्ञकमङ्गमणन्तं तस्य यकार उपधा यथा भवति तथा दर्शयति—*अणि यो यस्येति लोप इति*। *व्याश्रयत्वादिति*। अणि यस्येति लोपः, ईति यलोप इति व्याश्रयत्वम्। *ईकारे तु य इति*। लोप इत्यपेक्षते। *भस्याणन्तस्येति*। भसंज्ञकस्याणन्तस्य यकार उपधा भवतीत्यर्थः। स्थानिवद्भावस्तु द्वयोरपि यस्येतिलोपयोर्यलोपविधिं प्रति प्रतिषिद्धः।

*मत्स्यचरीति*। मत्सी भूतपूर्वेति चरट्, तसिलादिष्विति पुंवद्भावः, टित्त्वान्ङीप्, भवत्यत्र मत्स्यचरशब्द ईति भसंज्ञकः, मत्स्यसम्बन्धी च यकारः, न त्वसौ भसंज्ञकस्योपधेति लोपाभावः।

**न्यासः**

**सूर्यतिष्यागस्त्यमत्स्य**—इत्येतेषामित्यादि। भस्येति। भसंज्ञकस्य। यो यकार उपधा तस्य लोपो भवति स चेद् यकारः सूर्यादीनां सम्बन्धी भवति—अयमत्रार्थो विवक्षितः। ते तु सूर्यादयो भत्वेन न विशिष्यन्ते। तेन यदापि तेषां भसंज्ञा न भवति, तदापि तस्योपधायकारस्य लोपो भवत्येव यद्यसौ यकारः सूर्यादीनां सम्बन्धी भवति। सौरी बलाकेति। ननु चात्राकारलोपस्य व्याश्रयत्वेनासिद्धत्वं नास्तीत्युपधायकारो न भवतीत्येतदुक्तम्? इत्याह—अणि यो यस्येतिलोप इत्यादि। अत्र हि द्वौ यस्येतिलोपौ—एकोऽणि परतः, अपर ईकारे। तत्र प्रथमो व्याश्रयः, तथा हि—लोपोऽणमाश्रित्य भवति, यलोपस्त्वीकारम्, अतो व्याश्रयत्वादसिद्धत्वाभावस्तस्य युक्तः। इतरस्त्वीकारमाश्रित्य भवति समानाश्रय एव, ततश्च तस्यासिद्धत्वादुपधायकारो भवति। भस्याणन्तस्येत्यादिना सूत्रार्थमुदाहरणे दर्शयति। तैषम्, तैषीति। 'नक्षत्रेण युक्तः कालः' इत्यण्, 'टिड्ढाणञ्' इति ङीप्। ऋषित्वादणि कृत इति। 'ऋष्यन्धक' इत्यादिना मत्स्यचरीति। मत्स्यो भूतपूर्वः—'भूतपूर्वे चरट्', पूर्ववन् ङीप्। भवत्यत्र मत्स्यचर इति भसंज्ञकमत्स्यसम्बन्धी यकारः, न त्वसौ भसंज्ञकस्योपधेति लोपो न प्रवर्त्तते।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



यग्रहणमुत्तरार्थम् । विषयपरिगणनमत्र कर्त्तव्यम्—

॥ मत्स्यस्य ङ्यामिति वक्तव्यम् ॥ । इह मा भूत्—मत्स्यस्येदं मांसं मात्स्यम् ।

॥ सूर्यागस्त्ययोश्छे च ङ्यां च ॥ । सौरीयः । सौरी । आगस्तीयः । आगस्ती । इह मा भूत्—सौर्यं चरुं निर्वपेत् । आगस्त्यः ।

॥ तिष्यपुष्ययोर्नक्षत्राणि ॥ । तिष्येण नक्षत्रेण युक्तः कालः तैषः । पौषः ।

॥ अन्तिकस्य तसि कादिलोप आद्युदात्तं च ॥ । अन्तिकशब्दस्य तसिप्रत्यये परतः ककारादेः शब्दस्य लोपो वक्तव्यः, आद्युदात्तं च । अन्तितो न दूराद् ।

पदमञ्जरी

*यग्रहणमुत्तरार्थमिति* । इह तु सूर्यादिसम्बन्धी भसंज्ञकस्योपधायकार एव न वर्णान्तरमिति नार्थस्तेन ।

*सौरीय इति* । सौर्यशब्दाद्वृद्धाच्छः । एवम्—*आगस्तीयः* । *आगस्त्य इति* । अपत्ये ऋष्यण् ।

*तिष्यपुष्ययोरिति* । तिष्यस्य सत्रेणैव प्राप्ते नक्षत्राणि नियमः, पुष्यस्याप्राप्ते विधिः । सूत्रे त्वर्थग्रहणे सिध्यत्यस्यापि प्रसङ्गः ।

*अन्तिकस्येत्यादि* । छन्दस्येतदिष्यते । *ककारादेः शब्दस्येति* । ककारस्याकारस्य चेत्यर्थः । *आद्युदात्तश्चेति* । प्रत्ययस्वरस्यापवादः । *अन्तित इति* ।

न्यासः

अथ किमर्थं यग्रहणम् , यावता सूर्यादिभिरुपधायां विशिष्यमाणायाम् अन्तरेणापि यग्रहणं यकारस्योपधाभूतस्य लोपो विज्ञास्यते, यकार एव हि तेषामुपधा, न तु वर्णान्तरम् ? इत्यत आह—यग्रहणमुत्तरार्थमिति । वक्तव्यमिति व्याख्येयमित्यर्थः । व्याख्यानं त्विहापि पूर्ववद् विभाषामाश्रित्य कर्त्तव्यम् । मात्स्यमिति । 'तस्येदम्' इत्यण् ।

सौरीयमिति । अणन्ताद् 'वृद्धाच्छः' । एवमागस्तीयमिति । सौर्यमिति । सूर्यो देवतास्येति 'सास्य देवता' इत्यण् । आगस्त्य इति । अपत्यार्थं ऋष्यण् ।

नक्षत्राणीति । नक्षत्रसम्बन्धो योऽण् तस्मिन्नित्यर्थः ।

ककारादेः शब्दस्येति । ककारस्याकारस्येत्यर्थः । आद्युदात्तत्वं चेति । प्रत्ययस्वरेणान्तोदात्तत्वे प्राप्ते सत्याद्युदात्तार्थं वचनम् । अन्तित इति । 'अपादाने चाहीयरुहोः' इति तसिः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



❀ तमे तादेश्च ❀ । तमप्रत्यये अन्तिकशब्दस्य तकारादेः ककारादेश्च लोपो वक्तव्यः । तत्र तादिलोपे—अन्तमः । कादिलोपे—अन्तितमः ।

❀ कादिलोपे बहुलमिति वक्तव्यम् ❀ । अन्यत्रापि हि दृश्यते—अन्तिके सीदतीति अन्तिषत् । 'पूर्वपदात्' इति षत्वम् ।

❀ ये च ❀ । अन्तियः ॥

## हलस्तद्धितस्य ॥ १५० ॥

'तद्धिते' इति निवृत्तम्[१] । हल उत्तरस्य तद्धितयकारस्य उपधाया ईति परतो लोपो भवति । गार्गी । वात्सी ।

हल इति किम् ? कारिकेयी । तद्धितस्येति किम् ? वैद्यस्य भार्या वैद्यी ॥

### पदमञ्जरी

'अपादाने चाहीयरुहोः' इति तसिः । *कादेश्चेति* । कशब्दस्येत्यर्थः । *अन्तिषदिति* । 'सत्सूद्विष' इत्यादिना क्विप् । बह्वृचास्तु व्यस्तमधीयते ।

*ये चेति* । दृश्यत इत्यपेक्षते । *अन्तिय इति* । 'भवे छन्दसि' इति यत् । कादिलोपस्यासिद्धत्वाद्यस्येति लोपाभावः ॥

*हलस्तद्धितस्य* ॥ *तद्धित इति निवृत्तमिति* । उत्तरसूत्रे पुनस्तद्धितग्रहणात्, तेनायमीत्येव विधिः ॥

### न्यासः

तादेश्चेति । तिकशब्दस्येत्यर्थः । चकारात् कादेश्च । अन्तम इति । 'अतिशायने तमप्' ।

अन्तिषदिति । 'सत्सूद्विष' इत्यादिना क्विप् ।

ये चेति । दृश्यत इति प्रकृतेन सम्बन्धः । अन्तिय इति । 'भवे छन्दसि' इति यः, 'तत्र साधुः' इति वा । केचित् सर्वमेव लोपविधानं छन्दस्येवेच्छन्ति ॥

हलस्तद्धितस्य ॥ तद्धित इति निवृत्तमिति । उत्तरसूत्रे तद्धितग्रहणात् । तेनायमीत्येव विधिः । गार्गीत्यादि । गर्गादिशब्देभ्यो यञन्तेभ्यः 'यञश्च' इति ङीप् । कारिकेयीति । 'स्त्रीभ्यो ढक्', तदन्ताद् 'टिड्ढाणञ्' इति ङीप् । वैद्यीति । 'पुंयोगादाख्यायाम्' इति ङीष् ॥

---

१. अयमंशो न सर्वत्रोपलभ्यते ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## आपत्यस्य च तद्धितेऽनाति ॥ १५१ ॥

अपत्ययकारस्य हल उत्तरस्य तद्धिते अनाकारादौ यलोपो भवति । गर्गाणां समूहो गार्गकम् । वात्सकम् ।

आपत्यस्येति किम् ? साङ्काश्यकः । काम्पिल्यकः ।

तद्धितग्रहणमीत्यनापत्यस्यापि लोपार्थम्—सौमी इष्टिः ।

### पदमञ्जरी

*आपत्यस्य च तद्धितेऽनाति* ॥ *गार्गकमिति* । 'गोत्रोक्षोष्ट्र' इत्यादिना वुञ्, 'सङ्काशादिभ्यो ण्यः' इति वुञ्छणादिसूत्रेण चातुरर्थिकः, ततः 'धन्वयोपधाद्वुञ्' इति जातादावर्थे ।

*तद्धितग्रहणमित्यादि* । सोमो देवतास्येति 'सोमाट्ट्यण्' टित्त्वान्ङीप्, तत्र परतोऽनापत्ययकारस्याप्यस्य 'हलस्तद्धितस्य' इति लोपो यथा स्यादित्येवमर्थमिह तद्धितग्रहणं कृतम्; अन्यथा हि प्रकृतं तद्धितग्रहणमिहानुवर्त्तनीयम्, तस्मिंश्चानुवर्त्तमाने तत्सम्बद्धमीतीत्यपि सम्बध्येत, [1]तच्चोभयमिह सम्बध्यमानं पूर्वसूत्रेऽपि सम्बध्येत[1], ततश्च पूर्वेणैव सिद्धे सत्युभयत्र तद्धित ईति चेति नियमोऽयं विज्ञायेत - आपत्यस्यैवानाकारादौ तद्धिते ईति चेति । ततो यथा तद्धितेऽनापत्यस्य न भवति-साङ्कश्यक इत्यादौ, तथा ईत्यपि न स्यात्—सौमी इष्टिरिति । तद्धितग्रहणे तु सति तेन पूर्वयोगे तद्धितग्रहणस्य निवृत्तिराख्यातेत्यापत्यानापत्ययोर्द्वयोरपि पूर्वेण ईति लोपो विधीयत इति सौमी इष्टिरित्यत्रापि यलोपः सिध्यती-

### न्यासः

आपत्यस्य च तद्धितेऽनाति ॥ गार्गकमिति । 'गोत्रोक्षोष्ट्रोरभ्र' इत्यादिना गार्ग्यशब्दाद्वुञ्, तत्र यञो लोपः । साङ्काश्यक इति । काम्पिल्यक इति । पूर्ववत् सङ्काशकम्पिलशब्दाभ्याञ्चातुरर्थिकः 'वुञ्छण्' इत्यादिना ण्यः, तदन्ताज्जातादौ शैषिकेऽर्थे 'धन्वयोपधाद्वुञ्' इति वुञ् ।

अथ तद्धितग्रहणं किमर्थम्, 'नस्तद्धिते' इति तद्धितग्रहणमनुवर्त्तिष्यते ? इत्यत आह—तद्धितग्रहणमित्यादि । सोमी देवतास्येति 'सोमाट्ट्यण्', 'टिड्ढाणञ्' इति ङीप् । तत्र परतोऽनपत्ययकारस्यापि 'हलस्तद्धितस्य' इत्यनेन लोपो यथा स्यादित्येवमर्थं तद्धितग्रहणम्; अन्यथा यदि तदेव प्रकृतं तद्धितग्रहणमिहानुवर्त्तते, तदा तत्सम्बद्धमीद्ग्रहणमनुवर्त्तेत । तथा चोभयमिहानुवर्त्तमानं पूर्वयोगेऽप्यनुवर्त्तेत । तथा च–पूर्वेणैव योगेन सिद्धे सत्युभयत्र तद्धित ईति च नियमार्थोऽयमारम्भः स्यात् - आपत्यस्यैवानाकारादौ तद्धिते लोपो भवति ईति च, नानापत्ये च । एवं च यथानपत्यस्य साङ्काश्यक इत्यत्र लोपो न भविष्यति, तथा सौमी इष्टिरित्यत्रापि न स्यात्; नियमेन व्यावर्त्तित-

१–१. पाठोऽयमेकस्मिन् पुस्तके नास्ति । ( प्र० स० स० )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अनातीति किम् ? गार्ग्यायणः । वात्स्यायनः ।

हल इत्येव—कारिकेयस्यापत्यं कारिकेयिः ॥

## क्यच्व्योश्च ॥ १५२ ॥

क्य, च्वि—इत्येतयोश्च परत आपत्ययकारस्य हल उत्तरस्य

### पदमञ्जरी

त्यतस्तद्धितग्रहणम् । ननु च यद्युभयस्यायं नियमः स्याद्, योगविभागोऽनर्थकः स्याद्, 'हल आपत्यस्य तद्धितस्यानाति' इत्येकमेव योगंकुर्यात्, ततो योगविभागादन्यतरस्यैवानुवृत्तिः, तत्रापि 'अनाति' इति वचनात्तस्यैव ? एवमपि दोषः; अनापत्यस्य तद्धितेऽपि प्राप्नोति, कथम् ? आपत्यस्य यदि भवति अनाकारादावेवेति नियमसम्भवात्, साङ्काश्यकादौ लोपः स्यादेव । अनाकाराविति नियमः, तत आकारादावापत्यानापत्ययोर्द्वयोरपि लोपप्रसङ्गो यद्यनापत्ये आकारादौ सम्भवति । अथ न सम्भवति तदा न कश्चिद्दोषः; आपत्यस्यैव तद्धिते, तत्राप्यनाकारादेवेति नियमद्वयाश्रयणात् ॥

*क्यच्व्योश्च ॥ गार्गीयतीति । 'क्यचि च' इतीत्वम् । गार्गीयत इति ।*

### न्यासः

त्वात् । इह तु तद्धितग्रहणे क्रियमाणे पूर्वयोगे तद्धितग्रहणस्य निवृत्तिराख्यायते । तेन पूर्वयोगेन तद्धितमात्रस्य यकारस्यानपत्यस्य चापत्यस्य चाविशेषेण लोपो विधीयते । सौमी इष्टिरित्यत्रापि लोपो यथा स्यादित्येवमर्थं तद्धितग्रहणम् । ननु च यद्युभयत्र तद्धित इति चायं नियमः स्यात् सूत्रद्वयस्यार्थोऽपार्थकः स्यात् । 'हल आपत्यस्यानाति' इत्येकमेव योगं कुर्यात् । तस्मात् सूत्रद्वयस्यारम्भसामर्थ्यादन्यतरस्यैवेहानुवृत्तिर्भविष्यति, न तूभयस्यापि । इह त्वेतावान् सन्देहः स्यात्—किं तद्धितग्रहणमिहानुवर्त्तते, उतेद्ग्रहणमिति ? अत्रापि तद्धितग्रहणमनुवर्त्तते, नेद्ग्रहणमिति; व्याख्यानात् । सर्वसन्देहेष्विदमुपतिष्ठते—'भवति व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्' इति । तद्धितग्रहणे च केवल इहानुवर्त्तमाने तद्धितविषय एवायं नियमो भविष्यति, न त्वीद्विषयं इति । तथा ह्यसत्यपि पुनरिह तद्धितग्रहण इति नियमाभावात् पूर्वसूत्रेण सौमी इष्टिरित्यत्रापि लोपः सिध्यत्येव । तत् कथमिदमुक्तम्—तद्धितग्रहणमीत्यनपत्यस्यापि लोपार्थमिति ? सुखेन लोपः प्रतीयत इत्येतदर्थमिदमित्यभिप्रायो द्रष्टव्यः । ततश्चायमत्रार्थः सम्पद्यते—प्रतिपत्तिगौरवपरीहारार्थं तद्धितग्रहणम् ।

गार्ग्यायण इति । 'यञिञोश्च' इति फक् ।

कारिकेयिरिति । कारिकाया अपत्यमिति 'स्त्रीभ्यो ढक्', ततस्तस्यापत्यम्, 'अत इञ्' कारिकेयिः ॥

क्यच्व्योश्च ॥ अतद्धितार्थोऽयमारम्भः । 'क्य' इति क्यच्क्यङोः सामान्येन ग्रहणम् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



लोपो भवति । वात्सीयति । गार्गीयति । वात्सीयते । गार्गीयते । च्वौ—गार्गीभूतः । वात्सीभूतः ।

आपत्यस्येत्येव—साङ्काश्यायते । साङ्काश्यभूतः ।

हल इत्येव—कारिकेयीयति । कारिकेयीभूतः ॥

बिल्वकादिभ्यश्छस्य लुक् ॥ १५३ ॥

नडादिषु बिल्वादयः पठ्यन्ते । 'नडादीनां कुक्च' इति कृतकुगागमा बिल्वकादयो भवन्ति, तेभ्य उत्तरस्य छस्य भस्य तद्धिते परतो लुग् भवति । बिल्वा यस्यां सन्ति बिल्वकीया, तस्यां भवाः बैल्वकाः । वेणुकीयाः, वैणुकाः । वेत्रकीयाः, वैत्रकाः । वेतसकीयाः, वैतसकाः । तृणकीयाः, तार्णकाः । इक्षुकीयाः, ऐक्षुकाः । काष्ठकीयाः, काष्ठकाः । कपोतकीयाः, कापोतकाः ।

* क्रुञ्चा ह्रस्वत्वं च * । क्रुञ्चकीयाः, क्रौञ्चकाः ।

पदमञ्जरी

'अकृत्सार्वधातुकयोर्दीर्घः', क्यषस्त्वापत्यादसम्भवः । *गार्गीभूत इति* । 'अस्य च्वौ' इतीत्वम् ॥

*बिल्वकादिभ्यश्छस्य लुक्* ॥ बिल्वकादीनामस्मिन्प्रदेशे प्रातिपदिकगणे पाठाभावात्तत्परिज्ञानार्थमाह—*नडादिष्विति* । नडादिषु बिल्वादयस्तावत्पठ्यन्ते, तत्र कुकि कृते यद्रूपं ककारान्तं तदिहानुकृतम् । बिल्वक् आदिर्येषामिति विगृह्य समासः । जश्त्वे तु क्रियमाणे रूपविनाशप्रसङ्गान्न कृतमित्यर्थः । तेन बिल्वक आदिर्येषामिति अज्ञातादिषु यः कस्तदन्तानां ग्रहणं नाशङ्कनीयम्; पाठाभावात् ।

न्यासः

गार्गीयतीति । 'सुप आत्मनः क्यच्', 'क्यचि च' इतीत्वम् । गार्गीय इति । 'कर्तुः क्यङ् सलोपश्च' इति क्यङ्, 'अकृत्सार्वधातुकयोः' इति दीर्घः । गार्गीभूत इति । 'अभूततद्भावे' इति च्विः, 'अस्य च्वौ' इतीत्वम् ॥

बिल्वकादिभ्यश्छस्य लुक् ॥ बिल्वकादिभ्य इति । आगन्तुकेनाकारेण निर्देशः । बिल्वकीया इति । 'उत्करादिभ्यश्छः' 'नडादीनां कुक्च' इति चातुरर्थिकश्छः, कुगागमः । बैल्वका इति । 'प्राग्दीव्यतोऽण्' ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



छग्रहणं किम् ? छमात्रस्य लुग्यथा स्याद् कुको निवृत्तिर्मा भूदिति; अन्यथा हि सन्नियोगशिष्टानामन्यतरापाये उभयोरप्यभाव इति कुगपि निवर्त्तेत । लुग्ग्रहणं सर्वलोपो यथा स्याद्, यकारमात्रस्य मा भूत् ॥

## तुरिष्ठेमेयस्सु ॥ १५४ ॥

इष्ठन्, इमनिच्, ईयसुन्—इत्येतेषु परतः तृशब्दस्य लोपो भवति । आसुतिं करिष्ठः । विजयिष्ठः । वहिष्ठः । दोहीयसी धेनुः ।

### पदमञ्जरी

*छग्रहणं किमिति* । कृतकुगागमेभ्यः परस्तादन्यो न सम्भवतीति प्रश्नः । कथं पुनः कुको निवृत्तिप्रसङ्गः ? इत्याह—*अन्यथा हीति* । इदमेव छग्रहणं ज्ञापकम्—अस्त्येषा परिभाषेति । *यकारमात्रस्येति* । उपधाया इत्यनुवृत्तेस्तस्यैव स्याद् । अथापि तन्निवृत्तम्, एवमपि, 'आदेः परस्य' इति परस्य प्रसङ्गाद-निष्टमेव ॥

*तुरिष्ठेमेयस्सु* ॥ दोहीयसीत्यत्र घत्वादीनामसिद्धत्वात्पूर्वं तृशब्दस्य लोपे कृते पश्चान्निमित्ताभावात्तेषामभावः ।

### न्यासः

अथ छग्रहणं किमर्थम्, यावता कृतकुगागमा बिल्वकादयो गृहीताः, एभ्यश्छ-प्रत्ययः सम्भवतीत्यन्तरेणापि छग्रहणं छस्यैव लोपो भविष्यतीति ? अत आह—छग्रहण-मित्यादि । यदि छग्रहणं न क्रियेत, तदा सन्नियोगशिष्टपरिभाषया छकारे निवर्तमाने कुको निवृत्तिः स्यात् । तस्याश्च परिभाषाया एतदेव छग्रहणं ज्ञापकम् । अथ लुक्-ग्रहणं किमर्थम्, प्रकृत एव लोपो विधीयेत ? इत्यत आह—लुग्ग्रहणमित्यादि । यकार-ग्रहणमेकदेशोपलक्षणार्थं द्रष्टव्यम् । स हि लोप उपधाया इत्यनेन सम्बन्ध इति तस्मि-न्ननुवर्त्तमाने 'य उपधायाः' इत्येतदप्यनुवर्त्तेत, छस्येयादेशे कृते यकारमात्रस्य स्यात् । अथापि 'उपधायाः' इत्येतन्नानुवर्त्तेत ? एवमपि 'आदेः परस्य' इतीकारमात्रस्य स्यात् । लुग्ग्रहणमिति । लुगिति प्रत्ययादर्शनस्यैषा संज्ञा, न तु प्रत्ययस्यैकदेशस्या-दर्शनस्येति । लुग्ग्रहणे सति सर्वस्यैव लुक् सिध्यति । तदर्थं हि लुग्ग्रहणम् ॥

तुरिष्ठेमेयस्सु ॥ तुरिति विशेषकराननुबन्धानुत्सृज्य तृंस्तृचोः सामान्येन ग्रहणम् । करिष्ठ इति । करोतेस्तृन्, तदन्तादतिशायन इष्ठन्, तृशब्दस्य लोपः । विजयिष्ठ इति । विपूर्वाज्जयतेस्तृन् । वहिष्ठ इति । अत्रापि वहेस्तृन् । तदन्तादि-ष्ठन्, 'हो ढः' इति ढत्वम् । तृशब्दस्य लोपे कर्त्तव्ये 'पूर्वत्रासिद्धम्' इत्यसिद्धम्, तेन पूर्वलोप एव क्रियते, तस्मिन् कृते झलि पदान्ते च विधीयमानं ढत्वं निमित्ताभावान्न प्रवर्त्तते । दोहीयसीति । दुहेस्तृजन्तादीयसुन्, 'उगितश्च' इति ङीप् । अत्रापि

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


सर्वस्य तृशब्दस्य लोपार्थं वचनम् । अन्त्यस्य हि टेरित्येव सिद्धः ।

लुगित्येतदत्र नानुवर्त्तते; तथा हि सति 'न लुमताङ्गस्य' इति प्रतिषेधाद् गुणो न स्यात् ।

इमनिज्ग्रहणमुत्तरार्थम् । इतरौ तु 'तुश्छन्दसि' इति भवतः ॥

पदमञ्जरी

'लोपो भवति' इत्युक्तम्, तत्रान्त्यस्य प्राप्नोत्यत आह-*सर्वस्येति* । कारणमाह—*अन्त्यस्य हीति* ।

नन्वेवमनन्तरो लुगेव विधेयः, एवं सुखमेव सर्वस्य निवृत्तिर्लभ्यते ? अत आह—*लुगित्येतत्त्विति* । कः पुनस्तदनुवृत्तौ दोषः स्याद् ? अत आह—*तथा हीति* । न च पूर्वमेव गुणो भवति; 'अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते' इति वचनात् ।

*इमनिज्ग्रहणमुत्तरार्थमिति* । नेहार्थम्; तृशब्दात्तस्यासम्भवात् । न चेदमेव कल्पकं भवितुमर्हति, उत्तरार्थतयाप्युपपत्तेः । नन्वेवम् 'अजादी गुणवचनादेव' इति नियमादिष्ठेयसुनोरपि न सम्भवः ? अत आह—*इतरौ त्विति* ॥

न्यासः

लोपे कर्त्तव्ये 'दादेर्धातोर्घः' इत्येतदप्यसिद्धमिति पूर्वं लोपः, तस्मिन् सति पूर्ववद् घत्वं न प्रवर्त्तते ।

अथ 'अलोऽन्त्यस्य' इत्यन्त्यस्यायं लोपः कस्मान्न भवति ? इत्याह—सर्वस्येत्यादि । तत्रैव कारणमाह—अन्त्यस्येत्यादि । यद्यन्त्यस्य स्याद् वचनवैयर्थ्यमापद्येत; अन्त्यस्य टेरित्येवं सिद्धत्वात् । तस्मादन्त्यलोपवचने प्रयोजनं नास्तीति सर्वस्य तृशब्दस्य लोपो यथा स्यादित्येवमर्थमिदं वचनं विज्ञायते ।

यदि तर्हि तृशब्दस्य लोपार्थं वचनमनन्तरो लुगेव कस्मान्न विधीयते, एवं तर्हि सर्वस्य सुखमेव लोपोऽवसीयते, प्रत्ययादर्शनस्य लुग्विधानात् ? इत्यत आह—लुगित्येतत् त्वित्यादि । कः पुनस्तत्र सति दोषः स्याद् ? इत्यत आह—तथा हीत्यादि । यदि लुगित्येतदिहानुवर्तेत, ततः 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते' इति कृत्वा पूर्वं लुका भवितव्यम्, ततश्च 'न लुमताङ्गस्य' इति प्रत्ययलक्षणनिषेधः स्यात्; करिष्ठः, विजयिष्ठ इत्यत्रार्धधातुकलक्षणो गुणो न स्यात् । तस्मान्मा भूदेष दोष इति लुगित्येतदिहानुवर्तते । अथेमनिज्ग्रहणं किमर्थम्, यावता तृशब्दात् पर इमनिज् न सम्भवति ? तथापि 'पृथ्वादिभ्य इमनिज्वा', 'वर्णदृढादिभ्यः ष्यञ्च'—इत्यनेन योगद्वयेन स विहितः, न तृशब्दान्तं किञ्चित् पृथ्वादिषु दृढादिषु वा मध्ये पठ्यते, नापि वर्णवाच्यस्तीत्यत आह—इतरौ त्वित्यादि ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## टेः ॥ १५५ ॥

भस्य टेर्लोपो भवति इष्ठेमेयस्सु परतः। पटु—पटिष्ठः, पटिमा, पटीयान्। लघु—लघिष्ठः, लघिमा, लघीयान्।

❀ णाविष्ठवत्प्रातिपदिकस्य कार्यं भवतीति वक्तव्यम् ❀।

किं प्रयोजनम्? पुंवद्भावरभावटिलोपयणादिपरार्थम्। पुंवद्भावः—एनीमाचष्टे एतयति। श्येतयति। 'तसिलादिष्वाकृत्वसुचः'

### पदमञ्जरी

टेः॥ *णाविष्ठवदिति*। सप्तमीसप्तमर्थाद्वतिः, णाविति प्रतियोगिनि सप्तमीनिर्देशात् तेनेष्ठनि यत्कार्यं तदतिदिश्यते, न त्विष्ठनो यत्कार्यं तदपि। तेन बहूनाचष्टे बहयतीत्यत्र 'इष्ठस्य यिट् च' इति णेर्यिण्न भवति, तदभावे तत्सन्नियोगशिष्टो भूभावोऽपि न भवति। केचित्तु भूभावमुदाहरन्ति—भावयतीति। *एतयतीति*। टिलोपातिदेशेनैव सन्नियोगशिष्टत्वान्नकारनिवृत्तावपि सिद्धायां पुंवद्वचनं सन्नियोगशिष्टपरिभाषाया अनित्यत्वज्ञापनार्थम्; तेन श्यैवेयः, ऐनेय इत्यादि सिद्धं भवति।

अपर आह—इडविडमाचष्टे ऐडविडयति, दरदमाचष्टे दारदयतीत्येवमादौ पुंशब्दातिदेशार्थं पुंवद्वचनमिति। ननु चेडविडादीनामिष्ठनि पुंवद्भावो न दृष्टः, इष्ठन एव तत्रासम्भवात्। नेष्ठनि दृष्टस्यातिदेशः, किं तर्हि? सम्भावितस्य; अन्यथा अतिराजयतीत्यादौ टिलोपो न स्यात्।

### न्यासः

टेः॥ णाविष्ठवदिति। 'तसिलादिष्वाकृत्वसुचः' इष्ठनि पुंवद्भाव उक्तः, 'र ऋतो हलादेर्लघोः' इति रभावः, 'टेः' इति टिलोपः, 'स्थूलदूरयुवह्रस्व' इत्यादिना यणादिपरस्य लोपः, पूर्वस्य च गुणः, 'विन्मतोर्लुक्' इति लुक्, 'युवाल्पयोः कनन्यतरस्याम्' इति कन्। 'प्रियस्थिर' इत्यादिना प्रादय आदेशाः—एतानि कार्याणि यथेष्ठनि भवन्ति, तथा णावपि यथा स्युरिति णाविष्ठवत् प्रातिपदिकस्य कार्यं भवतीति वक्तव्यम्।

प्रातिपदिकग्रहणं शक्यमकर्तुम्, अन्यस्यातिदेशस्यासम्भवात्। वतिरिह सादृश्यार्थः, तेन यस्येष्ठनि यत्कार्यं विवक्षितं ततोऽन्यस्यातिदेशस्यासम्भवात् तद्व्यवच्छेदार्थं प्रातिपदिकग्रहणं न कर्त्तव्यम्। तत् क्रियते विस्पष्टार्थम्। केचित् तु ब्रुवते—प्रत्ययस्य कार्याणामतिदेशो मा भूदित्येवमर्थं प्रातिपदिकग्रहणम्, तेन बहुमाचष्टे बहयतीत्यत्र 'इष्ठस्य यिट् च' इति यिड् न भवति? एतच्चायुक्तम्; इष्ठवदित्यत्र हि सप्तमीसमर्थाद्वतिर्विहितः; णाविति प्रतियोगिनि सप्तमीश्रवणात्। तेनेष्ठनि यत् कार्यं विहित तदतिदिश्यते, न त्विष्ठस्य यत् कार्यं तदपि। न च यिड् इष्ठनि यत् कार्यम्,

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


इति इष्ठे पुंवद्भाव उक्तः । रभावः—पृथुमाचष्टे प्रथयति । म्रदयति । टिलोपः—पटुमाचष्टे पटयति । लघयति । यणादिपरम्—स्थूलमाचष्टे स्थवयति ।

भारद्वाजीयास्तु पठन्ति—'णाविष्ठवत्प्रातिपदिकस्य पुंवद्भावरभावटिलोपयणादिपरविन्मतोर्लुक्कनर्थम्' इति । स्रग्विणमाचष्टे स्रजयति । वसुमन्तमाचष्टे वसयति । युवानमाचष्टे यवयति । कनयति । एतदुभयमप्युदाहरणमात्रम्, न परिगणनम् ।

प्रादयोऽपि ह्रीष्यन्ते—प्रियमाचष्टे प्रापयति[1] ॥

पदमञ्जरी

प्रातिपदिकग्रहणं प्रकृतिमात्रोपलक्षणम् । तेन द्रोणीमाचष्टे इत्यादावपि टिलोपो भवति । नात्र पुंवद्भावोऽस्ति; अभाषितपुंस्कत्वात् । लिङ्गविशिष्टपरिभाषया वा ङीबन्तस्य ग्रहणम् । उक्तं हि प्राक्—'यथाकथञ्चित्प्रातिपदिकग्रहणे लिङ्गविशिष्टं गृह्यते' इति । स्थवयतीत्यादौ 'अत उपधायाः' इति वृद्धिर्न भवति; 'अङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्य' इति वचनात् । अस्यार्थः—अङ्गाधिकारविहिते कस्मिंश्चित्कार्ये वृत्ते पुनः कार्यान्तरस्य वृत्तौ प्राप्तायामविधिस्तस्य कार्यस्य, तच्चेदङ्गं निष्ठितं भवति = प्रयोगार्हं भवति । यत्र त्वनिष्ठितमङ्गं तत्र भवत्येव वृत्तिः—प्रापयति, स्थापयतीति । कर्तारमाचष्ट इत्यादौ तृशब्दस्य 'तुरिष्ठेमेयःसु' इति लोपो भवति न वेति चिन्त्यम् ॥

न्यासः

अपि त्विष्ठन एव । तस्येह प्राप्तिरेव नास्तीति किं तन्निवृत्त्यर्थेन प्रातिपदिकग्रहणेन ! एनीमिति । एतच्छब्दाद् 'वर्णादनुदात्तात्तोपधात्' इत्यादिना ङीष्, तकारस्य च नकारः । एतयतीति । णौ कृते पुंवद्भावेन ङीष्नकारावुभावपि निवर्त्तेते । ननु च ङीषा व्यवहितोऽत्र णिरिति णावतिदेशः क्रियमाणस्तद्व्यवधाने न प्राप्नोतीति ? नैष दोषः; इष्ठन्यपि हि ङीपा व्यवधान एव प्रातिपदिकस्य पुंवद्भावः । तस्मादिहापि व्यवधानेऽपि तद्वदेव भविष्यति ।

स्रग्विणमिति । 'अस्मायामेधास्रजो विनिः' इति विनिः । स्रजयतीत्यत्र 'संज्ञापूर्वको विधिरनित्यः' इति 'अत उपधायाः' इति वृद्धिर्न भवति । 'अङ्गवृत्तेः पुनरङ्गवृत्तावविधिर्निष्ठितस्य' इति वा । प्रापयतीत्येवमादौ भवत्येवानिष्ठितत्वात् । अत्र 'अर्त्तिह्री' इत्यादिना पुक् । ननु भारद्वाजीयपाठे प्रादयो न सिध्यन्ति; अपि तु स्रजयति वसयतीति लुक्, कनयतीत्यत्र च कन्नित्यत आह—तदेतदुभयमप्युदाहरणमात्रमित्यादि । तदेतद्भारद्वाजीयपाठे अन्येषाञ्च प्रयोजनमुपदर्शितम्, न त्वेतदु-

---

१. 'स्थिरमाचष्टे स्थापयति' इत्यधिकं क्वचित् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


**स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः ॥ १५६ ॥**

स्थूल, दूर, युव, ह्रस्व, क्षिप्र, क्षुद्र—इत्येतेषां यणादिपरं लुप्यते इष्ठेमेयस्सु परतः, पूर्वस्य च गुणो भवति । स्थूल—स्थविष्ठः, स्थवीयान् । दूर—दविष्ठः, दवीयान् । युवन्—यविष्ठः, यवीयान् । ह्रस्व—ह्रसिष्ठः, ह्रसीयान्, ह्रसिमा । क्षिप्र—क्षेपिष्ठः, क्षेपीयान्, क्षेपिमा । क्षुद्र—क्षोदिष्ठः, क्षोदीयान्, क्षोदिमा । ह्रस्वक्षिप्रक्षुद्रशब्दाः पृथ्वादिषु पठ्यन्ते ।

परग्रहणं किम् ? यविष्ठः, यवीयान्; ह्रसिष्ठः, ह्रसीयान्—इत्यत्र पूर्वस्य यणादेर्लोपो मा भूत् ।

पूर्वग्रहणं विस्पष्टार्थम् ॥

**पदमञ्जरी**

*स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः ॥* यद्यपि प्रकृतो लोपशब्दो भावसाधनः, तथापीह कर्मसाधनोऽपि ज्ञायते; यणादि परं लोप इति सामानाधिकरण्येन निर्देशात् । तदाह—*यणादिपरं लुप्यत इति । पूर्वग्रहणं विस्पष्टार्थमिति ।* 'इको गुणवृद्धी' इति वचनाल्लुप्तावशिष्टस्य य इक् तस्य गुणो भविष्यतीति भावः । अत एव वचनादजादी प्रत्ययौ भवत इति । इमनिच तु पृथ्वादिष्वपठितेभ्यो न भवति; अनभिधानात् ॥

**न्यासः**

दाहरणमात्रपरिगणनम् । एतावदेव प्रयोजनमिति यस्मात् प्रादयोऽपीष्यन्ते । ननु 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' इति चुरादिगण एव पठ्यते, तत् कस्मात् पुनरिह णाविष्ठवद्भाव उच्यते ? अस्यैव प्रपञ्चार्थमित्येके । गणे वा स वक्तव्यः । असौ इतर इति विकल्पप्रदर्शनार्थमित्यन्ये ॥

**स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः ॥** यद्यपि पूर्वं भावसाधनो लोपशब्द उपात्तः, तथापीह कर्मसाधनो गृह्यते; यणादिपरमिति निर्देशात् । भावसाधने हि तस्मिन् 'कर्तृकर्मणोः कृति' इति षष्ठी स्यात् । कर्मसाधने तु कर्मणस्तेनैवाभिहितत्वात् प्रथमैव युज्यत इति मन्यमानो लोपशब्दस्य कर्मसाधनतां दर्शयन्नाह—यणादिपरं लुप्यत इति । कथं पुनस्तस्यैव भावसाधनस्य सतः कर्मसाधनतोपपद्यते ? कः पुनराह—तस्यैवेति ! प्रतिसूत्रं ह्यनुवर्त्तमानो लोपशब्दो भिद्यते ।

ननु च यणादौ परस्मिन् लुप्ते सामर्थ्यात् तत्पूर्वस्यैव गुणो विज्ञास्यते, तत् किमर्थं पूर्वग्रहणम् ? इत्याह—पूर्वग्रहणं विस्पष्टार्थमिति ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



**प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः ॥ १५७ ॥**

प्रिय, स्थिर, स्फिर, उरु, बहुल, गुरु, वृद्ध, तृप्र, दीर्घ, वृन्दारक—इत्येतेषां प्र, स्थ, स्फ, वर्, बंहि, गर्, वर्षि, त्रप्, द्राघि, वृन्द—इत्येते यथासंख्यमादेशा भवन्ति इष्ठेमेयस्सु परतः। प्रिय—प्रेष्ठः। प्रेमा। प्रेयान्। स्थिर—स्थेष्ठः। स्थेयान्। स्फिर—स्फेष्ठः। स्फेयान्। उरु—वरिष्ठः। वरिमा। वरीयान्। बहुल—बंहिष्ठः। बंहिमा। बंहीयान्। गुरु—गरिष्ठः। गरिमा। गरीयान्। वृद्ध—वर्षिष्ठः। वर्षीयान्। तृप्र—त्रपिष्ठः। त्रपीयान्। दीर्घ—द्राघिष्ठः। द्राघीयान्। द्राघिमा। वृन्दारक—वृन्दिष्ठः। वृन्दीयान्।

प्रियोरुगुरुबहुलदीर्घाः पृथ्वादिषु पठ्यन्ते, तेनान्येषामिमनिज् न भवतीति नोदाह्रियते ॥

**बहोर्लोपो भू च बहोः ॥ १५८ ॥**

बहोरुत्तरेषामिष्ठेमेयसां लोपो भवति, तस्य च बहोः स्थाने 'भू' इत्ययमादेशो भवति। भूयान्। भूमा।

**पदमञ्जरी**

*प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः ॥* प्रियस्थिरोरुबहुलदीर्घाः पृथ्वादिषु पठ्यन्ते, तेनैतेष्विमनिजनुवृत्तेश्चरितार्थत्वादितरेष्विमनिचः कल्पकमेतद्वचनं न भवति, तदाह—*तेनान्येषामिति* ॥

*बहोर्लोपो भू च बहोः ॥ भूयानिति*। 'आदेः परस्य' इत्यादेर्लोपः।

**न्यासः**

**प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः ॥** किं पुनः कारणं प्रियोरुगुरुदीर्घाणामेवेमनिजुदाह्रियते, नान्येषाम्? इत्याह—प्रियोरुबहुलगुरुदीर्घा इत्यादि। 'प्रियादिभ्य एवेमनिच् सम्भवति, नान्येभ्यः' इत्येवम्परमेतद्वाक्यमित्यर्थः। अन्यथा यद्यपि प्रियादय एव पृथ्वादिषु पठ्यन्ते, तथापि यद्यन्ये वा दृढादिषु पठ्यन्ते, वर्णवाचिनो वा स्युः, तदोदाह्रियेतेमनिच् तेषामित्यकारणमेतद् इमनिचोऽत्र उदाहरणं स्यात् ॥

**बहोर्लोपो भू च बहोः ॥** बहोरुत्तरेषामिति। एतेन प्रथमस्य बहोः पञ्चम्यन्ततां

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



बहुशब्दः पृथ्वादिषु पठ्यते । 'बहोः' इति पुनर्ग्रहणं स्थानित्वप्रतिपत्त्यर्थम्; अन्यथा हि प्रत्ययानामेव भूभावः स्यात् ॥

**इष्ठस्य यिट् च ॥ १५९ ॥**

बहोरुत्तरस्य इष्ठस्य यिडागमो भवति बहोश्च भूरादेशो भवति । भूयिष्ठः ।

लोपापवादो यिडागम; तस्मिन्निकार उच्चारणार्थः ॥

**ज्यादादीयसः ॥ १६० ॥**

**पदमञ्जरी**

*अन्यथा हीति* । यदि पुनः 'बह्वोः' इति नोच्येत, ततो यथा लोपः प्रत्ययानां भवति, तथा भूभावोऽपि तेषामेव स्यात् । पर्यायेण तत्र लोप आदेर्भूभावः सर्वस्य शक्यते वक्तुम् ? पृथग्निर्देशात्प्रत्ययानां न भविष्यति, अन्यथा 'भूलोपौ बह्वोः' इति ब्रूयात् । एवं च कृत्वा 'उत्तरपदभूम्नि' इति निर्देश उपपद्यत इति ॥

*इष्ठस्य यिट् च* ॥ *लोपापवादो यिडागम इति* । नाप्राप्ते तस्मिन्नारम्भात् । *तस्मिन्निति* । लोपापवादभूते । यदि तु लोपोऽप्यनुकृष्य विधीयते तदा इकारो नोच्चारणार्थः ॥

**न्यासः**

दर्शयति, तस्य च बहोरित्यनेनापि द्वितीयस्य षष्ठयन्तताम् । भूयानिति । 'आदेः परस्य' इतीकारस्यैव लोपः ।

अथ किमर्थं बहोरिति पुनर्ग्रहणम् ? इत्याह—बहोरिति पुनरित्यादि । असति हि बहोरिति ग्रहणे बहुशब्दस्य स्थानित्वं न प्रतीयेत; पञ्चम्यन्तेन निर्देशात् । तस्मात् स्थानित्वप्रतिपत्तये पुनर्बहोरित्युच्यते । अन्यथा हीत्यादि । यदि बहोरिति नोच्येत, तदा प्रत्ययानामेव भूभावः स्यात्; 'तस्मादित्युत्तरस्य' इति वचनात् । ननु पृथग्निर्देशादेव प्रत्ययानां न भविष्यति, अन्यथा 'भूलोपौ' इत्ययं ब्रूयात् ? नैतदस्ति; अस्ति ह्यन्यत् पृथग्निर्देशस्य प्रयोजनम् । किम् ? पृथक्स्थानिकौ यथा स्याताम्, आदेर्माभूतामिति । यदि 'भूलोपौ' इत्येवमुच्येत, तदा 'आदेः परस्य' इत्याद्यस्यैव वर्णस्य पर्यायेण भूलोपौ स्यातामिति । अतो भिन्नस्थानिकौ यथा स्यातामित्येवमर्थः पृथग्योगनिर्देशः स्यात् । तस्माद् युक्तमुक्तम्—'अन्यथा हि प्रत्ययानामेव भूभावः स्यात्' इति । चकारोऽत्र सन्नियोगार्थः ॥

इष्ठस्य यिट् च ॥ लोपापवादो यिडागम इति । नाप्राप्ते तस्मिन्नस्यारम्भात् । तस्मिन्निकार उच्चारणार्थः इति । प्रयोजनान्तराभावात् । चकारः 'बहोश्च भूः' इत्यनुकर्षणार्थः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


ज्यादुत्तरस्य ईयस आकार आदेशो भवति । ज्यायान् ।

लोपस्य यिटा व्यवहितत्वादादित्युच्यते । लोपे हि सति अकृद्यकार इति दीर्घत्वेन ज्यायानिति सिध्यति ॥

र ऋतो हलादेर्लघोः ॥ १६१ ॥

रशब्द आदेशो भवति ऋकारस्य हलादेर्लघोरिष्ठेमेयस्सु परतः । प्रथिष्ठः, प्रथिमा, प्रथीयान् । म्रदिष्ठः, म्रदिमा, म्रदीयान् ।

ऋत इति किम् ? पटिष्ठः, पटिमा, पटीयान् । हलादेरिति किम् ? ऋजिष्ठः, ऋजिमा, ऋजीयान् ।

लघोरिति किम् ? कृष्णिष्ठः, कृष्णीयान्, कृष्णिमा ।

परिगणनं कर्त्तव्यम्—

पृथुं मृदुं भृशं चैव कृशं च दृढमेव च ।
परिपूर्वं वृढं चैव षडेतान् रविधौ स्मरेत् ॥

पदमञ्जरी

*ज्यादादीयसः ॥ लोपस्येति ।* यदि लोपो यिटा न व्यवहितः स्यात्तेनैव ज्यायानिति सिध्यतीति कृत्वा आदिति न वक्तव्यं स्यादिति भावः । कथं पुनर्लोपे सिद्धिः ? इत्याह—*लोपे हीति । अकृद्यकार इति ।* अत्र क्ङितीति नानुवर्त्तत इति भावः । उरुयेत्यादौ छान्दसत्वाद्दीर्घाभावः ॥

*र ऋतो हलादेर्लघोः ॥ परिगणनं कर्त्तव्यमिति ।* एवं च 'हलादेर्लघोः' इति

न्यासः

ज्यादादीयसः ॥ ज्यायानिति । 'प्रशस्यस्य श्रः', 'ज्य च' इति ज्यादेशः । लोपस्य यिट् चेत्यादि । यद्यत्र लोपो यिटा न व्यवधीयते तदा तेनैव ज्यायानित्येतत् सिध्यतीति कृत्वाऽऽदिति नोच्येत इत्यभिप्रायः । कथं पुनरादित्यनुच्यमाने लोपेन सिध्यति ? इत्यत आह—लोपे हि सतीत्यादि । अथ दीर्घोच्चारणं किमर्थम्, यावतान्तरतम्यादेव दीर्घस्य दीर्घ एव भविष्यति ? नैतदस्ति; न हि भाव्यमानोऽण् सवर्णान् न गृह्णातीति ॥

र ऋतो हलादेर्लघोः ॥ कर्त्तव्यमिति । व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—उत्तरसूत्रे यद्विभाषाग्रहणं तदिहापि सम्बध्यते, सा च व्यवस्थितविभाषा, तेन पृथ्वादीनामेव भविष्यति । यद्येवम्, 'हलादेर्लघोः' इत्येतन्न कर्त्तव्यम्, व्यवस्थितविभाषया हलादेर्लघोश्च भविष्यति ? सत्यमेतत्; तद् विस्पष्टार्थं क्रियते ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तत इह न भवति—कृतमाचष्टे कृतयति, मातरमाचष्टे मातयति, भ्रातयति ॥

विभाषर्जोश्छन्दसि ॥ १६२ ॥

'ऋजु' इत्येतस्य ऋतः स्थाने विभाषा रेफ आदेशो भवति इष्ठेमेयस्सु परतश्छन्दसि विषये । रजिष्ठमनु नेषि पन्थाम् । त्वमृजिष्ठः ॥

प्रकृत्यैकाच् ॥ १६३ ॥

एकाज् यद्भसंज्ञकं तदिष्ठेमेयस्सु परतः प्रकृत्या भवति । स्रग्विन्नित्येतस्य विन्नन्तस्य—स्रजिष्ठः, स्रजीयान्, स्रजयति । स्रुग्वदित्येतस्य मत्वन्तस्य—स्रुचिष्ठः, स्रुचीयान्, स्रुचयति ।

पदमञ्जरी

न वक्तव्यम् । *मातयतीति* । उणादीनामव्युत्पन्नत्वात् 'तुरिष्ठेमेयःसु' इति तृशब्दस्य लोपो न भवति, अत्र परत्वाट्टिलोपं बाधित्वा रभावः प्राप्नोति ॥

*प्रकृत्यैकाच्* ॥ *इष्ठेमेयस्सु परत इति* । यदि त्विष्ठादीनामिहानुवृत्तिर्न स्यात्, तदा श्रिये हितम् 'प्राक् क्रीताच्छः' श्रीयम्, ज्ञा देवतास्य ज्ञः, स्थालीपाक इत्यत्र यस्येतिलोपो न स्यात्, ततश्च श्रीयमित्यत्रेयङादेशः स्यात्, तस्मादनुवर्त्या इष्ठादयः । *स्रजिष्ठ इति* । अथ प्रादयः किमित्युपेक्षिताः—प्रेष्ठः, प्रेयान्, स्थेष्ठः, स्थेयानिति ? असिद्धत्वात्प्रादीनां टिलोपो यस्येतिलोपश्च न भविष्यति । इह तर्हि श्रेष्ठः, श्रेयानिति ? अकारोच्चारणसामर्थ्याल्लोपो न भविष्यति । तस्माद्विन्मतोर्लुक्येवास्योदाहरणस्य सम्भवः । यद्येवम्, नाप्राप्ते टिलोपे आरभ्यमाणो विन्मतोर्लुक् लोपं बाधिष्यते ? सत्यम्; विन्नन्तस्य मत्वन्तस्य च टिलोपः प्राप्तस्तं बाधते । यस्तु तयोर्लुकि कृते अवशिष्टस्य टिलोपः प्राप्नोति,

न्यासः

तत इह न भवतीत्यादि । अक्रियमाणे तु परिगणने कृतयर इत्यादावपीष्ठवद्भावेन स्यादेवेति भावः ।

विभाषर्जोश्छन्दसि ॥ प्रकृत्यैकाच् ॥ स्रजिष्ठ इति । अत्र प्रकृतिवद्भावेन टिलोपो न भवति । ननु च 'विन्मतोर्लुक्' टिलोपं बाधिष्यते, नाप्राप्ते त्वस्मिंस्तस्यारम्भात् ? नैतदस्ति; द्वौ टिलोपौ—एको विन्मत्वन्तस्य, अन्यो लुकि कृते सत्यवशिष्टस्य; तत्र योऽसौ विन्मत्वन्तस्य टिलोपस्तस्मिन्नप्राप्ते लुगारभ्यत इति युक्तं यदसौ तं बाधते । यस्त्ववशिष्टस्य टिलोपस्तस्य प्राग्लुक्प्राप्त्यसम्भवादप्राप्त एव तस्मिन्नारभ्यमाणः कथं पश्चादुपजातप्राप्तिकं लोपं बाधेत ! तस्मादारब्धव्यमिदम् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


एकाजिति किम् ? वसुमदित्येतस्य वसिष्ठः । वसीयान् ।

❀ प्रकृत्याऽके राजन्यमनुष्ययुवानः ❀ । अके प्रत्यये परतो राजन्य, मनुष्य, युवन्—इत्येते प्रकृत्या भवन्ति । राजन्यानां समूहो राजन्यकम् । मनुष्याणां समूहो मानुष्यकम् । 'आपत्यस्य च तद्धितेऽनाति' इति यलोपः प्रकृतिभावेन न भवति । यूनो भावः यौवनिका । मनोज्ञादित्वाद् वुञ्, तस्य 'नस्तद्धिते' इति टिलोपो न भवति ॥

**पदमञ्जरी**

तस्य कथं बाधकः स्यात् ! न हि तस्मिन्नप्राप्ते विन्मतोर्लुगारभ्यते । अवश्यं चैतदेवं विज्ञेयम्—अवशिष्टस्य यष्टिलोपस्तं न बाधत इति; अन्यथा यत्रावशिष्टमनेकाच् तत्रापि टिलोपो न स्यात्, ततश्च वसिष्ठः, वसीयानिति प्रत्युदाहरणं नोपपद्यते । एवं चातिशयेन ब्रह्मवान् ब्रह्मिष्ठः, अवशिष्टस्य 'नस्तद्धिते' इति टिलोपो भवति । बह्वृचब्राह्मणं च—'तस्माद्ब्राह्मणं ब्रह्मिष्ठं कुर्वीत' इति, तथातिशयेन पयस्वी पयिष्ठ इति भवति, न तु पयसिष्ठ इति ।

अपर आह—

इष्ठेमेयस्स्वनेकाचोऽप्यवशिष्टस्य नेष्यते ।
टिलोपो भाष्यकारेण प्रवृत्ते विन्मतोर्लुकि ।। इति ।

*प्रकृत्येत्यादि* । राज्ञोऽपत्यं राजन्यः, 'राजश्वशुराद्यत्', मनोरपत्यं मनुष्यः, 'मनोर्जातावञ्यतो षुक्च', ताभ्यां समूहे 'गोत्रोक्षोष्ट्र' इत्यादिना वुञ् । *आपत्यस्य चेत्यादि* । एतच्चानयोरपत्यवाचित्वमङ्गीकृत्योक्तम् । यदा तु जातिमात्रमुभयत्र शब्दार्थः, अपत्यार्थस्तु नास्त्येवेति पक्षः, तदानापत्यत्वादेव लोपस्याप्रसङ्गान्नार्थः प्रकृतिभावेन ॥

**न्यासः**

प्रकृत्याके राजन्येत्यादि । किं वक्तव्यमेतत् ? न; कथं तर्हि 'तुरिष्ठेमेयस्सु' इत्येतन्निवृत्तम् । सामान्येनायं प्रकृतिवद्भावो विधेयः, विभाषेति चानुवर्त्तते, सा च व्यवस्थितविभाषा । तेन यत्र यत्रेष्यते तत्र सर्वत्र भविष्यति, यत्र तु नेष्यते तत्र न भविष्यत्येव । एवम् 'इनण्यनपत्ये' इत्येवमादिकं प्रकृतिभावविधानमनर्थकं स्यादिति चेत् ? न; प्रपञ्चार्थत्वात् । राजन्यकमिति । राज्ञोऽपत्यमिति 'राजश्वसुराद् यत्', तस्मात् समूहेऽर्थे 'गोत्रोक्षोष्ट्रोरभ्र' इत्यादिनात्र वुञ् । मानुष्यकमिति । मनोरपत्यमिति 'मनोर्जातावञ्यतौ षुक्च' इति येषां मतेऽपत्यार्थे यत्, तेषां पूर्वसूत्रेण वुञि कृते लोपः प्राप्नोति, स प्रकृतिभावान्निवर्त्तते । येषां तु मतेन जातिमात्रे यत्, नापत्ये, तेषां नार्थः प्रकृतिभावेन; अनापत्ययकारत्वादेव हि लोपो न भविष्यति ॥



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


## इनण्यनपत्ये ॥ १६४ ॥

इन्नन्तमनपत्यार्थेऽणि परतः प्रकृत्या भवति। सांकूटिनम्। सांराविणम्। सांमार्जिनम्[1]। 'अभिविधौ भावे इनुण्', 'अणिनुण', इत्यण्[1]। स्राग्विण इदं स्राग्विणम्।

अणीति किम्? दण्डिनां समूहो दाण्डम्। 'अनुदात्तादेरञ्' इत्यञ्प्रत्ययः। अनपत्य इति किम्? मेधाविनोऽपत्यं मैधावः॥

## गाथिविदथिकेशिगणिपणिनश्च ॥ १६५ ॥

गाथिन्, विदथिन्, केशिन्, गणिन्, पणिन्—इत्येते चाणि प्रकृत्या भवन्ति। गाथिनोऽपत्यं गाथिनः। वैदथिनः। कैशिनः। गाणिनः। पाणिनः।

अपत्यार्थोऽयमारम्भः॥

## संयोगादिश्च ॥ १६६ ॥

संयोगादिश्च इनणि प्रकृत्या भवति। शङ्खिनोऽपत्यं शाङ्खिनः। माद्रिणः। वाज्रिणः॥

### पदमञ्जरी

**इनण्यनपत्ये** ॥ *सांकूटिनमिति*। 'कूट दाहे', दीर्घोपधः, 'अभिविधौ भावे इनुण्', 'अणिनुणः'॥

*गाथिविदथिकेशिगणिपणिनश्च* ॥ मत्वर्थीयेन्नन्ता एते। गाथाशब्दो व्रीह्यादिः। विदथः = यज्ञः॥

*संयोगादिश्च* ॥ अयमपत्यार्थ आरम्भः॥

### न्यासः

**इनण्यनपत्ये** ॥ साङ्कूटिनम्, सांराविणम्, साम्मार्जिनमिति। 'कूट दाहे', 'रु शब्दे', 'मृजू शुद्धौ'। 'अभिविधौ भावे इनुण्', 'मृजेर्वृद्धिः' सांकूटिन्, सांराविन्, सांमार्जिन्—इति स्थिते 'अणिनुणः' इति स्वार्थेऽण्। मैधाव इति। 'अस्मायां' इत्यादिना विनिः, तदन्तात् प्राग्दीव्यतोऽणपत्यार्थे॥

**गाथिविदथिकेशिगणिपणिनश्च** ॥ अपत्यार्थोऽयमारम्भः; अनपत्ये पूर्वेणैव सिद्धत्वात्। इन्नन्तत्वादेषाम्॥

**संयोगादिश्च** ॥ अयमप्यपत्यार्थ आरम्भः। शाङ्खिन इति। शङ्खमद्रवज्रशब्देभ्यो मत्वर्थे इनिः, तदन्तात् पूर्ववदण्॥

---

१-१. पाठोऽयं बहुत्र पुस्तकेषु नास्ति।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## अन् ॥ १६७ ॥

अन्नन्तमणि प्रकृत्या भवति अपत्ये चानपत्ये च। सामनः। वैमनः। सौत्वनः। जैत्वनः॥

## ये चाभावकर्मणोः ॥ १६८ ॥

यकारादौ च तद्धितेऽभावकर्मणोरर्थयोरन् प्रकृत्या भवति। सामसु साधुः सामन्यः। वेमन्यः।

अभावकर्मणोरिति किम्? राज्ञो भावः कर्म वा राज्यम्। 'राजन्' इति पुरोहितादिषु पठ्यते, ततोऽयं यक् प्रत्ययः॥

## आत्माध्वानौ खे ॥ १६९ ॥

आत्मन् अध्वन्–इत्येतौ खे परतः प्रकृत्या भवतः। आत्मने हित आत्मनीनः[1]। अध्वानमलङ्गामी अध्वनीनः।

ख इति किम्? प्रत्यात्मम्। प्राध्वम्। प्रत्यात्मम्–इत्यव्ययीभावे 'अनश्च' इति समासान्तष्टच्प्रत्ययः। प्राध्वम्–इति 'उपसर्गादध्वनः' इति अच्प्रत्ययः॥

### पदमञ्जरी

*अन्* ॥ 'अनपत्ये' इति निवृत्तम्। *सामनः, वैमन इति*। 'तस्येदम्' इत्यण्,

### न्यासः

अन् ॥ 'अनपत्ये' इति निवृत्तम्। सामान्येनाणमात्रे विधिः। सामनः, वैमन इति। 'तस्येदम्' इत्यण्। सौत्वन इति। 'षुञ् अभिषवे', 'सुयजोर्ङ्वनिप्' इति ङ्वनिप्, 'ह्रस्वस्य पिति कृति तुक्'॥

ये चाभावकर्मणोः ॥ सामन्यः, वेमन्य इति। 'तत्र साधुः' इति यत्॥

आत्माध्वानौ खे ॥ आत्मनीनमिति। 'आत्मन्विश्वजनभोगोत्तरपदात् खः'। अध्वनीनमिति। अत्रापि 'अध्वनो यत्खौ' इति खप्रत्ययः।

प्रत्यात्ममिति। आत्मानं प्रतीति 'अव्ययं विभक्ति' इत्यादिना यथार्थेऽव्ययीभावः। ततः 'अनश्च' इति टच्। प्राध्वमिति। प्रगतमध्वानमिति प्रादिसमासः, 'उपसर्गादध्वनः' इत्यच्॥

---

१. 'आत्मने हितमात्मनीनम्, अध्वनीनम्' इत्यधिकं क्वचित्।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

## न मपूर्वोऽपत्येऽवर्मणः ॥ १७० ॥

मपूर्वोऽन् अवर्मणोऽणि परतोऽपत्येऽर्थे न प्रकृत्या भवति। सुषाम्णोऽपत्यं सौषामः। चान्द्रसामः।

मपूर्वं इति किम्? सौत्वनः। अपत्य इति किम्? चर्मणा परिवृतो रथः चार्मणः। अवर्मण इति किम्? चक्रवर्मणोऽपत्यं चाक्रवर्मणः।

॥ मपूर्वप्रतिषेधे वा हितनाम्न इति वक्तव्यम् ॥। हितनाम्नोऽपत्यं हैतनामः, हैतनामनः॥

## ब्राह्मोऽजातौ ॥ १७१ ॥

योगविभागोऽत्र क्रियते। 'ब्राह्मः' इत्येतदपत्याधिकारेऽपि साम-

### पदमञ्जरी

'सुयजोर्ङ्वनिप्', ह्रस्वस्य तुक्—सुत्वा, तस्यापत्यं *सौत्वनः* ॥

*ब्राह्मोऽजातौ* ॥ *योगविभागोऽत्र क्रियते इति*। यदि न क्रियेत, तदापत्य इत्यनुवर्त्तते वा, न वा? तत्रानुवृत्तावनन्तरसूत्रेण प्रकृतिभावप्रतिषेधात् 'नस्तद्धिते'

### न्यासः

**न मपूर्वोऽपत्येऽवर्मणः ॥ चार्मण इति**। 'परिवृतो रथः' इत्यर्थे 'प्राग्दीव्यतोऽण्'।
**वा हितनाम्न इति वक्तव्यमिति**। हितनामशब्दस्य वा प्रतिषेधो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—इहापि तदेव विभाषाग्रहणमनुवर्त्तते, सा च व्यवस्थितविभाषा। तेन हितनाम्नो वा प्रतिषेधो भविष्यति ॥

**ब्राह्मोऽजातौ** ॥ यद्येतदेकमेव सूत्रं स्यात् ततो नियमार्थं वा स्यात्? विध्यर्थं वा? यद्यपत्य इति वर्त्तते, ततोऽनन्तरसूत्रेणैव प्रकृतिभावे प्रतिषिद्धे 'नस्तद्धिते' इति टिलोपः सिध्यत्येव, सिद्धे सत्येतन्नियमार्थं भविष्यति—अजातावेवापत्यार्थे यथा स्यादिति। तथा च 'तस्येदम्' इत्यणि विहिते ब्राह्मो गर्भः, ब्राह्ममस्त्रम्, ब्राह्मं हविः, ब्राह्मी ओषधिरिति न सिध्यति; अपत्याणोऽभावात्। अथापत्य इति निवृत्तम्, ततो विध्यर्थमेव भविष्यति। अपत्ये हि पूर्वसूत्रेण प्रकृतिभावः प्रतिषिद्धः, ततश्च 'अन्' इति प्रकृतिभावे प्राप्तेऽजातौ ब्राह्म इत्येतट्टिलोपार्थं निपात्यते। एवञ्च विध्यर्थेऽस्मिन् सिद्धम्—ब्राह्मो गर्भः, ब्राह्ममस्त्रम्, ब्राह्मं हविरिति; ब्रह्मण इयं ब्राह्मी ओषधिरित्येतत्तु न सिध्येत्; अजाताविति प्रतिषेधात्। अपत्ये जातौ च 'न मपूर्वोऽपत्येऽवर्मणः' इति प्रकृतिभावे प्रतिषिद्धे सति 'नस्तद्धिते' इति भवति टिलोपः—ब्राह्मो नारद इति, तथेहापि स्याद्-ब्रह्मणोऽपत्यमिति ब्राह्मण इति। एवमेकयोगे दोषप्रसङ्गमभिवीक्ष्य तत् परिजिहीर्षुराह-योगविभागोऽत्र क्रियत इति। योगविभागे सति यद्यपत्य इत्यनुवृत्तेरपत्य एव टिलोपो

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



र्थादपत्यादन्यत्राणि टेर्लोपार्थं निपात्यते । ब्राह्मो गर्भः । ब्राह्ममस्त्रम् । ब्राह्मं हविः । ततः 'जातौ', अपत्य इत्येव—अपत्ये जातावणि ब्रह्मणष्टिलोपो न भवति । ब्रह्मणोऽपत्यं ब्राह्मणः ।

अपत्य इत्येव—ब्राह्मी ओषधिः ॥

## कार्मस्ताच्छील्ये ॥ १७२ ॥

### पदमञ्जरी

इत्येव टिलोपस्य सिद्धत्वान्नियमार्थमेतद्भवति—अजातावेवापत्ये इति, तत्रापत्ये सिद्धमिष्टम्—ब्राह्मो नारदः, ब्राह्मणजातिरिति । अनपत्ये तु जातावजातौ च न क्वचिट्टिलोपः स्याद्—ब्राह्मी ओषधिः, ब्राह्मं हविरिति । अननुवृत्तौ तु विधिनियमसम्भवे विधिरेव ज्यायानिति अनपत्ये 'अन्' इति प्रकृतिभावे प्राप्ते अजातौ टिलोपार्थं विध्यर्थमेतद्भवति; तत्र ब्राह्मं हविरित्यादि सिद्धम्, ब्राह्मी ओषधिरिति न सिध्यति; अजाताविति प्रतिषेधात्, ब्राह्मणी ओषधिरिति प्राप्नोति । अपत्ये च जातौ ब्राह्मण इति न सिध्यति, पूर्वसूत्रेण प्रकृतिभावे प्रतिषिद्धे टिलोपप्रसङ्गादिति भावः । विभक्तस्यार्थमाह—*ब्राह्म इत्येतदिति* । *सामर्थ्यादिति* । अपत्ये पूर्वेणैव टिलोपस्य सिद्धत्वाद्ब्राह्म इत्येतावता नियमस्य कर्त्तुमशक्यत्वाच्च, तत्रापत्येऽपि ब्राह्मो नारद इति परत्वादनेनैव टिलोपः । *अपत्ये वेति* । अन्यथा अनपत्ये वापत्ये च जातौ प्रतिषेधः स्यात्, प्रसज्यप्रतिषेधश्चायमित्याह—*अपत्ये जाताविति* ॥

*कार्मस्ताच्छील्ये* ॥ *यद्येवमिति* । यदि तु णप्रत्ययोऽयमित्यर्थः । नस्तद्धित

### न्यासः

निपात्यते, पूर्ववत् सिद्धे सति नियमार्थमेव निपातनं स्यात्, ततश्च स दोषस्तदवस्थ एव स्याद् यः प्राङ् नियमपक्षे उक्तः । तथा च योगविभागकरणमनर्थकं स्यात् । तस्मादपत्याधिकारेऽपि योगविभागकरणसामर्थ्यादपत्यादन्यत्र 'ब्राह्म' इत्येतन्निपात्यते । एवमनपत्येऽपि 'ब्राह्म' इति निपातनाद् ब्राह्मो गर्भः, ब्राह्ममस्त्रम्, ब्राह्मं हविरित्येतत् सिध्यति । ततः 'अजातौ' इत्ययं द्वितीयो योगः । 'न मपूर्वोऽपत्येऽवर्मणः' इति प्रकृतिभावे प्रतिषिद्धे यः 'नस्तद्धिते' इति टिलोपः, स मा भूदित्येवमर्थोऽपत्य इत्येवेति । एतेनास्मिन् द्वितीये योगे 'अपत्य' इत्यनुवर्त्तत इत्याचष्टे । 'अजातौ' इति च प्रसज्यप्रतिषेधोऽयम् । तत्र जातेरपत्यार्थेन सम्बन्धः, नञस्तु भवतिना । तमेवार्थं वृत्तौ दर्शयन्नाह—अपत्ये जातावणि ब्राह्मण इति लोपो न भवतीति । जातिविशिष्टेऽपत्ये विवक्षितेऽणि परतो ब्राह्मण इत्यत्र टिलोपो न भवतीत्यर्थः ।

अपत्य इत्येव—ब्राह्मी ओषधीरिति । प्रत्युदाहरणव्याजेन योगविभागे सति जातिमात्रविवक्षायां ब्राह्मी ओषधिरित्येतदपि सिद्धं भवतीति दर्शयति ॥

कार्मस्ताच्छील्ये ॥ यद्येवमिति । यदि णकारोऽत्र प्रत्ययः, एवं सति किमर्थमिदम् ?

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



'कार्मः' इति ताच्छील्ये टिलोपो निपात्यते । कर्मशीलः कार्मः । शीलम् 'छत्रादिभ्यो णः' इति णप्रत्ययः ।

यद्येवम्, किमर्थमिदम्, 'नस्तद्धिते' इत्येव टिलोपः सिद्धः ? सत्यमेतत्; ज्ञापकार्थं तु; एतज् ज्ञापयति—ताच्छीलिके णेऽण्कृतानि भवन्तीति । तेन चौरी, तापसीति णान्तादपीकारः सिद्धो भवति ।

ताच्छील्य इति किम् ? कर्मण इदं कार्मणम् ॥

**औक्षमनपत्ये ॥ १७३ ॥**

औक्षमित्यनपत्येऽणि टिलोपो निपात्यते । औक्षं पदम् ।

अनपत्य इति किम् ? उक्ष्णोऽपत्यमौक्ष्णः, 'षपूर्वहन्धृतराज्ञामणि' इत्यलोपः ॥

**पदमञ्जरी**

*इति टिलोपः सिद्ध इति* । अणि हि प्रकृतिभावः । *ज्ञापनार्थमिति* । एवं च 'छत्रादिभ्योऽण्' इति लाघवाय कर्त्तव्यम्; णवचने प्रयोजनाभावात् । *ताच्छीलिक इति* । तुल्यजातीयविषयत्वाज्ज्ञापनस्यैतल्लभ्यते, तेन 'तदस्यां प्रहरणम्', 'प्रज्ञाश्रद्धार्चा' इत्यादिके णे ङीब्न भवति ॥

**न्यासः**

नैवास्य प्रयोजनं किञ्चिदित्यर्थः । किं कारणम् ? इत्याह—नस्तद्धित इत्येवं हीत्यादि । यद्धि लक्षणेन न प्राप्नोति तदर्थं निपातनमारभ्यते, इह तु 'नस्तद्धिते' इत्येवं सिद्धः, न हि णे केनचित् प्रकृतिभाव उक्तो यतस्तत्र टिलोपार्थमारभ्यमाणमिदमर्थवत् स्यात् । अणि हि प्रकृतिभावोऽणन्तस्योक्तः, न तु णे । अनन्तरोक्तमर्थमभ्युपगच्छति—यदि सत्यम्, किमर्थमिदम् ? इत्याह—ज्ञापकार्थमित्यादि । अण्कृतानीत्यादि । अणि कृतानि कार्याणि अण्कृतानि, 'सप्तमी' इति योगविभागात् समासः । अथ वा—अणा कृतानि, 'कर्तृकरणे कृता बहुलम्' इति समासः । किमेतस्य ज्ञापनेन प्रयोजनम् ? इत्याह—तेनेत्यादि । चुरा शीलमस्याः, तपः शीलमस्य इति 'छत्रादिभ्यो णः' इति णः, तदन्तान् ङीप् । 'ताच्छीलिके णः' इत्यस्यार्थस्य ज्ञापितत्वात् 'तदस्यां प्रहरणमिति क्रीडायां णः' इति दण्डात् णे दाण्डेति—अण्कृतं कार्यं न भवति ।

यदि तर्हि ताच्छीलिकेष्वण्कृतमिष्यते, अणेव छत्रादिभ्यः कस्मान्नोच्येत, तत्राप्ययमर्थः—ज्ञापनार्थं निपातनं कर्त्तव्यं न भवति ? युक्तमेतदुक्तवानसि; वैचित्र्यार्थं त्वण्कृतः ।

कार्मणमिति । 'तद् युक्तात् कर्मणोऽण्' इत्यण् । कर्मणा युक्तं कार्मणमिति ॥

औक्षमनपत्ये ॥ औक्षं पदमिति । 'तस्येदम्' इत्यण् ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



**दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवासिनायनिभ्रौण-हत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि ॥ १७४ ॥**

दाण्डिनायन, हास्तिनायन, आथर्वणिक, जैह्माशिनेय, वासिनायनि, भ्रौणहत्य, धैवत्य, सारव, ऐक्ष्वाक, मैत्रेय, हिरण्मय—इत्येतानि निपात्यन्ते ।

दण्डिन्, हस्तिन्—इत्येतौ नडादिषु पठ्येते, तयोरायने परतः प्रकृतिभावो निपात्यते । केषाञ्चित्तु—हस्तिन्निति नडादिषु न पठ्यते, तेषामत एव निपातनात् फगपि भवति । दण्डिनोऽपत्यं दाण्डिनायनः । हस्तिनोऽपत्यं हास्तिनायनः ।

अथर्वन्—इति वसन्तादिषु पठ्यते । अथर्वणा प्रोक्तो ग्रन्थोऽपि उपचाराद् अथर्वन्नित्युच्यते, तमधीते यः स आथर्वणिकः । इके प्रकृतिभावो निपात्यते ।

जिह्माशिन्—इति शुभ्रादिषु पठ्यते, तस्य ण्ये परतः प्रकृतिभावो निपात्यते । जिह्माशिनोऽपत्यं जैह्माशिनेयः ।

वासिनोऽपत्यम्, 'उदीचां वृद्धादगोत्रात्' इति फिञ्, तत्र प्रकृतिभावो निपात्यते—वासिनायनिः ।

भ्रूणहन्, धीवन्—इत्येतयोः ष्यञि परतस्तकारादेशो निपात्यते । भ्रूणघ्नो भावः भ्रौणहत्यम् । धीव्नो भावो धैवत्यम् । 'हनस्तोऽचि-

पदमञ्जरी

दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवाशिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि ॥ उपचारादिति । मुख्यस्याध्ययनासम्भव उपचारे हेतुः ।

भ्रौणहत्येति तु निपातनानर्थक्यम्; 'हनस्तोऽचिण्णलोः' इति तकारस्य सिद्धत्वात् । न च 'नस्तद्धिते' इति टिलोपप्रसङ्गः, उभयोरनित्ययोः परत्वात्तस्यैव

न्यासः

दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवासिनायनिभ्रौणहत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि ॥ उपचाराद् ग्रन्थोऽप्यथर्वन्नित्युच्यत इति । उपचारस्य तु तत्प्रोक्तत्वमेव निबन्धनम् । आथर्वणिक इति । 'वसन्तादिभ्यष्ठक्' ।

भ्रौणहत्यमिति । भ्रूणं हतवानिति 'ब्रह्मभ्रूणवृत्रेषु क्विप्', तदन्तात् ष्यञ् । 'हनस्तोऽचिण्णलोः' इत्यनेनैव तकारः सिद्धः, तत् किं निपात्यते ? इत्याह—हनस्तो-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



ण्णलोः' इति यत्तत्वं तद्धातुप्रत्यय एवेति–भ्रौणघ्नः, वार्त्रघ्न इत्यत्र न भवति, अतो भ्रौणहत्ये तत्वं निपात्यते ।

सारव—इति 'सरयू' इत्येतस्य अणि परतोऽयूशब्दस्य 'व' इत्यादेशो निपात्यते । सरय्वां भवं सारवमुदकम् ।

ऐक्ष्वाक—इति स्वरसर्वनाम्ना एकश्रुत्या पठ्यते । ततोऽयमाद्युदात्तोऽन्तोदात्तश्च निपात्यते । इक्ष्वाकोरपत्यम्, 'जनपदशब्दात्क्षत्रि-

पदमञ्जरी

भावादत आह—*हनस्तोऽचिण्णलोरिति* । धातुस्वरूपग्रहणे तत्प्रत्यये धातोरित्येवं विहितो यस्तत्रैव कार्यं विज्ञायते, न च ष्यञेवं विहितः, किं तर्हि ? प्रातिपदिकादित्येवम्, तेनात्र तो निपात्यते । कथं पुनर्ज्ञायते—'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यं विज्ञायते' इति ? अत एव निपातनात् । एवं तर्हि कुत्वनिवृत्त्यर्थं निपातनम् ? मैवम्; तथाहि—'न क्वादेः' इत्यत्र प्रकरणे 'भ्रूणघ्नः ष्यञि' इत्यवक्ष्यत्, अतस्तत्त्वार्थमपि निपातनं सत् ज्ञापकमेव ।

ऐक्ष्वाकशब्दोऽयमाद्युदात्तोऽन्तोदात्तश्चेष्यते, तत्रान्यतरस्य पाठे इतरस्योकारलोपो न सिद्धयति, तत्राह—*स्वरसर्वनाम्नेति* । उदात्तादीनामविभागेनावस्थानम्=एकश्रुतिः, सर्वनामवत्सर्वनाम । यथैव हि 'तस्यापत्यम्' इत्यादौ उपगुप्रभृतीन्विशेषान्सर्वनाम प्रतिपादयति, तथैकश्रुतिरप्युदात्तादीन्स्वरविशेषानिति एकश्रुतेः सर्वनामत्वम् ।

न्यासः

ऽचिण्णलोरित्यादि । 'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यसम्प्रत्यय एव' । 'धातोः' इत्येवं यो विहितः प्रत्ययः, तत्र कार्यं विज्ञायत इत्यर्थः । न च ष्यञ्प्रत्ययो धातुप्रत्ययः, किं तर्हि ? प्रातिपदिकप्रत्ययः । तेन तत्र 'हनस्तोऽचिण्णलोः' इति तकारो न प्राप्नोति, अतो निपात्यते । कथं पुनर्विज्ञायते—धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यं भवतीति ? अत एव निपातनात् । ननु च 'हो हन्तेर्ञ्णिन्नेषु' इति कुत्वप्रतिषेधार्थं निपातनं स्यात् ? नैतदस्ति; 'न क्वादेः' इत्यत्र हि नेति योगविभागादपि शक्यते कुत्वनिवृत्तिः कर्त्तुम् । भ्रौणघ्नः, वार्त्रघ्न इति । अपत्यार्थेऽण् । इक्ष्वाकुशब्दाद् यदा 'जनपदशब्दात्' इत्यादिनाञ् भवति, तदैक्ष्वाकशब्दो ञित्स्वरेणाद्युदात्तः । यदा तु 'कोपधात्' इति शैषिकोऽण् , तदाऽन्तोदात्तः ।

ननु चैवंविधसूत्र एकस्योपादानेऽपरस्य ग्रहणं न सिध्यति, तस्मादुभयोरपि स्वरभिन्नयोरुपादानं कर्त्तव्यम्—ऐक्ष्वाकः, ऐक्ष्वाक इति ? एतच्चोद्यमपाकर्त्तुमाह—*स्वरसर्वनाम्नेत्यादि* । उदात्तादीनां स्वराणामविभागेनोच्चारणम्=एकश्रुतिः । सा च स्वराणां

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



यादञ्' इत्यञ्, तत्र उकारलोपो निपात्यते। ऐक्ष्वाकः। इक्ष्वाकुषु जनपदेषु भवः 'कोपधादाण्' इत्यण्। ऐक्ष्वाकः।

मैत्रेय—इति, मित्रयुशब्दो गृष्टयादिषु पठ्यते, ततो ढञि कृते यादेरियादेशापवादो युशब्दलोपो निपात्यते। मित्रयोरपत्यं मैत्रेयः।

अथ किमर्थं मित्रयुशब्दो बिदादिष्वेव न पठ्यते, तत्राञि कृते यादेरिति इयादेशेनैव सिद्धम्; एवं च युलोपार्थं निपातनं कर्त्तव्यं न भवति; यस्कादिषु च बहुषु लुगर्थः पाठो न कर्त्तव्यो भवति, मित्र-यव इत्यञ इत्येव हि लुकः सिद्धत्वात्? नैतदस्ति; मित्रयूणां सङ्घ

## पदमञ्जरी

इयादेशापवाद इति। केकयादिसूत्रेण प्राप्त इयादेशः।

इह मित्रयुशब्दस्य चतुर्ग्रहणं क्रियते—गृष्ट्यादिषु प्रत्ययसिद्ध्यर्थम्, यस्का-दिषु लुगर्थम्, केकयादिसूत्रे इयादेशार्थम्, इदं चतुर्थं युलोपार्थम्; तत्र द्विर्ग्रहण-मकर्तुं शक्यमित्यभिप्रायेणाह—*अथ किमर्थमिति*। *लुगर्थः पाठो न कर्त्तव्य इति*। यञञोरित्येव सिद्धत्वात्। परिहरति—*नैतदस्तीति*। *अण्प्राप्नोतीति*। यदि तु 'सङ्घाङ्कलक्षणेषु' इत्यस्यानन्तरं न मैत्रेयादित्युच्येत, तदा त्रीणि ग्रहणानि, नार्थो निपातनेन। *यलोप इति*। युशब्दस्य लोप इत्यर्थः॥

## न्यासः

सर्वनामेव सर्वनाम। यथैव हि 'तस्यापत्यम्' इत्यादौ निर्देश उपगुप्रभृतीन् विशेषान् विभागेन प्रतिपादयति, तथैकश्रुतिरप्युदात्तादीन् स्वरविशेषान्। तथात्रायमैक्ष्वाकशब्दः पठ्यते—नाप्याद्युदात्तो नाप्यन्तोदात्तः; तस्य त्वेवं पठितस्य प्रत्ययविशेषात् स्वरविशेषो भवति—यदाञ् तदाद्युदात्तः, यदाण् तदान्तोदात्तः।

इयादेशापवाद इति। केकयादिसूत्रेणेयादेशः प्राप्नोति, तदपवादो लोपो निपात्यते। 'अतो गुणे' पररूपत्वम्।

अथ किमर्थमिति। येनाभिप्रायेण पृष्टवाँस्तं स्वयमेवाविष्कर्त्तुमाह—ततोऽञि कृत इत्यादि। सिद्धमिति। रूपस्वरूपयोरभेदात्। यलोपार्थश्चेत्यादिना बिदादिषु पाठे यो गुणस्तं दर्शयति। यस्कादिषु चेत्यादि। तत्र हि तस्य बहुषु गोत्रप्रत्ययस्य लुग् यथा स्यादित्येवमर्थः पाठः। स च लुग् बिदादिषु पाठे सति 'यञञोश्च' इत्यनेनैव सिध्य-तीति नार्थो यस्कादिषु पाठेन। मैत्रेयः सङ्घ इत्यादि। एतेन बिदादिषु पाठे यो दोषस्तं दर्शयति। बिदादिषु पाठे सति सर्वमेतदुपपद्यते यदुक्तवानसि; किन्तु मैत्रेय-शब्दादञन्तात् 'सङ्घाङ्कलक्षण' इत्यादिनाणप्रत्ययः स्यात्, ततो मैत्रेय इत्यनिष्टं रूपं

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



इत्यत्र गोत्रचरणाद् वुञं बाधित्वा मैत्रयकः सङ्घ इत्यत्र 'सङ्घाङ्कलक्षणेष्वञ्यञिञामण्' इत्यण् प्राप्नोति ।

हिरण्मयम्—इति हिरण्यस्य मयटि यादिलोपो निपात्यते, हिरण्यस्य विकारः हिरण्मयः ॥

**ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानिच्छन्दसि ॥ १७५ ॥**

ऋत्व्य, वास्त्व्य, वास्त्व, माध्वी, हिरण्यय—इत्येतानि निपात्यन्ते छन्दसि विषये । ऋतु, वास्तु—इत्येतयोर्यति यणादेशो निपात्यते । ऋतौ भवम् ऋत्व्यम् । वास्तौ भवं वास्त्व्यम् । वस्तुशब्दस्याणि यणादेशो निपात्यते । वस्तुनि भवो वास्त्वः । मधुशब्दस्याणि स्त्रियां यणादेशो निपात्यते—माध्वीर्नः सन्त्वोषधीः । हिरण्यशब्दाद्विहितस्य मयटो मशब्दस्य लोपो निपात्यते । हिरण्ययम् ॥

इत्युपाध्यायश्रीवामनकृतायां काशिकावृत्तौ षष्ठाध्यायस्य चतुर्थः पादः॥

**पदमञ्जरी**

*ऋत्व्यवास्त्यवास्त्व्यमाध्वीहिरण्ययानि छन्दसि ॥ मलोपो निपात्यत इति ।* तस्यासिद्धत्वाद्यस्येतिलोपाभावः । एवमपि 'अकृत्सार्वधातुकयोर्दीर्घः' इति दीर्घः प्राप्नोति, 'अङ्गवृत्तेः पुनर्वृत्तौ' इति वचनान्न भविष्यति । क्वचित्तु *मकारलोप इति* पठन्ति । तत्र यस्येति लोपे कृते प्रत्ययाकारस्य श्रवणम् ॥

*इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां षष्ठस्याध्यायस्य चतुर्थः पादः ॥*

**न्यासः**

स्यात्, न तु मैत्रेयक इत्यभीष्टम् । ढञन्तात् तु 'गोत्रचरणाद्वुञ्' भवतीति मैत्रेयक इत्यभीष्टं सिध्यति ।

**हिरण्मय इति ।** 'मयड्वैतयोर्भाषायाम्' इति मयट् ॥

**ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसि ॥ ऋत्व्यम्, वास्त्व्यमिति ।** 'भवे छन्दसि' इति यत् । **वास्त्वमिति ।** तस्येदम्' इत्यण् । एवं माध्वीत्यत्रापि । **हिरण्यय इति ।** पूर्ववन्मयट् ॥

इति बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्जिकायां षष्ठाध्यायस्य चतुर्थ पादः ॥

**समाप्तश्च षष्ठोऽध्यायः ॥**

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# काशिकावृत्तिः

## अथ सप्तमाध्याये प्रथमः पादः

### युवोरनाकौ ॥ १ ॥

यु, वु—इत्येतयोरुत्सृष्टविशेषणयोरनुनासिकयणोः प्रत्यययोर्ग्रहणम्, तयोः स्थाने यथासङ्ख्यमन, अक—इत्येतावादेशौ भवतः ।

**पदमञ्जरी**

*युवोरनाकौ* ।। शास्त्रस्य लाघवार्थं युवू प्रत्ययौ उपदिष्टौ, तयोरनेनानाकावादेशौ विधीयेते; तत्रतत्र ह्यनाकयोरेवोपदेशे शास्त्रस्य गौरवं स्यात् । इह कस्मान्न भवति—'यु मिश्रणे', युतः, युतवान् ? उदितोर्युवोरिदं ग्रहणम् । कथम् ? ल्युडादिषूकारोऽनुनासिक इत्संज्ञकः । एवमपि यूत्वा, यूतः, यूतवान्—अत्र प्राप्नोति, ऊठस्त्वनुदिदवकाशः ? अथार्थवतो युवुशब्दस्य ग्रहणम्, अनर्थकश्चायम्; तेन धात्वन्तस्य न भवति । भुज्युः, मृत्युः, कंयुः, शंयुः, ऊर्णायुरित्यादावुकारस्यानित्संज्ञकत्वादादेशाभावः । यदि तर्हि ल्युडादिषूकार इत्संज्ञकः—नन्दनः, कारकः, 'उगिदचाम्' इति नुम् प्राप्नोति ? उगितो झलन्तस्य नुम्, न चैतौ झलन्तौ । तत्तर्हि झल्ग्रहणं कर्त्तव्यम् ? नेत्याह; यदेतत् 'नपुंसकस्य झलचः' इति झल्ग्रहणं तत्पुरस्तादपकृक्ष्यते, 'उगिदचां सर्वनामस्थानेऽधातोर्झलः' 'युजेरसमासे', ततः—'नपुंसकस्य', 'झलः' इत्येव, ततः 'अचः', 'नपुंसकस्य'इत्येव, तच्चावश्यं झल्ग्रहणमपकृष्टव्यम्; अन्यथोगितो लिङ्गविशिष्टस्यापि नुम्

**न्यासः**

युवोरनाकौ ॥ शास्त्रस्य लाघवार्थमिह युवू प्रत्ययावुपदिष्टौ, तयोः स्थानेऽनाकावादेशौ विधीयेते । यदि हि यत्र यत्र युवोरुपदेशस्तत्र तत्रानाकावादेशौ विधीयेयाताम्, तदा शास्त्रस्य गौरवं स्यात्; तयोः प्रभूतवर्णसमुदायात्मकत्वात् । इह युवोरनुनासिकयणोः प्रत्यययोरिदं ग्रहणम् , न च तथाविधावननुबन्धकौ युवू शास्त्रे सम्भवतः, तत्र सामर्थ्याद् विशेषकराननुबन्धानुत्सृज्य सामान्येन तयोर्ग्रहणं विज्ञायते ? इत्याह—युवु–इत्येतयोरुत्सृष्टविशेषणयोरिति । इदं ग्रहणमिति वक्ष्यमाणेन सम्बन्धः । विशेषणं यथायोगं लकारादि, तदुत्सृष्टं परित्यक्तं ययोस्तौ तथोक्तौ । एतेन 'युवो' इति ल्युडादीनां सामान्येन निर्देश इति दर्शयति । यद्यत्र युवोरित्यविशेषेण ग्रहणं स्यात् तदा

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



योरनः, वोरकः। नन्द्यादिभ्यो ल्युः—नन्दनः। रमणः। सायमादिभ्यष्टयुटयुलौ तुट्—सायन्तनः। चिरन्तनः। ण्वुल्तृचौ—कारकः। हारकः। 'वासुदेवार्जुनाभ्यां वुन्'—वासुदेवकः। अर्जुनकः।

पदमञ्जरी

प्रसज्येत—गोमती भवती। इह तर्हि नन्दना, कारिका—'उगितश्च' इति ङीप् प्राप्नोति? ज्ञापकात्सिद्धम्, यदयं क्वचिद्युवू षित्तौ करोति—'शिल्पिनि ष्वुन्', 'टयुटयुलौ तुट् च' इति, तज्ज्ञापयति—न युवोरीकारो भवतीति। नैतदस्ति ज्ञापकम्; षित्करणं ङीषर्थम्, टित्करणमनुपसर्जनार्थम्, टितो ह्यनुपसर्जनात् ङीप् भवति, उगितः पुनरविशेषेण। तथा शातनपातनशब्दौ ल्युडन्तौ गौरादिषु पठितौ, तत्र शातनितरा, पातनितरा, 'नद्याः शेषस्यान्यतरस्याम्', 'उगितश्च' इत्युगिल्लक्षणो ह्रस्वविकल्पः प्राप्नोति। ननु चोगित इत्येवमुगित्संज्ञाशब्देनेन या नदी विहिता तस्यास्तत्र ग्रहणम्? नेत्याह; इह हि दोषः स्यात्—भोगवतितरा, गौरिमतितरा, शार्ङ्गरवादिङीनन्तावेतौ, तत्र ह्रस्वविकल्पो न स्यात्, इष्यते चात्रापि ह्रस्वविकल्पो *भाष्यकारेण*। तस्मान्नैवं शक्यम्—उदितोर्युवोर्ग्रहणम् इति। न चेदेवं युतः, युत्वा, भुज्युः, शंयुरित्यत्रापि प्राप्नोति? तत्राह-*अनुनासिकयणोरिति*। सन्ति हि यणः सानुनासिकाः, निरनुनासिकाश्च, तत्र येषामादेश इष्यते तेषु यकारवकारावनुनासिकौ पठितव्यौ, तेन न क्वाप्यनिष्टप्रसङ्गः। *प्रत्यययोरिति*। वस्तुकथनमेतत्, न त्वप्रत्ययनिवृत्त्यर्थम्, तथाविधस्यानुनासिकस्य यणोऽसम्भवात्॥

न्यासः

'यु मिश्रणे'—युतः, युतवान्, युत्वा; 'दिवु क्रीडादौ'—द्यूतः, द्यूतवान्, द्यूत्वा; 'ऊर्णायायुस्' उर्णायुरित्येवमादावप्यनाकौ स्याताम्, अतोऽस्यातिप्रसङ्गनिरासायाह—अनुनासिकयणोरिति। अनुनासिको यण्ययोरिति बहुव्रीहिः। सन्ति हि यणः सानुनासिकाः, निरनुनासिकाश्च, तत्र हि ययोरनुनासिको यण् तयोरिदं ग्रहणम्। अनुनासिकयणौ च यौ युवू तौ प्रत्ययावेव, नाप्रत्ययाविति दर्शयितुमाह—प्रत्यययोरिति। अन्ये त्वप्रत्ययनिवृत्त्यर्थं प्रत्यययोरित्युक्तमिति वर्णयन्ति, तदयुक्तम्; अनुनासिकयणोरित्यनेनैवाप्रत्ययनिवृत्तेः सिद्धत्वात्। न ह्यप्रत्ययावनुनासिकयणौ युवू शास्त्रे स्तः। तस्मादनुनासिकयणौ यौ युवू तौ प्रत्ययावेव, नाप्रत्ययाविति सम्भवप्रदर्शनार्थं प्रत्यययोरित्युक्तमिति विज्ञायते। अनुनासिकयणोश्च प्रत्यययोर्ग्रहणे सत्यङ्गस्येति सम्बन्धलक्षणेयं षष्ठी विज्ञेया। अङ्गसम्बन्धिनोर्युवोरिति सम्बन्धः। स पुनर्निमित्तिभावलक्षणः। प्रत्ययनिमित्तो ह्यङ्गस्यात्मलाभ इत्यङ्गं निमित्ति, प्रत्ययो निमित्तम्। योरनो वोरक इति। अनेन यथाक्रमं स्थान्यादेशसम्बन्धमाचष्टे। नन्द्यादिभ्यो ल्युरिति। 'नन्दीग्रहि' इत्यादिना। नन्दनः, रमण इति। 'टुनदि समृद्धौ', 'रमु क्रीडायाम्'। हेतुमति णिच्, तदन्ताल्ल्युः।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

अनुनासिकयणोरिति किम् ? 'ऊर्णाया युस्', ऊर्णायुः । 'भुजि-मृङ्भ्यां युक्त्युकौ'—भुज्युः, मृत्युरिति । एवमादीनां हि यणोऽनुना-सिकत्वं न प्रतिज्ञायते, 'प्रतिज्ञानुनासिक्याः पाणिनीयाः' ।

पदमञ्जरी

*मृत्युरिति* । 'भुजिमृङ्भ्यां युक्त्युकौ' इति सूत्रे सहनिर्दिष्टत्वादिदमुदाहृतम्, शक्यते ह्यत्र वक्तुम्—अङ्गस्य यौ युवू, कौ चाङ्गस्य युवू, ? ययोरङ्गमित्येतद्भवति, कयोश्चैतद्भवति ? प्रत्यययोः, न चैष प्रत्यय इति । आनर्थक्याच्च टघु-टद्युलोस्त्वनादेशे कृते पश्चात्तुडित्यर्थवत्त्वं प्रत्ययत्वं च । किमुच्यतेऽनुनासिकत्वं न प्रतिज्ञायत इति, न पुनर्न पठ्यते ? इत्यत आह—*प्रतिज्ञानुनासिक्या इति* । प्रतिज्ञयानुनासिक्यं येषां ते तथोक्ताः । सर्वत्र पाठाभावात्सतोऽपि वा पाठस्य सङ्कीर्णत्वात्प्रतिज्ञासमधिगम्यमेवानुनासिकत्वमित्यर्थः ।

युवोरिति समाहारद्वन्द्वश्चेत् 'स नपुंसकम्' इति नपुंसकत्वे सति 'औत्व-गुणवृद्धितृज्वद्भावेभ्यो नुम् पूर्वविप्रतिषिद्धम्' इति वचनात् 'घेर्ङिति' इति गुणं बाधित्वा 'इकोऽचि विभक्तौ' इति नुमि सति युवुन इति भवितव्यम्; इतरेतर-योगद्वन्द्वे तु द्विर्वचने यणादेशे च सति द्वयोर्वकारयोः श्रवणप्रसङ्गः; स्थानिव-द्भावाद्धलि लोपोऽपि नास्ति, तत्कथमयं निर्देशः ? इत्याह—*युवोरिति* । नपुंसक-

न्यासः

सायन्तन इति । सायमादिभ्यष्ट्युट्युलाविति । 'सायञ्चिरम्'इत्यादिना । जातादौ शैषिकेऽर्थे तद्धितः । वासुदेवकः, अर्जुनक इति । वसुदेवस्यापत्यं वासुदेवः, वासुदेवो भक्तिरस्येति 'वासुदेवार्जुनाभ्यां वुन्' इति वुन्—वासुदेवकः, अर्जुनकः ।

ऊर्णा अस्य सन्तीत्यूर्णायुः, तत्रानुनासिकयणत्वाभावान्न भवति । किं पुनः कारण-मेवमादीनां यणोऽनुनासिकत्वं नास्ति ? इत्याह—एवमादीनामित्यादि । प्रतिज्ञानुना-सिक्याः पाणिनीया इति । यत्र तैरनुनासिकत्वं प्रतिज्ञायते तत्रैव भवति, नान्यत्र । न च युस्प्रभृतीनां तैस्तत् प्रतिज्ञायते, लक्ष्यानुरोधात् । तेन तेषां यणोऽनुनासिकत्वं न भवति । आदिशब्देन 'अहंशुभमोर्युस्' इत्येवमादयो गृह्यन्ते । ननु च 'अहंशुभमो-र्युस्', 'कंशंभ्यां बभयुस्तितुतयसः' इत्यत्र सित्करणादेव न भविष्यति, सित्करणं हि पदसंज्ञार्थम्, पदसंज्ञा चानुस्वारार्था—तस्यां सत्याम् 'मोऽनुस्वारः' इत्यनुस्वारो यथा स्यात् । यदि चात्रानादेशः स्यात् तदा सित्करणमनर्थकं स्यात्, न ह्यनादेशे कृतेऽनु-स्वारो भवति; तद्विधौ 'हलि सर्वेषाम्' इत्यतो हलीत्यनुवृत्तेः । आदेशे कृते न भवति; हलादित्वाभावात् ? नैतदस्ति; वचनसामर्थ्यादजादावप्यनुस्वारः स्यात् । सित्करण-स्यान्यदपि प्रयोजनम्—पदसंज्ञा । तत् प्रयोजनम्—भसंज्ञाबाधः । भसंज्ञायामव्ययानां भमात्रे टिलोपः स्यात् । अवग्रहार्थं वा सित्करणं स्यात्, कुतस्तस्यानर्थक्यम् !

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


इह युवोः' इति निर्देशाद् द्वन्द्वैकवद्भावपक्षे 'अनित्यमागमशासनम्' इति नुम् न क्रियते ।

नपुंसकलिङ्गता वा 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति न भवति । इतरेतरपक्षे तु छान्दसत्वाद् वर्णलोपो द्रष्टव्यः ।।

युवोश्चेद् द्वित्वनिर्देशो द्वित्वे यण्तु प्रसज्यते ।
अथ चेदेकवद्भावः कथं पुंवद्भवेदयम् ।।

पदमञ्जरी

*लिङ्गता चेति* । न भवतीति वक्ष्यमाणेन सम्बन्धः । मध्ये हेतुः । *लिङ्गमशिष्यमिति* । *छान्दसो वर्णलोप इति* । अकृत एव यणादेशे उकारस्य लोपः, कृते वा तस्मिन्नन्यतरस्य वकारस्य । अपर आह—कर्मधारयोऽयम्, अवयवधर्मेण समुदायस्य व्यपदेशः । युश्चासौ समुदायो युवुलक्षणो वुश्चासाविति तत्र समुदाययस्य क्वचिदभावादवयवयोरेवानाकादेशाविति ।

न्यासः

इह युवोरिति निर्देशे समाहारे वा द्वन्द्व आश्रीयते, इतरेतरयोगे वा; तत्र पूर्वस्मिन् पक्षे षष्ठ्येकवचने कृते 'स नपुंसकम्' इति नपुंसकत्वात् 'इकोऽचि विभक्तौ' इति नुमा भवितव्यम्, ततश्च 'युवुनः' इति निर्देशः स्यात् । इतरस्मिंतु पक्ष ओसि परतो यणादेशे कृते युव्वोरिति द्वितीयवकारश्रवणमाप्द्येत ! इत्येतच्चोद्यनिरासायाह—इह युवोरिति निर्देश इत्यादि । अनित्यमागमशासनमिति । आगमानां शासनम्= विधानम्, तदनित्यमिति; क्वचित् तदभावात् । अथ वा—आगमाः शिष्यन्ते विधीयन्ते येन शास्त्रेण तदागमशासनं शास्त्रम्, तदनित्यम्, अविद्यमानं नित्यं कार्यमस्येति कृत्वा । अनित्यता पुनरागमशासनस्य 'घोर्लोपो लेटि वा' इत्यत्र वाग्रहणाल्लिङ्गाद् विज्ञायते । तद्धि ददद्, ददादित्यत्र नित्यं घोर्लोपो मा भूदित्येवमर्थं क्रियते । यदि च नित्यमागमशासनं स्याद् वाग्रहणमनर्थकं स्यात् । भवतु नित्यो लोपः, सत्यपि तस्मिन् 'लेटोऽडाटौ' इत्यटि कृते ददद् ददादिति सिद्ध्यत्येव । अनित्यत्वे त्वागमशासनस्याऽऽगमाभावान्न सिध्यति । ततो वावचनमर्थवद्भवति ।

नपुंसकलिङ्गता वेत्यादि । अथ वा नपुंसकलिङ्गतैवात्र नास्ति । किं कारणम् ? इत्याह—लिङ्गमशिष्यमित्यादि । लिङ्गस्य हि लोकधर्मत्वाल्लोक एवाश्रयः । तस्माल्लोकत एव सिद्धत्वात् तदशिष्यं न विधातव्यम् । लिङ्गशास्त्रमेवात्र तादर्थ्याल्लिङ्गशब्देनोच्यते । लिङ्गार्थं शास्त्रमशिष्यं न कर्त्तव्यम्, तत्साध्यस्य लिङ्गस्य लोकाश्रयत्वात् । तदनेन 'स नपुंसकम्' इत्यादेः प्रत्याख्यानं दर्शयति । तस्मिंश्च प्रत्याख्याते सति तद्द्वारेण तस्य नपुंसकत्वं न भवतीति कुतो नुम्प्रसङ्गः ! इतरेतरपक्षे तु छान्दसत्वाद् वर्णलोप इति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


द्वित्वे नैगमिको लोप एकत्वे नुमनित्यता ।
अशिष्यत्वाद्धि लिङ्गस्य पुंस्त्वं वेह समाश्रितम् ॥

**आयनेयीनीयियः फढखच्छघां प्रत्ययादीनाम् ॥ २ ॥**

आयन्, एय्, ईन्, ईय्, इय्—इत्येते आदेशा भवन्ति यथासंख्यं फ, ढ, ख, छ, घ–इत्येतेषां प्रत्यादीनाम् । 'फ' इत्येतस्यायनादेशो भवति–'नडादिभ्यः फक्', नाडायनः, चारायणः । ढस्य एयादेशो भवति—'स्त्रीभ्यो ढक्', सौपर्णेयः, वैनतेयः । खस्य ईनादेशो भवति–'कुलात्खः', आढ्यकुलीनः, श्रोत्रियकुलीनः । छस्य ईयादेशो भवति–'वृद्धाच्छः', गार्गीयः, वात्सीयः । 'घ' इत्येतस्येयादेशो भवति–'क्षत्राद्घः', क्षत्रियः ।

**पदमञ्जरी**

*आयनेयीनीयियः फढखच्छघां प्रत्ययादीनाम् ॥* फकारादिष्वकार उच्चारणार्थः । व्यञ्जनमात्रं स्थानि; अन्ते 'फढखछघाम्' इत्यनच्कनिर्देशात । एवं च निरनुबन्धकपरिभाषा न प्रवर्त्तते । *आढ्यकुलीन इति* । 'अपूर्वपदात्' इति वचनात् 'कुलात्खः' इत्यनेन सपूर्वपदादपि खो भवति ।

'फक्क नीचैर्गतौ', 'ढौकृ तौकृ गत्यर्थौ' । इह प्रत्ययाद्युदात्तत्वं संज्ञासन्नियोगेन विधानादन्तरङ्गम् ।

**न्यासः**

'छन्दोवत् सूत्राणि भवन्ति इति छान्दसत्वम् । तेन यथेष्कर्त्तारमध्वर इत्यत्र निसो नकारलोपः, तथेहापि वकारस्यापि लोपो द्रष्टव्यः ॥

**आयनेयीनीयियः फढखच्छघां प्रत्ययादीनाम् ॥** फादयोऽपीह शास्त्रे लाघवार्थमुपदिष्टाः, ततस्तेषामायन्नादय आदेशा विधीयन्ते । ते च विधीयमानाः फकारादेर्हल्मात्रस्य भवन्तीति वेदितव्यम् । कुत एतत् ? अन्ते घामित्यनच्कनिर्देशात्; इतरथा हि घानामित्येवं ब्रूयात् । अन्यत्र त्वागन्तुकोऽकार उच्चारणार्थ एव । अत एव प्रत्ययादौ वर्त्तमानस्य फादेर्व्यञ्जनमात्रस्य स्थानित्वेनोपादानान्निरनुबन्धकपरिभाषात्र नोपतिष्ठते, सर्वत्र हि फादयो निरनुबन्धकाः । यत्र चोभयं सम्भवति तत्रैवास्या उपस्थानम् । नाडायन इति । 'नडादिभ्यः फक्' अपत्यार्थे फक्प्रत्ययः । उत्तरेष्वप्युदाहरणेष्वीयादेशोदाहरणादन्यत्रापत्यार्थे वेदितव्यः । सौपर्णेयः, वैनतेय इति । सुपर्णाविनताभ्यां ढक् । आढ्यकुलीन इति । 'अपूर्वपदादन्यतरस्याम् यड्ढकञौ' इत्यत्रापूर्वपदादिति वचनात् 'कुलात्खः' इत्यनेन् सपूर्वपदादपि खो भवति । गार्गीयः, वात्सीय इति । गार्ग्यवात्स्यशब्दाभ्यां यञन्ताभ्यां 'तस्येदम्' इत्यर्थविवक्षायां छः, 'यस्येतिं च' इत्याकारलोपः' 'आपत्यस्य च तद्धितेऽनाति' इति यकारलोपः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


प्रत्ययग्रहणं किम् ? फक्कति। ढौकते। खनति। छिनत्ति। घूर्णते। आदिग्रहणं किम् ? ऊरुदघ्नम्। जानुदघ्नम्।

एते आयन्नादयः प्रत्ययोपदेशकाल एव भवन्ति। कृतेष्वेतेषु प्रत्ययाद्युदात्तत्वं भवति। तथा च 'घच्छौ च' इति घचश्चित्करणमर्थवद्भवति।

शङ्खः, षण्ढः[1]—इत्येवमादीनां हि 'उणादयो बहुलम्' इति बहुलवचनादादेशा न भवन्ति। 'ऋतेरीयङ् इति' वा वचनं ज्ञापकम्—

पदमञ्जरी

एते त्वायन्नादयोऽङ्गाधिकारे विधानाद्बहिरङ्गाः, ततश्च यत्र स्वरार्थोऽनुबन्धो नास्ति–'शिलाया ढः', 'वृद्धाच्छः' इत्यादौ; तत्राद्युदात्तत्वे कृते पश्चाद्भवन्त एते आदेशा अस्वरकस्याच उच्चारणासम्भवादनियतस्वराः स्युः? इत्याशङ्क्याह—*आयन्नादय इत्यादि*। अयमभिप्रायः–प्रत्ययादीनां फकारादीनामङ्गसम्बन्धाव्यभिचारात्प्रयोजनाभावादिह 'अङ्गस्य' इति न सम्बध्यते, तेन एतेऽप्यन्तरङ्गाः, तत्र परत्वादेतेषु कृतेषु पश्चादाद्युदात्तत्वमिति। अत्रैव ज्ञापकमाह—*तथा चेति*। यदि प्रत्ययस्वरे कृते आयन्नादय आदेशाः स्युः, ततो घशब्दाकारस्योदात्तत्वे कृते घकारस्य हलः स्रंसनधर्मिणः, स्रंसनधर्मिण्यनुदात्त आदेशे कृतेऽन्तोदात्तत्वं सिद्धमिति चित्करणमनर्थकं स्यादिति भावः।

न्यासः

फक्कति, ढौकत इति। 'फक्क नीचैर्गतौ', 'ढौकृ गतौ', खनु अवदारणे', 'छिदिर् द्वैधीकरणे', 'घूण घूर्ण भ्रमणे'—इत्येतेषां रूपाणि। ढौकतिघूर्णत्योरनुदात्तेत्त्वादात्मनेपदम्। ऊरुदघ्नम्, जानुदघ्नमिति। ऊरू प्रमाणमस्य 'प्रमाणे द्वयसच्' इत्यादिना दघ्नच्।

इहैत आयन्नादयोऽङ्गाधिकारे विधीयमानाः प्रकृतिप्रत्ययावपेक्ष्य भवन्तीति बहिरङ्गाः, प्रत्ययाद्युदात्तत्वं तु प्रकृत्यनपेक्षत्वात् प्रत्ययमात्रमाश्रित्य भवतीत्यन्तरङ्गम्; ततो बहिरङ्गा यावदायन्नादयो न भवन्ति तावदेव प्रत्ययाद्युदात्तत्वेन भवितव्यम्, तस्मिन् कृते सत्यादेशा भवन्तो यत्र स्वरार्थोऽनुबन्धो न विधीयते 'शिलाया ढः', 'वृद्धाच्छः' इत्यादौ तत्रानियतस्वराः प्राप्नुवन्तीत्यस्य चोद्यस्य निरासायाह–इहैत आयन्नादय इत्यादि। अयमभिप्रायः—आयन्नादयोऽप्यन्तरङ्गा एव। यदि हि 'अङ्गस्य' इत्यत्राभिसम्बध्यते तदा स्यात् तेषां प्रकृतिप्रत्ययापेक्षया बहिरङ्गत्वम्। न चात्र तदभिसम्बध्यते; प्रयोजनाभावात्। तथा हि–अङ्गस्य निमित्तं ये प्रत्ययास्तदादीनां फादीना-

१. शमेः खः, षणो ढ —शङ्खः, षण्ढः'—इति पाठः पुस्तकान्तरे लभ्यते।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



धातुप्रत्ययानामादेशाभावस्य[1]।

पदमञ्जरी

इयङिति। वावचनं ज्ञापकमिति। यदि धातुप्रत्ययानामप्येते आदेशाः स्युः, 'ऋतेश्छङ्' इत्येव ब्रूयात्। न च छङि सति वलादिलक्षणे इटि कृते अनादित्वादियादेशो न स्यादिति वाच्यम्; इदानीमेव ह्युक्तम्—अन्तरङ्गा आदेशा इति।

अपर आह—यदि धातुप्रत्ययेष्वेतज्ज्ञापकं प्रातिपदिकप्रत्ययेष्वपि शक्यं वक्तुं यदयमीयसुनं शास्ति, तज्ज्ञापयत्याचार्यः—न प्रातिपदिकप्रत्ययानामिमे आदेशा इति। यदि स्युस्तर्हि छसुनमेव विदध्यात्। एतावन्तश्च प्रत्ययाः—धातुप्रत्ययाः, प्रातिपदिकप्रत्ययाश्चेति, उच्यन्ते चादेशाः, ते वचनात्सर्वत्रैव स्युरिति।

न्यासः

मायन्नादयो यथा स्युः, अन्येषां मा भूवन्नित्येतत् प्रयोजनम्। एतच्च विनाप्यङ्गाधिकारं सामर्थ्यादेव लभ्यते। नहि फादीनां मध्ये सोऽस्ति प्रत्ययो योऽङ्गस्य निमित्तं न भवति। तस्मात् प्रयोजनाभावादङ्गस्येत्येतन्नाभिसम्बध्यते। तेन स्थानिमात्रमेवादेशा अपेक्षन्ते, न प्रकृतिमिति तेऽप्यन्तरङ्गा एव। ततश्च परत्वात् प्रत्ययोपदेशकाले तैरेव तावद् भवितव्यम्, ततश्च प्रत्ययाद्युदात्तत्वेनेति प्रत्ययोपदेशकाल एवायन्नादयो भवन्तीति तेषु कृतेषु प्रत्ययाद्युदात्तत्वं भवतीति। अत्र ज्ञापकमप्याह—तथा चेत्यादि। एवं चेत्यर्थः। घचश्चित्करणस्यैतत् प्रयोजनम्—'चितः' इत्यन्तोदात्तत्वं यथा स्यात्। यदि च प्रत्ययोपदेशावस्थायामेवायन्नादयो भवन्ति, एवं सति घचश्चित्करणमर्थवद् भवति; नान्यथा। अन्यथा हि यद्युपदेशावस्थाया उत्तरकालमेते स्युस्ततो यत्रैवासति चित्करण उदात्तत्वं भवति, घकाराकारे सत्यपि चित्करणे तत्रैव तेन भवितव्यमिति चित्करणमनर्थकं स्यात्। तस्माच्चित्करणादवसीयते—प्रत्ययोपदेशकाल एवैत आयन्नाद्यादेशास्तावद् भवन्ति, पश्चात् प्रत्ययाद्युदात्तत्वमिति भावः।

ननु च व्यञ्जनस्यैते विधीयन्ते, तच्च व्यञ्जनमस्वरकम्, एवाञ्चावश्यं येन केनचित् स्वरेण भवितव्यम्; उदात्तादिगुणरहितस्याचोऽसम्भवात्। तत्र स्थानिनः स्वराभावादान्तरतम्यं नास्तीति स्थानेऽन्तरतमपरिभाषाया अनुपस्थाने सत्यनियतस्वरैरेभिर्भवितव्यम्, ततश्च यदि चित्त्वं न स्यात्, पश्चाद् विधीयमानानामेषां यदाद्युदात्तस्वरो भवति तदा स एव स्वरः प्रसज्येत; सतिशिष्टत्वात्। तस्मात् तमपि सतिशिष्टस्वरं बाधित्वाऽन्तोदात्तत्वं यथा स्यादित्येवमर्थं घचश्चित्करणम्। ततः कुतो ज्ञापकत्वमेतच्चिन्त्यम्। अथ 'शमेः खः' शङ्खः, 'षणो ढः' षण्ढः—इत्येवमादीनां कस्मादादेशा न भवन्ति? इत्याह—शङ्खः, शण्ढ इत्यादि। 'लशक्वतद्धिते', 'चुटू' इतीत्संज्ञापि बहुलवचनादेव न भवतीति वेदितव्यम्। ऋतेरीयङित्यादि। यदयम् 'ऋतेरीयङ्' इतीयङं शास्ति तज्ज्ञापयति—धातुप्रत्ययानामायन्नादयो न सन्तीति। यदि हि स्युः, 'ऋतेश्छङ्' इति

1. 'धातुप्रत्ययादेशा न भवन्ति' इति कुत्रचित्पाठः।

काशि० ६।३६

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



'एजेः खश्', 'पदरुजविशस्पृशो घञ्'—इत्येवमादिषु तु इत्संज्ञया भवितव्यम्। तद्धितेषु हि खकारघकारयोरादेशवचनमवकाशवदितीत्संज्ञां बाधितुं नोत्सहते। आयन्नीनोर्नकारस्येत्संज्ञायां प्राप्तायां प्रतिविधातव्यम्, नित्कार्यं हि सम्भवति॥

पदमञ्जरी

*इत्संज्ञया भवितव्यमिति*। न च वचनसामर्थ्यादित्संज्ञाया बाधनमित्याह—*तद्धितेषु हीति*। *प्रतिविधानं कर्त्तव्यमिति*। प्रतिविधानं तु 'प्राचामवृद्धात्फिन् बहुलम्' इति फिनो नित्करणादित्संज्ञाया अभाव इति। न च 'फेश्छ च' इत्यत्र फिनः, फिञश्च सामान्यग्रहणार्थं नित्करणम्; वृद्धादित्यधिकाराद्धि फिञ एव तत्र ग्रहणम्, न फिनः॥

न्यासः

ब्रूयात्। ननु सिद्धे विधिरारभ्यमाणो ज्ञापकाय भवतीति? न च च्छङा सिध्यतीति, छङि हि सति वलादिलक्षण इट् प्रसज्येत, ततश्चानादित्वादादेशो न स्यात्? नैतदस्ति; यस्मादन्तरङ्गत्वादादेशेनैव भवितव्यम्। अन्तरङ्गत्वं तु तस्योपदेशावस्थायामेव विधीयमानत्वात्। आदेशे च कृते वलादित्वाभावादिट्प्रसङ्गो नास्ति। तदेतदीयङ्वचनं ज्ञापकमेव।

एजेः खशित्यादि। तुशब्दः शङ्खः, षण्ढ इत्येवमादिभ्यो विशेषप्रदर्शनार्थः। यत्रेत्संज्ञा नास्ति—शङ्खादौ, तत्रादेशप्रसङ्गे सति तन्निरासार्थं बहुलवचनमिति, 'ऋतेरीयङ्' इति वा वचनमुपन्यस्तम्। 'एजेः खश्' इत्येवमादौ तु 'लशक्वतद्धिते' इतीत्संज्ञया भवितव्यमित्यादेशप्रसङ्गो नास्त्येव। ततो न तत्र तदभावार्थं बहुलवचनम्, 'ऋतेरीयङ्' इति वावचनमुपन्यसनीयमिति भावः। आदिशब्देन 'प्रियवशे वदः खच्', 'पुंसि संज्ञायां घः प्रायेण' इत्येवमादीनां ग्रहणम्। स्यादेतत्—अनवकाशं खकारघकारयोरादेशवचनम्, अतस्तेन बाध्यमानेत्संज्ञा कथमत्र स्यात्? इत्याह—तद्धितेष्वित्यादि। 'खित्यनव्ययस्य' इति ह्रस्वविधानम् 'चजोः कु घिण्ण्यतोः' इति कुत्वविधानं ज्ञापकम्—न ह्यादेशविधानेनेत्संज्ञायां बाधितायां तदुपपद्यते; खितो घितश्चात्यन्तासम्भवात्। आयन्नीनोर्नकारस्येत्यादि। आयन्नीनोर्नकारोऽन्ते वर्त्तत इति तस्य 'हलन्त्यम्' इतीत्संज्ञा प्राप्नोति, तस्याञ्च सत्याम् 'तस्य लोपः' इति कृते नाडायनः, आढ्यकुलीन इत्यादि न सिध्यति। तस्मादायन्नीनोर्नकारस्येत्संज्ञायां प्राप्तायां तत्प्रतिविधानं कर्त्तव्यम्। स्यादेतत्। प्रयोजनाभावादेवेत्संज्ञा न भविष्यति? इत्यत आह—नित्कार्यं हीत्यादि। तत्पुनः 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तत्वम्। प्रतिविधानं पुनरत्र 'प्राचामवृद्धात् फिन् बहुलम्' इत्यत्र फिनो नकारानुबन्धकरणम्। तस्यैतत् प्रयोजनम्—नित्त्वादाद्युदात्तत्वं यथा स्यात्। तत्र यद्यायन्नीनोर्नकारस्येत्संज्ञा स्यात्, नित्त्वे सत्याद्युदात्तत्वस्य सिद्धत्वात् फिनो नित्करणमनर्थकं स्यात्। ननु 'फेश्छ च' इत्यत्र सामान्यग्रहणार्थं

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## झोऽन्तः ॥ ३ ॥

प्रत्ययग्रहणमनुवर्त्तते, आदिग्रहणं निवृत्तम् । प्रत्ययावयवस्य झस्य 'अन्त' इत्ययमादेशो भवति । कुर्वन्ति । सुन्वन्ति । चिन्वन्ति । अद्य श्वो विजनिष्यमाणाः पतिभिः सह शयान्तै । 'जॄविशिभ्यां झच्'—जरन्तः, वेशन्तः ।

### पदमञ्जरी

झोऽन्तः ॥ *आदिग्रहणं निवृत्तमिति* । तदनुवृत्तौ हि *शयान्तै* इत्यत्र शीङो लेटि 'लेटोऽडाटौ' इति लावस्थायामेव प्राप्ते आटि सति झकारस्यानादित्वान्न स्यात् । कथं पुनः समासनिर्दिष्टानामेकदेशोऽनुवर्त्तते ? नैष दोषः; अनाश्रितार्थकं शब्दमात्रं स्वरितत्ववशादनुवर्त्तते—इति पक्षे यस्यैव स्वरितत्वं प्रतिज्ञातं तस्यैवानुवृत्तिः । अर्थाधिकारपक्षे तु समासार्थस्यैकत्वात्तस्यैवानुवृत्तिः स्याद्वा, न वा । यद्वा—प्रत्ययग्रहणं पूर्वसूत्रे पृथक् पदं लुप्तविभक्तिकम्, तेन तस्यैवानुवृत्तिर्भविष्यति । आदेशे त्वकार उच्चारणार्थः, तेन पचन्तीत्यादौ श्रवणं न भवति ॥

### न्यासः

स्यात्, तस्मिन्नसति निरनुबन्धकपरिभाषयास्यैव ग्रहणं स्यात्, न फिञः ? नैतदस्ति; तत्र हि 'वृद्धाट्ठक् सौवीरेषु बहुलम्' इति बहुलग्रहणानुवृत्तेः फिञ एव ग्रहणमिष्यते, न फिनः । तदेतत् फिनो नित्करणमित्संज्ञाभावस्य ज्ञापकमेव । योगापेक्षं चेदं ज्ञापकम्—अनेन योगेन विहितस्यादेशस्य यो नकारस्तस्येत्संज्ञा न भवतीति । तेनेनोऽपि नकारस्येत्संज्ञाऽभावो भवति सिद्धः ॥

झोऽन्तः ॥ प्रत्ययग्रहणमनुवर्त्तत इति । अनन्तरसूत्रात् । यद्येवम्, एकयोगनिर्दिष्टत्वादादिग्रहणमप्यनुवर्त्तेत, ततश्च शयान्तै—इत्यत्र न स्यात्, चकारस्यादित्वाभावात् ? इत्यत आह—आदिग्रहणं निवृत्तमिति । एवं मन्यते—स्वरितत्वप्रतिबद्धा हि शब्दानामनुवृत्तिः, तच्च स्वरितत्वं प्रतिज्ञाधर्मः—'प्रतिज्ञास्वरिताः पाणिनीयाः' इति—यत्रैव तैः स्वरितत्वं प्रतिज्ञायते तत्रैव भवति, नान्यत्रेति । तेनैकयोगनिर्दिष्टानामप्येकतरस्यानुवृत्तिर्न विरुध्यते । इह च प्रत्ययस्यैव स्वरितत्वं प्रतिज्ञायते, नादिग्रहणस्य । तेन सत्यप्येकयोगनिर्दिष्टत्वे प्रत्ययग्रहणमनुवर्त्तते । आदिग्रहणं निवृत्तमिति । अन्त इत्ययमादेशो भवतीति । अकारसहित एवादेशः करणीयः । अकारः—तकारेत्संज्ञा मा भूदित्येवमर्थः । स च जरन्तः, वेशन्त इत्यत्र । कुर्वन्तीत्यादौ 'न विभक्तौ तुस्माः' इति प्रतिषेधादेवेत्संज्ञा न भवति । अथ तु 'उणादयो बहुलम्' इति वचनाज्जरन्तः, वेशन्त इत्यादौ न भवति ? तथा च सत्यकार उच्चारणार्थः । 'न विभक्तौ तुस्माः' इत्यस्यानित्यत्वज्ञापनार्थं वाऽकारोच्चारणम् । तेन 'किमोऽत्' इत्यादीनां तकारेत्संज्ञा भवति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



'प्रत्ययस्य' इत्येव—उज्झिता। उज्झितुम्। उज्झितव्यम्।

अस्मिन्नप्यन्तादेशे कृते प्रत्ययाद्युदात्तत्वं भवति। तथा च—झचश्चित्करणमर्थवद्भवति ॥

## अदभ्यस्तात् ॥ ४ ॥

अभ्यस्तादङ्गादुत्तरस्य झकारस्य 'अत्' इत्ययमादेशो भवति। ददति, ददतु। दधति, दधतु। जक्षति, जक्षतु। जाग्रति, जाग्रतु।

### पदमञ्जरी

*अदभ्यस्तात्* ॥ *ददतीत्यादि*। जक्षतीत्यादौ यत्रोपदेशानन्तरमभ्यस्तसंज्ञा, तत्राप्यवश्यं विकरणाभावः प्रतीक्ष्यः; अन्यथा नित्यत्वाच्छपि कृते तेन व्यवधानान्न स्यात्, ततश्च ददतीत्यादावपि शपः श्लावभ्यस्तसंज्ञायामदादेशो भवति।

### न्यासः

कुर्वन्तीति। 'अत उत्सार्वधातुके' इत्युत्त्वम्। शयान्तै इति। शीङः 'लिङर्थे लेट्' 'लेटोऽडाटौ' इत्याट्, टेरेत्त्वम्, 'एत ऐ' इत्यनुवर्त्तमाने 'वैतोऽन्यत्र' इत्यैत्त्वम्। उज्झितेति। 'उज्झ उत्सर्गे' तृच्। 'ऋदुशनस्' इत्यादिनानङ्, 'नोपधायाः', 'सर्वनामस्थाने च' इति दीर्घः। उज्झितुमिति। तुमुन्। उज्झितव्यम्। इति तव्यः।

अस्मिन्नपीत्यादि। ननु चान्तरङ्गत्वात् प्रत्ययाद्युदात्तत्वेन प्राग्भवितव्यम्, पश्चादादेशेन ? नैवम्; अन्तादेशस्याप्यन्तरङ्गत्वात्। अन्तरङ्गत्वं तु तस्यायन्नादिवद् वेदितव्यम्। उभयोरन्तरङ्गत्वात् पूर्वमन्तादेशः, पश्चात् प्रत्ययाद्युदात्तत्वम्। अत्रैव ज्ञापकमाह—तथा चेत्यादि। एतच्च "'घच्छौ च' इति घचश्चित्करणमर्थवद्भवति"—इत्येतद्व्याख्यानेन व्याख्यातमिति। प्रत्ययाद्युदात्तत्वात् पूर्वमन्तादेशस्य भावे सति द्विषन्तीत्यत्र मध्योदात्तत्वम्; अन्यथाऽन्तोदात्तता स्यात्। सा चानिष्टेति पूर्वमन्तादेशः क्रियते।

अदभ्यस्तात् ॥ अनात्मनेपदार्थ आरम्भः; आत्मनेपदेषूत्तरसूत्रेणैव सिद्धत्वात्। ददतीति। 'श्नाभ्यस्तयोरातः' इत्याकारलोपः। ददत्विति। लोट्, 'एरुः' इत्युत्वम्। जक्षति, जाग्रतीत्यत्र 'जक्षित्यादयः षट्' इत्यभ्यस्तसंज्ञा।

युक्तं जक्षित्यादिकमुदाहरणम्, ददतीत्याद्ययुक्तम्; अत्र झकारस्यात्मलाभकालसमनन्तरमेव तावदन्तरङ्गत्वादन्तादेशेन भवितव्यम्, ततः शपः श्लुः, 'श्लौ' इति द्विर्वचनम्, ततोऽभ्यस्तसंज्ञा; तदा झकारस्य स्थानिनोऽभावादद्भावो न प्राप्नोति। न च शक्यते वक्तुम्—स्थानिवद्भावाद् भविष्यति। न ह्यत्र स्थानिवद्भावोऽस्ति; अल्विधित्वात्। नापि बहिरङ्गोऽनवकाशत्वादन्तादेशं बाधित्वाऽदादेशो भविष्यतीति युक्तं परिकल्पयितुम्। जक्षित्यादिषूपदेशावस्थायामेव लब्धाभ्यस्तसंज्ञकेषु तस्य सावकाशत्वादिति चोद-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अन्तादेशापवादोऽयम्, जुसादेशेन तु बाध्यते—अदधुः, अजागरुः[1]। अत्राप्यादेशे कृते प्रत्ययाद्युदात्तत्वं भवति ॥

## आत्मनेपदेष्वनतः ॥ ५ ॥

### पदमञ्जरी

*जुसादेशेन तु बाध्यत इति*। तस्यानवकाशत्वात्। *अत्राप्यादेशे कृते प्रत्ययाद्युदात्तत्वं भवतीति*। उत्तरत्रेति भावः। इह तु 'अभ्यस्तानामादिः' इति स्वरो भवति ॥

### न्यासः

मपाकर्तुमाह—अन्तादेशापवादोऽयमिति। अन्तादेशस्य सामान्येन सर्वत्र प्रसक्तस्याय-मद्भावोऽपवाद आरभ्यते। न चापवादविषयमुत्सर्गोऽवगाहते। तथा चोक्तम्—'पूर्वमपवादाः प्रवर्त्तन्ते पश्चादुत्सर्गाः, परिहृत्यापवादविषयमुत्सर्गः प्रवर्तते' इति। अत एव तर्हि जुस्भावो न स्यात्। यथैव ह्यन्तादेशस्य सामान्येन प्रवृत्तस्य विशेषोऽद्भाव आरभ्यमाणोऽपवादः, तथा जुस्भावस्यापीत्याह—जुसादेशेन तु बाध्यत इति। जुसादेशस्यानवकाशत्वादित्यदादेशो बाध्यते। अदधुरिति। लङ्, 'सिजभ्यस्तविदिभ्यश्च' इति झेर्जुस्। अजागरुरिति। जागर्त्तेर्या गुणप्राप्तिस्तस्याः 'अविचिण्णल्ङित्सु' इति प्रतिषेधाल्लक्षणान्तरेण 'जुसि च' इत्यनेन गुणः। अत्राप्यदादेशे कृते प्रत्ययाद्युदात्तत्वं भवतीति। तेन पुनत इत्यादिकं[2] पद मध्योदात्त भवतीति भावः। यदि तु विपर्ययः स्यात्, अन्तरङ्गत्वात्प्रत्ययाद्युदात्तत्वे कृते व्यञ्जनमात्रस्याद्भावो विधीयमानोऽनियतस्वरः प्रसज्येत। तत्र यदासावनुदात्तः स्यात्, तदा पुनत इत्यादेः पदस्यान्तोदात्तता प्रसज्येत; यदा स्वरितस्तदा मध्यस्वरितता, मध्योदात्तता चेष्यते। ननु च प्रत्ययाद्युदात्तत्वं प्रत्ययमात्रापेक्षयाऽन्तरङ्गम्, आदेशस्तु प्रकृतिप्रत्ययापेक्षत्वाद् बहिरङ्गः। 'अन्तरङ्गबहिरङ्गयोरन्तरङ्गं बलीयः' इति प्रत्ययाद्युदात्तत्वेनैव पूर्वं भवितुं युक्तम्, पश्चादादेशेनेति, तत् कथमुच्यते—अदादेशे कृते प्रत्ययाद्युदात्तत्वं भवतीति? नैतदस्ति; उक्तं हि 'उपदेशिवद् वचनं कर्त्तव्यम्' इति। किञ्च—आदेशो नित्यः, कृताकृतप्रसङ्गित्वात्। स हि कृते प्रत्ययाद्युदात्तत्वे प्राप्नोत्यकृतेऽपि। प्रत्ययाद्युदात्तत्वं पुनरनित्यम्, शब्दान्तरप्राप्त्या। तथा ह्यकृतेऽदादेशे झेरिकारस्य प्राप्नोति, कृते त्वदादेशाकारस्य, 'शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवति'। 'नित्यानित्ययोर्नित्यं बलीयः' इति बलीयस्त्वमस्य। तदेतन्नित्यत्वादनयोर्बलीयसोः परत्वाददादेशेन पूर्वं भवितव्यम्, ततः प्रत्ययाद्युदात्तत्वेन। तस्मात् सुष्ठूक्तम्—आदेशे कृते प्रत्ययाद्युदात्तत्वं भवतीति ॥

---

१. 'अजक्षुः' इत्यधिकं बहुषु पुस्तकेषु।

२. 'ददतीत्यादिकम्' इति पाठ०। इदं तु 'अभ्यस्तानामादिः' इति ददत्यादेराद्युदात्तत्वाच्चिन्त्यम्। ( प्र० सं० स० )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



आत्मनेपदेषु यो झकारस्तस्यानकारान्तादङ्गादुत्तरस्य 'अत्' इत्ययमादेशो भवति । चिन्वते । चिन्वताम् । अचिन्वत । पुनते । लुनते । लुनताम् । अलुनत ।

आत्मनेपदेष्विति किम् ? चिन्वन्ति, लुनन्ति । अनत इति किम् ? च्यवन्ते । प्लवन्ते । नित्यत्वादत्र विकरणे कृते झोऽन्तादेशेन भवितव्यमित्यदादेशो न भवति । अनकारान्तेनाङ्गेन झकारविशेषणं किम् ? इह मा भूत्—अद्य श्वो विजनिष्यमाणाः पतिभिः सह शयान्तै ॥

पदमञ्जरी

*आत्मनेपदेष्वनतः* ॥ अनभ्यस्तार्थमिदं वचनम् । *चिन्वतामिति* । लोट्, टेरेत्वम् 'आमेतः' । *च्यवन्त इति* ।

ननु चात्रापि प्रागेव शपः परत्वाददादेशप्रसङ्गः, 'अनतः' इत्यस्य तु बेभिद्यन्ते—इत्यादिरवकाशः ? इत्यत आह—*नित्यत्वादिति* । *झकारविशेषणं किमिति* । श्रुतानामात्मनेपदानामधिकृतस्य प्रत्ययस्य वा विशेषणे को दोष इति प्रश्नः । *शयान्तै इति* । अत्राङ्गस्यानन्तरमात्मनेपदमाटस्तद्भक्तस्य तद्ग्रहणेन ग्रहणात्, झकारस्त्वाटा व्यवहितः । अन्तादेशस्त्वङ्गविशेषानुपादानादत्रापि भवति ॥

न्यासः

**आत्मनेपदेष्वनतः** ॥ चिन्वत इति । लट्, स्वरितत्वादात्मनेपदम् । चिन्वतामिति । लोट्, झः, टेरेत्वम्, 'आमेतः' । अचिन्वतेति । लङ्, अडागमः, 'हुश्नुवोः सार्वधातुके' इति यणादेशः । पुनते, लुनत इति । पूर्ववदाकारलोपः ।

च्यवन्ते, प्लवन्त इति । अत्र शपि कृतेऽनकारान्तादङ्गादुत्तरो झकारो न भवति ।

ननु परत्वाददादेशेन भवितव्यम्, पश्चाद् विकरणेन ? इत्यत आह—नित्यत्वादत्रेत्यादि । नित्यत्वं तु कृताकृतप्रसङ्गित्वात् । विकरणो हि कृतेऽप्यदादेशे प्राप्नोत्यकृतेऽपि, न तु तस्मिन् कृतेऽद्भावस्य प्राप्तिरस्तीत्यनित्यत्वमस्य । अनकारान्तेनेत्यादि । प्रत्ययः कस्मादनकारान्तेनाङ्गेन न विशिष्यते ? इति मन्यमान आह—इहेत्यादि । यदि प्रत्ययो विशिष्येत शयान्तै—इत्यत्रापि स्यात्, भवति ह्यत्राप्यनकारान्तादङ्गादुत्तरो झप्रत्ययः । आटा व्यवहितत्वान्न भवतीति चेत् ? न; तस्य तद्भक्तत्वान्न हि तदेकदेशेन व्यवधानं युक्तम् । झकारे तु विशिष्यमाणे न दोषः; आटा व्यवहितत्वात् । समुदायभक्तो ह्याट् समुदायमेव न व्यवदध्यात् । अवयवं तु व्यवदधात्येव; न ह्यवयवोऽवयवान्तरस्याव्यवधायको दृष्टः ।

'तङ्यनतः', 'झस्यानतः' इति वा वक्तव्ये 'आत्मनेपदेष्वनतः' इति वैचित्र्यार्थम् ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## शीङो रुट् ॥ ६ ॥

शीङोऽङ्गादुत्तरस्य झादेशस्यातो रुडागमो भवति । शेरते । शेरताम् । अशेरत ।

### पदमञ्जरी

*शीङो रुट् ॥ झादेशस्यात इति ।* ननु च नेहाद्ग्रहणमस्ति, यदपि प्रकृतं तदपि प्रथमानिर्दिष्टम्, षष्ठीनिर्दिष्टेन चेहार्थः, 'शीङ' इत्येषा पञ्चमी अदिति प्रथमायाः षष्ठीं प्रकल्पयिष्यति, 'तस्मादित्युत्तरस्य' इति । *शेरत इति ।* सार्वधातुकावयवस्य झस्यादादेशस्तदागमो रुट् तद्ग्रहणेन गृह्यते । अवयवस्य समुदायं प्रत्यवयवत्वं लोकेऽपि दृश्यते, यथा—देवदत्तस्याङ्गुलिरिति । सार्वधातुकस्याप्यवयवो रुडिति 'शीङः सार्वधातुके गुणः' इति गुणो भवति ।

### न्यासः

शीङो रुट् ॥ झादेस्यातो रुडागमो भवतीति । ननु न चेहाद्ग्रहणमस्ति, यदपि प्रकृतं तदपि प्रथमान्तम्, षष्ठीनिर्देशेन चेहार्थः, तत् कथं झादेशस्यातो रुडागमो भवतीति शक्यं विज्ञातुम् ? नैतदस्ति; 'तस्मादित्युत्तरस्य' इति शीङ इत्येषा पञ्चमी अदित्यस्याः प्रथमायाः षष्ठीत्वं परिकल्पयिष्यतीत्यदोषः । शेरत इति । 'शीङः सार्वधातुके गुणः' । ननु चात्र रुटा व्यवहितं सार्वधातुकम्, तत् कुतो गुणः, न ह्ययं सार्वधातुकभक्तस्तत् कथं व्यवधायको न स्यात्, अच्छब्दस्य सार्वधातुकावयवस्यायमवयव इति तद्ग्रहणेन गृह्यते, न सार्वधातुकग्रहणेन; अवयवावयवस्य समुदायानायवत्वात्; तथा हि—'छे च' इत्यत्रोक्तम्—'नावयवावयवः समुदायावयवो भवति' इति ? नैष दोषः; अवयवावयवोऽपि समुदायावयवो भवत्येव । तथा हि—देवदत्तोऽलंक्रियतामित्युक्ते देवदत्तस्य येऽवयवा हस्तपादादयस्तदवयवाश्चाङ्गुल्यादयोऽलंक्रियन्ते । तस्मात् सार्वधातुकावयवस्याच्छब्दस्य योऽवयवो रुडागमः, सोऽपि सार्वधातुकावयव इति तद्ग्रहणेन गृह्यते, अतो नास्ति व्यवधानम् ।

यत् पुनः 'छे च' इत्यत्रोक्तम्—नावयवावयवः समुदायावयवो भवतीति, तत् तत्सूत्रविहितमेव तुगागममभिप्रेत्योक्तम्, स तुगवयवावयवोऽपि समुदायग्रहणेन न गृह्यत इति कृत्वा । कस्मात् पुनर्न गृह्यते ? ह्रस्वानुकर्षणसामर्थ्यात् । तत्र हि चकारेण ह्रस्वोऽनुकृष्यते—ह्रस्वमात्रस्यागमित्वं यथा स्यात्, ह्रस्वान्तस्य मा भूदिति । यदि ह्रस्वान्तस्यागमित्वं स्यात्, चिच्छिदतु, चिच्छिदुरित्यत्र तुकोऽभ्यासग्रहणेन ग्रहणाद्धलादिशेषेण निवृत्तिः स्यात् । यदि च तत्सूत्रविहितस्तुगवयावयवः समुदायग्रहणेन न गृह्यते, तदा ह्रस्वमात्रस्यागमित्वे हलादिशेषेण निवृत्तिः स्यादेव; ह्रस्वावयवस्य तुकोऽभ्यासग्रहणेन ग्रहणात् । ततश्च ह्रस्वानुकर्षणमनर्थकं स्यात् ।

अथ किमर्थमदादेशस्य रुड् विधीयते, न झकारस्य विधीयताम्, तत्रायमर्थः—अत इति षष्ठी प्रकल्पयितव्या न भवति; झ इत्यस्य षष्ठ्यन्तस्य प्रकृतत्वात् ? अत

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



रुडयं परादिः क्रियते, स यदि झकारस्यैव स्यात्, अदादेशो न स्यादिति, अत एवायमादेशस्यागमो विधीयते ।

पदमञ्जरी

किं पुनः कारणं रुडागमो झादेशस्यातो विधीयते, न झकारस्यैव विधीयते, एवं हि न षष्ठी प्रकल्प्या भवति ? अत आह–रुडयमिति । यदि तु ककारासञ्जनेन पूर्वान्तः क्रियेत, शेरत इत्यत्र गुणो न स्याद्; अनिगन्तत्वात् । तस्मात् परादिरेव वक्तव्यः । स यदि झकारस्यैव स्यात्, ततो यथा शयान्तै इत्यत्राटा व्यवहितत्वाज्झस्यादादेशो न भवति, तथा शेरते इत्यत्रापि न स्यातः रुटा व्यवहितत्वात् ।

ननु च युक्तमाटा व्यवधानम्, स हि सार्वधातुकभक्तस्तदेव न व्यवदध्यात्; झकारं तु व्यवदधात्येव, रुट् पुनर्झकारभक्तः स कथं तस्य व्यवधायकः ? उच्यते; गृह्यतां तावत्तद्ग्रहणेन, तथापि 'निर्दिश्यमानस्यादेशा भवन्ति' इति यदत्र निर्दिश्यते 'झ' इति विशिष्टं रूपं न तदनन्तरम्, यश्चानन्तरो रेफझकारसमुदायो न स निर्दिश्यत इति न स्यादेवादेशः । अपर आह—"आदेशो न स्यादिति, कोऽर्थः ? झस्य न स्यादिति, कस्य तर्हि स्यात् ? 'आदेः परस्य' इति रुट एव

न्यासः

आह—रुडयमित्यादि । यदि ककारमनुबन्धमासज्य पूर्वान्तः क्रियेत, तदा शेरत इत्यत्र गुणो न स्यात्; अनिगन्तत्वात् । तस्मान्मा भूदेष दोष इति रुडयं परादिरपि क्रियमाणो यदि झकारस्यैव स्यात्, किमनिष्टं स्यात् ? इत्याह— यदीत्यादि । यदि झकारस्यैव रुट् स्यात् तदाऽदादेशो न स्यात् । ततो यथा शयान्तै–इत्यत्राटा व्यवहितत्वाददादेशो न भवति, तथा शेरते इत्यत्रापि न स्यात्; रुटा व्यवहितत्वात् । तस्मादस्य दोषस्य परीहारार्थम्–अत एव एव रुडागमो विधीयते, न झकारस्येति केचिद्व्याचक्षते, एतच्चासम्यक्; झकारस्य क्रियमाणो रुट् तस्यैव भक्तो भवति, तत् कथं तेन व्यवधानं भवेत् ? न हि स्वावयवेन व्यवधानमुपपद्यते, आटा च व्यवधानं युक्तम् । तस्य समुदायभक्तत्वात् समुदायं न व्यवदधाति, अवयवं तु व्यवदधात्येव । तस्मादसद्व्याख्यानमेतदित्यन्यथा व्याख्यायते—अदादेशो न स्यादित्यत्र झकारस्येत्येतदपेक्षते, तदयमर्थो भवति—यदि रुडागमो झकारस्यैव स्यात् तदादादेशस्तस्यैव न स्यात् । कस्य तर्हि स्यात् ? तस्यैव रुटः स्यात्; 'आदेः परस्य' इति वचनात् । अनेकाल्त्वेऽपि सर्वादेशो न भवति; रुट आनर्थक्यप्रसङ्गात् । रुटो विधानसामर्थ्यान्न भविष्यतीति चेत् ? वार्त्तमेतत् ; अस्ति ह्यन्यद्रुड्विधेः प्रयोजनम् । किं तत् ? झकारस्य श्रवणं यथा स्यात् । यद्येतत् प्रयोजनं स्यादतटमेव विदध्यात्, न रुटम् । तस्माद्रुड्वचनसामर्थ्यादवगम्यते—नेदमिह प्रयोजनम् । अभीष्टमिति चेत् ? नैतदस्ति; उत्तरार्थं रुड-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सानुबन्धग्रहणमयङ्लुगर्थम् । तेनेह न भवति—व्यतिशेशयते ॥

वेत्तेर्विभाषा ॥ ७ ॥

वेत्तेरङ्गादुत्तरस्य झादेशस्यातो विभाषा रुडागमो भवति । संविद्रते, संविदते । संविद्रताम्, संविदताम् । समविद्रत, समविदत ।

वेत्तिरिति लुग्विकरणस्य ग्रहणम्, किम् ? इह मा भूत्—विन्ते, विन्दाते, विन्दते इति ॥

पदमञ्जरी

स्यात् । न च रुटो वैयर्थ्यं स्यात्; झकारस्य श्रवणार्थत्वात्" इति, तच्चिन्त्यम्; अनेकाल्त्वात्सर्वादेशः प्राप्नोति । सर्वादेशे रुटो वैयर्थ्यमिति चेत् ? किं कुर्मः ! मा भूदादेशः । 'शीङः' इत्यनुबन्धोच्चारणं यङ्लुग्निवृत्त्यर्थम्—व्यतिशेशयते । गुणोऽपि न भवति; तत्राप्यनुबन्धनिर्देशात् ॥

*वेत्तेर्विभाषा ॥ संविद्रत इति* । 'समो गम्यृच्छि' इत्यादिनात्मनेपदम् । *वित्त इत्यादि* । 'विद विचारणे', रुधादिरनुदात्तेत् । सत्तालाभार्थयोस्तु विकरणव्यवधानादेवाग्रहणम् । अत्र च बहुवचनं प्रत्युदाहरणम्, इतरयोरुपन्यासो विचारणार्थस्येदं बहुवचने रूपमिति प्रदर्शनार्थम् । विन्दते इति रूपस्य लाभार्थे तौदादिके स्वरितेत्त्वादात्मनेपदे एकवचने 'शे मुचादीनाम्' इति नुम्यपि कृते सम्भवात् । किञ्च—वेत्तेरिति शितपा निर्देशादेव यङ्लुकि न भवति—व्यतिवेविदते इति ॥

न्यासः

विधानं स्यात् । 'बहुलं छन्दसि' इत्यत्र रुडागमो यथा स्यात् । न ह्यदश्रन्नित्यतटा सिध्यति । तस्माज्झकारश्रवणं रुड्विधेः प्रयोजनम् । सत्येतस्मिन् प्रयोजने यदि झकारस्यैव रुडागमः स्यात् तदा शस्यैवादादेशः स्यात्, न झकारस्य । तदेतस्य दोषस्य निरासायादादेशस्य रुड् विधीयते, न झकारस्य । 'शीङः' इत्यनुबन्धेन निर्देशो यङ्लुग्निवृत्त्यर्थः—व्यतिशेश्यत इति ॥

**वेत्तेर्विभाषा ॥ संविद्रते, संविदत इति** । 'विद ज्ञाने' । 'समो गम्यृच्छि' इत्यादिनाऽऽत्मनेपदम्, अदादित्वाच्छपो लुक् । संविद्रताम्, संविदतामिति । लोट् । टेरेत्त्वे कृते 'आमेतः' इत्याम् ।

**वेत्तेरिति लुग्विकरणस्य ग्रहणं किमिति** । एवं मन्यते—विदेरिति सामान्यनिर्देशेन सर्वविदीनां ग्रहणमस्तु, लघु ह्येवं सूत्रं भवति, सत्यपि सर्वविदीनां ग्रहणे लुग्विकरणादेव भविष्यति, नान्यतः; विकरणेन व्यवधानात् । यद्यविशेषेण विदीनां ग्रहणं स्याद् 'विद विचारणे' इत्यस्मादपि रौधादिकात् स्यात्, न ह्यत्र विकरणो व्यवधायकः; धात्वन्तःपातित्वात् ? इत्यत आह—**इहेत्यादि** । **विन्ते, विन्दाते, विन्दत इति** । अनु

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## बहुलं छन्दसि ॥ ८ ॥

छन्दसि विषये बहुलं रुडागमो भवति । देवा अदुह्र । गन्धर्वा अप्सरसो अदुह्र । दुहेर्लङि झकारस्यादादेशे कृते रुट् । 'लोपस्त आत्मनेपदेषु' इति तकारलोपः । न च भवति—अदुहत ।

बहुलवचनादन्यत्रापि भवति—अदृश्रमस्य[1] केतवः । 'ऋदृशोऽङि गुणः' इत्येतदपि बहुलवचनादेवात्र न भवति ॥

### पदमञ्जरी

*बहुलं छन्दसि ॥ बहुलवचनादन्यत्रापि भवतीति* । एतदर्थमेव विभाषाग्रहणे प्रकृतेऽपि बहुलग्रहणं कृतम् ।

*अदृश्रमिति* । 'इरितो वा' इति वाङ् ॥

### न्यासः

दात्तेत्वाद त्मनेपदम्, 'श्नसोरल्लोपः' । अत्र तु 'विन्दते' इति बहुवचनान्तं प्रत्युदाहरणम् । एकवचनद्विवचनयोरुपन्यासो विदेर्विचारणार्थस्य रूपमिति प्रदर्शनार्थः; अन्यथा 'विन्दते' इत्येतावत्युच्यमाने लाभार्थस्य विदेरेकवचनान्तमिदं रूपमिति कस्यचिद् भ्रान्तिः स्यात् ।

श्तिपा निर्देशाद् यङ्लुकि न भवति—संवेविदते, व्यतिवेविदते ॥

बहुलं छन्दसि ॥ अदुहेति । स्वरितेत्त्वादात्मनेपदम् ।

ननु च विभाषाग्रहणानुवृत्तेरेवादुह्रतेत्यादि सिद्धम्, किं बहुलवचनेनेति यश्चोदयेत्, तं प्रत्याह—बहुलवचनादित्यादि । विभाषानुवृत्त्या हि विकल्पमात्रं लभ्यते, न त्वन्यत्रापि भवति । बहुलवचनादन्यत्रापि भवति । तेन विभाषायां प्रकृतायां बहुलवचनमिति भावः । अदृश्रन्निति । दृशेर्लुङ्, झेरन्तादेशः, 'इरितो वा' इति च्लेरङ्, तस्य रुट्, 'इतश्च' इतीकारलोपः, 'संयोगान्तस्य' इति तकारस्य च, 'अतो गुणे' पररूपत्वम् । अथात्र 'ऋदृशोऽङि' इति गुणः कस्मान्न भवति ? 'क्ङिति च' इति प्रतिषेधादिति चेत् ? न; तस्य ङित्येव विधानात् । सार्वधातुकस्य ङितमाश्रित्य प्रतिषेधः प्राप्नोतीति चेत् ? न; एकादेशः पूर्वविधौ स्थानिवद्भवतीति यश्चोदयेत्, तं प्रत्याह—ऋदृशोऽङि गुण इति ॥

---

१. अदृश्रमिति मुद्रितकाशिकायाम्, भट्टोजिग्रन्थे च पाठः । अत्र भट्टोजिः—"बाहुलकादेव ऋदृशोऽङि गुणो नेत्येके । भाष्ये तु गुणं वारयितुं 'दृशेरग् वक्तव्यः' इत्युक्तम् । व्यत्ययेन प्रथमपुरुषबहुवचनस्थाने उत्तमपुरुषैकवचनं बाह्वृच्ये । शाखान्तरे त्वदृश्रन्नित्येव पठ्यते—इति माधवः" इति । ( प्र० सं० स० )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## अतो भिस ऐस् ॥ ९ ॥

अकारान्तादङ्गादुत्तरस्य भिस ऐसित्ययमादेशो भवति । वृक्षैः । प्लक्षैः । अतिजरसैः । जरामतिक्रान्तैरिति विगृह्य समासे कृते ह्रस्वत्वे च भिस ऐसादेशो भवति । 'एकदेशविकृतमनन्यवद्भवति' इति जरशब्दस्य जरसादेशः ।

'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति परिभाषेयमनित्या; 'कष्टाय क्रमणे' इति निर्देशात् ।

अत इति किम् ? अग्निभिः । वायुभिः । तपरकरणं किम् ? खट्वाभिः । मालाभिः ॥

### पदमञ्जरी

*अतो भिस ऐस्* ॥ *अतिजरसैरिति* । अत्रैव चैकारस्य श्रवणार्थमैसादेशः कृतः । वृक्षैरित्यादावेसादेशेऽपि वृद्धया रूपं सिद्धम् । 'अतो गुणे' इति पररूपं तु न भवति; यदि स्यात्, इसमेव विदध्यात् ।

### न्यासः

अतो भिस ऐस् ॥ समासे कृत इत्यादि । 'कुगतिप्रादयः' इति क्रान्ताद्यर्थेऽतिशब्दस्य । ह्रस्वत्वे चेति । 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वः । ननु यदि ह्रस्वः क्रियते, तदा जराशब्दस्योच्यमानो जरसादेशो जरशब्दस्य न प्राप्नोतीति चोद्यमपाकर्तुमाह—एकदेशविकृतमित्यादि ।

ननु चैकदेशविकृतस्यानन्यत्वेऽपि नैवात्र जरसादेशेन भवितव्यम्, 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति परिभाषया जरशब्दसन्निपातलक्षणो ह्यैस् विधीयते, स कथं तस्य विघातस्य निमित्तं स्यात् ? इत्याह—सन्निपात इत्यादि । अनित्यत्वं पुनरस्याः 'कष्टाय क्रमणे' इत्यतः कष्टायेति निर्देशाद्वेदितव्यम् । यदि ह्येषा नित्या स्यात्, ततोऽकारान्तलक्षणो विधिरकारान्तताविघातस्य निमित्तं न स्यादिति 'सुपि च' इति दीर्घत्वं न स्यात्, ततश्च 'कष्टाय' इति निर्देशो नोपपद्यत इति । अथ किमर्थमैस् विधीयते, न एसेव विधीयताम्, तत्रापि 'वृद्धिरेचि' इति वृद्धौ कृतायाम्—वृक्षैः, प्लक्षैरित्यादि सिध्यति ? कः पुनरेवं सति गुणो लभ्यते ? न ह्येस्येसि वा क्रियमाणे कश्चिल्लाघवकृतो विशेषः, प्रक्रियागौरवमेव तु स्यात्; एसं विधाय लक्षणान्तरेण वृद्धेर्विधानात् ? अतिजरसैरिति तु न सिध्यति; वृद्ध्यभावात् । वृद्ध्यभावस्त्वकारान्तताभावादिति यत्किञ्चिदेतत् ।

इह वृक्षैरित्यत्र भिसि परभूते 'अतो भिस ऐस्' इत्यैस्भावः प्राप्नोति, 'बहुवचने झल्येत्' इत्येत्त्वञ्च, उभयञ्चैतत् सावकाशम्; तत्रैस्भावस्य सावकाशत्वम्—कृतेऽप्येत्त्वे

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



एत्वं भिसि परत्वाच्चेदत ऐस् क्व भविष्यति ।
कृतेऽप्येत्वे भौतपूर्व्यादैस्तु नित्यस्तथा सति ॥

'अतः' इत्यधिकारः—'जसः शी' इति यावत् ॥

**बहुलं छन्दसि ॥ १० ॥**

छन्दसि विषये बहुलमैसादेशो भवति । अत इत्युक्तम्, अनतोऽपि भवति—नद्यैरिति । अतो न भवति—देवेभिः सर्वेभिः प्रोक्तमिति ॥

**पदमञ्जरी**

*परत्वादिति* । एत्वस्यावकाशः—वृक्षेषु, ऐसोऽवकाशः—कृत एत्वे; प्रागेत्वादुभयप्रसङ्गे परत्वादेत्वप्रसङ्ग इति चेन्मन्यसे, अत ऐस् क्व भविष्यति ! एत्वे कृते मुख्यमकारान्तं न भवतीति प्रश्नः । *कृत एत्वे भौतपूर्व्यादिति* । भूतपूर्वस्य भावो भौतपूर्व्यम्, साम्प्रतिकाभावाद्भूतपूर्वगतिराश्रीयत इति भावः । एस् तु *नित्यस्तथा सतीति* । एवं हि सत्यैस्भावो नित्यः, कृताकृतप्रसङ्गित्वात् । एत्वं त्वैसि कृते न प्राप्नोति; अझलादित्वात् । न च तत्र भूतपूर्वगतिः; मुख्यस्यैव सम्भवात् । एतच्चोद्यपरिहारमुत्सर्गापवादभावमनाश्रित्य कृतं द्रष्टव्यम्, तदाश्रयणे हि नाप्राप्त एत्व आरम्भादैसपवाद इत्ययुक्तो विप्रतिषेधः स्यात् ॥

**न्यासः**

भूतपूर्वमकारान्तत्वमाश्रित्य, एत्त्वस्यावकाशः—भ्यसादिः, परत्वादेत्त्वेनात्र भवितव्यमिति यो मन्येत, तं प्रत्याह—एत्त्वं भिसि परत्वादित्यादि । भिसि परत्वादेत्त्वञ्चेन्मन्यसे, अत ऐस् क्व भविष्यति ? अकारान्तात् परस्य भिस ऐस् विधीयते, तत्र यदि परत्वादेत्त्वं भवेत् क्वेदानीमैस् भविष्यति ? न क्वचित्; अकारान्ततायाः सर्वत्रैत्त्वेन विहितत्वादिति भावः । ऐस्भावस्य विषयं दर्शयितुमाह—कृतेऽप्येत्त्व इत्यादि । कथं पुनः कृत एत्त्व ऐस् भवति, यावताऽकारान्तादङ्गादुत्तरस्य भिस ऐस् भवति, न च कृत एत्त्वेऽकारान्तमङ्गं भवति ? इत्याह—भौतपूर्व्यादिति । उच्यते चेदम्—अतो भिस ऐसिति, न च परत्वादेत्त्वे कृतेऽकारान्तादङ्गादुत्तरो भिस् भवति, तत्र वचनप्रामाण्यात् कृतेऽप्येत्त्वे भूतपूर्वमकारान्तत्वमाश्रित्यैस्भविष्यति । ऐस्तु नित्यस्तथा सतीति । एवं कृतेऽप्येत्त्व ऐस्भावेन भवितव्यमकृतेऽपीति कृताकृतप्रसङ्गित्वात्; ऐस्तु नित्यः, एत्त्वं त्वनित्यम्; न हि तदैस्भावे कृते प्राप्नोति; झलो निमित्तस्याभावात् । नित्यानित्ययोश्च तुल्यबलत्वाद् विप्रतिषेधो नोपपद्यते । ततश्च परमप्येत्त्वमपास्य बलवानैस्भविष्यतीति भावः ॥

**बहुलं छन्दसि** ॥ बहुलग्रहणं विस्पष्टार्थम् । शक्यते हि मण्डूकप्लुतिन्यायेन बहुलग्रहणमनुवर्त्तयितुम् ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


## नेदमदसोरकोः ॥ ११ ॥

इदम्, अदस्—इत्येतयोरककारयोर्भिस ऐस्न भवति। एभिः। अमीभिः।

अकोरिति किम्? इमकैः। अमुकैः।

अकोरित्येतदेव प्रतिषेधवचनं ज्ञापकम्—'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इति।

'इदमदसोः कात्' इति नोक्तम्, विपरीतोऽपि नियमः सम्भा-

पदमञ्जरी

नेदमदसोरकोः॥ 'इदमदसोः' इति भिसपेक्षया सम्बन्धलक्षणा षष्ठी। *एभिरिति*। त्यदाद्यत्वम्, 'हलि लोपः' इतीद्भागस्य लोपः। *अमीभिरिति*। ऐसि प्रतिषिद्धे 'बहुवचने झल्येत्' इत्येत्वम्, 'एत ईद्बहुवचने' इतीत्वमत्वे।

अकोरित्येतदनर्थकम्, कथम्? विशिष्टरूपाश्रयोऽयं प्रतिषेधः—'इदमदसोः' इति, तत्राकचि कृते रूपभेदादेव न भविष्यति? तत्राह—*अकोरित्येतदेवेति*। ज्ञापनस्य प्रयोजनम्—सर्वके इत्यादौ सर्वनामकार्यप्रवृत्तिः।

इमौ द्वौ प्रतिषेधावुच्येते, द्वावपि शक्याववक्तुम्। कथम्? एवं हि वक्ष्यामि—'इदमदसोः कात्' इति, तन्नियमार्थं भविष्यति—इदमदसोः कादेव, नान्यत इति? नैतदस्ति; विपरीतोऽपि नियमः स्यात्—इदमसोरेव कादिति। ततश्च सर्वकैरित्यादौ न स्यात्, एभिरित्यादौ च स्यादेव—तन्मध्यपरिभाषा

न्यासः

नेदमदसोरकोः॥ अविद्यमानः ककारो ययोस्तावकौ। एभिरिति। इदमस्त्यदाद्यत्वम्, 'बहुवचने झल्येत्' इत्येत्त्वम्, 'हलि लोपः' इतीद्रूपस्य लोपः। अमीभिरिति। अदस एत्त्वे कृते 'एत ईद्बहुवचने' इतीत्त्वम्, दस्य च मत्वम्।

इमकैरिति। 'अव्ययसर्वनाम्नामकच्प्राक्टेः' इत्यकच्, 'दश्च' इति दकारस्य मत्वम्। अमुकैरिति। 'अदसोऽसेदादु दो मः' इति मत्वोत्वे।

अथ 'नेदमदसोः' इत्येवं कस्मान्नोक्तम्, किमकोरित्यनेन, अकोरित्यनुच्यमाने सककारयोरपि प्रतिषेधः स्यादिति चेत्? नैतदस्ति; इदमदसोर्हि प्रतिषेध उच्यमानः कः प्रसङ्गो यः सककारयोः स्यात्? नैव प्राप्नोति शब्दान्तरत्वादित्याह—अकोरित्येतदित्यादि। ज्ञापकस्य प्रयोजनम्—अकज्वतां सर्वनामसंज्ञा सर्वादीनाम्, स्वरादीनाञ्चाव्ययसंज्ञा।

अथ 'इदमदसोः कात्' इति कस्मान्नोक्तम्, तत्र पूर्वेणैव सिद्धे नियमार्थं भविष्यति—इदमदसोः सम्बन्धी यो भिस् तस्य कादेव परस्येस् भवति, इत्येवं विज्ञायमाने नियमे सर्वमभीष्टं सिध्यत्येव, लघु च सूत्रं भविष्यति? सत्यमेतत्; किन्त्वस्मिन् सूत्रविन्यासे 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इत्येषा न ज्ञापिता स्यात्। विपरीतनियमोऽपि

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



व्येत—इदमदसोरेव कादिति । ततश्चेह न स्यात्—सर्वकैः, विश्वकैः । इह च स्यादेव—एभिः, अमीभिः[1] । प्रतिषेधकरणं विपरीतनियम-निवृत्त्यर्थम् ॥

## टाङसिङसामिनात्स्याः ॥ १२ ॥

अकारान्तादङ्गादुत्तरेषां टाङसिङसाम् इन, आत्, स्य—इत्येते आदेशा भवन्ति यथासंख्यम् । 'टा' इत्येतस्येनादेशो भवति—वृक्षेण, प्लक्षेण । 'ङसि' इत्येतस्य आत्—वृक्षात्, प्लक्षात् । 'ङस्' इत्येतस्य स्यादेशो भवति—वृक्षस्य, प्लक्षस्य ।

### पदमञ्जरी

च न ज्ञापिता स्यात् । क्वचित्तु वृत्तावेव पठ्यते—इदमदसोः कादिति नोक्तम्, *विपरीतोऽपि नियमः स्यात्—इदमदसोरेव कादितीति* ॥

*टाङसिङसामिनात्स्याः ॥ अतिजरसिनेत्यादि ।* समासे ह्रस्वत्वे कृते इनादेशः, ततः सन्निपातपरिभाषाया अनित्यत्वाज्जरसादेशः । एवमतिजरसादित्यत्राप्यादादेशे कृते जरसादेशः । ननु च टाङस्योरेवाजादित्वात्प्रागिनादादेशाभ्यां जरसादेशः प्राप्नोति, स हि नित्यः परश्च, तत्र कृतेऽनदन्तत्वादेवेनादादेशयोरभावे अतिजरसा, अतिजरस इति भवितव्यम् ? नैष दोषः; एवं हि इनादेशस्य, अदादेशस्य

### न्यासः

मन्दधीभिराशङ्क्येत—इदमदसोरेव कादिति । तत्रायं नियमार्थः स्यात्—इदमदसोरेव यः ककारस्तस्मात् परस्य भिस ऐस्भवतीति । ततो विश्वकैः, सर्वकैरित्यत्र न स्यात्; नियमेन व्यावर्त्तितत्वात् । इह च स्यादेव—एभि, अमीभिरिति; नियमेनाव्यावर्त्तितत्वात् । तस्माद्यथान्यासमेवास्तु ॥

**टाङसिङसामिनात्स्याः ॥** अतिजरसिनेत्यादि । पूर्ववत् समासे कृते ह्रस्वत्वे च जरसादेशः । केचिदिति । सूत्रकारमतानुसारिणः । यदि ह्यतिजरसिनेत्येतत् सूत्रकारस्य साधुत्वेनाभिमतं न स्यात् , टेत्येतस्य नादेशमेव कुर्यात् । तत्राप्येत्वे कृते वृत्तेणेत्यादि सिध्यति । कथमेत्त्वमिति चेत् ? एवमेत्त्वविधौ योगविभागः करिष्यते । इदमस्ति—'बहुवचने झल्येत्', ततः 'ओसि च', ततः आङि चापः' इति; तत्राङीति योगविभागः कर्त्तव्यः—आङि परतोऽत एत्वं भवति—वृक्षेण, प्लक्षेण; तत 'आपः', 'सम्बुद्धौ च' इति । ननु च नादेशे सतीदम इद्रूपस्य हलि लोपः प्रसज्येत, ततश्चानेनेति न सिध्यति ? नैष दोषः; 'हलि लोपः' इत्यत्र 'जराया जरसन्यतरस्याम्' इत्यतोऽन्यतरस्यांग्रहणमनुवर्त्तते, सा च व्यवस्थितविभाषा विज्ञायते, तेन नादेशे कृते सतीद्रूपस्य लोपो न भवति । तदेवं नादेशेनैव वृक्षेणेत्यादि सिध्यति । ततः स एव कर्तव्यः, नेनादेशः; कृतश्चासौ, अतोऽत्र-

1. 'इति' इत्यधिकं क्वचित् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अत इति किम् ? सख्या । पत्या ।

अतिजरसिनः, अतिजरसादिति केचिदिच्छन्ति । यथा तु भाष्ये, तथा नैतदिष्यत इति लक्ष्यते ॥

पदमञ्जरी

च विधानमनर्थकम्, नादेशोऽदादेशश्च विधेयः स्यात्, का रूपसिद्धिः ? इह तावद् वृक्षेणेति एत्वे योगविभागः करिष्यते–'बहुवचने झल्येत्', 'ओसि च', ततः 'आङि च'–आङि च परतोऽत एत्वम्–वृक्षेण । नैवं शक्यम्, इह ह्यनेनेति 'हलि लोपः' इति इद्रूपलोपे सति एनेति प्राप्नोति ? 'हलि लोपः' इत्यपनीय 'झलि लोपः' इति सूत्रं करिष्यते, तत्र नकारस्याझल्त्वाल्लोपाभावः । न स शक्यो झलि लोपो वक्तुम्, इह हि न स्यात्–अयाविष्ट, अजनयत्, अयेति इदमश्चतुर्थ्येकवचनस्य 'सुपां सुलुक्' इत्यादिना यादेशः, 'सुपि च' इति दीर्घाभावः छान्दसः, तत्रास्याझलादित्वादिद्रूपलोपो न स्यात् । तस्माद्धलि लोप एव कर्त्तव्यः, ततश्चानेनेति न सिध्यति ? एवं तर्हि 'अनाप्यकः' इति द्विनकारकोऽयं निर्देशः, तत्रादेशसम्बन्धी पदान्तत्वाल्लुप्तः, नश्च आप् च नाप्, तत्र परत इदोऽनादेश इति सूत्रार्थाश्रयणादिद्रूपलोपापवादो नशब्दे परतो नादेश एव भविष्यति । यद्येवम्, आदेशेन लोपस्यासिद्धत्वाद्राजेत्यादाविव सूत्रे दीर्घप्रसङ्गः–'अनाप्यकः' इति ? नैष दोषः; 'सुपां सुलुक्' इति लुकि कृते 'न लुमताङ्गस्य' इति प्रतिषेधः । वृक्षादित्यत्रापि सवर्णत्वेनैव सिद्धम्, अकारोच्चारणसामर्थ्यादतो गुणे पररूपं न भविष्यति । तदेवमिनादेशस्यादादेशस्य च विधानसमर्थ्यात्पूर्वमिनादादेशौ, पश्चाज्जरसादेश इत्येषामभिप्रायः ।

*यथा त्वित्यादि* । भाष्ये हि पूर्वोक्तप्रक्रियाश्रयणेन नादेशोऽदादेशश्च व्यव-

न्यासः

गम्यते–नूनं सूत्रकारस्यातिजरसिनेत्येतत्साधुत्वेनाभिमतम्, यस्य सिद्ध्यर्थमिनादेशं कृतवानिति । तथा यद्यतिजरसादित्यस्य साधुत्वमभीष्टं न स्यात् ङसेरद्भावं विदध्यात् । तत्रापि अकः सवर्णे दीर्घत्वेन वृक्षादित्येवमादि सिद्ध्यत्येव । ननु चाकः सवर्णापवादः 'अतो गुणे' पररूपत्वं प्राप्नोति, तत् कथं सिध्यति ? नैतदस्ति; अकारोच्चारणसामर्थ्यान्न भविष्यति पररूपम्, अन्यथा तकारमेव विदध्यात् । अत्र हि 'आदेः परस्य' इत्यकारस्य तकारे विहिते संयोगान्तलोपे वृक्षादित्येवमादि सिध्यत्येव । तस्मादकारोच्चारणसामर्थ्यात् पररूपत्वं न भविष्यतीत्यद्भावो विधेयः, किमाद्भावेनेति ? विहितश्चाद्भावः, ततोऽवसीयते–नूनमतिजरसादित्यस्य साधुत्वं सूत्रकारस्याभिमतं यत्सिद्ध्यर्थमाद्भावं विहितवानिति । एवं सूत्रकारस्य मतमनुसरन्तः केचिदतिजरसिना, अतिजरसादित्यस्य साधुत्वमिच्छन्ति । यथा त्वित्यादि । भाष्ये हि–'अथ किमर्थमिनादेश उच्यते, न नादेश एवोच्येत'–इत्येवं प्रश्नपूर्वकेणेनादेशं प्रत्याख्याय नादेश एव व्यवस्थापितः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## ङेर्यः ॥ १३ ॥

'ङेः' इति चतुर्थ्येकवचनस्य ग्रहणम् । अकारान्तादङ्गादुत्तरस्य 'ङे' इत्येतस्य 'य' इत्ययमादेशो भवति । वृक्षाय । प्लक्षाय ।

अत इति किम् ? सख्ये, पत्ये ।

'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति परिभाषेयमनित्या, तेन दीर्घो भवति ॥

### पदमञ्जरी

स्थापितः । यदि चैतद्रूपद्वयमिष्टं स्यात्, तयोरादेशयोः प्रत्याख्यानमनुपपन्नं स्यात् । तत्र सन्निपातपरिभाषया जरसादेशाभावादतिजरेण, अतिजरादिति भाष्यकारस्याभिप्रेतमिति केचित् । प्रागेव जरसादेशे—अतिजरसा, अतिजरस इत्यभिप्रेतमित्यन्ये ॥

*ङेर्यः ॥ ङे इति चतुर्थ्येकवचनस्य ग्रहणमिति* । तस्य हि 'ङे' इति रूपं प्रतिपदोक्तं सप्तम्येकवचनस्य 'घेर्ङिति' इति गुणे लाक्षणिकम् । यद्यपि 'ङेः' इति विभक्त्यन्तमुपात्तम्, तच्चोभयोरपि लाक्षणिकम्; तथापि प्रत्ययात्पूर्वस्य भागस्य लाक्षणिकत्वप्रतिपदोक्तत्वापेक्षया परिभाषाप्रवृत्तिः । यद्येवम्, 'ङेराम्नद्याम्नीभ्यः' इत्यत्राप्येवमेव प्रसङ्गः ? तस्माद्व्याख्यानमेवात्र शरणम् । लिङ्गं च—'तस्मै प्रभवति,' 'तदस्मै दीयते', तस्मै हितम्', 'तदस्यां प्रहरणमिति क्रीडायां णः' इत्यादि । *वृक्षायेति* । 'सुपि च' इति दीर्घः ।

कथं पुनरकारसन्निपातकृतो यशब्दस्तद्विघातनिमित्तं भवति ? अत आह—*सन्निपातलक्षण इति* । अनित्यत्वं तस्याः 'कष्टाय क्रमणे' इति निर्देशादवसीयते ॥

### न्यासः

'अथ किमर्थमादित्युच्यते, न अदेवोच्येत' इत्येवमादिना ग्रन्थसन्दर्भेण आदादेशं प्रत्याख्याय अदादेश एव व्यवस्थापितः । यदि चातिजरसिना, अतिजरसादित्यस्य साधुत्वमिष्टं स्यादिनादेशमाद्भावं च भाष्यकृन्न प्रत्याचक्षीत । न हि प्रयोजने सति प्रत्याख्यानं युक्तम्, कृतश्च तयोः प्रत्याख्यानम्, ततोऽवगम्यते-नेतदिष्यत इति ।

ङेर्यः ॥ ङेरिति चतुर्थ्येकवचनस्येदं ग्रहणम् । कस्मान्न भवति सप्तम्येकवचनस्य ग्रहणम् ? यदि हि तस्य ग्रहणं स्यात् तदा—अत्यन्तसंयोगे, भावे, अपवर्गे, कारकमध्ये—इत्येवमादि न सिद्धयति । तस्मादेतेभ्यो निर्देशेभ्यो नेदमिह सप्तम्येकवचनस्य ग्रहणम् । अतः पारिशेष्याच्चतुर्थ्येकवचनस्य ग्रहणं निश्चीयत इति । 'तस्मै हितम्' इति निर्देशाच्च लिङ्गादुत्तरत्राप्येतदेवानुवर्तते । वृक्षायेति । 'सुपि च' इति दीर्घः ।

ननु 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति परिभाषाया उपस्थाने सति सन्निपातलक्षणो यविधिरकारविघातं प्रति निमित्तं नोपपद्यते, कुतो दीर्घत्वम् ? इत्याह—सन्निपातलक्षण इत्यादि । अनित्यत्वं तस्याः प्रागेव प्रतिपादितम् । अथ

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


## सर्वनाम्नः स्मै ॥१४ ॥

अकारान्तात्सर्वनाम्न उत्तरस्य ङे: 'स्मै' इत्ययमादेशो भवति । सर्वस्मै । विश्वस्मै । यस्मै । कस्मै । तस्मै ।

'अतः' इत्येव—भवते ।

अथो अत्रास्मै—इत्यन्वादेशेऽशादेशे एकादेशः प्राप्नोति ? तत्रान्तरङ्गत्वादेकाशात्पूर्वं स्मैभावः क्रियते, पश्चादेकादेश इति ॥

### पदमञ्जरी

*सर्वनाम्नः स्मै ॥ भवत इति ।* 'द्विपर्यन्तास्त्यदादयः' इति वचनादन्यत्र त्यदाद्यत्वाभावादनकारान्तत्वम् । *अन्वादेशेऽशादेशे कृत इति ।* अनन्वादेशे त्वत्रास्मै इत्यानुपूर्व्यात्सिद्धम् । कथम् ? नात्राकृते स्मैभावे हलादिर्विभक्तिः, हलादौ चेद्रूपलोपः, न चाकृते इद्रूपलोपे एकादेशः प्राप्नोतीति । न चाद्गुणप्रसङ्गः; नित्येनेद्रूपलोपेन बाधितत्वात् । *एकादेशः प्राप्नोतीति ।* नित्यत्वात् । वाक्यसंस्कारपक्षे चैतच्चोद्यम् । तद्ध्यर्थप्रतिपादनाय लोके प्रयुज्यते, तदेव च

### न्यासः

ङकारोच्चारणं किमर्थम् ? एकारमात्रस्य ग्रहणं मा भूदिति । यदि स्यात्, पचे, यजे—इत्येवमादावपि स्यात् । ननु च 'अतो गुणे' इति पररूपत्वे कृते निमित्ताभावान्न भविष्यति ? नैतदस्ति; नाप्राप्ते ह्यतो गुणे पररूपत्वेऽयमादेश उच्यते; स यथा वृक्षाय इत्यत्र 'अतो गुणे' पररूपत्वं बाधते तथा पचे, यजे—इत्यत्रापि बाधेत । प्रतिपदोक्तस्यैकारस्य ग्रहणादिह न भविष्यतीति चेत् ? न; अस्याप्येकारस्य प्रतिपदोक्तत्वात् । 'टित आत्मनेपदानां टेरे' इति निर्देशादेकारः प्रतिपदाक्तो भवति । तस्माद् विशेषणार्थो ङकारः कर्त्तव्यः ॥

सर्वनाम्नः स्मै ॥ भवते इति । त्यदाद्यत्वं न भवति । 'द्विपर्यन्तास्त्यदादयः' इति भवच्छब्दस्य त्यदादित्वाभावादकारान्तता न भवति ।

अथो अत्रेत्यादि चोद्यम् । अत्र इदम् + ए इति स्थिते 'इदमोऽन्वादेशे' इत्यशादेशे कृते परमपि स्मैभावं बाधित्वा नित्यत्वादेकादेशोऽकः सवर्णे दीर्घत्वं प्राप्नोति । नित्यत्वं पुनरस्य कृताकृतप्रसङ्गित्वात् । एकादेशे च कृतेऽनकारान्तत्वात् स्मैभावो न प्राप्नोति । तत्रेत्यादि परीहारः । तत्रैकादेशे प्राप्तेऽन्तरङ्गत्वात् पूर्वं स्मैभावो विधीयते, पश्चादेकादेशः । अन्तरङ्गत्वं तु स्मैभावस्यैकपदाश्रयत्वात् । एकादेशस्य द्विपदाश्रयत्वाद् बहिरङ्गत्वम् ॥

काशि० 5 । ३५

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


## ङसिङ्योः स्मात्स्मिनौ ॥ १५ ॥

ङसि, ङि—इत्येतयोरकारान्तात् सर्वनाम्न उत्तरयोः स्मात्, स्मिन्—इत्येतावादेशौ भवतः । ङसीत्येतस्य 'स्मात्'—सर्वस्मात्, विश्वस्मात्, यस्मात्, तस्मात्, कस्मात् । ङीत्येतस्य 'स्मिन्'—सर्वस्मिन्, विश्वस्मिन्, यस्मिन्, तस्मिन्, अन्यस्मिन् ।

अत इत्येव—भवतः । भवति । सर्वनाम्न इत्येव—वृक्षात् । वृक्षे ॥

## पूर्वादिभ्यो नवभ्यो वा ॥ १६ ॥

पूर्वादिभ्यो नवभ्यः सर्वनाम्न उत्तरयोर्ङसिङ्योः स्मात्, स्मिन्—इत्येतावादेशौ वा भवतः । पूर्वस्मात्, पूर्वात् । पूर्वस्मिन्, पूर्वे । परस्मात्, परात् । परस्मिन्, परे । अवरस्मात्, अवरात् । अवरस्मिन्, अवरे । दक्षिणस्मात्, दक्षिणात् । दक्षिणस्मिन्, दक्षिणे । उत्तरस्मात्, उत्तरात् । उत्तरस्मिन्, उत्तरे । अपरस्मात्, अपरात् । अपरस्मिन्, अपरे । अधरस्मात्, अधरात् । अधरस्मिन्, अधरे । स्वस्मात्, स्वात् । स्वस्मिन्, स्वे । अन्तरस्मात्, अन्तरात् । अन्तरस्मिन्, अन्तरे ।

### पदमञ्जरी

च शास्त्रे विभज्यान्वाख्यायते । *अन्तरङ्गत्वादिति* । एकपदाश्रयत्वादन्तरङ्गत्वम्, पदद्वयाश्रयत्वादेकादेशो बहिरङ्गः ॥

*पूर्वादिभ्यो नवभ्यो वा* ॥ द्वये पूर्वादयः—सूत्रपठिताः, गणपाठपठिताश्च, 'सर्वनाम्नः' इति चेहानुवर्त्तते; तत्रासति नवग्रहणे ङसिङ्योर्येन सर्वनामसंज्ञा स गणपाठ एव गृह्यत इति नवग्रहणम् ।

### न्यासः

ङसिङ्योः स्मात्स्मिनौ ॥ ङेरल्पाच्तरस्य पूर्वनिपाते प्राप्ते परनिपातो वैचित्र्यार्थः ॥

पूर्वादिभ्यो नवभ्यो वा ॥ पूर्वेण नित्यं प्राप्तयोः स्मात्स्मिनोर्विकल्पार्थं वचनम् ।

ननु च 'पूर्वापरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्', 'स्वमज्ञातिधनाख्यायाम्', 'अन्तरं बहिर्योगोपसंव्यानयोः' इति नवैव सूत्रे पूर्वादीनि पठ्यन्ते, तदपार्थकं नवग्रहणम् ? नैतदस्ति; न हीह सूत्रपरिपठितानि पूर्वादीनि गृह्यन्ते, किं तर्हि ? गणपठितानि । कुत एतत् ? जसि हि सूत्रपरिपठितानां तेषां सर्वनामसंज्ञा,

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



नवभ्य इति किम् ? त्यस्मात् । त्यस्मिन् ॥

जसः शी ॥ १७ ॥

अकारान्तात्सर्वनाम्न उत्तरस्य जसः 'शी' इत्ययमादेशो भवति । सर्वे । विश्वे । ये । के । ते ।

दीर्घोच्चारणमुत्तरार्थम्—त्रपुणी । जतुनी ॥

औङ आपः ॥ १८ ॥

आबन्तादङ्गादुत्तरस्यौङः 'शी' इत्ययमादेशो भवति । खट्वे तिष्ठतः । खट्वे पश्य । बहुराजे । कारीषगन्ध्ये ।

**पदमञ्जरी**

इह 'जसिङसिङीनां शीस्मात्स्मिनः पूर्वादिभ्यो नवभ्यो वा, औङ आपः, शी नपुंसकाच्च' इति सूत्रन्यासः कर्त्तव्यः, एवं जसि विभाषार्थानि त्रीणि सूत्राणि न कर्त्तव्यानि भवन्ति ? तथा तु न कृतमित्येव ॥

*जसः शी* ॥ *दीर्घोच्चारणमुत्तरार्थमिति* । इह त्वत इत्यधिकाराद् गुणेन भवितव्यमिति, ह्रस्वेऽपि सिद्धम् । न च सर्वे छत्त्रिण इत्यत्र 'षत्वतुकोरसिद्धः' इत्येकादेशस्यासिद्धत्वाद् ह्रस्वाश्रयस्य नित्यस्य तुकः प्रसङ्गः; तत्र हि पदान्तपदाद्योर्य एकादेशस्तस्यैवासिद्धत्वम् ॥

*औङ आपः* ॥ 'औङः' इति निर्देशं क्रियमाणमनुवादपूर्वमाक्षिपति ।

**न्यासः**

न ङसिङ्योः । 'सर्वनाम्नश्च' इतीहानुवर्त्तते, किं प्रयोजनम् ? विद्यमाने स्वे यजते, स्वाद् बिभेतीत्यत्र मा भूत् । तस्मात् गणपरिपठितान्येव पूर्वादीनि गृह्यन्ते; तत्रासति नवग्रहणे त्यदादिभ्योऽपि स्यात् । तस्मान्नवग्रहणं कर्त्तव्यम् ॥

जसः शी ॥ शकारः सर्वादेशार्थः, असति तस्मिन् 'आदेः परस्य' इति वचनादकारमात्रस्य स्यात् । अथ दीर्घोच्चारणं किमर्थम्, न ह्रस्व एव विधीयताम्, अकारान्ताद्धययं विधीयते । अत्राद्गुणेन भवितव्यमिति नास्ति गुणे कृते ह्रस्वस्य दीर्घस्य वा विधाने विशेषः ? इत्याह—दीर्घोच्चारणमित्यादि । 'नपुंसकाच्च' इति वक्ष्यति; तत्र त्रपुणी, जतुनी—इत्यत्र दीर्घस्य श्रवणं यथा स्यादित्येवमर्थं दीर्घोच्चारणम् ।

सर्वनाम्न इत्येव—दक्षिणा इमे गाथकाः । अत इत्येव—भवन्तः ॥

औङ आपः ॥ 'वृद्धिरेचि' इति वृद्धौ प्राप्तायामयमारम्भः । 'औङ' इति प्रथमाद्वितीयाद्विवचनयोः सामान्येन ग्रहणम् । 'आपः' इति टाब्डाप्चापाम् । खट्वे इति । 'अजाद्यतष्टाप्' । तिष्ठतः, पश्येति यथाक्रममनुप्रयोगयोरुपन्यासः प्रथमान्ततां द्वितीयान्ततां प्रतिपादयितुम्; अन्यथा खट्वे इत्युभयत्र रूपस्य तुल्यत्वात् प्रथमान्ततादौ

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


ङकारः सामान्यग्रहणार्थः—औटोऽपि ग्रहणं यथा स्यात् ।
औकारोऽयं शीविधौ ङिद्गृहीतो ङिच्चास्माकं नास्ति कोऽयं प्रकारः ।
सामान्यार्थः, तस्य चासञ्जनेऽस्मिन्ङित्कार्यं ते श्यां प्रसक्तं स दोषः ॥

पदमञ्जरी

*औकारोऽयमिति* । *कोऽयं प्रकारः*, कुत्सितोऽयं सूत्रप्रणयनप्रकारः, सिद्धस्य ह्यनुवाद उपपद्यते, यथा—'ङेर्यः' इति, अयं तु न क्वापि सिद्ध इति ? परिहरति—*सामान्यार्थ इति* । 'औतः' इत्युच्यमाने प्रथमाद्विवचनस्यैव स्यान्निरनुबन्धकत्वात्, न सानुबन्धकस्यौटः । यद्यपि टकारः प्रत्याहारार्थत्वात्समुदायानुबन्धः, तथापि प्रत्ययानुबन्धत्वमपि तस्याविरुद्धम् । व्यर्था अपि हेतवो भवन्ति, तद्यथा—'आम्राश्च सिक्ताः पितरश्च प्रीणिताः' इति, 'औट' इत्युच्यमाने प्रथमाद्विवचनस्य न स्यात् । तस्माद् द्वयोरपि सामान्यग्रहणार्थो ङकारानुबन्धनिर्देशः । नन्वसतोऽनुवादोऽनुपपन्न इत्याक्षेपः, तत्र प्रयोजनाभिधानमसङ्गतम् ? नैष दोषः; ओदौटोरौङिति विधिवाक्यमस्मादेवानुवादादनुमास्यते, तस्यैव प्रयोजनाभिधानम् । पुनश्चोदयति—*तस्य चेति* । तस्य ङकारानुबन्धस्यासञ्जनेऽस्मिन्नेवं विज्ञायमाने *ङित्कार्यं* 'याडापः' इत्येतत्ते एवंवादिनस्तव, श्यां शीशब्दे परतः, प्रसक्तम् । प्रसजतु नाम ? तत्राह—*स दोष इति* । दोष इत्यनेन

न्यासः

विशेषे सन्देहः स्यात् । बहुराजे इति । बहवो राजानो ययोरिति बहुव्रीहिः । 'डाबुभाभ्यामन्यतरस्याम्' इति डाप् । कारीषगन्ध्ये इति । करीषस्येव गन्धोऽस्येति बहुव्रीहिः, 'उपमानाच्च' इतीच् । करीषगन्धेरपत्यमित्यण्, तस्य 'अणिञोः' इत्यादिना ष्यङादेशः । 'यङश्चाप्' इति चाप् ।

**औकारोऽयमित्यादि** । **शीविधौ** शीविधाने । औकारोऽयं स्थानी ङिद्गृहीतो ङकारानुबन्ध उपात्त इत्यर्थः । ङकार इद् यस्य स ङित् । ङिच्चास्माकं वैयाकरणानां मतेन शास्त्र औकारो नास्ति । ततः कोऽयं प्रकारः, किंशब्दः कुत्सायां वर्त्तते । कुत्सितोऽयं सूत्रप्रणयनप्रकार इत्यर्थः । कुत्सितत्वं त्वसत एवोपादानात् ।

ङकारासञ्जनप्रयोजनप्रदर्शनद्वारेण कुत्सितत्वं सूत्रप्रणयनस्य निराकर्त्तुमाह—**सामान्यार्थं इति** । यदि ह्यौकारोऽनुबन्धरहितः स्थानित्वेनोपादीयेत, ततः 'निरनुबन्धकग्रहणे न सानुबन्धकस्य' इति द्वितीयाद्विवचनं न गृह्येत । अथ तस्य टकारोऽनुबन्ध उपादीयेत, एवमपि प्रथमाद्विवचनं न गृह्येत । तस्मात् सामान्येन द्वयोरपि ग्रहणं यथा स्यादित्येवमर्थं ङकार आसज्यते । ननु च द्वितीयाद्विवचने यष्टकारो नासौ तस्यानुबन्धः, कस्य तर्हि ? समुदायस्य । प्रत्याहारार्था हि येऽनुबन्धास्ते समुदायानुबन्धा एव विज्ञायन्ते, यथा—महिङो ङकारः, सुपश्च पकारः । तस्मान्निरनुबन्धकग्रहणे द्वयोरप्यनु-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



ङित्त्वे विद्याद्वर्णनिर्देशमात्रं वर्णे यत्स्यात्तच्च विद्यात्तदादौ ।

पदमञ्जरी

सामानाधिकरण्यात्स इति पुंल्लिङ्गनिर्देशः । परिहरति—*ङित्त्व इति* । 'वर्णमात्रनिर्देशः' इति विवक्षितम्, वृत्तभङ्गभयात्त्वस्थाने मात्रशब्दः प्रयुक्तः । 'याडापः' इत्यत्र ङितीति यदनुवृत्तं न स बहुव्रीहिः—ङ इद्यस्येति, किं तर्हि ? कर्मधारयः—

न्यासः

बन्धकत्वात् सामान्येन ग्रहणं भविष्यति, तत् किं ङकारेण ? नैतदस्ति; समुदायानुबन्धकत्वेऽवयवानुबन्धकत्वमपि ह्येषां प्रतिज्ञायते । न हि समुदायानुबन्धकत्वे प्रत्ययानुबन्धकत्वं विरुध्यते । इत्संज्ञको ह्यनुबन्ध उच्यते, हलश्चान्त्यस्येत्संज्ञा विधीयते । औटश्च टकारो यथा समुदायं प्रत्यन्तस्तथा प्रत्ययं प्रत्यपि । तस्मात् तस्य 'हलन्त्यम्' इतीत्संज्ञायां विहितायां यथासौ समुदायं प्रत्यनुबन्धस्तथा प्रत्ययमपि । प्रयोजनाभावात् प्रत्ययानुबन्धकत्वमनुपपन्नमिति चेत् ? न; इहास्ति प्रयोजनम्—द्वितीयाद्विवचनस्य सानुबन्धकत्वं यथा स्यात् । यदि तर्हि प्रत्ययानुबन्धस्तदा सत्यपि ङकारासञ्जने 'तदनुबन्धकग्रहणेनातदनुबन्धकस्य' इति 'एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य' इति च प्रथमाद्विवचनस्यैव ग्रहणं स्यात्, तस्य हि ङकार एवैकोऽनुबन्धः; द्वितीयाद्विवचनस्य तु स चान्योऽपि टकारः ? नैष दोषः; ङकारोच्चारणसामर्थ्याद् द्वितीयाद्विवचनमपि ग्रहीष्यते । अन्तरेणैव ङकारं प्रथमाद्विवचनस्यैव ग्रहणे सिद्धे ङकार उपदिश्यते सामान्यार्थः । यदि च सत्यपि ङकारे प्रथमाद्विवचनमेव गृह्यते ङकारोऽनर्थकः स्यात् । कथं पुनरस्य ङकारस्येत्संज्ञा, यावतोपदेशे योऽन्त्यो हल् तस्येत्संज्ञा विहिता, न चायमुपदेशेऽन्त्यः ? भवतु वा तस्येत्संज्ञा, टकारस्य औटस्तर्हि न स्यात्; कथं ह्येकस्मिन्नुपदेशे द्वावन्त्यौ स्याताम् ? नैष दोषः; औङिति वचनात् । द्वयोरप्यौकारयोरौङित्ययमादेशो विज्ञायते, तस्य चोपदेशोऽस्ति । यथा—'चक्षिङः ख्याञ्' इति ञकार उपदेशेऽन्त्य इति, यथा तस्येत्संज्ञा तथा ङकारस्यापि । टकारस्य तु पूर्वमेव क्रमेणेत्संज्ञा लोपश्च क्रियत इति नास्ति दोषः । यश्चासावादेश औकारः स एव शीभावस्य स्थानित्वेनोपात्त इति वेदितव्यम् ।

**तस्य चेत्यादिना**—ङकारासञ्जने यो दोषः प्राप्नोति तं दर्शयति । अनुबन्धभूतस्य ङकारस्योपादानमासञ्जनम् । ङिति यत् कार्यं तत् ङित्कार्यम्—'सप्तमी' इति योगविभागात् समासः । तत् पुनः कार्यम् 'याडापः' इति आट् । यदि सामान्यार्थोऽयं ङकार आसज्यते, एवं सति ङकारस्यासञ्जने ङिति यत् कार्यं तत् ते = तव सूत्रकारस्य मतेन श्यां प्रसक्तं प्राप्तम्, स दोषः । 'याडापः' इति याडागमे सति खट्वे— इति रूपं न सिध्येत् । अथ श्यामिति कथमामाटौ स्याताम् ? कथञ्च न स्याताम् ? अनदीत्वात्; अनदीत्वं च तस्यास्त्र्याख्यत्वात् ? नैतदस्ति; यथैव हि खट्वादयः स्त्रियां वर्तन्ते तथा शीशब्दोऽपि । तथा चाह लिङ्गकारिकाकारः—'ईदूदन्तं यच्चैकाच् शरद्-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



वर्णश्चायं तेन ङित्त्वेऽप्यदोषो निर्देशोऽयं पूर्वसूत्रेण वा स्यात् ॥

पदमञ्जरी

ङश्चासंविच्चेति, ततः किम्? इत्यत आह—*वर्णे यत्स्यादिति*। 'यस्मिन्विधिस्तदादावल्ग्रहणे'।

अयं तावन्ङित्त्वमभ्युपेत्य परिहार उक्तः, ङित्वमेव तु नास्तीत्याह—*वर्णश्चायमिति*। चशब्दो वार्थे पठितः। *वर्णो वायमित्येव* वा पाठः। औङिति वर्णो वायमुपात्तो न प्रत्ययः। ङकारस्तु मुखसुखार्थः, यथा—'ऋदोरप्' इत्यत्र दकारः। अङ्गाक्षिप्तस्य प्रत्ययस्य तेन विशेषणादौकारान्तस्य प्रत्ययस्येत्यर्थः। वर्णरूपतया चौकारग्रहणे सति द्वयोरप्यौकारयोर्ग्रहणं भवति; प्रत्ययविषयत्वादननुबन्धकपरिभाषायाः। *ङित्वेऽप्यदोष इति*। ङित्त्वे सति यो दोषः सोऽपि न भवति, ङित्त्वस्यैवाभावादित्यर्थः, पूर्वेण वा परिहारेणास्यान्वयः।

परिहारान्तरमाह—*निर्देशोऽयमिति*। पूर्वाचार्याणां हि सूत्रे द्वे अप्येते द्विवचने औङिति पठ्येते, तदाश्रयेणायं निर्देशः, तेन द्वयोरपि ग्रहणं भवति। न च ङित्कार्यप्रसङ्गः; न हि पूर्वाचार्यानुबन्धैरिह कार्याणि क्रियन्ते ॥

न्यासः

रदृषत्प्रावृषश्च' इति। तस्मात् स्त्र्याख्यत्वादयमपि नदीसंज्ञक एव; श्रुतिसामानाधिकरण्यात्। श्रुतौ वर्त्तमानः श्रीशब्दो नदीसंज्ञां प्रतिपद्यते। श्रुतिः स्वरूपमेव।

ङित्व इत्यादि। 'याडाप' इत्यत्र 'घेर्ङिति' इत्यतो ङिद्ग्रहणमनुवर्त्तते। तत्र ङिदिति नायं बहुव्रीहिः—ङकार इद् यस्य स ङिदिति, किं तर्हि? तत्पुरुषः—ङकार एव इद् ङित्। तस्मादौकारो यो ङित् तस्मिन्नभ्युपेते सति ङितीत्यस्मिन्निर्देशे ङकारस्येत्संज्ञकस्य वर्णमात्रस्य निर्देशं विद्यादवगच्छेत् प्राज्ञः। मात्रशब्दस्ततोऽन्यव्यवच्छेदाय। यदि ङितीत्यत्र ङकारस्य वर्णमात्रस्य निर्देशो न ङकारानुबन्धस्य प्रत्ययस्य तत् किमिति श्यां ङित्कार्यं न भवति? इत्याह—वर्णे इत्यादि। वर्णे परभूते यत् कार्यं विधीयते तद् 'यस्मिन् विधिस्तदादावल्ग्रहणे' इति परिभाषया तदादौ वर्णादौ विद्यात्। ततश्च यत्र ङकार आदावित्संज्ञकस्तत्रैव भवितव्यं याटा, न श्याम्। न ह्यत्रादौ ङकारः, क्व तर्हि? अन्ते। एवमयं ङित्त्वमभ्युपेत्य परीहार उक्तः।

इदानीं ङित्त्वमनभ्युपेत्य परीहारान्तरमाह—वर्णश्चायमित्यादि। वार्थे चशब्दः। वर्णो वायमिति यावत्। औङित्यौवर्णोऽयमुपात्तः प्रत्ययविशेषणार्थः, न तु प्रत्ययः। अङ्गाधिकारादावन्तात् परो यः परो यः सामर्थ्यप्राप्तः प्रत्ययः स औकारेण विशेष्यते, विशेषणेन च तदन्तविधिर्भवतीति। तेनायमर्थो जायते—औकारान्तेऽस्य प्रत्ययस्येति। औकारान्तत्वं व्यपदेशिवद्भावात्। ङकारश्चायं नानुबन्धः, मुखसुखार्थस्त्वयम्, यथा—'ऋदोरप्' इत्यत्र दकारः। वर्णरूपतया च तथौकारस्य ग्रहणे सति द्वयोरप्यौकारयोः

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## नपुंसकाच्च ॥ १९ ॥

नपुंसकादङ्गादुत्तरस्य औङः 'शी' इत्ययमादेशो भवति । कुण्डे तिष्ठति । कुण्डे पश्य । यस्येतिलोपः प्राप्तः ।

❀ श्यां प्रतिषेधो वक्तव्यः ❀ । इति न भवति–दधनि, मधुनी, त्रपुणी, जतुनी ॥

## जश्शसोः शिः ॥ २० ॥

नपुंसकादङ्गादुत्तरयोर्जश्शसोः 'शि' इत्यादेशो भवति । कुण्डानि तिष्ठन्ति । कुण्डानि पश्य । दधीनि । मधूनि । त्रपूणि । जतूनि ।

### पदमञ्जरी

*जश्शसोः शिः॥ कुण्डश इति* । जातिशब्दोऽप्ययं यदार्थप्रकरणादिना जात्याधारभूतायामेकस्यां व्यक्तौ वर्त्तते, तदा वृत्तिविषय एकवचनो भवतीति 'संख्यैकवचनात्' इति शस् भवति । अर्थप्रकरणाद्यभावे तु तत्र प्रत्युदाहृतम्–घटंघटं ददातीति ॥

### न्यासः

शीभावः सिद्धो भवति'। प्रत्ययग्रहणे हि निरनुबन्धकपरिभाषोपतिष्ठते, न चेह प्रत्ययग्रहणम् । किं तर्हि ? वर्णमात्रस्य । ननु च द्वावप्येतौ प्रत्ययौ, तत् किमिति नोपतिष्ठते ? सत्यम्; यद्यपि तौ प्रत्ययौ, तथापि नात्र शास्त्रे प्रत्ययरूपेणौकार उपात्तः ? किं तर्हि ? वर्णरूपेणेति, अतस्तस्या नेहोपस्थानम् ।

ङित्त्वमनभ्युपेत्य परीहारान्तरमाह–निर्देशोऽयमित्यादि । नेह व्याकरण औकारस्य ङकारोऽनुबन्ध उपादीयते । पूर्वाचार्याणां तु सूत्रे द्वे अप्येते द्विवचने ङिती पठ्येते । तथा हि 'आऔटावौङ्' इति तत्र सूत्रपाठः । अतस्तत्सूत्रानुरोधेनायं निर्देशः, तस्येह ग्रहणं यथा स्यात् । तस्मान् ङित्त्वाभावान्नास्ति ङित्कार्यस्य प्रसङ्गः । न हि पूर्वाचार्यसूत्रानुरोधेनेहानुबन्धकार्याणि क्रियन्ते । तेन ङित्त्वेऽप्यदोष इति । किं पुनर्यत्र नास्त्येव ङित्त्वमित्यपिशब्दस्यार्थः । तदेतदुक्तं भवति–ङित्त्वेऽभ्युपेते सति ङित्त्वे विद्याद् वर्णनिर्देशमात्रम् । 'वर्णे यत्स्यात् तच्च विद्यात्तदादौ' इत्येवं ङित्कार्यप्रसङ्गनिरासाय यस्मात् परीहार उक्तः । यस्माद्वर्णश्चायमित्यनेन, 'निर्देशोऽयं पूर्वसूत्रेण वा स्यात्' इत्यनेन चौकारयोर्ङित्वाभावः प्रतिपादितः । तेन हेतुना सत्यपि ङित्त्वेऽप्यदोषः । किं पुनर्नास्त्येव यत्र ङित्वमिति ॥

नपुंसकाच्च ॥ दधिनी इति । 'इकोऽचि विभक्तौ' इति नुम् ॥

जसिशसोः[1] शिः ॥ जसीत्यत्रेकार उच्चारणार्थः । कुण्डानीति । 'नपुंसकस्य झलचः' इति नुम्, 'सर्वनामस्थाने च' इति दीर्घः ।

---

१. पूर्वाचार्यप्रामाण्येन न्यासकारोऽत्र 'जसिशसोः शिः' इत्येवं सूत्रं मन्यते, न तु 'जश्शसोः शिः' इति । न्यासकाराभिप्रायः 'आज्जसेरसुक्'(७.१.५०)इत्यत्रापि द्रष्टव्यः ।

 CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



जसा सहचरितस्य शसो ग्रहणादिह न भवति—कुण्डशो ददाति । वनशः प्रविशन्तीति ॥

## अष्टाभ्य औश् ॥ २१ ॥

'अष्टाभ्यः' इति कृताकारोऽष्टन्-शब्दो गृह्यते । तस्मादुत्तरयोर्जश्शसोः 'औश्' इयमादेशो भवति । अष्टौ तिष्ठन्ति । अष्टौ पश्य ।

कृताकारस्य ग्रहणं किम् ? अष्ट तिष्ठन्ति । अष्ट पश्य । एतदेव

### पदमञ्जरी

*अष्टाभ्य औश्* ॥ *कृताकारोऽष्टन्शब्दो गृह्यत इति* । कृताकारस्यानुकरणमष्टाशब्दः, न तु विभक्तौ लक्षणवशादात्वं कृतमित्यर्थः ।

*कृताकारस्य ग्रहणं किमिति* । आत्ववतोऽनुकरणं किमित्याश्रितमित्यर्थः । यदाऽऽत्वं भवति तदैव यथा स्यादित्युत्तरम् ।

*अष्टेति* । कथं पुनरत्रात्वाभावः, यावता न हि तद्विधौ विकल्पः सन्निहितः ? इत्यत आह-*एतदेवेति* । इह 'अष्टनः' इति वक्तव्यम्-यथा 'अष्टन आ विभक्तौ' इत्यत्र, एवं सिद्धे 'अष्टाभ्यः' इति निर्देशात्कृतात्वस्यानुकरणमिति तावन्निश्चितम्, तस्य चैतत्प्रयोजनम्-यदात्वं भवति तदैव यथा स्यादिति । यदि च नित्यमात्वं स्यात्, कृतात्वस्यानुकरणमनर्थकं स्यात्, व्यावर्त्याभावादिति भावः । ननु च 'अष्टनो दीर्घात्' इति दीर्घग्रहणेनायमर्थो ज्ञापितः, तद्वा ज्ञापकमिदं

### न्यासः

अथेह कस्मान्न भवति—कुण्डं कुण्डं ददाति, 'संख्यैकवचनाच्च वीप्सायाम्' इति शस्, कुण्डशो ददाति ? इत्याह—जसा साहचर्यादित्यादि । एतच्चोद्यपरिहारवचनं यदार्थप्रकरणादेर्वृत्तौ कुण्डादिशब्द एकवचनो भवति तदा वेदितव्यम्, न त्वन्यदा । शस्विधौ हि वृत्तिस्थैकार्थताऽश्रीयते, न वाक्यस्था । अर्थप्रकरणादिरहितः कुण्डादिशब्दो वृत्तौ निवृत्तायां विभक्तावेकार्थो न भवतीति शसा न भवितव्यम् । कस्मात् पुनः कुण्डादिशब्दो वृत्तावेकार्थो न भवति ? जातिशब्दत्वात् । जातिशब्दा हि नैकस्यामेव जात्याधारभूतायां व्यक्तौ वर्त्तन्ते । किं तर्हि ? अनेकस्यामपि । एवञ्च यत् तत्र शस्विधौ प्रत्युदाहरणमुपन्यस्तम्—'संख्यैकवचनादिति किम् ? घटं घटं ददाति', तदुपपद्यते । यद्यर्थप्रकरणादिरहितो जातिशब्दो वृत्तावेकार्थो न भवति, तदा न भवितव्यमेव शसा ॥

अष्टाभ्य औश् ॥ कृताकारोऽष्टन्-शब्दो गृह्यत इति । यत्रात्वं तत्रौश्त्वं यथा स्यादित्यभिप्रायः । अष्टौ तिष्ठन्तीति । आत्वे कृत औश्त्वम् ।

अष्ट तिष्ठन्तीति । अत्रात्वाभावादौश्त्वं न भवति । कथं पुनरत्रात्वाभावः, यावता

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



कृतात्वस्य ग्रहणं ज्ञापकम्—'अष्टन आ विभक्तौ' इति आत्त्वविकल्पस्य।

'षड्भ्यो लुक्' इत्यस्यायमपवादः, नाप्राप्ते तस्मिन्निदमारभ्यते।

यस्तु 'सुपो धातुप्रातिपदिकयोः' इति, तस्मिन्प्राप्ते चाप्राप्ते चेति स न बाध्यते—अष्टपुत्रः, अष्टभार्य इति।

पदमञ्जरी

वा, को न्वत्र विशेषः? इहेयत्तावद्वक्तव्यम्—'षड्भ्यो लुक्' इत्यस्यायमपवाद इति। अस्यैवेत्यवधारणं द्रष्टव्यम्। कारणमाह—*नाप्राप्ते हीति*। अयं हि लुग् वाक्ये समासे च सर्वत्र प्राप्नोति। *तस्मिन्प्राप्ते चेति*। स हि समास एव प्राप्नोति, न तु वाक्ये। *अष्टपुत्र इति*। 'अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते' इति वचनाद्वाक्यावस्थायामेव प्राप्तोऽप्यौश् न क्रियते, औश एव वा स्थानिवद्भा-

न्यासः

न तत्रात्वविधौ विकल्पस्य प्रतिपादकं किञ्चिदन्यतरस्यांग्रहणादिकमस्ति? इत्याह—एतदेवेत्यादि। कृतात्वनिर्देशस्यैतदेव प्रयोजनम्—यत्रात्वं तत्रैवौश्त्वं यथा स्यात्, अन्यत्र मा भूदिति। यदि च नित्यमात्वं स्यात् तदा कृतात्वस्य निर्देशोऽनर्थकः स्यात्; व्यावर्त्याभावात् 'अष्टनः' इत्येवं ब्रूयात्। तदेवं लघुनिर्देशे सम्भवति सति यत् कृतात्वस्य निर्देशो गरीयान् क्रियते, तज्ज्ञापयति—विकल्पेनात्वं भवतीति। यद्यपि चायमर्थः 'अष्टनो दीर्घात्' इत्यत्रापि ज्ञापितः, तथापि विस्मरणशीलानामनुग्रहाय पुनरिह ज्ञाप्यते।

अथाष्टपुत्रः, अष्टभार्य इत्यत्र कस्मान्न भवति, 'सुपो धातुप्रातिपदिकयोः' इति लुका बाधितत्वादिति चेत्? न; इहापि तर्हि न स्याद्—अष्टौ तिष्ठन्ति, अष्टौ पश्येति। 'षड्भ्यो लुक्' इति लुका बाधित्वात्। अथौश्भावस्य लुगपवादत्वादत्र लुकं बाधित्वा स एव भवति। पूर्वत्रापि तर्हि स एव स्यात्, अत एव हेतोः? इत्याह—षड्भ्यो लुगित्यस्यापवादोऽयमिति। अत्रैवोपपत्तिमाह—नाप्राप्त इत्यादि। 'षड्भ्यो लुक्' इत्यसमासे प्राप्नोति—अष्टौ तिष्ठन्तीत्यादौ, समासे च—अष्टपुत्र इत्यादौ। तस्मान्नाप्राप्ते ह्येतस्मिन् लुक्यौश्त्वमारभ्यत इति तस्यैवायं बाधक इत्यभिप्रायः।

स्यादेतत्—इतरस्मिन्नपि लुकि नाप्राप्त एवेदमारभ्यत इति? अत आह—यस्त्वित्यादि। 'सुपो धातुप्रातिपदिकयोः' इत्यत्राह—अष्टपुत्र इत्यादौ नाप्राप्ते सतीदमारभ्यते, अष्टौ तिष्ठन्तीत्यत्राप्राप्ते। अप्राप्तिस्तु धातुप्रतिपदिकावयवत्वात्सुपः। तस्मादिहोत्सर्गापवादधर्माभावान्नायमस्यापवाद इति सोऽनेन न बाध्यते। तेनाष्टपुत्रः, अष्टभार्यः—इत्यत्र सुब्लुकैव भवितव्यमित्यौश्त्वं न भवति।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तदन्तग्रहणमत्रेष्यते—परमाष्टौ, उत्तमाष्टौ ।

'प्रियाष्टानः' इत्यत्रात्वस्याभावादौश्त्वं न भवति ॥

षड्भ्यो लुक् ॥ २२ ॥

षट्संज्ञकेभ्य उत्तरयोर्जश्शसोर्लुग्भवति । षट् तिष्ठन्ति । षट् पश्य । पञ्च । सप्त । नव । दश ।

षट्प्रधानात्तदन्तादपि भवति—परमषट् । उत्तमषट् ।

यत्र तूपसर्जनं षट्, ततो न भवति—प्रियषषः, प्रियपञ्चान इति ॥

पदमञ्जरी

वाल्लुक् । *तदन्तग्रहणमत्रेष्यत इति* । 'अङ्गाधिकारे तस्य च तदुत्तरपदस्य च' इति वचनात् । यद्येवम्, यत्राष्टशब्दार्थ उपसर्जनं तत्रापि प्राप्नोति ? अत आह—*प्रियाष्टान इत्यत्रेति* । यथा पुनरत्रात्वं न भवति, तथा तद्विधावेव वक्ष्यते ॥

षड्भ्यो लुक् ॥ *षट्प्रधानादिति* । षट्संज्ञकानामर्थः प्रधानं यत्र तस्मादित्यर्थः । *प्रियषष इति* । अन्यपदार्थप्रधानोऽयं बहुव्रीहिः, 'सर्वनामसंख्ययोरुपसंख्यानम्' इति षषः पूर्वनिपाते प्राप्ते 'वा प्रियस्य' इति प्रियशब्दस्य पूर्वनिपातः ॥

न्यासः

तदन्तग्रहणमित्यादि । किं पुनरिष्यमाणमपि लभ्यते ? 'अङ्गाधिकारे तस्य तदुत्तरपदस्य' इति वचनात् । अथवा—अष्टाभ्य इत्यर्थप्रधाननिर्देशोऽयं बहुवचननिर्देशादवसीयते । शब्दप्रधाने हि निर्देशे 'अष्टनः' इत्येव ब्रूयात् । अर्थाच्च शब्दद्वारेणैव जश्शसोः परत्वं विज्ञायत इति केवलाच्चाष्टनो भवति । तदन्ताच्चातदन्तेऽपि हि शब्दद्वारेणार्थात् परौ जश्शसौ भवत इति । यदि तदन्तग्रहणमत्रेष्यते, प्रियाष्टान इत्यत्रापि प्राप्नोति ? अत आह—प्रियाष्टान इत्यत्रेत्यादि । प्रिया अष्टौ येषामिति बहुव्रीहिः । ननु च विकल्पेनात्वम् । तत्र यदात्वं न भवति तदा मा भूदौश्त्वम्, यदात्वं तदा स्यादेव व्यवस्थितविभाषयात्रात्वं न भविष्यतीत्यदोषः ॥

षड्भ्यो लुक् ॥ पञ्च, सप्तेति । 'नलोपः प्रातिपदिकान्तस्य' इति नलोपः । षट्प्रधानात् तदन्तादपि भवतीति । अत्र पूर्वको हेतुर्वक्तव्यः । यत्र स्वित्यादि । अर्थस्येदं ग्रहणं बहुलवचनादवसितम् । स चार्थो द्विविधः—प्रधानोऽप्रधानश्च । तत्र 'प्रधाने कार्यसंप्रत्ययः' इति यत्रार्थस्य प्राधान्यं तत्रैव भवति, न तु यत्रार्थस्याप्राधान्यं तत्र । एष च हेतुः प्रियाष्टान इत्यत्रौश्त्वभावेऽपि वेदितव्यः । प्रियषष इति । प्रिया षडेषामिति बहुव्रीहिः । अत्रान्यपदार्थस्य प्राधान्यम्, षडर्थस्तु तत्र गुणभावादप्रधानः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## स्वमोर्नपुंसकात् ॥ २३ ॥

सु, अम्—इत्येतयोर्नपुंसकादुत्तरयोर्लुग्भवति । दधि तिष्ठति । दधि पश्य । मधु तिष्ठति । मधु पश्य । त्रपु । जतु ।

तद्ब्राह्मणकुलमित्यत्र लुका त्यदाद्यत्वं बाध्यते; पूर्वविप्रतिषेधेन, नित्यत्वाद्वा । लुको हि निमित्तम् 'अतोऽम्' इति लक्षणान्तरेण

**पदमञ्जरी**

स्वमोर्नपुंसकात् ॥ 'सु' इति प्रथमैकवचनस्य ग्रहणम्, न सप्तमीबहुवचनस्य; अमा एकवचनेन साहचर्यात् । तद्ब्राह्मणकुलमित्यत्र परत्वात्त्यदाद्यत्वे कृते लुग्न प्राप्नोति; 'अतोऽम्' इत्यम्भावेन बाधितत्वात्, तस्मात्त्यदादिभ्यश्चेति वक्तव्यम् ? अत आह—*तद् ब्राह्मणकुलमित्यत्रेति* । *नित्यत्वाद्वेति* । लुका त्यदाद्यत्वं बाध्यत इत्यनुषङ्गः ।

कथं पुनर्लुको नित्यत्वम्, यावता त्यदाद्यत्वे कृते अतोऽमित्यपवादविधानात सोऽप्यनित्य एव ? अत आह—*लुको हीति* । यदि ह्यतोऽमित्येतन्न स्यादकारा-

**न्यासः**

स्वमोर्नपुंसकात् ॥ 'सु' इति यद्यपि सप्तमीबहुवचनमस्ति, तथाप्यमा द्वितीयैकवचनेन साहचर्यात्प्रथमैकवचनमेव गृह्यते ।

तद् ब्राह्मणकुलमित्यत्र परत्वात् त्यदाद्यत्वेनैव भवितव्यम्, त्यदाद्यत्वे कृते लुग्न प्राप्नोति; 'अतोऽम्' इत्यम्भावप्रसङ्गात्, तस्मात्त्यदाद्यत्वात्प्राग् लुग्वक्तव्यः ? इत्याह—तद् ब्राह्मणकुलमित्यत्रेत्यादि । लुकोऽवकाशः—दधि, मध्वित्यत्र, त्यदाद्यत्वस्यावकाशः—स ब्राह्मण इति; इहोभयं प्राप्नोति—तद् ब्राह्मणकुलमिति, लुग्भवति पूर्वविप्रतिषेधेन । न च पूर्वविप्रतिषेधो वक्तव्यः; इष्टवाचित्वात् परशब्दस्य । नित्यत्वाद्वेति । वाशब्दः समुच्चये । यद्यपि लुक्, त्यदाद्यत्वञ्चोभयं प्राप्नोति, तथापि लुक एव नित्यत्वं विज्ञायते । कुतः ? सामर्थ्यात् । 'लुका त्यदाद्यत्वं बाध्यते' इत्यत्र हीदं हेत्वन्तरमुक्तम् । एवञ्चेदमत्रार्थे हेत्वन्तरं सम्भवति यदि लुको नित्यत्वं भवति, नान्यथा, नित्यत्वं पुनः कृताकृतप्रसङ्गित्वात् । त्यदाद्यत्वं हि विभक्तावुच्यमानं कृते लुकि विभक्त्यभावान्न प्राप्नोति । प्रत्ययलक्षणेन चास्य प्राप्तिर्न युक्ता; 'न लुमताङ्गस्य' इति प्रतिषेधात् । लुक्पुनः कृते त्यदाद्यत्वे प्राप्नोत्यकृतेऽपि ।

ननु च कृते त्यदाद्यत्वे लुकः प्राप्तिरेव नास्ति; 'अतोऽम्' इत्यमपवादविधानात् । तस्मात्सोऽप्यनित्य ? एव इत्याह—लुको हीत्यादि । असति 'अतोऽम्' इति लक्षणेऽकारान्तमप्यङ्गं लुको निमित्तमासीत्, तदनेन लक्षणेनोपजायमानेनापवादविधानाल्लुकं प्रत्यनिमित्तभावमापद्यते । लुग्निमित्ताभावापादनमेव विघातः । न पुनस्त्यदात्वेनेति । लुको निमित्तभावो विहन्यत इति सम्बन्धनीयम् । यदि 'अतोऽम्' इत्यपवादविधायि

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



विहन्यते, न पुनस्त्यदाद्यत्वेनैव। यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यं भवति ॥

## अतोऽम् ॥ २४ ॥

अकारान्तान्नपुंसकाद् उत्तरयोः स्वमोः 'अम्' इत्ययमादेशो भवति। कुण्डं तिष्ठति। कुण्डं पश्य। वनम्। पीठम्।

मकारः कस्मान्न क्रियते ? दीर्घत्वं प्राप्नोति ॥

### पदमञ्जरी

न्तमप्यङ्गं लुको निमित्तं स्यादेव, ततः किम् ? इत्यत आह–*यस्य चेति*। त्यदाद्यत्वं तु लुकि कृते नैव प्राप्नोति; 'न लुमताङ्गस्य' इति निषेधात्। यद्येवम्, तदपि लक्षणान्तरेणैव बाध्यते ? नासावत्वस्य प्रतिषेधः, कस्य तर्हि ? प्रत्ययलक्षणस्य, प्राप्तिर्हि प्रत्ययलक्षणेन ॥

*अतोऽम्* ॥ अत्रामिति पदच्छेदः, न तु मिति; तथा हि सति लाघवाय मत इत्येव ब्रूयात्। किमर्थं पुनरम्विधीयते न मकार एवोच्येत, द्वितीयैकवचनेऽपि 'आदेः परस्य' इत्यकारस्य मकार कृतेऽन्यस्य मकारस्य संयोगान्तलोपेनैव सिद्धमिष्टम् ? दीर्घप्रसङ्गस्तु; 'सुपि च' इति दीर्घः प्राप्नोति। न च दीर्घविधौ सन्निपातपरिभाषा प्रवर्त्तते; वृक्षायेत्यादावपि प्रसङ्गात्। तस्मादमेव विधेयः।

अपर आह—अम्विधानसामर्थ्यादतिजरसमित्यत्र जरसादेशो भवतीति, तच्चिन्त्यम्; सन्निपातपरिभाषया जरसादेशस्याप्रसङ्गात्। अम्विधानं तु दीर्घबाधनेन चरितार्थमिति ॥

### न्यासः

लक्षणान्तरं न स्यात्, कृते त्यदाद्यत्वे स्यादेवाकारान्तमङ्गं लुको निमित्तम्। तच्च 'अतोऽम्' इत्यपवादेनैव लुको निमित्तं व्याहन्यते, न पुनस्त्यदाद्यत्वेन। यद्येवम्, तत् किमित्यनित्यो लुग्न भवति ? इत्याह–यस्य चेत्यादि। लक्षणान्तरत्वं पुनरम्भावशास्त्रस्य त्यदाद्यत्वशास्त्रापेक्षया वेदितव्यम् ॥

अतोऽम् ॥ पूर्वेण प्राप्तस्य लुकोऽयमपवादः। तपरकरणं मुखसुखार्थम्, न तु दीर्घनिवृत्त्यर्थम्; दीर्घस्याभावात्। अभावस्तु 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वविधानात्। अथ किमर्थमम्भाव उच्यते, न मकारादेश एवोच्येत ? न चैवम्; 'आदेः परस्य' इति द्वितीयैकवचनाकारस्य मकारे कृते द्वयोर्मकारयोः श्रवणं प्राप्नोति; एकस्य संयोगान्तलोपेनापहृतत्वात्। नापि 'सुपि च' इति यञादौ सुपि विधीयमानं दीर्घत्वं प्राप्नोति; 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति वचनात्। अकारान्तसन्निपाते हि मकारविधिः, स कथमकारविघातस्य निमित्तं स्यात् ? एवं

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


अद्ड् डतरादिभ्यः पञ्चभ्यः ॥ २५ ॥

डतरादिभ्यः परयोः स्वमोरद्ड् इत्ययमादेशो भवति । कतरत्तिष्ठति । कतरत्पश्य । कतमत्तिष्ठति । कतमत्पश्य । इतरत् । अन्यतरत् । अन्यत् ।

पञ्चभ्य इति किम् ? नेमं पश्य । डित्करणं किम् ? कतरत् तिष्ठतीत्यत्र पूर्वसवर्णदीर्घो मा भूत् ।

इह तु कतरत्पश्येति स्थानिवद्भावादमि पूर्वत्वेनापि सिद्धयति । एवं तर्हि तकारादेश एव कस्मान्न विधीयते ? हे कतरदिति सम्बुद्धेर्लोपो मा भूत् ।

**पदमञ्जरी**

*अद्डुरादिभ्यः पञ्चभ्यः* ॥ *अद्डादेशो भवतीति* । विवक्षितादेशरूपप्रतिपादनाय ष्टुत्वं न कृतम् । कथं पुनर्ज्ञायते-डिदयमादेश इति ? यदि हि डिन्न स्यात् 'डतरादिभ्यः पञ्चभ्योऽत्' इत्येव ब्रूयात् । किं पुनः कारणं सावेव दीर्घ-

**न्यासः**

तर्हि मकारादेशे विधातव्येऽमादेशं कुर्वन्नेतज्ज्ञापयति-नित्यैषा परिभाषेति । तेनातिजरसात्, अतिजरसैरिति जरसादेशः सिद्धो भवति ॥

**अद्डुतरादिभ्यः पञ्चभ्यः** ॥ द्विडकारोऽयं निर्देशः—तत्रैको डतरसम्बन्धी, द्वितीयस्त्वादेशसम्बन्धी । डतरादयश्चैते सर्वाद्यन्तःपातिनो गृह्यन्ते, न तु 'द्वयोरेकस्य डतरच्' इत्येवमादयः प्रत्ययाः । कुत एतत् ? 'नेतराच्छन्दसि' इति प्रतिषेधात् । प्रत्ययग्रहणे हीतरशब्दात् प्राप्तिरेव नास्तीति प्रतिषेधोऽनर्थकः स्यात् । तेषां डतरादीनां मध्येऽन्त्यानि त्रीणि प्रातिपदिकानि, डतरडतमौ च प्रत्ययौ; तत्र प्रत्ययग्रहणपरिभाषया तदन्तयोर्ग्रहणं भवति । **कतरदिति** । 'कियत्तदोर्निर्धारणे द्वयोरेकस्य डतरच्' । **कतमदिति** । 'वा बहूनां जातिपरिप्रश्ने डतमच्' । **कतरद् तिष्ठतीत्यत्रेत्यादि** । असति हि डित्करणे कतरत् तिष्ठतीत्यत्र 'अकः सवर्णे दीर्घः' इत्यनुवर्त्तमाने 'प्रथमयोः पूर्वसवर्णः' इति दीर्घः स्यात् , अतः स मा भूदित्येवमर्थं डित्करणं क्रियते । अत्र हि कृते दीर्घत्वप्रसङ्गो न भवति; टिलोपेनाकोऽपहृतत्वात् ।

किं पुनः कारणम्—प्रथमैकवचनस्यैव डित्करणस्य दीर्घाभावः प्रयोजनमुच्यते, न तु द्वितीयैकवचनस्य ? इत्यत आह-**इह त्वित्यादि** । अमो हि स्थाने य आदेशस्तस्य 'स्थानिवदादेशोऽनल्विधौ' इति स्थानिवद्भावादमि पूर्वत्वेनापि सिध्यति-कतरदित्येतत्, तस्मान्न तत्र डित्करणस्य दीर्घत्वाभावः प्रयोजनमिति नोच्यते । **तकारादेश एव कस्मान्न क्रियत इति** । यद्यत्र दीर्घत्वं नेष्यते तदा तकारादेश एव कर्त्तव्यः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अपृक्तश्चेदमो दोषो निवृत्ते डतरादिषु ।
अद्डित्त्वाड्डुतरादीनां न लोपो नापि दीर्घता ॥

## नेतराच्छन्दसि ॥ २६ ॥

इतरशब्दादुत्तरयोः स्वमोश्छन्दसि विषये अद्डादेशो न भवति। मृतमितरमाण्डमवापद्यत । वार्त्रघ्नमितरम् । छन्दसीति किम् ? इतरत्काष्ठम् । इतरत्कुण्डचम् ।

### पदमञ्जरी

निवृत्तिः प्रयोजनमुच्यते, न त्वमि ? इत्याह—इह *त्विति* । *एवं तर्हीति* । पूर्वसूत्रविहितममनुवर्त्य डतरादिभ्य इति पञ्चम्याः षष्ठीं प्रकल्प्य तस्यैवामो दकारो विधास्यत इति चोद्यार्थः । *हे कतरदित्यत्र सम्बुद्धिलोपो मा भूदिति* । अयं च दोष पूर्वस्मिन्नपि पक्षे समानः ।

ननु च सम्बुद्धिलोपे 'हल्ङ्याब्भ्यः' इत्यतोऽपृक्तग्रहणमनुवर्तयिष्यते, इह च 'आदेः परस्य' इत्यमोऽकारस्य दकारे कृते मकारस्य संयोगान्तलोपः, तस्यासिद्धत्वान्नायमपृक्तः, एवमदादेशो नापृक्तः, यद्यपृक्तग्रहणमनुवर्त्तते, हे काण्डेत्यमोऽपि न स्यादिति दोषः । तदिदमुक्तम्—*अपृक्तश्चेदमो दोष इति* । सम्बुद्धिलोपे अपृक्तश्चेल्लुप्यते अमो न स्यादिति दोषः । अथ निवृत्तमपृक्तग्रहणम्, ततो निवृत्ते डतरादिषु दोषः—हे कतरदित्यादौ लोपः स्यादिति । अतो डित्त्वादद्डादेशविधानात्तस्य च डित्त्वान्न सम्बुद्धिलोपः, नापि पूर्वसवर्णदीर्घत्वमित्यर्थः ।

यदि पुनः पूर्वसूत्रविहितममनुवर्त्य तस्यैवादादेशो विधीयते शक्यं डित्त्वमकर्त्तुम् ॥

नेतराच्छन्दसि ॥ *अतोऽमित्यस्यानन्तरमेवेति* । अमादेश एवाद्डादेशस्यापवादो भविष्यति, ततश्च 'न' इति वक्तव्यं न भवतीति भावः ॥

### न्यासः

तत्राप्ययमर्थः—दीर्घनिवृत्त्यर्थं डित्करणं न कर्त्तव्यमिति । हे कतरदित्यादि । यदि तकारादेश एव क्रियते तदा तस्य स्थानिवद्भावेन सम्बुद्धिभावोऽस्तीति 'एङ् ह्रस्वात् सम्बुद्धेः' इति लोपः प्राप्नोति, अतः स मा भूदित्येवमर्थं तकारादेशो न क्रियते ।

अपृक्तश्चेदित्यादि । 'हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तम्' इत्यतश्चेदपृक्तग्रहणं सम्बुद्धिलोपेऽनुवर्त्तते तदामो दोषः—हे कुण्डेत्यत्र । निवृत्तेऽपृक्ताधिकारे डतरादिषु दोषः—हे कतरदिति । तस्माड् डित्करणादेवाकारलोपे कृते ह्रस्वाभावान्न लोपः, न च दीर्घतेति ॥

नेतराच्छन्दसि ॥ पूर्वेणाद्डादेशस्य प्रसक्तस्यायं प्रतिषेधः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



'अतोऽम्'—इत्यस्मादनन्तरमितराच्छन्दसीति वक्तव्यम् ? 'नेतराच्छन्दसि' इति वचनं योगविभागार्थम् ।

❀ एकतराद्धि सर्वत्र छन्दसि भाषायां प्रतिषेध इष्यते ❀ । एकतरं तिष्ठति । एकतरं पश्येति ॥

## युष्मदस्मद्भ्यां ङसोऽश् ॥ २७ ॥

युष्मदस्मद्—इत्येताभ्यामुत्तरस्य ङसः 'अश्'—इत्ययमादेशो भवति । तव स्वम् । मम स्वम् ।

शित्करणं सर्वादेशार्थम्; अन्यथा ह्यादेशव्यपदेशप्रक्लृप्त्यर्थमादेरेव स्यात्, ततश्च 'योऽचि' इत्येतन्न स्यात् ॥

### पदमञ्जरी

*युष्मदस्मद्भ्यां ङसोऽश्* ॥ *शित्करणं सर्वादेशार्थमिति* । अन्यथा 'आदेः परस्य' इत्यादेः स्यात् । ननु चाकारस्याकारवचने प्रयोजनाभावादाद्यनुसंहारे बाधिते 'अलोन्त्यस्य' इति मकारस्याकारे सति 'अतो गुणे' इति पररूपेणैव सिद्धम् ? अत आह–*अन्यथा हीति* । आदेश इति व्यपदेश आदेशव्यपदेशः, यस्यादेशस्य प्रयोजनं नास्तीति मन्यसे तस्यैव स्यादित्येवशब्दार्थः । किं पुनरादेशव्यपदेशेन

### न्यासः

अथ 'अतोऽम्' इत्यस्यानन्तरम् 'इतराच्छन्दसि' इति कस्मान्नोक्तम्, एवं हि नेति प्रतिषेधः कर्त्तव्यो न भवति, अमादेशोऽद्डादेशस्यापवादो भविष्यति ? इत्याह—अतोऽमित्यस्मादनन्तरमित्यादि । योगविभागार्थमिति । नेत्येकयोगविभागो यथा स्यादिति । किमर्थं पुनर्योगविभाग इष्यते ? इत्याह–एकतराद्धीत्यादि । एकशब्दाद्धि सर्वत्र प्रतिषेध इष्यते, स च नेति योगविभागाल्लभ्यते । तस्माद् योगविभाग इष्यते । स च यथान्यासे सिध्यति, नान्यथेति 'नेतराच्छन्दसि' इत्युच्यते ॥

युष्मदस्मद्भ्यां ङसोऽश् ॥ यदि 'शेषे लोपः' इत्यन्तलोपः, तदास्य भावे प्राप्त इदं वचनम् । अथ टिलोपः, तदा विभक्तेः श्रवणप्राप्त आदेशार्थं वचनम् । तव स्वम्, मम स्वमिति । 'तवममौ ङसि' इति मपर्यन्तयोर्युष्मदस्मदोस्तव-ममादेशौ भवतः । 'शेषे लोपः' इति दकारलोपे कृते 'अतो गुणे' पररूपत्वम् । शित्करणं सर्वादेशार्थमिति । असति शित्करणे 'आदेः परस्य' इत्याकारस्यादेशोऽकारः स्यात् । ननु चाकारस्याकारवचने प्रयोजनं नास्तीत्यन्तरेणापि शित्करणं सर्वादेशो भविष्यति, अन्तस्य वा । तत्र द्वयोरकारयोरतो गुणे पररूपत्वेनेष्टं सिध्यति ? अत आह—अन्यथा हीत्यादि । अन्यथा यदि शित्करणं न स्यात् तदाऽऽदेश इति योऽयं व्यपदेशस्तस्य या प्रक्लृप्तिः—

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


## ङे प्रथमयोरम् ॥ २८ ॥

'ङे' इत्यविभक्तिको निर्देशः। 'ङे' इत्येतस्य प्रथमयोश्च विभक्त्योः

**पदमञ्जरी**

प्रयोजनं यत आदेरेव स्यात् ? तत्राह–*ततश्चेति* । ह्यर्थे चः पठितः । ततो ह्यादेश-व्यपदेशाद् 'योऽचि' इति यत्वं न स्यात्, यत्वाभावः प्रयोजनमादेशव्यपदेशस्य स्यादित्यर्थः । 'योऽचि' इत्यत्र 'युष्मदस्मदोरनादेशे' इति वर्त्तते । ननु चानादेशो या विभक्तिरित्येवं तत्र विज्ञास्यते, न हि तदादिविधिरस्ति यत अनादेशादाविति विज्ञायेत, ततश्च सत्यप्यादेशादित्वे विभक्तेरनादेशत्वात्स्यादेव यत्वमिति व्यर्थ-मेवाकारस्याकारविधानम् ? एवं मन्यते–'सर्वे सर्वपदादेशाः' इति न्यायेनादि-विकारद्वारेण विभक्तेरेवादेशो विधीयत इति विभक्तिरेवादेश इति । 'सर्वे सर्व-पदादेशाः' इत्यत्र न पदशब्देन सुप्तिङन्तमुच्यते, किं तर्हि ? पद्यते गम्यतेऽनेनार्थ इति पदम्; ततश्च पचत्वित्यत्र यथा तिशब्दस्य तुशब्दो भवति, तद्वदत्रापि ङसोऽशेव विधीयत इति भवत्येवादेशत्वं विभक्तेः ॥

*ङे प्रथमयोरम्* ॥ *ङे इत्यविभक्तिकोऽयं निर्देश इति* । 'प्रथमयोरिति प्रथमा-द्वितीययोर्ग्रहणम्' इति वक्ष्यति, तदत्र समासे सति बहुवचनप्रसङ्ग इति भावः । प्राधान्यलक्षणस्य प्रथमार्थस्येहासम्भवात्सन्निवेशविशेषापेक्षया प्रथमस्य ग्रहणमिति तावन्निश्चितम् । तिङ्प्रथमयोस्तु युस्मदस्मद्भ्यामसम्भव एव, तत्र प्रत्यययोर्ग्रहणम्, विभक्त्योर्वेति संशयः । यदि स्त्रीलिङ्गनिर्देशस्ततो विभक्त्यो-र्ग्रहणम्, पुंल्लिङ्गनिर्देशे तु प्रत्यययोः । तत्र निर्णयमाह—*प्रथमयोश्च विभक्त्यो-*

**न्यासः**

निष्पत्तिस्तदर्थमादेरेव स्यात्; 'आदेः परस्य' इति वचनात् । स्यादेतत्—यद्यादेशव्यप-देशप्रक्लृप्तितः कश्चिदर्थः सम्पद्यते तदा स्यात् तदर्थमादेरेव वचनम्, न च ततः कश्चि-दर्थः सम्पद्यते तस्मादयुक्तमेवेति ? इत्यत आह—ततश्चेत्यादि । चशब्दो हेतौ । लिङ् सम्भावनायाम् । तत आदेशव्यपदेशप्रक्लृप्तेः 'योऽचि' इति कार्यं न स्यात् । एतद्धि यत्र विभक्तावादेशो नास्ति तत्र विधीयते; 'अनादेशे' इत्यधिकारात् । तस्मात् प्रयोजनवत्यादेशव्यपदेशप्रक्लृप्तिरिति तदर्थमादेरेव स्यात्, ततश्चेष्टं रूपं न सिध्येत् । तस्मात् सर्वादेशार्थः शकारः कर्त्तव्यः ॥

**ङे प्रथमयोरम्** ॥ ङे इत्यविभक्तिकोऽयं निर्देशः । 'सुपां सुलुक्' इति षष्ठ्या लुप्तत्वात् । प्रथमयोरिति षष्ठीद्विवचनान्तम्—प्रथमा च प्रथमा च ते प्रथमे, तयोः प्रथमयोः । षष्ठीनिर्देशस्योभयत्र तुल्यत्वात् प्रथमयोः प्रत्यययोः स्वौकारयोर्ग्रहणमिति कस्यचिद् भ्रान्तिः स्यात्, अतस्तां निराकर्तुमाह—विभक्त्योरिति । एतदेव स्पष्टी-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रथमाद्वितीययोर्युष्मदस्मद्भ्यामुत्तरयोः 'अम्' इत्ययमादेशो भवति। तुभ्यं दीयते। मह्यं दीयते।

प्रथमयोः—त्वम्, अहम्। युवाम्, आवाम्। यूयम्, वयम्। त्वाम्, माम्। युवाम्, आवाम्॥

पदमञ्जरी

*रिति*। एतदेव स्पष्टयति—*प्रथमाद्वितीययोरिति*। कथं पुनः प्रथमाशब्देन द्वितीयोच्यते, साहचर्यात्। ननु सकृत्प्रयुक्तः शब्दो मुख्यवृत्तिर्वा भवतु, जघन्यवृत्तिर्वा; न पुनरुभयवृत्तिः? सत्यम्; प्रथमाद्वितीयासमुदाये जघन्यवृत्तिरेवायमुद्भूतावयवभेदश्च समुदाय इति द्विवचनम्। कथं पुनर्ज्ञायते—विभक्त्योर्ग्रहणमिति? 'द्वितीयायां च' इत्यात्वविधानात्। तद्ध्यादेशार्थमुच्यते, अनादेशे 'युष्मदस्मदोरनादेशे' इत्येव सिद्धत्वात्। यदि चात्र विभक्त्योर्ग्रहणं स्यात्, एवमस्यादेशार्थतोपपद्यते। ननु च 'योऽचि' इति यत्वबाधनार्थं तत्स्यात्, यद्येतावत्प्रयोजनं स्यात्, यत्वमेवायं विशिष्य ब्रूयात्—योऽच्यापीति। आबिति प्रत्याहारः 'अनाप्यकः' इतिवत्। यतस्तु द्वितीयायामात्वं शास्ति, ततो ज्ञायते—विभक्त्योरिह ग्रहणमिति॥

न्यासः

कर्तुमाह—प्रथमाद्वितीययोरिति। कथं पुनर्द्वितीया प्रथमाशब्देनोच्यते? उपदेशे प्रथमासामीप्यात्। भवति हि सामीप्यात् ताच्छब्द्यम्, यथा—गङ्गायां घोष इति। अथ विभक्त्योरिदं ग्रहणं न प्रत्यययोः—इति कुतोऽयं निश्चयः? लिङ्गात्। तत् पुनर्लिङ्गम्—'द्वितीयायाञ्च' इत्यत्त्वविधानम्। तद्ध्यादेशार्थमुच्यते; अनादेशे हि 'युष्मदस्मदोरनादेशे' इत्यनेनैव सिद्धत्वात्। यदि च विभक्त्योरिदं ग्रहणम्, न च प्रत्यययोः, एवमस्यादेशार्थतोपपद्यते, नान्यथा। ननु च 'योऽचि' इति यत्वबाधनार्थम् 'द्वितीयायाञ्च' इत्याद्वचनं स्यात्? नैतदस्ति; तदर्थे द्विवचने यकारमेव विशेषणं विदध्याद्—'योऽच्यद्वितीयाम्' इति, 'योऽच्यनचि' इति वा ब्रूयात्। अतो द्वितीयायामात्त्वविधानं ज्ञापकमेवैतद् विभक्तिग्रहणस्य। तुभ्यम्, मह्यमिति। मपर्यन्तयोर्युष्मदस्मदोस्तुभ्यमह्यावादेशौ। 'शेषे लोपः', 'अमि पूर्वः'।

त्वम्, अहमिति। 'त्वाहौ सौ'। युवाम्, आवामिति। 'युवावौ द्विवचने' इति युवावौ, 'प्रथमायाश्च' इत्यादिनाऽऽत्त्वम्। यूयम्, वयमिति। 'यूयवयौ जसि'। त्वाम्, मामिति। 'त्वमावेकवचने', 'द्वितीयायाञ्च' इत्यात्त्वम्। अथ किमर्थममादेश उच्यते, न मकार एवोच्येत? स चैकाल्त्वादादेर्भविष्यति, तत्र परस्य संयोगान्तलोपेन सिद्धम्, 'शेषे लोपः' इति टिलोपान्न सिध्यतीति चेत्? नैष दोषः; शेषेलोपो यद्यपि टिलोपः



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## शसो न ॥ २९ ॥

युष्मदस्मद्भ्यामुत्तरस्य शसो नकारादेशो भवति । युष्मान् ब्राह्मणान् । अस्मान् ब्राह्मणान् । युष्मान् ब्राह्मणीः । अस्मान् ब्राह्मणीः । युष्मान् कुलानि । अस्मान्कुलानि ।

'तस्माच्छसो नः पुंसि' इति सिद्धे स्त्रीनपुंसकार्थं वचनम् । अलिङ्गे वा युष्मदस्मदी[1] ॥

## भ्यसो भ्यम् ॥ ३० ॥

युष्मदस्मद्भ्यामुत्तरस्य भ्यसः 'भ्यम्' इत्ययमादेशो भवति । युष्मभ्यं दीयते । अस्मभ्यं दीयते ।

### पदमञ्जरी

**शसो न ॥** नेत्यविभक्तिको निर्देशः, तथा च पूर्वसूत्रेण प्राप्तस्यायममः प्रतिषेध इति *भाष्ये* शङ्कितम्—कः पुनः प्रतिषेधे सति दोषः, यावताऽमि प्रतिषिद्धे 'योऽचि' इति यत्वे प्राप्ते 'च' द्वितीयायां इत्यात्वे कृते प्रथमयोः पूर्वसवर्णदीर्घत्वे कृते 'तस्माच्छसो नः पुंसि' इति नत्वे च युष्मानिति सिद्ध्यत्येव ? सत्यं पुंसि सिद्ध्यति; स्त्रीनपुंसकयोस्तु न सिद्ध्यति, तदिदं दर्शितम्—*युष्मान् अस्मान् ब्राह्मणीरित्यादि* ।

*अलिङ्गे वा युष्मदस्मदी इति* । लिङ्गानुशासने तथा पाठात् । उदाहरणे तु 'आदेः परस्य' इत्यकारस्य नकारे सकारस्य संयोगान्तलोपः ॥

### न्यासः

स्यात्, तथापि 'त्वाहौ सौ' इत्येवमादीनामकारान्तत्वात् सिद्ध्यत्येव; ते चावश्यकमकारान्ता विधेयाः, अन्तोदात्तत्वं यथा स्यात् । न च मकारादेशे 'सुपि च' इति दीर्घत्वं प्राप्नोति; 'अङ्गवृत्ते पुनरङ्गवृत्तावविधिर्निष्ठितस्य' इति वचनात् । एवं तर्हि वैचित्र्यार्थममादेशविधानम् । अथ वा—मकार एवादेशः, अकारस्तूच्चारणार्थः; न ह्यन्यथास्मिन्निर्देश आदावन्ते वाऽकारमकृत्वा मकार उच्चारयितुं शक्यते । 'ङेसुटोः' इति वक्तव्ये 'ङेप्रथमयोः' इति वचनं वैचित्र्यार्थम् ॥

**शसो न ॥** पूर्वेणामादेशे प्राप्ते शसो नो विधीयते । युष्मान् ब्राह्मणान् । अस्मान् ब्राह्मणानिति । 'आदेः परस्य' इत्यकारस्य नकारः, संयोगान्तलोपः, पूर्ववदात्वम् । ननु चैतदुदाहरणद्वयममादेशे कृत आत्वे च 'प्रथमयोः पूर्वसवर्णः' इति दीर्घत्वे च 'तस्माच्छसो नः पुंसि' इति नत्वेनैव सिध्यति ? नैतदस्ति; न ह्यत्र पूर्वसवर्णदीर्घत्वं प्राप्नोति, अमि पूर्वत्वेन बाधितत्वात् ॥

---

१. अयमंशो न सर्वत्रोपलभ्यते ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



भ्यमादेशे कृते शेषेलोपे च 'बहुवचने झल्येत्' इत्येत्वं प्राप्नोति, तद् 'अङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्य' इति न भवति।

केचित् पुनरभ्यमादेशमेत्वनिवृत्त्यर्थं कुर्वन्ति। येषां तु शेषेलोपष्टिलोपः, तेषामभ्यमादेश एव। उदात्तनिवृत्तिस्वरश्चादेरेव भवति॥

**पदमञ्जरी**

भ्यसो भ्यम्॥ एत्वं प्राप्नोतीति। 'सुपि च' इति दीर्घस्याप्युपलक्षणमेतत्। *अङ्गवृत्त इत्यादि*। अस्यार्थः पूर्वमेव व्याख्यातः।

*केचित्पुनरित्यादि*। येषां शेषेलोपोऽन्त्यस्य लोपः, तेषाम् 'अतो गुणे' पररूपत्वमेकादेशः, स्वरश्च। *एत्वनिवृत्त्यर्थमिति*। अत्रापि दीर्घस्याप्युपलक्षणम्, एत्वनिवृत्त्या चाकारोच्चारणस्यार्थवत्त्वात्सवर्णदीर्घत्वं तेषां न भवति। *येषां त्विति*। अन्त्यलोपपक्षे मतभेदः—भ्यमादेशः, अभ्यमादेश इति। टिलोपपक्षे त्ववश्यमभ्यमादेशः, अन्यथा रूपासिद्धेः। नन्वेवं स्वरे दोषः, कथम्? 'अनुदात्तस्य च यत्रोदात्तलोपः' इत्यत्र 'कर्षात्वतो घञोन्त उदात्तः' इत्यन्तोदात्तग्रहणमनुवर्त्तते, ततश्च भ्यमोऽन्तोदात्तत्वं प्राप्नोति? अत्यत आह—*उदात्तनिवृत्तिस्वरश्चेति*। न तत्रान्तग्रहणमनुवर्त्तते, उच्चारणक्रमे प्रत्यासत्त्या चादेरेवोदात्तत्वं भवतीत्यर्थः॥

**न्यासः**

भ्यसो भ्यम्॥ युष्मभ्यम्, अस्मभ्यमिति। 'शेषे लोपः' इत्यन्तलोपः।

यदि भ्यमादेशोऽयम्, एवं सति तत्र विहिते शेषेलोपे च 'बहुवचने झल्येत्' इत्येत्वं प्राप्नोति, ततश्चानिष्टरूपमापद्येत? इत्यत आह—भ्यमादेशे कृत इत्यादि। वर्त्तनं वृत्तम्, अङ्गे वृत्तं यस्य तदङ्गवृत्तं कार्यम्, तस्मिन्नङ्गवृत्ते कार्ये पुनरुत्तरकालमङ्गवृत्तावपरस्य कार्यस्य प्राप्तौ तस्य कार्यस्याविधिः=अविधानम्। निष्ठितस्येत्येनेन यत्सम्बन्धिनः कार्यस्याविधिर्भवति तदङ्गं विशिष्यते। निष्ठितम् = परिसमाप्तम्, प्रयोगार्हमङ्गम्। तत्सम्बन्धिनः कार्यस्याविधिर्भवति, नान्यसम्बन्धिन इत्यर्थः।

केचित्यादिस्यादि। तेषामन्त्यलोपे कृते 'अतो गुणे' पररूपत्वं भवति। येषां त्वित्यादि। यैः 'शेषे लोपः' इत्यन्तलोपः क्रियते, तेषां मतभेदः—ते हि केचिद् भ्यमादेशमिच्छन्ति, केचिदभ्यमादेशम्। येषां तु शेषेलोपष्टिलोपः, तेषां मतेनायमभ्यमादेश एव, न भ्यमादेशः; अन्यथा युष्मभ्यमिति न सिध्येदित्यभिप्रायः। यदि तर्हि शेषेलोपष्टिलोपः, एवं सति 'अनुदात्तस्य यत्रोदात्तलोपः' इत्यननाभ्यम् शब्दस्यान्तोदात्तत्वं स्यात्? इत्यत आह—उदात्तनिवृत्तिस्वरश्चेत्यादि। पूर्वपक्षवादिनोदात्तनिवृत्तिस्वरविधौ 'कर्षात्वतो घञोऽन्त उदात्तः' इत्यतोऽन्तग्रहणमनुवर्त्तत इति मन्यमानेन चोदितम्। उत्तरपक्षवादिना तु 'अन्तग्रहणं तत्र निवृत्तमुच्चारणक्रमप्रत्यासत्त्या चादेरेवोदात्तत्वेन भवितुं युक्तम्'—इति मन्यमानेन परिहृतम्॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## पञ्चम्या अत् ॥ ३१ ॥

पञ्चम्या भ्यसो युष्मदस्मद्भ्यामुत्तरस्य 'अत्' इत्ययमादेशो भवति । युष्मद् गच्छन्ति । अस्मद् गच्छन्ति ॥

## एकवचनस्य च ॥ ३२ ॥

पञ्चम्या एकवचनस्य युष्मदस्मद्भ्यामुत्तरस्य 'अत्' इत्ययमादेशो भवति । त्वद् गच्छन्ति । मद् गच्छन्ति ॥

## साम आकम् ॥ ३३ ॥

'साम' इति षष्ठीबहुवचनमागतसुट्कं गृह्यते । तस्य युष्मदस्मद्भ्यामुत्तरस्य 'आकम्' इत्ययमादेशो भवति । युष्माकम् । अस्माकम् ।

अथ किमर्थमागतसुट्को गृह्यते, न ह्यादेशविधानकाले सुड्

### पदमञ्जरी

*साम आकम् ॥ सामिति षष्ठीबहुवचनमागतसुट्कं गृह्यत इति ।* अङ्गसंज्ञानिमित्तस्यान्यस्यासम्भवात् ।

*अथ किमर्थमागतसुट्को गृह्यत इति ।* यद्यपि षष्ठीबहुवचनमागतसुट्कं गृह्यत इति प्रकृतम्, इह तु प्रत्ययापेक्षया पुंल्लिङ्गनिर्देशः । नपुंसकलिङ्गमेव वा पठितव्यम् । अथेति न प्रयोजनप्रधानः प्रश्नः, किं तर्हि ? युष्मदस्मद्भ्यां परस्यैवंविधस्यासम्भवप्रधानः । अत एवाह–*न ह्यादेशविधानकाले सुड् विद्यत इति ।* सुड्विधौ 'आज्जसेरसुक्' इत्यत आदित्यनुवर्त्तते, अकारान्तत्वं च युष्मदस्मदोः 'शेषे लोपः' इत्यन्त्यस्य लोपे भवति, कश्च शेषः ? आदेशः । अनादेशे यत्वात्व-

### न्यासः

पञ्चम्या अत् ॥ पूर्वेण प्राप्तस्य भ्यमोऽयमपवादः ॥

एकवचनस्य च ॥ चकारोऽदादेशानुकर्षणार्थः, भ्यसपेक्षया समुच्चयार्थो वा । 'ङसेश्च' इति वक्तव्ये, एकवचनस्येति वचनं वैचित्र्यार्थम् ॥

साम आकम् ॥ साम इति षष्ठीबहुवचनमागतसुट्कं परिगृह्यत इति । युष्मदस्मद्भ्यामुत्तरस्यान्यस्य सामशब्दस्यासम्भवात् । आगतः सम्प्राप्तः सुट् यत्र येन वा तत् तथोक्तम् ।

अथेत्यादौ वाक्य आगतसुट्क इत्याम्प्रत्ययापेक्षया पुंल्लिङ्गत्वं वेदितव्यम् । 'अथ किमर्थमागतसुट्कः परिगृह्यते' इति पृष्टस्य ससुट्कस्यादेशो यथा स्यादिति प्रतिवचनमाशङ्क्याह–न हीत्यादि । 'आमि सर्वनाम्नः सुट्' इत्यत्र 'आज्जसेरसुक्' इत्यत आदिति वर्त्तते, तेनाकारान्तात् सर्वनाम्नः सुड् विधीयते । अकारान्तता च

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



विद्यते ? तस्यैव तु भाविनः सुटो निवृत्त्यर्थम् । आदेशे कृते हि शेषे-लोपे युष्मदस्मदोरकारान्तत्वात्सुट् प्राप्नोति, स स्थान्यन्तर्भूतत्वा-न्निवर्तते ।

पदमञ्जरी

योर्विधानात् । आदेशत्वं चाक्रमादेशे सति । न च त्यदाद्यत्वेनाकारान्तत्वम्; 'त्य-दाद्यत्वं प्रति द्विपर्यन्तास्त्यदादयः' इति स्मरणात् । तस्मादादेशविधानकाले सुण्न विद्यते । उत्तरवादी तु—आदेशविधानकालेऽसत एव सुट उपादानम्, अथापि तस्योपादाने प्रयोजनमस्तीत्याह—*तस्यैव त्विति* । यद्यसुट्को गृह्यते, ततः पूर्वो-क्तेन न्यायेन पश्चाद्भवतः सुटः केन निवृत्तिः स्यात्! *स्थानिन्यन्तर्भूतत्वादिति* । तेन सहस्थानित्वेनोपादानसामर्थ्यादिति भावः । एतच्च पाक्षिकं प्रयोजनम् । कतरस्मिन्पक्षे ? यदा शेषेलोपोऽन्त्यलोपस्तदा, यदा तु टिलोपस्तदा पश्चादपि सुटः प्रसङ्गाभावान्नैतत्प्रयोजनम् ।

न्यासः

युष्मदस्मदोः 'शेषे लोपः' इत्यन्तलोपे सति भवति । शेषेलोपेनाप्याक्रमादेशे कृते भवि-तव्यम् । तस्मादादेशविधानकाले सुण्न विद्यते, ततश्च ससुट्कस्यादेशो यथा स्यादि-त्येतत्प्रयोजनं नोपपद्यत इत्यन्यद्वक्तव्यमित्यभिप्रायेणाह—तस्यैवेत्यादि । यद्यसुट्को गृह्यते 'निर्दिश्यमानस्यादेशा भवन्ति' इत्यसुट्कस्यैवादेशः स्यात् । एवञ्चाभिनिवृत्ते स्थान्यादेशभावे पश्चाद्भवतः सुटः केन निवृत्तिः स्यात्? इष्यते च तस्यापि निवृत्तिः । अतस्तस्य भाविनोऽपि निवृत्तिर्यथा स्यादित्येवमर्थं ससुट्को गृह्यते । ननु च युष्मदस्म-द्भ्यामुत्तरस्यामः सुडेव न प्राप्नोति, अकाराद्धि सर्वनाम्नः सुड् विधीयते, युष्मद-स्मदोश्च त्यदाद्यत्वं नास्ति, 'द्विपर्यन्तास्त्यदादयः' इति त्यदाद्यत्वस्याभावाच्छेषेलोपस्य च टिलोपादकारान्तता न सम्भवति; अतो भाविनोऽपि सुटो निवृत्तिर्नैव प्रयोजनमुप-पद्यते ?—एतच्चोद्यमपाकर्तुम् "'शेषे लोपः' इत्यन्तलोपः" इति हृदि कृत्वाऽऽह—कृते हीत्यादि । अथ क्रियमाणे ससुट्कस्य ग्रहणे कथमसौ निवर्त्तते, शास्त्रान्तराद्धि प्रस-क्तस्य शास्त्रेण निवृत्तिः क्रियते, न चादेशविधानकाले सुट्प्रसङ्गोऽस्ति ? इत्याह—स च स्थान्यन्तर्भूतत्वादित्यादि । यद्यादेशविधानकाले सुटः प्रसङ्गः सम्भवेत्, ततो भावी न निवर्त्तते, न चासावादेशकाले सम्भवति । तस्माद् भाविनः सुटः ससुट्क-ग्रहणेन स्थान्यन्तर्भूतत्वाद् यस्यामवस्थायां तस्य प्राप्तिस्तस्यां प्रसक्तः स निवर्तते; अन्यथा हि तस्य स्थान्यन्तर्भावोऽनर्थकः स्याद् । स्यादेतत्—यदि 'शेषे लोपः' इत्यन्तलोपस्ततः ससुट्कस्योपादानमर्थवद्भवति, यदा तु शेषेलोपष्टिलोपस्तदा नार्थः ससुट्ग्रहणेन; टिलोपे हि कृतेऽकारान्तत्वाभावात् सुटः प्रसङ्ग एव नास्तीति ? एवं तर्हि टिलोप एव कस्मान्नाश्रीयते, तस्यानुपपत्तेः । अनुपपत्तिस्तु लक्षणाभावात् । अन्त्यलोपस्यास्त्येतदेवास्ति लक्षणमिति स एवाश्रितः । यद्येवम्, युष्मद् ब्राह्मणीभ्यो

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



दीर्घोच्चारणं सवर्णदीर्घार्थम् । अकमि तु सति ह्रस्वकरणे तद्विधानसामर्थ्यादेव सवर्णदीर्घत्वं न प्राप्नोति । तत्सामर्थ्यमेत्वं प्रति भविष्यतीति अकारकरणमेत्वनिवृत्त्यर्थमिति 'अतो गुणे' पररूपत्वं स्यात् ॥

**आत औ णलः ॥ ३४ ॥**

आकारान्तादङ्गादुत्तरस्य णल औकारादेशो भवति । पपौ । तस्थौ । जग्लौ । मम्लौ ।

अत्रौत्वमेकादेशः, स्थानिवद्भावः, द्विर्वचनम्—इत्यनेन क्रमेण

**पदमञ्जरी**

*दीर्घोच्चारणमित्यादि* । अन्यथातो गुणे पररूपत्वं स्यात् । नन्वकारोच्चारणसामर्थ्यान्न भविष्यति, अन्यथाऽकमेव विदध्यात् ? अत आह—*अकमि त्विति* ।

*आत औ णलः* ॥ पपावित्यादौ पा + अ इति स्थिते युगपत् त्रीणि कार्याणि प्राप्नुवन्ति द्विर्वचनम्, सवर्णदीर्घत्वमेकादेशः, औत्वमिति; तत्र येन क्रमेणैतानि कर्तव्यानि, तद्दर्शयति—*अत्रेति* । लित्स्वरं तु नोपन्यस्यति, सर्वथान्तोदात्त-

**न्यासः**

गच्छतीत्यन्तलोपे सति 'अजाद्यतष्टाप्' इति टाप्प्रसज्येत ? 'अलिङ्गे युष्मदस्मदी' इति नैषोऽस्ति प्रसङ्गः ।

**दीर्घोच्चारणमित्यादि** । ननु चाकम्यपि अकः सवर्णदीर्घत्वे न सिध्यत्येव ? न; सिध्यति । 'अतो गुणे' इति पररूपत्वमपवादः प्राप्नोतीति चेत् ? न; अकारोच्चारणसामर्थ्यात् । यदि 'अतो गुणे' पररूपत्वं स्यात् तदाकारोच्चारणमनर्थकं स्यात्, कमित्येव ब्रूयादित्यत आह—**अकमि त्वित्यादि** । तुशब्दो दीर्घोच्चारणापेक्षया समुच्चयार्थः । इतिकरणो हेतौ ।

यदि ह्यकारोच्चारणस्य प्रयोजनं न स्यात्, शक्यते वक्तुम्—अकारोच्चारणसामर्थ्यान्न भविष्यतीति; अस्ति च तस्य प्रयोजनम्, किं तत् ? 'बहुवचने झल्येत्' इत्येत्त्वं मा भूत् । तस्मात् सत्यप्यकारोच्चारण एत्त्वनिवृत्त्यर्थे 'अतो गुणे' पररूपत्वं स्यात्, न सवर्णदीर्घत्वम् । अतस्तदर्थं दीर्घोच्चारणं क्रियते ॥

**आत औ णलः** ॥ **तस्थाविति** । 'शर्पूर्वाः खयः' इति खयः शेषः । **जग्लाविति** । 'कुहोश्चुः' इति चुत्वम् ।

इह 'पा' इत्यादिभ्यो णलि परत्रावस्थिते युगपत् त्रीणि कार्याणि प्राप्नुवन्ति—द्विवचनम्, एकादेशः, औत्वञ्च । तेषाञ्च तथा प्राप्तानां युगपत्प्रवृत्तिः सम्भवतीति सामर्थ्यात् प्राप्तः क्रम आश्रीयते । तत्र येन क्रमेण तानि कर्त्तव्यानि, तं दर्शयितुमाह—

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



कार्याणि क्रियन्ते । एकादेशादनवकाशत्वादौत्वं द्विर्वचनादपि परत्वा-देकादेश इति ।

पदमञ्जरी

त्वसिद्धेः । उक्तक्रमे हेतुमाह-*एकादेशादिति* । यदि पूर्वमेकादेशः स्याद्व्यपवर्गाभावादौत्वं न स्यादित्यनवकाशं तत् । *परत्वादेकादेश इति* । अत्र वृद्धिरेकादेशः, तस्य स्थानिवद्भावाद् द्विर्वचनम्, स्थानिवद्भावस्तु 'द्विर्वचनेऽचि' इति । तत्र ह्यचीति न स्थानिवद्भावस्य निमित्तनिर्देशः, किं तर्हि ? अजादेशस्य-द्विर्वचननिमित्तेऽचि योऽजादेश इति । तेन सम्प्रत्यच्परत्वाभावेऽपि स्थानिवद्भावो भवत्येव । ओकारौकारयोर्लाघवे विशेषाभावात्प्रयोगसमवाय्यौकार एव विहितः । अपर आह-आङ्प्रश्लिष्टाकार ओकारः, तस्योच्चारणे प्रयत्नलाघवं भवति; विश्लिष्टाकार औकारस्तस्योच्चारणे प्रयत्नगौरवं भवति, तद्विधानं दरिद्रात्यर्थम्-ददरिद्रौ,अत्र 'दरिद्रातेरार्द्धधातुके लोपो वक्तव्यः' इत्याकारलोपेऽप्यौकारस्य श्रवणम् भवति । यद्यपि 'सिद्धश्च प्रत्ययविधौ' इति वचनाल्लिटि विवक्षित एवाकार लोपे सत्यौत्वस्याप्रसङ्गः, यद्यपि च 'कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थम्' इत्यामि सति णल एवासम्भवः; तथाप्यौत्वविधानसामर्थ्याद् द्वयमप्येतन्न भवति ॥

न्यासः

अत्रेत्यादि । अत्रेत्यनेन पपावित्यादीन्युदाहरणानि प्रत्यवमृश्यन्ते । यदि द्विर्वचनादेकादेशः पूर्वं क्रियते तदा 'वृद्धिरेचि' इति वृद्धावेकादेशे कृते निमित्तिनिमित्तिनोर्विशेषाभावाल्लिटि परतः पूर्वस्योच्यमानं द्विवचनं न प्राप्नोतीति तस्य निरासायेदमुक्तम्—स्थानिवद्भावो द्विर्वचनमिति । केन पुनरत्र स्थानिवद्भावः ? 'द्विर्वचनेऽचि' इत्यनेन ? नैवम्; द्विर्वचननिमित्तेऽचि परतः पूर्वस्य स्थानिवद्भाव उच्यते, न चात्र द्विर्वचन निमित्तं परमचं पश्यामः ।

अत्र केचिदाहुः-अचीत्युपलक्षणम्, अचि य आदेशो दृष्टः स द्विर्वचने कर्त्तव्ये स्थानिवद् भवतीतीमं सूत्रार्थमाश्रित्यैतदुक्तम् । इह सम्प्रत्यनच्परत्वेऽप्येकादेशकरणकालेऽचः परस्य निमित्तभावेनाश्रयणादच्ययमादेशः कृतः । तस्माद् भवितव्यं स्थानिवद्भावेन ।

अन्ये त्वाहुः—'एकादेशः पूर्वविधौ स्थानिवद्भवतीति वक्तव्यम्' इत्यनयेष्टथा स्थानिवद्भावः ।

'द्विर्वचनेऽचि' इति योगविभागाद्वा स्थानिवद्भावः-इत्यपरे ।

कथं पुनरयमेषां कार्याणां क्रम उपलभ्यते ? इत्यत आह—एकादेशादित्यादि । पा + अ इति स्थितेऽकः सवर्णे दीर्घत्वं प्राप्नोति, औत्वञ्च । तत्रैकादेशः—दण्डाग्रमित्यादौ सावकाशः, औत्वं तु न क्वचित् सावकाशम्; अतस्तावदनवकाशत्वात् प्रागौत्वं क्रियते, तत्र कृते वृद्धिः प्राप्नोति, द्विवचनञ्च, तत्र परत्वाद् वृद्धिर्भवति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## तुह्योस्तातङाशिष्यन्यतरस्याम् ॥ ३५ ॥

तु, हि—इत्येतयोराशिषि विषये तातङादेशो भवत्यन्यतरस्याम् । जीवताद्भवान् । जीवतात्त्वम् । जीवतु भवान् । जीव त्वम् ।

ङित्करणं गुणवृद्धिप्रतिषेधार्थमिति सर्वादेशस्तातङ् भवति ।

पदमञ्जरी

*तुह्योस्तातङाशिष्यन्यतरस्याम्* ॥ *जीवतात्त्वमिति* । अत्र स्थानिवद्भावेन तातङो हिग्रहणेन ग्रहणाद् 'अतो हेः' इति लुक् प्राप्नोति ? नैष दोषः; 'हुझल्भ्यो हेर्धिः' इत्यनुवर्त्तमाने पुनः 'अतो हेः' इति हिग्रहणम्—हिरेव यो हिस्तस्य यथा स्यात्, स्थानिवद्भावेन यो हिस्तस्य माभूदित्येवमर्थम् ।

*ङित्करणमित्यादि* । यद्यपि सर्वादेशतायाः प्राग्गुणवृद्धिप्रतिषेधार्थत्वमनिश्चितम्, तथापि सर्वादेशत्वेऽपि ङित्त्वस्य प्रयोजनं तातङि सम्भवति, अनङादिषु तु नैव सर्वादेशत्वे प्रयोजनं सम्भवतीति तेष्वनन्यार्थङित्त्वेषु 'ङिच्च' इत्येतत् सहसा प्रवर्त्तते, तातङि तु प्रयोजनान्तरसम्भावनया कियानपि विलम्बो भवति । तेनास्मिन्विषये उत्सर्गापवादयोस्तुल्यकाला प्रवृत्तिरित्यपवादमपि 'ङिच्च'

न्यासः

द्विर्वचनं हि—पपाचेत्यादौ सावकाशम्, वृद्धेस्त्वकाशः—खट्वैडकेत्यादौ । अतो वृद्धौ कृतायां पश्चाद् भवति द्विर्वचनं स्थानिवद्भावेन !

णल इति णकारोच्चारणं प्रत्ययग्रहणं यथा स्यात् । णलो णकारोच्चारणे हि खल्प्रत्ययोऽस्तीति तस्य ग्रहणं भवति । तस्मिश्चासत्यल इत्युच्यमाने सत्यल्प्रत्ययस्याभावात् प्रत्याहारग्रहणं विज्ञायेत ।

लकारोच्चारणम् 'श्याद्व्यध' इत्यादिना विहितस्य णप्रत्ययस्य ग्रहणं मा भूदित्येवमर्थम् । अथ 'एकवचनस्य' इत्यनुवर्त्तते ? तथा सति मुखसुखार्थम् ॥

तुह्योस्तातङाशिष्यन्यतरस्याम् ॥ जीवताद् भवानिति । 'आशिषि लिङ्लोटौ' इति लोट्, तिप्, शप्, 'एरुः' इत्युत्वम्, तस्य तुशब्दस्य तातङ् । जीवतात्त्वमिति । सिप्, 'सेर्ह्यपिच्च' इति हिरादेशः, तस्य तातङ् । जीव त्वमिति । 'अतो हेः' इति हेर्लुक् । अथ जीवतात् त्वमित्यत्र स्थानिवद्भावेन तातङो हिग्रहणेन ग्रहणाल्लुक्कस्मान्न भवति ? 'हुझल्भ्यो हेर्धिः' इत्यतो हेरित्यनुवर्त्तमाने पुनः 'अतो हेः' इति ग्रहणात् । तस्य ह्येतत् प्रयोजनम्—हिरूपावस्थितस्यैव हेर्लुग्यथा स्यात् । स्थानिवद्भावेन यच्छब्दान्तरं हिग्रहणेन गृह्यते तस्य मा भूत् ।

अथ 'ङिच्च' इति वचनात् तातङयमन्त्यस्य कस्मान्न भवति ? इत्याह—ङित्करणमित्यादि । गुणप्रतिषेधार्थम्—ब्रूयात् भवानित्यत्र । वृद्धिप्रतिषेधार्थम्—मृष्टादित्यत्र । इतिकरणो हेतौ । यस्माद् गुणवृद्धिप्रतिषेधार्थं ङित्करणं तस्मात्सर्वादेशस्तातङ् भवति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



ङित्त्वाच्चास्य स्थानिवद्भावाद्यत्पित्त्वं प्राप्नोति, तन्निवर्त्तते; ङिच्च पिन्न भवति । तेन 'ब्रुव ईट्' इति ब्रूताद्भवान्–इतीण्न भवति ।

आशिषीति किम् ? ग्रामं गच्छतु भवान् । गच्छ त्वम् ।

तातङि ङित्वं संक्रमकृत्स्यादन्त्यविधिश्चेत्तच्च तथा न ।
हेरधिकारे हेरधिकारो लोपविधौ तु ज्ञापकमाह ॥

पदमञ्जरी

इत्येतद्बाधित्वा 'अनेकाल्शित्सर्वस्य' इत्येतदेव परत्वात्प्रवर्त्तत इति भावः । एतच्च 'ङिच्च' इत्यत्र सम्यगुपपादितम् । तत्र ब्रूतादित्यादौ गुणप्रतिषेधः, मृष्टादित्यत्र वृद्धिप्रतिषेधः । *ङित्त्वाच्चास्येति* । ननु च ङित्कार्यं भवतु, स्थानिवद्भावप्राप्तपित्त्वात्पित्कार्यमपि, को विरोधः ? अत आह— *ङिच्च पिन्न भवतीति* । वचनमिदम् 'सार्वधातुकमपित्' इत्यत्र योगविभागेन कल्पितम् । *ब्रुव ईडिति* । उपलक्षणमेतत्, तृण्ढाद्भवान् इत्यत्र 'तृणह इम्' न भवतीति ।

*तातङि ङित्वमित्यादि* श्लोकद्वयं क्वचित्पठ्यते । *तातङि* व्यवस्थितं *ङित्त्वं संक्रमकृत्स्यात्*, संक्रमो नाम=गुणवृद्धिप्रतिषेधः, अर्हार्थे लिङ्, गुणवृद्धिप्रतिषेधकृद्भवितुमर्हति । *अन्त्यविधिश्चेत्*, अन्त्यविधिहेतुत्वादन्त्यविधिर्ङित्त्वम् । करणसाधनो वा विधिशब्दः, अन्त्यस्य यथा स्यादित्येवमर्थं चेत् ङित्त्वमित्यर्थः । निराकरोति–*तच्च तथा न* । चशब्दोऽवधारणे प्रतिषेधेन सम्बध्यते, तत् ङित्त्वं तथा सति नैव कर्त्तव्यम् । 'एरुः' इत्यस्यानन्तरम् 'तुह्योस्तादाशिषि' इति वक्तव्यम्, एरुरित्येव; एवं सिद्धे ङित्करणं गुणवृद्धिप्रतिषेधार्थमिति निश्चीयते । न च सर्वादेशतामन्तरेण तत् तत्प्रतिषेधार्थत्वं ङित्त्वस्योपपद्यत इति सर्वादेशस्तातङ् भवति । ननु चान्त्यविधिश्चास्तु, 'अवयवे कृतं लिङ्गम्' इति न्यायेन गुणवृद्धिप्रतिषेधार्थश्चास्तु ङित्करणसामर्थ्यादित्याशङ्क्य परिहारान्तरमाह— *हेरधिकार इति* । 'अतो हेः' इत्यत्र लोपविधौ 'हुझल्भ्यो हेर्धिः' इत्यतो हेरित्य-

न्यासः

यदि हि तस्यान्यत् प्रयोजनं न स्यात्, स्यादेवान्त्यस्य तातङ् । अस्ति च तस्यान्यत् प्रयोजनं गुणवृद्धिप्रतिषेधः । तस्मिन् सति किम् 'ङिच्च' इत्यन्त्यस्य भवतु, अथ 'अनेकाल्शित्सर्वस्य' इति सर्वस्य वा ? तत्र परत्वात् सर्वादेशेनैव युक्तं भवितुम् । तस्माद् 'अनेकाल्शित्सर्वस्य' इति सर्वस्यैव स्यादिति सर्वादेशो भवति । ननु च तुस्थानिकस्य तातङः स्थानिवद्भावेन पित्त्वं प्राप्नोति, ततश्च हलि पिति सार्वधातुके यथा ब्रवीत्वित्यत्रेड् भवति, तथा ब्रूताद्भवानित्यत्रापीटा भवितव्यम् ?—एतच्चोद्यमपाकर्तुमाह–ङित्त्वाच्चेत्यादि । अस्येति तातङः । किं कारणं निवर्त्तते ? इत्याह–ङिच्चेत्यादि ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तातङो ङित्त्वसामर्थ्यान्नायमन्त्यविधिः स्मृतः ।
न तद्वदनङादीनां तेन तेऽन्त्यविकारजाः ॥

विदे शतुर्वसुः ॥ ३६ ॥

'विद ज्ञाने'—इत्येतस्माद्धातोरुत्तरस्य शतुर्वसुरादेशो भवति । विद्वान्, विद्वांसौ, विद्वांसः ।

**पदमञ्जरी**

धिकारे सत्येव योऽयं हेरित्यधिकारस्तं ज्ञापकमाह *सूत्रकारः*, तस्य ह्येतत्प्रयोजनम्—हिरेव यो हिस्तस्य यथा स्यात्, स्थानिवद्भावेन यो हिस्तस्य मा भूदिति । तच्च सर्वादेशत्वे सत्युपपद्यते ।

ननु च हिरेव यो हिस्तस्य यथा स्याद्धिकृतो यो हिस्तस्य मा भूदित्यन्त्यादेशत्वेऽपि तातङो हेरित्यधिकार उपपद्यत इत्याशङ्क्य साक्षात्परिहारमाह—*तातङो ङित्त्वसामर्थ्यादिति* । ङित्त्वसामर्थ्यात्किलायमन्त्यविधिः स्यात्, तच्च सामर्थ्यं नास्ति, सर्वादेशत्वेऽपि प्रयोजनसम्भवात् । ततश्च पूर्वोक्तया रीत्या विप्रतिषेधात्सर्वादेश एव तातङ् भवति । 'अनङ् सौ' इत्यादावनङादीनां नैवं ङित्त्वसामर्थ्याभावः, तेन तेऽन्त्यविकारदा जाताः ॥

*विदेः शतुर्वसुः ॥ विद ज्ञान इति ।* सत्ताविचारणार्थयोरात्मनेपदित्वेन शतुरसम्भवः; लाभार्थस्य तूभयपदित्वेन शतुः सम्भवेऽपि तुदादित्वाद्विकरणेन व्यवधानमिति ज्ञानार्थस्यैव लुग्विकरणस्य परस्मैपदिनो ग्रहणमिति भावः ।

**न्यासः**

चकारो हेतौ । तुस्थानिकस्य तातङो नाप्राप्ते पित्त्वे ङित्त्वमारभ्यत इति ङित्त्वेन हि पित्त्वं बाध्यते । तथासौ ङिद् भवति यदि स्थानिवद्भावेन प्राप्तं पित्त्वं निवर्त्तते । तेनेत्यादि । यत एवं पित्त्वं निवर्त्तते तेन पित्त्वाश्रय ईण्न भवति । ग्रामं गच्छतु भवान् । त्वं गच्छेति । 'लोट् च' इति विध्यादौ लोट् ॥

विदेः शतुर्वसुः ॥ यद्यपि विदेरिति सामान्यनिर्देशोऽयम्, तथापि ज्ञानार्थस्य ग्रहणं विज्ञायते । तस्यैव हि शतानन्तरः सम्भवति, नान्येषां विदीनाम् । तत्र सत्ताविचारणार्थयोः शतुरसम्भव एव; आत्मनेपदित्वात् । लाभार्थस्य तूभयपदित्वात् सम्भवत्यसौ, न त्वनन्तरः; शप्रत्ययेन व्यवधानात् । ज्ञानार्थस्य तु लुग्विकरणत्वाच्छतुर्विकरणकृतं व्यवधानं नास्ति, अतस्तस्यैव ग्रहणमित्याह—विद ज्ञान इति । विद्वानिति । उगित्त्वान्नुम्, 'सान्तमहतः संयोगान्तस्य' इति दीर्घः । अन्यतरस्यांग्रहणनुवर्त्तते । तेन पक्षे विदन्, विदन्तौ, विदन्त इत्याद्यपि भवति । एतच्च गम्यमानत्वाद् वृत्तौ नोक्तम् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



स्थानिवद्भावादुगित्कार्ये सिद्धे वसोरुकारकरणम् 'वसोः सम्प्रसारणम्' इत्यत्र क्वसोरपि सामान्यग्रहणार्थम्। 'एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य' इत्येतदपि न भवति; तथा सत्युकारकरणमनर्थकं स्यात्।

अन्यतरस्यांग्रहणं केचिदनुवर्त्तयन्ति। विदन्, विदन्तौ, विदन्तः॥

**समासेऽनञ्पूर्वे क्त्वो ल्यप्॥ ३७॥**

समासेऽनञ्पूर्वे 'क्त्वा' इत्येतस्य 'ल्यप्' इत्ययमादेशो भवति। प्रकृत्य। प्रहृत्य। पार्श्वतःकृत्य। नानाकृत्य। द्विधाकृत्य।

### पदमञ्जरी

*क्वसोरपि सामान्यग्रहणार्थमिति*। अन्यथा 'वसः सम्प्रसारणम्' इत्युच्यमाने निरनुबन्धकत्वादस्यैव ग्रहणं स्यात्। ननु च क्रियमाणेऽप्युकारानुबन्धे एकानुबन्धकत्वादस्यैव ग्रहणं स्यात्? तत्राह—*एकानुबन्धकग्रहण इति*।

*समासेऽनञ्पूर्वे क्त्वो ल्यप्*॥ पूर्वशब्दोऽवयववचनः, अनञ्पूर्वोऽवयवो यत्र समासे सोऽनञ्पूर्वः। *प्रकृत्येति*। 'समानकर्तृकयोः पूर्वकाले' इति क्त्वा, 'कुगतिप्रादयः' इति समासः, ल्यपि सति ह्रस्वस्य तुक्। *पार्श्वतःकृत्येति*। आद्यादित्वात्सप्तम्यन्तात्तसिः, 'स्वाङ्गे तस्प्रत्यये कृभ्वोः' इति क्त्वा, 'तृतीयाप्रभृतीन्यन्यतरस्याम्' 'क्त्वा च' इति समासः। *नानाकृत्य, द्विधाकृत्येति*। 'नाधार्थप्रत्यये

### न्यासः

अथ किमर्थमुकारोऽनुबन्धः क्रियते, नुमाद्युगित्कार्यं यथा स्यादिति चेत्? न; तस्य स्थानिवद्भावेनैव सिद्धत्वादित्यत आह—स्थानिवद्भावादित्यादि। क्वसोरपीति। अपिशब्दादस्यापि। असत्युकारे सामान्यार्थे क्वसोरेव ग्रहणं स्यात्, नान्यस्य। अथ 'वसोः सम्प्रसारणम्' इति सूत्रं क्रियत एवास्यैव ग्रहणार्थम्, न क्वसोः; ननु च सत्यप्युकारणे सामान्यग्रहणं नोपपद्यते, एकानुबन्धकपरिभाषयास्यैव ग्रहणं स्यात्, न क्वसोः? इत्याह—एकानुबन्धकग्रहण इत्यादि। एतत् परिभाषासूत्रम्। न भवति। नोपतिष्ठत इत्यर्थः। किं कारणं न भवति? इत्याह—तथा च सतीत्यादि। एवञ्च सतीत्यर्थः। यदि क्रियमाणेऽप्युकार एकानुबन्धपरिभाषोपतिष्ठते, एवं सत्युकारकरणमनर्थकं स्यात्। विनापि तेन 'वसः संप्रसारणम्' इत्युच्यमाने केवलस्यास्य ग्रहणं लभ्यत एव। तस्मादुकारकरणसामर्थ्यादियं परिभाषा नोपतिष्ठते॥

समासेऽनञ्पूर्वे क्त्वो ल्यप्॥ अनञ्पूर्वे इति। न नञ् अनञ्, अनञ् पूर्वो यस्य सोऽनञ्पूर्वः। प्रकृत्येत्यादि। 'समानकर्तृकयोः पूर्वकाले क्त्वा', 'कुगतिप्रादयः' इति समासः, 'ह्रस्वस्य पिति कृति तुक्'। पार्श्वतःकृत्येति। 'स्वाङ्गे तस्प्रत्यये कृभ्वोः' इति क्त्वा, 'तृतीयाप्रभृतीन्यन्यतरस्याम्' इति समासः। नानाकृत्येति। 'नाधार्थप्रत्यये

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


समास इति किम् ? कृत्वा । हृत्वा । अनञ्पूर्वं इति किम् ? अकृत्वा । अहृत्वा । परमकृत्वा । उत्तमकृत्वा ।

'अनञ्' इति हि नञोऽन्यदनञ् नञ्सदृशमव्ययं परिगृह्यते । तेन नञ् अनव्ययं चानञ् न भवति । स्नात्वाकालकादिषु मयूरव्यंसकादिषु निपातनाल्ल्यबादेशो न भवति ।

पदमञ्जरी

ऋत्व्यर्थे' इति क्त्वा, पूर्ववत्समासः ।

*अकृत्वा, अहृत्वेति* । हृत्वेत्येतत्प्रत्युदाहरणम्, अत्र कृत्वाशब्दो नञ्सदृशः पूर्वोऽस्ति, समुदायस्तु समासो न भवति । *परमकृत्वेति* । 'सन्महत्' इत्यादिना समासः, तुमर्थाधिकाराद्भावे क्त्वा प्रत्ययः । पारम्यमपि क्रियाया एव विशेषणमिति समानाधिकरण्यम् ।

कथं पुनरिदं प्रत्युदाहरणम्, यावता भवत्येवायमनञ्पूर्वः समासः ? इत्यत आह–*अनञिति हीति* । 'अनञ्' इति पर्युदासोऽयम्, तत्र नञिवयुक्तन्यायेन नञ्सदृशमव्ययं परिगृह्यते, तेन नञ् अनव्ययं च परमशब्दादिकमनञ् न भवति, अभेदादनव्ययत्वाच्च । *स्नात्वाकालक इत्यादिष्विति* । आदिशब्देन पीत्वास्थिरक

न्यासः

ऋत्व्यर्थे' इति क्त्वा, पूर्ववत्समासः ।

कृत्वा, हृत्वेति । एतत् प्रत्युदाहरणम् । अत्र कृत्वाशब्दोऽनञ्पूर्वोऽस्ति; किन्तु समासो न भवतीति ल्यबभावः । परमकृत्वा, उत्तमकृत्वेति । 'सन्महद्' इत्यादिना समासः । कथं पुनरनेन समासः ? कथञ्च न स्यात् ? सामानाधिकरण्याभावात् ? वार्त्तमेतत्; कर्त्तरि क्त्वा विहितः, स एव च परमोत्तमशब्दाभ्यां विशिष्यते, तत् कथं सामानाधिकरण्याभावः ! अथ क्रियाविशेषणत्वं तयोराश्रित्य सामानाधिकरण्याभाव उच्यते, एवमपि 'विशेषणं विशेष्येण बहुलम्' इत्यतो बहुलग्रहणानुवृत्तेरसामानाधिकरण्येऽपि समासो भवति ।

ननु चानञ्पूर्वावेतौ समासौ, तत् कथमेतत्प्रत्युदाहरणमुपपद्यते ? इत्याह—अनञित्यादि । अनञिति नायं प्रसज्यप्रतिषेधः, किं तर्हि ? पर्युदासः—नञोऽन्यदनञ् । तत्र नञिवयुक्तन्यायेन नञो यदन्यन्नञ्सदृशमव्ययं तदनञिति परिगृह्यते । तेन कारणेन नञव्ययमनव्ययञ्च परमशब्दादिकमुभयमप्येतदनञ् न भवति, तत्राव्ययेन नञा सादृश्यमस्ति । अत्यन्ताभेदादनव्ययत्वाच्च यथाक्रमम् । तस्माद् यथा अकृत्वा, अहृत्वेत्येतत् प्रत्युदाहरणमुपपन्नरूपम्, एवं परमकृत्वा, उत्तमकृत्वेत्यपि । यदि तर्हि अनञिति नञ्सदृशमव्ययं परिगृह्यते–स्नात्वाकालकः, पीत्वास्थिरक इत्यादावपि स्यात्, अस्ति ह्यत्रापि नञ्सदृशमव्ययं पूर्वपदम्; क्त्वाप्रत्ययस्याव्ययत्वादित्याह–स्नात्वा-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अथ वा—'समासे' इति निर्धारणे सप्तमी । तेन क्त्वान्तः समास एव परिगृह्यते । स 'च येन विधिस्तदन्तस्य' इत्यनेन तदन्तविधिना, न तु 'कृद्ग्रहणे गतिकारकपूर्वस्यापि' इति । तथा च 'अनञ्पूर्वे' इत्यु-

पदमञ्जरी

इत्येवमादेर्ग्रहणम्, यत्रोत्तरपदे क्रिया नोपादीयते तत्राध्याहृतक्रियापेक्षः क्त्वा-प्रत्ययः । सापेक्षत्वेऽपि निपातनात्समासः । *निपातनाल्ल्यबादेशो न भवतीति* । न प्राकरणिकः समास एव तत्र निपात्यते, किं तर्हि ? यस्य लक्षणं नास्ति तत्सर्वमिति भावः ।

*निर्धारणे सप्तमीति* । जातावेकवचनम्, वचनव्यत्ययो वा । *समास एव निर्धार्यत इति* । निर्धारणस्य तुल्यजातीयापेक्षत्वात् । कथं पुनः समासः क्त्वान्तो भवति, यावता 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्', न च समासात् क्त्वा विहितः ? अथ कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात्समासस्य क्त्वान्तता ? एवमपि प्रकृत्य, पार्श्वतःकृत्येत्यादावेव स्यात्, उच्चैःकृत्येत्येवमादौ तु न स्यात्; अगतित्वादकारकत्वाच्च ? इत्याशङ्क्याह—*स चेति* । तत्र

न्यासः

कालक इत्यादि । मयूरव्यंसकादिषु समाससंज्ञार्थमेते समुदायाः पठ्यन्ते, तस्मान्निपातनाल्ल्यबादेशो न भवति ।

अथ वेत्यादि । 'समासे' इत्यधिकरणसप्तम्यां सत्यां स्नात्वाकालकादिषु ल्यबादेशप्रसङ्गो भवतीति । तथा ह्यधिकरणसप्तम्यामयमर्थो भवति—समासेऽनञ्पूर्वे यः क्त्वा वर्त्तते तस्य ल्यब् भवति । एवञ्च सति देशविशेषपरिग्रहाभावाद् यथा समासस्यान्ते वर्त्तमानस्य क्त्वो ल्यब् भवति, तथा मध्येऽपि स्यात् । तस्मान्न चेयमधिकरणसप्तमी, किं तर्हि ? निर्धारणसप्तमी । तस्मिंश्च पक्षे 'समासे' इति जातावेकवचनम्, यथा—'कारके' इति । अथ वा—'व्यत्ययो बहुलम्' इति सुब्व्यत्ययेन बहुवचनस्य स्थान एकवचनं वेदितव्यम् । तेनेत्यादि । यतो निर्धारण इयं सप्तमी, तेन क्त्वान्तः समास एव गृह्यते, न समासावयवः—स्नात्वेति । निर्धारणं हि समानजातीयस्यैव भवति, यथा कृष्णा गवां सम्पन्नक्षीरतमेत्युक्ते गौरेव निर्धार्यमाणा प्रतीयते, तथात्रापि 'समासेऽनञ्पूर्वे' इत्युक्ते समासेष्वनञ्पूर्वेषु मध्ये यः क्त्वान्तः समासः स एव निर्धार्यमाणः प्रतीयते । तेन समासस्यैव क्त्वान्तस्य ग्रहणमिति तस्यैव ल्यबादेशेन भवितव्यम्, न च स्नात्वाकालकादिषु क्त्वान्तः समासः । स्नात्वाकालकादयो यद्यपि समासाः, न तु क्त्वान्ता इति ल्यबादेशो न भवति । स च समासः 'येन विधिस्तदन्तस्य' इति तदन्तविधिना क्त्वान्तो गृह्यते । कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणेन वा प्रत्ययग्रहणपरिभाषया तदन्तग्रहणं न शक्यते वक्तुम् । न हि क्त्वाप्रत्ययः समासादुत्पद्यते । तत्र

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


च्यते । गतिकारकपूर्वस्यैव तु ग्रहणे सति नञ्पूर्वस्य प्रसङ्ग एव नास्ति, नञ्न गतिः, न च कारकमिति ।

प्रधाय, प्रस्थायेत्यादिषु हिप्रभृतीन् अन्तरङ्गानपि विधीन्बहिरङ्गो ल्यब्बाधत एव—इति ज्ञापितमेतत् ॥

**पदमञ्जरी**

'निर्दिश्यमानस्यादेशा भवन्ति' इति क्त्वामात्रस्यैव ल्यब्भवति । ननु प्रत्ययविषये पूर्वेण परिभाषाद्वयेन तदन्तविधिव्यवस्था, न तु 'येन विधिस्तदन्तस्य' इत्यनेन ? तत्राह—*तथा चेति* । कथं पुनरेतज्ज्ञापकम् ? इत्याह—*गतिकारकपूर्वस्य त्विति* । कथं नास्ति प्रसङ्गः ? इत्याह—*नञ्न गतिरिति* । 'अदो जग्धिर्ल्यप्ति किति' इत्यत्र यदुक्तम्—'जग्धौ सिद्धमन्तरङ्गत्वात्' इत्यादि, तत्स्मारयति—*प्रधाय, प्रस्थायत्येवमादिष्विति* ।

**न्यासः**

यदि कृद्ग्रहणपरिभाषया तदन्तो गृह्यते, नानाकृत्येत्यत्र न स्यात्, न ह्ययं गतिकारकपूर्वः । इहैव तु स्यात्—प्रकृत्य, पार्श्वतःकृत्येति । अस्ति ह्यत्रापि गतिः कारकश्च पूर्वोऽवयवः, 'येन विधिस्तदन्तस्य' इत्यनेन तदन्तविधौ गम्यमाने सर्वत्र भवतीति मन्यमान आह—स चेत्यादि । अत्रैवोपपत्तिमाह—तथा चेत्यादि । यस्माद् 'येन विधिस्तदन्तस्य' इत्यनेन क्त्वान्तः समासो गृह्यते, एवञ्च कृत्वा 'नञ्पूर्वे' इत्युच्यते । 'येन विधिस्तदन्तस्य' इत्यनेन हि सामान्येन तदन्तविधौ सति नञ्पूर्वस्यापि प्रसज्येत । तस्मात् तन्निवृत्त्यर्थम्—'अनञ्पूर्वे' इति युक्तमुक्तम् । यदि कृद्ग्रहणपरिभाषया क्त्वान्तः समासो गृह्यते, तदा गतिकारपूर्वस्यैव ग्रहणं स्यात् । एवञ्च गतिकारकपूर्वस्य ग्रहणे सति नञ्पूर्वस्य प्रसङ्ग एव नास्ति । नञ् न गतिर्न च कारकमिति । अतो हेतोर्यथैव परमकृत्वेत्यत्र प्रसङ्गो नास्ति, परमशब्दस्यागतित्वादकारकत्वाच्च; तथाऽकृत्वेत्यत्रापि, नञोऽगतित्वादकारकत्वाच्च । ततश्च प्रसङ्गाभावाद् 'अनञ्पूर्वे' इति न वक्तव्यं स्यात्, उक्तञ्च । तदेतस्मादनञ्पूर्व इति वचनाद् 'येन विधिस्तदन्तस्य' इत्यनेन क्त्वान्तः समासो गृह्यते, न तु कृद्ग्रहणपरिभाषयेति स्थितमेतत् ।

प्रधायेति—अत्रान्तरङ्गत्वाद् 'दधातेर्हिः' इति हिः प्राप्नोति । प्रस्थायेति—अत्रापि 'द्यतिस्यतिमास्थामित्ति किति' इतीत्त्वम् । प्रखन्येति—'जनसनखनाम्' इत्यात्त्वम् । प्रशाम्येति—'अनुनासिकस्य क्विझलोः क्ङिति' इति दीर्घः । आपृच्छ्येति—'च्छ्वोः शूडनुनासिके च' इति शत्वम् । प्रतिदीव्येति—तेनैवोठ् । प्रपठ्येति—'आर्धधातुकस्येड् वलादेः' इतीट् । अन्तरङ्गत्वं पुनरेषामेकपदाश्रयत्वात् । ल्यबादेशस्य तु बहिरङ्गत्वम्, समर्थानेकपदाश्रयसमासापेक्षत्वात् । हिप्रभृतिषु कृतेषु प्रधायेत्यादीनि रूपाणि न सिध्यन्ति ? इति यश्चोदयेत्, तं प्रत्याह—प्रधायेत्यादि । ज्ञापितमेतदिति । 'अदो जग्धिर्ल्यप्ति किति' इत्यत्र ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


## क्त्वापि छन्दसि ॥ ३८ ॥

समासेऽनञ्पूर्वे 'क्त्वा' इत्येतस्य 'क्त्वा' इत्ययमादेशो भवति, अपिशब्दाल्ल्यबपि भवति छन्दसि विषये। कृष्णं वासो यजमानं परिधापयित्वा। प्रत्यञ्चमर्कं प्रत्यर्पयित्वा। ल्यबपि भवति—उद्धृत्य जुहोति।

**पदमञ्जरी**

के पुनरन्तरङ्गा विधयः? हित्वदत्वात्वेत्वेत्वदीर्घत्वशूडिटः। हित्वम्—'दधातेर्हिः', हित्वा, प्रधाय। दत्वम्—'दो दद्घोः', दत्त्वा, प्रदाय। आत्वम्—'जनसनखनां सञ्झलोः', खात्वा, प्रखाय, प्रखन्य। इत्वम्—'द्यतिस्यतिमास्थामित्ति किति', स्थित्वा, प्रस्थाय। ईत्वम्—'घुमास्थागापाजहातिसां हलि' पीत्वा, प्रपाय। दीर्घत्वम्—'अनुनासिकस्य क्विझलोः क्ङिति', शान्त्वा, प्रशम्य। शू—'च्छ्वोः शूडनुनासिके च', पृष्ट्वा, आपृच्छ्य। ऊठ्—द्यूत्वा। इट्—'उदितो वा', देवित्वा, प्रदीव्य, अत्रेटि सति 'न क्त्वा सेट्' इति कित्त्वप्रतिषेधाद् गुणः स्यात्।

पूर्वग्रहणं किमर्थम्, 'अनञ्' इत्येवोच्यमाने बहुव्रीहिः स्यात्—अविद्यमानो नञ् यस्मिन्नसावनञिति, तथा च स्त्रैणीकृत्येत्यत्रापि प्रतिषेधः स्यात्। पूर्वग्रहणे तु सति, तस्य नियतदेशावयववचनत्वान्नायं दोषः। लित्करणं प्रचिकीर्ष्येत्यत्र प्रत्ययात्पूर्वस्य स्वरार्थम्। प्रकृत्येत्यादौ तु धातुस्वरेणैव सिद्धम्। पित्करणं तुगर्थम्॥

*क्त्वापि छन्दसि* ॥ *अपिशब्दाल्ल्यबपीति*। स च समासेऽसमासे च भवति, अप्राप्तिविषये ल्यपः प्रापणार्थत्वादपिशब्दस्य, अन्यथा 'वा छन्दसि' इत्येव वाच्यं

**न्यासः**

अथ पूर्वग्रहणं किमर्थम्, नानञीत्येवमुच्येत? नैवं शक्यम्; अनञीत्युच्यमाने बहुव्रीहिरयं स्याद्—अविद्यमानो नञ् यत्रासावनञिति। ततश्चेहापि न स्यात्—स्त्रैणीकृत्येति। स्त्रिया इदं स्त्रैणम्, 'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्' इति नञ्। तदन्ताद् अभूततद्भावे' इत्यादिना च्विः, 'अस्य च्वौ' इतीत्वम्, 'कुगतिप्रादयः' इति समासः। पूर्वग्रहणे तु सति पूर्वशब्द आदिभूतावयवमाचष्टे। तेन यत्र समासादिभूतो नञ्, तत्र न ल्यपा भवितव्यम्, तत्र स्त्रैणीकृत्येत्र भवत्येव। न ह्यत्र समासादिभूतो नञवयवः, किं तर्हि? मध्यभूतः।

लित्करणम्—प्रचिकीर्ष्येत्यत्र लित्प्रत्ययात् पूर्वस्योदात्तत्वं यथा स्यात्। प्रकृत्येत्येवमादावुदात्तार्थं लित्करणं नोपपद्यते, धातुस्वरेणैव पूर्वस्योदात्तत्वं सिध्यति। तस्मादनेकाजवयव एव धातुर्लित्त्वं प्रयोजयति॥

क्त्वापि च्छन्दसि॥ परिधापयित्वा, प्रत्यर्पयित्वेति। दधातेः, अर्त्तेश्च हेतुमणिच्

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


'वा छन्दसि इति' नोक्तम्, सर्वोपाधिव्यभिचारार्थम्। तेनासमासे ल्यब्भवति[1]—अर्च्य तान् देवान् गतः।

छन्दोऽधिकारः 'आज्जसेरसुक्' इति यावत् ॥

**सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः ॥ ३९ ॥**

छन्दसि विषये सुपां स्थाने सु, लुक्, पूर्वसवर्ण, आ, आत्, शे, या, डा, ड्या, याच्, आल्—इत्येते आदेशा भवन्ति।

सु—अनृक्षरा ऋजवः सन्तु पन्थाः। पन्थान इति प्राप्ते।

❀ सुपां सुपो भवन्तीति वक्तव्यम् ❀। धुरि दक्षिणायाः। दक्षिणायामिति प्राप्ते।

**पदमञ्जरी**

स्यात्, तथा च छन्दोविधानमनुविदधानाः कल्पसूत्रकारा अपि प्रयुञ्जते—आज्येनाक्षिणी अभ्येत्यादि ॥

*सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः* ॥ सुशब्द आदेश उच्यमाने अन्ये सुपो न प्राप्नुवन्ति, तस्मात् सुग्रहणमपनीय सुङ्ग्रहणं कर्त्तव्यमित्याह—*सुपां सुप इति*। *तिङां तिङ इति*। एतच्च 'व्यत्ययो बहुलम्' इति सिद्धम्। सुपां सुप इत्ययमपि तस्यैव प्रपञ्चः। *तक्ष्णन्तीति प्राप्त* इति तु युक्तः पाठः।

**न्यासः**

'अर्त्तिही' इत्यादिना पुक्, 'पुगन्तलघूपधस्य' इति गुणः, क्त्वा, इट्, अयादेशः। उद्धृत्येति। 'हृञ् हरणे', 'झयो होऽन्तरस्याम्' इति हकारस्य धकारः।

'वा छन्दसि' इति वक्तव्ये 'क्त्वापि च्छन्दसि' इति वचनमसमासेऽपि यथा स्यात्—अर्च्य तान् देवान् गत इति ॥

सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः ॥ पन्था इति। पथिन्नित्येतस्माज्जस्, तस्य सुः, 'पथिमथ्यृभुक्षामात्' इत्यात्त्वम्, 'इतोऽत्सर्वनामस्थाने' इतीकारस्यात्त्वम्, 'थो न्थः' इति न्थादेशः।

सुपाम्—इत्यादिना सुपां स्थाने सुप आदेशो भवन्तीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—पूर्वसूत्रादपिशब्दोऽनुवर्त्तते, स चानुक्तसमुच्चयार्थः, तेन सुपामन्येऽपि सुपो भवन्ति। धुरि दक्षिणाया इति। सप्तम्येकवचनस्य स्थाने पञ्चम्येकवचनम्, षष्ठ्येकवचनं वा।

---

१-१. पाठोऽयं न सार्वत्रिकः।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



❀ तिङां तिङो भवन्तीति वक्तव्यम् ❀। चषालं ये अश्वयूपाय तक्षति। तक्षन्तीति प्राप्ते।

लुक्—आर्द्रे चर्मन्, रोहिते चर्मन्। चर्मणीति प्राप्ते। हविर्द्धाने[1] यत्सुन्वन्ति तत्सामिधेनीरन्वाह। यस्मिन्सुन्वन्ति तस्मिन्सामिधेनीरिति प्राप्ते।

पूर्वसवर्णः—धीती। मती। सुष्टुती। धीत्या, मत्या, सुष्टुत्या इति प्राप्ते।

पदमञ्जरी

*आर्द्रे चर्मन्निति*। ननु च पूर्वसवर्णेनाप्येतत्सिद्धम्, कथम्? चर्मन्+इ इति स्थिते इकारस्य पूर्वसवर्णो नकारः, तत्र परतः 'स्वादिषु' इति पदसंज्ञायां सत्यां पूर्वस्य नकारस्य लोपः, तत्रायमप्यर्थः—'न ङिसम्बुद्ध्योः' इत्यत्र ङिग्रहणं न कर्त्तव्यं भवति, अप्रातिपदिकत्वादेव विभक्तिनकारस्य लोपाप्रसङ्गात्, पूर्वस्य तु नकारस्येष्ट एव लोपः? नैतदस्ति; अत्र हि पूर्वसवर्णो भवन्नान्तर्यतो निरनुनासिकस्य निरनुनासिको दकार एव स्यात्। अस्तु, संयोगान्तलोपो भविष्यति? नात्र संयोगान्तलोपः प्राप्नोति, 'स्वादिषु' इति पदसंज्ञायां सत्यां पूर्वनकारस्य लोपे सति असंयोगान्तत्वात्। नलोपो हि संयोगान्तलोपे सिद्धः। एवं तर्हि 'न ङिसम्बुद्ध्योः' इत्यत्र ङिग्रहणं करिष्यते, तत्र नलोपाभावे संयोगान्तलोपः? तदेवमस्यान्यथासिद्धत्वादुदाहरणान्तरमाह—*हविर्द्धाने यत्सुन्वन्तीति*। यत्+इ इति स्थिते अत्र यदि पूर्वसवर्णो दकारः स्यात्त्यदाद्यत्वे सति स्थानिवद्भावात्स्मिन्भावः प्राप्नोति। तस्मादत्र लुगेव कर्त्तव्यः। अनेकाल्सु च भ्यामादिषु अन्त्यस्य पूर्वसवर्णे पूर्वभागस्य श्रवणाप्रसङ्गः, तस्मात्तत्रापि लुगेव कर्त्तव्यः।

*धीतीत्यादि*। धीति-मति-सुष्टुतिशब्देभ्यस्तृतीयैकवचनस्य पूर्वसवर्ण इकारः, सवर्णदीर्घत्वम्।

न्यासः

तिङामित्यादि। तिङाञ्च तिङो भवन्तीत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानं तु पूर्ववदेव वक्तव्यम्।

आर्द्रे चर्मन्निति। सप्तम्येकवचनस्य चर्मन्-शब्दाल्लुक्।

यदिति। अत्रापि यच्छब्दात्, तच्छब्दाच्च।

धीतीत्यादि। धीति-मति-सुष्टुतिशब्देभ्यः परस्य तृतीयैकवचनस्य पूर्वसवर्ण इकारः, उभयोरकः सवर्णे दीर्घत्वम्।

१. 'हविर्धानाय' इति पाठान्तरम्।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



आ— द्वा यन्तारा । द्वौ यन्तारौ इति प्राप्ते ।

आत्—न ताद् ब्राह्मणाद् निन्दामि । तान् ब्राह्मणानिति प्राप्ते ।

शे—न युष्मे बाजवन्धवः । अस्मे इन्द्राबृहस्पती । यूयं वयमिति प्राप्ते । यूयादेशः, वयादेशश्च छान्दसत्वान्न भवति ।

या—उरुया । धृष्णुया । उरुणा, धृष्णुनेति प्राप्ते ।

डा—नाभा पृथिव्याम् । नाभौ पृथिव्यामिति प्राप्ते ।

ड्या—अनुष्टच्यो च्यावयतात् । अनुष्टुभेति प्राप्ते ।

याच्—साधुया । साध्विति सोर्लुकि प्राप्ते ।

**पदमञ्जरी**

*न ताद् ब्राह्मणादिति* । तच्छब्दाद् ब्राह्मणशब्दाच्च शस्, तस्यादादेशः, 'न विभक्तौ तुस्माः' इति इत्संज्ञाप्रतिषेधः । 'या देव विघ्नतात् त्वा महान्तम्' इति बह्वृचाः । *यूयं वयमिति प्राप्त इति* । प्रमादपाठोऽयम्, तथा हि—'न युष्मे बाजबन्धवः' इत्यत्र मन्त्रे ऋक्षाश्वमेधनाम्नो राज्ञोर्दानं स्तूयते, व्यत्ययेन द्वयोर्बहुवचनम्, बाजमित्यन्ननाम, अन्नप्रदानेन सर्वेषां बन्धवस्तेषां सम्बोधनं हे बाजबन्धवः । युष्मे युष्मासु अधीत्यस्यानेन सम्बन्धः, स च सप्तम्यर्थानुवादी । निनित्सुश्च निन्दनशीलोऽपि मर्त्यो युष्मासु अवद्यं न धारयति नावधारयति, अवद्याभावादित्यर्थः । *अस्मे इन्द्राबृहस्पती* इत्यत्रापि रयिं धत्तमिति क्रिया, दधातिश्च दानार्थः । तस्माद्युष्मासु *अस्मभ्यमिति* युक्तः पाठः । *यूयादेश इत्याद्यपि* न पठितव्यम् ।

**न्यासः**

उभा[1] इति । उभशब्दात्प्रथमाद्विवचनस्याकारः । 'प्रथमयोः पूर्वसवर्णः' इत्येकादेशः ।

न ताद् ब्राह्मणाद् निन्दामीति । तच्छब्दाद् ब्राह्मणशब्दाच्च द्वितीयैकवचनस्यात् । निशब्दे परतः 'यरोऽनुनासिकेऽनुनासिको वा' इति तकारस्य नकारादेशः ।

युष्मे, अस्मे इति । युष्मदस्मच्छब्दाभ्यां परस्य च 'जसः शे' इत्ययमादेशः । शकारः सर्वादेशार्थः । अथेह 'यूयवयौ जसि' इति यूयवयादेशौ कस्मान्न भवति ? इत्याह—यूयादेश इत्यादि ।

उरुया, धृष्णुयेति । उरुधृष्णुशब्दाभ्यां परस्य तृतीयैकवचनस्य यादेशः ।

नाभेति । नाभिशब्दात् सप्तम्येकवचनस्य डादेशः । डकारष्टिलोपार्थः ।

अनुष्टच्येति । अनुष्टुप्-शब्दात् तृतीयैकवचनस्य ड्यादेशः ।

साधुयेति । साधुशब्दात् परस्य प्रथमैकवचनस्य याजादेशः । चकारोऽन्तो-

---

1. 'द्वा' इति [illegible]

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



आल्—वसन्ता यजेत । वसन्त इति प्राप्ते ।

॥ इयाडियाजीकाराणामुपसंख्यानम् ॥ । इया—उर्विया परि ख्यन् । दार्विया । उरुणा, दारुणेति प्राप्ते । डियाच्—सुक्षेत्रिया । सुगातुया । सुक्षेत्रिणा, सुगात्रिणेति प्राप्ते । ईकारः—दृतिं न शुष्कं सरसी शयानम् । सरसि शयानमिति प्राप्ते ।

॥ आङ्याजयारामुपसंख्यानम् ॥ । आङ्-प्र बाहवा । प्रबाहुनेति प्राप्ते । अयाच्—स्वप्नया सचसे जनम् । स्वप्नेनेति प्राप्ते । अयार्—सिन्धुमिव नावया । नावेति प्राप्ते[1] ॥

**पदमञ्जरी**

*अनुष्टुभेति प्राप्त इति* । अध्रिगुप्रैषे तु ता अनुष्टयोच्यावयतादिति अनुपूर्वात्तिष्ठतेः 'आतश्चोपसर्गे' इत्यङ्, अनुष्ठानमनुष्ठा, तयाऽनुष्ठया ।

*प्रबाहवेति* । 'घेर्ङिति' इति गुणः । ननु 'ङित्त्वे विद्याद्वर्णनिर्देशमात्रं वर्णे यत्स्यात्तच्च विद्यात्तदादौ' इत्युक्तम् ? सत्यम्; ङित्करणसामर्थ्यात्तु गुणः । *प्रबाहुनेति प्राप्त इति* । बाहुनेति तु युक्तः पाठः; प्रशब्दस्याख्यातेन सम्बन्धनात् । अयाचोऽकारः 'सुपि च' इति दीर्घनिवृत्त्यर्थः ॥

**न्यासः**

दात्तार्थः । सोर्लुकि प्राप्त इति । याजित्ययमादेशो विधीयत इति शेषः । लुक्प्राप्तिस्तु 'स्वमोर्नपुंसकात्' इत्यनेन ।

वसन्तेति । वसन्तशब्दात् परस्य सप्तम्येकवचनस्यालित्ययमादेशः । लित्करणं लित्प्रत्ययात् पूर्वस्योदात्तत्वं यथा स्यात् ।

उपसंख्यानमिति । प्रतिपादनमस्यार्थः । उत्तरत्राप्युपसंख्यानशब्दस्य प्रतिपादनमर्थः । प्रतिपादनं त्वपिशब्दमाश्रित्य कर्त्तव्यम् । उर्विया, दार्वियेति । उरुदारुशब्दाभ्यां परस्य तृतीयैकवचनस्येयादेशः । सुक्षेत्रियेति । सुक्षेत्रिन्नित्यादेर्मत्वर्थीयेनिप्रत्ययान्तात् परस्य तृतीयैकवचनस्य डियाजादेशः । डकारष्टिलोपार्थः । चकारोऽन्तोदात्तार्थः । सरसी इति । सरःशब्दात् सप्तम्येकवचनस्य ईकारः । प्रबाहवेति । प्रबाहुशब्दात् तृतीयैकवचनस्याङादेशः, 'घेर्ङिति' इति गुणः, अवादेशः । ननु च 'ङित्त्वे विद्याद्वर्णनिर्देशमात्रं वर्णे यत् स्यात्तच्च विद्यात्तदादौ' इत्युक्तम्, न चेहादौ ङकारः, तत् कथं गुणः ? ङित्करणसामर्थ्याद् भविष्यतीत्यदोषः । स्वप्नयेति । स्वप्नशब्दात् परस्य तृतीयैकवचनस्यायाच्, 'अतो गुणे' पररूपत्वम् । चकारः स्वरार्थः । नावयेति । नौशब्दात् परस्य तृतीयैकवचनस्यायारादेशः । रेफः 'उपोत्तमं रिति' इत्युपोत्तमाकारस्योदात्तत्वार्थः ॥

---

1. 'अयारिति रेफ उपोत्तमं रितीत्युपोत्तमस्योदात्तार्थः'—अधिकोऽयं पाठः क्वचित् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## अमो मश् ॥ ४० ॥

'अम्' इति मिबादेशो गृह्यते । तस्य छन्दसि विषये मशादेशो भवति । वधीं वृत्रम् । क्रमीं वृक्षस्य शाखाम् । लुङि 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडागमाभावः ।

शित्करणं सर्वादेशार्थम् । मकारस्यापि हि मकारवचनमनुस्वारनिवृत्त्यर्थं स्यात्[1] ॥

### पदमञ्जरी

*अमो मश् ॥ अमिति मिबादेशो गृह्यत इति ।* द्वितीयैकवचनस्य ग्रहणं न भवति; छन्दसि दृष्टानुविधानाद्वक्ष्यमाणेषु बाहुल्येन तिङा निर्देशात् । *वधीमिति ।* हन्तेर्लुङ्, 'लुङि च' इति वधादेशः, 'च्लेः सिच्', इट्, मिपोऽम्भावः, तस्य मश्—अकार उच्चारणार्थः, 'अस्तिसिचोऽपृक्ते' इतीट्, 'इट ईटि' इति सिचो लोपः, सवर्णदीर्घत्वम् ।

*शित्करणं सर्वादेशार्थमिति ।* अन्यथा हि 'अलोऽन्त्यस्य' इति मकारस्य मकारवचने प्रयोजनाभावात्सर्वादेशो भविष्यति, अत आह—*मकारस्यापीति ।* यथा 'मो राजि समः क्वौ' इत्यत्रेति भावः । पञ्चमीनिर्देशाभावात्तु 'आदेः परस्य' इत्येतन्न भवति । अथोच्यते—द्विमकारकोऽयं निर्देशः करिष्यते, तत्रैकस्य संयोगान्तलोपेऽपि वधीमित्यादि सिद्धमिति ? एवमपि लाघवे नास्ति विशेषः । किञ्चसंयोगान्तलोपस्यासिद्धत्वादपृक्तलक्षण ईट् एव स्यात् । एवं तर्हि यकारादिः

### न्यासः

अमो मश् ॥ अमिति मिबादेशो गृह्यत इति । द्वितीयैकवचनाशङ्कां निराकरोति । द्वितीयैकवचनस्याग्रहणम्; छन्दसि यथादृष्टानुविधानात् । अपिशब्दानुवृत्तेर्वा, तदनुवृत्तौ ह्येवं सम्बन्धः क्रियते—अमो मश्च भवति, अपिशब्दात् क्वचिच्छ्रवणमपीति । वधीमिति । हन्तेर्लुङ्, 'च्लेः सिच्' सिप्, तस्य 'तस्थस्थ' इत्यादिनाऽम्, तस्य मशादेशः—अकार उच्चारणार्थः, 'लुङि च' इति हन्तेर्वधादेशः, 'आर्धधातुकस्य' इत्यादिनेट्, 'अस्तिसिचोऽपृक्ते' इतीट्, 'इट ईटि' इति सिचो लोपः, सवर्णदीर्घत्वम् । क्रमीमिति । 'क्रमु पादविक्षेपे' । सर्वं पूर्ववत् । अयमत्र विशेषः—'स्नुक्रमोरनात्मनेपदनिमित्ते' इतीट् । अवधिषम्, अक्रमिषमिति प्राप्ते ।

शित्करणं सर्वादेशार्थमिति । असति तस्मिन् 'अलोऽन्त्यस्य' स्यादिति भावः । ननु च मकारस्य मकारवचने प्रयोजनं नास्तीत्यन्तरेणापि शकारं सर्वादेशो भविष्यति ? इत्याह—मकारस्येत्यादि । अस्ति हि मकारविधाने प्रयोजनम् । किं तत् ? 'मोऽनुस्वारः'

---

१. 'मो राजि समः क्वौ' इत्यत्र यथा तथैवात्रापीति भावः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## लोपस्त आत्मनेपदेषु ॥ ४१ ॥

आत्मनेपदेषु यस्तकारस्तस्य छन्दसि विषये लोपो भवति । देवा अदुह्र । गन्धर्वाप्सरसो अदुह्र । अदुहतेति प्राप्ते । [1]दुहामश्विभ्यां पयो अघ्न्येयम् । दुग्धामिति प्राप्ते । दक्षिणत उपशये । शेत इति प्राप्ते ।

अपीत्यधिकारान्न भवति—तत्र आत्मानमनृतं कुरुते ।

आत्मनेपदेष्विति किम् ? वत्सं दुहन्ति कलशं चतुर्बिलम् ॥

**पदमञ्जरी**

करिष्यते, किम् ? यकारो न श्रूयते, वलि लुप्तनिर्दिष्टो यकारः ? नात्र किञ्चित् प्रमाणमस्ति, तस्माच्छित्करणम् ॥

*लोपस्त आत्मनेपदेषु ॥ अदुह्रेति* । दुहेर्लङ्, 'आत्मनेपदेष्वनतः' इति झस्यादादेशः, 'बहुलं छन्दसि' इति रुट् , तकारस्य लोपे द्वयोरकारयोः 'अतो गुणे' पररूपत्वम् । *शये इति* । शेते इत्यत्र तलोपे कृते अयादेशः । दुह*ामिति* । लोट्, टेरेत्वम्, 'आमेतः', तलोपः ।

**न्यासः**

प्राप्नोति, स मा भूदिति । सत्येतस्मिन् प्रयोजने यदि शकारो न क्रियेत, तदाऽन्त्यस्यैव स्यात्, न सर्वस्य । तस्मात् सर्वादेशार्थः शकारः कर्त्तव्यः ॥

लोपस्त आत्मनेपदेषु ॥ अदुह्रेति । दुहेर्लङ्, अदादित्वाच्छपो लुक्, 'आत्मनेपदेष्वनतः' इत्यदादेशः, 'बहुलं छन्दसि' इति रुट्, तकारलोपे कृते द्वयोरकारयोः 'अतो गुणे' पररूपत्वम् । दुह्रामिति । लोट्, बहुवचनं झः, टेरेत्वम्, आमादेशः, झादेशस्यातो रुडागमः, पूर्ववच्छपो लुक्, तकारलोपे कृते 'अकः सवर्णे दीर्घः' । शय इति । लट्, एकवचनान्तः, 'शीङः सार्वधातुके गुणः', शपो लुक् । दुहामिति । लोट्, एकवचनान्तः, टेरेत्वम्, 'आमेतः' इत्याम् । दुग्धामिति । 'दादेर्धातोर्घः', 'झषस्तथोर्धोऽधः' इति धत्वम्, 'झलां जश् झशि' इति घकारस्य गकारः ।

अपीत्यधिकारादित्यादि । 'क्त्वापि छन्दसि' इत्यतोऽपीत्यनुवर्त्तते, तत्रैवमभिसम्बन्धः क्रियते—लोपो भवति श्रवणमपीति; तेन कुरुत इत्यत्र न भवति । करोतेर्गुणे कृते 'अत उत्सार्वधातुके' इत्युत्त्वम् । यदि अपिशब्दानुवृत्तेः क्वचिच्छ्रवणमपि भवति, अत एव हेतोः परस्मैपदेषु न भवतीति किमात्मनेपदग्रहणेन ? एवं तर्हि विस्पष्टार्थमात्मनेपदग्रहणम् ॥

---

१. 'दुह्राम्' इति मुद्रितः पाठोऽयुक्तः, ऋचि ( १।१६४।२७ ) वृत्तिस्थपाठोपलम्भात् । अत एव व्याख्ययोरप्येवमेवोक्तम् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## ध्वमो ध्वात् ॥ ४२ ॥

छन्दसि विषये ध्वमो ध्वादित्ययमादेशो भवति । अन्तरेवोष्माणं वारयध्वात् । वारयध्वमिति प्राप्ते ॥

## यजध्वैनमिति च ॥ ४३ ॥

'यजध्वम्' इत्येतस्य एनमित्येतस्मिन्परतो मकारलोपो निपात्यते वकारस्य च यकारश्छन्दसि विषये । यजध्वैनं प्रियमेधाः । यजध्वमेनमिति प्राप्ते ॥

## तस्य तात् ॥ ४४ ॥

तशब्दस्य लोण्मध्यमपुरुषबहुवचनस्य स्थाने 'तात्' इत्ययमादेशो भवति । गात्रंगात्रमस्या नूनं कृणुतात् । कृणुतेति प्राप्ते । ऊवध्य गोहं पार्थिवं खनतात् । खनतेति प्राप्ते । अस्ना रक्षः संसृजतात् । संसृजतेति प्राप्ते । सूर्यं चक्षुर्गमयतात् । गमयतेति प्राप्ते ॥

### पदमञ्जरी

*अपीत्यधिकारादिति* । एवं च 'आत्मनेपदेषु' इति वचनं तस्यैव प्रपञ्चः ॥

*यजध्वैनमिति च* ॥ *वकारस्य च यकार इति* । बह्वृचास्तु वकारमेवाधीयते, तत्र मलोपमात्रं निपात्यते ॥

*तस्य तात्* ॥ *लोण्मध्यमपुरुषबहुवचनस्येति* । प्रथमपुरुषैकवचनस्य तु ग्रहणं न भवति; छन्दसि दृष्टानुविधानात् । पूर्वोत्तराभ्यां बहुवचनाभ्यां वा साहचर्यात् । *कृणुतादिति* । 'कृवि हिंसाकरणयोः', धिन्वकृण्व्योर च' इत्युप्रत्ययः, वकारस्य चाकारः, 'अतो लोपः' ॥

### न्यासः

ध्वमो ध्वात् ॥ वारयध्वादिति । वृञो वृङो वा हेतुमण्णिजन्ताद् 'वृञ् आवरणे' इत्यस्माद्वा चुरादिण्यन्ताल्लोट्, तस्य ध्वम्, तस्य ध्वात् । वारयध्वमिति । टेरेत्वे कृते 'सवाभ्यां वामौ' इत्यमादेशः ॥

यजध्वैनमिति च ॥ तस्य तात् ॥ लोण्मध्यमपुरुषबहुवचनस्येति । अथ प्रथमपुरुषस्यैकवचनं कस्मान्न भवति ? छन्दसि यथादृष्टानुविधानात्, अपिशब्दानुवृत्तेर्वा । कृणुतादिति । 'कृवि हिंसाकरणयोः' इत्यस्येदित्त्वान्नुम्, 'धिन्विकृण्व्योरं च' इत्युप्रत्ययः, अकारश्चान्तादेशः, अतो लोपः । संसृजतादिति । सृजेस्तुदादित्वाच्छः । गमयतादिति । णिच्, 'मितां ह्रस्वः' ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## तप्तनप्तनथनाश्च ॥ ४५ ॥

'तस्य' इति वर्त्तते । छन्दसि विषये तस्य स्थाने तप्, तनप्, तन, थन—इत्येते आदेशा भवन्ति । तप्—शृणोत ग्रावाणः । शृणुतेति प्राप्ते । सुनोत । सुनुतेति प्राप्ते । तनप्—सं वरत्रा दधातन । धत्तेति प्राप्ते । तन—जुजुष्टन । जुषतेति प्राप्ते । छान्दसत्वात् श्लुः । थन—यदिष्ठन । यदिच्छतेति प्राप्ते ।

पित्करणमङित्त्वार्थम् ॥

## इदन्तो मसि ॥ ४६ ॥

छन्दसि विषये मसित्ययं शब्द इकारान्तो भवति । मसः सका-

### पदमञ्जरी

*तप्तनप्तनथनाश्च* ॥ *शृणोतेति* । 'श्रुवः शृ च' इति श्नुप्रत्ययः शृभावश्च, पित्त्वे सति ङित्त्वाभावाद् गुणः । *दधातनेति* । अत्रापि पित्त्वाभावात् 'श्नाभ्यस्तयोः' इत्याकारलोपाभावः । *जुजुष्टनेति* । व्यत्ययेन परस्मैपदम्, तुदादित्वाच्छः, तस्य 'बहुलं छन्दसि' इति श्लुः, द्विर्वचनम् । जुषेरनुदात्तेत्वात् जुषध्व*मिति प्राप्त* इति तु युक्तः पाठः । *यदिच्छतेति प्राप्त इति* । बह्वृचास्तु—'कोवस्तो मरुतो यतिष्ठन' इत्यस्यामृचि यतिष्ठनेति पठन्ति । यतिस्थनेति पदकाले, तत्रास्ते रूपम् ॥

*इदन्तो मसि* ॥ मसीत्यविभक्तिको निर्देशः । इकार उच्चारणार्थः । अन्त-

### न्यासः

तप्तनप्तनथनाश्च ॥ शृणोतेरिति । 'श्रुवः शृ च' इति श्नुप्रत्ययः, शृभावश्च । पित्त्वे ङित्त्वाभावाद् गुणः । सुनोतेति । 'स्वादिभ्यः श्नुः' । दधातनेति । दधातेः 'श्लौ' इति द्विर्वचनम् । अत्रापि पूर्ववत् ङित्त्वाभावात् 'श्नाभ्यस्तयोरातः' इत्याकारलोपो न भवति । धत्तेति । 'दधस्तथोश्च' इत्यभ्यासदकारस्य धकारः । धातोराकारलोपे कृते 'झलां जश् झशि' इति जश्त्वम्—दकारः, तस्य 'खरि च' इति चर्त्वम्—तकारः । जुजुष्टनेति । जुषेः पूर्ववच्छः, तस्य 'बहुलं छन्दसि' इति श्लुः, द्विर्वचनम्, ष्टुत्वम् । यदिष्ठनेति । इषेरिच्छार्थात् पूर्ववच्छः, 'बहुलं छन्दसि' इति तस्य लुक् । यदिच्छतेति । 'इषुगमियमां छः' । चकारस्तस्येत्यस्येहानुकर्षणार्थः ॥

इदन्तो मसि ॥ इदन्त इति । तकारोऽसन्देहार्थः । असति हि तकारे यणादेशे कृते 'यन्तः' इति भवितव्यम्, तत्र सन्देहः स्यात्—किमयं यकारान्तः, उतेकारान्तः इति । इद् अन्तो यस्य इदन्तः । मसित्ययं शब्दोऽन्यपदार्थः । सकारान्तमसीत्यविभक्तिकोऽयं निर्देशः; 'सुपां सुलुक्' इति प्रथमैकवचनस्य लुप्तत्वात् । इकार उच्चारणार्थः । मसीत्ययं शब्द इकारान्तो भवतीत्यस्यार्थं मसः सकारान्तस्येत्यादिना व्यक्तीकरोति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



रान्तस्य इकारागमो भवति, स च तस्यान्तो भवति। तद्ग्रहणेन गृह्यत इत्यर्थः। पुनस्त्वोद्दीपयामसि। दीपयाम इति प्राप्ते। शलभं भञ्जयामसि। भञ्जयाम इति प्राप्ते। त्वयि रात्रिं वसामसि। वासयाम इति प्राप्ते।

**पदमञ्जरी**

शब्दोऽवयववचनः—इत् अन्तो यस्य स इदन्तः। तपरकरणमसन्देहार्थम्, 'यन्तः' इत्युच्यमाने सन्देहः स्यात्—किं यकारान्त ईदन्तः? इदन्तो वेति? तत्र यदि सकारोपमर्देन इकारान्तमभिप्रेतं स्यात्, 'मस इत' इत्येव वाच्यं स्यात्। तस्मादवस्थित एव सकार इकार उपसृज्यते। अन्तग्रहणाच्च तद्ग्रहणेन गृह्यते, ततश्च टित्त्वादेरागमलिङ्गस्याभावेऽपि अर्थादागमोऽयं सम्पद्यते। तदिदमुक्तम्—*मसः सकारान्तस्येत्यादि*। एवं च 'मस इक्' इति वक्तव्यम्? प्रत्याहारसन्देहप्रसङ्गात्तथा नोक्तम्॥

**न्यासः**

'सकारान्तस्य' इत्यनेन मन्त्रं वोचेमेत्यत्राकारान्तस्य न भवतीति दर्शयति। कथं पुनः सकारान्तस्योपादानेऽसकारान्तस्य प्राप्नोति? एकदेशविकृतस्यानन्यत्वात्। यद्येवम्, कस्मान्न भवति? छन्दसि यथादृष्टानुविधानात्। अपीत्यधिकाराद्वा। वोचेमेति। वचेः परस्याशिषि लिङो मस्, यासुट्, 'लिङ्याशिषि' इत्यङ्, 'अतो येयः' इतीयादेशः, 'वच उम्' इत्यमागमः। 'छन्दस्युभयथा' इति सार्वधातुकत्वात् 'लिङः सलोपोऽनन्त्यस्य' इति सलोपः, 'नित्यं ङितः' इत्युत्तमस्य सलोपः, 'लोपो व्योर्वलि' इति यकारस्य च, 'आद् गुणः'। आगम इकारो भवतीति। कथम्पुनरयमागमः? कथञ्च न स्यात्? आगमलिङ्गाभावात्। टित्त्व-कित्त्व-मित्त्वान्यागमलिङ्गानि, अत्र चैषामेकमपि नास्ति, ततो नासावागमः, यथा—'अस्तेर्भूः' इति भूभावः। यद्येवम्, 'न य्वाभ्यां पदान्ताभ्यां पूर्वौ च ताभ्यामैच्' इत्यैजागमो न स्यात्। अथ पूर्वग्रहणात् तस्यागमत्वमवसीयते? अस्याप्यन्तग्रहणादवसीयताम्। यथैव हि पूर्वशब्दोऽवयववचनो नियतदेशमवयवमाचष्टे, तथान्तशब्दोऽपीति समानमेतत्। स च तस्यान्तो भवतीति। अन्त एकदेशोऽवयव इति यावत्। अत एवासौ तद्ग्रहणेन गृह्यत इत्याह—तद्ग्रहणेनेत्यादि। एतेनागमत्वमिकारस्य दर्शयति। 'आगमो हि तद्ग्रहणेन गृह्यते' इति प्रसिद्धमेतत्। तद्ग्रहणे च प्रयोजनम्—पृथक् स्वरनिवृत्तिरिति, 'तिङ्ङतिङः' इति निघातश्च। 'मस इक्' इति नोक्तम्; असन्देहार्थम्। एवं ह्युच्यमाने सन्देहः स्यात्—किमिगागमः, उत प्रत्याहार इति। दीपयामसि, जम्भयामसीति। 'दीपी दीप्तौ', 'जभि जृभी गात्रविनामे'—आभ्यां ण्यन्ताभ्यां लट्, 'रधिजभोरचि' इति नुम्। क्वचिद् भञ्जयामसीति पाठः। स च 'भञ्जो आमर्दने' इत्यस्य ण्यन्तस्य वेदितव्यम्॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


## क्त्वो यक् ॥ ४७ ॥

'क्त्वा' इत्येतस्य यगागमो भवति छन्दसि विषये। दत्त्वाय सविता धियः। दत्त्वेति प्राप्ते।

'क्त्वापि छन्दसि' इत्यस्यानन्तरमिदं कस्मान्नोच्यते? 'समासे' इति तत्रानुवर्त्तते॥

## इष्ट्वीनमिति च ॥ ४८ ॥

'इष्ट्वीनम्'—इत्ययं शब्दो निपात्यते छन्दसि विषये। यजेः क्त्वाप्रत्ययान्तस्य ईनमादेशोऽन्त्यस्य निपात्यते। इष्ट्वीनं देवान्। इष्ट्वा देवानिति प्राप्ते।

पीत्वीनमित्यपीष्यते। चकारस्यानुक्तसमुच्चयार्थत्वात्सिद्धम्॥

## स्नात्व्यादयश्च ॥ ४९ ॥

'स्नात्वी'—इत्येवमादयः शब्दा निपात्यन्ते छन्दसि विषये। स्नात्वी मलादिव। स्नात्वेति प्राप्ते। पीत्वी सोमस्य वावृधे। पीत्वेति प्राप्ते।

### पदमञ्जरी

*क्त्वो यक्* ॥ दत्त्वायेति। 'दो दद्घोः'। 'सौभाग्यमस्यै दत्त्वाय', 'दत्त्वायास्मभ्यं द्रविणेह भद्रः'-इत्यादिमन्त्रगतमुदाहरणम्। *दत्त्वाय सविता धियमिति* क्वचित् पठ्यते, तत्र *तैत्तिरीयकास्*तत्त्वायेति पठन्ति।

*क्त्वापि छन्दसीत्यादि*। एवं हि पुनः त्त्वाग्रहणं न कर्त्तव्यं भवति॥

### न्यासः

**क्त्वो यक्** ॥ दत्त्वायेति। 'दो दद् घोः' इति ददादेशः।

**क्त्वापि छन्दसीत्यादि**। एवमुच्यमाने द्विः क्त्वाग्रहणं न कर्त्तव्यमिति भावः। समास इत्यत्रानुवर्त्तत इति। 'समासेऽनञ्पूर्वे' इत्यतः। यदि तस्यानन्तरमिदमुच्यते, तत्रापि समासग्रहणमनुवर्त्तत इत्याशङ्का स्यात्, ततस्तस्यानुवृत्तिनिवृत्त्यर्थं तस्यानन्तरमिदं नोक्तमित्यभिप्रायः॥

**इष्ट्वीनमिति च** ॥ इष्ट्वीनमिति। वच्यादिसूत्रेण सम्प्रसारणम्। पीत्वीनमिति। 'घुमास्था' इत्यादिनेत्त्वम्। एतच्चेतिकरणादाद्यर्थाच्चकारस्यानुक्तसमुच्चयार्थत्वाद्वा लभ्यते। अनयोरन्यतरोपादानेनैव सिद्ध उभयोरुपादानं वैचित्र्यार्थम्॥

**स्नात्व्यादयश्च** ॥ स्नात्वी, पीत्वीति। आकारस्य स्थान ईत्त्वन्निपात्यते। ननु च स्नात्व्यादयः शब्दाः प्रातिपदिकगणे न पठ्यन्ते, तत् कथं ते वेदितव्याः?

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रकारार्थोऽयमादिशब्दः ॥

**आज्जसेरसुक् ॥ ५० ॥**

अवर्णान्तादङ्गादुत्तरस्य जसेरसुगागमो भवति छन्दसि विषये। ब्राह्मणासः पितरः सोम्यासः। ब्राह्मणाः सोम्या इति प्राप्ते।

ये पूर्वासो य उपरासः—इत्यत्र परत्वादसुकि पुनः प्रसङ्गविज्ञानाच्छीभावः प्राप्तः, 'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव' इति न भवति ॥

**अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि ॥ ५१ ॥**

**पदमञ्जरी**

*आज्जसेरसुक्* ॥ 'जसेः' इति पूर्वाचार्यानुरोधेन निर्देशः। *ब्राह्मणास इति*। असुकि कृते जसः सकारस्य श्रवणम्, असुकः सकारस्य विसर्जनीयः।

*ये पूर्वास इत्यादि*। चोद्यम्—*उपरास इति*। अपरशब्दस्यादेरुकारश्छान्दसः। यदि पुनरयं पूर्वान्तः क्रियते—'अस्य जस्यसुक्' इति, नैवं शक्यम्, 'अतो गुणे' पररूपत्वं हि स्यात्। अकारोच्चारणं तु—उत्तरसूत्रे दध्यस्यतीत्यादौ श्रवणार्थं स्यात्। *सकृद्गतावित्यादि* परिहारः। यद्यप्येत्सर्वनामसंज्ञाया पूर्वादिषु जसि विकल्पनादेव सिद्धम्; 'उभयासो जातवेदः स्याम' इत्यत्र तु शीभावप्रसङ्गः, अत्र हि 'प्रथमचरम' इति विकल्पं बाधित्वा सर्वादिषु पाठान्नित्या संज्ञा भवति, सा ह्यन्तरङ्गा ॥

**न्यासः**

कथं चादिशब्देन ते शक्या लक्षयितुम्? इत्याह—प्रकारार्थोऽयमादिशब्द इति। एवम्प्रकारा य एतत्सदृशाः शब्दास्ते स्नात्व्यादयो वेदितव्या ॥

**आज्जसेरसुक्** ॥ जसेरिति पूर्वाचार्यनिर्देशः। पूर्वाचार्या हि जसिरित्येवं विहितवन्तः। ये पूर्वासः, ये परास इत्यत्रेत्यादि चोद्यम्। एतच्च जातौ पदार्थे। तत्रान्यत्र चरितार्थत्वाच्छास्त्रयोस्तुल्यबलयोर्विरोधे सति परस्परप्रतिबन्धादप्रवृत्तौ प्राप्तायां 'विप्रतिषेधे परं कार्यम्' इति क्रियते—विप्रतिषेधे परं भवति, तत्र कृते यदि पूर्वमपि प्राप्नोति तदपि भवतीति जातिपदार्थः पुनःप्रसङ्गविज्ञानस्य विषयः। सकृदित्यादिना परीहारः। एष च व्यक्तौ पदार्थेऽन्यत्राकृतार्थत्वाद् द्वयोरपि शास्त्रयोरीदृशे विषये पर्यायेण प्रवृत्तौ प्राप्तायामयं नियम आरभ्यते—विप्रतिषेधे परमेव भवति, न पूर्वमिति। तेन पुनःप्रसङ्गविज्ञानाभावाद् बाधितः शीभावो न भवति। न ह्यसति पुनःप्रसङ्गे यद् बाधितं तदुत्सहते पुनर्भवितुम् ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


'छन्दसि' इत्यतःप्रभृति निवृत्तम् । अश्व, क्षीर, वृष, लवण– इत्येतेषामङ्गानामात्मप्रीतिविषये क्यचि परतोऽसुगागमो भवति । अश्वस्यति वडवा । क्षीरस्यति माणवकः । वृषस्यति गौः । लवणस्यत्युष्ट्रः ।

आत्मप्रीताविति किम् ? अश्वीयति । क्षीरीयति । वृषीयति । लवणीयति ।

❀ अश्ववृषयोर्मैथुनेच्छायामिति वक्तव्यम् ❀ ।

❀ क्षीरलवणयोर्लालसायामिति वक्तव्यम् ❀ । तृष्णातिरेकः= लालसा । अन्यत्रात्मप्रीतावपि न भवति ।

पदमञ्जरी

*अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि ॥ अश्वस्यतीति* । असुकोऽकारः पूर्वत्र ब्राह्मणास इत्यादौ चरितार्थ इति 'अतो गुणे' इति पररूपत्वं भवति, 'नः क्ये' इति नियमादपदान्तोकारः । *मैथुनेच्छायामिति* । अश्वविषयेच्छा यदा मैथुनार्था, तदैवासुग्भवति । मैथुनेच्छापरत्वाच्च प्रयोगस्याश्ववृषोपादानमतन्त्रमिति मनुष्यादिविषयेऽपि प्रयुज्यते इति—रामो वृषस्यन्तीमिति । *तृष्णातिरेक इति* । अभ्यवजिहीर्षा=अतिरेकः, क्षीरलवणविषय इच्छातिरेको यदाभ्यवहा-

न्यासः

अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि ॥ आत्मप्रीताविति विषयसप्तमीयम् । अत एवाह—आत्मप्रीतिविषये क्यचीति । आत्मप्रीतिर्विषयो यस्य क्यचः स तथोक्तः । अश्वस्यतीति । आत्मनोऽश्वमिच्छतीति 'सुप आत्मनः क्यच्', अनेनासुक्, 'अतो गुणे' पररूपत्वम् । एवं क्षीरस्यतीत्यादावपि वेदितव्यम् । सर्वत्रात्मप्रीतिविषये क्यच् । यो ह्यात्मनोऽश्वादिकमिच्छति स नियोगत आत्मनः प्रीत्यर्थमिच्छति । यद्येवम्, इच्छायां क्यज्विधीयमानः सर्वत्रात्मप्रीतिविषये भविष्यतीतीच्छायां वक्तव्यम् ? प्रसिद्ध्युपसंग्रहार्थमात्मप्रीताविति लौकिकस्यार्थस्योपादानम्, तेन यत्रात्मप्रीतावसुग्लोके प्रयुज्यते तत्रैव भवति, नान्यत्र । तेनाश्ववृषयोर्मैथुनेच्छायां क्षीरलवणयोर्लालसायामित्युपपन्नं भवति ।

अश्वीयतीति । अश्वमिवाचरतीति 'उपमानादाचारे' इति क्यच्, 'क्यचि च' इतीत्वम् ।

अश्ववृषयोरित्यादि । 'अश्ववृषयोर्मैथुनेच्छायामसुग्भवति'–इत्येतदर्थरूपं व्याख्येयमित्यर्थः ।

क्षीरलवणयोरित्यादि । वक्तव्यमित्येतदपेक्षते । 'क्षीरलवणयोर्लालसायामसुग्भवति' इत्येतदर्थरूपं व्याख्येयमित्यर्थः । व्याख्यानं तु कृतमेव । अन्यत्रात्मप्रीतावपि न भवतीति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


अपर आह—ॐ सर्वप्रातिपदिकेभ्यो लालसायामसुग्वक्तव्यः ॐ । दध्यस्यति, मध्वस्यति, इत्येवमाद्यर्थम् ।

अपर आह—ॐ सुग्वक्तव्यः ॐ । दधिस्यति, मधुस्यति—इत्येवमाद्यर्थम् ॥

**आमि सर्वनाम्नः सुट् ॥ ५२ ॥**

'आत्' इति वर्त्तते । अवर्णात्सर्वनाम्न उत्तरस्यामः सुडागमो भवति । सर्वेषाम् । विश्वेषाम् । येषाम् । तेषाम् । सर्वासाम् । यासाम् । तासाम् । आदित्येव—भवताम् ।

'आमि' इति षष्ठीबहुवचनं गृह्यते, न 'ङेराम्नद्याम्नीभ्यः' इति, तस्य हि परत्वादाड्याट्स्याटो भवन्ति । यश्च 'किमेत्तिङव्यय-

**पदमञ्जरी**

रार्थो न तु होमाद्यर्थस्तदेत्यर्थः । *सर्वप्रातिपदिकेभ्य इति* । तादर्थ्ये एषा चतुर्थी सर्वप्रातिपदिकार्थम्, सर्वेषां प्रातिपदिकानामित्यर्थः ।

*आमि सर्वनाम्नः सुट्* ॥ इमे बहव आमः—ङस्-ओस्-आम्, 'ङेराम्नद्याम्नीभ्यः', 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे', 'कास्प्रत्ययादाममन्त्रे लिटि', तेषु कस्येदमामो ग्रहणम् ? इत्याह—*आमिति षष्ठीबहुवचनं गृह्यत इति । तस्य हि परत्वादिति ।*

सुटो नुटश्च षष्ठीबहुवचनमवकाशः, आट्प्रभृतीनां चतुर्थ्येकवचनादि; ङेराम उभयप्रसङ्गे परत्वादाडादयो भवन्ति, तेषु कृतेषु सकृद्गतिन्यायाश्रयणात् सुट्नुटौ न भवतः । *यश्च घादामुरिति* । 'किमेत्तिङव्ययघादामु' इत्येव । चस्त्वर्थे,

**न्यासः**

आत्मनोऽश्वादिकमिच्छत्यश्वीयतीति । लवणीयति । तृष्णातिरेक इति । तृष्णाया अतिरेकः=अतिशयः, प्रकर्षः, आधिक्यमित्यर्थः ॥

**आमि सर्वनाम्नः सुट्** ॥ 'ह्रस्वनद्यापो नुट्' इति प्राप्ते वचनम् ।

**आमीति षष्ठीबहुवचनं परिगृह्यत इति** । इह बहव आमः सम्भवन्ति—षष्ठीबहुवचनम्, 'ङेराम्नद्याम्नीभ्यः' इति, 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' इति, 'कास्प्रत्ययादाममन्त्रे लिटि' इत्याम्; एषां यदि सर्वेषां ग्रहणं स्यात् तदा सर्वेषाम् 'ह्रस्वनद्यापो नुट्' इति नुट् प्रसज्येत, तत्राप्येतदेवाम्ग्रहणमनुवर्त्तते, षष्ठीबहुवचनस्यैवेष्यते, अतस्तदेव गृह्यत इत्याह—तस्य हि परत्वादित्यादि । सुटो नुटश्च षष्ठीबहुवचनमवकाशः, आट्प्रभृतीनां तु चतुर्थ्येकवचनादिः, 'ङेराम्नद्याम्नीभ्यः' इति परत्वादाडादयो भवन्ति । तत्र 'आण्नद्याः' इत्याट्—कुमार्यामिति । 'याडापः' इति याट्—खट्वायामिति । 'सर्वनाम्नः स्याड्ढ्रस्वश्च' इति स्याट्—सर्वस्यामिति । यस्तर्हि

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



घादामुः', आम् च लिटि; न तौ सर्वनाम्नः स्तः । सानुबन्धकाविति वा, तौ न गृह्येते ।

'आमि' इति सप्तमीनिर्देश उत्तरार्थः । इह तु 'सर्वनाम्नः' इति पञ्चमीनिर्देशात् 'तस्मादित्युत्तरस्य' इति षष्ठीप्रक्लृप्तिर्भविष्यति ॥

त्रेस्त्रयः ॥ ५२ ॥

पदमञ्जरी

तुरेव वा पठितव्यः । *आम् च लिटीति* । लिटि परतो य आम् 'कास्प्रत्ययात' इति विहित इत्यर्थः । *न तौ सर्वनाम्नः परौ स्त इति* । तेनात्र तावत्तयोरग्रहणम्, यस्य चात्र ग्रहणं तस्यैवोत्तरत्राप्यधिकार इति नुड्विधावपि तयोरग्रहणमिति भावः । आचारक्विबन्तानां सर्वादीनां सर्वार्थत्वाभावात्सर्वनामसंज्ञाभावात्सर्वनाम्नो लिड्यामोऽसम्भवः । यस्तु मन्यते—इह सामान्यग्रहणे सति यथासम्भवं प्रकरणे कार्यप्रतिपत्तिः, ततश्च तयोरपि नुट्प्रसङ्ग इति, तं प्रति परिहारान्तरमाह—*सानुबन्धकाविति वेति* । सामान्यग्रहणे तु सति पचतितरामित्यत्र यस्येतिलोपं बाधित्वा परत्वान्नुट् स्यात । कारयाम्, चिकीर्षामित्यत्र तु नित्यत्वाद् 'अयामन्त' इत्ययादेशे, अतो लोपे च कृते ह्रस्वाभावान्नास्ति नुटः प्रसङ्गः ।

*उत्तरार्थमिति* । 'त्रेस्त्रयः' इत्यामि परतो यथा स्यात । इह *त्विति* । पञ्चमीनिर्देशस्तु 'आत्' इत्यनुवृत्तेन सामानाधिकरण्यादवसीयते, एवं च कृत्वा 'ह्लि सर्वेषाम्' इति निर्देशोपपत्तिः ॥

न्यासः

घान्तादाम् विधीयते यश्च लिट्याम् तौ कस्मान्न गृह्येते ? इत्याह—यश्च किमित्यादि । तयोर्ह्येको घान्ताद् विधीयतेऽपरो धातोः । न च घान्तस्य सर्वनामसंज्ञा, नापि धातोरिति । न तौ सर्वनाम्नः परौ सम्भवत इति न गृह्येते । अथ तु सर्वनाम्नः परौ न सम्भवत इति कृत्वैतदर्थं तयोर्ग्रहणमनुपपन्नम्, तथाप्युत्तरार्थं तूपपद्यते, विद्येते तौ हि ह्रस्वान्तात् परौ—पचतितराम्, पचतितमाम्, चिकीर्षाञ्चकार, कारयाञ्चकार ? इत्यत आह—सानुबन्धकाविति वा तौ न गृह्येते इति । निरनुबन्धकपरिभाषयेति भावः । तत्र घादामोरुकारोऽनुबन्धः, इतरस्य त्वकारः । तथा चोक्तम्—आमोऽमित्त्वमदन्तत्वादिति ।

उत्तरार्थं इत्यादि । 'त्रेस्त्रयः' इत्यामि परतो यथा स्यात् । एतदर्थोऽप्यामीति सप्तमीनिर्देशः कस्मान्न भवति, अस्ति ह्यत्रापि प्रयोजनम्—आमि परतः सर्वनाम्नः सुड् यथा स्यात् ? इत्यत आह—इह त्वित्यादि । 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' इति 'तस्मादित्युत्तरस्य' इति 'सर्वनाम्नः' इत्यनया पञ्चम्या आमीत्यस्याः सप्तम्याः, षष्ठ्यां परिकल्पितायामाम एव सुटा भवितव्यमिति नास्तीह निर्देशस्य प्रयोजनम् ॥

त्रेस्त्रयः ॥ 'ह्रस्वनद्यापो नुट्' इति प्राप्ते वचनम् । त्रयाणामिति । 'सुपि च' इति

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



'त्रि' इत्येतस्य आमि परे 'त्रय' इत्ययमादेशो भवति । त्रयाणाम् । त्रीणामित्यपि छन्दसीष्यते—त्रीणामपि समुद्राणामिति ॥

ह्रस्वनद्यापो नुट् ॥ ५४ ॥

ह्रस्वान्तान्नद्यन्तादाबन्ताच्चोत्तरस्यामो नुडागमो भवति । ह्रस्वान्तात्तावत्—वृक्षाणाम् । प्लक्षाणाम् । अग्नीनाम् । वायूनाम् । कर्तॄणाम्[1] । नद्यन्तात्—कुमारीणाम् । किशोरीणाम् । गौरीणाम् । शार्ङ्गरवीणाम् । लक्ष्मीणाम् । ब्रह्मबन्धूनाम् । वीरबन्धूनाम् । मालानाम् । बहुराजानाम् । कारीषगन्ध्यानाम् ॥

षट्चतुर्भ्यश्च ॥ ५५ ॥

षट्संज्ञकेभ्यश्चतुःशब्दाच्चोत्तरस्यामो नुगाडमो भवति । षण्णाम् ।

पदमञ्जरी

*त्रेस्त्रयः* ॥ त्रेरिति षष्ठी, न पञ्चमी; 'णिजां त्रयाणाम्' इति निर्देशात् ॥

*ह्रस्वनद्यापो नुट्* ॥ ह्रस्वनद्याप इति पञ्चमी; 'नामि' इति लिङ्गेन; अन्यथाऽङ्गनिमित्तस्य नामो न ह्यस्ति सम्भवः ॥

*षट्चतुर्भ्यश्च* ॥ *पञ्चानामिति* । नुटि कृते 'नोपधायाः' इति दीर्घः । 'न-

न्यासः

दीर्घः[2] । ननु च 'णिजां त्रयाणां गुणः श्लौ' इति निपातनादेव सिद्धम्, तत्किमर्थमिदमारभ्यते ? एवं सिद्धे सतीदमारभ्यमाणमेतज्ज्ञापयति—'अबाधकान्यपि निपातनानि भवन्ति' इति, तेन पुरातनमिति सिद्धं भवति; अन्यथा 'पुराणप्रोक्तेषु' इति निपातनेन बाधितत्वान्न सिध्यति ।

त्रीणामपीष्यते छन्दसीति । एतच्चापीत्यधिकाराद्वा, 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति वा लभ्यते ॥

ह्रस्वनद्यापो नुट् ॥ कुमारीणामिति । 'वयसि प्रथमे' इति ङीप् । गौरीणामिति । 'षिद्गौरादिभ्यश्च' इति ङीष् । शार्ङ्गरवीणामिति । 'शार्ङ्गरवाद्यञो ङीन्' इति ङीन् । लक्ष्मीणामिति । ब्रह्मबन्धूनामिति । ब्रह्मा बन्धुरासामिति बहुव्रीहिः । 'ऊङुतः' इत्यूङ् । खट्वानामिति । 'अजाद्यतष्टाप्' । बहुराजानामिति । 'डाबुभाभ्यामन्यतरस्याम्' इति डाप् । कारीषगन्ध्यानामिति । कारीषगन्धेरपत्यमित्यण्, तस्य 'अणिञोरनार्षयोः' इत्यादिना ष्यङादेशः, 'यङश्चाप्' इति चाप् ॥

षट्चतुर्भ्यश्च ॥ पञ्चानामिति । 'नोपधायाः' इति दीर्घः, 'नलोपः प्रातिपदिका-

१. 'हर्तॄणाम्' इत्यपि बहुषु पुस्तकेष्वस्ति ।

२. 'सुपि च' इति दीर्घो यद्यपि परस्तथापीह न प्रवर्त्तते; सन्निपातपरिभाषाविरोधादिति भट्टोजिप्रभृतिमतेऽत्र 'नामि' इत्यनेनैव दीर्घः । ( प्र० सं० स० )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पञ्चानाम् । सप्तानाम् । नवानाम् । दशानाम् । चतुर्णाम् ।

रेफान्तायाः संख्यायाः षट्संज्ञा न विहिता; 'षड्भ्यो लुक्' इति लुग्मा भूत् । बहुवचननिर्देशादत्र संख्याप्रधानस्य ग्रहणं भवति—परमषण्णाम् । परमपञ्चानाम् । परमसप्तानाम् । परमचतुर्णाम् ।

उपसर्जनीभूतायास्तु संख्याया न भवति—प्रियषषाम्, प्रियपञ्चाम्, प्रियचतुरामिति ॥

पदमञ्जरी

लोपः प्रातिपदिकान्तस्य' । *षण्णामिति* । 'झलां जशोऽन्ते'–इति षकारस्य डकारः, 'यरोऽनुनासिके' इति डकारस्य णकारः, ष्टुत्वम् ।

अथ 'ष्णान्ताः षट्' इति रेफस्य प्रक्षेपणेन रेफान्ताया अपि संख्याया षट्संज्ञा कस्मान्न विहिता, एवं ह्यत्र चतुर्ग्रहणं न कर्त्तव्यं भवति, तथा 'षट्त्रिचतुर्भ्यो हलादिः' इत्यत्रापि ? इत्यत आह—*रेफान्ताया इति* । *बहुवचननिर्देशादिति* । शब्दप्राधान्ये हीतरेतरयोगे द्विवचनेन भाव्यम्, समाहारद्वन्द्वे त्वेकवचनेन भाव्यम्, अर्थप्राधान्ये तु षट्संज्ञका एव प्रत्येकं बह्वर्थाश्चतुःशब्दश्चेत्युपपद्यते बहुवचनम् । अत्रामः परत्वं शब्दद्वारकम् । *परमषण्णामिति* । अत्रापि षडर्थप्राधान्यात्तत एव पर आम् भवति । बहुव्रीहौ त्वन्यपदार्थस्य प्राधान्यान्न षडर्थापेक्षं परत्वमिति न भवति ।

*प्रियपञ्चामिति* । अल्लोपे कृते चुत्वम्—ञकारः ॥

न्यासः

न्तस्य' इति नलोपः । षण्णामिति । 'झलां जशोऽन्ते' इति षकारस्य डकारः, 'यरोऽनुनासिकेऽनुनासिको वा' इति डकारस्य णकारः, 'ष्टुना ष्टुः' इति नकारस्य णकारः ।

'ष्णान्ता षट्' इति रेफान्ताया अपि संख्याः कस्मान्न विहिता षट्संज्ञेति, एवं सतीह चतुर्ग्रहणं न कर्त्तव्यं भवति ? इत्याह—रेफान्ताया इत्यादि । गतार्थम् । बहुवचननिर्देशादि । यदि हि शब्दस्य प्रधानस्य ग्रहणं स्यात्, तदेतरेतरयोगपक्षे 'षट्चतुर्भ्याम्' इति द्विवचने निर्देशं कुर्यात् , समाहारपक्षे त्वेकवचनेन 'षट्चतुरः' इति, बहुवचनेन तु निर्देशः कृतः । तस्माद् बहुवचननिर्देशात् संख्याप्रधानस्यैव षट्संज्ञकस्य चतुःशब्दस्य च ग्रहणम् । तस्य चेदं प्रयोजनम्—यत्र संख्यायाः प्राधान्यं तदन्तादपि यथा स्यात् । अत एव परमषण्णामित्यादिषूत्तरपदार्थप्रधानत्वात् तत्पुरुषस्य संख्यायाः प्राधान्यम्, तेन तदन्तादपि भवति । अर्थप्रधाने हि निर्देशेऽर्थग्रहणमेतद् भवति, अर्थाच्च शब्दद्वारेणैवामः परत्वं विज्ञायते । अतः केवलेभ्यः षट्चतुर्भ्यो भवति, तदन्ताच्च । तदन्तादपि शब्दद्वारेणैवामः परत्वं भवत्येव ।

उपसर्जनीभूतायास्त्वित्यादि । बहुवचननिर्देशाद्धि संख्यार्थस्येदं ग्रहणम् । स चार्थो द्विविधः—प्रधानः, अप्रधानश्च । तत्र प्रधाने कार्यसम्प्रत्ययाद्यत्र संख्यायाः प्राधान्यं

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## श्रीग्रामण्योश्छन्दसि ॥ ५६ ॥

श्री, ग्रामणी—इत्येतयोश्छन्दसि विषये आमो नुडागमो भवति। श्रीणामुदारो धरुणो रयीणाम् । अपि तत्र सूतग्रामणीनाम् ।

श्रीशब्दस्य 'वामि' इति विकल्पेन नदीसंज्ञा, तत्र नित्यार्थं वचनम् ।

सूतग्रामणीनामिति—यदा सूताश्च ग्रामण्यश्च सूतग्रामण्यो भवन्ति, तदर्थमिदं वचनम् । यदा तु सूतश्च ग्रामणीश्च सूतग्रामणि, सूतग्रामणि च सूतग्रामणि च सूतग्रामणि चेति सूतग्रामणीनामिति, तदा ह्रस्वादित्येव सिद्धम् ॥

### पदमञ्जरी

*श्रीग्रामण्योश्छन्दसि ॥ नित्यार्थं वचनमिति* । अन्यथा भाषायामिव विकल्पः स्यात्, छन्दसि नुडेव चेद् दृश्यते, तस्य च लक्षणमस्ति, कोऽयं विकल्पप्रसङ्ग इति ? चिन्त्यमेतत् ।

*सूताश्च ते ग्रामण्यश्चेति* । नेदं कर्मधारयस्य वाक्यम्, किं तर्हि ? बहुवचनान्तयोर्यदेतरेतरयोगे द्वन्द्वस्तदा नुड्विधेः प्रयोजनम् । यदैकवचनान्तयोः समाहारद्वन्द्वं कृत्वा एकशेषः क्रियते तदा ह्रस्वान्तत्वादेव नुट् सिद्ध इति न प्रयोजनमिति दर्शयति । एवं च तेशब्दो न पठितव्यः ।

अत्रापि नुडेव चेद् दृश्यते तस्य च निर्वाहोऽस्ति, इतरेतरेतरयोगद्वन्द्वो न करिष्यते, तदेवमिदं सूत्रं *भाष्ये* प्रत्याख्यातम् ॥

### न्यासः

तत्र तदन्तादपि भवति । यत्र तूपसर्जनीभूता संख्या तत्र न भवति—प्रियषषामित्यादौ । अन्यपदार्थस्य ह्यत्र प्राधान्यम्, संख्यायास्त्वप्राधान्यम् । प्रियपञ्चामिति । अल्लोपे कृते 'स्तोः श्चुना श्चुः' इति श्चुत्वम् ॥

**श्रीग्रामण्योश्छन्दसि** ॥ श्रीग्रामण्योरिति सम्बन्धलक्षणा षष्ठी । नित्यार्थं वचनमिति । श्रीशब्दस्य, न तु ग्रामणीशब्दस्य । तस्य तु प्राप्त्यर्थमेव । यथैव हि भाषायां नदीसंज्ञापक्षे 'ह्रस्वनद्यापो नुट्' इति सिध्यति, तथा छन्दस्यपि । तस्मान्नित्यं यथा स्यादित्येवमर्थम् । असति ह्यस्मिन् यदा नदीसंज्ञा, तदैव स्यात्, नान्यदा ।

**यदा सूताश्चेत्यादि** । एतेनैतद् दर्शयति—यदा सूतशब्दस्य ग्रामणीशब्देन सह कर्मधारयः क्रियते तदा सूतग्रामणीशब्दो न ह्रस्वान्तः, न नद्यन्तः, नाप्यावन्त इति न प्राप्नोति, इष्यते च, ततो यथा स्यादित्येवमर्थं वचनम् । यदा सूतग्रामणीशब्दयोः 'सर्वो द्वन्द्वो विभाषयैकवद्भवति' इत्येकवद्भावी द्वन्द्वः, तदा 'स नपुंसकम्' इति नपुंसकत्वाद् 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वत्वं कृत्वा बहूनां सूतग्रामणीशब्दानामेकशेषश्च, ततः षष्ठीबहुवचनं विधीयते । तदा ह्रस्वान्तत्वादेव सिद्धमिति नार्थस्तदर्थेन वचनेन ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


## गोः पादान्ते ॥ ५७ ॥

'गो' इत्येतस्मादृक्पादान्ते वर्त्तमानादुत्तरस्यामो नुडागमो भवति। विद्मा हि त्वा गोपतिं शूर गोनाम्।

पादान्त इति किम्? गवां गोत्रमुदसृजो यदङ्गिरः। 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति पादान्तेऽपि क्वचिन्न भवति। हन्तारं शत्रूणां कृधि विराजं गोपतिं गवाम्॥

## इदितो नुम् धातोः ॥ ५८ ॥

इदितो धातोर्नुमागमो भवति। कुडि—कुण्डिता, कुण्डितुम्, कुण्डितव्यम्, कुण्डा। हुडि–हुण्डिता, हुण्डितुम्, हुण्डितव्यम्, हुण्डा।

इदित इति किम्? पचति। पठति।

अयं धातूपदेशावस्थायामेव नुमागमो भवति–कुण्डा, हुण्डेति; 'गुरोश्च हलः' इत्यकारप्रत्ययो यथा स्यात्। तथा हि–'धिन्विकृण्व्योर च' इति प्रत्ययविधावेव नुमनुषक्तयोर्ग्रहणम्।

### पदमञ्जरी

*गोः पादान्ते॥* 'छन्दसि' इत्यधिकारादृक्पादस्यैव ग्रहणम्, न श्लोकपादस्येत्याह—*ऋक्पादान्त इति॥*

*इदितो नुम् धातोः॥* 'कुडि दाहे', 'हुडि सङ्घाते'।

अङ्गाधिकारान् नुमयं प्रत्यये परतो भवेत्।
कुण्डेत्यादौ ततश्च किन्स्यान्नाकारो गुरोर्हलः?

इत्याशङ्क्याह—*अयमिति*। अत्र प्रमाणमाह–*तथा हीति*। कथं पुनरेतज्ज्ञापकम्, यावता 'इक्श्तिपौ धातुनिर्देशे वक्तव्यौ' इति इक्प्रत्यये कृतेऽङ्गसंज्ञायां सत्यां नुमा भवितव्यमिति लक्षणवशादेव नुमनुषक्तयोर्ग्रहणं कर्त्तव्यम्? एवं मन्यते–नायमिका निर्देशः, किं तर्हि? आगन्तुकेनेकारेण, तत्राप्राप्तो नुमिति।

### न्यासः

गोः पादान्ते॥ ऋक्पादान्ते वर्तमानादिति। छन्दसि ऋक्पाद एव सम्भवति, न श्लोकपाद इति ऋक्पादग्रहणम्॥

इदितो नुम् धातोः॥ कुण्डिता, हुण्डितेति। 'कुडि दाहे', 'हुडि सङ्घाते'—आभ्यां तृच्, इट्, 'ऋदुशनस्' इत्यादिनानङ्।

किमयं धातूपदेशावस्थायामेव नुम् विधीयते? इत्याह—कुण्डा, हुण्डेत्यादि। यदि प्रत्यय उत्पन्ने नुम् स्यात्, तदा प्रत्ययविधानवेलायां कुडिहुड्योरगुरुत्वात् किन्नेव


CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



धातुग्रहणं चेह क्रियते—धातूपदेशकाल एव नुमागमो यथा स्यादित्येवमर्थम्। तासिसिचोरिदित्कार्यं नास्ति—इत्युच्चारणार्थो निरनुनासिक इकारः पठ्यते। अमंस्तेत्येवमादौ हि 'हनः सिच्' इति कित्त्वविधानसामर्थ्यान्नकारलोपो न भवति।

पदमञ्जरी

नात्र किञ्चित्प्रमाणमस्तीत्याशङ्क्याह-*धातुग्रहणं चेति*। धातुत्वमेवापेक्षितं न त्वङ्गत्वमित्येवमर्थं धातुग्रहणम्, नान्यत्किञ्चित्प्रयोजनमस्तीति भावः। ननु च भेत्ता, अभैत्सीदित्यत्राधात्वोस्तासिसिचोरिदितोर्नुम्निवृत्त्यर्थं धातुग्रहणं स्यात्? अत आह-*तासिसिचोरिति*। ननु चामंस्तेत्यादौ आत्मनेपदं ङितमपेक्ष्य सिजन्तस्य 'अनिदिताम्' इति लोप मा भूदित्येतत्सिचीदित्कार्यं स्यात्? इत्यत आह—*अमंस्तेत्यादाविति*। यथा 'हनः सिच्' इति कित्त्वविधानमस्य लिङ्गं तथा तत्रैव प्रतिपादितम्।

न्यासः

स्यात्, न त्वकारप्रत्ययः, स चेष्यते। तस्मात् तदर्थं धातूपदेशावस्थायामेव नुम् भवतीत्यवसीयते। कथं पुनर्धातूपदेशावस्थायां नुम् भवतीत्यवसीयते, यावतात्रोपदेशग्रहणं नास्ति? इत्याह—तथा हीत्यादि। 'धिन्विकृण्व्योर च' इत्युप्रत्ययविधानकाले नुमनुषक्तयोर्ग्रहणं सनुम्कयोरेव प्रकृतत्वं यथा स्यात्। एवं सनुम्कयोः प्रकृतत्वं भवति यद्युपदेशावस्थायामेव नुम् भवति, नान्यथा। तस्मान्नुमनुषक्तयोर्ग्रहणाज्ज्ञापकादवसीयते—धातूपदेशावस्थायामेव नुम् भवतीति। तस्य ह्येतत् प्रयोजनम्—उपदेशावस्थायामेव नुम् यथा विज्ञायेतेति। न हि तन्नुमर्थं प्रयुज्यते; नुम इदित्वादेव सिद्धत्वात्। ननु च 'इक्श्तिपौ धातुनिर्देशे' इतीगिति प्रत्ययेऽङ्गसंज्ञायां सत्यां नुमा भवितव्यम्, तत्र लक्षणवशादेव 'धिन्विकृण्व्योर च' इति नुमनुषक्तयोर्ग्रहणम्, तत् कथमस्यार्थस्य ग्रहणं ज्ञापकम्? नैतदस्ति; न हि 'धिन्वकृण्व्योर च' इत्ययमिका निर्देशः, स हि 'रोगाख्यायां ण्वुल् बहुलम्' इति बहुलवचनेन सन्निधानात् क्वचिदेव भवति, न सर्वत्र। एवञ्च 'गुप्तिज्किद्भ्यः सन्' इत्येवमादयो निर्देशा उपपद्यन्ते। तस्माद् 'धिन्विकृण्व्योः' इति नायमिका निर्देशः, किं तर्हि? उच्चारणार्थेनेकारेण, यथा—'इन्धिभवतिभ्याम्' इत्यत्रेकारेण निर्देशः; अन्यथा 'अनिदिताम्' इत्यादिनानुनासिकलोपः स्यात्।

अथापि हि 'धिन्विकृण्व्योः' इतीका निर्देशः स्यात्, एवमपि यदि धातूपदेशावस्थायामेव नुम्भवतीत्ययमर्थो ज्ञापयितुं नाभीष्टः स्यात्, ततो लाघवार्थमनित्यत्वादागमशासनस्य नुममकृत्वैव निर्देशं कुर्याद्, यथा—'युवोरनाकौ' इत्यत्र द्वन्द्वैकवद्भावपक्ष उक्तम्। तस्मान्नुमनुषक्तयोर्ग्रहणं ज्ञापकमेव धातुग्रहणादप्यवसीयते। नुमुपदेशावस्थायामेव भवतीति दर्शयितुमाह—धातुग्रहणं चेत्यादि। धातुसंज्ञाप्रवृत्तिकालो धातु-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



मन्ता—इत्यत्रापि 'असिद्धवदत्राभात्' इति टिलोपस्यासिद्धत्वान्नलोपो न भवति ।

पदमञ्जरी

तासेस्तर्हीदित्करणं मन्तेत्यादौ आत्मनेपदैकवचनस्य डादेशे कृते टिलोपे च मनत् + आ इति स्थिते नकारस्योपधालोपो मा भूदित्येवमर्थं स्यादत आह—*मन्तेत्यत्रेति* । नकारलोपो न भवतीत्यनुषङ्गः ।

*जयादित्यस्तु*—आभीयमसिद्धत्वमनित्यमाश्रित्य तासेरिदित्करणमनुनासिकलोपप्रतिषेधार्थमित्यवोचत् । तन्मते धातुग्रहणं तासिनिवृत्त्यर्थं कर्तव्यमिति 'उपदेशे नुम्भवति' इत्यत्र यत्नान्तरमास्थेयम् ।

न्यासः

पदेशकालः, तत्रैव नुम् भवतीत्येवमर्थमिह धातुग्रहणं क्रियते । तस्मादतोऽपि धातुग्रहणादुपदेशावस्थायामेव नुम् भवतीति ज्ञायते, न ह्यन्यद्धातुग्रहणस्य प्रयोजनमस्तीत्यभिप्रायः । ननु च भेत्ता, अभैत्सीदित्यत्राधात्वोस्तासिसिचोरिदितोर्नुम् मा भूदित्येवमर्थं धातुग्रहणं स्यात् ? इत्याह—तासिसिचोरित्यादि । यदि तासिसिचोरिदित्कार्यं स्यात्, तदेकारस्येत्संज्ञार्थमनुनासिकत्वं प्रतिज्ञायेत, न चास्ति प्रयोजनमिति न प्रतिज्ञायते; ततश्च निरनुनासिकोऽप्रतिलब्धेत्संज्ञक उच्चारणार्थ एवानयोरिकारः पठ्यत इति नुमः प्रसङ्ग एव नास्ति, तत् किं तन्निवृत्त्यर्थेन धातुग्रहणेन ! ननु चारंस्त, अमंस्त, मन्ता, संगन्तेत्यत्र 'अनिदिताम्' इत्यनुनासिकलोपो मा भूदित्येवमर्थं तासिसिचोरिदित्कार्यम्, तत् किमुच्यते इदित्कार्यं तासिसिचोर्नास्ति ? इत्यत आह—अरंस्त, अमंस्तेत्यादि । 'हनः सिच्' इति । कित्त्वविधावस्यैतत्प्रयोजनम्—आहतेत्यत्रानुनासिकलोपो यथा स्यात् । यदि सिजन्तस्यानुनासिकलोपः सार्वधातुकङित्त्वमाश्रित्य स्याद्, 'हनः सिच्' इति कित्त्वमनर्थकं स्यात्, प्रयोजनाभावात् ? नैतदस्ति; अस्ति ह्यन्यत् कित्वविधानस्य प्रयोजनम्—'अनुदात्तोपदेश' इत्यादिना सिच्यनुनासिकलोपो यथा स्यादिति; 'अनिदिताम्' इत्यादिना सिजन्तस्य सार्वधातुके मा भूदिति । कः पुनरत्र विशेषः—सार्वधातुके ङिति वा ? सिचि किति वा ? अयमस्ति विशेषः—समानाश्रये सिच्यनुनासिकलोपस्यासिद्धत्वादतो लोपो न भवति; सार्वधातुके तूपधालोपे तस्य व्याश्रयत्वेनासिद्धत्वाभावादतो लोपः स्यादेव । नैषोऽस्ति विशेषः; अतो लोपविधौ 'अनुदात्तोपदेश' इत्यादेः सूत्रादुपदेशग्रहणमनुवर्त्तते, तेनार्धधातुकोपदेशे यदकारान्तमङ्गं तस्य लोपो विज्ञायते; न चाहतेत्यत्रोपदेशेऽकारान्तमेतत् । तस्माद् 'हनः सिच्' इति कित्त्वविधानसामर्थ्यादरंस्तेत्यादौ नकारलोपो न भवति । तदेवं सिच इदित्कार्यं न भवतीति प्रतिपादितम् ।

इदानीं तासेरप्यनुनासिकलोपाभाव इदित्कार्यं न भवतीति प्रतिपादयितुमाह—मन्तेत्यादि । नकारलोपो न भवतीति प्रकृतेन सम्बन्धः । उपधानकारस्य 'अनिदिताम्'

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



इह कस्मान्न भवति—भेत्ता, छेत्तेति ? 'इरितां समुदायस्येत्संज्ञा' इतीदित्त्वं नास्ति ।

अवयवशोऽपीत्संज्ञायां सत्याम् 'गोः पादान्ते' इतोऽन्तग्रहणमनुवर्त्तयितव्यम् । तेनान्तेदितो धातवो गृह्यन्ते ॥

## शे मुचादीनाम् ॥ ५९ ॥

### पदमञ्जरी

इह भिदिर्प्रभृतिषु इकारस्य 'उपदेशेऽजनुनासिक इत्' इतीत्संज्ञा, रेफस्यापि 'हलन्त्यम्' इति, ततश्चेदित्त्वान्नुम् प्राप्नोति ? तत्राह—*इरितामिति* । 'इरितामिर उपसङ्ख्यानम्' इत्यौपसङ्ख्यानिकी समुदायस्येत्संज्ञा, न प्रत्येकं सौत्री, ततश्चानिदित्त्वान्नुम् न भवतीत्यर्थः ।

नन्वेवमपि स्वरितेत्त्वनिबन्धनमात्मनेपदं न प्राप्नोति भिदिर्प्रभृतिषु, तस्मात्प्रत्येकपक्षे परिहारो वाच्यः—इति मत्वा प्रत्येकपक्षे परिहारमाह—*अवयवशोऽपीति* । अपर आह—इदित इति नायं बहुव्रीहिः, किं तर्हि ? कर्मधारयः, ततश्च वर्णग्रहणमिदं भवति । तत्र तदन्तविधिनेत्संज्ञकेकारान्तस्य धातोर्नुमिति । अथेदितो धातवो नुमनुषक्ता एव कस्मान्न पठिताः, एवं हीदं न कर्त्तव्यं भवति ? नुम्ग्रहणं तावदुत्तरार्थं कर्त्तव्यम्, इदितां च भूयस्त्वात्प्रत्येकं नकारोच्चारणादिदमेव सूत्रं लघीयः ॥

### न्यासः

इत्यादिना लोप उच्यते । न च मन्तेत्यत्र नकार उपधा भवति; टिलोपस्यासिद्धत्वात् । तस्मात् तासेरपीदित्कार्यं न विद्यते । ततश्च युक्तमुक्तम्—'तासिसिचोरिदित्कार्यं नास्ति' इति । अथ नुमागम इदित्कार्यं कस्मान्न भवति ? अनिष्टत्वात् । न ह्यनिष्टं कार्यं शास्त्रे परिकल्पयितु युक्तम् । यदि तर्हि तासेर्निरनुनासिक इकारः उच्चारणार्थः, एवं तर्हि 'स्यतासी लृलुटोः' इत्यत्र यदुक्तम्—'इदित्करणमनुनासिकलोपप्रतिबन्धार्थम्', तत् कथं न विरुध्यते ? यथा न विरुध्यते तथा तत्रैवोक्तम् ।

अथ भिदिरित्येवमादीनां नुम् कस्मान्न भवति, अस्ति ह्येषामपीकार इत्संज्ञकः ? इत्याह—इरितामित्यादि । भिदिर्प्रभृतयो हीरितः, न त्विदितः; यस्मादिर उपसंख्यानमिति रेफेकारस्य समुदायस्य तेषामित्संज्ञा, न प्रत्येकमवयवस्य । तत्रेदितामुच्यमानो नुम् कः प्रसङ्गो यदिरितां स्यात् ?

स्यादेतत्—'उपदेशेऽजनुनासिक इत्' इतीत्संज्ञेकारस्य, 'हलन्त्यम्' इति रेफस्य, तस्मादस्त्येव तेषामिदित्त्वम् ? इत्याह—अवयवस्यापीति । गतार्थम् ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



शे प्रत्यये परतो मुचादीनां नुमागमो भवति। मुच्लृ—मुञ्चति। लृप्लृ—लुम्पति। विद्लृ—विन्दति। लिपि—लिम्पति। सिच्—सिञ्चति। कृती—कृन्तति। खिद—खिन्दति। पिश—पिंशति।

शे इति किम्? मोक्ता, मोक्तुम्, मोक्तव्यम्। मुचादीनामिति किम्? तुदति, नुदति।

❀ शे तृम्फादीनामुपसंख्यानं कर्त्तव्यम् ❀। के पुनस्तृम्फादयः? 'तृफ तृम्फ तृप्तौ'। 'दृफ दृम्फ उत्क्लेशे', 'गुफ गुम्फ ग्रन्थे'; 'उभ उम्भ पूरणे', 'शुभ शुम्भ शोभार्थे'—इत्यत्र ये सानुषङ्गास्तृम्फादयः, तेषाम् 'अनिदितां हल उपधायाः क्ङिति' इत्यनुनासिकलोपे कृते

**पदमञ्जरी**

शे मुचादीनाम्॥ मुचादयः 'मुच्लृ मोक्षणे' इत्यारभ्य तुदादिष्वा गणान्ताद्वेदितव्याः।

के पुनस्तृम्फादय इति। व्यवस्थावाचिन्यादिशब्दे निरनुषङ्गाणामपि ग्रहणप्रसङ्गादिति प्रश्नः। प्रकारवाची आदिशब्दः, प्रकारश्च सादृश्यम्, तच्च नकारानुषक्ततयेत्युत्तरम्। यदि सानुषङ्गाणां पुनर्नुम् विधीयते, एवं सति परस्य नकारस्यानुस्वारपरसवर्णयोः कृतयोर्नकारमकारयोः श्रवणप्रसङ्गः इत्यत आह—तेषा-

**न्यासः**

शे मुचादीनाम्॥ मुचादयस्तुदादौ पठ्यन्ते 'मुच्लृ मोक्षणे' इत्यतः प्रभृत्या गणपरिसमाप्तेः।

मोक्तेति तृच्, 'एकाचः' इतीट् प्रतिषेधः, 'चोः कुः' इति कुत्वम्।

के पुनस्तृम्फादय इति। एवं मन्यते—तृम्फादिषु तृफादयो निरनुषङ्गा अपि गणे पठ्यन्ते—'तृफ तृम्फ तृप्तौ' इत्येवमादयः। तत्र यदि तेऽपि तृफादिग्रहणेन गृह्येरन्, तृफतीत्यादि रूपं नोपपद्यत इत्यत आह—ये तत्र सानुषङ्गाः पठ्यन्ते, ते तृम्फादय इति। आदिशब्दोऽयं प्रकारार्थः, प्रकारस्तु सादृश्यम्, तस्मात् तृम्फतिना सानुषङ्गेण ये सदृशाः, त एवादिग्रहणेनोपलक्ष्यन्त इत्यभिप्रायः। सानुषङ्गा इति। नकारोऽनुषङ्गः, तेन सह वर्त्तन्त इति सानुषङ्गाः। यदि तर्हि ये सानुषङ्गाः पठ्यन्ते ते तृम्फादयः, तेषां नुमि कृते परस्यानुस्वारे कृते तस्य परसवर्णे द्वयोर्नकारयोः श्रवणं प्राप्नोति? इत्यत आह—तेषामित्यादि। कृते हि नकारलोपे नुम् विधीयते। अतो न भवत्येष

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



नुम्विधीयते, स च विधानसामर्थ्यान्न लुप्यते—तृम्फति, दृम्फति, गुम्फति, उम्भति, शुम्भति । ये तु निरनुषङ्गाः, तेषां तृफति, दृफति, गुफति, उभति, शुभतीत्येवं भवति ॥

मस्जिनशोर्झलि ॥ ६० ॥

मस्जि, नशि—इत्येतयोरङ्गयोर्झलादौ प्रत्यये[1] नुमागमो भवति । मङ्क्ता, मङ्क्तुम्, मङ्क्तव्यम् । नंष्टा, नंष्टुम्, नंष्टव्यम् ।

झलीति किम् ? मज्जनम् । नशनम् ।

पदमञ्जरी

*मिति* । अथास्य नुमोऽपि लोपः कस्मान्न भवति ? तत्राह—*स चेति* । *विधानसामर्थ्यादिति* । अयं च मुचादिष्वेव लोपाभावस्य हेतुः । तृम्फादिषु तु परनकारलोपस्य चिणो लुग्न्यायेनासिद्धत्वादेव पूर्वनकारस्य लोपाभावः सिद्धः । अथ मुचादिष्वेव तृम्फादयः कस्मान्न पठिताः ? इत्यत आह—*ये त्विति* । अयमभिप्रायः—सानुषङ्गाणां निरनुषङ्गाणां च तन्त्रेणार्थनिर्देशः । तत्र यदि सर्वे मुचादिषु पठ्येरन्, निरनुषङ्गाणामपि नुम्प्रसङ्गः । सानुषङ्गाणां निष्कृष्य पाठे द्विरर्थनिर्देशेन गौरवप्रसङ्ग इति ॥

*मस्जिनशोर्झलि* ॥ *मङ्क्तेति* । 'टुमस्जो शुद्धौ', तृच्, 'एकाचः' इतीट्प्रतिषेधः, अन्त्याज्जकारात्पूर्वो नुम्, 'स्कोः संयोगाद्योरन्ते च' इति सलोपः, कुत्वम्, अनुस्वारपरसवर्णौ । *नंष्टेति* । 'रधादिभ्यश्च' इतीडभावपक्षे नुम् । *मज्जन-*

न्यासः

दोष इति भावः । अथ सोऽपि नुम् कस्मान्न लुप्यते ? इत्याह-स चेत्यादि । यदि सोऽपि लुप्येत, नुमो विधानमनर्थकमेव स्यादिति मन्यते । उपसंख्यानशब्दस्य प्रतिपादनमर्थः । तत्रेदं प्रतिपादनम्—'धातोः' इत्यनुवर्त्तते, 'शे' इति योगविभागः क्रियते, तेन तृम्फादीनाञ्च नुम् भविष्यति । मुचादीनामित्येवमनर्थकं स्यात्, 'शे' इत्यनेन सिद्धत्वात् ? नानर्थकम्; 'शे' इत्यस्यासर्वविषयत्वज्ञापनार्थत्वात् । एवं ह्यतिप्रसङ्गो न भवति । कथं मुचादिष्वेव तृम्फादयो न पठिताः ? येऽत्र निरनुषङ्गाः पठ्यन्ते तेषां नुमागमो मा भूदित्येवमर्थम् ॥

मस्जिनशोर्झलि ॥ मङ्क्तेति । 'टुमस्जो शुद्धौ', तृच्, पूर्ववदिडभावः, कुत्वञ्च, अन्त्याज्जकारात् पूर्वो नुम्, 'स्कोः' इत्यादिना सकारलोपः, अनुस्वारपरसवर्णौ । नंष्टेति । 'रधादिभ्यश्च' इति यदेण्नास्ति तदायं नुम्, व्रश्चादिसूत्रेण षत्वम्, ष्टुत्वम् । इट्पक्षे झलादित्वाभावान्नुम् नास्ति—नशितेति ।

---

१. 'परतो' इत्यधिकं क्वचित् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



मस्जेरन्त्यात्पूर्वं नुममिच्छन्त्यनुषङ्गादिलोपार्थम् । मग्नः । मग्नवान् ।

## रधिजभोरचि ॥ ६१ ॥

रधि, जभि—इत्येतयोरजादौ प्रत्यये नुमागमो भवति । रन्धयति । रन्धकः । साधुरन्धी । रन्धंरन्धम् । रन्धो वर्त्तते । जम्भयति । जम्भकः । साधुजम्भी । जम्भंजम्भम् । जम्भो वर्त्तते ।

### पदमञ्जरी

मिति । जकारे परतः सकारस्य श्चुत्वे जश्त्वे च प्राप्ते जश्त्वस्यासिद्धत्वात् श्चुत्वम्, शकारस्य जश्त्वम्—जकारः ।

*मस्जेरित्यादि* । यद्यन्त्यादचः परः स्यात्तदा नसजानां समुदायस्यैका संयोगसंज्ञेति सकारस्यासंयोगादित्वाल्लोपो न स्यात् । अथापि सजयोः पृथक्संयोगसंज्ञामाश्रित्य लोपः स्याद् ? एवमपि तस्य लोपस्यासिद्धत्वान्नकार उपधा न भवतीति तस्य लोपो न स्यात् । तस्मादन्त्याज्जकारात्पूर्वः सजयोर्मध्ये नुमेषितव्यः ॥

*रधिजभोरचि* ॥ 'रध हिंसासंराध्योः' जभ जृभी गात्रविनामे', इहास्य नुमोऽवकाशः—रन्धनम्, ररन्धतुरित्यादि, 'अत उपधायाः' वृद्धेरवकाशः—पाचकः,

### न्यासः

मज्जनम्, नशनमिति । ल्युट्, 'झलां जश् झशि' इति जश्त्वम्—सकारस्य दकारः, तस्य चुत्वम्—जकारः ।

मस्जेरित्यादि । यदि मस्जेरन्त्यादचः परो नुम् स्यात्, असंयोगादित्वात् सलोपो न प्राप्नोति, अनुपधत्वान्न नलोपः, स चेष्यते; अन्यथा मग्नो मग्नवानिति न सिध्येत् । तस्मादन्त्यात्पूर्वमाचार्या मस्जेर्नुममिच्छन्ति । कथं पुनरिष्यमाणोऽप्ययमर्थो लभ्यते ? नशेरल्पाच्तरस्य पूर्वनिपातलक्षणव्यभिचारचिह्नात् । स हि लक्षणनिरपेक्षतां सूचयन् 'मिदचोऽन्त्यात्परः' इत्येतदपीह लक्षणं नापेक्षत इति सूचयति । तस्मिंश्चानपेक्षिते लक्ष्यानुरोधाद् यत्र मस्जेर्नुमि कृते सतीष्टं सिध्यति तत्रैव विधीयते । तेन मस्जेरन्त्यात्पूर्वं नुम् सिद्धो भवति । मग्न इति । 'ओदितश्च' इति निष्ठानत्वम् ॥

रधिजभोरचि ॥ रन्धयतीति । 'रध हिंसासंराद्धयोः', हेतुमण्णिच् । रन्धक इति । ण्वुल् । साधुरन्धीति । 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनिः । रन्धंरन्धमिति । 'आभीक्ष्ण्ये णमुल्', 'आभीक्ष्ण्ये द्वे भवतः' इति द्विर्वचनम् । रन्धो वर्त्तत इति । भावे घञ् । अथ रन्धयतीत्यादिषु परत्वात् 'अत उपधायाः' इति वृद्धिः प्राप्नोति,

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



परापि सतो वृद्धिर्नुमा बाध्यते; नित्यत्वात् ।

अचीति किम् ? रद्धा । जभ्यम् ॥

नेट्यलिटि रधेः ॥ ६२ ॥

इडादावलिटि प्रत्यये परे रधेर्नुमागमो न भवति । रधिता । रधितुम् । रधितव्यम् ।

इटीति किम् ? रन्धनम्, रन्धकः । अलिटीति किम् ? ररन्धिव, ररन्धिम ।

नुमि कृते संयोगान्तत्वाद् 'असंयोगाल्लिट् कित्' इति कित्त्वं नास्तीति नलोपो न भवति ।

पदमञ्जरी

पाठकः;रन्धकइत्यादावुभयप्रसङ्गे परत्वाद्वृद्धिः प्राप्नोति ? तत्राह–*परापि सतीति* । वृद्धिस्तु नुमि कृते न प्राप्नोति, अकारस्यानुपधात्वादित्यनित्या । *रद्धेति* । 'रधादिभ्यश्च' इति पक्षे इडभावः, 'झषस्तथोर्धोऽधः' इति तकारस्य धत्वम् ।

इह 'जभेरचि रधेर्लिटि च नेटि'—इति सूत्रन्यासः कर्त्तव्यः ? तथा तु न कृतमित्येव ॥

*नेट्यलिटि रधेः* ॥ *नुमि कृते इत्यादि* । ननु चेटि सत्यजादित्वान्नुमा भवितव्यम्, प्रागेव चेटः कित्त्वं प्राप्नोति; न च 'अलिटि' इत्यस्य वैयर्थ्यम्, थल्यर्थवत्त्वात् ? एवं हि धातोरित्यनुवृत्तेरुपदेश एव नुम् भवति । अचीत्येषा तु विषयसप्तमी ।

न्यासः

सा कस्मान्न भवति ? इत्यत आह–परापि सतीत्यादि । नित्यत्वं पुनः कृताकृतप्रसङ्गित्वान्नुमः । स हि कृतायां वृद्धौ प्राप्नोत्यकृतायामपीति नित्यः; वृद्धिस्तु नुमि कृते न प्राप्नोत्यकारस्यानुपधत्वादित्यनित्या ।

रद्धेति । 'झषस्तथोर्धोऽधः' इति तकारस्य धकारः, धातुधकारस्य जश्त्वम्–दकारः ॥

नेट्यलिटि रधेः ॥ पूर्वेण प्राप्तस्य नुमः प्रतिषेध उच्यते । रधितेत्यादि । 'रधादिभ्यश्च' इतीट् । ररन्धिव, ररन्धिमेति । क्रादिनियमादिट्, 'परस्मैपदानाम्' इत्यादिना वस्मसोर्वमादेशौ ।

ननु रधिरयमसंयोगान्तः पठ्यते, तत्र 'असंयोगाल्लिट् कित्' इति कित्त्वे 'अनिदिताम्' इति नलोपः प्राप्नोति, स कस्मान्न भवति ? इत्याह–नुमि कृत इत्यादि । 'उपदेशावस्थायामेव नुम् भवति' इत्युक्तमेतत्, तेनोपदेशावस्थायामेव नुमि कृते संयोगान्तत्वं जातमिति कित्त्वं नास्तीति न भवति नलोपः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अथ क्वसौ कथं भवितव्यम् ? रेधिवानिति । कथम् ? एत्वाभ्यासलोपयोः कृतयोरिडागमः क्रियते, ततो नुमागमः, तस्यौपदेशिककित्त्वाश्रयो लोपः ।

अथ इटि लिटीत्येवं नियमः कस्मान्न क्रियते—लिटचेवेटि नान्यत्रेति ? विपरीतमप्यवधारणं सम्भाव्येत—इटचेव लिटि नान्यत्रेति । तथा हि सति ररन्धेत्यत्र न स्यात्, रधितेत्यत्र च स्यादेव ॥

**पदमञ्जरी**

*अथेति* । येषां छान्दसः क्वसुस्तेषामेष विचारो नास्ति; छन्दसि दृष्टानुविधानात् । *एत्वाभ्यासलोपयोः कृतयोरिति* । 'वस्वेकाजाद्घसाम्' इत्यत्र कृतद्विर्वचनानामेकाचां ग्रहणादेव मुक्तम् । *तत्र कृते नुमागम इति* । अचीति वचनात् । *तस्येत्यादि* । यद्यपि ररन्धिवेत्यादिवत् क्वसावप्यातिदेशिकं कित्त्वं नास्ति, तथाप्यौपदेशिकं कित्त्वमाश्रित्य नलोपो भवतीत्यर्थः ।

*अथेत्यादि* । एवं सति 'नेट्यलिटि' इति द्वावपि प्रतिषेधौ न वक्तव्यौ भवत इति भावः । *विपरीतमवधारणं सम्भाव्येतेति* । एवकारे तु क्रियमाणे न लाघवे विशेषः ॥

**न्यासः**

**अथ क्वसौ कथं भवितव्यमिति** । किं ररध्वानिति भवितव्यम्, उत रेधिवानिति पृच्छति । अपर आह—रेधिवानिति । 'लिटः क्वसुश्च' इति क्वसुः, द्विर्वचनम्, 'अत एकहल्मध्ये' इत्यादिनैत्वाभ्यासलोपौ, 'वस्वेकाजाद्घसाम्' इतीट्, नुम्, 'सान्तमहतः संयोगस्य' इति दीर्घः । **कथमित्यादि** । एवं मन्यते—यदेड् भवति तस्मिंश्च नुमा भवितव्यम्, नुमि च सत्येकहल्मध्यता नास्तीत्येत्त्वेभ्यासलोपयोः पुनः प्रत्यापत्त्या भवितव्यम्, ततश्च कृतद्विर्वचन एकाज्न भवतीतीटा न भवितव्यम्; तस्माद्ररध्वानिति युक्तं भवितुमिति । इतरस्तु कृतस्यापि नुमोऽत्र लोपेन भवितव्यम्, ततश्चैकहल्मध्यताभावो नोपपद्यते, कुतः पुनरेत्त्वाभ्यासलोपयोः प्रत्यापत्तिः ? इत्याह—**एत्वाभ्यासलोपयोः कृतयोरित्यादि** । कृतद्विर्वचनानानेकाचां क्वसोरिड् विधीयते । **ततो नुमागम इति** । अचि तद्विधानात् तस्यौपदेशिकत्त्वाश्रयो लोप इत्यौपदेशिकग्रहणान्नुमि कृते संयोगान्तत्वादातिदेशिकस्य कित्त्वस्यासम्भवात् ।

**अथेत्यादि** । इटि नेटीत्युच्यमाने पूर्वेण सिद्धे सति नियमार्थमेतद् भविष्यति—लिट्येवेडादौ, नान्यस्मिन्निडादाविति । तेन ररन्धिव, ररन्धिमेत्यादौ भविष्यति, न रधितेत्येवमादौ । तस्मादिटि लिटीति कस्मान्नोक्तम्, एवं सतीष्टं सिध्यति, लघु च सूत्रं भवतीति भावः । **लिटचेवेति** । नियमस्वरूपं दर्शयति । नान्यत्रेत्यनेनापि तस्य व्यवच्छेद्यम् । यतो हेतोर्नियमो न क्रियते, तं दर्शयितुमाह—विपरीतमित्यादि । **इटचेव लिटीति** । विपरीतनियमस्य स्वरूपकथनम् । नान्यत्रेत्यनेनापि तद्व्यवच्छेद्यं दर्शयति । कस्माद्विपरीतमवधारणं नेष्यते ? इत्याह—**तथा हीत्यादि** । इट्येव लिटीत्यस्य नियम-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## रभेरशब्लिटोः ॥ ६३ ॥

रभेरङ्गस्य शब्लिड्वर्जितेऽजादौ प्रत्यये परतो नुमागमो भवति । आरम्भयति । आरम्भकः । साध्वारम्भी । आरम्भमारम्भम् । आरम्भो वर्त्तते ।

अशब्लिटोरिति किम् ? आरभते । आरेभे ।

अचीत्येव—आरब्धा ॥

## लभेश्च ॥ ६४ ॥

लभेश्चाजादौ प्रत्यये शब्लिड्वर्जिते नुमागमो भवति । लम्भयति । लम्भकः । साधुलम्भी । लम्भंलम्भम् । लम्भो वर्त्तते ।

अशब्लिटोरित्येव—लभते । लेभे । अचीत्येव—लब्धा ।

लभेश्च पृथग्योगकरणमुत्तरार्थम् ॥

## आङो यि ॥ ६५ ॥

आङ उत्तरस्य लभेर्यकारादिप्रत्ययविषये नुमागमो भवति ।

**पदमञ्जरी**

*रभेरशब्लिटोः* ॥ 'रभ राभस्ये', अनुदात्तेत् ॥

*लभेश्च* ॥ 'डुलभष् प्राप्तौ', अनुदात्तेत् । *लम्भो वर्त्तत इति* । 'उपसर्गादेव खल्घञोः' इति नियमस्य वक्ष्यमाणत्वादपपाठोऽयम् । 'खनो घ च' इति चकाराद् 'भगः पदम्' इतिवत् घप्रत्यय इत्येके । *योगविभाग उत्तरार्थ इति* । उत्तरो विधिर्लभेरेव यथा स्याद्रभेर्मा भूत् । किञ्च—शब्लिटोर्यथासंख्यनिरासार्थश्च ॥

*आङो यि* ॥ अत्र 'धातोः' इत्यनुवृत्तेरुपदेशावस्थायामेव नुमा भवितव्यम्,

**न्यासः**

स्यानिडादिर्लिड् व्यावर्त्त्यं इतीडादावेव लिटि भवति, नानिडादाविति । ततश्चानिडादित्वाद् ररन्धेत्यत्र नुम् न स्यात् । रधितेत्यत्र पूर्वेण स्यादेव; नियमेनाव्यावर्त्तित्वात् । तस्मात्तद्दोषपरिजिहीर्षया नियमो न क्रियते ॥

**रभेरशब्लिटोः** ॥ आरेभ इति । 'रभ राभस्ये', लिट्, अनुदात्तेत्वादात्मनेपदम् । 'लिटस्तझयोरेशिरेच्' इत्येश्, पूर्ववदेत्त्वाभ्यासलोपौ ॥

**लभेश्च** ॥ पृथग्योगकरणमुत्तरार्थमिति । उत्तरसूत्रेण लभेरेव कार्यं यथा स्यात्, रभेर्मा भूदिति । यदि 'रभिलभ्योरशब्लिटोः' इत्येको योगः क्रियते, ततो रभेरित्यनुवृत्तिरुत्तरत्र स्यात् । अतश्च तस्याप्युत्तरत्र कार्यं प्रसज्येत ॥

**आङो यि** ॥ यकारादौ प्रत्यय इति । अनेन 'यि' इत्यस्याः सप्तम्या विषय-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


आलम्भ्या गौः । आलम्भ्या वडवा ।

प्राक्प्रत्ययोत्पत्तेर्नुमि कृते विहतमदुपधत्वमिति 'ऋहलोर्ण्यत्' इति ण्यत्प्रत्ययः, तत्र कृदुत्तरपदप्रकृतिस्वरत्वेनान्तस्वरितत्वं भवति । यति तु पुनरुत्तरपदाद्युदात्तत्वं स्यात् ।

आङ इति किम् ? लभ्यम्[1] ।

कथमग्निष्टोम आलभ्य इति ? सर्वे विधयश्छन्दसि विकल्प्यन्ते ।

अथ वा—आलभ्य इत्यत्र नुमि कृतेऽनुषङ्गलोपः क्रियते ॥

## उपात्प्रशंसायाम् ॥ ६६ ॥

### पदमञ्जरी

तस्माद् 'यि' इति विषयसप्तमीत्याह—*यकारादौ प्रत्यये विषय इति* । *प्रागित्यादिना* विषयसप्तम्याश्रयणस्य फलं दर्शयति । *तत्रेत्यादि* । रूपे तु नास्ति विशेषः, ण्यत्प्रत्ययेऽपि वृद्धया नैव भवितव्यम्; नित्ये नुमि सति विहितनिमित्तत्वात् । *यति पुनरुत्तरपदाद्युदात्तत्वं स्यादिति* । 'यतोऽनावः' इत्युत्तरपदाद्युदात्तत्वात् । *आलभ्य इति* । यक् । *अनुषङ्गलोपः क्रियत इति* । एतेन यक्ल्यपौ व्याख्यातौ । तेन 'यि' इति सामान्योक्तावपि ण्यदेवोदाहृत इति भावः ॥

### न्यासः

सप्तमीत्वं दर्शयन् यकारादौ प्रत्यये विषयभूतेऽनुत्पन्न एव नुम् भवतीति दर्शयति ।

प्रागित्यादिना विषयसप्तम्यां सत्यां यदिष्टं सम्पद्यते तदाचष्टे । परसप्तम्यां हि पूर्वं प्रत्ययेन भवितव्यम्, पश्चान्नुमा, ततश्च 'अदुपधात्' इति यत् प्रसज्येत । विषयसप्तम्यां तु प्रागुत्पन्नेन नुमादुपधत्वस्य विहतत्वाद् 'ऋहलोर्ण्यत्' इति ण्यदेव भवति । कः पुनर्ण्यति यति वा विशेषः, यावतोभयत्रापि तदेव रूपमिति, ण्यत्प्रत्ययेऽपि वृद्धया न भवितव्यम्, तथा च प्रागुक्तम्—'परापि सती वृद्धिर्नित्यत्वान्नुमा बाध्यते' इति ? अत आह—तत्रेत्यादि । तत्र ण्यति सति तित्स्वरितत्वाद् 'गतिकारकोपपदात् कृत्' इति प्रकृतिस्वरः; तेनालम्भ्य इत्युदाहरणमन्त्यस्वरितं भवति । यति तु 'यतोऽनावः' इत्याद्युदात्तत्वे सति प्रकृतिवद्भावेनाप्युदात्तत्वमित्यस्ति विशेषः ।

लभ्यमिति । यदन्तमेतत् ।

एवमालभ्य इत्येतदपि । आलभ्यत इति भावे कर्मणि वा लकारः ।

अनुषङ्गलोपः क्रियत इति । 'अनिदिताम्' इत्यादिना ॥

---

१. 'अदुपधत्वाद्यत्प्रत्ययान्तमेतत् । यीति किम् ? आलब्धा'—इत्यधिकं बहुषु पुस्तकेषु ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



उपादुत्तरस्य लभेः प्रशंसायां गम्यमानायां यकारादिप्रत्ययविषये नुमागमो भवति। उपलम्भ्या भवता विद्या। उपलम्भ्यानि धनानि। ण्यत्प्रत्ययान्तत्वादन्तस्वरितत्वमेव।

प्रशंसायामिति किम्? उपलभ्यमस्माद् वृषलात्किञ्चित्। पोरदुपधत्वाद्यत्प्रत्ययान्तमिदम्॥

**उपसर्गात्खल्घञोः ॥ ६७ ॥**

उपसर्गादुत्तरस्य लभेः खल्घञोः परतो नुमागमो भवति। ईषत्प्रलम्भः। सुप्रलम्भः। दुष्प्रलम्भः। घञि—प्रलम्भः, विप्रलम्भः।

सिद्धे सत्यारम्भो नियमार्थः—उपसर्गादेव लभेः खल्घञोः परतो नुमागमो भवति, नान्यत्र। ईषल्लभः। लाभो वर्त्तते॥

**न सुदुर्भ्यां केवलाभ्याम् ॥ ६८ ॥**

सु, दुर्—इत्येताभ्यां केवलाभ्यामन्योपसर्गरहिताभ्यामुपसृष्टस्य

**पदमञ्जरी**

*उपात्प्रशंसायाम्* ॥ अत्र प्राप्तिरेव धात्वर्थः। प्रशंसा तु गम्यमानतया विशेषणम्। अतो यस्य प्राप्तिर्यतो वा प्राप्तिः प्रशंसाहेतुर्भवति तत्रोदाहरणम्। विपर्यये तु प्रत्युदाहरणम्॥

*उपसर्गात् खल्घञोः* ॥ *सिद्धे सतीति*। 'लभेश्च' इत्यनेन। *उपसर्गादेवेति*। विपरीतस्तु नियमो न भवति—उपसर्गात्खल्घञोरेवेति; 'गृधिवञ्च्योः प्रलम्भने' इति निर्देशात्॥

*न सुदुर्भ्यां केवलाभ्याम्* ॥ केवलशब्दः शब्दोपात्तादन्यस्य सजातीयस्याभावमाचष्टे। यथा हि—

**न्यासः**

उपात् प्रशंसायाम् ॥ प्रशंसायामिति। उपलम्भ्य इति स्तुतौ। अतिप्रशंस्य इत्यर्थः। उपलभ्यमिति। प्राप्तव्यमित्यर्थः॥

उपसर्गात्खल्घञोः ॥ ईषत्प्रलम्भ्य इति। 'ईषद्दुःसुषु' इत्यादिना खल्। दुष्प्रलम्भ्य इति। 'इदुदुपधस्य' इत्यादिना षत्वम्। विप्रलम्भ इति। भावे घञ्। ननु च 'लभेश्च' इत्यनेन नुम्सिद्धः, तत्किमर्थोऽयमारम्भः? इत्याह—सिद्ध इत्यादि। उपसर्गादेवेत्यादिना नियमस्य स्वरूपं दर्शयति। अन्यत्र न भवतीति तद्व्यवच्छेद्यम्। 'उपसर्गात् खल्घञोरेव'—इत्येष तु विपरीतनियमोऽत्र न सम्भावनीयः; 'गृधिवञ्च्योः प्रलम्भने' इति निर्देशात्॥

न सुदुर्भ्यां केवलाभ्याम् ॥ उपसृष्टस्येति। उपसर्गेण सम्बद्धस्येत्यर्थः। सुलाभ इति।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



लभेः खल्घञोः परतो नुमागमो न भवति । सुदुर्लभम् । सुलभम् । दुर्लभम् । घञि—सुलाभः, दुर्लाभः ।

केवलाभ्यामिति किम् ? सुप्रलम्भः । दुष्प्रलम्भः ।

'सुदुर्भ्याम्' इति तृतीयां मत्वा केवलग्रहणं क्रियते । पञ्चम्यां हि व्यवहितत्वादेवाप्रसङ्गः ।

**पदमञ्जरी**

केवलाभ्यामिहैताभ्यां प्रवेष्टव्यमितीरिते ।
अन्यस्य पुरुषस्यैव प्रवेशः प्रतिषिध्यते ॥
न शुकादेः, तथेहापि परस्परयुताविमौ ।
एकाकिनौ विजातीयसहितौ चापि केवलौ ॥

*सुदुर्लभम्, सुलभम्, दुर्लभम्, अतिसुलभमित्युदाहरणानि । सुलाभः, दुर्लाभ इति ।* भावे घञ् । कर्मणि तु खल् भवति । यद्वा—सुः क्षेपे, यथा—सुषिक्तं नामेति । दुर्निन्दायाम्, यथा—दुर्ब्राह्मण इति । तेन कृच्छ्राकृच्छ्रार्थत्वाभावात्खलभावः ।

*तृतीयां मत्वेति ।* तृतीयापक्षे त्विदं प्रत्युदाहरणमित्यर्थः । अथ पञ्चमीपक्षे कस्मान्न प्रत्युदाहरणम् ? इत्याह—*पञ्चम्यां हीति ।* न च तदापि प्रसुलम्भमिति प्रत्युदाहरणम् ? उक्तं हि *भाष्ये*—'नैषोऽस्ति प्रयोगः' इति ।

**न्यासः**

सुशब्दोऽयमाधिक्यार्थः, नाकृच्छ्रार्थः, यथा—सुषिक्तं नाम किं तवात्रेति । दुर्लाभ इति । दुःशब्दोः निन्दार्थः, न कृच्छ्रार्थः, यथा—दुर्ब्राह्मण इति । तेन घञेव भवति, न खल् ।

सुदुर्भ्यामिति तृतीयां मत्वा केवलग्रहणं क्रियत इति । 'सुदुर्भ्याम्' इति तृतीयायामभ्युपेतायां सुदुर्भ्यामुपसृष्टस्य लभेर्नुन्न भवतीत्येषोऽर्थः सम्पद्यते । व्यवहितेनाप्युपसृष्टो भवत्येव । तत्रासति केवलग्रहणे सुप्रलम्भः, दुष्प्रलम्भ इत्यत्रापि प्रतिषेधः स्यात् । तस्मात् तृतीयायामभ्युपेतायां केवलग्रहणं क्रियते । अथ पञ्चम्यां केवलग्रहणं कस्मान्न क्रियेतेति प्रश्नावसरत आह—पञ्चम्यां हीत्यादि । पञ्चम्यां ह्यस्यां निर्दिष्टग्रहणस्यानन्तर्यार्थत्वादनन्तरस्यैव प्रतिषेधेन भवितव्यम्, इह च प्रशब्देन व्यवधानम्, अतः प्रसङ्ग एव नास्ति, तत् किं केवलग्रहणेन ? यद्येवम्, न कर्त्तव्यमेव केवलग्रहणम्, पञ्चमीमेनां प्रतिज्ञास्याम इति ? नैतदस्ति; सुप्रलम्भः, दुष्प्रलम्भ इति—प्रत्युदाहरणद्वयमभिप्रेत्यैतदुक्तम् । पञ्चम्यां हि व्यवहितत्वादेवाप्रसङ्ग इति । अतिसुलम्भ इत्यत्र यदाभिशब्दोऽप्युपसर्गस्तदा ह्यसति केवलग्रहणे प्रतिषेधः प्रसज्येत; अव्यवधानात् । तस्मात् सर्वथा केवलग्रहणस्य कर्तव्यत्वात्, क्रमव्यतिक्रमे च प्रयोजनाभावात् तृतीयैवेष युक्ता प्रतिज्ञातुम् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अतिसुलभमित्यत्र कर्मप्रवचनीयत्वादतेः केवल एव सुशब्द उपसर्ग इति भवति प्रतिषेधः। यदा त्वतिशब्दो न कर्मप्रवचनीयः, तदा नुम्भवत्येव—अतिसुलम्भ इति।

पञ्चमीनिर्देशपक्षेऽप्येवमर्थं केवलग्रहणं कर्त्तव्यम्॥

**विभाषा चिण्णमुलोः॥ ६९॥**

चिण्, णमुल्—इत्येतयोर्विभाषा लभेर्नुम्भवति। अलाभि,

**पदमञ्जरी**

*अतिसुलभमित्यत्रेति*। 'उपसर्गात्' इत्यनुवृत्तेरुपसर्गयोः सुदुरोरिह ग्रहणमिति भावः। 'अतिरतिक्रमणे च' इत्यतेः कर्मप्रवचनीयसंज्ञा, तया चोपसर्गसंज्ञा बाध्यते; एकसंज्ञाधिकारात्। *पञ्चमीनिर्देशपक्षेऽपीति*। एवं च सर्वथा केवलग्रहणस्य कर्त्तव्यत्वात्क्रमव्यतिक्रमे कारणाभावात्पूर्वतृतीयाश्रयणेन प्रत्युदाहरणं दर्शितम्॥

*विभाषा चिण्णमुलोः॥ तेनानुपसृष्टस्य विकल्प इति*। तथा च वार्त्तिकम्—

**न्यासः**

अतिसुलभमित्यत्रातिनोपसर्गेन सुशब्देन च लभिरुपसृष्टः, तस्मात् प्रतिषेधेन भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात्, अतस्तां निराकर्तुमाह—अतिसुलभमित्यत्रेत्यादि। कर्मप्रवचनीयत्वं पुनरतिशब्दस्य 'अतिरतिक्रमणे च' इति कर्मप्रवचनीयसंज्ञाविधानात्। यस्य कर्मप्रवचनीयसंज्ञा तस्योपसर्गसंज्ञा नास्ति; एकसंज्ञाधिकारात्, कर्मप्रवचनीयसंज्ञयोपसर्गसंज्ञाया बाधितत्वात्। कथं पुनः कर्मप्रवचनीयस्य हि तस्यापि केवलत्वमुपपद्यते? एवं मन्यते—केवलग्रहणात् स्वशब्दोपात्तादन्यत् तुल्यजातीयमेव व्यवच्छेद्यम्, न तु विजातीयम्। तथा हि—'केवलाभ्यां देवदत्तयज्ञदत्ताभ्यां प्रवेष्टव्यम्' इत्युक्तेऽन्येनैव तुल्यजातीयेन विष्णुमित्रादिना सहितौ न तौ प्रविशतः, परस्परेण विजातीयेन कर्कटादिना सहितौ प्रविशत एव। अत एवान्योपसर्गरहिताभ्यामित्यनेन तुल्यजातीयनिवृत्त्यर्थता केवलग्रहणस्य दर्शिता। यदि तु सर्वस्य तुल्यजातीयस्य विजातीयस्यापि केवलग्रहणेन निवृत्तिः कर्तुं शक्यते, तदोपसर्गग्रहणमनर्थकं स्यात्, अन्यरहिताभ्यामित्येवं ब्रूयात्। तस्माद्विजातीयेन सहितावपि तौ केवलावेवेत्यतिसुलभमित्यत्र कर्मप्रवचनीयसहितेनापि सुशब्देनोपसृष्टस्य भवत्येव प्रतिषेधः। यत्र तर्हि पूजातिक्रमणाभ्यामन्यत्र वृत्तिः, अतिशब्दस्य तत्र कर्मप्रवचनीयसंज्ञा न भवति, तदा कथम्? इत्याह—यदा त्वित्यादि। पञ्चमीनिर्देशेऽप्येवमर्थं केवलग्रहणं कर्त्तव्यमिति; अन्यथा ह्यत्र व्यवधानाभावात् प्रतिषेधः प्रसज्येतेत्यभिप्रायः। ननु च प्रसुलम्भः—इत्येवमर्थं केवलग्रहणं कर्त्तव्यम्? नैतदस्ति, उक्तं हि भाष्ये—'नैषोऽस्ति प्रयोगः' इति॥

**विभाषा चिण्णमुलोः॥** अलाभीति। लुङ्, 'चिण्भावकर्मणोः' इति चिण्, 'चिणो लुक्' इति तकारस्य लुक्।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अलम्भि । लाभंलाभम् । लम्भंलम्भम् ।

व्यवस्थितविभाषा चेयम्, तेनानुपसृष्टस्य विकल्पः । उपसृष्टस्य नित्यं नुम्भवति—प्रालम्भि, प्रलम्भम् ॥

## उगिदचां सर्वनामस्थानेऽधातोः ॥ ७० ॥

उगितामङ्गानां धातुवर्जितानामञ्चतेश्च सर्वनामस्थाने परतो नुमागमो भवति । भवतु—भवान्, भवन्तौ, भवन्तः । ईयसुन्—श्रेयान्, श्रेयांसौ, श्रेयांसः । शतृ—पचन्, पचन्तौ, पचन्तः । अञ्चतेः—प्राङ्, प्राञ्चौ, प्राञ्चः ।

### पदमञ्जरी

'चिण्णमुलोरनुपसर्गस्य' इति ॥

*उगिदचां सर्वनामस्थानेऽधातोः ॥ धातुवर्जितानामिति ।* नेदमधातोरित्यस्यार्थप्रदर्शनम्; तस्यान्यपरत्वात् । तस्माद् 'अञ्चतिग्रहणं नियमार्थम्' इति यद्वक्ष्यते, तत्सिद्ध एवायमर्थः प्रदर्शितः । 'अधातोः' इत्यस्य त्वर्थप्रदर्शने उगितामङ्गानामञ्चतेश्चाधातोश्चोगितो नुम् भवतीति प्रदर्शनीयम् । *अञ्चतेश्चेति ।* अजिति प्रत्याहारग्रहणं तु न भवति; 'नपुंसकस्य झलचः' इति पुनरज्ग्रहणात् । तत्र हि प्रत्याहारस्यैव ग्रहणम्, नाञ्चतेः; झलन्तत्वात् । *भवानिति ।* 'अत्वसन्तस्य च' इति दीर्घः । *श्रेयानिति ।* 'सान्तमहतः' इत्यादिना दीर्घः । अत्रावयवे कृतं लिङ्गं समुदायस्यापि विशेषकं भवतीत्यङ्गस्योगित्त्वम् । *प्राङिति ।* 'ऋत्विक्' इत्यादिना क्विन्, सुः, हल्ङ्याब्भ्यादिसंयोगान्तलोपौ, 'क्विन्प्रत्ययस्य कुः' इति कुत्वम्—नकारस्य ङकारः ।

### न्यासः

अनुपसृष्टस्येति । उपसर्गेणासम्बद्धस्येत्यर्थः ॥

उगिदचां सर्वनामस्थानेऽधातोः ॥ उगिति प्रत्याहारग्रहणम्—उक् इद् येषां तान्युगिन्ति, अङ्गविशेषणञ्चैतत्, अत आह— उगितामङ्गानामिति । अजिति प्रत्याहारस्य ग्रहणमेवेदं वा स्याद्, अञ्चतेर्वा लुप्तनकारस्य ? तत्र यदि प्रत्याहारग्रहणं स्यात्, 'नपुंसकस्य झलचः' इत्यत्र सूत्रे पुनरज्ग्रहणं न कुर्यात्, तद्धि प्रत्याहारग्रहणम्, नाञ्चेः; झला साहचर्यात् । तस्मादञ्चतेरिदं ग्रहणमित्यालोच्याह—अञ्चतेश्चेत्यादि । भवानिति । 'अत्वसन्तस्य चाधातोः' इति दीर्घः । श्रेयानिति । प्रशस्यशब्दाद् 'द्विवचनविभज्योपपदे तरबीयसुनौ' इतीयसुन्, 'प्रशस्यस्य श्रः' इति श्रादेशः, 'प्रकृत्यैकाच्' इति प्रकृतिवद्भावाट्टिलोपाभावः, 'आद् गुणः', 'सान्तमहतः संयोगस्य' इति दीर्घः । ननु चात्र नाङ्गमुगित्, किं तर्हि ? प्रत्ययः ? नैतदस्ति; अङ्गमप्युगिदेव । कथम् ?

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


उगिदचामिति किम् ? दृषत्, दृषदौ, दृषदः । सर्वनामस्थान इति किम् ? भवतः पश्य । श्रेयसः पश्य ।

अञ्चतिग्रहणं नियमार्थम्—अञ्चतेरेव धातोरन्यस्य मा भूत् । उखास्रत् । पर्णध्वत् ।

अधातोरिति किम् ? अधातुभूतपूर्वस्य यथा स्यात् । गोमन्तमिच्छति गोमत्यति, गोमत्यतेरप्रत्ययः—गोमान् । अत्र हि धातुत्वादञ्चतिग्रहणान्न स्यात् ॥

पदमञ्जरी

*अञ्चतिग्रहणं नियमार्थमिति* । न हि 'अधातोः' इति प्रतिषेधादप्राप्ते विध्यर्थमेतद्भवति । एवं ह्यधातोरिति न वक्तव्यम्; नियमादेव सिद्धेः । *उखास्रदिति* । 'वसुस्रंसु' इत्यादिना दत्वम् ।

*अधातोरिति किमिति* । अञ्चतिग्रहणान्नियमादेव धातोर्न भविष्यतीति प्रश्नः । *अधातुभूतपूर्वस्यापीति* । यस्य कदाचिदधातुत्वं दृष्टं तस्य सम्प्रति धातुत्वे सत्यपि यथा स्यादित्यर्थः । *गोमत्यतेरिति* । 'सुप आत्मनः क्यच्', अविद्यमानः

न्यासः

अवयावयवेनापि समुदायस्य सम्बन्धो भवत्येव, यथा—देवदत्तस्याङ्गुलिरित्यत्र देवदत्तस्यावयवस्य हस्तस्य योऽवयवोऽङ्गुलिस्तेन देवदत्तस्य सम्बन्धः । तस्मादिहापि प्रत्ययस्यावयवो य उक् इत्संज्ञकस्तेनाङ्गस्यापि सम्बन्धोऽस्त्येवेत्यङ्गमप्युगिदेव । प्राङिति । प्राञ्चतीति ऋत्विगादिसूत्रेण क्विन्, नुम्हल्ङ्याबादिसंयोगान्तलोपौ, 'क्विन्प्रत्ययस्य कुः' इति कुत्वम्—नकारस्य ङकारः । प्राञ्चौ, प्राञ्च इति । चुत्वम्—नकारस्य ञकारः ।

अथाञ्चतिग्रहणं किमर्थम्, यावतोगित्त्वादेव तस्य नुम् सिद्धः ? इत्यत आह—अञ्चतिग्रहणमित्यादि । उखास्रत्, पर्णध्वदिति । 'स्रन्सु ध्वन्सु अधःपतने', उखायां स्रंसते, पर्णानि ध्वंसते । 'क्विप्च' इति क्विप्, नलोपः, 'वसुस्रंसुध्वंस्वनडुहां दः' इति सकारस्य दकारः, तस्य 'वाऽवसाने' चर्त्वम्—तकारः ।

अधातोरिति किमिति । अञ्चतिग्रहणादेव नियमार्थाद्धातोर्न भवतीत्यभिप्रायः । अधातोरिति नायं प्रसज्यप्रतिषेधः, किं तर्हि ? पर्युदास इति मन्यमान आह—अधातुभूतपूर्वस्यापि यथा स्यादिति । पूर्वपक्षवादिनाऽधातोरिति प्रसज्यप्रतिषेधोऽयमिति मन्यमानेन चोदितम् । सिद्धान्तवादिना पर्युदासेन परिहृतम् । गोमत्यतीति । गोमच्छब्दात् 'सुप आत्मनः क्यच्' । गोमत्यतेरप्रत्यय इति । अश्रावी प्रत्ययोऽप्रत्ययः, स पुनः क्विप्, 'अतो लोपः' इत्यकारलोपः, 'क्यस्य विभाषा' इति यकारस्य नुम्, 'अत्वसन्तस्य चाधातोः' इति दीर्घः—गोमान् । कस्मात् पुनरसत्यधातुग्रहणेऽत्र न सिध्यतीत्यत आह—अत्र हीत्यादि । असत्यधातुग्रहणेऽञ्चतिग्रहणान्नियमाद् यथोखास्रदित्यादौ न

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## युजेरसमासे ॥ ७१ ॥

युजेरसमासे सर्वनामस्थाने परतो नुमागमो भवति । युङ्, युञ्जौ, युञ्जः ।

असमासे इति किम् ? अश्वयुक्, अश्वयुजौ, अश्वयुजः ।

'युजेः' इतीकारनिर्देशाद् 'युज समाधौ' इत्यस्य ग्रहणं न भवति—युजमापन्ना ऋषयः ॥

पदमञ्जरी

प्रत्ययः=अप्रत्ययः, स पुनः क्विप् । 'अतो लोपः', 'क्यस्य विभाषा' इति यलोपः, नुम्—गोमान् । कथं पुनरत्र दीर्घत्वम्, यावता 'अत्वसन्तस्य चाधातोः' इत्युच्यते ? नैष दोषः; 'अधातोः' इति तत्र विभज्यते, तत्सामर्थ्यादसन्तस्यैव प्रतिषेधः, नात्वन्तस्य । अत एव तत्र वृत्तौ असन्तस्यैव प्रत्युदाहरणमुपन्यस्तम् ॥

*युजेरसमासे* ॥ *युङ्, युञ्जौ, युञ्ज इति* । पूर्ववत्क्विबादि । *अश्वयुगिति* । 'सत्सूद्विष' इत्यादिना क्विप् । एतदेवासमासवचनं ज्ञापकम्—'अङ्गाधिकारे तस्य च तदुत्तरपदस्य च ग्रहणं भवति' इति ।

*युजेरितीकारनिर्देशादिति* । नायमिका धातुनिर्देशः, किं तर्हि ? धातुपाठगतस्येकारस्यानुकरणमिति भावः । *युजमिति* । सम्पदादित्वाद्भावे क्विप् ॥

न्यासः

भवति, तथात्रापि न स्यात् । भवति ह्ययमपि धातुः—सत्यपि धातुत्वे क्विबन्तत्वे 'क्विबन्ता धातुत्वं न जहति' इति कृत्वा । तस्मादधातुग्रहणं क्रियते—योऽन्यवस्थान्तरेऽधातुरासीत् तस्य ग्रहणं यथा स्यात् । अथ गोमानिति कथमत्र दीर्घत्वम् ? कथं च न स्यात् ? अधातोरिति प्रतिषेधः, नात्वन्तस्य । अत्र ह्यधातोरिति किम् ? पिण्डं ग्रसत इति पिण्डग्रः, चर्म वस्त इति चर्मवः—इत्यसन्तस्यैव प्रत्युदाहरणमुपन्यस्तम्, नात्वन्तस्य । अथ वा—चकारस्तत्र क्रियते, स चानुक्तसमुच्चयार्थः, तेन क्वचिद्धातोरपीति भविष्यति ॥

युजेरसमासे ॥ युङ्, युञ्जौ, युञ्ज इति । पूर्ववत्क्विन्नादि ।

अश्वयुगिति । अश्वं युनक्तीति 'सत्सूद्विष' इत्यादिना क्विप् । कथं युजेर्नुम्युच्यमाने समासेऽपि स्यात् ? तदन्तविधिना । कथमत्र तदन्तविधिः ? एतदेव ज्ञापकम्—अस्तीह तदन्तविधिरिति । उक्तञ्च—'अङ्गाधिकारे तस्य तदुत्तरपदस्य' इति वचनात् ।

युजेरित्यादि । इकारेण निर्देशो ह्येवमर्थः क्रियते—यस्य युजेरिकारोऽनुबन्धस्तस्य ग्रहणं यथा स्यात्, अन्यस्य मा भूदिति । तेन 'युज समाधौ' इत्यस्य ग्रहणं न भवति, न हि तस्येकारोऽनुबन्धोऽस्ति । युजमिति । सम्पदादित्वात्क्विप् । आपन्ना इति । प्राप्ता इत्यर्थः ॥

काशि० 5 : ३९

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## नपुंसकस्य झलचः ॥ ७२ ॥

नपुंसकस्य झलन्तस्याजन्तस्य च सर्वनामस्थाने परतो नुमागमो भवति। उदश्विन्ति। शकृन्ति। यशांसि। पयांसि। अजन्तस्य—कुण्डानि। वनानि। त्रपूणि। जतूनि।

नपुंसकस्येति किम्? अग्निचिद् ब्राह्मणः। झलच इति किम्? बहुपुरि। बहुधुरि। विमलदिवि। चत्वारि। अहानि।

### पदमञ्जरी

*नपुंसकस्य झलचः* ॥ *त्रपूणीति*। यद्यप्यत्र 'इकोऽचि विभक्तौ' इत्येव नुम्सिद्धः, तथापि 'अचः' इति प्रत्याहारग्रहणस्यानन्यार्थत्वादनेनैव नुम् भवति। कः पुनरत्र विशेषः-तेन वा नुमि सति, अनेन वा? न तु कश्चिद्विशेषः, न्यायस्तु प्रदर्शितः। यद्येवम्, मा कारि प्रत्याहारग्रहणम्, अकार एव गृह्यताम्—झलत इति? कः पुनरेवं लाघवे विशेषः! किञ्चात्र प्रत्याहारग्रहणात् 'उगिदचाम्' इत्यत्र-'अञ्चतेर्ग्रहणम्, न प्रत्याहारस्य' इत्युक्तम्; तदपि विघटितं स्यात्।

*बहुपुरीति*। बह्वः पुरो येषामिति बहुव्रीहौ 'ऋक्पूरब्धूःपथामानक्षे' इत्यकारः समासान्तः प्राप्तः, समासान्तविधेरनित्यत्वान्न भवति। विमला द्यौर्येषु तानि *विमलदिवि* दिनानि। इह झल्लक्षणस्य नुमोऽवकाशो यदुगिदनपुंसकम्—सर्पींषि, धनूंषि, उगिल्लक्षणस्यावकाशो यदनुगिन्नपुंसकम्—गोमान्, यवमान्; उगितो झलन्तस्य नपुंकस्योभयप्रसङ्गे परत्वादनेनैव नुम्

### न्यासः

नपुंसकस्य झलचः ॥ पयांसि, श्रेयांसीति। 'सान्तमहतः संयोगस्य' इति दीर्घः। बहुपुरि, बहुधुरीति। बह्व्यः पुरः, बह्व्यो धुरो येषामिति बहुव्रीहिः। 'ऋक्पुरब्धूःपथामानक्षे' इत्यकारः समासान्तो न भवति—'समासान्तविधिरनित्यः' इति कृत्वा। विमलदिवीति। विमला द्यौर्येषामिति तानि। विमलदिवि वकारो दन्त्यौष्ठ्यो झल् न भवति; झलः पूर्वेण पठितत्वात्। चत्वारीति। 'चतुरनडुहोरामुदात्तः' इत्याम्।

इह यदुगिन्नपुंसकं झलन्तं तस्यानेन नुमि कृते 'उगिदचाम्' इत्यादिना द्वितीयो नुम् प्राप्नोति, सम्भवति हि विधानकालेऽनेकस्य परत्वम्, यथा—पचतीत्यत्र लकारविकरणयोरेकस्माद्धातोरिति। अत्र तुदन्ति, नुदन्तीत्यत्र परस्य नुमोऽनुस्वारे कृते तस्य परसवर्णे च द्वयोर्नकारयोः श्रवणमापद्येत? भवतु नाम, हल्परस्य व्यञ्जनस्यैकस्यानेकस्य श्रुतिं प्रति नास्ति विशेषः शक्यते वक्तुम्। इह त्वस्ति विशेषः—कुर्वन्ति, कृषन्तीत्यत्र परस्य नुमोऽनुस्वारसवर्णयोः कृतयोः पूर्वस्याझल्परत्वादनुस्वारपरसवर्णौ न स्त इति अट्कुप्वादिना णत्वं प्राप्नोति। एकस्मिंस्तु नुमि तस्यानुस्वारे परसवर्णे कृते न भवति णत्वप्रसङ्गः; परसवर्णस्यासिद्धत्वात्। तस्मादुगिल्लक्षणस्य नुमः प्रतिषेधो वक्तव्य

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



उगितो झलन्तस्य नपुंसकस्य परत्वादनेनैव नुम्भवति । श्रेयांसि, भूयांसि, कुर्वन्ति, कृषन्ति ब्राह्मणकुलानि ।

❀ बहूर्जि प्रतिषेधो वक्तव्यः ❀ । बहूर्जि ब्राह्मणकुलानि ।

अन्त्यात्पूर्वं नुममेक इच्छन्ति । बहूर्ञ्जि ब्राह्मणकुलानि ॥

## इकोऽचि विभक्तौ ॥ ७३ ॥

### पदमञ्जरी

भवति । अस्तु, कृते पुनःप्रसङ्गविज्ञानादुगिल्लक्षणोऽपि नुम् प्राप्नोति, कथं पुनरेकमन्त्यमचमपेक्ष्यानेकस्य परत्वं सम्भवति ? मा नाम सम्भूत्प्रयोगे, विधानकाले तु सम्भवति, यथा पचतीति लटः शपश्च ? तत्र तुदन्ती, तुदन्तीत्यत्र परस्य नकारस्यानुस्वारपरसवर्णयोः कृतयोर्द्वयोर्नकारयोः श्रवणं प्रति विशेषोऽस्ति ।

इह तर्हि-कृषन्ति, रुषन्तीत्यत्र परस्य नुमोऽनुस्वारपरसवर्णयोः कृतयोः पूर्वस्याझल्परत्वादनुस्वारपसवर्णौ न स्त इति 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इति णत्वं प्राप्नोति, यदा पुनरेको नुम् तदा तस्यानुस्वारश्च प्राप्नोति णत्वं च, तत्र णत्वस्यासिद्धत्वादनुस्वारे कृते परसवर्णः, तस्यासिद्धत्वाण्णत्वाभावः सिद्धः; तस्मादुगिल्लक्षणस्य प्रतिषेधो वक्तव्यः ? इत्याशङ्क्याह–*उगितो झलन्तस्येति* । सकृद्गतिन्यायोऽत्राश्रीयत इत्येवकारेण दर्शयति—*अनेनैवेति* ।

*अन्त्यात्पूर्व इति* । रेफजकारयोर्मध्य इत्यर्थः ॥

*इकोऽचि विभक्तौ* ॥ *इक इति किमिति* । पूर्वत्र यद्ग्रहणं तदिहैव कर्त्तव्यम्–नपुंसकस्य झलः, अचोऽचीति; तेन तु हलन्तस्य न भविष्यति, सन्ध्यक्षरान्तं तु

### न्यासः

इत्याह—**उगितो झलन्तस्येत्यादि** । झलन्तलक्षणस्य नुमोऽवकाशो यदनुगिन्नपुंसकम्—सर्पींषीति, उगिल्लक्षणस्यावकाशो यदुगिदनपुंसकम्—गोमान्, यवमानिति; यदुगिज्झलन्तं नपुंसकं तस्योभयप्रसङ्गे सति परत्वादनेनैव नुमा भवितव्यम्, तस्मिन् सति पुनरुगिल्लक्षणो नुम् न भवति—'सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेव' इति कृत्वा । भूयांसीति । बहुशब्दादीयसुन्, 'बहोर्लोपो भू च बहोः' इतीकारस्य लोपः बहोश्च भूभावः । कुर्वन्ति, कृषन्तीति । शत्रन्तात् 'जश्शसोः शिः' इति शिभावः ।

**बहूर्जीत्यादि** । बहूर्जीत्यस्मिन् नुमः प्रतिषेधो वक्तव्यः, व्याख्येय इत्यर्थः । तत्रेदं व्याख्यानम्—'विभाषा चिण्णमुलोः' इति विभाषाग्रहणमनुवर्त्तते, सा च व्यवस्थितविभाषा, तेन बहूर्जीत्यत्र न भवति । 'उर्ज बलप्राणधारणयोः' इत्येतस्माद् 'भ्राजभास' इत्यादिना क्विप्, बहव ऊर्जो बलानि येषां तानि बहूर्जि ब्राह्मणकुलानि ।

**अन्त्यात्पूर्वमिति** । अन्त्यो जकारः, तस्मात्पूर्वं नुममिच्छन्ति केचिद्–बहूर्ञ्जीति ॥

**इकोऽचि विभक्तौ** ॥ 'विभक्तौ' इति वचनात् 'सर्वनामस्थाने' इति निवृत्तम् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


इगन्तस्य नपुंसकस्याङ्गस्याजादौ[1] नुमागमो भवति। त्रपुणी। जतुनी। तुम्बुरुणी। त्रपुणे। जतुने। तुम्बुरुणे।

इक इति किम्? कुण्डे। पीठे।

अचीति किम्? उत्तरार्थम्। यद्येवम्, तत्रैव कर्त्तव्यम्? इह तु करणस्य एतत्प्रयोजनम्—हे त्रपो इत्यत्र नम् मा भूदिति, 'न ङिसम्बुद्ध्योः' इति नलोपप्रतिषेधः स्यात्।

ननु च 'न लुमताङ्गस्य' इति प्रत्ययलक्षणे प्रतिषिद्धे विभक्ति-

पदमञ्जरी

नपुंसकं नास्त्येवेति प्रश्नः। अत एवादन्तं प्रत्युदाहरति, न हलन्तम्।

*अचीति किमिति*। त्रपुभ्यामित्यादौ हलादौ सत्यपि नुमि 'स्वादिषु' इति पदसंज्ञायां सत्याम् 'नलोपः प्रातिपदिकान्तस्य' इति लोपेनैव सिद्धमिष्टमिति प्रश्नः। इतरोऽपि विदिताभिप्राय आह—*उत्तरार्थमिति*। 'अस्थिदधिसक्थ्यक्ष्णामनङ्' अचि यथा स्यात्, हलादौ अस्थिभ्यामित्यादौ मा भूत्। पुनश्चोदयति—*यद्येवमिति*। परिहरति—*इह त्विति*। हे त्रपो इति। अत्र प्रागेव गुणान्नुमः प्रसङ्गः, गुणे कृतेऽनिगन्तत्वादप्रसङ्गः। स्यादेतत्—अस्त्वत्र नुम्, 'स्वमोर्नपुंसकात्' इति सोर्लुकि सुबन्तं पदमिति पदसंज्ञायां नलोपो भविष्यतीति? तत्राह—*न ङिसम्बुद्ध्योरिति*। *ननु चेत्यादि*। एवकारो भिन्नक्रमः प्रतिषेधेन सम्बद्ध्यमान औपचारिकमपि विभक्तेरस्तित्वं प्रतिषेधति। द्विविधं विभक्तेरस्तित्वम्—मुख्यम्, औपचारिकं च। तत्र मुख्यं श्रूयमाणायाः, इतरल्लुप्तायाः प्रत्ययलक्षणेन। तदिह

न्यासः

अचीति किमिति। एवं मन्यते—त्रपुभ्याम्, त्रपुभिरित्यत्र व्यञ्जनादौ मा भूदित्येवमर्थमज्ग्रहणं क्रियते, एतच्चाप्रयोजनम्; अस्त्वत्र नुम्, 'नलोपः प्रातिपदिकान्तस्य' इति लोपो भविष्यति। इतरो विदिताभिप्राय आह—उत्तरार्थमिति। 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः' इत्यजादौ यथा स्यात्, इह मा भूद्—अस्थिभ्याम्, अस्थिभिरिति, एवमर्थमज्ग्रहणम्। इहास्य करणस्य यत् प्रयोजनं तन्मया पृष्टम्, अतस्तदेव कथ्यताम्? इत्यभिप्रायेणाह—यद्येवमित्यादि। इतरो विदिताभिप्राय आह—इह तु करणस्येत्यादि। त्रपुशब्दात् सम्बोधने प्रथमैकवचने कृते यद्यचीति नोच्येत, तदात्रापि नुम् स्यात्, तदत्र नुम् मा भूदित्येवमर्थमचीत्युच्यते। स्यादेतत्—भवतु नाम नुम्, तस्य 'स्वमोर्नपुंसकात्' इति सोर्लुकि कृते 'नलोपः प्रातिपदिकान्तस्य' इति नलोपो भविष्यति? इत्याह—न ङिसम्बुद्ध्योरित्यादि।

ननु चेत्यादि। एवकारोऽत्र भिन्नक्रमः प्रतिषेधानन्तरं द्रष्टव्यः। स चौपचारिकमपि

---

१. 'परतो' इत्यधिकं क्वचित्।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



रेव नास्ति ? एतदेवाज्ग्रहणं ज्ञापकम्—प्रत्ययलक्षणप्रतिषेधोऽत्र न भवतीति । तथा च—सम्बुद्धिगुणः क्रियते ।

विभक्ताविति किम् ? तौम्बुरवं चूर्णम् ।

इकोऽचि व्यञ्जने मा भूदस्तु लोपः स्वरः कथम् ?

पदमञ्जरी

लुप्तत्वान्मुख्यं तावन्नास्ति, प्रत्ययलक्षणप्रतिषेधेनौपचारिकमपि नास्त्येव, तत्र 'विभक्तौ' इत्युच्यमानो नुम् कः प्रसङ्गो यत्सर्वथैवासत्यां विभक्तौ स्यात् ! नैव प्राप्नोति, नार्थोऽज्ग्रहणेन । एतदेवेत्यादि । अन्यथा ह्यज्ग्रहणं न कुर्यात्, कृतं तु, ज्ञापयति—अत्रेगन्ते नपुंसके सम्बुद्धिविषये प्रत्ययलक्षणप्रतिषेधो न भवतीति । तथा चेत्यादिना ज्ञापकस्य प्रयोजनं दर्शयति । 'सम्बुद्धौ च' इति वर्त्तमाने 'ह्रस्वस्य गुणः' इति विहितो गुणः सम्बुद्धिगुणः ।

*तौम्बुरवमिति* । विकारे 'ओरञ्' ।

इकोऽचीत्यादि । इकः अचीत्युच्यते *व्यञ्जनादौ मा भूत्*—त्रपुभ्याम्, त्रपुभिः । *अस्तु लोपः*, अस्त्वत्र नुम् 'नलोपः प्रातिपदिकान्तस्य' इति नलोपो भविष्यति ? *स्वरः कथम्*—पञ्चत्रपुभ्याम्, पञ्चत्रपुभिः ? इगन्ते उत्तरपदे द्विगौ पूर्वपदं प्रकृत्या

न्यासः

विभक्तेरस्तित्वम् 'न लुमताङ्गस्य' इति प्रतिषेधान्नास्तीति प्रतिपादयति । द्विविधं हि विभक्तेरस्तित्वम्—मुख्यम्, औपचारिकञ्च । तत्र मुख्यं श्रूयमाणायां विभक्तेर्भवति, इतरत् तु लुप्ताया अपि । कार्यस्यारितत्वाद् विभक्तेरप्युपचारेणास्तित्वमुच्यते, यथा—अस्त्यतीतं कर्मेति । तत्रातीतेन कर्मणा यदाहितं फलदानसामर्थ्यं तस्यास्तित्वात् तत् कर्मास्तीत्युच्यते । तदिह 'स्वमोर्नपुंसकात्' इति विभक्तेर्लुप्तत्वान्मुख्यं तावदस्तित्वं नास्ति । 'न लुमताङ्गस्य' इति प्रत्ययलक्षणप्रतिषेधादौपचारिकमपि नास्त्येव । तत्र विभक्तावुच्यमानो नुम् कः प्रसङ्गो यः सर्वथैवासत्यां विभक्तौ हे त्रपो इत्यत्र स्यात् ! नैव/ प्राप्नोति; तस्मान्नैतदज्ग्रहणस्य प्रयोजनम् । एतदेवेत्यादि । यदि ह्यत्र प्रत्ययलोपलक्षणप्रतिषेधः स्यात्, अज्ग्रहणमनर्थकं स्यात्, कृतञ्च, तस्मादेतदेवाज्ग्रहणं ज्ञापयति—प्रत्ययलोपलक्षणप्रतिषेधोऽत्रेगन्ते नपुंसके सम्बुद्धिविषये नास्तीति । तथा चेत्यादिना ज्ञापकस्य प्रयोजनमाह । सम्बुद्धिविषयो गुणः 'सम्बुद्धौ च' इति वर्त्तमाने यः 'ह्रस्वस्य गुणः' इत्यनेन गुणः स वेदितव्यः ।

तौम्बुरवं चूर्णमिति । तुम्बुरुणो विकारः, 'ओरञ्', 'ओर्गुणः' ।

क्वचित्—इकोऽचि व्यञ्जने मा भूदस्तु लोपः स्वरः कथमित्यादिकं श्लोकद्वयं पठ्यते । 'इकोऽचि विभक्तौ' इत्यत्राचीति किमर्थमुच्यते, न 'इको विभक्तौ' इत्येवोच्येत ? प्रयोजनमाह—व्यञ्जने मा भूदिति । प्रकरणान्नुमिति विज्ञायते । त्रपुभ्याम्, त्रपुभि-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## स्वरो वै श्रूयमाणेऽपि लुप्ते किं न भविष्यति ?

### पदमञ्जरी

भवतीत्येष स्वरो न प्राप्नोति; नुमि सत्यनिगन्तत्वात्। नलोपेऽपि कृते स्वरविधौ तस्यासिद्धत्वादनिगन्तत्वादनिगन्तत्वमेव।

स्वरो वै *श्रूयमाणेऽपि लुप्ते किन्न भविष्यतीति*। वैशब्दः क्षमायाम्। श्रूयमाणेऽपि वै नकारे स्वरो भवति–पञ्चत्रपुणे, पञ्चत्रपुणः। स लुप्ते किं न भविष्यति, यत्र शास्त्रवशेन सम्भवो न प्रत्यक्षेण, तत्र किं न भविष्यति ? भविष्यत्येव। किं पुनः कारणं श्रूयमाणेऽपि नुमि स्वरो भवति ? सङ्घातभक्तोऽसौ नोत्सहते तदुत्तरपदेगन्ततां विहन्तुम्। यदि चान्तरङ्गः स्वरः, प्रागेव विभक्त्युत्पत्तेर्भविष्यति। अत्र तर्हि–अतिराभ्याम्, अतिराभिरिति–अतिरिभ्यामिति स्थिते नुमि कृते तेन व्यवधानाद् 'रायो हलि' इत्याकारो न प्राप्नोति, नलोपेऽपि कृते सुब्विधौ तस्यासिद्धत्वाद्व्यवधानमेव, सङ्घातभक्तो नुम् तमेव न व्यवदध्यात्, रैशब्दं तु व्यवदधात्येव। अथापि अत्र 'अङ्गाधिकारे तस्य च तदुत्तरपदस्य च' इति रैशब्दान्तस्याङ्गत्वविधानान्नास्ति नुमाङ्गस्य व्यवधानम् ? अथापि 'निर्दिश्यमानस्यादेशा भवन्ति'

### न्यासः

रित्यत्र व्यञ्जनादौ मा भूदित्येवमर्थमज्ग्रहणं क्रियते। यद्येवम्, नार्थस्तेन, व्यञ्जनादौ नुमस्तु, न च तस्य श्रवणं प्रसज्यते; यस्मात् 'नलोपः प्रातिपदिकान्तस्य' इति नलोपो भविष्यति। पञ्चत्रपुभ्याम्, पञ्चत्रपुभिरित्यत्र कथं स्वरः ? पञ्चभिस्त्रपुभिः क्रीताभ्यां क्रीतैर्वेति 'तद्धितार्थोत्तरपदसमाहारे च' इति तद्धितार्थे समासः 'संख्यापूर्वो द्विगुः' इति द्विगुसंज्ञा, 'आर्हादगोपुच्छ' इत्यादिना ठक्, तस्य 'अध्यर्द्धपूर्वद्विगोर्लुगसंज्ञायाम्' इति लुक्, ततो विभक्तौ नुम्, नकारलोपः, तस्य 'नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति' इत्यसिद्धत्वात् 'इगन्तकालकपालभगालशरावेषु द्विगौ' इत्यनेन पूर्वपदप्रकृतिस्वरो न प्राप्नोति; अनिगन्तत्वात् 'त्रः संख्यायाः' इत्याद्युदात्तत्वं स्यात्। 'त्रः' इति नकाररेफान्तयोर्ग्रहणमिति। स्वरो वै इत्यादि। वैशब्दोऽक्षमायाम्। पञ्चत्रपुण इत्यत्र श्रूयमाणे नुमि स्वरो भवति। लुप्ते किं न भविष्यति ? भविष्यत्येवेत्यर्थः। किं पुनः कारणं श्रूयमाणे नुमि स्वरो भवति ? स्वरविधौ व्यञ्जनस्याविद्यमानत्वात्। अथ वा—समुदायभक्तो ह्यसौ नुम् नोत्सहतेऽवयवस्य त्रपुशब्दस्येगन्ततां विहन्तुम्।

इह तर्हि रायमतिक्रान्ताभ्यां ब्राह्मणकुलाभ्याम् अतिराभ्यामिति 'कुगतिप्रादयः' इति समासे कृते 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वत्वे च कृते यदि व्यञ्जनादौ नुम् स्यात्, तदा तस्य लोपे कृते नलोपस्यासिद्धत्वात् 'रायो हलि' इति हलादावुच्यमानमात्वं न प्राप्नोति, नुमा व्यवधानात्; समुदायभक्तोऽसौ समुदायमेव न व्यव-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



रायात्वं तिसृभावश्च व्यवधानान्नुमा अपि ।

पदमञ्जरी

इति रैशब्दस्य व्यवधानमेव । अथाप्यङ्गस्यात्वम्, एवमपि नुम एवात्वं प्राप्नोति, तत्र पूर्वस्य यणि सति अतिर्याभ्यामिति स्यात् । तथा प्रियतिसृभ्यां ब्राह्मण-कुलाभ्यामित्यत्र प्रियत्रिभ्यामिति स्थिते तिसृभावो न स्यात्; नुमा व्यवधा-नात् । नलोपेऽपि कृत इत्यादि पूर्ववत् ।

नैष दोषः; *रायात्वं तिसृभावश्च व्यवधानान्नुमा अपि* भवतः । व्यवधानादिति कर्मणि ल्यब्लोपे पञ्चमी, नुमा व्यवधानं प्राप्यापि भवत इत्यर्थः । विभक्ति-विधानदशायां यदानन्तर्यं तत्तत्राश्रीयते, न त्वादेशविधानदशायामिति भावः । *नुमा अपी*त्यत्र संहिताया अविवक्षितत्वात्सवर्णदीर्घत्वं न कृतम् । अन्ये मध्ये 'हि' शब्दं पठन्ति । अपिशब्देनैतत्सूचयति—प्रकारान्तरेणाप्यात्वतिसृभावौ सिद्ध्यत इति । तत्कथम् ? अतिरिभ्यामिति स्थिते नुमात्वयोरुभयोरप्यनित्ययोः परत्वा-दात्वमेवं तिसृभावः, तत्र सकृद्गतिन्यायाश्रयणेन नुमभावः, सत्यपि वा नुमि न कश्चिद्दोषः ? एवं तर्हि नुम्नुटोर्विप्रतिषेधार्थमङ्ग्रहणं कृतम् । 'ह्रस्वनद्यापो नुट्' इत्यस्यावकाशः–अग्नीनां वायूनाम्, नुमोऽवकाशः–त्रपुणे, जतुने; त्रपूणाम्, जतू-नामित्यत्रोभयप्रसङ्गे पूर्वविप्रतिषेधेन नुडिष्यते । 'नामि' इति दीर्घो यथा स्याद् इति । स च विप्रतिषेधोऽङ्ग्रहणे सत्युपपद्यते; द्वयोरप्यनित्यत्वेन तुल्यबलत्वात् । असति हि त्वङ्ग्रहणे कृताकृतप्रसङ्गित्वान्नित्यत्वान्नुमेव स्यात् ।

न्यासः

दध्यात्, अवयवं तु व्यवदधात्येव । तथा प्रियास्तिस्रोऽनयोर्ब्राह्मणकुलयोरिति बहुव्रीहौ कृते प्रियतिसृभ्यामिति—यदि व्यञ्जनादौ नुम् स्यात्, तदा 'त्रिचतुरोः स्त्रियां तिसृ-चतसृ' इत्यनेन तिस्रादेशो न प्राप्नोति, समुदायभक्तेन नुमा त्रिशब्दस्य व्यवधानात् ? नैतदस्ति;

रायात्वं तिसृभावं च व्यवधानान्नुमापि हि । भवतीति शेषः । व्यवधानादिति ल्यब्लोपे पञ्चमी,यथा–प्रासादात् प्रेक्षत इति । प्रासादमारुह्येत्यर्थः । तदयमर्थः–नुमा व्यवधानमपि प्राप्य राय आत्वं तिसृभावश्च भवतीति । कस्मात् पुनर्व्यवधाने तौ भवतः ? 'रायो हलि' इत्यत्र रायो या विहिता विभक्तिः, त्रिशब्दाच्च या विहिता विभक्तिस्तस्यामिति विहित-विशेषणपक्षस्य तत्राश्रयणात् । अथ वा–किं व्यवधानचिन्तया, परत्वादेव हि तौ भवि-ष्यतः, तयोस्तु कृतयोः 'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव' इति पुनर्नुम् न भवति । नुम्परत्वमनङ्गीकृत्य 'व्यवधान्नुमापि हि' इत्युक्तम् । अत एवापिशब्दः पक्षान्तर-द्योतनाय प्रयुक्तः । व्यवधाने च यथा भवति, तथोक्तमेव । एवं तर्हि नुम्नुटोर्विप्रति-षेधार्थमङ्ग्रहणमिति नुटि कृते नुम्न क्रियते । 'ह्रस्वनद्यापो नुट्' इति अस्यावकाशः— अग्नीनाम्, वायूनामिति, इगन्तनुमोऽवकाशः–त्रपुणे, जतुन इति; इहोभयं प्राप्नोति–

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



नुड् वाच्य उत्तरार्थं तु इह किञ्चित्त्रपो इति ॥

पदमञ्जरी

एतदपि प्रयोजनं दूषयति–नुड् *वाच्य इति*। क्रियमाणेऽप्यज्ग्रहणे नुट् तत्र वाच्यः=वचनेनैव साध्यः, अन्यथा परत्वान्नुमेव स्यात्। ततश्चाज्ग्रहणं कर्त्तव्यम्, पूर्वविप्रतिषेधश्च वक्तव्यः–इति यत्नद्वयमाश्रयणीयम्। तत्राज्ग्रहणमकृत्वा एक एव नुडर्थो यत्नः कर्त्तव्य इत्यर्थः।

इदं तर्हि प्रयोजनम्–तेनैव यत्नेन नुटि तत्रैवानजादौ नुम् मा भूत्? अस्तु, लोपो भविष्यति, नलोपस्यासिद्धत्वादनजन्तत्वात् 'नामि' इति दीर्घत्वं न स्यात्। मा भूदेवम्, 'नोपधायाः' इत्येवं भविष्यति? इह तर्हि शुचीनाम्, 'इन्हन्पूषार्यम्णां शौ', 'सौ च' इति नियमाद्दीर्घत्वं न स्यात्, प्रतिपदोक्तस्येनस्तत्र ग्रहणम्, लाक्षणिकश्चायम्। एवं प्रत्याख्यातेऽज्ग्रहणे प्रयोजनमाह—*उत्तरार्थं त्विति*। तुशब्दः तर्ह्यर्थे। यद्युत्तरत्रास्य प्रयोजनं तर्हि तत्रैव कर्त्तव्यम्? अत आह–*इह किञ्चिदिति*। तुशब्दस्य यण् न कृतः; 'इकोऽसवर्णे शाकल्यस्य' इति प्रकृतिभावविधानात्। *त्रपो इति*। अत्र तु 'सम्बुद्धौ शाकल्यस्येतावनार्षे' इति प्रगृह्यत्वादवादेशाभावः।

न्यासः

त्रपूणाम्, जतूनामिति, पूर्वविप्रतिषेधे नुडागमो भवति, नुटि च सति 'नामि' इति दीर्घत्वं प्राप्नोति, अस्मिंस्तु सति न स्यात्; अनजन्तत्वात्, यथा–वर्मणामित्यत्र। स चायं विप्रतिषेधोऽज्ग्रहणे सत्युपपद्यते। नुटि कृते नुम् न प्राप्नोति; अनजादित्वात्। नुम्यपि कृते नुण्न प्राप्नोति, ह्रस्वान्ताभावादित्येवमुभयोस्तुल्ययोर्विप्रतिषेध उपपद्यते। अक्रियमाणेऽज्ग्रहणे नुटि कृतेऽप्यकृतेऽपि हलादावजादौ च नुमा भवितव्यमिति तस्य नित्यत्वम्। नुमि कृते ह्रस्वान्तत्वाभावान्नुटा न भवितव्यमिति तस्यानित्यत्वम्। नित्यानित्ययोश्चातुल्यबलत्वादयुक्तो विप्रतिषेधे इति नित्यत्वान्नुमैव भवितव्यमिति। तस्मादज्ग्रहणं विप्रतिषेधार्थमिति।

अत्र परीहारान्तरमाह—नुड् वाच्य इति। लाघवार्थम्। नुडर्थः पूर्वविप्रतिषेधः। तादर्थ्यान्नुडित्युक्तः। क्रियमाणेऽप्यज्ग्रहणे विप्रतिषेधेन नुमेव प्राप्नोति, ततोऽवश्यं पूर्वविप्रतिषेधेन नुड् वाच्यः—'नुमचिरतृज्वद्भावेभ्यो नुड् भवति पूर्वविप्रतिषेधेन' इति। क्रियमाणेऽप्यज्ग्रहणे पूर्वविप्रतिषेधो वक्तव्यः। अक्रियमाणे तस्मिंस्तेनैव यत्नेन नुड् भविष्यतीति किं यत्नद्वयेन, तस्मादज्ग्रहणमनर्थकम्? ननु चेष्टवाची परशब्दः, इष्टवाचित्वाद् भविष्यति, अलं यत्नेन? असदेतत्; अवश्यं हि पूर्वविप्रतिषेधः परिगणयितव्यः, अन्यथेदमिष्टमिदमनिष्टमित्येतदेव न ज्ञायते। ननु च त्रपूणामित्यत्र पूर्वविप्रतिषेधेन नुटि कृते नुम् मा भूदित्येवमर्थमज्ग्रहणं कर्त्तव्यम्? नैतदस्ति; अस्त्वत्र नुम्, तस्य लोपो भविष्यति। नलोपस्य दीर्घविधावसिद्धत्वात् 'नामि' इति दीर्घत्व-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## तृतीयादिषु भाषितपुंस्कं पुंवद् गालवस्य ॥ ७४ ॥

तृतीयादिषु विभक्तिष्वजादिषु भाषितपुंस्कमिगन्तं नपुंसकं गालवस्याचार्यस्य मतेन पुंवद्भवति । यथा पुंसि ह्रस्वनुमौ न भवतः,

**पदमञ्जरी**

केचिदत्र हे त्रपो, हे त्रपु—इति द्वैरूप्यमिच्छन्ति, प्रत्ययलक्षणप्रतिषेधस्यानित्यत्वं ज्ञाप्यते, न स्वस्मिन्विषये सर्वथैवाभाव इति वदन्ति । तथा च *भाष्ये* हे त्रपु, हे त्रपो इति द्वयमप्युदाहृतम् । अन्ये तु हे त्रप्विति प्राप्ते हे त्रपो इति भवतीति *भाष्यं* व्याचक्षणा नित्यमेव गुणमिच्छन्ति । तथा च *वृत्तौ* गुण एवोदाहृतः ॥

*तृतीयादिषु भाषितपुंस्कं पुंवद् गालवस्य* ॥ 'नपुंसकस्य' इति यत्षष्ठयन्तं प्रकृतं तदिह 'भाषितपुंस्कम्' इत्यनेन सम्बन्धात्प्रथमान्तं सम्पद्यते । *पुंवदिति* । पुंशब्देन तुल्यमित्यर्थः । केन पुनः प्रकारेण पुंशब्देन तुल्यं वर्त्तते ? इत्यपेक्षायामाह—*यथेति* । नुम्ह्रस्वयोरभावः पुंशब्दे दृष्टः, तद्द्वारेण यत्सादृश्यं तदिहातिदिश्यते; अन्यस्य कस्यचित्तृतीयादिषु पुंशब्देन सादृश्यस्यासम्भवात् । तेनार्थान्नुम्ह्रस्वयोः

**न्यासः**

मनजन्तत्वान्न स्यादिति चेत् ? मा भूदनेन, 'नोपधायाः' इत्यनेन भविष्यति । इह तर्हि शुचीनामित्यत्र 'इन्हन्पूषार्यम्णां शौ' इति नियमाद्दीर्घत्वं न स्यात् ? नैतदस्ति; लक्षणप्रतिपदोक्तपरिभाषया प्रतिपदोक्तस्येन्नन्तस्य स नियमः । अयञ्च नुमि कृते सतीन्नन्त इति लाक्षणिकत्वादेवास्य नियमेन प्रत्याख्यानं करिष्यते । एवं प्रत्याख्यातेऽज्ग्रहणे अत उत्तरतोऽज्ग्रहणस्य प्रयोजनं दर्शयितुमाह—उत्तरार्थं त्विति । तुशब्दस्तर्ह्यर्थे । तर्हिशब्दः पक्षान्तरोपन्यासे । यद्येतत् प्रयोजनं नोपपद्यते, उत्तरार्थं तर्ह्यज्ग्रहणं कर्तव्यम् ।

इह तु करणस्य यत्प्रयोजनं तदुच्यताम् ? इत्याह—इहेत्यादि । अपिशब्दोऽत्र गम्यमानार्थत्वान्न प्रयुक्तः । इहापि प्रयोजनमस्ति, किं पुनस्तत् ? इत्याह—त्रपो इति । हे त्रपो इत्यस्योदाहरणस्य साधुत्वार्थमज्ग्रहणम् । अक्रियमाणे त्वज्ग्रहणे प्रत्ययलोपलक्षणमिहास्तीति न ज्ञाप्येत; यतश्च हे त्रपो इत्यत्र लुप्तायां सम्बुद्धावुच्यमानो गुणो न स्यात्, अज्ग्रहणे सत्यत्रापि प्रत्ययलोपलक्षणो भवति । तस्मादेतदर्थमज्ग्रहणं कर्त्तव्यम्, उत्तरार्थञ्च ॥

तृतीयादिषु भाषितपुंस्कं पुंवद् गालवस्य ॥ इगन्तं नपुंसकमिति । नपुंसकस्येक इत्यनुवर्तते । तच्च यद्यपि षष्ठयन्तं प्रकृतम्, तथाप्येतदर्थाद् विभक्तिविपरिणामो भवतीति प्रथमान्तं सम्पद्यते । पुंवद् भवतीति । अस्यार्थं स्पष्टीकर्तुमाह—यथेत्यादि । कथं पुनः 'पुंवद् भवति' इत्यनेन प्रतिषेधातिदेशः शक्यते वक्तुम् ? एवं मन्यते—पुंसि तृतीयादिष्वजादिषु न किञ्चित् कार्यं विधीयते यन्नपुंसकेऽतिदिश्येत । तस्मान्नपुंसकाश्रयस्य कार्यस्य पुंस्यभावात् प्रतिषेधातिदेश एवायं विज्ञायते । एवमपि नुम एव

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तद्वदत्रापि न भवत इत्यर्थः। ग्रामणीर्ब्राह्मणः, ग्रामणि ब्राह्मणकुलम्। ग्रामण्या ब्राह्मणकुलेन, ग्रामणिना ब्राह्मणकुलेन। ग्रामण्ये ब्राह्मणकुलाय, ग्रामणिने ब्राह्मणकुलाय। ग्रामण्यो ब्राह्मणकुलात्, ग्रामणिनो ब्राह्मणकुलात्। ग्रामण्यो ब्राह्मणकुलस्य, ग्रामणिनो ब्राह्मणकुलस्य। ग्रामण्योर्ब्राह्मणकुलयोः, ग्रामणिनोर्ब्राह्मणकुलयोः। ग्रामण्यां ब्राह्मणकुलानाम्–'नुमचिर' इति पूर्वविप्रतिषेधेन नुट्, ग्रामणीनां ब्राह्मणकुलानाम्। ग्रामण्यां ब्राह्मणकुले, ग्रामणिनि ब्राह्मणकुले।

शुचिर्ब्राह्मणः, शुचि ब्राह्मणकुलम्। शुचिना ब्राह्मणकुलेन।

### पदमञ्जरी

प्रतिषेधोऽयं सम्पद्यते। नन्वेवमपि प्रकृतत्वान्नुम एवाभावातिदेशो युक्तः, न ह्रस्वस्य, ततश्च ह्रस्वस्यावस्थितत्वात्तदाश्रयाणां गुणनाभावनुडौत्त्वात्त्वनां प्रतिषेधो वक्तव्यः। गुणः–'घेर्ङिति'; ग्रामण्ये कुलाय; नाभावः–'आङो नास्त्रियाम्' ग्रामण्या कुलेन; नुट्–'ह्रस्वनद्यापो नुट्' ग्रामण्यां कुलानाम्; औत्वम्–'औत्', 'अच्च घेः', ग्रामण्यां ब्राह्मणकुले? नैष दोषः; अतिदेशसामर्थ्याद् ह्रस्वाभावोऽप्यतिदिश्यते, अन्यथा प्रतिषेधमेव *गालवस्य* विदध्यात्। *ग्रामणीर्ब्राह्मण इति*। भाषितपुंस्कप्रदर्शनमेतत्। *ग्रामणि ब्राह्मणकुलमिति*। नपुंसकह्रस्वत्वं भवति, अतस्तदभावोऽतिदिश्यत इत्यनेन दर्शितम्। परिशिष्टमुदाहरणं *शुचि ब्राह्मणकुलमिति* प्रक्रमाभेदाय दर्शितम्। प्रत्युदाहरणेषु यथायोगं नित्यमेव नुम्ह्रस्वौ भवतः।

### न्यासः

प्रकृतस्याभावातिदेशः पक्षे स्यात्, न ह्रस्वस्य; तस्याप्रकृतत्वात्, ततश्च ह्रस्वाश्रयाणि गुण-नाभाव-नुडौत्त्वात्त्वानि प्रसज्येरन्—'घेर्ङिति' गुणः–ग्रामण्ये ब्राह्मणकुलायेति; 'आङो नास्त्रियाम्' इति नाभावः–ग्रामण्या ब्राह्मणकुलेनेति; 'ह्रस्वनद्यापो नुट्'–ग्रामण्यां ब्राह्मणकुलानामिति; 'अच्च घेः' इत्यौत्त्वात्त्वम्–ग्रामण्यां ब्राह्मणकुल इति? नैतदस्ति; नुमभावमात्रातिदेशे ह्यतिदेश एवानर्थकः स्यात्। नुम एव गालवस्य मतेन प्रतिषेधं कुर्यात्। तस्मादतिदेशसामर्थ्याद् ह्रस्वाभावोऽप्यतिदिश्यते। ग्रामणीर्ब्राह्मण, ग्रामणि ब्राह्मणकुलमिति। भाषितपुंस्कत्वदर्शनार्थमिदमुक्तम्, न तूदाहरणम्। इदमत्रोदाहरणम्–ग्रामण्या ब्राह्मणकुलेनेति। अत्र पुंवद्भावेन ह्रस्वो न भवति, नुमपि। 'एरनेकाचः' इत्यादिना यणादेशः। ग्रामणिनेति। पुंवद्भावादन्यत्र 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वत्वम्, 'आङो नास्त्रियाम्' इति नाभावः। ग्रामणीनामिति। पूर्वविप्रतिषेधेन नुटि कृते 'नामि' इति दीर्घत्वम्।

शुचिशब्दस्य तृतीयैकवचनं नोदाहृतम्; विशेषाभावात्[1]। सत्यसति वा पुंवद्भावः

१. एतेन तृतीयैकवचनान्तमुदाहरणं न मौलिकमिति प्रतीयते एतन्मते।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


शुचये ब्राह्मणकुलाय, शुचिने ब्राह्मणकुलाय । शुचेर्ब्राह्मणकुलात्, शुचिनो ब्राह्मणकुलात् । शुचेर्ब्राह्मणकुलस्य, शुचिनो ब्राह्मणकुलस्य । शुच्योर्ब्राह्मण कुलयोः, शुचिनोर्ब्राह्मणकुलयोः । शुचौ ब्राह्मणकुले, शुचिनि ब्राह्मणकुले ।

तृतीयादिष्विति किम् ? ग्रामणिनी ब्राह्मणकुले। शुचिनी ब्राह्मणकुले । भाषितपुंस्कमिति किम् ? त्रपुणे, जतुने ।

इह कस्मान्न भवति—पीलुर्वृक्षः पीलु, फलम्—पीलुने फलायेति ? समानायामाकृतौ यद्भाषितपुंस्कं तुल्ये प्रवृत्तिनिमित्ते तस्य पुंवद्भावः । इह तु वृक्षाकृतिः प्रवृत्तिनिमित्तं पुंसि शब्दस्य, फलाकृतिर्नपुंसके ।

पदमञ्जरी

*पीलु फलमिति* । विकारे ओरञः फले लुक् । *समानायामाकृताविति* । अस्यैव विवरणम्—*तुल्ये प्रवृत्तिनिमित्त इति* । यद्योगाद् द्रव्ये शब्दनिवेशः, तत्प्रवृत्तिनिमित्तं ग्रामनयनादि । अस्त्वेवम्, प्रकृते किमायातम् ? तत्राह–*इह त्विति* । पुंसि

न्यासः

'आङो नास्त्रियाम्' इति नाभावेन भवितव्यम् । शुचय इति । पुंवद्भावपक्षे न नुम्, 'घेर्ङिति' इति गुणः । शुचिन इति । पुंवद्भावाभावपक्षे नुम् ।

ग्रामणिनी ब्राह्मणकुले इति । पुंवद्भावाभावादिह ह्रस्वनुमौ भवतः । त्रपुणे, जतुने इति । सर्वकालं नपुंसकत्वमेवानयोरिति भाषितपुंस्कत्वाभावः । तेनात्र पुंवद्भावाभावान्नुम्भवत्येव ।

इह कस्मान्न भवतीति । भाषितपुंस्कशब्दस्य बहुव्रीहेः शब्दोऽन्यपदार्थः । पीलुशब्दश्चायं पुंसि वृक्षे वर्तित्वा पीलोर्विकारः फलमिति विवक्षिते सति 'ओरञ्' इत्यागतस्याञः 'फले लुक्' इति लुक् क्रियते, तदा नपुंसके फले वर्त्तत इति भाषितपुंस्को भवति, न चेह कश्चिद्विशेष उपात्तः, तस्माद् भवितव्यमेवात्र पुंवद्भावेनेति मन्यमानस्य प्रश्नः । समानायामाकृतावित्युत्तरम् । अस्यैवार्थं स्पष्टीकर्तुमाह – तुल्ये प्रवृत्तिनिमित्त इति । अत्र 'तस्य पुंवद्भावो विधीयते' इत्यध्याहार्यम् । आक्रियेते व्युत्पाद्येते परिच्छिद्येते अनया बुद्धिशब्दाविति आकृतिः । शब्दस्य प्रवृत्तिकारणमिहाकृतिरभिप्रेता, न संन्निवेशः, नापि जातिमात्रम् । तस्मिंस्तु तुल्ये प्रवृत्तिनिमित्ते यद् भाषितपुंस्कं तस्य पुंवद्भावो विधीयते । तथा च—ग्रामणीशब्दस्य, शुचिशब्दस्य च समाने प्रवृत्तिनिमित्ते पुंवद्भाव उदाहृतः, यथा–ग्रामणीशब्दस्य पुंसि नपुंसके च वर्त्तमानस्य ग्रामनयनं प्रति कर्तृत्वं समानाकृतिः प्रवृत्तिनिमित्तम् । शुचिशब्दस्यापि शुचित्वं गुणः तत्रैवैतत् स्यात् । इहापि समानैवाकृतिः ? इत्याह–इह त्वित्यादि । तुशब्दो ग्रामणीशब्दादेर्विशेषं

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तदेतदेवं कथं भवति—भाषितपुंस्कमिति ? भाषितः पुमान्यस्मिन्नर्थे प्रवृत्ति निमित्ते स भाषितपुंस्कशब्देनोच्यते, तद्योगादभिधेयमपि यद् नपुंसकं तदपि भाषितपुंस्कम् । तस्य प्रतिपादकं, यच्छब्दरूपं तदपि भाषितपुंस्कमिति ।

पदमञ्जरी

शब्दस्य या प्रवृत्तिस्तत्र वृक्षाकृतिः वृक्षावान्तरजातिर्निमित्तमित्यर्थः । *फलाकृतिर्नपुंसक इति* । प्रवृत्तिनिमित्तशब्दस्येत्यनुषङ्गः । फलाकृतिः=फलावान्तरजातिः । तत्र यद्यपि पीलोः फलमिति व्युत्पत्तौ वृक्षावान्तरजातिरप्यङ्गीकृता, तथापि न सा फले प्रवृत्तिनिमित्तम्, किं तर्हि ? फलावान्तरजातिरेवेति भिद्यते निमित्तम् । *तदेतदेवमित्यादि* 'स्त्रियाः पुंवत्' इत्यत्रैतद्व्याख्यातम्, तत एवावधार्यम् ।

न्यासः

दर्शयति । अनेन पीलुशब्दस्य भिन्नायामाकृतौ भाषितपुंस्कत्वं दर्शयति । वृक्षाकृतिः वृक्षजातिः । फलाकृतिः फलजातिः । तदेवं समानायामाकृतौ यद्भाषितपुंस्कं तस्य पुंवद्भावो विधीयते । न तु पीलुशब्दः समानायामाकृतौ भाषितपुंस्क इति न भवति तस्य पुंवद्भावः । तदेतदेवमित्यादि । यदेतदुक्तम्—'समानायामाकृतौ' इत्यादि, तदेतदेवम्प्रकारमर्थरूपं कथम्भवति ? न कथञ्चिदित्यर्थः । 'समानायामाकृतौ' इत्यस्य विशेषस्यानुपादानादित्यभिप्रायः । भाषितपुंस्कग्रहणादित्यादिना यथैतदेवं भवति तथा दर्शयति । शब्दे ह्यन्यपदार्थे समाश्रीयमाणे सत्येतन्नोपपद्यते । न चात्र शब्दोऽन्यपदार्थत्वेनाश्रितः, किं तर्हि ? अर्थः । सोऽपि न सर्वः, अपि तु प्रत्यासत्तेर्यस्य शब्दस्य यत् प्रवृत्तिनिमित्तं स एव विज्ञायत इति स एव भाषितपुंस्कशब्देनोच्यते; अन्यथा सर्व एव ह्यर्थो भाषितपुंस्को भवति, अन्ततोऽर्थशब्देनापि भाषितपुंस्कत्वसम्भवात् । तत्र यदि येन केनचिच्छब्देन यो भाषितपुंस्कः स इहाश्रीयते, तदा भाषितपुंस्कग्रहणमनर्थकं स्यात्; व्यावर्त्याभावात् । तस्माद् यस्य नपुंसकाभिधायिनः शब्दस्य पुंवद्भाव इह विधातुमिष्टस्तेनैव स्वस्मिन् प्रवृत्तिनिमित्ते पुमान् भाषितः, स एव भाषितपुंस्कोऽत्राश्रीयते । तद्योगादित्यादि । तेन प्रवृत्तिनिमित्तलक्षणेनार्थेन योगात् सम्बन्धादभिधेयं यन्नपुंसकं तदपि भाषितपुंस्कमित्युच्यते । भवति हि तद्योगात् ताच्छब्द्यम्, यथा—यष्टीः प्रवेशयेति । योगः पुनरत्र समवायसमवायिलक्षणः; शब्दप्रवृत्तिनिमित्तस्यार्थस्य नपुंसकेन समवायात् । यत् तस्येत्यादि । तस्य नपुंसकस्य यत् प्रतिपादकं शब्दरूपं तदपि भाषितपुंस्केन नपुंसकेन योगाद् भाषितपुंस्कमित्युच्यते । योगः पुनरनयोर्वाच्यवाचकभावः । तत्र यद्यपि सूत्रेऽर्थो भाषितपुंस्कशब्देनोपात्तः, तथाप्यर्थे कार्यासम्भवाद् यथोक्तेन प्रकारेण यो भाषितपुंस्कः शब्दस्तस्यैवायं पुंवद्भावो विधीयते । एवञ्च स विधीयमानः समानायामाकृतौ यो भाषितपुंस्कः शब्दः सामर्थ्यात् तस्य भवतीति विज्ञायते । यो ह्येवं भाषितपुंस्केन शब्दप्रवृत्तिनिमित्तेन सम्बद्धं नपुंसकमाह

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


इक इत्येव—कीलालपा ब्राह्मणः । कीलालपं ब्राह्मणकुलम् । कीलालपेन ब्राह्मणकुलेन ।

अचीत्येव—ग्रामणिभ्यां ब्राह्मणकुलाभ्याम् ॥

**अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः ॥ ७५ ॥**

अस्थि, दधि, सक्थि, अक्षि—इत्येतेषां नपुंसकानां तृतीयादिष्वजादिषु विभक्तिषु परतोऽनङित्ययमादेशो भवति, स चोदात्तो भवति । अस्थ्ना, अस्थ्ने । दध्ना, दध्ने । सक्थ्ना, सक्थ्ने । अक्ष्णा, अक्ष्णे ।

अस्थ्यादय आद्युदात्ताः, तेषामनङादेशः स्थानिवद्भावादनुदात्तः स्यादित्युदात्तवचनम् । तत्र भसंज्ञायामल्लोपे कृते उदात्तनिवृत्तिस्वरेण विभक्तिरुदात्ता भवति ।

**पदमञ्जरी**

*कीलालपेनेति* । ह्रस्वस्य निवृत्तौ 'आतो धातोः' इति लोपः स्यात् ॥

*अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः* ॥ अनङो द्वितीयोऽकार उच्चारणार्थः, ङकारोऽन्तादेशार्थः, अस्थ्यादयः 'नब्विषयस्यानिसन्तस्य' इत्याद्युदात्ताः, शेषमनुदा-

**न्यासः**

स नियोगतः समानायामाकृतौ भाषितपुंस्को भवति । यथा स एव ग्रामणीशब्दः, शुचिशब्दश्च । पीलुशब्देन यत्र भाषितः पुमान् प्रवृत्तिनिमित्ते वृक्षाकृतौ न तत्सम्बद्धमसौ नपुंसकमाह । किं तर्हि ? फलाकृतिसम्बन्धम् । तस्मात् पीलुशब्दो न समानायामाकृतौ भाषितपुंस्क इति न भवति तस्य पुंवद्भावः ।

**कीलालपा इति** । 'आतो मन्निक्वनिब्वनिपश्च' इति विच् । कीलालपाशब्दोऽयं समानायामाकृतौ भाषितपुंस्कः—उभयत्रापि वर्त्तमानः कीलालपात्वं प्रवृत्तिनिमित्तमादय प्रवर्तत इति कृत्वा । इगन्तस्तु न भवतीति न भवति पुंवद्भावः, तेन ह्रस्वत्वं भवत्येव । तस्मिन् सति 'टाङसिङसामिनात्स्याः' इतीनादेशे कृते कीलालपेनेति भवति । यदि पुनरत्र पुंवद्भावः स्यात् तदा ह्रस्वत्वं न स्यात्, ततश्च 'आतो धातोः' इत्यकारलोपे कृते कीलालपेति स्यात् ॥

**अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः** ॥ 'इकोऽचि विभक्तौ' इति नुमि प्राप्तेऽस्थ्यादीनामनङ् विधीयते । ङकारोऽन्त्यादेशार्थः । अकार उच्चारणार्थः । अस्थ्यादयश्चैते 'नब्विषयस्यानिसन्तस्य' इत्याद्युदात्ताः, शेषमनुदात्तम् । तत्रानङ् विधीयमानः स्थानिवद्भावादनुदात्तत्वं प्राप्नोतीत्युदात्तत्वमुच्यते—नब्विषयस्येति । नपुंसकविषयस्येत्यर्थः । **अस्थ्नेति** । अनङि कृते 'अल्लोपोऽनः' इत्यकारलोपः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



एतैरस्थ्यादिभिर्नपुंसकैरनपुंसकस्याप्यङ्गस्य तदन्तग्रहणमिष्यते । प्रियास्थ्ना ब्राह्मणेन[1], प्रियदध्ना[2] ।

तृतीयादिष्विति किम् ? अस्थिनी, दधिनी ।

अचीत्येव–अस्थिभ्याम्, दधिभ्याम् ।

**पदमञ्जरी**

त्तम् । तत्रान्तर्यतोऽनुदात्त आदेशे प्राप्ते उदात्तवचनमस्थ्नेत्यादौ 'अल्लोपोऽनः' इत्यकारलोपे 'अनुदात्तस्य च यत्रोदात्तलोपः' इति विभक्तेरुदात्तत्वार्थम् । 'विभाषा ङिश्योः' इत्यल्लोपाभावपक्षे त्वकारस्य उदात्तस्य श्रवणं भवति–अस्थनीति, यथा 'छन्दस्यपि दृश्यते' इत्यत्र—इन्द्रो दधीचो अस्थभिरिति ।

*एतैरस्थ्यादिभिरित्यादि* । अत्र 'अङ्गाधिकारे तस्य च तदुत्तरपदस्य च' इति तदन्तस्य तावद् ग्रहणं भवति । तथा 'नपुंसकस्य' इत्यनुवृत्तं श्रुतत्वादस्थ्यादीनां विशेषणम्, न प्रकृतस्याङ्गस्य, तेनानपुंसकस्यापि तस्य ग्रहणम् । किमर्थं पुनरस्थ्यादयो नपुंसकत्वेन विशेष्यन्ते ? यदृच्छाशब्दानां पुंल्लिङ्गानां मा भूत्–दधिर्नाम कश्चित्, तेन दधिनेति । नैतदस्ति प्रयोजनम्—

अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः ।
शास्त्रार्थस्तेषु कर्त्तव्यः शब्देषु न तदुक्तिषु ॥

एवं तर्हि, 'नपुंसकस्य' इत्यनुवृत्तस्यान्वयप्रदर्शनमात्रं कृतम्—एतैरस्थ्यादिभिर्नपुंसकैरिति ॥

**न्यासः**

**एतैरित्यादि** । कथं पुनरेतल्लभ्यते, यावता प्रकृतस्यास्थ्यादिभिर्विशेषणाद् विशेषणेन तदन्तविधिरिति विज्ञानाद् 'अङ्गाधिकारे तस्य तदुत्तरपदस्य' इति वचनाद्वा यद्यपि तदन्तविधिर्भवति, तथापि सत्यपि तस्मिन्नस्थ्याद्यन्तस्यानपुंसकस्य ग्रहणं नोपपद्यते, नपुंसकस्येत्यनुवृत्तेः ? नैष दोषः; न ह्यत्र नपुंसकेनाङ्गं विशिष्यते, अपि तु श्रुतत्वादस्थ्यादय एव । एवञ्च तदन्तस्याङ्गस्य लिङ्गान्तरेऽपि वर्त्तमानस्यास्थ्यादीनां नपुंसकत्वं विद्यत एव । तेन नपुंसके ये वर्त्तन्तेऽस्थ्यादयस्तदन्तस्यानपुंसकेऽपि वर्त्तमानस्य ग्रहणमुपपन्नं भवति । यदि तर्हि तदन्तस्य ग्रहणम्, केवलानां न सिध्यति ? अयमप्यदोषः; व्यपदेशिवद्भावात् केवलानां न भविष्यति । 'व्यपदेशिवद्भावोऽप्रातिपादिकेन' इत्येषा परिभाषा प्रत्ययविधिविषयेभवर्तातीह नोपतिष्ठत एव ।

नपुंसकेनास्थ्यादिविशेषणं किम् ? यदा ते यदृच्छाशब्दाः सन्तोऽपि लिङ्गान्तरे वर्त्तन्ते तदा मा भूत्—दधिर्नाम कश्चित्, तेन दधिनेति ॥

१. 'ब्राह्मणकुलेन' इति पाठान्तरम् ।

२. 'प्रियदध्ने' इत्यधिकं क्वचित् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


## छन्दस्यपि दृश्यते ॥ ७६ ॥

अस्थिदधिसक्थ्यक्ष्णामनङ् छन्दस्यपि दृश्यते। यतो विहित-स्ततोऽन्यत्रापि दृश्यते।

'अचि' इत्युक्तम्, अनजादावपि दृश्यते—इन्द्रो दधीचो अस्थभिः। भद्रं पश्येमाक्षभिः।

'तृतीयादिषु' इत्युक्तम्, अतृतीयादिष्वपि दृश्यते—अस्थान्युत्कृत्य जुहोति।

'विभक्तौ' इत्युक्तम्, अविभक्तावपि दृश्यते—अक्षण्वता लाङ्गलेन। अस्थन्वन्तं यदनस्था बिभर्ति॥

## ई च द्विवचने ॥ ७७ ॥

द्विवचने परतश्छन्दसि विषयेऽस्थ्यादीनामीकारादेशो भवति, स चोदात्तः। अक्षी ते इन्द्र पिङ्गले कपेरिव। अक्षीभ्यां ते नासिकाभ्याम्।

### पदमञ्जरी

छन्दस्यपि दृश्यते॥ 'छन्दसि' इत्येव सिद्धे 'अपि दृश्यते' इत्येतत्सर्वोपाधि-व्यभिचारार्थम्; अन्यथारम्भसामर्थ्यात्कस्यचिदेव व्यभिचारः शङ्क्येत। तदिद-मुक्तम्—*यत्र विहितस्ततोऽन्यत्रापि दृश्यत इति*। *अस्थन्वन्तमिति*। अनङि कृते 'अनो नुट्' इति मतुपो नुट्, अनङो नकारस्य लोपः॥

ई च द्विवचने॥ *अक्षी इति*। अक्षि+औ इति स्थिते औङः शीभावः, पूर्वस्य इकारः, तत्र 'प्रथमयोः पूर्वसवर्णः' इति दीर्घस्य 'दीर्घाज्जसि च' इति नित्ये प्रतिषेधे प्राप्ते 'वा छन्दसि' इति पक्षे पूर्वसवर्णदीर्घत्वम्। 'अकः सवर्णे दीर्घः' इति वा दीर्घत्वम्। ननु चासत्यप्यस्मिन्वचने पूर्वसवर्णदीर्घत्वेनैव सिद्धम्? नात्र पूर्वसवर्णदीर्घत्वम् प्राप्नोति, परत्वान्नुमा बाध्यते। एवं तर्हि

### न्यासः

छन्दस्यपि दृश्यते॥ यतो विहित इत्यादिनाऽपिशब्दस्य सर्वोपाधिव्यभिचारार्थतां दर्शयति। अस्थभिरिति। अनङि कृते नलोपः। अस्थान्युत्कृत्येति। शस्यनङ्। अक्षण्वतेति। अत्रापि मतुपि 'अनो नुट्' इति नुडागमः, अनङो नकारस्य लोपे कृते 'मादुपधायाश्च' इति वत्वम्। अक्षण्वन्तमिति। पूर्वेण तुल्यम्। द्वितीयान्तमे-तत्। यदनस्थेति। अस्थि यस्य नास्तीति सावनङ्, 'सर्वनामस्थाने च' इति दीर्घः॥

ई च द्विवचने॥ चकारश्छन्दसीत्यनुकर्षणार्थः। अक्षी ते इति। अक्षि औ इति स्थिते 'नपुंसकाच्च' इति शीभावः, इकारे कृते 'प्रथमयोः पूर्वसवर्णः' इति दीर्घः, 'दीर्घाज्जसि च' इति प्रतिषिद्धोऽपि छान्दसत्वाद्भवति। ननु सवर्ण दीर्घत्वेनाप्येतत् सिद्ध्यति?

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अक्षी—इत्यत्र नुम्परत्वादीकारेण बाध्यते, तत्र कृते 'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव' इति पुनर्नुम्न क्रियते ॥

## नाभ्यस्ताच्छतुः ॥ ७८ ॥

अभ्यस्तादङ्गादुत्तरस्य शतुर्नुम्न भवति । ददत्, ददतौ, ददतः । दधत्, दधतौ, दधतः । जक्षत्, जक्षतौ, जक्षतः । जाग्रत्, जाग्रतौ, जाग्रतः ।

शतुरनन्तर ईकारो न विहित इति व्यवहितस्यापि नुमः प्रतिषेधो विज्ञायते ॥

### पदमञ्जरी

छन्दसि नपुंसकस्य पुंवद्भावो वक्तव्यः–मधोस्तृप्ता इवासते–इत्येवमाद्यर्थम्, तेन पुंवद्भावेन नुमि शीभावे चासति पूर्वसवर्णदीर्घत्वेनापि सिद्धम्—अक्षी इति ? सत्यम्; स्वरस्तु न सिध्यति, अक्षिशब्दस्य 'नब्विषयस्यानिसन्तस्य' इत्याद्युदात्तत्वात् । न च पुंवद्भावेन स्वरस्याप्यभावातिदेश इष्यते । तस्मात्स्वरार्थमत्रापीकार एव विधेयः ॥

*नाभ्यस्ताच्छतुः* ॥ *ददिति* । 'श्नाभ्यस्तयोरातः' इत्यकारलोपः । जक्षदित्यादौ 'जक्षित्यादयः षट्' इत्यभ्यस्तसंज्ञा । कथं पुनश्चतुर्भिर्योगैर्व्यवहितस्य नुमः प्रतिषेधः शक्यो विज्ञातुम् ? इत्याह—*शतुरन्तरो न विहित इति* । अनन्तर ईकारः शत्रन्तस्य न विहितः, एवं तदनन्तर इति यावद्विहितान्वेषणे नुमि पर्यवसानम् ॥

### न्यासः

यद्यपि रूपं सिद्धयति, उदात्तत्वं तु न सिध्यति । एतेनोदात्त ईकारो विधीयते । अथ वा—रूपमपि न सिध्यति । पूर्वसवर्णाद्धि परत्वात् पूर्वं नुमि कृते नैव सवर्णदीर्घः स्यात् । अथाक्षी इत्यत्र 'इकोऽचि विभक्तौ' इति नुम् कस्मान्न भवति ? इत्याह—अक्षी इत्यत्रेत्यादि । नुमोऽवकाशः–त्रपुणे, जतुन इति, इकारस्यावकाशः–अक्षीभ्यामिति; प्रथमाद्विवचन उभयप्रसङ्गे परत्वादीकार एव भवति । अथेदानीमीकारे कृते पुनःप्रसङ्गविज्ञानान्नुम् कस्मान्न भवति ? इत्याह–सकृद्गताविति ॥

नाभ्यस्ताच्छतुः ॥ ददद्, ददताविति । 'श्नाभ्यस्तयोरातः' इत्याकारलोपः । जक्षितिजागर्त्योः 'जक्षित्यादयः षट्' इत्यभ्यस्तसंज्ञा ।

कथं पुनरयं नुमः प्रतिषेधो विज्ञायते, यावता 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इतीकारस्य प्रतिषेधो युक्तः ? इत्याह–शतुरनन्तर इत्यादि । लक्षणान्तरेण विहितस्य प्रतिषेधो भवति, न तु शतुरनन्तर ईकारः केनचिद्विहितः । अङ्गस्येति वर्त्तते, न च नुमोऽन्यत् कार्यं शतुः सम्भवति । अतः सामर्थ्याद्व्यवहितस्यापि 'उगिदचाम्' इति नुमः प्रतिषेधो विज्ञायत इति ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## वा नपुंसकस्य ॥ ७९ ॥

अभ्यस्तादङ्गादुत्तरो यः शतृप्रत्ययस्तदन्तस्य नपुंसकस्य वा नुमागमो भवति । ददति ददन्ति कुलानि । दधति दधन्ति कुलानि । जक्षति जक्षन्ति कुलानि । जाग्रति जाग्रन्ति कुलानि ॥

## आच्छीनद्योर्नुम् ॥ ८० ॥

अवर्णान्तादङ्गादुत्तरस्य शतुर्वा नुमागमो भवति शीनद्योः परतः । तुदती कुले, तुदन्ती कुले । तुदती ब्राह्मणी, तुदन्ती ब्राह्मणी । याती कुले, यान्ती कुले । याती ब्राह्मणी, यान्ती ब्राह्मणी । करिष्यती कुले, करिष्यन्ती कुले । करिष्यती ब्राह्मणी, करिष्यन्ती ब्राह्मणी ।

अत्रान्तरङ्गत्वादेकादेशे कृते व्यपवर्गाभावादवर्णान्तादङ्गादु-

### पदमञ्जरी

*आच्छीनद्योर्नुम्* ॥ *अवर्णान्तादङ्गादुत्तरस्य शतुरिति* । सूत्राक्षरैस्तावदयमेवार्थः प्रतीयते इत्येवं व्याख्यातम्, न पुनरयं व्यवस्थितः सूत्रार्थः; दूषणस्य वक्ष्यमाणत्वात् । तस्मान्नाप्रदर्शितविषयं दूषणं शक्यं वक्तुमिति विषयप्रदर्शनपरमिदं द्रष्टव्यम् । *याती कुले इति* । 'नपुंसकाच्च' इत्यौङः शीभावः । *याती ब्राह्मणीति* । 'उगितश्च' इति ङीप् । *करिष्यतीति* । लृट्, 'लृटः सद्वा', 'ऋद्धनोः स्ये' इतीट् ।

*अत्रेत्यादि* चोद्यम् । अन्तरङ्गत्वं पुनरेकादेशस्य शतृमात्रापेक्षत्वात् । नुमस्तु बहिरङ्गत्वम्; शीनद्युत्पत्त्यपेक्षत्वात् । व्यपवर्गः=भेदः—इदमवर्णान्तमङ्गम्, अयं शतृप्रत्यय इत्येवंरूपः । स एकादेशे कृते नास्ति, क्षीरोदकवत् । तद्यथा—क्षीरोदके संयुक्ते न ज्ञायेते—इदं क्षीरमिदमुदकम्, अमुष्मिन्नवकाशे क्षीरममुष्मिन्नवकाशे उदकमिति ।

*अवर्णान्तादङ्गादुत्तरस्य शतुरिति न युज्यते वक्तुमिति* । यथा पूर्वमवोच-

### न्यासः

**वा नपुंसकस्य** ॥ शतृप्रत्ययमात्रं नपुंसके न वर्तत इत्यभ्यस्तादङ्गादुत्तरो यः शता तदन्तस्य नपुंसकस्य विकल्पो विज्ञायत इत्याह—अभ्यस्तादङ्गादित्यादि ।

**आच्छीनद्योर्नुम्** ॥ तुदन्ती कुले इति । 'नपुंसकाच्च' इति शीभावः । तुदती ब्राह्मणीति । 'उगितश्च' इति ङीप् । याती ब्राह्मणीति । अदादित्वाच्छपो लुक्, 'उगितश्च' इति ङीप् । करिष्यन्ती कुले इति । 'लृटः सद्वा' इति शत्रादेशः, 'ऋद्धनोः स्ये' इतीट् ।

अत्रान्तरङ्गत्वादित्यादि । चोद्यम् । अकारान्तादङ्गात् परे शतरि व्यवस्थिते ईकारे



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



त्तरस्य शतुरिति न युज्यते वक्तुम्, 'उभयत आश्रये नान्तादिवत्' इत्यन्तादिवद्भावोऽपि नास्ति, भूतपूर्वगत्याश्रयणे वा—अदती, घ्नतीत्येवमादिष्वतिप्रसङ्ग इति ? अत्र समाधिं केचिदाहुः—शतुरवयवे शतृशब्दो वर्त्तते, अवर्णान्तादङ्गादुत्तरो यः शत्रवयव इति[1]।

पदमञ्जरी

स्तथा न युज्यत इत्यर्थः। तथा हि सर्वत्रैवावर्णस्य निवृत्त्या भवितव्यम्, क्वचिल्लुका—अदती, घ्नतीति, क्वचिच्छ्लुना—जुह्वतीति, तुदतीत्यादावेकादेशेन, लुनतीत्यादौ 'श्नाभ्यस्तयोरातः' इत्याकारलोपेन। स्यादेतत्—एकादेशविषयेऽन्तादिवद्भावेन व्यपवर्गो भविष्यतीति ? तत्राह—*उभयत आश्रय इति*। यत्र च पूर्वं परं चोभयं युगपदाश्रीयते न तत्रान्तादिवद्भावोऽस्तीति, यथा 'उपसर्गाद्ध्रस्वः' ऊहते, प्रोहते; 'एतेर्लिङि' अभीयादिति। इहाप्यवर्णान्तमङ्गं शता चेत्युभयं युगपदाश्रीयते, इति नास्त्यन्तादिवद्भावः। एतद्ध्युच्यते चेदमवर्णान्तादङ्गादुत्तरस्य शतुरिति, न च सम्प्रत्येवंविधः शता क्वचित्सम्भवति, तत्र भूतपूर्वगतिराश्रयिष्यते—पूर्वं यः शता अवर्णान्तादङ्गादुत्तर आसीदिति ? तत्राह—*भूतपूर्वगत्याश्रयणे वेति*। समाधिः=समाधानम्, परिहारः। *अवर्णान्ताच्छब्दा-*

न्यासः

च किं नुम् क्रियताम् ? उतैकादेशः ? अत्रान्तरङ्गत्वाद् 'अतो गुणे' पररूपमेकादेशः। अन्तरङ्गत्वं पुनस्तस्य वर्णाश्रयत्वात्, नुमस्तु बह्वपेक्षत्वाद् बहिरङ्गत्वम्। स ह्यकारान्तमङ्गं शतृप्रत्ययान्तं ततश्च परतः शीनद्योर्भावमपेक्षते। 'वार्णादाङ्गम्' इत्यादीह नास्ति; भिन्नकालत्वात्—शीनद्योर्हि परभावे सति नुम् प्राप्नोति, एकादेशस्तु ततः प्रागेव। 'यत्र च वार्णाङ्गयोर्युगपत् प्राप्तिः, तत्रेयमुपतिष्ठते' इत्युक्तं प्राक्। व्यपवर्गाभावादवर्णान्तादङ्गादुत्तरस्य शतुरिति शक्यते वक्तुम्। भेदे हि सत्यवध्यवधिमतोरिदमस्मादुत्तरमिदञ्च पूर्वमित्येष व्यवहारो भवति, नान्यथा। स्यादेतत्—'अन्तादिवच्च' इत्यन्तादिवद्भावेनैकादेशः पूर्वं प्रत्यन्तवद्भवति परञ्च प्रत्यादिवदित्येकादेशस्य पूर्वं प्रत्यन्तवत्त्वात् परञ्च प्रत्यादिवत्त्वाद्युज्यत एवावर्णादङ्गादुत्तरस्य शतुः ? इत्याह—उभयत आश्रय इत्यादि। अत्र ह्यकारान्तमङ्गं शता चोभयमाश्रितम्। 'उभयत आश्रये नान्तादिवत्' इति नास्त्यन्तादिवद्भावः। न ह्येकस्यैकदा पूर्वं प्रत्यन्तवद्भावः परञ्च प्रत्यादिवद्भाव उपपद्यते। तथा हि—यदि पूर्वं प्रत्यन्तवद्भवति, तदा शतृरूपं न सम्पद्यते; अथ परं प्रत्यादिवद्भवति, तदाऽकारान्तताऽङ्गस्य न परिकल्प्यते; उच्यते चेदमाच्छीनद्योर्नुमिति, न चावर्णान्तादङ्गादुत्तरः शता क्वचित् सम्भवति; तत्र वचनप्रामाण्याद् भूतपूर्वगतिराश्रीयते—अवर्णान्तादुत्तरो यः शता पूर्वमासीदिति। अत आह—भूतपूर्वगत्येत्यादि।

1. 'यथा ग्रामो दग्ध इति ग्रामैकदेशे ग्रामशब्दो निर्दिश्यते'—इत्यधिकं क्वचित्।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अपरे पुनराहुः—'आत्' इत्येतेन शीनद्यावेव विशेष्येते, अवर्णान्तादङ्गादुत्तरे ये शीनद्यौ तयोः परतः शत्रन्तस्य नुम्भवतीति । तत्र

पदमञ्जरी

*दिति* । अङ्गादिति द्रष्टव्यम्; अन्यथा ददतीत्यादावपि प्रसङ्गात् । भवति ह्यत्रापि शत्रवयवादकारात्परस्तकारः । कथं पुनरवर्णान्तस्याङ्गत्वम् ? एकादेशस्यान्तवद्भावात् । न हीदानीं परम्प्रत्यादिवत्वं विवक्षितम्; तकारस्य स्वयमेव शत्रवयवत्वात् । एवं तेन तकारेण पुनरङ्गस्य तदन्तविधिः, 'अङ्गस्य' इत्येतदत्रावर्त्यते ।

*अपरे पुनरिति* । अत्रापि पक्षे युगपदुभयं नाश्रीयते, किन्तु क्रमेणेत्यस्त्यन्तादिवद्भावः । ननु च तुदन्तीत्यादावन्तादिवद्भावादवर्णान्तमङ्गं भवतु; तथापि न ततः परे शीनद्यौ, तकारेण व्यवधानात् ? इत्यत आह—*तत्रेति* । प्रकृतो

न्यासः

यदि हि भूतपूर्वगतिराश्रीयते, अदती, घ्नतीत्यादावतिप्रसङ्गः स्यात्; अत्राप्यवर्णान्तादङ्गादुत्तरः शता पूर्वमासीत् ? इत्याह—अत्र केचित्समाधिमाहुरिति । समाधि=परीहारः । परीहारश्च—शतुरवयव इति । शतुरवयवस्तकारः । तत्रेह शतृशब्दो वर्त्तते, यथा—पटो दग्ध इत्यत्र पटावयवे पटशब्दः, समुदायेषु प्रवृत्ताः शब्दा क्वचिदवयवेष्वपि वर्त्तन्त इति । स च शत्रवयव एकादेशे हि कृतेऽवर्णान्तादङ्गादुत्तरो भवतीति 'अत्यन्तरङ्गत्वादेकादेशे कृते'—इत्यादिना यत् कृतश्चोद्यं तत् परिहृतं भवति । किं पुनरनच्कस्य तकारस्य नुम् ? कथञ्च नुम् स्यात् ? कथञ्च न स्यात् ? 'मिदचोऽन्त्यात् परः' इति वचनात् । मा भूत् तकारस्य, तदन्तस्य भविष्यति । एवञ्च सूत्रार्थं वर्णयिष्यामः—अवर्णान्तादङ्गादुत्तरो यः शत्रवयवस्तन्तस्याङ्गस्य नुम् भवतीति । अङ्गग्रहणञ्च द्विरावर्त्तयिष्यामः—शत्रवयवविशेषणार्थम्, अङ्गकार्यप्रतिप्रत्त्यर्थञ्च । कथं पुनस्तुदतीत्यादौ तकारात् पूर्वस्याङ्गत्वम्, यावता यतः प्रत्ययो विहितस्तदादेः प्रत्यये परतोऽङ्गसंज्ञा, न च तकारः प्रत्ययः, असत्याञ्चाङ्गसंज्ञायां यदुक्तमवर्णान्तादङ्गादुत्तरो यः शत्रवयव इति तन्नोपपद्यते ? नैष दोषः; यथैव हि शत्रवयवे शतृशब्दो वर्त्तते, तथाङ्गावयवे तकारात् पूर्वस्मिन्नङ्गशब्दः । किं पुनस्तदङ्गम् ? यस्यावयवः शत्रन्तम् । तस्य हि शीनद्योः परतोऽङ्गसंज्ञा विधीयते ।

इहापि तर्हि कस्मान्न भवति—अदती, घ्नतीति, अत्रापि ह्यवर्णान्तादङ्गादुत्तरः शत्रवयवो भवति ? यद्यत्रापि स्याद्, आदिति विशेषणमनर्थकं स्यात्, शीनद्योरित्येवं ब्रूयात् । यत्र च शीनद्योः परतः शत्रन्तमङ्गं भवति, तत्र नियोगत एवाकारान्तादङ्गादुत्तरो शत्रवयवो भवति । तस्माद् 'आतः' इति विशेषणोपादानसामर्थ्याद् विशेषपरिग्रहो विज्ञायते—शत्रवयवादकारात् पूर्वो योऽकारस्तदन्तादुत्तरो यः शत्रवयव इति नेह नुमः प्रसङ्गः । अवर्णान्तादङ्गादुत्तरे ये शीनद्याविति । अत्रापि पूर्ववदङ्गावयवेऽङ्गशब्दो वर्त्तते । ननु च तुदन्तीत्यादाववर्णान्तादङ्गादुत्तरे शीनद्यौ न सम्भवत एव;

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादिति तकारेणैव व्यवधानमाश्रयिष्यते ।

आदिति किम् ? कुर्वती । सुन्वती । शीनद्योरिति किम् ? तुदताम् । नुदताम् ।

**शप्श्यनोर्नित्यम् ॥ ८१ ॥**

शप्, श्यन्—इत्येतयोः शतुः शीनद्योः परतो नित्यं नुमागमो भवति । पचन्ती कुले, पचन्ती ब्राह्मणी । दीव्यन्ती कुले, दीव्यन्ती ब्राह्मणी । सीव्यन्ती कुले, सीव्यन्ती ब्राह्मणी ।

नित्यग्रहणम् 'वा' इत्यस्याधिकारस्य निवृत्त्यर्थम् । इहारम्भसामर्थ्यान्नित्यमुत्तरत्र विकल्प एवेत्याशङ्क्येत ॥

**सावनडुहः ॥ ८२ ॥**

सौ परतोऽनडुहोऽङ्गस्य नुमागमो भवति । अनड्वान् । हे अनड्वन् !

**पदमञ्जरी**

नुम् प्रतिषेधेन सम्बद्ध इति तदनुवृत्ताविहापि प्रतिषेध एव विकल्पेन, शीनद्योर्वा नुम् न भवति अवर्णान्तादिति, केन पुनः प्रसङ्गः ? इदमेव ज्ञापकं स्यात्—अस्ति शीनद्योर्नुमिति, ततश्च कुर्वतीत्यादावनवर्णान्तान्नित्यं नुमः प्रसङ्गः, मैवं विज्ञायीति नुम्ग्रहणम् ॥

*शप्श्यनोर्नित्यम्* ॥ *इत्येतयोः शतुरिति* । एतयोः सम्बन्धी यः शता तस्येत्यर्थः, सम्बन्धश्च निमित्तनिमित्तिभावः । क्वचित्तु *सम्बन्धिन* इति पठ्यते । *नित्यग्रहणमिति* । ननु चारम्भसामर्थ्यादेव नित्यं भविष्यति ? तत्राह—*इहेति* ॥

*सावनडुहः* ॥ इह 'चतुरनडुहोरामुदात्तः' इत्यामागमः सर्वनामस्थानमात्रे विधीयमानः सोरन्यत्र सावकाशो निरवकाशेन नुमा बाध्येत, तथा सम्बुद्धेरन्यत्र सौ सावकाशो नुम् सम्बुद्धौ विशेषविहितेन 'अम् सम्बुद्धौ' इत्यनेन

**न्यासः**

तकारेण व्यवधानात् ? इत्याह—तत्र येनेत्यादि । गतार्थम् । अथ नुम्यनुवर्त्तमाने किमर्थं पुनर्नुम्ग्रहणम् ? नेति, वेति च प्रकृतम् । तत्र नुम्ग्रहणमन्तरेणानिष्टमपि विज्ञायते—शीनद्योर्विभाषा नुमवर्णान्तान्न भवतीति । किञ्च स्यात् ? कुर्वती, तन्वतीत्यत्र विभाषा स्यात्, करिष्यन्तीत्यत्र न स्यात् । केन पुनः प्राप्तस्य नुमः शीनद्योः प्रतिषेध क्रियते ? एतदेव ज्ञापयति—अस्ति शीनद्योर्विभाषा नुमिति । नुम्ग्रहणे तु क्रियमाणे विधिरेवायं विज्ञायत इत्यदोषः ॥

शप्श्यनोर्नित्यम् ॥ सावनडुहः ॥ दृक्स्ववस्स्वतवसां छन्दसि ॥ ईदृक्, कीदृगिति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अत्र केचित् 'आत्'–इत्यधिकारादाममोः कृतयोर्नुमं कुर्वन्ति। तेन नुमाऽमामौ न बाध्येते, आमम्भ्यां च नुमिति।

अपरे तु–सत्यपि सामान्यविशेषत्वे आममोर्नुमश्च समावेशमिच्छन्ति, न बाध्यबाधकभावम्, यथा–चिचीषत्यादिषु दीर्घत्वद्विर्वचनयोरिति ॥

दृक्स्ववस्स्वतवसां छन्दसि ॥ ८३ ॥

दृक्, स्ववस्, स्वतवस्–इत्येतेषां सौ परतो नुमागमो भवति छन्दसि विषये। ईदृङ्। तादृङ्। यादृङ्। सदृङ्। स्ववान्। स्वतवान्पायुरग्ने ॥

पदमञ्जरी

बाध्येत ? इत्याशङ्क्याह—*अत्र केचिदित्यादि*। कथं पुनरादित्यस्यानुवृत्तौ सत्याऽप्याममोः कृतयोर्नुम् भवति, न पुनर्य एवानडुहि नित्यः सन्निहितोऽकारस्तत एव परः स्यात् ? उच्यते; एवं सति 'मिदचोऽन्त्यात्परः' इति परिभाषा बाध्यते, तत्राबाधेनोपपत्तौ सत्यां बाधो न न्याय्यः। तत्र यथा परिभाषा न बाध्यते आदित्यनुवृत्तिश्च सार्थिका भवति, तथा वक्तव्यम्। यदि चाममोरकृतयोर्नुम् स्यात्, नेदमुभयमनुगृहीतं स्यादिति कृतयोरेव तयोर्नुम् भविष्यति। *अमामौ च न बाध्येते इति*। न केवलममेव न बाध्यते, अपि त्वाममावुभावपि न बाध्येते इत्यर्थः। अमत्र दृष्टान्तत्वेनोपात्तः। यथाऽम् न बाध्यते तथा आमिति भावः। न पुनरमो नुमा बाधशङ्का; अमो विशेषविहितत्वात्। *आमम्भ्यां च नुमिति*। 'न बाध्यते' इति वचनविपरिणामेनानुषङ्गः। अत्रापि यथा आमा न बाध्यते तथाऽमापीत्यर्थः। न पुनरामा नुमो बाधशङ्का; तस्य सामान्यत्वात्। *अपरे त्वित्यादि*। 'इच्छन्ति' इति वचनादिष्टिरेवेयमिति केचित्। अन्ये त्वाहुः–भवतु वा सामान्यविशेषयोः सन्निधौ बाध्यबाधकभावः, इह त्वनेकेन योगेन व्यवधानम्, असति हि सम्भवे बाधनं भवति, इह च अस्ति सम्भवो यदुभयं स्यादित्याममोर्नुमश्च समावेश इति। *यथेति*। अत्र नाप्राप्ते द्विवर्चने दीर्घ आरभ्यते। अथ च सम्भवात्प्रकरणभेदाच्च समावेशः। बह्वनड्वांहि ब्राह्मकुलानीति परत्वादामि कृते पुनःप्रसङ्गविज्ञानात् 'नपुंसकस्य झलचः' इति नुम् भवति ॥

*दृक्स्ववस्स्वतवसां छन्दसि* ॥ ईदृङित्यादौ 'त्यदादिषु दृशोऽनालोचने कञ्च' इति क्विनि नुमि च कृते पूर्ववत्कुत्वम् ॥

न्यासः

'त्यदादिषु' इत्यादिना क्विन्, 'इदंकिमोरीश्की' इतीश्की-आदेशौ, हल्ङ्यादिसंयोगान्तलोपौ, 'क्विन्प्रत्ययस्य कुः' इति कुत्वम्। यादृङ्, तादृङिति। 'आ सर्वनाम्नः' इत्यात्वम्। सदृङिति। 'दृग्दृशवतुषु' इति समानस्य सभावः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## दिव औत् ॥ ८४ ॥

'दिव'—इत्येतस्य सौ परतः 'औत्' इत्ययमादेशो भवति । द्यौः ।

दिविति प्रातिपदिकमस्ति निरनुबन्धकम् । धातुस्तु सानुबन्धकः, स इह न गृह्यते—अक्षद्यूः ॥

## पथिमथ्यृभुक्षामात् ॥ ८५ ॥

पथिन्, मथिन्, ऋभुक्षिन्—इत्येतेषामङ्गानां सौ परत आकार आदेशो भवति । पन्थाः । मन्थाः । ऋभुक्षाः । स्थानिन्यनुनासिकेऽपि

### पदमञ्जरी

*दिव औत्* ॥ धातोः प्रतिषेधो वक्तव्यः—अक्षद्यूरिति, एकदेशविकृतस्यानन्यत्वादूठि कृते दिवशब्द एवायमिति प्रसङ्ग इति ? अधात्वधिकारात्सिद्धम्, 'अधातोः' इत्यनुवर्त्तते, क्व प्रकृतम् ? 'उगिदचां सर्वनामस्थानेऽधातोः' इति । यदि तदनुवर्तेत, 'नपुंसकस्य झलचः' इत्यत्रापि सम्बध्येत, ततश्च काष्ठतक्षि ब्राह्मणकुलानीत्यत्र न स्यात् । तस्मादशक्यं तदनुवर्त्तयितुम्; ततश्च धातोः प्रतिषेधो वक्तव्य एव ? इत्याशङ्क्याह—*दिविति प्रातिपदिकमित्यादि* ॥

*पथिमथ्यृभुक्षामात्* ॥ *पन्था इति* । 'इतोऽत्सर्वनामस्थाने' इतीकारस्याकारः, सवर्णदीर्घत्वम्, 'थो न्थः' । अनुनासिकस्य नकारस्यान्तर्यतोऽनुनासिक आकारः कस्मान्न भवति ? इत्याशङ्क्याह—*स्थानिन्यनुनासिकेऽपीति* । अत्र कारणमाह—

### न्यासः

दिव औत् ॥ द्यौरिति । औत्त्वे कृते यणादेशः । इहाक्षद्यूरित्यक्षैर्दीव्यतीति क्विपि कृते तदाश्रये चान्तरङ्गत्वात् 'च्छ्वोः शूडनुनासिके च' इत्यूठ् । एकादेशविकृतस्यानन्यत्वाद् दिव्शब्द एवायमित्यूकारस्यौत्त्वं प्राप्नोति, तत् कस्मान्न भवति ? इत्याह—दिविति प्रातिपदिकमित्यादि । अस्त्येवायं दिव्शब्दो धातुः, अस्ति चाव्युत्पन्नं प्रातिपदिकम् । तत्र धातुः सानुबन्धकः, अस्य 'उदितो वा' इत्युदित्कार्यम् । प्रातिपदिकं तु निरनुबन्धकम्, न हि तस्य किञ्चिदनुबन्धकार्यमस्ति । तत्र निरनुबन्धकपरिभाषया धातुरिह न गृह्यते । तेनाक्षद्यूरित्यत्र न भवत्यौत्त्वप्रसङ्गः । तकारो मुखसुखार्थः ।

पथिमथ्यृभुक्षामात् ॥ हल्ङ्यादिलोपे प्राप्ते नलोपे चात्त्वं विधीयते । पन्था इति । 'थो न्थः' इति न्थादेशः, 'इतोऽत्सर्वनामस्थाने' इत्यत्त्वम् । ननु चास्य स्थान्यनुनासिको नकारः, तत्र 'तपरस्तत्कालस्य' इति सवर्णानां ग्रहणे सत्यान्तरतम्यादनुनासिकेनैवाकारेणा भवितव्यम्, किमिह शुद्धोऽयमुदाह्रियते ? इत्याह—स्थानिन्यनुनासिकेऽपीत्यादि । अत्रैव कारणमाह—भाव्यमान इत्यादि । यदि च तपरेणापि भाव्यमानेनेनाणा सवर्णानां ग्रहणं न भवति, एवं सति 'विड्वनोरनुनासिकस्यात्' इत्यत्रापि न

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



आकारोऽनुनासिको न भवति। भाव्यमानेन[1] सवर्णानां ग्रहणं न भवतीति[1] शुद्धो ह्ययमुच्चार्यते ॥

## इतोऽत्सर्वनामस्थाने ॥ ८६ ॥

पथ्यादीनामिकारस्य स्थाने अकारादेशो भवति सर्वनामस्थाने परतः। पन्थाः, पन्थानौ, पन्थानः, पन्थानम्, पन्थानौ। मन्थाः, मन्थानौ, मन्थानः, मन्थानम्, मन्थानौ। ऋभुक्षाः, ऋभुक्षाणौ, ऋभुक्षाणः, ऋभुक्षाणम्, ऋभुक्षाणौ।

### पदमञ्जरी

*भाव्यमानेनेति* । केचिद्भाव्यमानोऽण् *सवर्णान्न गृह्णाति* इति पठन्ति, तेषामप्यण्ग्रहणं ग्राहकोपलक्षणार्थम्, तेनाकारोऽपि भाव्यमानो ग्राहको न भवति। 'तपरस्तत्कालस्य' इत्यनेन तु ग्रहणशङ्का, उक्तं हि तत्र—अनणि विध्यर्थमेतदिति। स्यादेतत्—मा भूत्सवर्णग्रहणम्, अनुनासिकस्यैव तु सूत्रे उच्चारणात्स एव स्यात्? इत्यत आह—*शुद्धो ह्ययमिति* । अकारविधाने 'अतो गुणे' पररूपं स्यात्। अकारविधानं तु नकारनिवृत्त्यर्थं स्यात्; लोपविधौ गौरवप्रसङ्गात्। तस्मादाकार एव विहितः ॥

*इतोऽत्सर्वनामस्थाने* ॥ अद्वचनं किमर्थम्, ह्रस्वस्य श्रवणं यथा स्यात्? नैतदस्ति; सौ तावदकः सवर्णदीर्घत्वं भवति, अन्यत्रापि 'नोपधायाः', 'सर्व-

### न्यासः

स्यात्, तथा 'जनसनखनां सञ्झलोः' इत्यत्रानुनासिकाकारो न स्यात्। एवं तर्हि नैवायमाकारस्तपरः, किं तर्हि? दकारः। दकारस्तु मुखसुखार्थः, स चर्त्वभूतत्वान्न श्रूयते। स्यादेतत्—यद्यपि भाव्यमानोऽण् सवर्णान्न गृह्णातीति सवर्णानां ग्रहणं न भविष्यति, तथाप्यनुनासिकविशिष्टस्योच्चारणादनुनासिकेनैव युक्तं भवितुम्? इत्याह—शुद्धो हीत्यादि। अयं ह्यकारः शुद्धो निरनुनासिक उच्यते, तस्माच्छुद्ध एवेति नानुनासिकविशिष्टः। अथायं किमर्थं दीर्घ उच्यते, न ह्रस्व एव क्रियताम्, अत्रापि 'अकः सवर्णे' इति दीर्घत्वेन सिध्यत्येव? न सिध्यति; 'अतो गुणे' इति पररूपत्वं स्यात्। अकारोच्चारणसामर्थ्यान्न भविष्यतीति चेत्? न; अस्ति ह्यन्यदकारोच्चारणस्य प्रयोजनम्। किं तत्? नकारस्य श्रवणं न स्यादिति। लोपे हि क्रियमाणे गौरवं स्यात्, तस्माद्दीर्घो विधीयते ॥

इतोऽत्सर्वनामस्थाने ॥ अथ 'आत्' इत्यनुवर्त्तमाने किमर्थमद्वचनम्, ह्रस्वस्य श्रवणं यथा स्यादिति चेत्? नैतत्; कृते हि ह्रस्वत्वे सौ परतोऽकः सवर्णे दीर्घत्वेन

---

१–१. 'भाव्यमानोऽण्सवर्णान् न गृह्णाति'—इति पाठान्तरं बहुषु पुस्तकेषु।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



'आत्' इति वर्त्तमाने पुनरद्ववचनं षपूर्वार्थम् । ऋभुक्षणमित्यत्र 'वा षपूर्वस्य निगमे' इति दीर्घविकल्पः ॥

थो न्थः ॥ ८७ ॥

पथिमथोस्थकारस्य स्थाने 'न्थ'–इत्ययमादेशो भवति सर्वनामस्थाने परतः । पन्थाः, पन्थानौ, पन्थानः । मन्थाः, मन्थानौ, मन्थानः ।

पदमञ्जरी

नामस्थाने' इति दीर्घेण भाव्यम्, तस्मात्प्रकृत आकार एव विधेयः ? अत आह–*आदिति वर्त्तमान इति* । यत्रायं विहितोऽकारः षपूर्वो भवति तत्रास्य प्रयोजनमित्यर्थः । तदेव दर्शयति—*ऋभुक्षणमित्यत्रेति* । अकारविधौ त्वेकमेव रूपं स्याद् । दीर्घविकल्पस्तु तक्षणाम्, तक्षाणामित्याद्यर्थं स्यात् । स्थानिन्यादेशे च तपरकरणं मुखसुखार्थम् ॥

*थो न्थः* ॥ *पथिमथोरिति* । त्रयाणां प्रकृतत्वेऽप्येतयोरेव थकारसम्भवात् सम्बन्धः । आदेशेऽकार उच्चारणार्थः । स्यादेतत्—'थेरन्थः' इति सूत्रमस्तु, अकारोऽपि विवक्षितोऽस्तु, थिशब्दस्यान्थ आदेशः, एवं च कृत्वा 'इतोऽत्' इति न वक्तव्यम् इति ? तदपि वक्तव्यम्; ऋभुक्षिन्शब्दार्थम् ॥

न्यासः

भवितव्यमन्यत्र 'नोपधायाः' इत्यनेन, तत्कुतो ह्रस्वस्य श्रवणम् ? इत्याह–आदिति वर्त्तमान इत्यादि । षपूर्वोऽर्थः प्रयोजनं यस्य तत् तथोक्तम् । कथं पुनरिदं षपूर्वार्थं भवति ? इत्याह—ऋभुक्षणमित्यादि । यदि प्रकृतो दीर्घ एव विधीयते, तदा ऋभुक्षमिन्द्रमित्यत्र ह्रस्वस्य श्रवणं न स्यात् । ह्रस्वविधाने तु 'वा षपूर्वस्य निगमे' इति दीर्घविधानात् पक्षे भवति । स्थानिन्यादेशे च तपरकरणं मुखसुखार्थमित्येके । पथीरित्यत्र दीर्घनिवृत्त्यर्थमित्यन्ये । पन्थानमिच्छति 'सुप आत्मनः क्यच्', 'अकृत्सार्वधातुकयोः' दीर्घः—पथीयति; पथीयतेः क्विप्, 'अतो लोपः' इत्यल्लोपः, 'क्यस्य विभाषा' इति [1]यकारस्य लोपः—पथीः ॥

थो न्थः ॥ थः, न्थः–इति द्वावपि स्थान्यादेशावनच्कौ । यस्त्वन्थ इत्यत्राकारः श्रूयते स उच्चारणार्थः । सत्यप्यादेशस्यानेकाल्त्वे 'निर्दिश्यमानस्यादेशा भवन्ति' इति थकारमात्रस्यादेशो विज्ञायते, न सर्वस्य ॥

---

१. वस्तुतस्तु 'लोपो व्योर्वलि' इति यलोपः । अत्र धातुप्रदीपे मैत्रेयरक्षितः–"न्यासे प्रमादपाठो दृश्यते–'क्यस्य विभाषा' इति यकारलोप इति । न ह्यनेन प्राप्तिः; 'यस्य हलः' इत्यतो हलग्रहणानुवृत्तेः" इति । (प्र० सं० स०)

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## भस्य टेर्लोपः ॥ ८८ ॥

पथ्यादीनां भसंज्ञकानां टेर्लोपो भवति । पथः, पथा, पथे । मथः, मथा, मथे । ऋभुक्षः, ऋभुक्षा, ऋभुक्षे ।

'सर्वनामस्थाने' इत्यनुवर्त्तमानमपि विरोधादिह न सम्बद्धयते ॥

## पुंसोऽसुङ् ॥ ८९ ॥

'पुंस' इत्येतस्य सर्वनामस्थाने परतोऽसुङित्ययमादेशो भवति । पुमान् । पुमांसौ । पुमांसः ।

इह परमपुमानिति प्रागेव च प्रत्ययोत्पत्तेः समासान्तोदात्तत्व-

### पदमञ्जरी

भस्य टेर्लोपः ॥ *पथ्यादीति* । प्रत्येकमभिसम्बन्धाद् 'भस्य' इत्येकवचनम् । *विरोधादिति* ॥ सर्वनामस्थाने भसंज्ञाया अभावो विरोधः । *इह न सम्बद्धयत इति* । उत्तरार्थं त्वनुवर्त्तत एवेति भावः ॥

पुंसोऽसुङ् ॥ असुङो ङकारोऽन्तादेशार्थः । उकार उच्चारणार्थः । *पुमानिति* । पुंस्शब्दस्योगित्त्वान्नुम्, स हि 'पूञो डुमसुन्' इति व्युत्पाद्यते । डकारष्टिलोपार्थः, उकार उगित्कार्यार्थः—बहुपुंसीति ङीप् उगिल्लक्षणो भवति । नकारः स्वरार्थः । मकारेऽकार उच्चारणार्थः ।

*इहेत्यादि* । चोद्यम् । *प्रागेव च प्रत्ययोत्पत्तेरिति* । प्रत्ययः, सर्वनामस्थानम् । *समासान्तोदात्तत्वमिति* । पुंस्शब्दोकारस्य । *अनिष्टः स्वर इति* । स्रंसनधर्मणः सकारस्य हलः स्थाने तद्धर्माऽनुदात्त आदेशः स्यादित्यर्थः । ननु चोकारस्य

### न्यासः

भस्य टेर्लोपः ॥ सर्वनामस्थान इत्यादि । 'यचि भम्' इत्यत्र 'स्वादिष्वसर्वनामस्थाने' इत्यतः 'असर्वनामस्थाने' इत्यनुवर्त्तमाने भसंज्ञा विहिता, तत्र यदि सर्वनामस्थाने परतः पथ्यादीनां टिलोपः स्याद् तदा भसंज्ञकास्ते न स्युः, अथ भसंज्ञकास्ते स्युस्तदा सर्वनामस्थानं परं तेभ्यो न स्यादिति भसंज्ञकानां सर्वनामस्थानस्य च सहानवस्थानलक्षणो विरोधः । तस्माद् यद्यप्युत्तरार्थं सर्वनामस्थानग्रहणमनुवर्त्तते, तथापीह नाभिसम्बध्यते ॥

पुंसोऽसुङ् ॥ असुङो ङकारोऽन्त्यादेशार्थः । उकार उगित्कार्यार्थः । पुमानिति । 'उगिदचाम्' इत्यादिना नुम्, 'सान्तमहतः संयोगस्य' इति दीर्घः, हल्ङ्यादिसंयोगान्तलोपौ ।

इह परमपुमानित्यादि । परमश्चासौ पुमांश्चेति 'सन्महत्' इत्यादिना समासे कृते यावद्विभक्तिर्नोत्पद्यते तावदसुङादेशेन न भवितव्यम्; तस्य तदाश्रयत्वात् । समासा-

१. 'सर्वनामस्थान इति वर्त्तते' इत्यधिकं क्वचित् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



मुत्पन्नायां विभक्तौ असुञित्यनिष्टः स्वरः प्राप्नोति ? तदर्थमसुङि उपदेशिवद्वचनं कर्त्तव्यम् । तेन परमपुमानित्यन्तोदात्तो भवति । पुमानित्ययं पुनराद्युदात्त एव ॥

## गोतो णित् ॥ ९० ॥

पदमञ्जरी

कृतमपि समासान्तोदात्तत्वमसुङि कृतेऽनन्त्यत्वान्निवर्त्तिष्यते, असुङश्चान्त्यत्वात्प्रवर्त्तिष्यते ? नैतदस्ति; अन्तरङ्गे स्वरे कर्त्तव्ये बहिरङ्गस्यासुङोऽसिद्धत्वात्, प्रवृत्तस्य निवर्त्तनायोगाच्च । *तदर्थमित्यादि* । परिहारः । अर्थशब्दो निवृत्तवचनः, तस्यानिष्टस्वरस्य निवृत्त्यर्थमित्यर्थः । *उपदेशिवद्वचनमिति* । उपदेशोऽस्यास्तीत्युपदेशी, सकारः, स यथोपदेशावस्थायां सन्निहितस्तयाऽसुङपीत्यर्थः । 'सर्वनामस्थाने' इति विषयसप्तम्याश्रयणीयेत्युक्तं भवतीति, तत्र समासानन्तरमेव परत्वादसुङि कृते पश्चादुदात्तत्वं भवदसुङ एवाकारस्य भवतीति सिद्धमिष्टम् । यद्येवम्, पुमानित्यादावसमासेऽपि उपदेशावस्थायामसुङि कृते प्रातिपदिकस्वरो भवन्नसुङ एव स्यात् ? इत्यत आह—*पुमानित्ययं पुनरिति* । पुंस्शब्दे प्रत्ययो निदित्युक्तम्, तत्सामर्थ्याद्युदात्तत्वम् ॥

*गोतो णित्* ॥ गाङ्कुटादिसूत्रे यावन्तः पक्षाः, इहापि तावन्त एव, त एव

न्यासः

न्तोदात्तत्वं तु न किञ्चिदपेक्षत इति अन्तरङ्गत्वात् प्रागेव विभक्तेरन्तोदात्तत्वं भवति । पश्चादुत्पन्नायां विभक्तावसुङ् अस्वरस्य व्यञ्जनस्य स्थाने भवन्न नियतस्वरः स्यात्, ततश्चानिष्टोऽपि स्वरः प्राप्नोति, अन्तोदात्तमेव चोत्तरपदमिष्यते, आद्युदात्तत्वं प्राप्नोति । तदर्थमित्यादि । अर्थशब्दो निवृत्तिवाची, यथा—मशकार्थो धूम इति । तदर्थं तस्यानिष्टस्य स्वरस्य निवृत्त्यर्थमुपदेशिवद्वचनं कर्त्तव्यम्, अकृते समासान्तोदात्तत्व उपदेशावस्थायामेव विभक्त्युत्पत्तेः प्रागसुङ् यथा स्यात् । तेनासुङि पूर्वं कृते पश्चात् समासान्तोदात्तत्वेन परमपुमानित्ययं शब्दोऽन्तोदात्तो भवति । यद्येवम्, पुमानित्ययं शब्दोऽप्यन्तोदात्तः स्यात्, उपदेशावस्थायामेवासुङि कृते पश्चात् प्रातिपदिकस्वरेण भवितव्यम् ? इत्याह—पुमानित्ययं पुनरित्यादि । पुम्स्शब्दोऽयं पुनातेः 'मुक्सुनौ ह्रस्वश्च' इति मुक्सुन्प्रत्ययान्तो व्युत्पादितः[1] । तेन नित्स्वरेणायमाद्युदात्तो भवति, नान्तोदात्तः ।

**गोतो णित्** ॥ णिदिति संज्ञा वाऽनेन क्रियते—गोतः परं सर्वनामस्थानं णिद् भवति, णित्संज्ञं भवतीत्यर्थः; अथ वा—गोतः परस्य सर्वनामस्थानस्य णकार इत्संज्ञको

---

१. पञ्चपाद्युणादिवृत्तौ तु 'पातेर्डुम्सुन्' इति डुम्सुन्प्रत्ययेन पुम्स्शब्दो व्युत्पादितः । कैयटेनाप्ययमेव पन्थाः स्वीकृतः । ( प्र० सं० स० )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



गोशब्दात्परं सर्वनामस्थानं णिद्भवति[1]। णित्कार्यं तत्र भवतीत्यर्थः। गौः, गावौ, गावः।

तपरकरणं किम्? चित्रगुः। शबलगुः।

कथं हे चित्रगो, हे शवलगव इति? 'अङ्गवृत्ते पुनर्वृत्तावविधि-

पदमञ्जरी

गुणा दोषाश्च, तद्वदेव चातिदेशपक्ष आश्रीयते, यदाह - *णिद्भवतीति*। परत्र परशब्दः प्रयुक्तोऽन्तरेणापि वतिं वत्यर्थं गमयति, यथा—सिंहो माणवक इति। णिदित्यनेन सामानाधिकरण्यात् 'सर्वनामस्थाने' इति सप्तम्यन्तं प्रथमया विपरिणम्यते, तत्र सर्वनामस्थानस्य णित्कार्यं विधेयं न सम्भवतीति णिति यत्कार्यं तत्सर्वनामस्थाने पूर्वस्यातिदिश्यते। तदाह—*णित्कार्याणि तत्र भवन्तीत्यर्थ इति*।

*चित्रगुरिति*। बहुव्रीहौ 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वत्वम्। अत्रासति तपरकरणेऽङ्गाधिकारे तदन्तविधेरभ्युपगमात् 'सर्वं सर्वपदादेशाः' इति न्यायेन स्थानिवद्भावेन गोशब्दान्तत्वात् णिद्भावः प्राप्नोति। तपरकरणे तु तत्कालार्थे सति न भवति; भिन्नकालत्वात्, 'तपरस्तत्कालस्य' इत्यत्राणित्यस्य निवृत्तत्वादनणोऽपि तत्कालनियमो भवतीति मन्यते।

*कथमिति*। 'ह्रस्वस्य गुणः', 'जसि च' इति गुणे कृते सत्यपि तकारे स्थानिवत्त्वात् तत्कालत्वाण्णित्त्वं प्राप्नोत्येवेति प्रश्नः। न च स्थानिवद्भावविषये लक्षणप्रतिपदोक्तपरिभाषा; तस्य वैयर्थ्यप्रसङ्गात्। *अङ्गवृत्ते इत्यादि* परिहारः।

न्यासः

भाव्यते, तेन गोतः परस्य सर्वनामस्थानस्य णकार इत्संज्ञको भवतीति; आदेशो वा विधीयते—गोतः परस्य सर्वनामस्थानस्य णिणकारानुबन्धवानादेशो भवति; अतिदेशो वा क्रियते—गोतः णिद् भवति, णिद्वद् भवतीत्यर्थः, विनापि वतिना वत्यर्थो गम्यते, यथा—गाङ्कुटादिसूत्रे। तत्राद्ये पक्षे संज्ञोच्चारिता संज्ञिनं प्रत्याययतीति णित्प्रदेशेषु कृत्रिमत्वादस्यैव सर्वनामस्थानस्य ग्रहणं प्राप्नोति, न ण्वुलादीनाम्। द्वितीये तु णकार इत्संज्ञकः सर्वनामस्थानस्य प्रसज्येत। तृतीये तु पुनर्णित् सर्वनामस्थानं न क्वचिद् दृष्टमिति। य एवैते ण्वुलादयस्त एवादेशाः प्रसज्येरन्नित्येते दोषा आद्येषु त्रिषु पक्षेषु यथाक्रमं प्रतिविधेयाः। तत्प्रतिविधाने प्रतिपत्तिगौरवं स्यात्, अतिदेशपक्षे तु न किञ्चित् प्रतिविधेयम्, अतः स एव साधुरिति। तमेवाश्रित्याह—गोशब्दादित्यादि। णित्कार्यमित्यादिना णिद्भवतीत्यस्यार्थं व्याचक्षाणः कार्यातिदेशोऽयमित्याचष्टे। गौरिति वृद्धिर्णित्कार्यम्।

चित्रगुरिति। अत्र बहुव्रीहौ कृते 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वः। तत्रासति

---

१. 'णिद्वद् भवति' इति पाठान्तरम्।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



निष्ठितस्य' इति सम्बुद्धिजसोर्गुणे कृते णित्त्वं न भवति ।

अथ वा—'गोतः' इति सम्बन्धलक्षणा षष्ठी, गोतः सम्बन्धि यत्सर्वनामस्थानमिति । यच्च तदर्थस्यैकत्वादिषु सर्वनामस्थानं तद् गोः सर्वनामस्थानमित्युच्यते । चित्रगुशब्दात्तु सर्वनामस्थानं तदन्यपदार्थस्यैकत्वादीनाह ।

**पदमञ्जरी**

*णित्त्वं न भवतीति* । णित्कार्यं न भवतीत्यर्थः ।

भवतु सम्बुद्धावेष परिहारः, जसि त्ववादेशमन्तरेणानिष्ठितत्वादङ्गस्य नायं परिहारः ? इत्याशङ्क्याह—*अथ वेति* । यच्चेत्यादिनार्थद्वारकं विशेषसम्बन्धमाह । आनन्तर्यलक्षणे तु सम्बन्धे चित्रगुशब्दादपि प्रसङ्गो यदि, तर्ह्यर्थद्वारकसम्बन्धा-

**न्यासः**

तपरकरणे 'अङ्गाधिकारे तस्य तदुत्तरपदस्य' इति वचनात्तदन्तविधिमभ्युपगम्य स्थानिवद्भावेन गोशब्दान्तमेतदङ्गं भवतीति णिद्भावः प्राप्नोति । तपरकरणे तु तत्कालनियमे सति न भवति; भिन्नकालत्वात् । 'तपरस्तत्कालस्य' इत्यत्राणग्रहणस्य निवृत्तत्वादनणोऽपि तत्कालनियमो भवत्येव ।

कथमित्यादि । सत्यपि तपरकरणे 'ह्रस्वस्य गुणः', 'जसि च' इति सम्बुद्धिजसोर्गुणे कृते हे चित्रगो, हे चित्रगव इत्यत्र प्राप्नोति । तत्कालत्वादित्यभिप्रायः । ननु च लक्षणप्रतिपदोक्तपरिभाषया न भविष्यति ? नैतदस्ति; यत्र हि स्थानिवद्भावस्तत्रैषा नोपतिष्ठते; अन्यथा हि स्थानिवद्भावोऽनर्थकः स्यात् । अङ्गवृत्ते पुनरित्यादि परीहारः । एष तु हे चित्रगवित्यत्र परीहारः, न तु चित्रगव इत्यत्र; अनिष्ठितत्वात् । अवादेशे हि कृते निष्ठितत्वमत्र भविष्यति, न च गुणमात्रे; अप्रयोगार्हत्वात् ।

अत एवाव्यापकत्वादस्य परीहारस्यापरितुष्यन् परिहारान्तरमाह—अथ वेत्यादि । स्यादेतत्—अत्रापि गोः सम्बन्धि सर्वनामस्थानमानन्तर्यलक्षणेन भवति सम्बन्धेनेति ? अत आह—यच्चेत्यादि । यद्यानन्तर्यलक्षणेन गोः सम्बन्धि सर्वनामस्थानं गृह्यते तदा षष्ठ्याश्रयणमनर्थकं स्यात्, पञ्चम्येवाश्रयितव्येति; क्रमव्यतिक्रमे प्रयोजनाभावात् । तस्मात् षष्ठ्याश्रयणसामर्थ्याद् गोशब्दस्यार्थस्य य एकत्वादयस्तेषु यत्सर्वनामस्थानं तद् गोः सर्वनामस्थानमित्युच्यते । तत् पुनर्गोशब्दस्यैकत्वादीनां वेदितव्यम् । आदिशब्देन द्वित्वादिपरिग्रहः । तत्रैतत् स्यात्—चित्रगुशब्दादपि यत् सर्वनामस्थानं तद् गोशब्दस्यार्थस्यैकत्वादिषु वर्त्तते ? इत्याह—चित्रगुशब्दादित्यादि ।

यदि यद् गोः सम्बन्धि सर्वनामस्थानं तस्य णिद्भावो विधीयते, तदा तपकरणमनर्थकं स्यात्, तद्धि चित्रगुरित्यादौ मा भूदित्येवमर्थं क्रियते । न चात्र प्राप्तिः, न ह्यत्र

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


तपरकरणं तु निर्देशार्थमेव ।

केचित् 'ओतो णित्' इति पठन्ति । द्योशब्दादपि यत्सर्वनामस्थानं विद्यते तदर्थम् । द्यौः, द्यावौ, द्यावः । 'गोतः' इत्येतदेव तपरकरण-निर्देशादोकारान्तोपलक्षणं द्रष्टव्यम् । वर्णनिर्देशेषु हि तपरकरणं प्रसिद्धम् ॥

## णलुत्तमो वा ॥ ९१ ॥

उत्तमो णल्वा णिद् भवति । णित्कार्यं तत्र वा भवतीत्यर्थः । अहं चकार, अहं चकर । अहं पपाच, अहं पपच ॥

### पदमञ्जरी

श्रयणादेव चित्रगुशब्देऽप्रसङ्गः, किमर्थं तपरकरणम्? इत्याह—*तपरकरणं तु निर्देशार्थमेवेति* । स्पष्टनिर्देशार्थमेवेत्यर्थः । इतरथा 'गोः' इत्युच्यमाने गुशब्द-स्यापि निर्देशः सम्भाव्येत ।

*केचिदित्यादि* । एवं पाठे प्रयोजनमाह—*द्योशब्दादपीति* । ये तर्ह्येवं न पठन्ति तेषां कथं द्योशब्दे णिद्भावः? इत्यत आह—*गोत इत्येतदेवेति* । कथं पुनरेतदोकारान्तोपलक्षणं द्रष्टुं शक्यम्? इत्यत आह-*वर्णनिर्देशेषु हीति* । 'वृद्धि-रादैच्', 'अतो लोपः' इत्यादौ वर्णनिर्देश एव तपरत्वं दृष्टम्; तस्मात्तपरकरणा-दिह ओकारान्तोपलक्षणं विज्ञायते ॥

*णलुत्तमो वा* ॥ *णित्कार्यं वा तत्र भवतीत्यर्थ इति* । एतेन पक्षे णित्कार्यस्याभा-वाद्वा णिद्भवतीत्युच्यते, न तु पक्षे णकारस्येत्संज्ञाप्रतिषेधादिति दर्शयति । एतच्च पूर्वत्र कार्यातिदेशाल्लभ्यते । *चकारेति* । णित्त्वपक्षे वृद्धिः, अन्यदा तदभावः ॥

### न्यासः

गोः सम्बन्धि सर्वनामस्थानम्, किं तर्हि? अन्यपदार्थस्येत्याह—**तपरकरणं त्वित्यादि** ।

**केचिदित्यादि** । किमर्थं पुनस्त एवं पठन्ति? इत्याह-**द्योशब्दोऽपीत्यादि** । ये त्वेवं न पठन्ति 'गोतः' इति, तेषां द्योशब्दात् परस्य सर्वनामस्थानस्य णिद्भावो न सिध्यती-त्याह—**गोत इत्येतदेवेत्यादि** । कथं पुनरेतदोकारान्तोपलक्षणार्थं शक्यं विज्ञातुम्? इत्याह-**वर्णनिर्देशेष्वित्यादि** । यथा 'वृद्धिरादैच्', 'अदेङ् गुणः' इत्येवमादिषु योगेषु वर्णस्तपरो निर्दिश्यत इति तपरकरणं वर्णनिर्देशेषु हि प्रसिद्धम् । तस्मादिहापि तपर-निर्देशाद् 'गोतः' इत्येतदोकारान्तोपलक्षणं द्रष्टव्यमिति । अतो वचनात् तपरकरणं वर्ण-निर्देशार्थमेवेत्यस्यैवौकारान्तोपलक्षणार्थं विज्ञायते ॥

**णलुत्तमो वा** ॥ **णित्कार्यं वा भवतीत्यर्थ इति** । अनेन णित्कार्यस्य पक्षेऽभावाण्णिद्वा भवतीत्युच्यते, न तु णित्त्वस्यैव प्रतिषेध इति दर्शयति । न तु णल उपदेशावस्थायां सिद्धं णित्त्वं तद्वचनशतेनापि शक्यं प्रतिषेद्धुमिति भावः । **चकार, चकरेति** । यदा णित्त्वं

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## सख्युरसम्बुद्धौ ॥ ६२ ॥

असम्बुद्धौ यः सखिशब्दः तस्मात्परं सर्वनामस्थानं णिद्वद्भवति । सखायौ । सखायः ।

असम्बुद्धाविति किम् ? हे सखे ॥

## अनङ् सौ ॥ ६३ ॥

सखिशब्दस्य सौ परतोऽनङित्ययमादेशो भवति, स चेत्सुशब्दः सम्बुद्धिर्न भवति । सखा ।

असम्बुद्धाविति किम् ? हे सखे ॥

## ऋदुशनस्पुरुदंसोऽनेहसां च ॥ ६४ ॥

ऋकारान्तानामङ्गानाम्, उशनस्, पुरुदंसस्, अनेहस्–इत्येतेषां

### पदमञ्जरी

*सख्युरसम्बुद्धौ* ॥ अत्रापि णिदित्यनेन सामानाधिकरण्यात् 'सर्वनामस्थाने' इति प्रथमान्तम्। तत्रोत्तरार्थम् 'असम्बुद्धौ' इति सप्तम्यन्तस्योपात्तस्य यथेहान्वयः, तथा दर्शयति—*असम्बुद्धौ यः सखिशब्द इति* ।

*अनङ् सौ* ॥ सर्वनामस्थानप्रकरणात्सम्बुद्धिपर्युदासाच्च 'सौ' इति प्रथमैकवचनस्य ग्रहणम्, न सप्तमीबहुवचनस्य, आकारविधाने सोर्हल्ङ्यादिलोपो न स्यात्? एवं तर्हि सोर्डादेशो विधीयताम्, एवं सिद्धे यदनङं शास्ति तज्ज्ञापयति–अनङ एव क्वचिच्छ्रवणमस्तीति । तेन यद्वक्ष्यति–'सम्बुद्धावपि पक्षेऽनङिष्यते' इति, तदुपपन्नं भवति ॥

*ऋदुशनस्पुरुदंसोऽनेहसां च* ॥ 'सम्बुद्धावपि पक्षेऽनङिष्यते' इति यदुक्तं तदा-

### न्यासः

तदा 'अचो ञ्णिति' इति वृद्धिः, अन्यदार्धधातुकलक्षणो गुणः । पपाच, पपचेति । यदा णित्त्वं तदा 'अत उपधायाः' इति वृद्धिः, अन्यदा तदभावः ॥

सख्युरसम्बुद्धौ ॥ 'असम्बुद्धौ' इति पर्युदासः—सम्बुद्धेरन्याऽसम्बुद्धिः । हे सख इति । 'ह्रस्वस्य गुणः' इति गुणः ॥

अनङ् सौ ॥ पूर्वेण णित्त्वे प्राप्तेऽनङ् विधीयते । तस्य ङकारोऽन्त्यादेशार्थः । अकार उच्चारणार्थः । सखेति । 'सर्वनामस्थाने चासम्बुद्धौ' इति दीर्घः, हल्ङ्यादिसुलोपः, 'नलोपः प्रातिपदिकान्तस्य' इति नकारस्य । आकारे विधातव्येऽनङ्वचनं सोर्लोपो यथा स्यात् । अकारविधाने तस्य लोपो न स्याद्, यथा–पन्था इति ॥

ऋदुशनस्पुरुदंसोऽनेहसां च ॥ ऋकारान्तस्य 'ऋतो ङिसर्वनामस्थानयोः' इति गुणे प्राप्ते । इतरेषामपि हल्ङ्यादिलोपे कृते रुत्वविसर्जनीयसान्तदीर्घेषु प्राप्तेषु ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


चासम्बुद्धौ सौ परतोऽनङादेशो भवति। कर्त्ता। हर्त्ता। माता। पिता। भ्राता। उशना। पुरुदंसा। अनेहा।

असम्बुद्धावित्येव—हे कर्त्तः। हे मातः। हे पितः। हे पुरुदंसः। हे अनेहः। हे उशनः।

उशनसः सम्बुद्धावपि पक्षेऽनङ् इष्यते—हे उशनन्।

'न ङिसम्बुद्धयोः' इति नलोपप्रतिषेधोऽपि पक्ष इष्यते—हे उशन। तथा चोक्तम्—

सम्बोधने तूशनसस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तम्।
माध्यन्दिनिर्वष्टि गुणं त्विगन्ते नपुंसके व्याघ्रपदां वरिष्ठः॥ इति।

तपरकरणमसन्देहार्थम्॥

पदमञ्जरी

प्रागमेन द्रढयति—*तथा चोक्तमिति*। *सम्बोधने*=सम्बुद्धौ, त्रयाणां रूपाणां समाहारस्त्रिरूपम्, पात्रादिः।

कानि पुनस्तानि रूपाणि? इत्यत आह—*सान्तमित्यादि*। *सान्त*मनङोऽभावपक्षे, *नान्तं* नलोपाभावपक्षे, *अदन्तं* नलोपपक्षे, मध्यन्दिनस्यापत्यं *माध्यन्दिनिः*=आचार्यः, *वष्टि* इच्छति। भाषायामस्य साधुत्वं चिन्त्यमिति 'जक्षित्यादयः षट्' इत्यत्रावोचाम। तथा *व्याघ्रपदां* व्याघ्रपादपत्यानां मध्ये *वरिष्ठो* वैयाघ्रपद्यआचार्यः *नपुंसके* नपुंसकसम्बन्धिनि, *इगन्ते* हे त्रपो इत्यादौ, *गुणं वष्टी*ति श्लोकस्यार्थः॥

न्यासः

उशनसः सम्बुद्धावपि पक्ष इष्यत इति। तत् कथम्? चकारोऽत्र क्रियते, स चानुक्तसमुच्चयार्थः। तेन सम्बुद्धावप्युशनसोऽनङ् भविष्यति। यद्येवम्, नित्यं स्यात्? नैतत्; 'णलुत्तमो वा' इत्यधिकारात् पक्षे भविष्यति। व्यवस्थितविभाषाविज्ञानाच्चान्येषां नित्यम्।

नलोपप्रतिषेधोऽपि पक्ष इष्यत इति। कथमेतल्लभ्यते? तत्र हि 'स्वरितो वाऽनुदात्ते पदादौ' इत्यतो वेत्यनुवर्तते, तेनैवं विज्ञायते—न ङिसम्बुद्धयोर्नलोपप्रतिषेधो वा भवतीति। व्यवस्थितविभाषाविज्ञानाच्चोशनसः सम्बुद्धिनकारस्य लोपो वा भविष्यति। अन्येषां तु नित्यमेव लोपो न भविष्यतीति।

तथा चोक्तमित्यादिनाऽनन्तरोक्तमर्थमागमवचनेन द्रढयति। सान्तमिति यदाऽनङ् न क्रियते। नान्तमिति। न तु नलोपः। अदन्तमिति। यदा नलोपः क्रियते।

तपरकरणमसन्देहार्थमिति। असति हि तस्मिन्नुशनसि परतो यणादेशे कृते सन्देहः स्यात्—किमृकारान्तस्य ग्रहणम्? उत रेफान्तस्येति?॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## तृज्वत्क्रोष्टुः ॥ ९५ ॥

क्रोष्टुशब्दस्तुन्प्रत्ययान्तः संज्ञाशब्दः सर्वनामस्थानेऽसम्बुद्धौ परतः तृज्वद्भवति । तृजन्तस्य यद्रूपं तदस्य भवतीत्यर्थः ।

### पदमञ्जरी

*तृज्वत्क्रोष्टुः* ॥ *क्रोष्टुशब्दस्तुन्प्रत्ययान्त इति* । 'क्रुश आह्वाने', 'सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्' । *संज्ञाशब्द इति* । तुन्प्रत्ययस्य संज्ञार्थे विधानात् । जम्बुकस्य चेयं संज्ञा । वस्तुस्वरूपकथनमेतत् । अत्रानन्तरं *तस्येति* पठितव्यम्; क्रोष्टुरिति सूत्रे षष्ठीनिर्देशात् । *तृज्वद्भवतीति* । तृच इव तृज्वत् । 'तत्र तस्येव' इति षष्ठीसमर्थाद्वतिः । तदेतत्सर्वमुत्तरग्रन्थे स्पष्टीकृतम् । *तृजन्तस्य यद्रूपं तदस्य भवतीति* । प्रत्ययग्रहणपरिभाषया तृजन्तस्येति लभ्यते ।

अतिदेशोऽनेकप्रकारः–निमित्त-व्यपदेश-तादात्म्य-शास्त्र-कार्य-स्वरूपविषयः । तत्रेहादितस्त्रयाणामसम्भवादनतिदेशः, शास्त्रकार्यातिदेशयोश्चायं विशेषः । शास्त्रातिदेशे तेनतेन शास्त्रेण कार्याणि भवन्ति, कार्यातिदेशे त्वतिदेशवाक्येनैवेति तत्र विप्रतिषेधे फलविशेषः । तद्यथा–'कर्मवत्कर्मणा' इत्यत्र शास्त्रातिदेशे कर्मकर्तरि 'भावकर्मणोः' इत्येतद्बाधित्वा स्वाश्रयं कर्तृत्वमाश्रित्य शेषात्कर्त्तरि परस्मैपदप्रसङ्गः, कार्यातिदेशे त्वात्मनेपदमेव परत्वाद्भवतीति । इह तु नैवं विशेषः सम्भवतीति तयोरभेदमाश्रित्य विचारः प्रवर्त्तितो *महाभाष्ये*-किं पुनरयं शास्त्रातिदेशः ? आहोस्विद्रूपातिदेश इति ? तत्र शास्त्रस्य शास्त्रं प्रत्यासन्नमिति शास्त्रातिदेशः प्राप्नोति, प्राधान्यात्तु रूपातिदेशप्रसङ्गस्तदर्थत्वादतिदेशान्तराणाम् । तत्राद्ये पक्षे आहत्य तृचि यच्छास्त्रं तद्वातिदिश्यते ? अनाहत्य वा ? यदि तृच्छब्दवच्छास्त्रमतिदिश्यते तत आहत्येति पक्षः, अथ तृच्छब्दे ऋकार एव विवक्षितः, चकारः स्वरार्थः,तकारस्त्वप्रसिद्धाशङ्कानिवृत्त्यर्थः, 'ऋज्वत्' इत्युच्यमाने अप्रसिद्धाश्रयोऽतिदेशः शङ्क्येत, 'ऋक्पूः' इत्यृक्शब्दनिबन्धनस्य वा समासान्तस्यातिदेशःशङ्क्येत, तस्मात्तृजन्ते यदृकारप्रयुक्तं शास्त्रं कार्यं वा तदतिदेशेनाहत्येति पक्षः। तत्राहत्येति पक्षे 'अप्तृन्तृच्' इति दीर्घत्वमेकमतिदिष्टं स्यादनङ्गुणरपरत्वान्यनतिदिष्टानि-अनङ् 'ऋदुशनस्पुरुदंसोऽनेहसां च', 'ऋतो ङिसर्वनामस्थानयोः'; 'उरण् रपरः'

### न्यासः

तृज्वत्क्रोष्टुः ॥ क्रोष्टुशब्दस्तुन्प्रत्ययान्तः संज्ञाशब्द इति । 'क्रुश आह्वाने' इत्येतस्मात् 'सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्' इति तुन्प्रत्ययान्तस्य संज्ञायां व्युत्पादितत्वात् । संज्ञा पुनरियं जम्बुकस्य । तृज्वद्भवतीति । तृचा तुल्यं वर्त्तत इति तृज्वत् । 'रूपातिदेशोऽयम्' इति वक्ष्यति । तत्र 'तृज्वद् भवति' इत्युक्ते तृच्छब्दस्य यद्रूपं तदतिदिश्यत इति, कस्यचिद् भ्रान्तिः स्यात्, अतस्तां निराकर्तुमाह—तृजन्तस्य यद्रूपमित्यादि । एतच्च 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणं भवति' इत्यतो

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पदमञ्जरी

इति, नह्येतानि तृच्संशब्दनेन विधीयन्ते। ननु च दीर्घत्वेऽतिदिष्टेऽनङादीन्यप्यतिदिष्टान्येव भवन्ति, कथम्? दीर्घविधौ 'उपधायाः' इति वर्तते, 'अचश्च' इति चोपतिष्ठते, ततश्च तृजन्तस्येव तुन्नन्तस्यापि दीर्घो भवतीत्युक्ते–उपधाया अचो दीर्घो भवतीत्युक्तं भवति, न चाकृतेष्वनङादिषु तुन्नन्तस्योपधा दीर्घभाविनी सम्भवति। जसि गुणावादेशयोः सम्भवतीति चेत्? न ह्येकमुदाहरणं योगारम्भं प्रयोजयति, यद्येतावत्प्रयोजनं स्यात्, 'अप्तृन्' इत्यत्रैव क्रोष्टुग्रहणं कुर्यात्। नन्वेवम् 'स्त्रियां च', 'विभाषा तृतीयादिष्वचि' इत्येवमर्थं पुनः 'तृज्वत्क्रोष्टुः' इति वक्तव्यं स्यादिति गौरवं स्यात्? स्यादेतत्; 'अचि र ऋतः' इत्यस्यानन्तरम् 'क्रोष्टुः स्त्रियाम्' 'विभाषा तृतीयादिष्वचि' इति रादेशार्थं वक्ष्यामीति नास्ति गौरवमिति। एवमपि क्रोष्टुः, क्रोष्टरि, पञ्चक्रोष्टृभी रथैरिति न सिद्ध्यति, नापि 'उदात्तयणो हल्पूर्वात्' इति स्वरः, तुन्नन्तस्याद्युदात्तत्वात्तदेवं जसि दीर्घातिदेशेऽपि नातिदेशाश्रयणं व्यर्थमिति न तत्सामर्थ्यादनङादीनामाक्षेपतः सिद्धिः–इत्याहत्यपक्षो दुष्ट एव।

अथानाहत्यपक्षः, अनङादीन्यतिदिष्टानि दीर्घत्वमनतिदिष्टम्, न हि तद्वत् इत्येवं विधीयते। अथ तृजितिसमुदाय एव विवक्षितः, न त्वृकारः, न चाहत्यपक्ष आश्रीयते, किं तर्हि? तृचि यद् दृष्टं यत्किञ्चन निबन्धनं तस्य सर्वस्यातिदेशः? एवमप्यङ्गप्रकरणादङ्गाधिकार एव विहितं यत् शास्त्रं कार्यं तदेवातिदिश्येत, न विप्रकृष्टमनाङ्गम्। यथाचि रवद्भावेन वृद्ध्यादीन्येव भवन्ति, न ङनि णिङादेशः, ततश्च रपरत्वमनतिदिष्टं स्यात्। रपरत्वमप्याङ्गम्, 'कार्यकालं संज्ञापरिभाषम्', 'ऋतो ङि सर्वनामस्थानयोः' गुणो भवति, उपस्थितमिदं भवति—'उरण् रपरः' इति। 'स्त्रियां च' इत्यत्र तर्हि क्रोष्ट्रीत्यत्रानाङ्गयोरीकारयणोरतिदेशो न स्यात्? वचनाद्भविष्यति, न तृजन्तस्य स्त्रियामाङ्गं किञ्चिदस्ति। स्त्रियामप्याङ्गं किञ्चिदस्ति–पञ्चभिः कर्तृभिः क्रीतो रथः पञ्चकर्त्ता रथः, हे पञ्चकर्त्त, पञ्चकर्तरीति स्त्रीलिङ्गे कर्तृशब्दे ङिसम्बुद्ध्योर्दृष्टस्य गुणस्यातिदेशः 'स्त्रियां च' इत्यत्र सम्भवति? न हि सम्बुद्धौ 'तृज्वत्क्रोष्टुः' इत्यनेन सिद्धिः; 'असम्बुद्धौ' इत्यधिकारात्। ङौ 'विभाषा तृतीयादिष्वचि' इति विकल्पः स्यात्। स्यादेतत्–'स्त्रियां च' इत्यत्र न किञ्चिन्निमित्तमुपादीयते, ततश्च प्रागेव विभक्त्युत्पत्तेः स्त्रियां वर्त्तत इत्येवं तृजन्ते दृष्टस्यातिदेशः, न च तदाङ्गं सम्भवतीति अनाङ्गस्याप्यतिदेश इति? एवमपि पञ्चभिः क्रोष्टृभिः क्रीतै रथैः पञ्चक्रोष्टृभी रथैरित्यत्र न कथञ्चन तृजन्तरूपप्रादुर्भावः सम्भवति। तथा 'विभाषा तृतीयादिष्वचि' इत्यत्रापि क्रोष्टरीति आङ्गस्य गुणस्यातिदेशसम्भवात् क्रोष्ट्रा, क्रोष्टुरिति यणशासुत्त्वशास्त्रं चानाङ्गं नातिदिश्यते, नापि स्वरः। ननु तत्रापि तृतीयादिग्रहण-



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



रूपातिदेशोऽयम्। प्रत्यासत्तेश्च क्रुशेरेव तृजन्तस्य यद्रूपं तदतिदिश्यते। तच्च 'क्रोष्टृ' इत्येतदन्तोदात्तम्। क्रोष्टा, क्रोष्टारौ, क्रोष्टारः, क्रोष्टारम्, क्रोष्टारौ।

पदमञ्जरी

सामर्थ्यादनाङ्गमप्यतिदिश्येत, अन्यथा 'विभाषा ङौ' इत्येव ब्रूयात्? नैतदस्ति; अभावातिदेशार्थं तृतीयादिग्रहणं स्यात्; वतिनिर्देशेष्वभावातिदेशस्यापि दृष्टत्वात्, यथा-मरुभूमिवदस्मिन्ग्रामे जलमिति। शास्त्रेऽपि 'तृतीयादिषु भाषितपुंस्कम्'—इत्यत्र नुम्ह्रस्वयोरभावोऽतिदिश्यते। यदा हि प्रत्यासत्तेराङ्गस्येवातिदेश्यमिति स्थितम्, तदा न सर्वासु तृतीयादिषु भावातिदेशः सम्भवतीति यस्य शास्त्रस्य भावस्तृजन्ते दृष्टः, तुन्नन्तेऽपि तस्य भावोऽतिदिश्यते। यस्य त्वभावः, तृजन्तेऽपि तस्याभावोऽतिदेश्यः स्यात्; ततश्च क्रोष्ट्रे, क्रोष्ट्रा—इत्यत्रापि विलक्षणयोर्गुणनाभावयोरभावोऽतिदिष्टः स्यात्। तदेवं शास्त्रातिदेशस्य बहुच्छिद्रत्वाद्रूपातिदेश एवायमाश्रयणीयः। तदाह—*रूपातिदेशोऽयमिति*।

यद्येवम्, यस्य कस्यचित्तृजन्तस्य रूपमतिदिश्येत-पक्ता, वक्तेति? तत्राह—*प्रत्यासत्तेरिति*। अथैतस्मिन् रूपातिदेशे प्रयोगसमवायि यद्रूपम्-क्रोष्टा, क्रोष्टारौ, पञ्चक्रोष्टृभी रथैः, क्रोष्ट्रा, क्रोष्टुः, क्रोष्टरीत्येवम्—सावाकारान्तं द्विवचनादावारन्तम्, स्त्रियां क्वचिद्रेफान्तं क्वचिदकारान्तम्, तृतीयादौ रेफान्तम्, ङसिङसोरुकारान्तम्, ङावरन्तमिति तदतिदिश्यते? आहोस्विच्छास्त्रीयं यद्रूपम् 'ण्वुल्तृचौ', 'तृज्वत्क्रोष्टुः' इत्युपदेशवाक्येऽतिदेशवाक्ये च श्रुतं तदतिदिश्यते? तत्राद्ये पक्षे 'उदात्तयणो हल्पूर्वात्' इति स्वरो न सिद्ध्यति, न हि क्रोष्ट्रेत्यादावृकारावस्था कदाचिद्दृष्टा, यतोऽयमुदात्तयणः स्यात्। तस्माद् द्वितीयः पक्ष आश्रणीयः। तदाह-*तच्च क्रोष्टृ इत्येतदिति*। नन्वत्रापि पक्षे उपदेशवाक्ये, अतिदेशवाक्ये

न्यासः

लभ्यते। यद्यपि शास्त्रातिदेशोऽप्यदोषो बहुधा भाष्ये प्रदर्शितः—तस्यादुष्टत्वेन प्रतिपादनात्; कार्यातिदेशोऽप्यदोषवानेव व्याख्यातः—तस्य शास्त्रातिदेशेनाभिन्नत्वात्; तथापि शास्त्रातिदेशकार्यातिदेशयोररूपार्थत्वाद् रूपे गुणभावः। रूपस्य तु प्रधान्यम्; ताभ्यां तस्य संस्कार्यत्वात्। अतो रूपातिदेशोऽयं युक्त इत्याह—रूपातिदेशोऽयमित्यादि। यदि तर्हि तृजन्तस्य यद्रूपं तत् क्रोष्टुशब्दस्यातिश्यते तदा यत्किञ्चिदेव तृजन्तस्य रूपम्-वक्तृ, पक्तृ—इत्येवमाद्यपि प्राप्नोति? अत आह-प्रत्यासत्तेश्चेत्यादि। इह धात्वन्तरस्य पचतिप्रभृतेस्तृजन्तस्य रूपमस्ति, क्रुशेरपि, तत् किमश्रुतस्य धातोस्तृजन्तस्य यद्रूपं तदतिदिश्यते, उत श्रुतस्य क्रुशेरिति? तत्र श्रुतस्यैव यद्रूपं तदेवातिदेष्टुं युक्तमिति क्रुशेरेव तृजन्तस्य यद्रूपं तदेवातिदिश्यते। किं तद्रूपम्? इत्याह—तच्चेत्यादि। अन्तोदात्तमिति। चकारोच्चारणसामर्थ्यात् स्वरोऽप्यतिदिश्यते। अन्यथा 'तृवत्'

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



'सर्वनामस्थाने' इत्येव—क्रोष्टून् । 'असम्बुद्धौ' इत्येव—हे क्रोष्टो ! ॥

## स्त्रियां च ॥ ९६ ॥

असर्वनामस्थानार्थमारम्भः । स्त्रियां च क्रोष्टुशब्दस्य तृज्वद् भवति । क्रोष्ट्री । क्रोष्ट्रीभ्याम्, क्रोष्ट्रीभिः ।

क्रोष्टुशब्दं केचिद् गौरादिषु पठन्ति, ते ङीषि प्रत्यये तृज्वद्भावं

### पदमञ्जरी

च तृशब्दस्योदात्तस्योच्चारणाभावादुच्चारितस्य वा गुणानामभेदकत्वेनाकिञ्चित्करत्वात् स्वरस्यातिदेशो न स्यात् ? सत्यम्; चकारग्रहणसामर्थ्यात्तस्याप्यतिदेशो भविष्यति । तदाह—*अन्तोदात्तमिति* । यद्वा—मा भूत्स्वरस्यातिदेशः, तृजन्तरूपेऽतिदिष्टे तृज्बुध्या यथा दीर्घादीनि स्वेनस्वेन शास्त्रेण भवन्ति, स्वरोऽप्येवमेव भविष्यति । वतिनिर्देशाच्चायमतिदेश आश्रितः ।

यदि वतिनिर्देशमकृत्वा स्थान्यादेशभाव एवाश्रीयते, न किञ्चिदनिष्टम् ? तथा तु न कृतमित्येव ॥

*स्त्रियां च* ॥ क्रोष्टुशब्दस्तृज्वद्भवतीत्येतत्त्वर्थकथनम् । षष्ठ्यन्तं तु युक्तं पठितुम् । अन्ये त्वेतद्ग्रन्थपर्यालोचनया पूर्वसूत्रेऽपि 'क्रोष्टुः' इति प्रथमान्तं मन्यन्ते । अनुक्रियमाणरूपविनाशप्रसङ्गात्तु तृज्वद्भावो न कृतः । वतिरपि तृतीयासमर्थादेव । तृजन्तेन तुल्यं वर्त्तत इति तद्रूपभाक्त्वेन तुल्यत्वमिति रूपातिदेशत्वम् । एवं च पूर्वसूत्रेऽप्याद्यग्रन्थे तस्येति न पठितव्यम् । *तृजन्तस्य यद्रूपं तदस्य भवतीति* । एतच्चार्थकथनम् । अत्र 'विभक्तौ' इत्यनुवर्त्तते चेत् क्रोष्ट्री भक्तिरस्येति बहुव्रीहौ भक्तिशब्दस्य प्रियादिषु पाठात्पुंवद्भावाभावे क्रोष्ट्री भक्तिरिति न सिद्ध्यति; समासार्थाया विभक्तेर्लुमता लुप्तत्वात् । अथ वाक्यावस्थायामेव तृज्वद्भावो भविष्यति ? 'अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते' । तस्मान्नात्र विभक्तिर्निमित्तत्वेन शक्या आश्रयितुम्, किं तर्हि ? निमित्तम् ? इत्याह—*केचिदित्यादि* । कथं पुनर्गौरादिषु पाठे ङीष्प्रत्ययो निमित्तं भवति ? 'स्त्रियाम्' इति नैवं विज्ञायते—

### न्यासः

इत्येव ब्रूयादिति भावः । क्रोष्टेति । तृज्वद्भावे कृते पूर्वसूत्रेणानङ् । क्रोष्टारौ, क्रोष्टार इति । 'ऋतो ङिसर्वनामस्थानयोः' इति गुणः, रपरत्वम्, अप्तृन्नादिसूत्रेण दीर्घः । क्रोष्टूनिति । 'प्रथमयोः पूर्वसवर्णः' इति दीर्घः । 'तस्माच्छसो नः पुंसि' इति नत्वम् ॥

स्त्रियाञ्च ॥ क्रोष्ट्रीभिरिति । तृज्वद्भावे कृते यणादेशः ।

केन पुनः क्रोष्टुशब्दादीकारः, तृज्वद्भावे कृते 'ऋन्नेभ्यो ङीप्' इत्यनेनेति चेत् ? न; अनुदात्तत्वप्रसङ्गादित्यत आह—क्रोष्टुशब्दं केचिदित्यादि । पञ्चभिः क्रोष्ट्रीभिः

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



कुर्वन्ति। तेषां पञ्चभिः क्रोष्ट्रीभिः क्रीतैः पञ्चक्रोष्टृभी रथैरिति स्त्रीशब्दस्य[1] लुकि कृते न सिद्ध्यति, तत्र प्रतिविधेयम्।

ये तु गौरादिषु न पठन्ति, तेषां स्त्रियामित्यर्थनिर्देशः—स्त्रियां वर्त्तमानः क्रोष्टुशब्दः तृज्वद्भवति। कृतेऽतिदेशे, 'ऋन्नेभ्यो ङीप्'

पदमञ्जरी

स्त्रियामर्थ इति। कथं तर्हि ? स्त्रिया+ई=स्त्री, स्त्रियामिति, स्त्रीत्वस्य द्योतको य ईकारस्तत्रेत्यर्थः। अर्थगतं च स्त्रीत्वमीकारे आरोप्य स्त्रियामिति नदीसंज्ञानिमित्तावामाटौ क्रियेते। एवं वदतामनिष्टमाह—*तेषामिति*। *पञ्चक्रोष्टृभिरिति*। तद्धितार्थे समासः, आर्हीयस्य ठकः 'अध्यर्द्धपूर्व' इति लुक्, 'लुक्तद्धितलुकि' इति स्त्रीप्रत्ययस्यापि लुक्। तत्र 'न लुमताङ्गस्य' इति प्रतिषेधादीकारनिमित्तस्तृज्वद्भावो न सिद्ध्यति। अन्तरङ्गाणां च विधीनां लुका बाधनात् न पूर्वमेव तृज्वद्भावो लभ्यते। तत्र सर्वनामस्थाने पूर्वेणैव सिद्धस्तृज्वद्भाव इति तृतीयादावसिद्धिरुक्ता, सर्वनामस्थानेऽपि सम्बुद्धौ पूर्वेणासिद्धिरेव–हे पञ्चक्रोष्टरिति। तथा शसि पञ्चक्रोष्टॄन्, तथा तृतीयादिष्वजादिष्वप्युत्तरसूत्रेण विकल्पः प्राप्नोति—पञ्चक्रोष्ट्रा, पञ्चक्रोष्ट्रे। नन्वारब्धेऽप्यस्मिन्, परत्वाद्विकल्प एव प्राप्नोति ? अन्तरङ्गत्वादयमेव नित्यो विधिर्भवति। *तत्र प्रतिविधेयमिति*। वचनमेवात्र शरणम्।

ये तर्हि गौरादिषु न पठन्ति तेषां किं निमित्तम् ? न किञ्चिदित्याह—*ये त्वित्यादि*। *स्त्रियां च वर्त्तमान इति*। सूत्राक्षरानुरोधेन चशब्दः पठितः। ननु च

न्यासः

क्रीतैरिति। 'तद्धितार्थोत्तरपदसमाहारे च' इति समासः। 'आर्हादगोपुच्छ' इत्यादिना ठक्, तस्य 'अध्यर्द्धपूर्व' इत्यादिना लुक्, 'लुक्तद्धितलुकि' इति स्त्रीप्रत्ययस्य लुक्, तस्मिल्लुप्ते ये ङीप्प्रत्यये कृते तृज्वद्भावं कुर्वन्ति तेषां तृज्वद्भावो न भवति, तस्मात् प्रतिविधेयमिति। प्रतिविधानं कर्तव्यमित्यर्थः। तत्रेदं प्रतिविधानम्—चकारोऽत्र क्रियते, स चानुक्तसमुच्चयार्थः, तेन लुप्तेऽपि स्त्रीप्रत्यये भविष्यति।

ये तर्हि गौरादिषु न पठन्ति तेषामीकारः कथम् ? इत्याह—गौरादिष्वित्यादि। तेषां पञ्चक्रोष्टुभिरित्यत्र न किञ्चित् प्रतिविधेयम्; परस्य स्त्रीप्रत्ययस्य निमित्तत्वेनानाश्रितत्वात्। ननु च तेषामपि स्त्रीप्रत्ययस्य लुप्तत्वादसत्यामङ्गसंज्ञायामङ्गस्योच्यमानस्तृज्वद्भावो न प्राप्नोतीति प्रतिविधेयमेव ? नैतदस्ति; लुप्ते हि स्त्रीप्रत्ययलक्षणेनाङ्गसंज्ञा भवत्येव। 'न लुमताङ्गस्य' इति यः प्रतिषेधः सोऽङ्गाधिकारविहितस्यैव कार्यस्य। न चाङ्गसंज्ञाऽङ्गाधिकारे विहिता। कृतेऽतिदेश इत्यादि। 'इकोऽचि विभक्तौ, इत्यनु-

1. 'स्त्रीप्रत्ययस्य' इति पाठान्तरम्, परमेतन्न काशिकापुस्तकेषु लभ्यते।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


इति ङीप्प्रत्ययः। तत्र 'उदात्तयणो हल्पूर्वात्' इत्यन्तोदात्त एव क्रोष्ट्रीशब्दो भवति ॥

## विभाषा तृतीयादिष्वचि ॥ ९७ ॥

तृतीयादिषु विभक्तिष्वजादिषु क्रोष्टुर्विभाषा तृज्वद्भवति। क्रोष्ट्रा, क्रोष्टुना। क्रोष्ट्रे, क्रोष्टवे। क्रोष्टुः, क्रोष्टोः। क्रोष्टरि, क्रोष्टौ। क्रोष्ट्रोः, क्रोष्ट्वोः।

### पदमञ्जरी

यद्यपि न शब्देन किञ्चिन्निमित्तमाश्रीयते, 'अङ्गस्य' इति त्वाश्रीयते, अङ्गे चाश्रिते प्रत्ययोऽप्याश्रित एव, यथोक्तम् 'अङ्गस्य' इत्यत्र वव्रश्चेत्यस्य सिद्धये ? सत्यम्; 'कार्यकालं संज्ञापरिभाषम्' तदुक्तम्। तत्र हि पक्षे 'उरत्' इत्यत्राङ्गसंज्ञासूत्रमुपतिष्ठते, ततश्च 'प्रत्ययः' इत्यस्याङ्गसंज्ञायामुरदत्वं च प्रति निमित्तभावः; सन्निधेरविशिष्टत्वात्। इह तु यथोद्देशपक्ष आश्रीयते, ततश्च वस्तुतोऽङ्गस्य स्त्रियां वर्तमानस्य क्रोष्टुशब्दस्य तृज्वद्भावो विधीयते, न तु परनिमित्तमाश्रीयते। अङ्गसंज्ञा च प्रत्ययलक्षणेन भविष्यति। 'अङ्गस्य' इति वचनाल्लब्धाङ्गसंज्ञस्य यत्कार्यं प्रत्ययलक्षणं तदेव प्रतिषिध्यते, न चाङ्गसंज्ञा अङ्गस्य कार्यम्। *अन्तोदात्त एव क्रोष्ट्रीशब्दो भवतीति*। गौरादिषु पाठे ङीष्प्रत्ययस्वरेणान्तोदात्तः। अत्रापि पक्षे 'उदात्तयणो हल्पूर्वात्' इत्यन्तोदात्त एवेति एवशब्दार्थः। केचित्तु—ङीषोऽपि 'उदात्तयणः' इत्येवोदात्तत्वम्; अन्यथा ङीषि परतस्तृज्वद्भावे चित्स्वरस्य सतिशिष्टत्वेन ङीषोऽनुदात्तत्वप्रसङ्ग इत्याहुः ॥

*विभाषा तृतीयादिष्वचि* ॥ अप्राप्तविभाषेयम्। 'स्त्रियाम्' इति नानुवर्त्तते, पञ्चक्रोष्ट्रेत्यादावन्तरङ्गत्वात्पूर्वेण नित्यस्तृज्वद्भाव इत्यवोचाम, तेनोभयत्र-

### न्यासः

वृत्तेर्विभक्तावुत्पन्नायां तदाश्रयायाश्चाङ्गसंज्ञायां स्त्रियां वर्त्तमानस्य क्रोष्टुशब्दस्यातिदेशः क्रियते। तस्मिन् कृते ऋकारान्तत्वात् 'ऋन्नेभ्यो ङीप्' इति ङीब्भवति। ननु च ङीप्प्रत्यये कृतेऽन्तोदात्तः क्रोष्ट्रीशब्दो न सिध्यति ? इत्याह—तत्रेत्यादि। क्रोष्ट्रीशब्दोऽन्तोदात्तोऽतिदिश्यत इति तृसम्बन्धिन ऋकारस्य स्थाने यणादेशो भवन्नुदात्तयण् भवति, ततश्च 'शतुरनुमो नद्यजादिः' इत्यनुवर्त्तमाने 'उदात्तयणो हल्पूर्वात्' इत्यन्तोदात्तो भवति क्रोष्ट्रीशब्दः ॥

विभाषा तृतीयादिष्वचि ॥ 'स्त्रियाम्' इति नानुवर्तते, तेनेयमप्राप्तविभाषा। क्रोष्टुनेति। 'आङो नास्त्रियाम्' इति नाभावः। क्रोष्टवे इति। 'घेर्ङिति' इति गुणः। क्रोष्टुरिति। 'ऋत उत्' इत्युत्त्वम्, रपरत्वम्, 'रात् सस्य' ति सलोपः। क्रोष्टोरिति। पूर्ववद् गुणः, 'ङसिङसोश्च' इति पूर्वरूपत्वम्। क्रोष्टरीति। 'ऋतो ङिसर्वनामस्था-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तृतीयादिष्विति किम् ? क्रोष्टून् । अचीति किम् ? क्रोष्टुभ्याम् । क्रोष्टुभिः ।

❀ तृज्वद्भावात्पूर्वविप्रतिषेधेन नुम्नुटौ भवतः ❀ । प्रियक्रोष्टुनेऽरण्याय । हतक्रोष्टुने वृषलकुलाय । नुट्—क्रोष्टूनाम् ॥

**चतुरनडुहोरामुदात्तः ॥ ९८ ॥**

चतुर्, अनडुह्—इत्येतयोः सर्वनामस्थाने परत आमागमो भवति, स चोदात्तः । चत्वारः । अनड्वान्, अनड्वाहौ, अनड्वाहः, अनड्वाहम् ।

तदन्तविधिरत्रेष्यते । प्रियचत्वाः, प्रियचत्वारौ, प्रियचत्वारः ।

**पदमञ्जरी**

विभाषापि न भवति । *पूर्वविप्रतिषेधेनेति* । तृज्वद्भावस्यावकाशः—क्रोष्ट्रे, पुंसे; नुम्नुटोरवकाशः–त्रपुणे, जतुने, अग्नीनाम्, वायूनाम्; प्रियक्रोष्टुन इत्यादावुभयप्रसङ्गे पूर्वविप्रतिषेधः । अथ किमर्थं तृज्वद्भावो विधीयते, यावता क्रुशेरेव तृचि क्रोष्ट्रेत्यादि सिद्ध्यति ? तुन्नन्तस्यासम्बुद्धौ सर्वनामस्थाने स्त्रियां च प्रयोगो मा भूत्, तृजन्तस्यैव यथा स्यात् । 'विभाषा तृतीयादिष्वचि' इत्येतत्तर्हि किमर्थम्, तृजन्तस्यैव क्रोष्ट्रेत्यादि सिद्धम्, तुन्नन्तस्य क्रोष्टुनेत्यादि ? यथैव तर्ह्यजादावुभयं भवति तथा हलादावपि स्यात्, एवं शस्यपि तुन्नन्तस्यैव च तत्र प्रयोग इष्यते, तेनैतदपि नियमार्थम्–तृतीयादावेवोभयम्, तत्राप्यजादावेवेति ।

यस्तु मन्यते—अभिधानस्वभावादेव तुंस्तृचोर्व्यवस्थितविषयः प्रयोग इति, तं प्रति सूत्रत्रयमपि शक्यमकर्तुम् ॥

*चतुरनडुहोरामुदात्तः* ॥ अत्र 'सर्वनामस्थाने' इति स्वर्यते, न तृतीयादिष्विति । आगमानुदात्तत्वबाधनार्थमुदात्तवचनम् । *तदन्तविधिरत्रेष्यत इति* ।

**न्यासः**

नयोः' इति गुणः । क्रोष्टाविति । 'अच्च घेः' इत्यत्त्वम्, औत्वञ्च । तृज्वद्भावादित्यादि । तृज्वद्भावस्यावकाशः—पुंसि क्रोष्ट्रे इति, नुमोऽवकाशः—त्रपुणे, जतुन इति; प्रियक्रोष्टुने, वनायेत्यत्रोभयप्रसङ्गे सति नुम्भवति पूर्वविप्रतिषेधेनेति । नुटोऽवकाशः-अग्नीनाम्, वायूनामिति, तृज्वद्भावस्यावकाशः स एव; क्रोष्टूनामित्यत्रोभयप्रसङ्गे सति नुड् भवति पूर्वविप्रतिषेधेनेति । पूर्वविप्रतिषेधस्तु परशब्दस्येष्टवाचित्वाल्लभ्यते ॥

चतुरनडुहोरामुदात्तः ॥ 'सर्वनामस्थाने' इति स्वर्यते, न 'तृतीयादिषु' इति । 'आगमा अनुदात्ता भवन्ति' इत्यनुदात्तत्वे प्राप्ते उदात्तत्वार्थं वचनम् ।

तदन्तविधिरत्रेष्यत इति । 'अङ्गाधिकारे तस्य तदुत्तरपदस्य' इति वचनात् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रियानड्वान्, प्रियानड्वाहौ, प्रियानड्वाहः ।

* अनडुहः स्त्रियां वेति वक्तव्यम् * । अनुडुही, अनड्वाही । गौरादिपाठात्सिद्धम् ॥

अम्सम्बुद्धौ ॥ ९९ ॥

सम्बुद्धौ परतश्चतुरनडुहोरमागमो भवति । पूर्वस्यायमपवादः । हे प्रियचत्वः ! हे प्रियानड्वन् ! ॥

ॠत इद्धातोः ॥ १०० ॥

ॠकारान्तस्य धातोरङ्गस्य इकारादेशो भवति । किरति । गिरति । आस्तीर्णम् । विशीर्णम् ।

धातोरिति किम् ? मातॄणाम् । पितॄणाम् ।

पदमञ्जरी

'अङ्गाधिकारे तस्य च तदुत्तरपदस्य च' इति वचनात् । *प्रियचत्वा इति* । बहुव्रीहौ 'सर्वनामसंख्ययोरुपसंख्यानमिति' चतुरशब्दस्य पूर्वनिपाते प्राप्ते 'वा प्रियस्य' इति प्रियशब्दस्य पूर्वनिपातः ॥

*अम्सम्बुद्धौ* ॥ चतुःशब्दस्य केवलस्य सम्बुद्ध्यभावादुपसमस्तस्योदाहरणम् । अनडुहस्तु प्रक्रमाभेदाय, 'तदन्तविधिरत्रेष्यते' इति प्रदर्शनाय च तदन्तस्योदाहरणम् ॥

ॠत इद्धातोः ॥ *किरतीति* । 'कॄ विक्षेपे', 'गॄ निगरणे' तुदादी । *'आस्तीर्णम्, विशीर्णमिति* । 'स्तॄञ् आच्छादने', 'शॄ हिंसायाम्', 'हलि च' इति दीर्घः, 'रदाभ्याम्' इति निष्ठानत्वम् ।

*मातॄणामिति* । दीर्घत्वे कृतेऽपि लाक्षणिकत्वादेवात्र न भविष्यतीति ? अत

न्यासः

प्रियचत्वारिति बहुव्रीहिः । 'सर्वनामसंख्ययोरुपसंख्यानम्' इति संख्यायाः पूर्वनिपाते प्राप्ते 'वा प्रियस्य' इति प्रियशब्दस्य पूर्वनिपातः ॥

अम् सम्बुद्धौ ॥ पूर्वेणामि प्राप्ते वचनम् । हे प्रियचत्वः । हे प्रियानड्वन्निति । अत्र चतुःशब्दस्य केवलस्य सम्बुद्धिर्न भवतीति तदन्तस्योदाहरणम् । अनडुहस्तु यद्यपि केवलस्य सम्भवति, तथापि तदन्तविधिरत्रेष्यत इति तदन्तस्योदाहरणम् ॥

ॠत इद्धातोः ॥ किरति, गिरतीति । 'कॄ विक्षेपे', 'गॄ निगरणे' । 'तुदादिभ्यः शः । आस्तीर्णमिति । 'स्तॄ आच्छादने', 'रदाभ्याम्' इति नत्वम्, 'रषाभ्याम्' इति णत्वम्, 'हलि च' इति दीर्घः । विशीर्णमिति । 'शॄ हिंसायाम्' ।

मातॄणाम्, पितॄणामिति । 'नामि' इति दीर्घः । सत्यपि ॠकारान्तत्वेऽधातुत्वादिह

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



लाक्षणिकस्याप्यत्र ग्रहणमिष्यते । चिकीर्षतीत्यत्रापि यथा स्यादिति धातुग्रहणं क्रियते[1] ॥

## उपधायाश्च ॥ १०१ ॥

उपधायाश्च ऋकारस्य इकारादेशो भवति । कीर्त्तयति, कीर्त्तयतः, कीर्त्तयन्ति ॥

### पदमञ्जरी

आह—*लाक्षणिकस्यापीति* । किं प्रयोजनम् ? इत्याह-*चिकीर्षतीत्यादि* । अतस्तदर्थं धातुग्रहणमिति भावः । क्वचित्तु वृत्तावेवैतत्पठ्यते ॥

*उपधायाश्च* ॥ पूर्वेण ऋकारान्तस्य धातोरित्त्वमुक्तम्, उपधायामपि यथा स्यादित्ययमारम्भः । ननु पूर्वयोगे धातुना ऋकारं विशेषयिष्यामः—धातोर्य ऋकारो यत्र तत्र स्थित इति, इहापि तर्हि प्राप्नोति-ऋकारमिच्छति ऋकारीयतीति ? एवमपि 'कृतस्य' इतीयता सिद्धम्, 'ऋतः' इत्यनुवृत्तेरन्त्यस्य न भविष्यति ? तथा तु न कृतमित्येव । *कीर्त्तयतीति* । 'कृत संशब्दने' चुरादिः ॥

### न्यासः

न भवति । ननु च लक्षणप्रतिपदोक्तपरिभाषयैवात्र न भविष्यति, तत्किमेतन्निवृत्त्यर्थेन धातुग्रहणेन ? इत्याह—लाक्षणिकस्यापीत्यादि । किमर्थं पुनर्लाक्षणिकस्य ग्रहणम् ? इत्याह—चिकीर्षतीत्यादि । कथं पुनरिष्यमाणमपि लाक्षणिकस्यात्र ग्रहणं लभ्यते ? अत एव धातुग्रहणाज्ज्ञापकात् । तस्य ह्येतत् प्रयोजनम्—मातृणाम्, पितृणामित्यत्र मा भूदिति । यदीह लाक्षणिकस्य ग्रहणं न स्यात् तदा मातृणाम्, पितृणामित्यादौ लाक्षणिकत्वादेव न भविष्यतीति धातुग्रहणमनर्थकम् । तस्माल्लाक्षणिकस्याप्यत्र ग्रहणम् । तेन चिकीर्षतीत्येवमादिषु 'अज्झनगमां सनि' इति दीर्घत्वे सत्यपि भवत्येव ।

तपरकरणमसन्देहार्थम् । 'र' इत्युच्यमाने सन्देहः स्यात्–किमयं रेफस्य निर्देशः ? उत यणादेश ऋकारस्येति ?

उपधायाश्च ॥ ऋकारान्तस्य धातोरित्त्वमुक्तम् । उपधाभूतस्य धातोर्ऋकारस्य न प्राप्नोति, इष्यते; तदर्थमेतत् । कीर्त्तयतीति । 'कृत संशब्दने', चुरादौ पठ्यन्तः । ननु च 'ऊतियूतिजूतिसातिहेतिकीर्त्तयश्च' इति निपातनादेवेत्त्वं भविष्यतीति कथं तदर्थो योगारम्भः ? नैतदस्ति; क्तिन्विषय एव निपातनं स्यात् । एवं तर्हि पूर्वयोगे धातुना ऋकारं विशेषयिष्यामः, अत्र तत्स्थस्येति ? एतदपि नास्ति; एवं सति ऋकारमिच्छति ऋकारीयतीत्यत्रापि स्यात् । तस्माद्वक्तव्यमिदम् ।

'कृतश्च' इति वक्तव्ये 'उपधायाश्च' इति वचनं वैचित्र्यार्थम् । 'कृतश्च' इत्यु-

---

१. 'तपरकरणमसन्देहार्थम्'—इत्यधिकं बहुषु पुस्तकेषु ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## उदोष्ठ्यपूर्वस्य ॥ १०२ ॥

ओष्ठ्यः पूर्वो यस्माद् ॠकारादसावोष्ठ्यपूर्वस्तदन्तस्य धातोरङ्गस्य उकारादेशो भवति । पूर्त्ताः पिण्डाः । पुपूर्षति । मुमूर्षति । सुस्वूर्षति ।

दन्त्योष्ठ्यपूर्वोऽप्योष्ठ्यपूर्वो भवतीति अत्रापि भवति—वुवूर्षति ऋत्विजम्, प्रावुवूर्षति कम्बलम् । ओष्ठ्यो ह्यत्र प्रत्यासत्तेरङ्गावयव एव गृह्यते, तेन[1] 'ॠ गतौ' इत्यस्य सम्पूर्वस्य समीर्णमिति भवति[1] ।

पदमञ्जरी

उदोष्ठ्यपूर्वस्य ॥ पूर्त्ता इति । 'पॄ पालनपूरणयोः', 'न ध्याख्यापॄमुर्च्छिमदाम्' इति निष्ठानत्वप्रतिषेधः । मुमूर्षतीति । 'मृङ् प्राणत्यागे' । सुस्मूर्षतीति । 'स्मृ चिन्तायाम्' । सुस्वूर्षतीति पाठे 'स्वॄ शब्दोपतापयोः', 'सनीवन्तर्ध' इत्यादिनेड्भावपक्षे रूपम् । पूर्व एव तु युक्तः पाठः; पृथगुदाहरणस्य वक्ष्यमाणत्वात् ।

दन्त्योष्ठ्यपूर्वोऽपीत्यादि । ओष्ठ्यत्वमात्रं विवक्षितं नेतरव्यावृत्तिरिति भावः । ओष्ठ्योऽत्रेत्यादि । यथा 'हलः' इत्यत्राङ्गेन हल् विशेष्यते, तेन सम्प्रसारणम्, तेन च पुनरङ्गम; तथेहाप्यङ्गस्यावयव ओष्ठ्यः पूर्वो यस्मात्तदन्तस्याङ्गस्येति ।

न्यासः

च्यमाने तकारस्य स्यात् ? नैतदस्ति; 'ॠतः' इत्यनुवर्त्तयिष्यते, तेन ॠकारस्यैव भविष्यति । अन्यस्त्वाह—'ॠतः' इति पूर्वसूत्रे विशेषणत्वेन प्रकृतम्, न शक्यते तद्धि विशेष्यत्वेन विवक्षितुमिति । तस्य 'उपधाया ॠकारस्येकारादेशो भवति' इत्येष वृत्तिग्रन्थो विरुध्यते । अत्र हि ॠकारस्य विशेष्यता दर्शिता । तस्माद् यथाङ्गस्यैतत् क्वचिद्विशेषणम्; तथा 'ॠतः' इत्येतदपि पूर्वसूत्रे विशेषणम्, इह तु विशेष्यम् ॥

उदोष्ठ्यपूर्वस्य ॥ 'ॠत इद्धातोः' इतीत्वे प्राप्त उत्वं विधीयते । पूर्त्त इति । 'पॄ पालनपूरणयोः', क्तः । 'न ध्याख्या' इत्यादिना प्रतिषिद्धत्वान्न निष्ठानत्वं भवति । वुवूर्षतीति । 'वॄ वरणे' । मुमूर्षतीति । 'मॄ हिंसायाम्' । सुस्वूर्षतीति । 'स्वॄ शब्दोपतापयोः', 'अज्झनगमां सनि' इति दीर्घत्व ॠकारान्तत्वमस्य ।

अथेह कथमुत्त्वम्—'वृङ् सम्भक्तौ', 'वृञ् वरणे'—प्रावुवूर्षते, प्रावुवूर्षतीति, न ह्यत्र ॠकार ओष्ठ्यपूर्वः, किं तर्हि ? दन्त्योष्ठ्यपूर्व इति ? तदेतदाह—दन्त्योष्ठ्यपूर्वोऽप्योष्ठ्यपूर्वो भवतीत्यादि । यो ह्युभयस्थाने निष्पद्यते लभतेऽसावन्यतरव्यपदेशम् । तेन दन्त्योष्ठ्यौ यो भवति सोऽप्योष्ठ्यो भवत्येव दन्त्योष्ठ्यपूर्वोऽप्योष्ठ्यपूर्व एव । अथ समीर्णमित्यत्र कस्मान्न भवति, अस्ति ह्यत्राप्योष्ठ्यपूर्वता ? इत्याह—ओष्ठ्यो ह्यत्रेत्यादि ।

---

१—१. "तेनेह न भवति—समीर्णमिति । 'ॠ गतौ' इत्यस्य सम्पूर्वस्य यद्यपि समो मकार ओष्ठ्यः पूर्वोऽस्ति, तथाप्यङ्गावयवो न भवतीति समीर्णमित्यत्र न भवति"—इति पाठ एकस्मिन्पुस्तके । परन्त्वयं काशिकापुस्तकेषु न प्रसिद्ध इत्युपेक्षितः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



❀ इत्त्वोत्त्वाभ्यां गुणवृद्धी भवतो विप्रतिषेधेन ❀। आस्तरणम्, आस्तारकः। निपरणम्, निपारकः। निगरणम्, निगारकः॥

## बहुलं छन्दसि ॥ १०३ ॥

छन्दसि विषये ॠकारान्तस्य धातोरङ्गस्य बहुलमुकारादेशो भवति। 'ओष्ठ्यपूर्वस्य' इत्युक्तम्, अनोष्ठ्यपूर्वस्यापि भवति— मित्रावरुणौ ततुरिः। दूरे ह्यध्वा जगुरिः। ओष्ठ्यपूर्वस्यापि न भवति— पप्रितमम्, वव्रितमम्। क्वचिद् भवति—पपुरिः॥

इत्युपाध्यायश्रीवामनकृतायां काशिकावृत्तौ सप्तमाध्यायस्य प्रथमःपादः॥

### पदमञ्जरी

इत्त्वोत्त्वाभ्यामित्यादि। इत्त्वोत्त्वयोर्दर्शितान्युदाहरणान्यवकाशः, गुणवृद्ध्योरवकाशः-चयनं चायकः; उभयप्रसङ्गे विप्रतिषेधः। *आस्तरणमिति*। नात्र गुणस्य नित्यत्वम्; लक्षणभेदात्। पूर्वं ह्रीगन्तलक्षणो गुणः प्राप्नोति, इत्त्वोत्त्वयोः कृतयोर्लघूपधलक्षणः॥

बहुलं छन्दसि॥ *ततुरिर्जगुरिरिति*। तॄगृभ्याम् 'आदृगमहनः' इति किन्प्रत्ययः, उत्त्वम्, तस्य 'द्विर्वचनेऽचि' इति स्थानिवद्भावात्तॄगॄ-इत्येतस्य द्विर्वचनम्। *पप्रितममिति*। 'पॄ' इत्येतस्मात्पूर्ववत्किन्, इत्त्वोत्त्वयोरभावे यण्, तस्य स्थानिवद्भावाद् द्विर्वचनम्, अतिशायने तमप्॥

*इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां सप्तमाध्यायस्य प्रथमः पादः॥*

### न्यासः

ओष्ठ्यो ह्यत्राङ्गावयवोऽपि। तत्रेह प्रत्यासत्तेरङ्गावयवो गृह्यते, नोपसर्गावयवः। प्रत्यासन्नत्वम् पुनःप्रसङ्गस्य प्रकृतत्वात्। उपसर्गस्य तु नास्ति प्रत्यासन्नत्वम्; विपर्ययात्।

इत्त्वोत्त्वाभ्यामित्यादि। इत्त्वोत्त्वयोरवकाशः—आस्तीर्णम्, पूर्त्त इति, गुणवृद्ध्योरवकाशः—चयनम्, चायक इति; इहोभयं प्राप्नोति-आस्तरणम्, आस्तारकः, निपरणम्, निपारक इति, अत्र गुणवृद्धी भवतो विप्रतिषेधेन॥

बहुलं छन्दसि॥ ततुरिः, जगुरिरिति। तरतेर्गिरतेश्च 'आदृगमहनजनः किकिनौ लिट् च' इति किकिनोरन्यतरः, ततश्चोत्त्वे 'द्विर्वचनेऽचि' इति स्थानिवद्भावात् 'तॄ गॄ'—इति द्विरुच्यते, 'उरत्' इत्यत्त्वम्। पप्रितमम्, वव्रितममिति। 'पॄ, वॄ'—इत्येतयोः किकिनोरन्यतरः, यणादेशः। किप्रत्ययान्तात् 'अतिशायने तमप्' इत्यादिना तमप्॥

इति श्रीबोधिसत्त्वदेशीयाचार्यजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्जिकायां सप्तमाध्यायस्य प्रथमः पादः॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# अथ सप्तमाध्याये द्वितीयः पादः

## सिचि वृद्धिः परस्मैपदेषु ॥ १ ॥

परस्मैपदपरे सिचि परत इगन्तस्याङ्गस्य वृद्धिर्भवति । अचैषीत् । अनैषीत् । अलावीत् । अपावीत् । अकार्षीत् । अहार्षीत् । अन्तरङ्गमपि गुणमेषां वृद्धिर्वचनाद्बाधते ।

न्यनुवीत्, न्यधुवीद्—इत्यत्र कुटादित्वान्ङित्त्वे सति प्रतिषिद्धायां

### पदमञ्जरी

*सिचि वृद्धिः परस्मैपदेषु* ॥ अत्र सिचि, परस्मैपदेष्विति द्वे अपि परसप्तम्यौ, तत्र सिचोऽङ्गापेक्षं परत्वम्, परस्मैपदानां सिजपेक्षम् । 'इको गुणवृद्धी' इति वचनादिक इत्युपतिष्ठते, तत्रेकाङ्गस्य विशेषणात्तदन्तविधिर्भवतीत्याह—*इगन्तस्याङ्गस्येति* । उदाहरणेषु 'अस्तिसिचोऽपृक्ते' इतीट्, सेटः सिचः 'इट ईटि' इति लोपः । ननु चान्तर्भूतसिज्मात्रापेक्षत्वाद् गुणोऽन्तरङ्गः, बहिर्भूतं परस्मैपदं सिचं चापेक्षत इति वृद्धिर्बहिरङ्गा, ततश्च पूर्वं गुणे कृते इगन्तस्याङ्गस्येति नोपपद्यते ? इत्यत आह—*अन्तरङ्गमपीति* ।

यथैव तर्हि गुणं बाधते तथोवङमपि बाधेत, तत्राह—*न्यनुवीन्न्यधुवीदित्य-*

### न्यासः

सिचि वृद्धिः परस्मैपदेषु ॥ 'सार्वधातुकार्धधातुकयोः' इति गुणे प्राप्ते वचनमिदमारभ्यते । सिचीति, परस्मैपदेष्विति च—द्वे अप्येते परसप्तम्यौ; तत्र सिचोऽङ्गापेक्षं परत्वम्, परस्मैपदानां तु सिजपेक्षम् । परस्मैपदपर इति । परस्मैपदं परं यस्मात् स तथोक्तः । इगन्तस्येति । 'इको गुणवृद्धी' इत्यस्योपस्थाने सतीकाऽङ्गं विशिष्यते, विशेषणेन च तदन्तविधिर्भवतीत्याह—इगन्तस्याङ्गस्य वृद्धिर्भवतीति । अचैषीत्, अनैषीदिति । 'चिञ् चयने', णीञ् प्रापणे', भूते लुङ्, 'च्लेः सिच्', 'एकाचः' इत्यादिनेट्प्रतिषेधः, अडागमः, 'नित्यं ङितः' इत्यनुवर्त्तमाने 'इतश्च' इतीकारलोपः, 'अस्तिसिचोऽपृक्ते' इतीट्, इण्कोः' इत्यनुवर्त्तमाने 'आदेशप्रत्यययोः' इति षत्वम् । अलावीत्, अपावीदिति । पूर्ववल्लुङ्, 'आर्धधातुकस्येड्वलादेः' इतीट्, पूर्ववदीट्, 'इट ईटि' इति सिचो लोपः । अकार्षीदित्युदाहरणं सुबोधम् । ननु चात्रान्तरङ्गत्वाद् गुणेन भवितव्यम्, अन्तरङ्गत्वं पुनस्तस्यार्धधातुकापेक्षत्वात्; वृद्धेस्त्वार्द्धधातुकविशेषं परस्मैपदपरं सिचमपेक्ष्य बहिरङ्गत्वम् ? अत आह—अन्तरङ्गमपीत्यादि । यद्यन्तरङ्गत्वाद् गुणः स्यात्, तदेतद्वचनमनर्थकं स्यात् । तस्माद्वचनसामर्थ्याद् बहिरङ्गापि वृद्धिर्गुणं बाधते । यद्येवम्, तर्हि यथा वचनसामर्थ्याद् वृद्धिरन्तरङ्गमपि गुणं बाधते, तथोवङादेशमपि बाधेत; ततश्च न्यनुवीत्, न्यधुवीदिति न सिध्येत् ? इत्यत आह—न्यनुवीन्न्यधुवीदित्यादि । यत्र हि वृद्धेः प्रतिषेधो

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



वृद्धावुवङादेशः क्रियते ।

पदमञ्जरी

त्रेति । 'णू स्तुतौ', 'धूञ् विधूनने' कुटादी । यत्र हि वृद्धिः प्रवर्त्तते तत्रान्तरङ्गं बाधेत, इह तु प्रतिषेधादप्रवृत्ता सती नोत्सहते बाधितुम् । ननु च यथा गुणो बाध्यते, एवं प्रतिषेधोऽपि बाधनीयः ? 'येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति', गुणे च नाप्राप्ते वृद्धिरारभ्यते, प्रतिषेधे च प्राप्ते चाप्राप्ते चेति । अथैवं कस्मान्न कल्प्यते—अन्तरङ्गत्वाद् गुणे कृते वचनादनिकोऽपि वृद्धिर्भवति, यथा—अचैषीदित्यादावेकारस्य, अह्रौषीदित्यादावोकारस्येति; तत्रायमर्थः—'ह्मयन्तक्षण' इत्यत्र णिश्विग्रहणं न कर्त्तव्यं भवति, कथम् ? औनयीत्, अश्वयीदित्यादौ अन्तरङ्गत्वाद् गुणायादेशयोः कृतयोर्यान्तानां 'ह्मयन्त' इत्येव प्रतिषेधः सिद्धः ? नैवं शक्यं कल्पयितुम्; एवं हि कल्प्यमाने अभैत्सीदित्यादौ व्यञ्जनस्यापि वृद्धिप्रसङ्गः । 'वदव्रजहलन्तस्याचः' इत्येषा व्यञ्जनवृद्धिं बाधिष्यते ? नाप्राप्तायां तस्यामारम्भात् । यत्र तर्हि सा प्रतिषिध्यते—अनन्दीत्, अदेवीदित्यादौ, तत्र व्यञ्जनस्य सिचि वृद्धिः प्राप्नोति ? नैष दोषः; 'नेटि' इत्यनेन हलन्तस्य या च यावती च वृद्धिः प्राप्नोति—'वदव्रज' इति वा, सिचि वृद्धिः' इति वा, सा सर्वा प्रतिषिध्यते । इह तर्हि अगवीदिति गोशब्दस्याचारक्विबन्तस्य सिचि वृद्धिः प्राप्नोति ? अत्राप्यन्तरङ्गत्वादवादेशे कृते हलन्तलक्षणाया वृद्धेः 'नेटि' इति प्रतिषेधः । 'अतो हलादेर्लघोः' इति विकल्पस्तु सत्यपि सिचि वृद्धेरिग्लक्षणत्वे भवति । इह तर्हि न्यनुवीत्, न्यधुवीदिति—'क्ङिति च' इति प्रतिषेधो न प्राप्नोति, अलिग्लक्षणत्वात् ? मा भूत्प्रतिषेधः; अन्तरङ्गत्वादुवङादेशो भविष्यति । इह च अकार्षीदिति—गुणे रपरत्वे च कृते हलन्तलक्षणा वृद्धिः ? यत्रापि सा प्रतिषिध्यते—अतारीत्, अस्तारीदिति, तत्रापि 'अतो ल्रान्तस्य' इति वृद्धिः सिद्धा । इह तर्ह्यलावीत्, अयावीदन्तरङ्गत्वाद् गुणावादेशयोः कृतयोर्हलन्तलक्षणायाः 'नेटि' इति प्रतिषेधे 'अतो हलादेर्लघोः' इति विकल्पः प्राप्नोति ? 'अतो ल्रान्तस्य' इत्यत्र वकारोऽपि प्रश्लिष्यते । किं वकारो न श्रूयते ? लुप्तनिर्दिष्टो वकारः ।

न्यासः

नास्ति, तत्र वचनसामर्थ्याद्विध्यन्तरं बाधित्वाऽसौ प्रवर्त्तते । इह तु ङित्त्वे सति 'क्ङिति च' इति वृद्धिः प्रतिषिध्यते, प्रतिषिद्धा च सती नोत्सहत उवङादेशं बाधितुम् । तेन तस्यां प्रतिषिद्धायाम् 'अचि श्नुधातु' इत्यादिनोवङादेशः क्रियते । ङित्त्वं पुनरत्र 'णू स्तवने', 'धू विधूनने'—इत्येतयोः कुटादिषु पाठाद् गाङ्कुटादिसूत्रेण । यथा सामर्थ्याद् वृद्धया गुणो बाध्यते, तथा प्रतिषेधोऽपि बाध्येत एव ? नैतदस्ति; गुणे हि नाप्राप्ते वृद्धिरारभ्यते, प्रतिषेधे तु प्राप्ते चाप्राप्ते च । तत्र येन नाप्राप्तिन्यायेन गुणस्यैव बाधा युक्ता, न प्रतिषेधस्य ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


परस्मैपदेष्विति किम् ? अच्योष्ट । अप्लोष्ट ॥

## अतो ल्रान्तस्य ॥ २ ॥

### पदमञ्जरी

इहापि तर्हि प्राप्नोति—मा भवानवीद्, अमवीदिति ? णिश्विग्रहणमिह पक्षे न कर्त्तव्यमित्युक्तम्, तयोः स्थाने अविमवी प्रक्षेप्स्यामि । यत्तर्हि लाघवमस्मिन्पक्षे प्रदर्शितम्—णिश्विग्रहणं न कर्त्तव्यं भवतीति, तदेवं सति हीयते; किं चागवीदित्यत्रापि 'अतो हलादेर्लघोः' इति विकल्पं बाधित्वा वकारप्रश्लेषान्नित्या वृद्धिः प्राप्नोति; तथा चिप्रभृतिभ्यो यङ्लुगन्तेभ्यो लुङि अचेचायीदित्यादौ गुणायादेशयोः कृतयोर्यान्तानां नेति प्रतिषेधः प्राप्नोति; तथा चिरिणोति-जिरिणोत्योः अचिरायीत, अजिरायीद् । तस्मादन्तरङ्गमपि गुणमेषा वृद्धिर्वचनाद्बाधत इत्येतदेव साम्प्रतम् । न पुनरन्तरङ्गस्य प्रवृत्तिमभ्युपेत्य वचनादनिकोऽपि भवतीति । किं पुनः कारणमियमेव कल्पना भवति ? णिश्विग्रहणात्; अन्यथा णिश्विग्रहणं न कर्त्तव्यं भवतीत्यनन्तरमेवोक्तम् ॥

*अतो ल्रान्तस्य* ॥ अन्तशब्दोऽयमस्त्यवयववचनः—वस्त्रान्तः, वसनान्त इति; अस्ति समीपवचनः—उदकान्तं गत इति; तत्राद्ये पक्षे 'ल्रान्तस्य' इति बहुव्रीहिः, अङ्गमन्यपदार्थः; अन्यस्यार्थस्यासम्भवात् । तत्र वर्णग्रहणे सर्वत्र तदन्तविधिरित्येव सिद्धत्वादन्तग्रहणमतिरिच्यते । तस्मात्समीपवचनोऽन्तशब्दः । तत्रापि यदि षष्ठीसमासः स्यात्—रेफलकारयोः समीपभूतस्यातो वृद्धिर्भवतीति, ततो लषिरणिप्रभृतिष्वेव स्यात् । यदि परसमीपवचनोऽन्तशब्दः, अथ तु समीपमात्रवचनस्तदा इष्टविषये तावत्सिध्यति, अनिष्टेऽपि तु विषये प्राप्नोति, तथा अखल्लीदित्यत्रापि प्रसङ्गः । तस्मात्कर्मधारयः, निपातनाच्च विशेषणस्य परनिपातः । समीपभूतौ रेफलकारौ ल्रान्तशब्देन विवक्षितौ । कस्य समीपभूतावित्यपेक्षायाम् अत इत्यनेन सम्बन्धः । एवं विशेषिताभ्यां रेफलकाराभ्यामङ्गस्य विशेषणात्तदन्तविधिः । अतः समीपभूतौ यौ रेफलकारौ तदन्तस्याङ्गस्येति । यद्येवम्, एकत्वाद् 'अतः' इत्यस्य तस्य च रेफलकारयोः विशेषणे एवं उपक्षीणत्वान्न वृद्धिभाङ् निर्दिष्टः स्यात् ? विशेषणत्वेनापि तावदकारस्य श्रुतत्वात्तस्यैव वृद्धिर्भव-

### न्यासः

**अच्योष्ट, अप्लोष्टेति** । 'च्युङ् छ्युङ् ज्युङ् झ्युङ् प्रुङ् प्लुङ् गतौ', ङित्त्वादात्मनेपदम् ॥

**अतो ल्रान्तस्य** ॥ अन्तशब्दोऽयमस्त्यवयववचनः, यथा—वस्त्रान्तः, वसनान्त इति । अस्ति च समीपवाची, यथा—उदकान्तं प्रियं प्रोथमनुव्रजेदिति । उदकसमीपमित्यर्थः । अत्रावयववाचिनोऽन्तशब्दस्य ग्रहणे इहान्तग्रहणमनर्थकं स्यात् ? तस्य ह्युपादानस्यैतत् प्रयोजनम्—रेफलकारान्तस्य यथा स्यादिति । एतच्च 'येन विधिस्तदन्तस्य' इत्यनेनैव

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


रेफलकारौ यावतोऽन्तौ=समीपौ, तदन्तस्याङ्गस्य अत एव स्थाने वृद्धिर्भवति । क्षर–अक्षारीत् । त्सर–अत्सारीत् । ज्वल–अज्वालीत् । ह्मल–अह्मालीत् । 'अतो हलादेर्लघोः' इति विकल्पस्यायमपवादः ।

अत इति किम् ? न्यखोरीत् । न्यमीलीत् । ल्रान्तस्येति किम् ? मा भवानटीत् । मा भवानशीत् ।

अन्तग्रहणं किम् ? अवभ्रीत् । अश्वल्लीत् । अत्र यौ रेफलकारा-

**पदमञ्जरी**

तीत्यदोषः, तदिदमुक्तम्–रेफलकारौ *यावतः समीपभूतावित्यादि* ।

वयं तु ब्रूमः–'समीपभूतरेफलकारान्तस्याङ्गस्यातः स्थाने वृद्धिर्भवतीत्येवा-क्षरव्यापारः । तत्र कस्य समीपभूतावित्यपेक्षायां सन्निधानादतः समीपभूता-विति गम्यते' इति । अपर आह—'रश्च लश्च लरम्, आगन्तुकोऽकारः, षष्ठ्या लुका निर्देशः, अत्र ल्रेणाङ्गस्य विशेषणात्तदन्तविधौ ल्रान्तस्याङ्गस्य योऽकार-स्तत्र वृद्धिर्भवति । कीदृशस्यातः ? समीपभूतस्य । सन्निधानाच्च ल्रं प्रति समीपभूतस्येति । अन्तशब्दश्च समीपमात्रवचनो न तु परसमीपवचनः' इति ।

उदाहरणेषु;'क्षर सञ्चलने', 'त्सर छद्म गतौ', 'ज्वल दीप्तौ', 'ह्मल चलने' ।

*न्यखोरीत्, न्यमीलीदिति* । 'खुर छेदने', 'मील निमेषणे' । *मा भवानित्यादि* । 'अट गतौ'; 'अश भोजने', माङः प्रयोग अडागमनिवृत्त्यर्थः ।

*अवभ्रीत्, अश्वल्लीदिति* । 'वभ्रिर्गत्यर्थः', 'श्वल्लिराशु गमने' । अथान्तग्रहणं

**न्यासः**

सिध्यति । तस्मात् समीपवाचिन एव ग्रहणमिति मत्वाऽऽह—रेफलकारौ यावतोऽन्तौ समीपाविति । यदि तर्हि ल्रावन्तौ यस्य समीपावत इत्यनेन निर्दिश्यते वृद्धिभाग् न निर्दिष्टः स्यात् । एवञ्च 'अलोऽन्त्यस्य' इत्यन्त्यस्य स्यात्; अकारसमीपभूतस्य ल्रान्तस्या-न्त्यस्य वृद्धिभाज इकोऽभावादित्यत आह–अत एव स्थान इति । एवं मन्यते–अकारस्य श्रुतत्वादकारस्यैव स्थाने वृद्धिर्विज्ञायत इति । अक्षारीदित्यादि । 'क्षर सञ्चलने', 'त्सर छद्मगतौ', 'ज्वल दीप्तौ', 'ह्वल ह्मल चलने'–इत्येतेषां रूपाणि । अतो हलादेर्लघो-रित्यस्य विकल्पस्यायमपवाद इति । एतेन नित्यार्थतामस्य योगस्य दर्शयति ।

न्यखोरीद्, न्यमीलीदित्यादि । 'खुर छेदने', 'मील श्मील स्मील क्ष्मील निमेषणे' । मा भवानटीद्, मा भवानशीदिति । 'अट पट गतौ', 'अश भोजने' । 'न माङ्योगे' इत्याट्प्रतिषेधार्थो माङ्योगः । भवानिति । अयं सन्देहनिरासार्थः; अतोऽन्यत्र विशेषा-भावात् ।

अवभ्रीदिति । 'अभ्र वभ्र मभ्र चर गत्यर्थाः' । अश्वल्लीदिति । 'श्वल श्वल्ल

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


ङ्गस्यान्तौ न तावतः समीपौ ॥

वदव्रजहलन्तस्याचः ॥ ३ ॥

वदव्रजोर्हलन्तानां चाङ्गानामचः स्थाने वृद्धिर्भवति सिचि परस्मैपदे परतः । अवादीत् । अव्राजीत् । विकल्पबाधनार्थं वदिव्रजिग्रहणम् ।

हलन्तानाम्—अपाक्षीत् । अभैत्सीत् । अच्छैत्सीत् । अरौत्सीत् ।

अत्र योगविभागे सति हलन्तग्रहणमन्तरेणापि सिद्धचति,

पदमञ्जरी

किमर्थम्, न 'ल्रः' इत्येवोच्येत ? इहापि तर्हि प्राप्नोति—अवभ्रीत्, अखल्लीदिति ? अकारमेव सिच्परत्वेन विशेषयिष्यामः—ल्रान्तस्याङ्गस्य योऽकारस्तस्य सिच्यनन्तरे वृद्धिर्भवतीति । न च रेफलकारान्तस्याङ्गस्य योऽकारस्तस्य सिजव्यवहितः सम्भवतीति सामर्थ्यात् येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादित्येकेन वर्णेन व्यवधानमाश्रयिष्यते । अथ वा—'अतो हलादेर्लघोः' इत्यस्यानन्तरमिदं कर्त्तव्यम्, तत्रायमप्यर्थः—अत इत्यपि न वक्तव्यं भवति, तत्र 'लघोः' इत्यनुवृत्तेरखल्लीदित्यादौ न भविष्यति । एवमपि चतुश्शब्दादाचारक्विपि लुङि सिचि चकारस्यापि प्राप्नोति ? तत्रापि सिचाऽऽनन्तर्यं विशेषयिष्यामः, तत्र यथा अचकासीदित्यत्र 'अतो हलादेर्लघोः' इति चकाराकारस्य वृद्धिर्न भवति, तत्कस्य हेतोः ? सिचा आनन्तर्यं विशेष्यत इति । एवं चतुश्शब्देऽपि न भविष्यति । एवं च कृत्वा 'लघोः' इत्यपि न वक्तव्यं भवति ? तथा तु न कृतमित्येव ॥

वदव्रजहलन्तस्याचः ॥ *विकल्पबाधनार्थमिति* । 'अतो हलादेर्लघोः' इति विकल्पो वक्ष्यते । 'नेटि' इति प्रतिषेधे प्राप्त इति तु नोक्तम्; विकल्पस्यैव वस्तुतः प्राप्तत्वात् । *अत्रेत्यादि* । 'वदव्रज्योः' इत्येको योगः, 'अचः' इति द्वितीयः, तत्राङ्गेनाज्विशेष्यत इति—अङ्गस्य योऽच् यत्र तत्र स्थितस्तस्येति, तेन हलन्तस्य

न्यासः

आशुगमने' । न तावतः समीपाविति । भकारलकाराभ्यां व्यवधानादिति ॥

वदव्रजहलन्तस्याचः ॥ अनिगन्तार्थोऽयमारम्भः । अथ वदिव्रज्योर्ग्रहणं किमर्थम्, यावता हलन्तत्वादेव वृद्धिः सिध्यति ? इत्यत आह—विकल्पबाधनार्थमित्यादि । 'अतो हलादेः' इति विकल्पं वक्ष्यति, तस्य बाधो यथा स्यात् । अपाचीदिति । 'डुपचष् पाके', 'चोः कुः' इति कुत्वम् । अभैत्सीदिति । 'भिदिर् विदारणे', 'खरि च' इति चर्त्वम्—दकारस्य तकारः । अरौत्सीदिति । 'रुधिर् आवरणे' ।

अत्रेत्यादि । 'वदिव्रज्योः' इत्येको योगः, 'अच' इति द्वितीयः; एवं योगविभागे

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



कथम् ? वदिव्रज्योरित्यत्र प्रथमयोगे 'अतः' इति स्थानी अनुवर्त्तते, ततो यत् 'अचः' इति सूत्रम्, तत्राङ्गेनाज्विशेष्यते—अङ्गस्याचः सिचि परतो वृद्धिर्भवति । तदेतद्धल्ग्रहणं हल्समुदायपरिग्रहार्थम् । इहापि स्यात्—अराङ्क्षीत्, असाङ्क्षीत् । अन्यथा हि येन नाव्यधानं तेन व्यवहितेऽपि

पदमञ्जरी

सिद्धा वृद्धिरिति भावः । किं पुनः कारणमङ्गेनाज्विशेष्यते, न पुनरचाऽङ्गस्येति ? असम्भवात् । अचिकीर्षीदित्यादौ अदन्तस्य तावत् 'नेटि' इति प्रतिषेधः, आकारान्तं तु सिचि न सम्भवति; 'यमरमनमातां सक्च' इति सग्विधानात् । सम्भवे वा नास्ति विशेषः सत्यां वा वृद्धावसत्यां वा । इगन्तस्य तु 'सिचि वृद्धिः' इत्येव सिद्धा वृद्धिः । एजन्तमप्यात्वविधानान्नैव सम्भवति । अगवीदित्यत्र तु 'नेटि' इति प्रतिषेधः । तदेवमङ्गेनाज्विशेष्यत इति सहृदयमभिधानम् । एवं प्रत्याख्याते हल्ग्रहणे, प्रयोजनमाह—*तदेतदिति* । किं पुनः कारणमन्तरेण हल्ग्रहणं हल्समुदायस्य परिग्रहो न सिद्धयति ? अत आह—*अन्यथा हीति* । एतच्च

न्यासः

सति हलन्तग्रहणमन्तरेणापीष्टं सिध्यत्येव । कथमिति । असम्भावयतः प्रश्नः । वदिव्रज्योरित्यादिना यथा योगविभागे सति सिध्यति तथा दर्शयति । तत्र प्रथमयोगे पूर्वसूत्रात् 'अतः' इति स्थान्यनुवर्त्तते । तेनावादीद्, अव्राजीदित्येतावत्सिध्यति । ततो यदच इति द्वितीयं सूत्रम्, तत्र विशेषणविशेष्यभावयोर्यथेष्टत्वात् प्रकृतेनाङ्गेनाज्विशिष्यते—अङ्गस्य योऽजिति। तेनाङ्गस्याचो यत्र तत्रावस्थितस्य सिचि परतो वृद्धिर्भवति । अपाक्षीदित्याद्यपि सिध्यति । यद्येवम्, योगविभाग एव कर्त्तव्यः, किं हल्ग्रहणेन ? इत्यत आह—तदेतदित्यादि । हल्समुदायपरिग्रहः किमर्थो यतस्तदर्थोऽयं यत्नः क्रियते ? इत्याह—इहापीत्यादि । अराङ्क्षीदिति । 'रञ्ज रागे' । असाङ्क्षीदिति । 'षञ्ज सङ्गे' । ननु चाङ्गस्य योऽच् तस्य सिचि परतो वृद्धिरुच्यते, न चात्राङ्गसम्बन्धिनोऽचोऽनन्तरः परः सिच् सम्भवति यस्यानेन वृद्धिर्विधीयते । तथा ह्यकारान्तस्याङ्गस्य तावद् 'अतो लोपः' इति लोपेन भवितव्यम् । न च वचनादतो लोपं वृद्धिर्बाधिष्यत इति शक्यते वक्तुम्; यदि ह्यकारान्तस्यैव वृद्धिः स्यात् प्रत्याहारग्रहणमनर्थकं स्यात्, 'अतः' इत्येवं ब्रूयात् । अथ वा—तदपि न ब्रूयात्, पूर्वसूत्रात् 'अतः' इत्यनुवर्त्तयिष्यते । तस्मादकारान्तस्य तावदङ्गस्य सम्बन्धी योऽच् ततोऽनन्तरः सिज्न सम्भवति । आकारान्तस्य तु कामं सम्भवति यावाप्रभृतेः । न तु तस्यास्ति विशेषः सत्यां वा वृद्धावसत्यां वा । इगन्तस्य पुनः 'सिचि वृद्धिः' इत्यादिनैव वृद्धिर्विहिता । सन्ध्यक्षराणां च नास्त्येव; 'आदेच उपदेशेऽशिति' इत्यात्वविधानात् । उदवोढाम्, उदवोढमित्यत्रास्तीति चेत् ? न; ढलोपस्यासिद्धत्वात् । तदयं न क्वचिदचोऽन्तरः परस्मैपदपरः सिच् सम्भवति, उच्यते चेदं वचनम्; ततो

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


वचनप्रामाण्यादित्येकेन वर्णेन व्यवधाने स्यात्, अनेकेन हला न स्यात् ।

उदवोढाम्, उदवोढमित्यत्र वहेः सिचि ढत्वसलोपादीनाम् 'पूर्वत्रासिद्धम्' इत्यसिद्धत्वात्पूर्वं हलन्तलक्षणा वृद्धिः क्रियते, पश्चाद् ढलोपनिमित्तमोत्त्वम् । तत्र कृते पुनर्वृद्धिर्न भवति; कृतत्वात् ।

पदमञ्जरी

यदा वृद्धिभागजेव सिच्परत्वेन विशेष्यते, तदा वेदितव्यम् । अङ्गे तु विशेष्यमाणे सर्वत्र सिध्यति । न चैवमचकासीदित्यादिष्वनेकाच्सु पूर्वस्याप्यचो वृद्धिप्रसङ्गः; 'नेटि' इति प्रतिषेधात् । न चानेकाजनिडस्ति । न चापाक्षीदित्यादावटः प्रसङ्गः; किं कारणम् ? लुङि यदङ्गं सिजन्तं तद्भक्तोऽडागमस्तद्ग्रहणेनैव गृह्यते न तु सिचि यदङ्गं तद्ग्रहणेन । यत्रापि सिचो लुक् क्रियते—अदात्, अधात् इति, तत्र सिच्परत्वाभावाद् वृद्धेरप्रसङ्गः ।

*उदवोढामिति* । वहेर्लुङ्, तसस्ताम्, सिच्, वह्+स्तामिति स्थिते—वृद्धिश्च प्राप्नोति ढत्वादीनि च, आदिपदेन 'झलो झलि' इति सिचो लोपः, 'झषस्तथोर्धोऽधः' इति धत्वं ष्टुत्वं ढलोप-इत्येतेषां ग्रहणम् । तत्र ढत्वादीनामसिद्धत्वात्पूर्वं वृद्धिः क्रियते, पश्चात् ढलोपनिमित्तमोत्त्वम् । अथ तस्य पुनर्वृद्धिः कस्मान्न भवति ? तत्राह—*तत्र कृत इति* । *कृतत्वादिति* । यद्यप्योकारस्य न कृता वृद्धिः, तथापि प्रयोगेऽस्मिन् कृतेति भावः ।

न्यासः

येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्याद् यथाऽपाक्षीदित्यादौ वृद्धिर्भवति, तथाऽराङ्क्षीदित्यादावपि वृद्धिर्भविष्यति, ततो नार्थो हल्ग्रहणेन ? इत्यत आह—अन्यथा हीत्यादि । एकेन वर्णेन सर्वत्र व्यवधानमस्ति । हल्समुदायेन क्वचिदेवाराङ्क्षीदित्यादौ । अपाक्षीदित्यादौ नास्ति, तत्रासति हल्ग्रहणेऽनन्तरोक्तया नीत्या यत्रैकेन वर्णेन व्यवधानमस्ति—अपाक्षीदित्यादौ, तत्रैव स्यात्, यत्र त्वनेकवर्णेन व्यवधानमस्ति—अराङ्क्षीदित्यादौ, तत्र न स्यात्, यथाऽपिपठिषीदित्यादौ आद्ययोरचोर्व्यवधानान्न भवति । हल्ग्रहणे तु सति हल्समुदायेन व्यवधानेऽपि भवति; हल्ग्रहणसामर्थ्यात् ।

उदवोढाम्, उदवोढमित्यत्र वहेर्वृद्धिः कस्मान्न भवति, ढलोपे कृतेऽहलन्तादिति चेत् ? न; ढलोपस्यासिद्धत्वादिति यश्चोदयेत्, तं प्रत्याह--क्रियत एवात्र वृद्धिः । तस्यास्त्वोत्त्वं विधीयत इति दर्शयितुमाह—उदवोढामित्यादि । आदिशब्देन धत्वादयो गृह्यन्ते । वहेरुत्पूर्वाल्लुङ्, तस्थसौ, तयोः 'तस्थस्थमिपाम्' इत्यादिना तान्तमादेशौ यथाक्रमम्, हलन्तलक्षणा वृद्धिः, 'हो ढः' इति ढत्वम्, 'झलो झलि' इति सिचो लोपः, 'झषस्तथोर्धोऽधः' इति धत्वम्, 'ष्टुना ष्टुः' इति ष्टुत्वम्, 'सहिवहोरोदवर्णस्य' इत्योत्त्वम् । तत्र ह्योत्त्वे पुनर्वृद्धिः कस्मान्न भवति ? इत्याह—तत्र कृते पुनरित्यादि ।


CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


यत्र त्वकृता वृद्धिः, ओकारस्यैव तत्र भवति—सोढामित्रस्यापत्यं सौढामित्रिरिति ॥

नेटि ॥ ४ ॥

इडादौ सिचि हलन्तस्याङ्गस्य वृद्धिर्न भवति । अदेवीत् । असेवीत् । अकोषीत् । अमोषीत् ।

'हलन्तस्य' इत्येत्र—अलावीत् ।

नन्वत्रैतदप्यन्तरङ्गत्वाद् गुणावादेशयोः कृतयोर्हलन्तं भवति ? नैतदेवम्; 'अन्तरङ्गमपि गुणं वचनारम्भसामर्थ्यात्सिचि वृद्धिबाधते' इत्युक्तम् ॥

पदमञ्जरी

*यत्र त्विति* । न ह्योकारत्वनिबन्धनो वृद्धेरभावः, किन्तु कृतत्वनिबन्धन इति भावः । सोढा अभिभूता अमित्रा येन स सोढामित्रः ॥

*नेटि* ॥ उदाहरणेषु—'दिवु क्रीडादौ', 'सिवु तन्तुसन्ताने', 'कुष निष्कर्षे', 'मुष स्तेये' इति धातवः ।

*ननु चेत्यादि* चोद्यम । *नैतदेवमित्यादि* परिहारः । उभयमप्येतत् सिचिवृद्धिसूत्रे व्याख्यातम् ॥

न्यासः

एकं ह्यत्र वृद्धिशास्त्रम्, तेन च प्रागेव कृता वृद्धिरिति कृतकार्यत्वाद् वृद्धिशास्त्रस्य, पुनस्तन्न व्याप्रियत इति न भवति पुनर्वृद्धिः ।

सौढामित्रिरित्यत्र तर्हि कथमोत्त्वे कृते वृद्धिर्भवति ? इत्याह—यत्र त्वित्यादि । यत्र प्राग्वृद्धिः कृता तत्र कृतार्थत्वाद् वृद्धिशास्त्रस्य पुनर्न व्याप्रियत इति न भवति वृद्धिः, सोढामित्रिरित्यत्र तु न कृता वृद्धिः । तस्मादकृतार्थत्वाद् वृद्धिशास्त्रं व्याप्रियत इति भवत्येव वृद्धिः । सा च भवन्त्योकारस्य भवति, नाकारस्य वृद्धिरिति; वृद्धिविधानकाल ओकारस्यैव वृद्धिभाजः सन्निहितत्वात् । सहेर्निष्ठा, तत्र ढत्वादिषु कृतेषु सोढ इति भवति, सोढोऽमित्रोऽनेनेति सोढामित्रः, तस्यापत्यमिति 'अत इञ्', 'तद्धितेष्वचामादेः' इति वृद्धिः । 'येन विधिस्तदन्तस्य' इत्येव सिद्धे तदन्तत्वेऽन्तग्रहणमसन्देहार्थम् । 'हलोऽचः' इत्युच्यमाने सन्देहः स्यात्—किमजन्तस्याङ्गस्य हलो वृद्धिर्भवति ? उत हलन्तस्याच इति ? ॥

नेटि ॥ हलन्तस्याच इति या वृद्धिः प्राप्ता सा हलन्तलक्षणा वृद्धिरनेन प्रतिषिध्यते 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति कृत्वा । अदेवीत्, असेवीदिति । 'दिवु क्रीडादौ', 'सिवु तन्तुसन्ताने' । वृद्धौ प्रतिषिद्धायाम् 'पुगन्तलघूपधस्य' इति गुणः । अकोषीदामोषीदिति । 'कुष निष्कर्षे, 'मुष स्तेये' । नन्वत्रैतदन्तरङ्गत्वादिति चोद्यम् । नैतदेवमिति परिहारः । उभयं चैतद् गतार्थम् ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


## ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् ॥ ५ ॥

हकारान्तानां मकारान्तानां यकारान्तानामङ्गानाम्, क्षण, श्वस, जागृ, णि, श्वि–इत्येतेषामेदितां च इडादौ सिचि परस्मैपदे परतो वृद्धिर्न भवति । ग्रह–अग्रहीत् । स्यम्–अस्यमीत् । व्यय–अव्ययीत् । टुवम्–अवमीत् । क्षण–अक्षणीत् । श्वस्–अश्वसीत् । जागृ–अजागरीत् । णि–औनयीत्, ऐलयीत् । श्वि–अश्वयीत् । एदिताम्–रगे, अरगीत् । कखे–अकखीत् ।

ह्म्यन्तक्षणश्वसामेदितां च 'अतो ह्लादेर्लघोः' इति विकल्पे प्राप्ते प्रतिषेधः । जागृ-णि-श्वीनां तु सिचि वृद्धिः प्राप्ता, सा च 'नेटि' इति न प्रतिषिध्यते । न च अन्तरङ्गत्वादत्र पूर्वं गुणो भवति; सिचि वृद्धेरनवकाशत्वात् ।

### पदमञ्जरी

ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् ॥ उदाहरणेषु 'ग्रह उपादने', 'स्यमु स्वन ध्वन शब्दे', 'टुवम उद्गिरणे', 'व्यय वित्तसमुत्सर्गे', 'क्षणु हिंसायाम्', 'श्वस प्राणने', 'जागृ निद्राक्षये'; 'ऊन परिहाणे' 'इल प्रेरणे' चुरादी, 'टुओश्वि गतिवृद्ध्योः', 'रगे लगे सगे संवरणे', 'कखे खगे कगे हसने' इति धातवः । ऊनयत्येलयत्योर्नोनयतिध्वनयतीति चङः प्रतिषेधः ।

### न्यासः

ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् ॥ अग्रहीदिति । 'ग्रह उपादाने' । अस्यमीदिति । 'स्यमु स्वन ध्वन शब्दे' । अवमीदिति । 'टुवम उद्गिरणे' । अव्ययीदिति । 'व्यय वित्तसमुत्सर्गे' । अक्षणीदिति । 'क्षणु हिंसायाम्' । अश्वसीदिति । 'श्वस प्राणने' । अजागरीदिति । 'जागृ निद्राक्षये' । औनयीत्, ऐलयीदिति । 'ऊन परिहाणे', 'ईल प्रेरणे', चुरादिणिच् । 'नोनयति' इत्यादिना चङि प्रतिषिद्धे सिजेव भवति, 'आडजादीनाम्' इत्याट्, 'आटश्च' इति वृद्धिः । अश्वयीदिति । 'टुओश्वि गतिवृद्ध्योः' । अरगीत्, अलगीदिति । 'रगे लगे सङ्गे' । अस्थगीदिति । 'स्थगे संवरणे' । अकखीदिति । 'कखे हसने' ।

सा च नेटीति न प्रतिषिध्यत इति । अनन्तराया हलन्तलक्षणाया वृद्धेः प्रतिषेधः, न पूर्वस्याः । अथ किमर्थं णिश्विग्रहणम्, यावतान्तरङ्गत्वादेवात्र गुणेन भवितव्यम्, कृते गुणेऽयादेशेन, ततश्च यकारान्तत्वादेव तयोः प्रतिषेधो भविष्यति ? इत्याह—न चेत्यादि । इदमन्तरङ्गत्वं सिच्यभ्युपेत्योक्तम् । इदानीमन्तरङ्गत्वमेव सिचि नास्तीति

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



यदि पूर्वं गुणः स्यात्, इह णिश्विग्रहणमनर्थकं स्यात्; गुणायादेशयोः कृतयोर्यकारान्तत्वादेव प्रतिषेधस्य सिद्धत्वात् । तस्मादिदमेव णिश्विग्रहणं ज्ञापकम्—न सिच्यन्तरङ्गमस्तीति ।

अथ जागृग्रहणं किमर्थम्, 'जाग्रोऽविचिण्णल्ङित्सु' इति जागर्त्तेर्गुणो वृद्धेरपवादो विधीयते, स यथा 'अचो ञ्णिति' इति वृद्धिं बाधते, तथा सिचिवृद्धिमपि बाधिष्यते ? नैतदस्ति; कृते गुणे 'अतो ल्रान्तस्य' इति या वृद्धिः प्राप्नोति सा प्रतिषिध्यते ।

अथ गुणविधानसामर्थ्यादुत्तरकालभाविन्यपि वृद्धिर्बाध्यते, यथा जागरयतीत्यत्र 'अत उपधायाः' इत्यपि वृद्धिर्न भवति, तथा चिण्णलोः

### पदमञ्जरी

*यदि च पूर्वं गुणः स्यादित्यादि* । एतदपि सिचिवृद्धिसूत्र एव व्याख्यातम् । *अथ जागृग्रहणं किमर्थमिति* । येन पृष्टं स एव यथैतन्न कर्त्तव्यं तथा दर्शयति—*जाग्रोऽविचिण्णल्ङित्स्विति* । *कृते गुणे इत्यादि* । 'अङ्गवृत्ते पुनर्वृत्तावविधिः' इत्येतत नाश्रितम्; निष्ठितत्वस्य दुर्ज्ञानत्वात् । *अथ त्विति* । अन्यथा वृद्धिविषये गुणविधानमनर्थकं स्यादिति भावः । *तथा चेति* । चिण्णलोः प्रतिषेधेन उत्तरकालभाविवृद्धिमात्रं न भवतीति सामान्येन ज्ञाप्यते, न तूपधालक्षणवृद्धिर्न भवतीत्येवं

### न्यासः

दर्शयितुमाह—यदीत्यादि । किं कारणं णिश्विग्रहणमनर्थकं स्यात् ? इत्यत आह—गुणायादेशयोरिति । यदि तर्हि सिच्यन्तरङ्गत्वं नास्ति, यदुक्तम् 'अन्तरङ्गमपि गुणमेषा वृद्धिर्वचनाद् बाधते' इति तद्विरुध्यते ? नास्ति विरोधः, अध्यारोप्य तथाभिधानात् ।

**अथेत्यादि** । अत्र वक्ष्यमाणोऽभिप्रायः । अथ जागृग्रहणं किमर्थमिति पृष्टस्य किं कारणं जागृग्रहणं न कर्त्तव्यमिति प्रश्नावसरे येनाभिप्रायेण पृष्टवांस्तमाविष्कर्तुमाह—जाग्रोऽविचिण्णित्यादि । यथा जागरयतीत्यादौ 'अचो ञ्णिति' इति प्राप्तां वृद्धिं जागर्त्तेर्गुणो बाधते तथा सिचिवृद्धिमपि बाधिष्यते, वृद्ध्यपवादत्वाद् गुणशास्त्रस्य । **गुणे कृत इत्यादि** । अकृते हि गुणे या सिचि वृद्धिः प्राप्नोति सापवादत्वाद् गुणेन बाध्यते; अकृतार्थत्वाद् गुणशास्त्रस्य । न च सानेन वचनेन बाधिष्यते, किं तर्हि ? गुणे कृते रपरत्वे च 'अतो ल्रान्तस्य' इत्युत्तरकालं या वृद्धिः प्राप्नोति तस्याः प्रतिषेधो विधीयते, न च शक्या गुणेन बाधितुं सा । न हि 'जाग्रोऽविचिण्णल्ङित्सु' इति शास्त्रं पुनः प्रवर्त्तितुमुत्सहते; कृतार्थत्वात् । न चान्यद् गुणलक्षणमस्त्युत्तरकालवृद्धेर्बाधकम् । तत्र यदि जागृग्रहणं न क्रियते, 'अतो ल्रान्तस्य' इति वृद्धिः स्यात् ।

**अथेत्यादि** चोदकः । यदि गुणेऽपि कृते पुनर्वृद्धिः स्याद्, वृद्धिविषये गुणविधानमनर्थकं स्यात् । तस्मात् गुणविधानसामर्थ्याद् यापि गुणे कृते रपरत्वे च पश्चाद् 'अतो

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रतिषेधोऽर्थवान्भवति इति शक्यमिह जागृग्रहणमकर्त्तुम् ? तत्तु क्रियते विस्पष्टार्थम् ॥

## ऊर्णोतेर्विभाषा ॥ ६ ॥

ऊर्णोतेरिडादौ सिचि परस्मैपदपरे परतो विभाषा वृद्धिर्न भवति । प्रौर्णवीत्, प्रौर्णावीत् । 'विभाषोर्णोः' इत्यङित्त्वपक्षे वृद्धिविकल्पोऽयम् । ङित्त्वपक्षे तु गुणवृद्ध्योरभावे उवङ् भवति–प्रौर्णुवीत् ॥

## अतो हलादेर्लघोः ॥ ७ ॥

हलादेरङ्गस्य लघोरकारस्य इडादौ सिचि परस्मैपदपरे परतो विभाषा वृद्धिर्न भवति । अकणीत्, अकाणीत् । अरणीत्, अराणीत् ।

### पदमञ्जरी

विशेषेणेति भावः । जागृग्रहणे सति चायं सूत्राणां प्राप्तिक्रमः, जागृ + इस् + ईत् इति स्थिते पूर्वं यण् प्राप्तः, तमपवादत्वात् 'सार्वधातुकार्धधातुकयोः' इति गुणो बाधते, तमपि सिचि वृद्धिः, तामपि जागर्तिगुणः, तत्र कृते हलन्तलक्षणा वृद्धिः, तस्याः 'नेटि' इति प्रतिषेधः, ततः 'अतो हलादेर्लघोः' इति विकल्पः, ततः 'अतो ल्रान्तस्य' इति नित्या वृद्धिः, ततोऽयं प्रतिषेध इति । आह च—

'गुणो वृद्धिर्गुणो वृद्धिः प्रतिषेधो विकल्पनम् ।
पुनर्वृद्धिर्निषेधोऽतो यण्पूर्वाः प्राप्तयो नव' ॥

### न्यासः

ल्रान्तस्य' इति वृद्धिः प्राप्नोति सा प्रतिषिध्यते, यथा–जागरयतीत्यत्र । गुणे कृते रपरत्वे च या प्राप्नोति 'अत उपधायाः' इत्युत्तरकालभाविनी वृद्धिः, सापि न भवति; गुणेन बाधितत्वात् । तथा चेत्यादि । गुणविधानसामर्थ्यादुत्तरकालभाविन्यपि वृद्धिर्गुणेन बाध्यत इति, तदेव द्रढयति । एवञ्च चिण्णलोः प्रतिषेधोऽर्थवान् भवति यद्युत्तरकालभाविन्यपि वृद्धिर्बाध्यते; अन्यथा हि गुणे कृते रपरत्वे च 'अत उपधायाः' इति वृद्ध्या भवितव्यम् । चिण्णलोर्यः प्रतिषेधः क्रियते सोऽनर्थकः स्यात् । तस्मादुत्तरकालभाविन्यपि वृद्धिर्गुणेन बाध्यत इति स्थितमेतत् । ततश्च शक्यमेव जागृग्रहणमकर्त्तुम् । एवं प्रत्याख्याते जागृग्रहणे, इतर आह–तत् क्रियत इत्यादि । य एवं प्रतिपत्तुं न शक्तः, तं प्रति विस्पष्टार्थं जागृग्रहणं क्रियते ॥

ऊर्णोतेर्विभाषा ॥ नित्यं वृद्धिप्रसङ्गे प्राप्ते विकल्पार्थं वचनम् ॥

अतो हलादेर्लघोः ॥ 'नेटि' इति प्रतिषेधे प्राप्ते विकल्पार्थमिदमारभ्यते । अकणीत् अकाणीदिति । 'अण रण वण कण भण क्वण' इति भ्वादौ पठ्यते । अरणीत्, अराणीदिति । रणिरपि तत्रैव ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अत इति किम् ? अदेवीत् । असेवीत् ।

न्यकुटीत्, न्यपुटीत्—इत्यत्र 'अतः' इत्यस्मिन्नसति स्थानिनिर्देशार्थम् 'अचः' इत्येतदनुवर्तयितव्यम् । तत्र अज्लक्षणा वृद्धिरिग्लक्षणा न भवतीति 'क्ङिति च' इति प्रतिषेधो न स्यात् ।

हलादेरिति किम् ? मा भवानशीत् । मा भवानटीत् । लघोरिति किम् ? अतक्षीत् । अक्षरीत् ।

अथेह कस्मान्न भवति—अचकासीदिति ? येन नाव्यवधानं तेन

**पदमञ्जरी**

*अतो हलादेर्लघोः* ॥ *न्युकुटीत्, न्यपुटीदिति* । 'कुट कौटिल्ये', 'पुट संश्लेषणे' । नन्वत्र कुटादित्वान्ङित्त्वे सति 'क्ङिति च' इति प्रतिषेधादेव वृद्धिर्न भविष्यति, किमत्र 'अतः' इत्यनेन ? तत्राह—*अत इत्येतस्मिन्नसतीति* । *अतक्षीत्, अरक्षीदिति* । 'तक्षू त्वक्षू तनूकरणे', रक्ष पालने', सिच्परत्वेनाङ्गस्य विशेषणादत्र प्रसङ्गः ।

*अथेह कस्मान्न भवतीति* । यदि सिच्परत्वेनाङ्गं विशेष्यते, ततोऽत्रापि प्रसङ्ग इति प्रश्नः । 'सिच्परत्वेनाको विशेष्यते' इत्याश्रित्योत्तरम् । *येन नाव्यवधानमिति वचनप्रामाण्यादिति* । अपिपठिषीदित्यादावनन्तरस्याकारस्यातो लोपेन भवित-

**न्यासः**

न्यकुटीदिति । 'कुट कौटिल्ये' । न्यपुटीदिति । 'पुट संश्लेषणे' । ननु चात्र कुटादित्वान्ङित्त्वे सति 'क्ङिति च' इति प्रतिषेधो भविष्यति, ततो नैतत्तन्निवृत्त्यर्थम् 'अतः' इत्येतत् कर्त्तव्यम् ? इत्यत आह—अत इत्येतस्मिन्नसतीत्यादि । यदि 'अतः' इति नोच्येत, ततोऽवश्यम् 'वदव्रजहलन्तस्याचः' इत्यनुवर्तयितव्यम्; अन्यथा ह्यनिर्दिष्टस्थानिकत्वादिक एव लघोर्विकल्पेन वृद्धिः स्यात्–अदेवीदित्यादौ, अकाणीदित्यादौ त्वकारस्य न स्यात् । अज्ग्रहणानुवृत्तौ तु सत्यामज्लक्षणेयं वृद्धिः स्यात्, नेग्लक्षणा; निर्दिष्टस्थानिकत्वात् । यत्र हि स्थानी न निर्दिश्यते स इग्लक्षणाया वृद्धेर्विषयः, न तु यत्र स्थानी निर्दिश्यते सोऽपि, ततश्च 'क्ङिति च' इति प्रतिषेधो न स्यात्; तत्र 'इकः' इत्यधिकारात् । तस्मान्न्यकुटीत्, न्यपुटीदित्यत्र विकल्पेन वृद्धिर्मा भूदित्येवमर्थमत इति वक्तव्यम् ।

अतक्षीद्, अरक्षीदिति । 'तक्षू त्वक्षू तनूकरणे', 'रक्ष पालने' । इह सिच आनन्तर्येऽकारस्य वृद्धिरुच्यते, न क्वचिदन्तरः सिच् सम्भवति । तत्र येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादिति व्यवधानेऽपि वृद्ध्या भवितव्यम् ।

एवं यथा अकाणीदित्यत्र लघोरकारस्य भवति, तथा अचकासीदित्यत्रापि लघोरकारस्य वृद्ध्या भवितव्यमेव ? इत्यनेनाभिप्रायेणाह—अथेह कस्मान्न भवत्यचकासीदिति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



व्यवहितेऽपि वचनप्रामाण्यादिति हला व्यवधानमाश्रितम्, न पुनरचापि व्यवधानमिति वृद्धिर्न भवति।

अथ पुनरेकेन वर्णेन व्यवधानमाश्रीयते, न पुनरनेकेन—इति कल्पने 'शक्यमकर्तुम् 'लघोः' इति, अतक्षीदित्यत्रानेकेन व्यवधानमिति, न भविष्यति ? तत्क्रियते विस्पष्टार्थम्।

इटीत्येव—अपाक्षीत्॥

## नेड्वशि कृति॥ ८॥

वशादौ कृति प्रत्यये परत इडागमो न भवति। वरमनादौ प्रयो-

पदमञ्जरी

व्यम्। ननु चोभयोरप्यनित्ययोः परत्वाद्वृद्धिः प्राप्नोति ? अस्तु वृद्धिः, 'आतो लोप इटि च' इत्याकारलोपो भविष्यति ? न भविष्यति; परत्वात्सगिटौ स्याताम् ? एवं तर्हि 'ण्यल्लोपावियङ्युवङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषिद्धौ' इत्यतो लोपो भविष्यति, यथा—चिकीर्षक इत्यत्र। युक्तं तत्र; 'अचो ञ्णिति' इति वृद्धिरन्यत्र चरितार्था, इयं तु सिच्यन्तरस्यातो विधीयमाना निरवकाशा ? एवं तर्हि 'हलन्तस्य' इत्यनुवृत्तेरनन्तरोऽकारो न सम्भवतीत्येतत्सामर्थ्यम्।

*अथ त्विति*। व्यवधानेन भवितव्यमिति स्थिते हला व्यवधानमिति कल्पनायां लघुग्रहणं कर्त्तव्यम्, एकेन वर्णेनेति तु कल्पनायां न कर्तव्यमित्यर्थः॥

*नेड्वशि कृति॥ वशि कृतीति* सप्तमीनिर्देशस्तदादिविध्यर्थः, तस्य च वयं पुरस्तात्करणस्य प्रयोजनं क्रादिसूत्रे वक्ष्यामः। ईशितेत्यादेरुपन्यासः 'प्रकृत्याश्रयः

न्यासः

'चकासृ दीप्तौ'। येनेत्यादि परीहारः। हला व्यवधानमाश्रितमिति। हलन्तस्येत्यनुवृत्तेरित्यभिप्रायः।

लघोरिति किमिति येनैवं पृष्टम्, स एवं लघुग्रहणं प्रत्याचिख्यासुराह—अथ पुनरित्यादि। यद्येवं परिकल्प्यते, वचनप्रामाण्याद् हला व्यवधानमाश्रीयते, न त्वचा, 'अतो लघोः' इति वक्तव्यम्, अन्यथा ह्यतक्षीदित्यादावपि स्यात् ? अत्र हि हला व्यवधानम्, नाचा। अथ पुनरिदं परिकल्प्यते—येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादित्येकेन वर्णेन व्यवधानमाश्रीयते, न पुनरनेकेनेति नार्थो लघोरित्यनेनेति, न ह्येवं परिकल्प्यमानेऽतक्षीदित्यादौ प्राप्नोति यद्यनेकेन वर्णेन व्यवधानम् ? इत्यत आह—तत् क्रियत इत्यादि॥

नेड् वशि कृति॥ 'आर्धधातुकस्येड् वलादेः' इतीटं वक्ष्यति, तस्य यत्र प्रकृतिलक्षणः प्रतिषेधो नास्ति तत्रानेन प्रतिषेधः क्रियते। पुरस्तात् प्रतिषेधकाण्डस्य प्रयोजनं

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



जनम् । ईशिता, ईशितुम्—ईश्वरः । दीपिता, दीपितुम्—दीप्रः । भसिता, भसितुम्—भस्म । याचिता, याचितुम्—याच्ञा ।

वरमनादौ इत्युदाहरणप्रदर्शनार्थम्, न परिगणनम् । तेन 'ञम-न्ताण्डुः' इत्येवमादावपि हि प्रतिषेधो भवति । अथ तत्र 'उणादयो बहुलम्' इति समाधीयते ? सम्भवोदाहरणप्रदर्शनमेतत् ।

कृतीति किम् ? रुरुदिव । रुरुदिम ॥

पदमञ्जरी

प्रतिषेधो न सिध्यति' इति प्रदर्शनार्थः । *ईश्वर इति* । 'स्थेशभास' इत्यादिना वरच् । *दीप्रमिति* । 'नमिकम्पि' इत्यादिना रः । *भस्मेति* । 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन् । औणादिके त्वव्युत्पत्तिपक्षाश्रयणेनापि सिद्धम् । *याच्ञेति* । 'यज-याच' इत्यादिना नङ् ।

*सम्भवोदाहरणप्रदर्शनमिति* । एतावन्त्युदाहरणानि सम्भवन्तीति प्रदर्शनार्थमि-त्यर्थः । *रुदिव, रुदिम इति* । असति कृद्ग्रहणे 'रुदादिभ्यः सार्वधातुके' इत्य-स्यापि इटोऽत्र प्रतिषेधः स्यात्, तस्य त्ववशादिस्वकाशः—रोदितीति । क्वचिद् *रुरुदिव, रुरुदिमेति* लिटि पठ्यते, तदयुक्तम्; क्रादिनियमादेवेटः सिद्धत्वात् ॥

न्यासः

क्रादिनियमसूत्रे वक्ष्यति । ईशितेत्यादि प्रत्ययान्तरे त्विटो भावेन 'एकाच उपदेशेऽनु-दात्तात्' इति यः प्रकृतिनिमित्तकः प्रतिषेधस्तदभावमेवाचष्टे । ईश्वर इति । 'ईश ऐश्वर्ये', 'स्थेशभास' इत्यादिना वरच् । दीप्र इति । 'दीपी दीप्तौ', 'नमिकम्पि' इत्यादिना रः । भस्मेति । 'भस भर्त्सनदीप्त्योः । 'आतो मनिन्क्वनिब्वनिपश्च' इत्यादौ 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन् । याच्ञेति । 'टु याचृ याच्ञायाम्' । 'यजयाच' इत्यादिना नङ् ।

'वरमनादौ प्रयोजनम्' इति यदुक्तम्, तत्र परिगणनत्वमवधार्य य एवं चोदयेद्— यदि वरमनादाविति परिगणनं क्रियते तदा 'षणु दाने', 'ञमन्ताड्डः'—षण्डः, शमेः खः'—शङ्ख इत्यादौ प्रतिषेधो न प्राप्नोतीति—तं प्रति नेदं परिगणनमिति दर्शयितुमाह— वरमनादावित्युदाहरणमिति । अथ तत्रेत्यादि । तत्रौणादिके डप्रत्यये समाधीयेतेति परिगणनपक्षभावि चोद्यं परिह्रियत इत्यर्थः । सम्भवोदाहरणप्रदर्शनार्थमेतदिति । अत्रापि न परिगणनमेतदिति सम्बध्यते । प्रतिषेधस्य सम्भव उदाह्रियते । यत्र कृति प्रतिषेधः सम्भवति तस्य प्रदर्शनार्थमेतदुक्तं भवति । यत्र वशादौ कृतीट्प्रतिषेधः सम्भवति, तस्य प्रदर्शनार्थं वरमनादावित्युक्तम्, न पुनरेतत् परिगणनमिति । रुरुदिव, रुरुदिमेति । अत्र कृद्ग्रहणादार्धधातुकस्येटो न भवति प्रतिषेधः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तितुत्रतथसिसुसरकसेषु च ॥ ९ ॥

ति, तु, त्र, त, थ, सि, सु, सर, क, स—इत्येतेषु कृत्सु इडागमो न भवति । 'ति' इति—क्तिन्क्तिचोः सामान्यग्रहणम् ।

क्तिच्—तनिता, तनितुम्—तन्तिः । क्तिन्—दीपिता, दीपितुम्—दीप्तिः ।

तु—'सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्', सचिता, सचितुम्—सक्तुः ।

त्र—'दाम्नीशसयुयुज' इति ष्ट्रन्, पतिता, पतितुम्—पत्त्रम्=वाहनम् । उणादिष्वपि 'सर्वधातुभ्यः ष्ट्रन्', तनिता, तनितुम्—तन्त्रम् ।

त—'हसिमृगृण्वमिदमितमिलूपूधुर्विभ्यस्तन्', हसिता, हसितुम्—हस्तः । लविता, लवितुम्—लोतः । पविता, पवितुम्—पोतः । धूर्विता, धूर्वितुम्—धूर्तः । औणादिकस्यैव तशब्दस्य ग्रहणमिष्यते, न पुनः क्तस्य; हसितमित्येव हि तत्र भवति ।

पदमञ्जरी

*तितुत्रतथसिसुसरकसेषु च ॥ क्तिन्क्तिचोः सामान्येन ग्रहणमिति ।* रोदितीत्यस्य तिप एकानुबन्धकस्याप्यग्रहणम् ; 'कृति' इत्यनुवृत्तेः ।

*दीप्तिरिति ।* 'क्तिन्नाबादिभ्यश्च' इति क्तिन् ।

*औणादिकस्यैवेति ।* एतच्च भूयोभिरौणादिकैः साहचर्याल्लभ्यते ।

न्यासः

तितुत्रतथसिसुसरकसेषु च ॥ अवशार्थोऽयमारम्भः । तन्तिरिति । 'तनु विस्तारे', 'क्तिच्क्तौ च संज्ञायाम्' इति क्तिच् । 'अनुदात्तोपदेशवनतितनोति' इत्यादिनाऽनुनासिकलोपः प्राप्नोति, 'अनुनासिकस्य क्विझलोः क्ङिति' इति दीर्घश्च, तदुभयमपि 'न क्तिचि दीर्घश्च' इति प्रतिषेधान्न भवति ।

दीप्तिरिति । 'क्तिन्नाबादिभ्यश्च' इति क्तिन् । रोदिति, स्वपितीत्यत्र प्रतिषेधो न भवति; कृतीत्यनुवृत्तेः ।

सक्तुरिति । 'षच समवाये' ।

पत्त्रमिति । 'पत्लृ गतौ' । तन्त्रमिति । 'तनु विस्तारे' ।

हस्त इति । 'हस हसने' । लोत इति । 'लूञ् छेदने' ।

औणादिकस्येत्यादि । 'ऊर्णोतेर्विभाषा' इत्यतो विभाषाग्रहणमनुवर्त्तते, सा च व्यवस्थितविभाषा । तेनौणादिक एव तशब्दे प्रतिषेधेन भवितव्यम्, नान्यत्र । यत्र

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



थ–'हनिकुषिनीरमिकाशिभ्यः क्थन्', कोषिता, कोषितुम्, कुष्ठम् । काशिता, काशितुम्–काष्ठम् ।

सि–'प्लुषिशुषिकुषिभ्यः क्सिः', कोषिता, कोषितुम्–कुक्षिः । 'सुक् च इषेः', एषिता, एषितुम्–इक्षुः ।

सर–'अशेः क्सरन्', अशिता, अशितुम्–अक्षरम् ।

क–'इण्भीकापाशल्यतिमर्चिभ्य कन्', शलिता, शलितुम्–शल्कः ।

स–'वृतृवदिहनिक्रमिकषियुमुचिभ्य.सः', वदिता, वदितुम्–वत्सः ।

❀ तितुत्रतथेष्वग्रहादीनामिति वक्तव्यम् ❀ । ग्रहादयो ग्रहप्रकाराः, येषामिट् क्तिनि दृश्यते । निगृहीतिः । उपस्निहितिः । निकुचितिः । निपठितिः ।

पदमञ्जरी

*तितुत्रेष्विति* । अस्मिन् सूत्र इत्यर्थः । *अग्रहादीनामिति* । ग्रहादिव्यतिरिक्तानां धातूनां सम्बन्धिषु तितुत्रादिषु प्रतिषेध इत्यर्थः । आदिशब्दः प्रकार इत्याह—*ग्रहप्रकारा इति* । कः पुनः प्रकारः ? इत्याह—*येषामिति* । *निकुचिति-*

न्यासः

प्रतिषेधेन भवितव्यं तस्यैव ग्रहणं युक्तमित्यौणादिक-तशब्दस्य ग्रहणमिष्यते, न तु क्तस्य । तेन हसितमित्यत्रेडागमो भवत्येव ।

कुष्ठमिति । 'कुष निष्कर्षे' । काष्ठमिति । 'काश्ट दाप्तौ' । शकारस्य व्रश्चादिसूत्रेण षत्वम्, 'ष्टुना ष्टुः' इति ष्टुत्वम् ।

कुक्षिरिति । कुषेः 'षढोः कः सि' इति कत्वम्, 'इण्कोः' इति षत्वम् ।

इक्षुरिति । 'इषु इच्छायाम्' । पूर्ववत् कत्वषत्वे ।

अक्षरमिति । 'अशू व्याप्तौ', व्रश्चादिसूत्रेण षत्वम्, पूर्ववत् कत्वम् । शल्कमिति । 'शल गतौ' । वत्स इति । 'वद व्यक्तायां वाचि', चर्त्वम्–तकारः ।

तितुत्रतथेष्वग्रहादीनां वक्तव्यमिति । 'तितुत्रथ' इत्यादिसूत्रमुपलक्षयति । तितुत्रथेत्यादौ ग्रहादीनां प्रतिषेधो न भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेद व्याख्यानम्–इहापि 'विभाषा' इत्यनुवर्त्तते, सा च व्यवस्थितविभाषा, तेन ग्रहादीनां प्रतिषेधो न भवति । ग्रहादयो ग्रहप्रकारा इति । अनेनादिशब्दस्य प्रकारार्थतामाचष्टे । के पुनर्ग्रहप्रकाराः ? इत्याह–येषामित्यादि । निगृहीतिरिति । 'स्त्रियां क्तिन्', 'ग्रहोऽलिटि दीर्घः' इति दीर्घः, ग्रह्यादिना सूत्रेण सम्प्रसारणम् । उपस्निहितिरिति । 'ष्णिह प्रीतौ । निकुचितिरिति । 'कुच सङ्कोचे' ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



'क्तिः' इत्येव—रोदिति । स्वपिति ॥

## एकाच उपदेशेऽनुदात्तात् ॥ १० ॥

उपदेशे य एकाच् धातुरनुदात्तश्च तस्मादिडागमो न भवति । प्रकृत्याश्रयोऽयं प्रतिषेधः ।

### पदमञ्जरी

*रिति* । कुञ्चेः पूर्ववत् क्तिन्, उपधालोपः, 'कुच शब्दकरणे' इत्येतस्माद्वा क्तिन् ॥

*एकाच उपदेशेऽनुदात्तात्* ॥ *अनुदात्तादिति* बहुव्रीहिः—न विद्यते उदात्तो यस्मिन् सोऽयमनुदात्तः । पारिभाषिके त्वनुदात्तेऽज्मात्राणामिणादीनामेव ग्रहणं स्यात्, नाज्झल्समुदायरूपाणां पचिप्रभृतीनाम् । ततश्च तेषामनुदात्तोपदेशोऽनर्थकः स्यात् । अथ वा—अनुदात्तवत्त्वात्समुदाय एवानुदात्त इत्युच्यते, यथा 'अनुदात्तं पदम्' इति । उपदेशः=प्रकृतिपाठः । *अनुदात्तश्चेति* । 'उपदेशे' इत्यपेक्षते । उभयविशेषणं चैतदिष्यते । अन्यतरविशेषणं तु यदि विज्ञायेत—उपदेश एकाचः सम्प्रत्यनुदात्तादिति, इहापि च प्रसज्येत—लविष्यति, पविष्यतीति, भवति ह्येतत् प्रत्ययस्योदात्तत्वे शेषनिघातेन सम्प्रत्यनुदात्तम्; इह च न स्यात्—कर्त्ता, कर्त्तुम्, नित्स्वरेण सम्प्रत्युदात्तत्वात् प्रकृतिपाठे चैषामनुदात्तोपदेशोऽनर्थकः स्यात् । अथ विज्ञायेत—उपदेशेऽनुदात्तादेकाचः श्रूयमाणादिति ? क्रादिसूत्रे नियमो नोपपद्येत; चकृव, चकृमेत्यादौ श्रूयमाणरूपस्यानेकाच्त्वाद्विधिरेव स्यात्, तत्र को दोषः ? बिभिदिव, बिभिदिम अत्रेडागमो न स्यात् । ननु च सम्प्रत्यनेकाच्त्वादत्र प्रतिषेधस्याप्रसङ्गादेवेड् भविष्यति ? इह तर्हि पेचिव, पेचिम, एत्वाभ्यासलोपयोः कृतयोरेकाचः श्रूयमाणादिट्प्रतिषेधः प्राप्नोति । परत्वादिटि कृते एत्वाभ्यासलोपौ भविष्यतः ? नित्यावेत्वाभ्यासलोपौ—कृतेऽपीटि प्राप्नुतोऽकृतेऽपि; इट् पुनरनित्यः—कृतयोस्तयोरेकाचः श्रूयमाणादिति प्रतिषेधात् । एवं तर्हि 'थलि च सेटि' इत्यत्र सेट्ग्रहणं कालावधारणार्थं भविष्यति, कथम् ? तत्र थल्ग्रहणं न कर्त्तव्यम्, सेटीत्येतावता सिद्धम्, 'अत एकहल्मध्ये' इत्यादि सर्वमनुवर्त्तते,

### न्यासः

अत्र त्वौणादिकानां ग्रहणं शक्यमकर्त्तुम्; यथैव हि 'उणादयो बहुलम्' इति बहुलवचनात् 'अमन्ताड्डः' इत्येवमादाविण्न भवति, तथा तेष्वपि न भवितव्यम् ? प्रपञ्चार्थं तेषां ग्रहणं वेदितव्यम् ॥

**एकाच उपदेशेऽनुदात्तात्** ॥ अनुदात्तादिति बहुव्रीहिरयम्—नास्योदात्तोऽस्तीत्यनुदात्तः । अन्वर्थशब्दोऽयमनुदात्तशब्दः । शास्त्रीये ह्यनुदात्ते गृह्यमाण एकवर्णा एव धातवो गृह्येरन् । तथा चान्येषां धातूनामनुदात्तप्रतिज्ञानमनर्थकं स्यात् । इह चेकाज्ग्रहणमुपदेशविशेषणम् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



के पुनरुपदेशेऽनुदात्ताः ? ये तथा गणे पठ्यन्ते, त एव विस्पष्टार्थमनिट्कारिकासु प्रविभक्ताः प्रदर्श्यन्ते—

अनिट्स्वरान्तो भवतीति दृश्यताम्, इमांस्तु सेटः प्रवदन्ति तद्विदः ।
अदन्तमृदन्तमृतां च वृङ्वृञौ श्विडीङिवर्णेष्वथ शीङ्श्रिञावपि ॥

पदमञ्जरी

किद्ग्रहणमेकं निवृत्तम्, न च थलोऽन्यः सेट् किल्लिट् सम्भवति । सोऽयमेवं सिद्धे यत्थल्ग्रहणं करोति तस्यैतत्प्रयोजनम्—किता सह समुच्चयार्थम्, थलि च किति च सेटि एत्वाभ्यासलोपौ भवत इति । तत्र किति पूर्वेणैव सिद्धे कालावधारणार्थमिदं वचनमिति कृते एत्वाभ्यासलोपौ यथा स्याताम्, अकृते मा भूतामिति, यथा—'निष्ठायां सेटि' इत्यत्र । एवमपि विधित्सति, चिच्छित्सतीत्यत्र नित्यत्वाद् द्विर्वचने कृते एकाचः श्रूयमाणादिति प्रतिषेधो न स्यात् ? तस्मादुभयविशेषणमुपदेशग्रहणम्, अत एवेदं मध्ये पठितम् । यद्युभयविशेषणम्, बेभिदिता, चेच्छिदिता—अत्रापि प्राप्नोति ? अल्लोपस्य पूर्वस्मादपि विधौ स्थानिवद्भावान्न भविष्यति । यङ्लुगन्ते तर्हि प्राप्नोति—बेभेदिता, चेच्छिदिता ? 'यत्रैकाज्ग्रहणं किञ्चित्पञ्चैतानि न यङ्लुकि' इति वचनान्न भविष्यति । *के पुनरिति* । पाठे सङ्करसम्भवात्प्रश्नः । 'असङ्करेण पठितव्याः' इत्युत्तरम् । *प्रविभक्ता इति* । स्वरान्तहलन्तककारादिवर्णभेदेनेत्यर्थः । श्लोकेष्वनिड्ग्रहणमनुदात्तोपलक्षणम् । षष्ठीसप्तम्यश्च धातुविषयनिर्धारणे द्रष्टव्याः । *श्विडीङिति* । समाहारद्वन्द्वे द्वितीयान्तम् ।

न्यासः

**उपदेश इति** । प्रकृतिपाठ इत्यर्थः । **अनुदात्तश्चेति** । उत्युपदेश इत्यपेक्षते, तेनोपदेशग्रहणमुभयविशेषणमिति दर्शयति । तस्य प्रयोजनं प्रत्युदाहरणेष्वाविष्करिष्यति । **ये तथा गणे पठ्यन्त इति** । एतेन गणपाठादेव ते वेदितव्या इति दर्शयति । **त एवेत्यादिना** द्वितीयं परिज्ञानहेतुमाह । काः पुनस्ता अनिट्कारिकाः ? इत्याह—**अनिट्स्वरान्त** इत्यादि । यावान् कश्चित् स्वरान्तोऽजन्तो धातुः स सर्वोऽनिड् भवतीत्येतद् दृश्यताम् अवगम्यताम् । अनिडिति बहुव्रीहिः—नास्मादिडस्तीति । 'अनिट् स्वरान्तः' इत्यस्योत्सर्गस्यापवादमाह—**इमांस्त्वित्यादि** । इमांस्त्वदन्तादीन् वक्ष्यमाणान् सेटः प्रवदन्ति । इटा सह वर्त्तन्त इति सेटः । के वदन्ति ? तद्विदः सेडनिड्विद् इत्यर्थः । **अदन्तमिति** बहुव्रीहिः—अकारस्तपरोऽन्तो यस्य स तथोक्तः । तपरकरणं दीर्घनिवृत्त्यर्थम् । **ऋदन्तमिति** । अयमपि बहुव्रीहिः । तपरकरणमसन्देहार्थम् । रन्तमित्युच्यमाने, किमयं रेफस्य निर्देशः ? उत ऋकारस्य ?—इति सन्देहः स्यात् । **ऋतां चेति** । ऋतामिति निर्धारणे षष्ठी । ऋकारान्तानां मध्ये वृङ्वृञौ सेटौ प्रवदन्ति । तपरकरणं पादपूरणा-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



गणस्थमूदन्तमुतां च रुस्नुवौ क्षुवं तथोर्णोतिमथो युणुक्ष्णवः ।
इति स्वरान्ता निपुणं समुच्चिताः, ततो हलन्तानपि सन्निबोधतः ॥

द्वये एव धातवः[1]—स्वरान्ताः, व्यञ्जनान्ताश्च । तत्र सर्वे स्वरान्ता एकाचोऽनुदात्ताः, अदन्तादीन्वर्जयित्वा । दाता । नेता । चेता । स्तोता । कर्त्ता । हर्त्ता । अदन्तादय उदात्ताः—आवधिष्ट ।

ॠदन्तम्—तरिता, तरीता ।

ॠतां च वृङ्वृञौ—निर्वरिता, निर्वरीता । प्रवरिता, प्रवरीता ।

श्विडीङिवर्णेष्वथ शीङ्श्रियावपि—श्वयिता, उड्डयिता, शयिता, श्रयिता ।

गणस्थमूदन्तम्—लविता । पविता ।

उतां च रुस्नुवौ क्षुवं तथोर्णोतिमथो युणुक्ष्णवः—रविता । प्रस्नविता । क्षविता । प्रोर्णविता ।

**पदमञ्जरी**

*गणस्थमिति* । श्लोकपूरणार्थम् । स्वभावकथनमेतत् । *मत्* मत्तः, *निबोधत*, अवगच्छत ।

*द्वयेत्यादि*श्लोकयोर्द्वयोर्विवरणम् । *इति स्वरान्ता इति* । अस्य पुनः पाठो निगदव्याख्यानतां दर्शयितुं द्रष्टव्यः । अन्ये तु पूर्वं न पठन्ति ।

**न्यासः**

र्थम् । पूर्वमृकारान्तग्रहणादेव हि ह्रस्वस्य ग्रहणमिहावसीयते । श्विडीङिवर्णेष्विति । निर्धारणे सप्तमी । इवर्णान्तेषु मध्ये श्विडीङौ सेटौ प्रवदन्ति । 'टुओश्वि गतिवृद्ध्योः', 'डीङ् विहायसा गतौ' । अथ शीङ्श्रियावपीति । अथेत्यानन्तर्ये । अनयोः पूर्वोक्तयोरनन्तरं शीङ्श्रियावपि सेटौ प्रवदन्ति । 'शीङ् स्वप्ने', 'श्रिञ् सेवायाम्' ।

गणस्थमिति । स्वरूपाख्यानमेतत्, न तु विशेषणम्-गणनिवृत्त्यर्थमिति; तस्यासम्भावात् । ऊदन्तमिति । 'लूञ् छेदने', 'पूञ् पवने'—इत्येवमादयः । उताञ्चेति । निर्धारणषष्ठी । 'रु शब्दे', 'स्नु प्रस्रवणे' । क्षुवं तथोर्णोतिमित्यादि । 'टुक्षु शब्दे', 'ऊर्णुञ् आच्छादने', 'यु मिश्रणे', 'णु स्तुतौ', 'क्ष्णु तेजने' । आवधिष्टेति । आङ्पूर्वाद्धन्तेर्लुङ्, 'आङो यमहनः' इत्यात्मनेपदम्, 'आत्मनेपदेष्वन्यतरस्याम्' इति वधादेशः । स चावधीदित्यत्र वृद्धिर्मा भूदित्येवमर्थमदन्तः पठ्यते । इट्, 'अतो लोपः' इत्यकारलोपः ।

अथ किमर्थमूर्णोतिरुदात्त उपदिश्यते ? इट्प्रतिषेधो मा भूदिति चेत् ? नैतदस्ति;

---

1. अत्र 'द्विविधा धातवः, अत्र द्वेधा धातवः' इति च पाठान्तरम् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



'वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम्'--इत्यतिदेशादेकाच्त्वमूर्णोतेरस्तीति उदात्त उपदिश्यते। यविता। नविता। क्ष्णविता।

इति स्वरान्ता निपुणं समुच्चिताः;
ततो हलन्तानपि सन्निबोधत।
शकिस्तु कान्तेष्वनिडेक इष्यते, घसिश्च सान्तेषु वसिः प्रसारणी ॥

घसिः प्रकृत्यन्तरमस्ति—घस्ता। वसिः प्रसारणी—वस्ता। प्रसारणीति किम्? वसिता वस्त्राणाम्। 'वस निवासे' इत्यस्य यजादित्वात्सम्प्रसारणं विहितम्, न तु 'वस आच्छादने' इत्यस्य।

रभिस्तु भान्तेष्वथ मैथुने यभिस्ततस्तृतीयो लभिरेव नेतरे।

**पदमञ्जरी**

*यमिर्यमन्तेष्विति*। *श्यनि पठ्यत इति*। दिवादौ पठ्यत इत्यर्थः। *प्रतिषेधवाचिनामिति*। इट्प्रतिषेधं कुर्वतामाचार्याणां मतेनेत्यर्थः। *दिहिर्दुहिरिति*। यद्विषयः संशयः पुरुषाणां नास्ति ते *मुक्तसंशयाः*। *तन्त्रान्तरम्*=व्याकरणान्तरम्, आपिशलादि। *सहेर्विकल्प इति*। 'तीषसह' इत्यादिना। *सविकल्पाविति*। विकल्पस्तद्विषयः संशय इत्यर्थः। *स्वरूपेणैव ससंशयाविति*। तौ स्तो न इत्यपि संशयस्तत्रेत्यर्थः।

**न्यासः**

एकाचो हीट्प्रतिषेध उच्यते, न चास्यैकाच्त्वमस्ति? इत्यतआह—वाच्य ऊर्णोर्नुवद्भाव इति। एकाच्त्वमिति। पदान्तस्यापि कुत्वाभावः; कुत्वस्यानित्यत्वात्। अनित्यत्वं तु 'बह्वच्पूर्वपदाद्', 'अल्पाच्तरम्' इति निर्देशाद् वेदितव्यम्। इतीत्येवमर्थः। निपुणमिति। सम्यगविपरीतमित्यर्थः। क्रियाविशेषणञ्चैतत्। समुच्चिता इति। उदात्तानुदात्तसङ्कीर्णाद्धातुराशेः पृथग्व्यवस्थिता इत्यर्थः।

तत इति। स्वरान्तधातुसमुच्चयनादुत्तरकालम्। हलन्तानपि निबोधत अवगच्छतेत्यर्थः। शकिस्त्वित्यादि। 'शक्लृ शक्तौ'। घसिश्चेत्यादि। ननु चादिं हदिमित्यादेः स्वरूपग्रहणे सति तस्य स्थाने 'लुङ्सनोर्घस्लृ' इति विहितस्य घस्लादेशस्यापि स्थानिवद्भावेनानिट्त्वं सिध्यत्येव, तत् किमर्थं घसिः पृथगुपादीयते? इत्याह—घसिः प्रकृत्यन्तरमस्तीति। अन्यदेव हीदं धात्वन्तरम् 'घस्लृ अदने' इत्यदादौ पठ्यते, तस्येदं ग्रहणम्, न त्वादेशस्य। प्रसारणीति। प्रसारणम् = सम्प्रसारणम्, तदस्यास्तीति प्रसारणी। वसितेति। 'वस आच्छादने', 'वस निवासे' इत्यस्य सम्प्रसारणं विहितमिति। वच्यादिसूत्रेण। एतेन निवासार्थो वसिः प्रसारणी, न त्वाच्छादनार्थ इति दर्शयति।

रभिश्चेत्यादि। 'रभ राभस्ये', 'यभ मैथुने', 'डुलभष् प्राप्तौ'।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


आरब्धा । यब्धा । लब्धा ।

यमिर्यमन्तेष्वनिडेक इष्यते रमिश्च यश्च श्यनि पठ्यते मनिः ।
नमिश्चतुर्थो हनिरेव पञ्चमो गमिश्च षष्ठः प्रतिषेधवाचिनाम् ॥

यन्ता । रन्ता । मन्ता । श्यनीति किम् ? मनुतेर्मनिता—इत्येव भवति । नन्ता । हन्ता । गन्ता ।

दिहिर्दुहिर्मेहतिरोहती वहिर्नमिस्तु षष्ठो दहतिस्तथा लिहिः ।
इमेऽनिटोऽष्टाविह मुक्तसंशया गणेषु हान्ताः प्रविभज्य कीर्तिताः ॥

देग्धा । दोग्धा । मेढा । आरोढा । वोढा । नद्धा । दग्धा । लेढा ।

**न्यासः**

यमिर्ञमन्तेष्वित्यादि । '[1]ञमिति—ञकारादारभ्य ञमो मकारेण प्रत्याहारग्रहणम् । 'यम उपरमे', 'रमु क्रीडायाम्', 'मन ज्ञाने', 'णम प्रह्वत्वे शब्दे च', 'हन हिंसागत्योः', 'गम्लृ सृप्लृ गतौ' । श्यनि पठ्यत इति । श्यन्ग्रहणेन साहचर्यात् दिवादिर्लक्ष्यते । दिवादौ पठ्यत इत्यर्थः । प्रतिषेधवाचिनामिति । प्रतिषेधं वक्तुं शीलं येषां ते तथोक्ताः । धातव एव ह्यनुदात्तलिङ्गानुषक्ताः प्रतिषेधं प्रतिपादयन्तीति प्रतिषेधवाचिन उच्यन्ते । अथ वा—इट्प्रतिषेधमात्मविषयमाचार्येण वाचयन्त्यभिधापयन्तीति प्रतिषेधवाचिन इत्युच्यन्ते । एवञ्चात्र सम्बन्धः कर्त्तव्यः—ञमन्तेषु मध्ये ये प्रतिषेधवाचिनो धातवस्तेषां मध्ये यमिरनिडिष्यते । रमिश्चेत्यादि । अथ वा—प्रतिषेधवाचिनामित्यत्र मतेनेत्याध्याहार्यम् । तत्रैवं सम्बन्धः कर्त्तव्यः—इट्प्रतिषेधवाचिनामाचार्याणां मतेन यमिर्ञमन्तेष्वनिडक इष्यत इति ।

मनुतेर्शित । 'मनु अवबोधने'—इत्येतस्य तानादिकस्य ।

दिहिरित्यादि । 'दिह उपचये', 'दुह प्रपूरणे', 'मिह सेचने', 'रुह जन्मनि प्रादुर्भावे', 'वह प्रापणे', 'णह बन्धने', 'दह भस्मीकरणे', 'लिह आस्वादने' । मुक्तसंशया इति । मुक्तः=त्यक्तः संशयो येषु यैर्वा ते तथोक्ताः । प्रविभज्य कीर्त्तिता इति । सेडनिड्विभागेन व्यवस्थाप्य कीर्त्तिता इत्यर्थः ।

देग्धा, दोग्धा इति । 'दादेर्धातोर्घः' इति घत्वम्, 'झषस्तथोर्धोऽधः' इति धत्वम्, 'झलां जश् झशि' इति जश्त्वमित्येते विधयः कर्त्तव्याः । मेढा । आरोढेति 'हो ढः' इति ढत्वम्, पूर्ववद्धत्वम्, 'ष्टुना ष्टुः' इति ष्टुत्वम्, 'ढो ढे लोपः' इति ढलोपः ।

---

१. ञमिति व्याघ्रभूतिनानिट्कारिकाकृता गृहीतः प्रत्याहारः, तदर्थमाचष्टे—ञमितीति । काशिकायां तु यमिर्यमन्तेष्विति पाठः । तत्र यमिति प्रत्याहार एतच्छास्त्रोक्तः, यथा—'हलो यमां यमि लोपः' इति ।( प्र० सं० सं० )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



मुक्तसंशया इति किम् ? तन्त्रान्तरे चत्वारोऽपरे पठ्यन्ते—सहिमुहिरिहिलुहयः। तत्र सहेर्विकल्पस्तकारादौ, मुहिरपि रधादौ पठ्यते, तेन तौ ससंशयौ सविकल्पौ। इतरौ तु धातुषु न पठ्येते। कैश्चिदभ्युपगम्येते इति स्वरूपेणैव ससंशयौ।

दिशिं दृशिं दशिमथो मृशिं स्पृशिं रिशिं रुशिं क्रोशतिमष्टमं विशिम्।

लिशं च शान्ताननिटः पुराणगाः पठन्ति पाठेषु दशैव नेतरान्॥

देष्टा, द्रष्टा, दंष्टा; आम्रष्टा, आमर्ष्टा; स्प्रष्टा, स्पर्ष्टा। ऋदुपधानामुदात्तोपदेशानां मृजिदृशी वर्जयित्वा 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' इति रमागमविकल्पः। रेष्टा रोष्टा, क्रोष्टा, प्रवेष्टा, लेष्टा।

पदमञ्जरी

*दिशिं* दशिमिति। पुराणम्=चिरन्तनं व्याकरणं येऽधीयते ते *पुराणगाः*। पाठेषु, धात्वादिषु। ऋदुपधानामित्यादिना तेष्वनुदात्तोपदेशस्य प्रयोजनान्तरं समुच्चिनोति। एवं च श्लोकेष्वनिट इत्यस्यानुदात्तोपलक्षणत्वं निश्चितम्।

न्यासः

वोढति। पूर्ववड्ढत्वादि, 'सहिवहोरोदवर्णस्य' इत्योत्वम्। नद्धेति। 'नहो धः' इति धत्वम्, पूर्ववज्जश्त्वम्। तन्त्रान्तर इति। आपिशले व्याकरणे। सहेर्विकल्पस्तकारादाविति। 'तीषसह' इत्यादिना तकारादौ सहेर्विकल्प उक्तः। मुहिरपि रधादौ पठ्यत इति। एतेन मुहेरपि 'रधादिभ्यश्च' इति विकल्पं दर्शयति। तेन तौ ससंशयौ सविकल्पाविति। एतेन विकल्पात्मकेन संशयेन तौ ससंशयौ, न तु सन्देहात्मकेनेति दर्शयति। इतराविति। रिहि-लुही। कैश्चिदभ्युपगम्येते इति। आपिशलिप्रभृतिभिः। स्वरूपेणैव ससंशयाविति। स्वरूपेणेति स्वभावेन। ससंशयौ=ससन्देहौ। संशयो ह्यत्र सन्देहे वर्त्तते। सन्देहस्तु—धातुष्वपाठात्, अथ च कैश्चिदभ्युपगमाच्च। तयोश्चैको हिंसायां वर्त्तमानोऽभ्युपगम्यते, अपरस्तु गार्ध्ये।

दिशिं दशिमित्यादि। 'दिश अतिसर्जने'। 'दृशिर् प्रेक्षणे', 'दन्श दशने'। अथोशब्दः पादपूरणे। 'मृश आमर्द्दने', 'स्पृश संस्पर्शे', 'रुश रिश हिंसायाम्', 'क्रुश आह्वाने रोदने च', 'विश प्रवेशने', 'लिश अल्पीभावे'। पुराणगा इति। पुराणम्=व्याकरणम्, चिरन्तनत्वात्, तद् गायन्त्यधीयते ये ते पुराणगाः। पाठेष्विति। अनिट्कारिकापाठेषु, धातुपाठेषु वा। नेतरानिति। 'स्पश बाधनस्पर्शनयोः' इत्येवमादीनिति।

देष्टेति। व्रश्चादिसूत्रेण षत्वम्। 'अनुदात्तस्य' इत्यादिना मृशिप्रभृतीनामनुदात्तेट्प्रतिषेधादधिकं फलं दर्शयति।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



रुधिः सराधिर्युधिबन्धिसाधयः क्रुधिक्षुधी शुध्यतिबुध्यती व्यधिः ।
इमे तु धान्ता दश येऽनिटो मतास्ततः परं सिध्यतिरेव नेतरे ॥

रोद्धा । राद्धा । योद्धा । बन्द्धा । साद्धा । क्रोद्धा । क्षोद्धा । शोद्धा । बोद्धा । व्यद्धा । सेद्धा । बुध्यतिसिध्यत्योः श्यना निर्देशात् न्याय्यविकरणयोर्बुधिसिध्योरिड् भवत्येव—बोधिता, सेधिता । निष्ठायामपि प्रतिषेधाभावात्—बुधितम्, सिधितमित्येव भवति ।

### पदमञ्जरी

*रुधिः सराधिरिति* । *न्याय्यविकरणयोरिति* । न्याय्यः=उत्सर्गः, शब्विकरणयोरित्यर्थः । क्वचित्तु तथैव पाठः । केचिद्भौवादिकं सिधिमुदितं पठन्ति—'षिधु गत्याम्' इति, तेन तस्य क्त्वायां विकल्पितेट्कत्वान्निष्ठायाम् 'यस्य विभाषा' इति प्रतिषेधेन भवितव्यम् । तथा दैवादिकस्य भौवादिकस्य च बुधेरर्थे रूपे वा विशेषो नास्ति, ततश्चैक एवायं बुधिः, विकरणद्वयार्थं तु द्वयोर्गणयोः पाठः, तस्य चार्धधातुकलक्षण इडप्युक्तः, प्रतिषेधोऽपीत्येकविषयत्वाद्विभाषितेट्कत्वम्, ततश्च तस्यापि निष्ठायां प्रतिषेधेन भवितव्यमिति मन्यमानं प्रत्याह—*निष्ठायामपीति* । सिधेरुदित्त्वं तावदनन्यार्थम् । न च यथाकथञ्चिदिटो भावाभावौ निष्ठायां निषेधस्य निमित्तम्, किं तर्हि ? विकल्पवाचिना विभाषादिशब्देन विकल्पितेट्त्वमिति भावः ।

### न्यासः

रुधिः सराधिरित्यादि । सह राधिना वर्त्तत इति सराधिः । 'रुधिर् आवरणे', 'राध साध संसिद्धौ' । 'राधोऽकर्मकाद्वृद्धौ' इति द्वयोरपि ग्रहणमिष्यते, विशेषाभावात् । 'युध सम्प्रहारे', 'बन्ध बन्धने', 'क्रुध कोपे', 'क्षुध बुभुक्षायाम्', 'शुध शौचे', 'बुध अवगमने', 'व्यध ताडने', 'सिधु संराद्धौ' । नेतर इति । इन्धिप्रभृतयः । न्याय्यविकरणयोरिति । शब्विकरणयोरित्यर्थः । 'बुध बोधने', 'षिधु गत्याम्'—इत्येतयोः । निष्ठायामपीत्यादि । अथ कथं बुधेर्भौवादिकस्य प्रतिषेध आशङ्कितः ? सिधेरुदित्त्वेन प्रतिषिद्धत्वात् । 'उदितो वा' इति क्त्वाप्रत्यये विकल्पविधानाद् 'यस्य विभाषा' इति निष्ठायां प्रतिषेधेन भवितव्यमिति युक्ता प्रतिषेधाशङ्का । बुधेस्तु न किञ्चिन्निष्ठायां प्रतिषेधाशङ्काकारणमस्ति । तस्याप्यस्ति—इह भौवादिकदैवादिकयोर्बुध्योरर्थरूपे समाने, अतश्चार्थरूपसाम्यादुपजातभ्रान्तिः प्रतिपत्ता; एक एवायं धातुः, विकरणद्वयार्थमुभयोर्गणयोः पाठः, तस्य चार्द्धधातुक इडप्युक्तः, अनेन सूत्रेणेट्प्रतिषेधोऽपीत्येकविषयत्वाद् विधिप्रतिषेधयोः पर्यायप्रतिपत्तौ विभाषेट्त्वम्, अतः 'यस्य विभाषा' इति निष्ठायां प्रतिषेधेन भवितव्यमिति कैश्चिन्मन्यते । तस्मात् तन्मतमाशङ्क्येदमुक्तम्—निष्ठायामपी-

 CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



शिषिं पिषिं शुष्यतिपुष्यती त्विषिं विषिं श्लिषिं तुष्यतिदुष्यती द्विषिम् ।
इमान् दशैवोपदिशन्त्यनिड्विधौ गणेषु षान्तान् कृषिकर्षती तथा ॥

शेष्टा । पेष्टा । शोष्टा । पोष्टा । त्वेष्टा । वेष्टा । श्लेष्टा । तोष्टा । दोष्टा । द्वेष्टा । क्रष्टा । कर्ष्टा । कृषेस्तौदादिकस्य, भौवादिकस्य च कृषिकर्षती—इति निर्देशः ।

तपिं तिपिं चापिमथो वपिं स्वपिं लिपिं लुपिं तृप्यतिदृप्यती सृपिम् ।
स्वरेण नीचेन शपिं छुपिं क्षिपिं प्रतीहि पान्तान् पठितांस्त्रयोदश ॥

**पदमञ्जरी**

*तपिं तिपिमिति* । *तिपिक्षपी* इति पाठः । *नीचेन स्वरेणानुदात्तेन पठितान्प्रतीहि* निबोधतेति । प्रस्तावात्प्रतीतेति पाठः, प्रतीहीति पाठे उत्तरानुरोधः—विद्धयनिट्स्वरानिति ।

**न्यासः**

त्यादि । एवं मन्यते—अन्य एव भौवादिको षुधिर्यस्येड्विधिः, अन्यश्च दैवादिको यस्येट्प्रतिषेधः; तस्माद् भिन्नविषयत्वाद्विधिप्रतिषेधयोर्विभाषेट्त्वं नोपपद्यत इति । अथ सिधेर्निष्ठायां प्रतिषेधाभावः कथमुक्तः, यावतोदित्त्वात् तस्य 'उदितो वा' इति विभाषेट्त्वाद् 'यस्य विभाषा' इति निष्ठायां भवितव्यमेव प्रतिषेधेन ? एवं मन्यते—सिधेरुदित्त्वमनार्षमेव, यदि तस्योदित्त्वं स्याद्, भ्वादौ पाठोऽनर्थकः स्यात्; यदनेन साध्यं रूपं तस्य 'षिधू शास्त्रे' इत्यनेनैव सिद्धत्वात् । अनुदित्त्वे तु तस्य सिधितमित्येतत्सिद्धयेऽर्थवान् पाठो भवति । न ह्येतत् 'षिधू शास्त्रे' इत्यनेन सिध्यतीति । ऊदित्त्वेनास्य 'स्वरतिसूति' इत्यादिना विभाषितेटः 'यस्य विभाषा' इति निष्ठायामिट्प्रतिषेधात् । तस्माद् भ्वादिपाठादेव सिद्धे सिधेरुदित्त्वमनार्षमेव ।

शिषिं पिषिमित्यादि । 'शिष्लृ विशरणे', 'पिष्लृ सञ्चूर्णने', 'शुष शोषणे', 'पुष पुष्टौ', 'त्विष दीप्तौ' । 'जिषु विषु मिषु सेचने', 'विष्लृ व्याप्तौ'—द्वयोरपि ग्रहणम् । 'श्लिष आलिङ्गने', 'श्रिषु श्लिषु प्रुषु प्लुषु दाहे'—द्वयोरपि ग्रहणम् । 'तुष तुष्टौ', 'दुष वैकृत्ये', 'द्विष अप्रीतौ', 'कृष विलेखने'—भौवादिकतौदादिकौ । पुष्यतीति । श्यना निर्देशो भौवादिकक्रैयादिकयोर्निवृत्त्यर्थः । शुष्यतिप्रभृतीनां तु वृत्तभङ्गपरिहारार्थः । क्रष्टा, कर्ष्टेति । पूर्ववद् विकल्पेनामागमः ।

तपिं तिपिमित्यादि । 'तप सन्तापे', 'तप ऐश्वर्ये'—द्वयोरपि ग्रहणम् । 'तिपृ तेपृ ष्टेपृ क्षरणार्थाः', 'आप्लृ व्याप्तौ', 'डुवप बीजतन्तुसन्ताने', 'ञिष्वप् शये', 'लिप उपदाहे', 'लुप्लृ छेदने', 'तृप प्रीणने', 'दृप हर्षणमोचनयोः', 'गम्लृ सृप्लृ गतौ' । स्वरेण नीचेनेति । अनुदात्तेनेत्यर्थः । 'शप आक्रोशे', 'शप उपलम्भे'—उभयोरपि ग्रहणम् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तप्ता । तेप्ता । आप्ता । वप्ता । स्वप्ता । लेप्ता । लोप्ता । तृप्यति-दृप्यत्योरनुदात्तत्वममागमार्थमेव । इट् त्वनयो रधादिपाठाद्विकल्पेन भवति–त्रप्ता, तर्प्ता, तर्पिता; द्रप्ता, दर्प्ता, दर्पिता । तुदादिषु तु यौ तृपिदृपी तावुदात्तावेव–तृप्ता, तर्प्ता । शप्ता । छोप्ता । क्षेप्ता ।

अर्दि हृदिं स्कन्दिभिदिच्छिदिक्षुदीन् शदिं सदिं स्विद्यतिपद्यती खिदिम् ।
तुदिं नुदिं विद्यति विन्त इत्यपि प्रतीहि दान्तान्दश पञ्च चानिटः ॥

अत्ता । हत्ता । स्कन्ता । भेत्ता । छेत्ता । क्षोत्ता । शत्ता । सत्ता । स्वेत्ता । स्विद्यतीति श्यना निर्देशः–'ञिष्विदा' इत्यस्य ग्रहणं मा भूत् । उदात्त एवायम् । पत्ता । खेत्ता । तोत्ता । नोत्ता । वेत्ता । विद्यति विन्त इत्यपि–श्यना श्नमा च निर्देशोऽन्यविकरणनिवृत्त्यर्थः । वेत्तिविन्दती उदात्तावेव–वेदिता विद्यानाम्, वेदिता धनस्य ॥

पचिं वचिं विचिरिचिरञ्जिपृच्छतीन्
निजिं सिचिं मुचिभजिभञ्जिभृज्जतीन् ।

**पदमञ्जरी**

*तेप्तेति* । 'तिपृ तेपृ ष्टिपृ ष्टेपृ क्षरणे' । *छोप्तेति* । 'छुप स्पर्शने' । *पचिं वचिमिति* । *सृजिमृजीति* । समाहारद्वन्द्वः । अनिट्त्वस्य हेतुः स्वरो येषां तेऽनिट्स्वराः ।

**न्यासः**

'छुप स्पर्शे', 'क्षिप प्रेरणे' । तृप्यतिदृप्यत्योरनुदात्तेत्त्वममागमार्थम्, 'अनुदात्तस्य' इत्यादिना पक्षेऽमागमो यथा स्यात् । इट्प्रतिषेधार्थं कस्मान्न भवति ? इत्याह–इट् त्वनयोरित्यादि । तुदादिषु यौ तृपिदृपी इति । 'तृप तृम्प तृप्तौ', 'दृप उपक्लेशे' इत्येतौ ।

अर्दिं हदिमित्यादि । 'अद भक्षणे', 'हद पुरीषोत्सर्गे', 'स्कन्दिर् गतिशोषणयोः', 'भिदिर् विदारणे', छिदिर् द्वैधीकरणे', क्षुदिर् सम्पेषणे', 'शद्लृ शातने', 'षद्लृ विशरणगत्यवसादनेषु', 'ञिष्विदा गात्रप्रक्षरणे', 'पद गतौ' । 'खिद दैन्ये', 'खिद परिघाते'–उभयोरपि ग्रहणम् । 'तुद व्यथने', 'णुद प्रेरणे', 'विद सत्तायाम्', 'विद विचारणे' । ञिष्विदेस्त्यस्य ग्रहणं मा भूदिति । 'ञिष्विदा स्नेहमोचनयोः' इत्यस्य । अन्यविकरणनिवृत्त्यर्थं इति । 'विद ज्ञाने' इति लुग्विकरणस्य, 'विद्लृ लाभे' इत्यस्य शविकरणस्य च निवृत्त्यर्थः । 'विद वेदनाख्यानविवासेषु' इत्यस्य चौरादिकस्यानेकाच्त्वादेवाप्रसङ्गः ।

पचिं वचिमित्यादि । 'डुपचष् पाके' । 'वच परिभाषणे', 'ब्रुवो वचिः' इति च द्वयोरपि ग्रहणम् । सौत्रोऽप्युपदेशो भवत्येव । 'विचिर् पृथग्भावे', 'विचिर् विवेचने', 'रन्ज रागे', 'प्रच्छ ज्ञीप्सायाम्', 'णिजिर् शौचपोषणयोः', 'षिचिर् क्षरणे', 'मुच्लृ

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



त्यजिं यजिं युजिरुजिसञ्जिमज्जतीन्
भुजिं स्वजिं सृजिमृजी विद्धचनिटस्वरान् ॥[1]

पक्ता । वक्ता । विवेक्ता । रेक्ता । रङ्क्ता । प्रष्टा । निर्णेक्ता । सेक्ता । मोक्ता । भक्ता । भङ्क्ता । भ्रष्टा, भर्ष्टा । त्यक्ता । यष्टा । योक्ता । रोक्ता । सङ्क्ता । मङ्क्ता । भोक्ता । परिष्वक्ता । स्रष्टा । मार्ष्टा ।

मृजिरयमूदित्पठ्यते, ततोऽस्य विकल्पेनेटा भवितव्यम्—मार्ष्टा, मर्जिता इति; अमागमोऽप्यस्य न दृश्यते ? तदिह पाठस्य प्रयोजनं चिन्त्यम् । केचिदस्य स्थाने विजिं पठन्ति—सृजिं विजिं

पदमञ्जरी

*ततोऽस्य विकल्पेन भवितव्यमिति* । तेनानिट्स्वरार्थोऽनुदात्तपाठो न भवति । *अमागमोऽपीति* । तेन तदर्थोऽप्यनुदात्तपाठो न भवति । तत्कस्मादिहानिट्कारिकासु पठ्यते ? इत्यत आह—*केचिदित्यादि* । युक्तं चैतदित्याह—

न्यासः

मोक्षणे', 'भज सेवायाम्', 'भन्जो आमर्दने', 'भ्रस्ज पाके', 'त्यज हानौ', 'यज देवपूजासङ्गतिकरणदानेषु' । 'युजिर् योगे', 'युज समाधौ—द्वयोरपि ग्रहणम् । रुजो भङ्गे', 'षन्ज सङ्गे', 'टुमस्जो शुद्धौ' । 'भुज पालनाभ्यवहारयोः', 'भुजो कौटिल्ये'—द्वयोरपि ग्रहणम् । 'ष्वन्ज परिष्वङ्गे' । कृतानुनासिकलोपस्य निर्देशो वृत्तभङ्गपरीहारार्थः । 'सृज विसर्गे' । 'मृजू शुद्धौ' आदादिकः । 'मृज शौचालङ्कारयोः' इति चौरादिकोऽप्यस्ति, सोऽपि यदा 'आ धृषाद्वा' इति णिज्नास्ति, तदा शक्य एव ग्रहीतुम् । यदा त्वस्ति, तदानेकाच्त्वादेवेट्प्रतिषेधाप्रसङ्गः ।

मृजिरयमित्यादिनेट्प्रतिषेधार्थतां मृजेरिह निरस्यति । अमागमोऽप्यस्येत्यादि । अनेनामागमार्थताम् । तदिहेत्यादि । यत्र एव हि प्रयोजनद्वयं न सम्भवति, तस्मादिहास्य पाठे प्रयोजनं चिन्त्यम् । तत्र केचिदाहुः—यद्यप्यमागमो न दृश्यते, तथाप्यसौ कर्त्तव्य एव; अन्यथा ह्यस्य पाठोऽनर्थकः स्यात् । न हि यत्र दृश्यते तेन न भवितव्यमेव, अन्यथा हि 'यथालक्षणमप्रयुक्तेषु' इत्येतद् वचनमप्रयुज्यमानं स्यात् । अन्ये तु वर्णयन्ति—मृजेर्निरुपपदात् क्विबन्ताद् विकारावयवविवक्षायां मार्ज इति 'अनुदात्तादेरञ्' इत्यञ् यथा स्यात्—इत्येतत् प्रयोजनमिति, एतच्चायुक्तम्; एकाच्त्वाद्धि नित्यं मयटा भवितव्यम् । तथा हि—'नित्यं वृद्धशरादिभ्यः' इत्यत्र नित्यग्रहणं किमर्थम्, यावतारम्भसामर्थ्यादेव नित्यं भविष्यति ?—इति चोदिते, इदमुक्तम्—'एकाचो नित्यं मयटमिच्छन्तीति तदर्थमेतत् क्रियते—त्वङ्मयं वाङ्मयम्' इति । केचिदित्यादि । केचित् प्रयोजनमपश्यन्तो मृजेः स्थाने विजिं पठन्ति । किं

१. अत्र रुचिरा च्छन्दः । तल्लक्षणं यथा—'रुचिरा जभौ स्जौ ग्चतुर्नवकौ' इति । ( प्र० सं० सं० )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



विद्धयनिट्स्वरानिति । निजादिषु यो विजिरसावनिडिष्यते । तथा च तन्त्रान्तरे[1]–'निजिविजिष्वञ्जिवर्जम्' इत्युक्तम् ।

एकाच इति किम् ? अवधीत् । वृद्धिनिवृत्त्यर्थमदन्तो वधिरुपदिश्यते ।

पदमञ्जरी

*निजादिषु हीति* । 'णिजां त्रयाणां गुणः श्लौ' इत्यत्र पठिता निजादयः । अत्रैव व्याकरणान्तरानुमतिं दर्शयति–*तथा चेति* ।

*अवधीदिति* । किं पुनरयमुपदेशेऽनुदात्तः ? ओमित्याह । क्व पुनरस्योपदेशः ? 'हनो वध लिङि' इति । किमेकाज्ग्रहणं न निवर्त्तयिष्यामीत्यनुदात्त उपदिश्यते, न ह्यस्यान्यदनुदात्तत्वे प्रयोजनम् ? न ब्रूमः–अस्मिन्नुपदेशेऽयमनुदात्त इति,

न्यासः

कारणमित्याह–निजादिषु हीत्यादि । 'विजिर् पृथग्भावे' इति निजादिषु विजिः पठ्यते, स यस्मादनिडिष्यते तस्मान्मृजिमपनीय तस्य स्थाने विजिं पठन्ति । कथं ज्ञायतेऽसावनिडिष्यते ? इत्याह–तथा चेत्यादि । तन्त्रान्तर इति । आपिशलिव्याकरणे । अथ 'मृजिविजी' इत्यस्मिन् पाठे 'ओविजी भयचलनयोः' इत्यस्य ग्रहणं कस्मान्न भवति ? ईदित्त्वात् । तद्धेयवमर्थं क्रियते–'श्वीदितो निष्ठायाम्' इतीट्प्रतिषेधो यथा स्यात् । यदि च तस्यापीह ग्रहणं स्यादनेनैव सिद्धत्वादीदित्त्वमनर्थकं स्यात् ।

अवधीदिति । 'लुङि च' इति वधादेशोऽदन्तः । स चानुदात्तस्यादेशः स्थानिवद्भावेनैव भवति । उपदेशेऽनुदात्त एकाच उपदेशो न भवतीति न भवति प्रतिषेधः । कथं पुनरयमेकाज्भवति ? इत्याह–वृद्धिनिवृत्त्यर्थमित्यादि । यदि ह्यदन्तो वधिर्नोपदिश्येत, 'अतो हलादेर्लघोः' इति विकल्पेन वृद्धिः स्यात् । अदन्ते तु सति न भवति, तत्र येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादित्येकेन वर्णेन व्यवधानमाश्रीयते, न त्वनेकेनेति हला व्यवधानमाश्रितम् । अदन्तत्वे तु सति वधेरकारलोपस्य पूर्वविधौ स्थानिवद्भावेनापि व्यवधानं भवति, न केवलं हलैव । यापि हलन्तलक्षणा वृद्धिः, साप्यदन्तत्वे सति न भवत्येव; अकारलोपस्य स्थानिवद्भावादहलन्तत्वात् । तस्माद् वृद्धिनिवृत्त्यर्थमदन्तो वधिरुपदिश्यते । ननु यद्यप्यदन्त उपदिश्यते, तथापि स्थानिवद्भावेनैकाजिति व्यपदेशे सति भवितव्यमेव प्रतिषेधेन ? नैतदस्ति; एवं ह्येकाज्ग्रहणमनर्थकं स्यात् । तथा हि–जागृदरिद्राचकास्प्रभृतीनामुदात्तत्वात् नैकाज्ग्रहणं ते प्रयोजयन्ति । सनाद्यन्तानां धातूनामुपदेशत्वं नास्ति; लाक्षणिकत्वात् समुदायस्य । न चान्योऽनेकाज् धातुरुपदेशेऽनुदात्तोऽस्ति य एकाज् ग्रहणं प्रयोजयति । न चास्मिन् व्यपदेशे कर्त्तव्ये स्थानिवद्भावोऽस्ति; अल्विधित्वात् ।

---

१. 'ग्रन्थान्तरे' इति पाठान्तरम् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



उपदेशग्रहणं किम् ? इह च यथा स्यात्—लविष्यति, पचिष्यति । इह च मा भूत्—कर्ता कटान्, कर्तुमिति ॥

श्र्युकः किति ॥ ११ ॥

'श्रि' इत्येतस्य, उगन्तानां च किति प्रत्यये परत इडागमो न भवति । श्रित्वा, श्रितः, श्रितवान् । उगन्तानां च—युत्वा, युतः, युतवान् । लूत्वा, लूनः, लूनवान् । वृत्वा, वृतः, वृतवान् । तीर्त्वा, तीर्णः, तीर्णवान् ।

पदमञ्जरी

हन्तिरनुदात्तस्तस्य स्थाने भवन्स्थानिवद्भावेनानुदात्तः । क्रियमाणेऽपि तर्ह्येकाज्ग्रहणे यावता स्थानिवद्भावः कस्मादस्य प्रतिषेधादिति चेत् ? हन्तेवमनुदात्तव्यपदेशोऽपि स्थान्यलाश्रयत्वात्कथमिवास्य स्यात् ! स्यादेतत् । नात्र स्थानिवद्भावेन प्रसङ्गः, किं तर्हि ? उपदेशग्रहणेन, यथा—कर्त्ता, कर्तुमित्यादौ रूपभेदे स्वरभेदे च भवति । तत्कस्य हेतोः ? यः स उपदेशेऽनुदात्तः स एवेमामवस्थामापन्न इति कृत्वा, न तु स्थानिवद्भावात्; एवमिहापि य उपदेशेऽनुदात्तो हन्तिः स एवायमिति उपदेशग्रहणात्प्रसङ्ग इति । क्रियमाणेऽपि तर्ह्येकाज्ग्रहणे कथमिवास्य व्यावृत्तिः, यावता उपदेशग्रहणस्योभाभ्यां सम्बन्धः—य उपदेशे एकाच् स एवायमिति स्यादेव प्रसङ्गः ? तस्माद्वधेराद्युदात्तनिपातनं कर्त्तव्यम्, तत्सामर्थ्याद्धन्त्युपदेशविषयानुदात्तत्वाश्रयोऽपि प्रतिषेधो न भवति । न ह्येतदाद्युदात्तत्वं प्रयोगसमवायि, प्रत्ययस्वरेण बाधितत्वादित्येवमत्र परिहारो वाच्यः । एकाज्ग्रहणमुत्तरार्थम् ॥

*श्र्युकः किति* ॥ येषां प्रकृत्याश्रयः प्रतिषेधो नास्ति तदर्थमिदम् । *श्रितः, श्रितवान्; युतः, युतवान् इति* । 'सनीवन्तर्ध' इति विकल्पितेट्त्वाद् 'यस्य विभाषा' इति प्रतिषेधः सिद्धः ।

न्यासः

इह च यथा स्यादिति । असत्युपदेशग्रहणे, एकाचो धातोरनुदात्तादिडागमो न भवतीत्येष सूत्रार्थः; एवं च लविष्यति, पविष्यतीत्यत्रेडागमो न स्यात् । भवत्यत्र प्रत्ययस्वरे कृते शेषानुदात्तत्वे धातुरनुदात्तः । तथा च—कर्त्ता कटान्, कर्त्तुमिच्छतीत्यत्र त्विडागमः स्यादेव; तृनि तुमुनि च कृते नित्स्वरेण धातोरुदात्तत्वात् । उपदेशग्रहणे तु सति तेनाद्यावस्था विशिष्यत इति न भवत्येष दोषप्रसङ्गः । यद्यप्युत्तरकालं लुनातिपुनाती अनुदात्तौ, तथाप्युपदेशावस्थायामुदात्तावेव । तथा यद्युत्तरकालं करोतिरुदात्तः, तथाप्युपदेशावस्थायामनुदात्त एव । अथ बिभित्सतीत्यत्र कथं प्रतिषेधः, यावता बिभिच्छब्दस्य प्रकृतिपाठो नास्ति, उपदेशेनाप्येकाच्त्वम् ? नैष दोषः; यद्यपि बिभिच्छब्दस्य प्रकृतिपाठो नास्ति, नाप्येकाच्त्वम्; तथापि भिदेस्तूभयमिदमस्ति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


श्र्युक इति किम् ? विदितः। कितीति किम् ? श्रयिता, श्रयितुम्, श्रयितव्यम्।

केचिदत्र द्विककारनिर्देशेन गकारप्रश्लेषं वर्णयन्ति—भूष्णुरित्येवं यथा स्यात्, सौत्रत्वाच्च निर्देशस्य 'श्र्युकः किति' इत्यत्र चर्त्वस्यासिद्धत्वमनाश्रित्यं रोरुत्वं न कृतम्, विसर्जनीयश्च कृत इति। 'ग्लाजिस्थश्च क्स्नुः' इत्यत्र स्था+आ इत्याकारप्रश्लेषेण स्थास्नोः सिद्धत्वान्न किञ्चिदेतत्।

पदमञ्जरी

केचिदित्यादि। यथा 'ग्लाजिस्थश्च क्स्नुः' इत्यत्रोक्तम्—'क्स्नोर्गित्त्वान्न स्थ ईकारः' इत्यादि। यदि गकारः प्रश्लिष्यते 'श्र्युकः किति' इति निर्देशो नोपपद्यते; गकारे परतः 'हशि च' इत्युत्वं प्राप्नोति; चर्त्वे च कृते 'कुप्वोः ⌣क⌣पौ च' इत्येष विधिर्भवति, चर्त्वस्यासिद्धत्वादुत्वमेव प्राप्नोति ? तत्राह—*सौत्रत्वादिति*। अत्रापि ग्रन्थे 'वर्णयन्ति' इत्यस्य सम्बन्धः। तदेतद्दूषयति—*ग्लाजिस्थश्च ग्स्नुरित्यत्रेति*। आकारप्रश्लेषे सति तिष्ठतेराकारान्तादित्यर्थो भवति, तिष्ठतिश्चाकारान्त एव, तत्र विशेषणमुत्तरकालभावीकारनिवृत्त्यर्थं विज्ञायते, ततश्च—

कथं प्रकृतिनिर्देशे पञ्चम्यां परतः श्रुतः।
आकारोऽयं विधेयः स्यादिति चोद्यमपाकृतम्॥

*स्थास्नोः*। स्थास्नुशब्दस्य। न *किञ्चिदेतदिति*। एतद् गकारप्रश्लेषवर्णनमशोभनमित्यर्थः। ग्स्नुप्रत्ययस्य गित्त्वे हि गप्रश्लेषो युज्यते, कित्त्वेऽपि तिष्ठतेरीत्वमुक्ताद्धेतोर्निवर्त्तते।

न्यासः

'द्विष्प्रयोगो द्विर्वचनम्' इत्ययमपि तत्र पक्ष आश्रितः, तेन भिदिरेव तत्र द्विरुच्यते, तस्य चोभयविशेषणविशिष्टत्वात् सिध्यत्येव प्रतिषेधः॥

श्र्युकः किति॥ उदात्तार्थ आरम्भः। लून इति। 'ल्वादिभ्यश्च' इति नत्वम्। तीर्ण इति। अत्रापि 'रदाभ्याम्' इति।

केचिदित्यादि। 'ग्लाजिस्थश्च क्स्नुः' इति 'भुवश्चेति वक्तव्यम्' इत्यत्र भवतः क्स्नुप्रत्यये गिति कृते सति विधीयमानत्वाद् गितीट्प्रतिषेधो न प्राप्नोति, ततश्च भूष्णुरिति न सिध्येत्। तस्माद् भूष्णुरित्यत्रेट्प्रतिषेधार्थं केचित् इन्द्रभूति-व्याडिप्रभृतयः 'श्र्युकः किति' इत्यत्र द्विककारनिर्देशेन हेतुना चर्त्वभूतो गकारः प्रश्लिष्ट इत्येवमाचक्षते। यदि चर्त्वभूतो गकारः प्रश्लिष्टः, एवं सति 'ससजुषो रुः' इति रुत्वे कृते चर्त्वस्यासिद्धत्वाद् 'हशि च' इति रोरुत्वेन भवितव्यम्, न तु विसर्जनीयेन, ततश्च

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


'उपदेशे' इत्येव–तीर्णं इत्यत्रापि यथा स्यात्। इत्त्वे हि कृते रपत्वे च न स्यात्। मा भूदेवम्, इट् सनि वेति विकल्पे विहिते 'यस्य विभाषा' इति निष्ठायां प्रतिषेधो भविष्यति ? कस्य पुनः सा विभाषा ?

पदमञ्जरी

*तीर्ण इत्यत्रापि यथा स्यादिति।* इह तु तीर्त्वा, पूर्त्वेति आनुपूर्व्यात्सिद्धम्, कथम् ? तत्वा, पत्वा इति स्थिते यावदिट्प्रतिषेधो न प्रवर्तते तावदित्त्वोत्त्वे प्राप्नुतः, किं कारणम् ? 'क्ङिति' इत्युच्यते, न चाकृते इट्प्रतिषधे क्त्वा किद्भवति; 'न क्त्वा सेट्' इति प्रतिषेधात्। किञ्च भो इत्त्वोत्त्वे किति विधीयेते ? न किति विधीयेते, किति तु विज्ञायेते। कथम् ? इत्त्वोत्त्वाभ्यां गुणवृद्धी भवतो विप्रतिषेधेन। तस्मात्प्रागेव सन्निहितं कित्त्वमाश्रित्येट्प्रतिषेधे प्रवृत्ते इत्त्वोत्त्वे भवतः। कृतयोस्तर्हि तयोः प्रतिषेधनिमित्तस्योगन्तत्वस्यापगमात्पुनरिट्प्रसङ्गः, तस्मिंश्च सति 'न क्त्वा सेट्' इति कित्त्वप्रतिषेधाद् गुणे सति तेरित्वा, पोरित्वेति प्राप्नोति ? नैतदस्ति; प्रसङ्गावस्थायामेव प्रतिषेधेन बाधितस्य भ्रष्टावसरस्य पुनः प्रवृत्त्ययोगात्। इह च तितीर्षति, मुमूर्षतीति नाकृत इटः प्रतिषेधे सनः कित्त्वमझलादित्वात्, असति च कित्त्वे गुणस्यायं विषय इति इत्त्वोत्त्वयोरप्रसङ्ग इति ? आनुपूर्व्यात्सिद्धमित्येव। यदि वा तॄ+स इति स्थिते, अनवकाशत्वादिट् सनि वेति ऋकारान्तनिमित्त इड्विकल्पः प्रवर्त्तते, तत्रेडभावपक्षे कित्त्वाद् गुणे निषिद्धे इत्त्वोत्त्वयोः कृतयोरपि विकल्पेन बाधितस्येड्लक्षणस्य भ्रष्टावसरत्वेन पुनः प्रवृत्त्ययोगात्सिद्धमिष्टम्। तस्मात्तीर्णं इत्यत्र चोपदेशाधिकार-

न्यासः

'श्युकः किति' इति निर्देशो न युज्यते ?–इत्येतच्चोद्यं निराकर्तुमाह–सौत्रत्वान्निर्देशस्येत्यादि। चर्त्वभूतस्यासिद्धत्वमनाश्रित्य रोरुत्वं न कृतम्, विसर्जनीयश्च कृत इति वर्णयन्ति। किमर्थं पुनस्ते क्स्नुप्रत्यये गित्त्वं प्रतिजानते, यस्मिन् सतीदं व्याख्यानं कर्त्तव्यं जायते ? स्थास्नुशब्दस्य सिद्धयर्थम्। एवं हि ते मन्यन्ते–क्स्नोः कित्त्वे सति घुमास्थागादिसूत्रेण तिष्ठतेरीत्त्वं स्यात्, ततश्च स्थास्नुरिति न सिध्येदिति। ग्लाजिस्थश्च क्स्नुरित्यत्रेत्यादि। गित्त्वे हि सति क्स्नोरिट्प्रतिषेधार्थमेवं व्याख्यायते, न च तस्य गित्त्वम्। किं तर्हि ? कित्त्वमेव। न च कित्त्वे सतीत्त्वं प्रसज्यते, यस्माद् 'ग्लाजिस्थश्च क्स्नुः' इत्यत्र स्था+आ इत्यकारप्रश्लेषः कृतः। तिष्ठतेः क्स्नुप्रत्ययान्तस्याकारान्तस्याकारान्ततैव यथा स्यात्, ईकारान्तता मा भूदित्येवमर्थः। आकारप्रश्लेषे हि सतीत्त्वापवादस्तिष्ठतेराकारादेशो भवति, अतस्तेन बाधितत्वादीत्त्वं न प्रवर्त्तते। तदेवं कित्त्वे सत्याकारप्रश्लेषात् स्थास्नुशब्दस्य सिद्धत्वात् न किञ्चिदेतत्। एतद् व्याख्यानमसारमित्यर्थः। तीर्णमित्यत्रापि किं पुनः कारणमसत्युपदेशग्रहणेऽत्र न स्यात्,

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


ऋतः । यद्येवम्, इत्त्वे हि कृते नायमृकारान्तो भविष्यति ? स्थानिवद्भावाद्भविष्यति । अनल्विधौ स्थानिवद्भावः, अल्विधिश्चायम् ? तस्मादनुवर्त्तयितव्यमुपदेश इति । तथा च सति–जागरितः, जागरितवानित्यत्रापि प्राप्नोति, तदर्थम् 'एकाचः' इत्यनुवर्त्तयिव्यम् ।

पदमञ्जरी

स्योपयोगः । कस्मात्पुनरसत्युपदेशाधिकारेऽत्र न स्यात् ? इत्यत आह—*इत्वे हि कृत इति* । किं पुनः कारणमित्वमेव तावद्भवति ? नित्यत्वात् । *मा भूदित्यादि* चोदकः । *कस्य पुनरित्यादीतरः* । *ऋत इत्यादि* चोदकः । *यद्येवमित्यादीतरः* । *स्थानिवद्भावादिति* चोदकः । *अनल्विधावित्यादीतरः* । अल्विधित्वं पुनरुगिति प्रत्याहारग्रहणात् । ननु चेत्वोत्वयोः कृतयोः सम्प्रत्यृकाराभावेऽप्येकदेशविकृतस्यानन्यत्वात्स एव धातुर्यस्य सनि विभाषा विहितेतीट्प्रतिषेधो भविष्यति ? नैतदस्ति; 'आदितश्च' इति योगविभागेन ज्ञापयिष्यते—यदुपाधेर्विभाषा तदुपाधेः प्रतिषेध इति, ततश्च ऋकारान्तत्वमुपाधिरिड्विकल्पे, स चेत्वे कृते नास्तीति कथं प्रतिषेधः स्यात् ! *तस्मादित्यादि* । यस्मादेवमसत्युपदेशग्रहणे तीर्ण इत्यत्र प्रतिषेधो न सेत्स्यति, तस्मात् 'उपदेशे' इत्यनुवर्तनीयम् । *तथा च सतीति* । 'उपदेशे' इत्यनुवर्त्तमाने सतीत्यर्थः । *अत्रापि प्राप्नोतीति* । जागर्तेरुपदेशावस्थायामुगन्तत्वात् । *तदर्थमिति* । जागरित इत्यादिसिद्ध्यर्थम् । जागरित इत्यादाविट्प्रतिषेधनिवृत्त्यर्थमिति वा । तथा च वार्त्तिकम्—'एकाज्ग्रहणं जागर्त्यर्थम्' इति पूर्वसूत्रेऽनुपयोगादिहार्थमेकाज्ग्रहणमित्यर्थः ।

*भाष्यकारस्त्वाह*–"यस्य क्वचिदिड्विकल्पो दृष्टः स धातुराश्रीयते—'यस्य विभाषा' इति, न तु तद्गतं विकल्पकारणमृकारादि । भवति चेत्वोत्वयोः कृतयोरयमपि स एव धातुरिति तीर्ण इत्यादौ सिद्धः प्रतिषेधः" इति । यद्येवम्,

न्यासः

यावता तरतिरयमुगन्तः पठ्यते ? इत्याह–इत्वे हीत्यादि । 'ऋत इद्धातोः' इतीत्वे च कृत उगन्तता विहतेत्यसत्युपदेशग्रहणे न स्यात्, तस्मिंस्तु सति भवति । यद्यप्युत्तरकालं तरतिरुगन्तो न भवति, तथाप्युपदेश एव । मा भूदेवमित्यादि चोदकः । कस्य पुनरित्यादीतरः । कृत इति चोदकः । यद्येवमित्यादीतरः । स्थानिवद्भावादिति चोदकः । अनल्विधावितीतरः । तत्रैतत् स्यात्—अयमप्यल्विधिरिति, अत आह–अल्विधिश्चायमिति । अल्विधित्वं पुनरुगिति प्रत्याहारग्रहणात् । तस्मादिति । आह–यस्मादेवमसत्युपदेशग्रहणे तीर्ण इत्यत्र प्रतिषेधो न प्राप्नोति, तस्मादुपदेश इत्यनुवर्त्तनीयम् । तथा च सतीत्यादि । उपदेशेऽनुवर्त्तमाने सतीत्यर्थः । जागरित इत्यत्रापि प्राप्नोतीति । जागर्तेरुपदेशावस्थायामुगन्तत्वात् । तदर्थमिति । जागरित इत्यादाविट्प्रतिषेधप्राप्तिनिवृत्त्य-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



ऊर्णोतिस्तु—

वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम् ।
आमश्च प्रतिषेधार्थमेकाचश्चेडुपग्रहात् ॥

प्रोर्णुतः । प्रोर्णुतवान् ॥

पदमञ्जरी

'विभाषा गमहनविदविशाम्' इति विशिना साहचर्यात्तौदादिकस्य विदेः क्वसाविटि विकल्पिते दैवादिकस्यापि विदेर्निष्ठायां प्रतिषेधः प्राप्नोति—विदितः, विदितवानिति? न; धातुभेदात् । कथं धातुभेदः? अर्थभेदाद्, अनुबन्धभेदाद्, विकरणभेदाच्च । तदेवं नार्थ उपदेशाधिकारेण, नापि एकाज्ग्रहणानुवृत्त्या । किमर्थं तर्हि पूर्वसूत्रे एकाज्ग्रहणम्? यङ्लुगन्तनिवृत्त्यर्थम् । ननु च क्रियमाणेऽप्येकाज्ग्रहणे यङ्लुगन्तस्य प्रतिषेधः प्राप्नोति, उपदेशग्रहणस्योभयविशेषणत्वात्, यथा बिभित्सतीति, तत्रैतत्स्यात्—क्रियमाणे एकाज्ग्रहणे 'यत्रैकाज्ग्रहणं किञ्चित्' इति वचनाद् यङ्लुगन्तस्य न भवतीति? तच्च वार्त्तम्; अक्रियमाणेऽपि चैकाज्ग्रहणे वचनान्तराश्रयणेन यङ्लुगन्तेऽपि परिहारः । तदेव वचनमेवं पठ्यताम्—यत्रोपदेशग्रहणमिति । अनुदात्तोपदेशलक्षणोऽनुनासिकलोपोऽपि तर्हि यङ्लुगन्तानां तसादिषु न स्यात्, तथा इवन्तानां दिविप्रभृतीनां यङ्लुगन्तानामपि स्नीड्विकल्पः प्राप्नोति । क्रियमाणे पुनरेकाज्ग्रहणे न भवति, 'एकाचः' इति तत्रानुवृत्तेः । यदि नेष्यते, एवं वक्ष्यामि—उपदेशेऽनुदात्तान्न यङ्लुक इति । अधिकारोऽयम्, यत्रैकाज्ग्रहणेन यङ्लुगन्तस्य व्यावृत्तिरिष्यते, तत्रोपतिष्ठते । एवमपि 'वावृतु वरणे' इति दिवादावनेकाजुदिदनुदात्तेत्पठ्यते । तथा च *भट्टिकाव्ये* प्रयोगः—'ततो वावृत्यमानाऽसौ रामशालां न्यविक्षत'[1] इति । तस्योदितो विकल्पितेटो निष्ठायाम् 'यस्य विभाषा' इति प्रतिषेधः प्राप्नोति । एकाज्ग्रहणे तु क्रियमाणे न भवति; 'एकाचः' इति तत्रानुवृत्तेः । तथा च 'निष्ठायां सेटि' (६.४.५२) इत्यत्रापि *वृत्तिकारेणो*क्तम्—'अथ पुनरेकाच इति तत्रानुवर्त्तते' इत्यादि ।

अन्ये पुन*र्भाष्यकारे*णैकाज्ग्रहणस्य प्रत्याख्यातत्वान्नैतदिष्यत इत्याहुः । तथा च *वृत्तिकारे*णापि पाक्षिकत्वेनैवोक्तम्—'अथ पुनरेकाच इति तत्रानुवर्त्तते' इति । कृतमतिविस्तरेण ॥

न्यासः

र्थम्; अर्थशब्दस्य निवृत्तिवाचित्वात् । यदि तर्हि 'एकाचः' इत्यनुवर्त्तते, प्रोर्णुतः, प्रोर्णुतवानित्यत्रेट्प्रतिषेधो न प्राप्नोति; ऊर्णोतेरनेकाच्त्वात्? इत्यत आह—वाच्य ऊर्णोर्णुवदित्यादि । अस्याः कारिकायाः पूर्वमेवार्थो व्याख्यात इति न पुनर्व्याख्यायते ॥

1. भ० का० (४. २८)।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


## सनि ग्रहगुहोश्च ॥ १२ ॥

ग्रह, गुह—इत्येतयोरुगन्तानां च सनि प्रत्यये परत इमागमो न भवति । जिघृक्षति । जुघुक्षति । उगन्तानां च–रुरूषति। लुलूषति ।

'सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्' इति विकल्पविधानात् श्रयतिरत्र नानुकृष्यते । ग्रहेर्नित्यं प्राप्तः । गुहेरूदित्वाद् विकल्पः ॥

## कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि ॥ १३ ॥

### पदमञ्जरी

*सनि ग्रहगुहोश्च* ॥ चकार उगनुकर्षणार्थः । न च 'इको झल्' इति सनः कित्त्वात् उगन्तानां पूर्वेणैव सिद्धिः, किं कारणम् ? झलादौ सनः कित्त्वम्, न चान्तरेणेट्प्रतिषेधं सन् झलादिर्भवति, तेन येषु प्रकृत्याश्रयः प्रतिषेधो नास्ति, तेष्वनेनैवेटि प्रतिषिद्धे झलादित्वे सनः कित्त्वमित्येष क्रमः । *जिघृक्षतीति* । 'रुदविद' इत्यादिना सनः कित्त्वम्, ग्रहिज्यादिसूत्रेण सम्प्रसारणम्, 'हो ढः', 'षढोः कस्सि', 'एकाचो बशो भष्' । *जुघुक्षतीति* । गुहू संवरणे, स्वरितेत्, 'हलन्ताच्च' इति सनः कित्त्वम् । अथ चकारेणोगिदिव श्रयतिरपि कस्मान्नानुकृष्यते ? अत आह–*श्रिस्वृयूर्ण्वित्यादि* ॥

*कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि* ॥ *क्रादय एव लिट्यनिट इति* । 'लिटयेव क्रादयो-

### न्यासः

सनि ग्रहगुहोश्च ॥ ग्रहेः सनि नित्यमिटि प्राप्ते गुहेरप्यूदित्वात् 'स्वरति' इत्यादिसूत्रेण विकल्पे प्राप्तेऽस्यारम्भः । चकारः 'उकः' इत्यनुकर्षणार्थः । ननु च 'इको झल्' इत्युगन्तानां किदेव सन्, तत्र पूर्वेणैव प्रतिषेधः सिद्धः, किमुक इत्यनुकर्षणार्थेन चकारेण ? नैतदस्ति; न हीट्प्रतिषेधमन्तरेण सनो झलादित्वमुपपद्यते, कुतः कित्त्वम् ! अनेन त्विटि प्रतिषिद्धे झलादित्वं सनो जायते, पश्चाद् गुणप्रतिषेधार्थं कित्त्वमिति क्रमः । जिघृक्षतीति । 'रुदविद' इत्यादिना सनः कित्त्वे सति ग्रह्यादिसूत्रेण सम्प्रसारणम्, 'हो ढः' इति ढत्वम्, 'षढो कः सि' इति कत्वम्, 'इणकोः' इति षत्वम्, 'एकाचो बशो भष्' इत्यादिना भष्भावेन गकारस्य घकारः, द्विर्वचनम्, अभ्यासकार्यम् । जुघुक्षत इति । 'गुहू संवरणे', 'पूर्ववत्सनः' इत्यात्मनेपदम् । रुरूषतीति । 'अज्झनगमां सनि' इति दीर्घः । अथ चकारेण यथोगन्तमनुकृष्यते, तथा चैकयोगनिर्दिष्टः श्रयतिरप्यनुकृष्येत ? इत्यत आह– श्रिस्वृयूर्णुभरज्ञपीत्यादि । श्रयतेः 'सनीवन्तर्ध' इतीटो विकल्पं विधास्यतीत्यतस्तस्येहानुवृत्तिरपार्थिकेति नानुकृष्यते ॥

कृसभृवृस्तुद्रुस्रुश्रुवो लिटि ॥ चकृव, चकृमेति । 'परस्मैपदानाम्' इत्यादिना वसमसोर्वमादेशौ । क्रादय एवेति । नियमस्य स्वरूपं दर्शयति । 'लिट्येव क्रादयोऽनिटः'

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



कृ, सृ, भृ, वृ, स्तु, द्रु, स्रु, श्रु—इत्येतेषां लिटि प्रत्यय इडागमो न भवति। कृ—चकृव, चकृम। सृ—ससृव, ससृम। भृ—बभृव, बभृम। वृञ्—ववृव, ववृम। वृङ्—ववृवहे, ववृमहे। स्तु—तुष्टुव, तुष्टुम। द्रु—दुद्रुव, दुद्रुम। स्रु—सुस्रुव, सुस्रुम। श्रु—शुश्रुव, शुश्रुम।

सिद्धे सत्यारम्भो नियमार्थः—क्रादय एव लिट्यनिटः, ततोऽन्ये सेट इति। बिभिदिव, बिभिदिम। लुलुविव, लुलुविम।

अनुदात्तोपदेशानामत्र प्रकृत्याश्रयः प्रतिषेधः, वृञ्वृङोस्तु प्रत्ययाश्रयः; तदुभयस्याप्ययं नियमः। वृञो हि थलि ववर्थेति निपातनाद् व्यवस्था।

पदमञ्जरी

ऽनिटः' इत्येष तु विपरीतोऽत्र नियमो न भवति; क्रादीनामनुदात्तोपदेशसामर्थ्यात्। 'कृतलब्धक्रीतकुशलाः', 'तमधीष्टो भृतो भूतः', 'परिवृतो रथः' 'स्तुतस्तोमयोः' इत्यादिनिर्देशाच्च।

केन पुनरेषामिट्प्रतिषेधः सिद्धः, यतो नियमार्थोऽयमारम्भः? इत्यत आह—*अनुदात्तोपदेशानामित्यादि*। वृङ्वृञ्भ्यामन्येऽनुदात्तोपदेशास्तेषां प्रकृत्याश्रयः'एकाच उपदेशे' इतीट्प्रतिषेधः सिद्धः। वृङ्वृञोस्तु प्रत्ययाश्रयः 'श्र्युकः किति' इत्येषः। तस्मादुभयस्यापि—प्रकृत्याश्रयस्य, प्रत्ययाश्रयस्य च। कथं पुनरयं प्रत्ययाश्रयस्य नियमः, यावता वृग्रहणं वृञस्थलि विध्यर्थं सम्भवति, न हि तत्र प्रकृत्याश्रयः प्रतिषेधः, वृञ उदात्तत्वात्; नापि प्रत्ययाश्रयः, थलः कित्त्वाभावात, असति प्रत्ययाश्रयस्य नियमे लुलुविथेत्यादाविण्न स्यात्? इत्यत आह—*वृञो हीति*। व्यवस्था= नियमः। इह तुष्टोथेत्यादौ 'ऋतो भारद्वाजस्य' इत्येतस्मान्नियमादिट् प्राप्नोति,

न्यासः

इत्येष तु विपरीतनियमो नाशङ्कनीयः; 'कृतलब्धक्रीतकुशलाः' इति 'तमधीष्टो भृतो भूतो भावी वा' इत्यादिनिर्देशात्।

केन पुनस्तेषामिट्प्रतिषेधः सिद्धः, यतः सिद्धे सत्यारम्भो नियमार्थ उच्यते? इत्यत आह—अनुदात्तोपदेशानामित्यादि। अनुदात्तोपदेशा वृङ्वृञ्भ्यामन्ये करोत्यादयः, तेषामेव 'अचः' इत्यादिना प्रकृत्याश्रयः प्रतिषेधः सिद्धः। वृङ्वृञोस्तु 'श्र्युकः कितिः' इति प्रत्ययाश्रयः, न तु प्रकृत्याश्रयः; तयोरुदात्तत्वात्। तदित्यादि। यत एव तेषां यथायोगं प्रकृत्याश्रयः प्रत्ययाश्रयश्च प्रतिषेधः सिद्धः, तस्मादुभयस्यापि प्रतिषेधस्य प्रयुक्तस्यायं नियम इत्यर्थः। धात्वन्तरेभ्यो व्यवच्छिद्य करोत्यादीनां प्रतिषेधस्येद नियमो वेदितव्यः।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



स्तुद्रुस्रुश्रुवां तु 'ऋतो भारद्वाजस्य' इत्यस्मादपि नियमाद् य इट् प्राप्नोति सोऽपि नेष्यते—तुष्टोथ, दुद्रोथ, सुस्रोथ, शुश्रोथ ।

पदमञ्जरी

ययिथेत्यादिवत् । यथा हि ययिथ, पपिथेत्यादौ 'आर्धधातुकस्य' इतीट् प्राप्तः 'एकाचः' इति निषिद्धः, पुनः क्रादिनियमात् प्राप्तः 'अचस्तास्वत्थलि' इति प्रतिषिद्धः, ततः 'ऋतो भारद्वाजस्य' 'थलि प्रतिषेधो नान्येभ्यः' इति नियमात्पक्षे इड् भवति, तथात्रापि स्यात् । कथं खलु क्रादिनियमस्य बाधकम् 'अचस्तास्वत्' इति प्रतिषेधं बाधमानो भारद्वाजनियमः क्रादिप्रतिषेधं न बाधते ? 'कृसृभृवृ' इत्येतेषु पुनर्वायं दोषस्तेषामृकारान्तत्वेन भारद्वाजपक्षेऽपीटः प्रतिषेधात् । एवं तर्हि स्तुद्रुस्रुश्रुवां ग्रहणं विध्यर्थं भविष्यति, असति हि विधेये नियमो भवति, इह चास्ति विधेयम्, किम् ? थलि भारद्वाजनियमादिटः प्राप्तस्य प्रतिषेधः, इतरेषां तु क्रादीनां ग्रहणं नियमार्थं भविष्यतीति । बिभिदिव, लुलुविवेत्यादावपि न दोषः । कथं पुनस्तुष्टुमः, अत्र हि क्रादिनियमादिट् प्राप्नोति ? नैष दोषः; स्तुद्रुस्रुश्रुवां ग्रहणमुभयोरपि प्रतिषेधार्थम् । यश्च क्रादिनियमादिट् प्राप्तः, यश्च भारद्वाजनियमात्, तयोरुभयोरपीत्यर्थः ।

यद्येवम्, येन नाप्राप्तिन्यायेन क्रादिनियममेव स्तुद्रुस्रुश्रुवां प्रतिषेधो बाधेत, न तु विकल्पेन प्राप्तं भारद्वाजनियमम्, ततश्चासौ स्यादेव ? इत्याशङ्क्याह—स्तुद्रुस्रुश्रुवांत्विति । एतच्च पुरस्तात्प्रतिषेधकाण्डकरणाल्लभ्यते । तथा हि—प्राप्तिपूर्वकत्वात्प्रतिषेधस्य पूर्वं विधिप्रकरणं पठितव्यम्, 'आर्धधातुकस्य' इत्यारभ्य

न्यासः

कथं पुनरेतद् वृञं प्रति थलि नियमार्थमुपपद्यते ? सति हि प्रतिषेधे नियमो भवति । वृञस्थलीट्प्रतिषेधः । तस्य हि नात्र प्रकृत्याश्रयः प्रतिषेधः सिद्धः; उदात्तत्वात् । नापि प्रत्ययाश्रयः; थलः कित्त्वाभावात् । तस्मात् वृञं प्रति थलीट्प्रतिषेधार्थतैव युक्ता, न नियमार्थता ? इत्यत आह—वृञो हीत्यादि । व्याख्या = नियमः । 'बभूथाततन्थजगृभ्मववर्थेति निगमे' इति निपातनाद् वृञो निगम एव थलीट्प्रतिषेधेन भवितव्यम्, न भाषायाम् । यत एवं व्यवस्था तस्मान्नायं वृञस्थलीट्प्रतिषेधः; अन्यथा ववर्थेति निपातनस्य वैयर्थ्यं स्यात् । तस्मात् प्रतिषेधाभावात् वृञोऽप्येतत् सूत्रं नियमार्थमेव विज्ञायत इत्येकान्त एषः ।

स्तुद्रुस्रुश्रुवां त्वित्यादि । अपिशब्द आर्धधातुकलक्षणोऽपि य इट् प्राप्नोति सोऽपि नेष्यत इति दर्शनार्थः । कथं पुनरिष्यमाणोऽपि लभ्यते, पुरस्तात् प्रतिषेधकाण्डस्य बलीयस्त्वात् । इह च 'न वृद्भ्यश्चतुर्भ्यः' इत्यस्यानन्तरमिदं प्रतिषेधकाण्डं कर्तुं युक्तम् । एवं द्विष्प्रतिषेधाश्रयणं न कर्त्तव्यं स्यात् । यदयं पुरस्तात् प्रतिषेधं करोति, तस्यैतत्

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



* कृञोऽसुट्कस्येति वक्तव्यम् * । ससुट्कस्य इडागमो यथा स्यात् । सञ्चस्करिव । सञ्चस्करिम ।

'ऋतो भारद्वाजस्य' इत्येतदप्यसुट्कस्यैवेष्यते—सञ्चस्करिथ ॥

पदमञ्जरी

'ईडजनोर्ध्वे च' इत्येवमन्तम्, पश्चात्प्रतिषेधप्रकरणम्, तद्यथाऽन्यत्रापि—'कर्त्तरि कर्मव्यतिहारे', 'न गतिहिंसार्थेभ्यः' इति । तत्रायमर्थो द्विरिड्ग्रहणं न कर्त्तव्यं भवति, प्रकृतमनुवर्त्तते । नन्वेवम्, 'रुदादिभ्यः सार्वधातुके' इति सार्वधातुकग्रहणम्, 'लिङः सलोपोऽनन्त्यस्य' इत्यत्र विच्छिद्येत ? एवं तर्हि 'न वृद्भ्यश्चतुर्भ्यः' इत्यत्रैव पठितव्यम्, एवं हि विध्युत्तरकालश्च प्रतिषेधः कृतो भवति, द्विश्चेड्ग्रहणं न कर्त्तव्यं भवति, सार्वधातुकग्रहणं च सलोपे न विच्छिद्यते, अपि च द्विःप्रतिषेधो न कर्त्तव्यो भवति; सोऽयमेवं सिद्धे यत्पुरस्तात्प्रतिषेधकाण्डं करोति, तस्यैतत्प्रयोजनम्—अनाश्रितविधानविशेषमिण्मात्रमनारभ्याधीतेन प्रतिषेधेन यथा बाध्येतेति । यदि तु *भारद्वाज*नियमात्परमिदं काण्डं क्रियेत, ततो मध्येऽपवादन्यायेन *भारद्वाज*नियमः 'अचस्तास्वत्' इति प्रतिषेधमेव बाधेत, न तु क्रादिनिषेधमिति पुरस्तात्प्रतिषेधकरणे न कश्चिद्दोषः ।

अपर आह—"यत्र तत्र वा प्रतिषेधकरणमस्तु, सर्वथा तु *भारद्वाज*नियमः 'अचस्तास्वत्' इति योगद्वयेन थलि यः प्रतिषेधः प्राप्तस्तस्यैव नियामकः, 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति, ततश्च स्तुद्रुस्रुश्रुवामपि *भारद्वाज*नियमेन 'अचस्तास्वत्' इति प्रतिषेध एव निवर्त्तते, न तु क्रादिप्रतिषेधः" इति । तन्मते पुरस्तात्प्रतिषेधकरणस्य प्रयोजनमुत्तरत्र दर्शयिष्यामः ।

*कृञोऽसुट इति वक्तव्यमिति* । कृतेऽपि सुटि करोतिर्भवत्येवेति प्रतिषेधप्रसङ्गः ॥

न्यासः

प्रयोजनम्—इण्मात्रस्यानाश्रितविशेषविधानस्य प्रतिषेधो विज्ञायते । पुरस्तात् प्रतिषेधे क्रियमाणे सति विशेषमनाश्रित्येण्मात्रस्यायमपवादो भवति । तेन यावानिट् प्राप्तस्तस्य सर्वस्य प्रतिषेधो भवति सिद्धः । अन्यस्त्वाह—'नेटि' इत्यनुवर्त्तमाने पुनरिड्ग्रहणसामर्थ्यात्, पुनः प्रतिषेधसामर्थ्याच्चेण्मात्रस्य प्रतिषेधो विज्ञायते ।

कृञोऽसुट्कस्येति वक्तव्यमिति । करोतेरविद्यमानसुटः प्रतिषेधो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । किमर्थम् ? ससुट्कस्येडागमो यथा स्यात् । तत्रेदं व्याख्यानम्—'द्वन्द्वे घि' इत्यनेन स्तुप्रभृतीनामन्यतमस्य घिसंज्ञकस्य पूर्वनिपातमकृत्वैतत् सूचितम्—यथेह पूर्वनिपातलक्षणं व्यभिचरति स्वविषये न प्रवर्त्तते, तथेदमपीति । तेन यदा करोतिः ससुट्कः, तत्र न प्रवर्त्तत इति । सञ्चस्करिव, सञ्चस्करिमेति । 'सम्पर्युपेभ्यः करोतौ भूषणे' इति सुडित्यनुवर्तमाने 'अडभ्यासव्यवायेऽपि' इति सुट् क्रियते ।

ऋतो भारद्वाजस्येत्येतदप्यसुट्कस्यैवेष्यत इति । 'कृञः' इति सम्बध्यते । कथं पुनर-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## श्वीदितो निष्ठायाम् ॥ १४ ॥

श्वयतेरीदितश्च निष्ठायामिडागमो न भवति। शूनः, शूनवान्। ईदितः—'ओलजी', लग्नः, लग्नवान्। 'ओविजी'—उद्विग्नः, उद्विग्नवान्। 'ओदितश्च' इति निष्ठातकारस्य नकारः। 'दीपी'—दीप्तः, दीप्तवान्।

पदमञ्जरी

*श्वीदितो निष्ठायाम्* ॥ श्विग्रहणं किमर्थम्, न सम्प्रसारणे कृते परस्य पूर्वत्वे चोगन्तत्वे सति 'श्र्युकः किति' इत्येव सिद्धम्? न सिध्यति; श्वि+त इति स्थिते परत्वादिट् प्राप्नोति। अथापि पूर्वं सम्प्रसारणम्? एवमपि 'श्र्युकः किति' इत्यत्र 'उपदेशे' इत्यनुवृत्तेरस्य चोपदेशे इदन्तत्वान्न सिध्यति।

न्यासः

रसुट्कस्यैव भवतीति लभ्यते? यथा लभ्यते तच्च श्रूयताम्-तत्र हि 'उदितो वा' इत्यतो वेत्यनुवर्तते मण्डूकप्लुतिन्यायेन, सा च व्यवस्थितविभाषा, तेनासुट्कस्यैव भवतीति ॥

श्वीदितो निष्ठायाम् ॥ शून इति। वच्यादिसूत्रेण सम्प्रसारणम्, 'हलः' इति दीर्घः। लग्न इति। नत्वस्यासिद्धत्वात् 'चोः कुः' इति कुत्वम्। उड्डीन इति। 'डीङ् विहायसा गतौ'।

ननु डीङ उदात्तत्वान्निष्ठायामिट् प्राप्नोति, तस्य प्रतिषेधो वक्तव्यः; अन्यथा हि उड्डयित इत्यनिष्टं रूपं स्यादिति यो मन्येत, तं प्रत्याह—डीङ इत्यादि। ओदितामिति। स्वादीनामित्यर्थः। 'स्वादय ओदितः' इति वचनात्। स्वादयः 'षूङ् प्राणिगर्भविमोचने' इत्यादयः। कथं कृत्वा ज्ञापकः? इत्याह–स हीत्यादि। स्वादीनां ह्योदितां मध्ये तस्यैवमर्थः पाठः—निष्ठातकारस्यौदित उत्तरस्य नत्वं यथा स्यात्। स्यादेतत्—इट्यपि कृते नत्वं भविष्यतीति? इत्याह—नत्वं चेत्यादि। 'तस्मादित्युत्तरस्य' इत्यत्र निर्दिष्टग्रहणस्यानन्तर्यार्थस्यानुवृत्तेरोदितो धातोरनन्तरस्य निष्ठातकारस्य नत्वं विधीयते। तत्र यदि डीङः परस्या निष्ठाया इट् स्यात्, तदा सत्यप्योदित्त्वे इटा व्यवहितत्वान्नत्वेन न भवितव्यम्। नित्यौदितां मध्ये तस्य पाठोऽनर्थकत्वान्न कृतः स्यात्, स चास्ति; तस्मात् स एव पाठो ज्ञापकः—डीङ उत्तरस्या निष्ठाया इण्न भवतीति। ननु स्वादिषु पाठसामर्थ्याद् व्यवधानेऽपि स्यात्, कथमसौ ज्ञापकः?. नैतदस्ति; एवं ह्यानन्तर्यपरिभाषा बाधिता भवति, शास्त्रञ्चानिष्टं स्यात्, एतच्चायुक्तम्; न ह्यनिष्टार्था शास्त्रे प्रक्लृप्तिरस्ति। तस्माद् यथानन्तर्यपरिभाषा न बाध्यते शास्त्रञ्च नानिष्टं भवति, ओदितां मध्ये डीङः पाठश्च सफलो भवति—स प्रकारोऽभ्युपगन्तव्यः। ततश्चौदितां मध्ये डीङः पाठो ज्ञापक एव। अपरः प्रकारः—'ओदितश्च' इत्यत्रौदित इत्येतद् द्विरावर्तयिष्यते 'तस्मादित्युत्तरस्य' इत्यस्याः परिभाषाया द्विरुपस्थानार्थम्, तत्रास्या यद् द्वितीयमुपस्थानं तस्यैतत् प्रयोजनम्—डीङोऽप्यनन्तरस्यैव निष्ठातकारस्य नत्व

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



डीङस्त्वोदितां मध्ये पाठो ज्ञापको निष्ठायामनिट्त्वस्य। स हि नत्वार्थः, नत्वं च निष्ठातोऽनन्तरस्य विधीयते। उड्डीनः। उड्डीनवान्।

निष्ठायामित्यधिकारः 'आर्धधातुकस्येड्वलादेः' इति यावत्॥

## यस्य विभाषा॥ १५॥

यस्य धातोर्विभाषा क्वचिदिडुक्तस्तस्य निष्ठायां परत इडागमो न भवति। वक्ष्यति--'स्वरतिसूतिसूयतिधूञूदितो वा' विधूतः, विधूतवान्। गुहू—गूढः, गूढवान्। 'उदितो वा'—वृद्धः, वृद्धवान्।

'तनिपतिदरिद्राणामुपसंख्यानम्' इति पतेर्विभाषितेट्कस्यापि 'द्वितीयाश्रितातीतपतित' इति निपातनादिडागमः॥

### पदमञ्जरी

डीङ इत्यादि। डीङ्यं स्वादीनां मध्ये पठ्यते, ते च ओदितः, 'स्वादय ओदितः' इति वचनात्, कथमेतज्ज्ञापकम्? इत्यत आह—*स हीति*। *निष्ठातः* निष्ठातकारस्य। *अनन्तरस्य विधीयत इति*। इटि सत्यानन्तर्यं विहन्येत।

एवञ्च सति श्वयतेरप्यत्र ग्रहणं शक्यमकर्त्तुम्, तथा ओलस्जीप्रभृतीनामपि; उक्तेनैव न्यायेनेडभावस्य सिद्धत्वात्॥

*यस्य विभाषा*॥ 'यस्य विभाषा' इत्यनुवादवाक्यम्। अत्र च 'इड्विहितः' इति वाक्यशेषः। यत्तदोर्नित्यसम्बन्धात्तस्य निष्ठायामिण्न भवतीति प्रतिषेधवाक्यं सम्पद्यते। *निपातनादिडागम इति*। अपर आह–अनित्योऽयं प्रतिषेधः; 'कृती छेदने' इत्यस्य इदित्करणसामर्थ्यात्। यदि ह्ययं विधिर्नित्यः स्यात् 'सेऽसिचि' इत्यनेन विभाषितेट्त्वादनेनैव प्रतिषेधस्य सिद्धत्वादीदित्करणमनर्थकं स्यादिति॥

### न्यासः

यथा स्यादिति। यदि च डीङो निष्ठायामिट् स्यात्, इटा व्यवहितत्वान्नत्वं न स्यात्। न च शक्यते वक्तुम्—व्यवधानेऽपि पाठसामर्थ्याद् भविष्यतीति। एवं हि परिभाषाया द्विरुपस्थानमनर्थकं स्यात्, एतच्चायुक्तम्; तस्मादोदितां मध्ये डीङः पाठो ज्ञापक एव।

श्विग्रहणं शक्यमकर्तुम्, ओदित्करणादेव निष्ठायामिण्न भविष्यति, ओदित्त्वं हि नत्वार्थं क्रियते, नत्वं च निष्ठातोऽनन्तरस्य विधीयते; यदि च ततः परस्या निष्ठाया इट् स्यात्, ओदित्त्वमनर्थकं स्यात्? वैचित्र्यार्थं श्विग्रहणं वेदितव्यम्॥

यस्य विभाषा॥ विधूत इति। 'धूञ् कम्पने'। गूढ इति। 'गुहू संवरणे'। ढत्वादिषु कृतेषु 'ढ्रलोपे' इत्यादिना दीर्घः।

अथेह कस्मात् प्रतिषेधो न भवति—पतित इति, भवति हि पतिर्विभाषितेट्, 'सनीवन्तर्ध' इत्यत्र 'तनिपतिदरिद्राणामुपसंख्यानम्', इति विकल्पेनोपसंख्यानात्? इत्यत आह–द्वितीयाश्रितेत्यादि॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


## आदितश्च ॥ १६ ॥

आदितश्च धातोर्निष्ठायामिडागमो न भवति । ञिमिदा--मिन्नः, मिन्नवान् । ञिक्ष्विदा—क्ष्विण्णः, क्ष्विण्णवान् । ञिष्विदा–स्विन्नः, स्विन्नवान् । चकारोऽनुक्तसमुच्चयार्थः । आश्वस्तः । वान्तः ।

योगविभागकरणं किमर्थम्, 'आदितश्च विभाषा भावादिकर्मणोः' इत्येवं पठितव्यम्, अन्यत्र हि भावादिकर्मभ्याम् 'यस्य विभाषा' इति प्रतिषेधो भविष्यति ? ज्ञापनार्थमेतत् । ज्ञापयति—'यदुपाधेर्विभाषा

### पदमञ्जरी

*आदितश्च* ॥ *आश्वस्तः, वान्त इति* । भाष्यवार्त्तिकयोरनुक्तमपि प्रयोगबाहुल्या-दुक्तम् । *योगविभागकरणं किमिति* । योगविभाग एव तावद्दोषः । अपि च एक-योगत्वे चकारो न कर्त्तव्यो भवतीति प्रश्नः । एवं चोत्तरग्रन्थे चकारो न पठि-तव्यः । पठ्यमानस्तु अनुक्तसमुच्चयार्थो व्याख्येयः । कथं पुनरेकयोगत्वे भावादिकर्मभ्यामन्यत्र प्रतिषेधः सिद्धः ? तत्राह—*अन्यत्रेति* । *यदुपाधेरिति* । उपाधिरभिधेयादिर्भेदकः । यद्युपाधीनां भेदकत्वं न स्यात्, योगविभागोऽनर्थकः स्यात् । भेदकत्वे तु तेषां भावादिकर्मणोर्विकल्पविधानात्कर्तृकर्मणोः प्रतिषेधो न स्यादिति तदर्थो योगविभागः कर्त्तव्यः । किमेतस्य ज्ञापने प्रयोजनम् ?

### न्यासः

**आदितश्च** ॥ भावादिकर्मणोरनन्तरं विभाषां वक्ष्यति, ततोऽन्यत्र कर्त्तरि कर्मणि चायं प्रतिषेधो विज्ञायते । **आश्वस्त इति** । 'श्वस प्राणने' । **वान्त इति** । 'टुवम उद्-गिरणे । 'अनुनासिकस्य क्विझलोः क्ङिति' इति दीर्घः । **योगविभागकरणं किमर्थमिति** पृष्टस्य 'आदितश्च विभाषा भावादिकर्मणोः' इति यद्येकयोगः क्रियते, ततो भावादि-कर्मभ्यामन्यत्र प्रतिषेधो न स्यादिति प्रतिवचनमाशङ्क्याह—**आदितश्चेत्यादि** । 'आदितश्च विभाषा भावादिकर्मणोः', इत्येकयोगे भावादिकर्मणोर्विभाषायां विहितायां ततोऽन्यत्र कर्त्रादौ 'यस्य विभाषा' इति प्रतिषेधो भविष्यति, तस्मादपार्थकं योग-विभागकरणम् । **ज्ञापनार्थमित्यादिना**ऽपार्थकत्वं परिहरति । **यदुपाधेर्विभाषा तदुपाधे-रिति** । उभयत्रापि बहुव्रीहिः । उपाधिः=विशेषणम् । स चेतदर्थ उपाधिर्विज्ञेयः । यदि यदुपाधेर्विभाषा तदन्योपाधेरपि प्रतिषेधः स्यात्, तदा योगविभागं न कुर्यात् । एक-योगेनापि भावादिकर्मणोर्विहिते विकल्पे ततोऽन्यत्र 'यस्य विभाषा' इति प्रतिषेधो लभ्यते एव, कृतश्च योगविभागः, तस्मादेतेन योगविभागकरणेन सूचितम्—यदुपाधे-र्विभाषा तदुपाधेर्निषेध इति । **तेनेत्यादिना** ज्ञापकस्य प्रयोजनं दर्शयति । अत्र विदे-र्लाभार्थस्य विभाषेति विधिना तौदादिकेन साहचर्याल्लाभार्थस्य तौदादिकस्य ग्रह-णम् । 'यस्य विभाषा' इति च तस्यैव प्रतिषेधो भवति, नान्यस्य । यदि यदुपाधे-


CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तदुपाधेः प्रतिषेधः' इति । तेन 'विभाषा गमहनविदविशाम्' इत्यत्र विदेर्लाभार्थस्य विभाषेति ज्ञानार्थस्य प्रतिषेधो न भवति । विदितः । विदितवान् ॥

**विभाषा भावादिकर्मणोः ॥ १७ ॥**

भावे आदिकर्मणि च आदितो धातोर्विभाषा निष्ठायामिडागमो न भवति । मिन्नमनेन, मेदितमनेन । प्रमिन्नः, प्रमेदितः ।

सौनागाः कर्मणि निष्ठायां शकेरिटमिच्छन्ति विकल्पेन । शकितो घटः कर्तुम् । शक्तो घटः कर्तुम् ।

भावे न भवत्येव—शक्तमनेन । अस्यतेर्भावे—असितमनेन । आदिकर्मणि च न भवत्येव–अस्तः काण्डः ॥

**पदमञ्जरी**

इत्यत आह—*तेनेति* । *लाभार्थस्य विभाषेति* । अत्र हेतुर्वक्ष्यते । यदि तर्ह्युपाधिर्भेदकः, ततः 'उदितो वा' इति क्त्वाप्रत्यये भाववाचिनि विकल्प इति निष्ठायामपि भाव एव प्रतिषेधः स्यात्, नार्थान्तरे । शब्देनाश्रीयमाणो ह्युपाधिर्भेदकः । न च 'उदितो वा' इत्यत्र भाववाचित्वं शब्देनाश्रितम् । तथा च–'तेन निर्वृत्तम्', 'निर्वृत्तेऽक्षद्यूतादिभ्यः' इत्यादेरुपपत्तिः ॥

*विभाषा भावादिकर्मणोः ॥ मेदितमनेनेति* । 'निष्ठा शीङ्' इति कित्त्वप्रतिषेधाद् गुणः । *प्रमिन्न इति* । 'आदिकर्मणि क्तः कर्त्तरि च' इति कर्त्तरि क्तः ।

*सौनागा इति* । सुनागस्याचार्यस्य शिष्याः=सौनागाः । *शकितो घटः कर्तुमिति* । यद्यपि शकिः केवलोऽकर्मकः, तथापि तुमुनन्तवाच्यक्रियाविशेषणत्वेन सकर्मको भवति । तथा च कर्मणि लादयो दृश्यन्ते—अयं योगः शक्योऽवक्तुम्, अयमर्थः शक्यते वक्तुमिति ॥

**न्यासः**

विभाषा तदुपाधेर्निषेध इति ज्ञाप्यते, 'जृव्रश्चोः क्त्वि', 'उदितो वा' इति क्त्वाप्रत्यये भावविषये विभाषिते 'यस्य विभाषा' इति भावविषय एव निष्ठायामिट्प्रतिषेधः स्यात्, न कर्तृकर्मणोः ? नैष दोषः; आश्रीयमाणो हि धर्मो भेदको भवति । न च क्त्वाप्रत्यये निष्ठायां वा भिन्नमभिधेयं निमित्तत्वेनाश्रितम् । तस्माद् भवत्येवात्र प्रतिषेधः । अत्र लिङ्गम्—'तेन निर्वृत्तम्' इति निर्देशः ॥

**विभाषा भावादिकर्मणोः ॥** मिन्नमनेनेति । 'नपुंसके भावे क्तः' । मेदितमिति । 'निष्ठा शीङ्' इत्यादिना कित्त्वप्रतिषेधे गुणः । प्रमिन्न इति । प्रशब्द आदिकर्म द्योतयति । आदिकर्मेति । आदिभूतक्रियाक्षण इति । तस्मिन् भूतत्वेन विवक्षिते

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमःसक्ताविस्पष्टस्वरानायासभृशेषु ॥ १८ ॥

क्षुब्ध, स्वान्त, ध्वान्त, लग्न, म्लिष्ट, विरिब्ध, फाण्ट, बाढ—इत्येते निपात्यन्ते यथासंख्यं मन्थ, मनः, तमः, सक्त, अविस्पष्ट, स्वर, अनायास, भृश—इत्येतेष्वर्थेषु[1]। क्षुब्ध इति भवति मन्थाभिधानं चेत् । क्षुब्धो मन्थः । क्षुभितमन्यत् ।

क्षुभितं मन्थेन, क्षुब्धा गिरिनदी —इत्येवमाद्युपमानाद्भविष्यति ।

**पदमञ्जरी**

क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमसक्ताविस्पष्टस्वरानायासभृशेषु ॥ *मन्थाभिधानं चेदिति* । समुदायेन चेन्मन्थोऽभिधीयत इत्यर्थः । एतेन समुदायानामभिधेयभावेन मन्थादय इहोपात्ता इति दर्शयति । यदि तु धात्वर्थोपाधित्वेनाश्रीयेरन्—मन्थादिसाधने धात्वर्थे क्षुब्धादयो निपात्यन्त इति, तदा क्षुभितं मन्थेनेत्यादावपि स्यात् । द्रवद्रव्यसम्पृक्ताः सक्तवः=मन्थः । दधिमन्थान्मधुमन्थाँश्चेति हि दृश्यते । अन्ये तु मथ्यतेऽनेनेति मन्थनदण्डः खञ्जकः=मन्थ इत्याहुः । मन्थादिषु क्षुब्धादिशब्दानां चलनादिक्रियायोगो यथासम्भवं द्रष्टव्यः । *उपमानादिति* । उपमानम्=सादृश्यम्, तच्च यथासम्भवं द्रष्टव्यम् ।

**न्यासः**

यः क्तः स पुनः 'आदिकर्मणि क्तः कर्तरि च' इत्यनेन कर्त्तरि कारके भवति । शक्तो घटः कर्तुम्, शकितो घटः कर्तुमित्यस्य सिद्धये विभाषेति योगविभागोऽत्र कर्त्तव्यः । तत्र 'आदितः' इति नानुवर्त्तनीयम् । 'भावादिकर्मणोः' इत्यत्र द्वितीये योगेऽनुवर्त्तनीयमेव ।

क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमःसक्ताविस्पष्टस्वरानायासभृशेषु ॥ क्षुब्ध इति । 'क्षुभ सञ्चलने' इत्यस्येडभावो निपात्यते । मन्थाभिधानं चेदिति । समुदायेन चेन्मन्थोऽभिधीयते । मन्थ इति द्रवद्रव्यसम्पृक्ताः सक्तव उच्यन्ते । क्षुब्धो मन्थ इति । चलितो मन्थ इत्यर्थः । क्षुभितं मन्थेनेति । नात्र मन्थोऽभिधीयते, किं तर्हि ? तत्साधनं चलनम् । अथ मन्थाभिधाने क्षुब्धशब्दो निपात्यते, क्षुब्धा गिरिनदी, क्षुब्धा सेना, क्षुब्धः समुद्रः—इत्यादिं नोपपद्यते ? इत्यत आह—क्षुब्धा गिरिनदीत्यादि । चलितमन्थसाधर्म्याद् गिरिनद्यादिषु तथा व्यपदेश इति दर्शयति । यथा क्षुब्धस्य मन्थस्य चलनं प्रति साधनभावः, तथा गिरिनद्यादेरर्थस्य चलनं प्रति साधनभावः क्षुब्धमन्थसाधर्म्यात् क्षुब्धशब्देन व्यपदिश्यते, यथा—गोसाधर्म्याद् गोशब्देन वाहीक उच्यते ।

१. 'क्षुभ 'सञ्चलने' इत्यधिकं क्वचित ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



स्वान्तमिति मनोऽभिधानं चेत् । स्वनितमन्यत्, स्वनितो मृदङ्गः । स्वनितं मनसा ।

ध्वान्तमिति भवति तमोऽभिधानं चेत् । ध्वनितमन्यत् । ध्वनितो मृदङ्गः । ध्वनितं तमसा ।

लग्नमिति भवति सक्तं चेत् । लगितमन्यत् ।

म्लिष्टमिति भवति अविस्पष्टं[1] चेत् । म्लेच्छितमन्यत् । इत्त्वमप्येकारस्य निपातनादेव ।

विरिब्धमिति स्वरश्चेत् । विरेभितमन्यत् । 'रेभृ शब्दे' इत्यस्यैतन्निपातनम् । अन्ये तु विरिभितमन्यदिति पठन्ति । रभि सौत्रं धातुं पठन्ति, ते विरिभितमिति प्रत्युदाहरन्ति ।

पदमञ्जरी

स्वान्तशब्देन विषयेष्वविक्षिप्तमनाकुलं मन उच्यते । *स्वनितं* शब्दायितमित्यर्थः । *मनसेति* । कर्त्तरि करणे वा तृतीया । एवं *ध्वनितं तमसेत्यत्रापि* ।

*लग्नमिति* । 'रगे लगे ष्टगे संवरणे', अत्र निष्ठानत्वमपि निपात्यते ।

*म्लिष्टमिति* । 'म्लेच्छ अव्यक्ते शब्दे' । *म्लेच्छितमिति* । अपभाषितमित्यर्थः । अत्रार्थस्याविस्पष्टतया शब्दस्याविस्पष्टत्वम्; अपशब्दानामपि स्वरूपेणाभिव्यक्तत्वात् । उदाहरणेषु वर्णानभिव्यक्तिः = विस्पष्टत्वम् ।

न्यासः

स्वान्तम्, ध्वान्तमिति । 'स्वन ध्वन शब्दे' । इडभावो निपात्यते । एवमुत्तरेष्वप्युदाहरणेषु वेदितव्यम् । बाह्येषु विषयेष्वविक्षिप्तमनाकुलं मनः=स्वान्तमुच्यते । 'अनुनासिकस्य क्विझलो क्ङिति' इति दीर्घः । स्वनितं मनसेति । मनःकर्तृकं स्वननमुच्यते, न तु मनः । ध्वनितं तमसेति । अत्रापि तमःकर्तृकं ध्वननमुच्यते, न तमः ।

लग्न इति । 'रगे लगे सङ्गे' । निष्ठानत्वं निपात्यते । म्लिष्टमिति । 'म्लेच्छ अव्यक्तायां वाचि', व्रश्चादिसूत्रेण षत्वम्, ष्टुत्वञ्च । म्लेच्छितमिति । अर्थस्याविस्पष्टत्वेऽपि स्वरूपस्य विस्पष्टत्वाद्भवति प्रत्युदाहरणम् ।

विरिब्धमिति । अत्राप्येकारस्येत्त्वमपि निपात्यते । स्वरश्चेदिति । स्वरशब्दोऽत्र ध्वनौ वर्त्तते ।

---

१. 'अविस्पष्टार्थम्' इति पाठान्तरम् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



फाण्टमिति भवत्यनायासश्चेत् । फाणितमन्यत् । यदश्रृतमपिष्टं च कषायमुदकसम्पर्कमात्राद् विभक्तरसमीषदुष्णं तत्फाण्टम् । तदल्पप्रयत्नसाध्यत्वादनायासेन लक्ष्यते ।

बाढमिति भवति भृशं चेत् । बाहितमन्यत् । 'बाहृ प्रयत्ने' इत्यस्य धातोरेतन्निपातनम् । अतिशयश्च भृशमिहोच्यते ॥

धृषिशसी वैयात्ये ॥ १९ ॥

वियातस्य भावो वैयात्यम्=प्रागल्भ्यम्, अविनीतता । तत्र

पदमञ्जरी

फाण्टमित्यादि । कः पुनरत्रानायासो विवक्षितः ? इत्यत आह—*यदश्रृतमित्यादि* । यस्य व्याधेर्यदौषधं जातं तस्य पञ्चधा कल्पना—रसः, कल्कः, श्रृतः, शीतः, फाण्ट इति । रसः=स्वरसः । कल्कः=पिष्टम् । श्रृतम्=क्वाथः । शीतो नाम=चूर्णमौषधजातमुदके प्रक्षिप्य रात्रावधिवासितमुदकं प्रातः पीयते । तदेवोष्णोदके प्रक्षिप्य सद्योऽभिषुत्य पूत्वा यत्पीयते सः=फाण्टः । यथाह वाग्भटः—'सद्योऽभिषुत्य पूतस्तु फाण्टः' इति । पञ्चाप्येते कषायाः । तत्राश्रृत*मिति* क्वाथस्य व्यावृत्तिः, *अपिष्टमिति* कल्कस्य, उदक*सम्पर्केणेति* स्वरसस्य, *ईषदुष्णमिति* शीतस्य, *मात्र*शब्दः स्वभावानुवादः । *विभक्तरसम्* प्रागवस्थाया भिन्नरसम् । यदेवम्भूतं कषायं तत्फाण्टमित्यर्थः । कषायशब्द उभयलिङ्गः । कथं पुनरेतदनायासशब्देनोच्यते ? लक्षणया । यदाह—*अनायासेनेति* ॥

धृषिशसी वैयात्ये ॥ 'ञिधृषा प्रागल्भ्ये', 'शसु हिंसायाम्', षष्ठ्यर्थे प्रथमा ।

न्यासः

फाण्टमिति । 'फण गतौ' । पूर्ववद्दीर्घः, ष्टुत्वञ्च । कः पुनरयमनायासो नाम ? इत्याह—यदश्रृतमित्यादि । अश्रृतमित्यपक्वम् । अपिष्टमित्यचूर्णितम् । उदकसम्पर्कः उदकसंयोगः । मात्रशब्देन निष्पीडनादेर्व्यवच्छेदः । विभक्तरसमिति । पृथग्भूतरसमित्यर्थः । ईषदुष्णं कोष्णम् । तदल्पप्रयत्नसाध्यत्वादनायासेन लक्ष्यत इति । आयासः=प्रयत्नाधिक्यम्, तद् यस्मिन्न विद्यते सोऽल्पप्रयत्नसाध्योऽनायासः । तेनेह यदश्रृतत्वादिविशिष्टं वस्तु तदल्पप्रयत्नसाध्यत्वादनायासेन लक्ष्यते । तदनेनानायासोपलक्षितो यो वस्तुविशेषस्तत्र फाण्टमिति निपात्यते, न त्वनायास एव । नान्यत्रापि सर्वत्रानायासोपलक्षित इति दर्शयति । अयं चार्थो निपातनसामर्थ्याल्लभ्यते । यथैव ह्यन्यत् किञ्चिदिडभावादिकं निपातनसामर्थ्याल्लभ्यते तथार्थविशेषोऽपि ।

बाढमिति । अत्र पूर्ववद् ढत्वादिकार्यम् ॥

धृषिशसी वैयात्ये ॥ वियातस्य भावो वैयात्यमिति । यातम्=यातिः, प्राप्तिः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



धृष्, शस—इत्येतयोर्निष्ठायामिडागमो न भवति । धृष्टोऽयम् । विशस्तोऽयम् ।

धृषेः 'आदितश्च' इति प्रतिषेधः सिद्ध एव, शसेरपि 'उदितो वा', 'यस्य विभाषा' इति ? नियमार्थं वचनम्—धृषिशस्योर्वैयात्ये एवेड् न भवति । भावादिकर्मणोरपि वैयात्ये धृषिर्नास्ति । धृष्टः । विशस्तः ।

वैयात्य इति किम् ? धर्षितः । विशसितः ॥

**दृढः स्थूलबलयोः ॥ २० ॥**

'दृढः' इति निपात्यते, स्थूले बलवति चार्थे । दृढः स्थूलः । दृढो बलवान् ।

किमत्र निपात्यते ? दृंहेः क्तप्रत्यये इडाभावः, हकारनकारयोर्लोपः, परस्य ढत्वम् । अथ दृहिः प्रकृत्यन्तरमस्ति ? तत्राप्येतदेव सर्वं नलोपवर्जम्; नकारस्याभावात् ।

**पदमञ्जरी**

विरूपं यातम्=गमनम्, चेष्टितं यस्य स वियातः=अविनीतः ।

शसेरपीत्यादौ ग्रन्थे इट्प्रतिषेधः सिद्ध इत्यनुषङ्गः । अथ धृषेः 'विभाषा भावादिकर्मणोः' इति विकल्पे प्राप्ते नित्यार्थं ग्रहणं कस्मान्न भवति ? तत्राह—*भावादिकर्मणोरपीति* । एवं चास्य आदित्वे प्रयोजनं चिन्त्यम् । *धर्षितः*=अभिभूतः, पूर्ववदकित्त्वम् । *विशसितः*=विकृतः ॥

*दृढः स्थूलबलयोः* ॥ स्थूलः=मांसलः, दुर्बलोऽपि । अस्थूलोऽपि बलवान्=बलः । *बलवति चेति* । सूत्रे अर्शआद्यच्प्रत्ययान्तं बलशब्दं दर्शयति । *दृंहेरिति* ।

**न्यासः**

विरूपं यातं यस्यासन्मार्गविषयत्वात् स वियातः=अविनीत इत्युच्यते, तद्भावो वैयात्यम् । ब्राह्मणादित्वात् ष्यञ् । धृष्ट इति । 'ञिधृषा प्रागल्भ्ये' । विशस्त इति । 'शसु हिंसायाम्', शसेरपि 'उदितो वा' इति विकल्पविधानाद् 'यस्य विभाषा' इतीट्प्रतिषेधः सिद्ध एवेति सम्बध्यते । यदि तर्हि सिद्ध एव प्रतिषेधः, तत् किमर्थं वचनम् ? इत्याह—नियमार्थमित्यादि । वैयात्य एव वर्त्तमानयोर्यथा स्यात्, अन्यत्र मा भूत् । अथ धृषेः 'विभाषा भावादिकर्मणोः' इति विकल्पे प्राप्ते नित्यार्थं वचनमिति कस्मान्न भवति ? इत्याह—भावादिकर्मणोरपीत्यादि । अत्र चाभिधानशक्तिस्वाभाव्यं हेतुः । धर्षित इति । पूर्ववत् कित्त्वे प्रतिषिद्धे गुणः ॥

दृढः स्थूलबलयोः ॥ बलवतीति मतुबन्तनिर्देशेनार्शआदित्वात् सूत्रे मत्वर्थीयाकारान्तो बलशब्दो निर्दिष्ट इति दर्शयति । दृंहेरिति । 'दृहि वृद्धौ' इत्यस्य । अथ वा—

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



हलोपनिपातनं पूर्वत्रासिद्धत्वनिवृत्त्यर्थम् । ढलोपे हि सति तस्य पूर्वत्रासिद्धत्वाद् द्रढिमा, द्रढीयान्, द्रढयतीत्यत्र 'र ऋतो हलादेर्लघोः' इति रेफो न स्यात्, इह च परिद्रढय्य गत इति 'ल्यपि लघुपूर्वात्' इति णेरयादेशो न स्यात्, इह च परिदृढस्यापत्यं

पदमञ्जरी

'दृहि वृद्धौ' इत्येतावान्पाठः—इति *वार्तिककारस्य* पक्षः, 'दृह दृहि वृद्धौ'—इति *भाष्यकारस्य* ।

अथ किमर्थं हकारस्य लोपो निपात्यते, न ढत्वमेव निपात्यताम्, परस्य धत्वं ष्टुत्वम्, 'ढो ढे लोपः' दृढ इति सिद्धम् ? इत्यत आह—*हकारलोपनिपातनमिति* । *रेफो न स्यादिति* । 'रादिफः' इत्यत्र वर्णादिति नापेक्ष्यते, तेन रशब्दो न स्यादित्यर्थः । ढलोपस्यासिद्धत्वे 'संयोगे गुरु' इति गुरुसंज्ञयोपजातया लघुसंज्ञाया बाधितत्वात्तन्निबन्धनकार्याप्रसङ्ग इत्यर्थः । *इह चेति* । गुरुसंज्ञानिबन्धनकार्यप्रसङ्गश्चेत्यर्थः । *दृंहितमिति* । दृंहेः प्रत्युदाहरणम् । *दृहितमिति* दृहेः । अत्र च दीर्घादिरूपेण वृद्धमुच्यते ॥

न्यासः

दृहिः प्रकृत्यन्तरमस्तीति । 'दृह दृहि वृद्धौ' इति कैश्चित् पाठात् । **नकारस्याभावा**दिति । नकारस्योपदेशाभावादनिदित्वाच्च नकारस्याभावादिति ।

अथ हकारलोपः किमर्थं निपात्यते ? न ढकार एव निपात्यताम्, परस्य च धत्वे ष्टुत्वे कृते, ढो ढे लोपे च कृते सिद्धं दृढ इति । अत्राप्ययमर्थः—परस्य ढत्वं निपातयितव्यं न भवति, ष्टुनैव सिद्धत्वात् ? इत्यत आह—हलोपनिपातनमित्यादि । यदि हकारस्य ढकारो निपात्यते तदा 'ढो ढे लोपः', तस्य 'पूर्वत्रासिद्धम्' इत्यसिद्धत्वं स्यात्, सिद्धश्चासाविष्यते । तस्मात् पूर्वत्रासिद्धत्वनिवृत्तये हलोपो निपात्यते, न ढकार इति । कः पुनरसिद्धत्वे दोषो यत्परिहाराय पूर्वत्रासिद्धत्वनिवृत्त्यार्थं हकारलोपो निपात्यते, न ढकारः ? इत्यत आह—ढलोप इत्यादि । यदि हि ढकारो निपात्यते, तदा 'ढो ढे लोपः' कर्त्तव्यः, तस्मिंस्तु सति लोपे द्रढिमेत्यादौ 'र ऋतो हलादेर्लघोः' इति रेफो न स्यात्; ढलोपस्यासिद्धत्वे 'संयोगे गुरु' इति गुरुसंज्ञायामुपजातायां लघुसंज्ञायां बाधित्वात् । द्रढिमेति । 'वर्णदृढादिभ्यः ष्यञ्च' इतीमनिच्, 'तुरिष्ठेमेयःसु' इति टिलोपः । द्रढीयानिति । 'द्विवचनविभज्योपपदे तरबीयसुनौ' इतीयसुन्प्रत्ययः । द्रढयतीति । द्रढमाचष्ट इति 'तत्करोति तदाचष्टे' इति णिच्, 'णाविष्ठवत् कार्यं प्रातिपदिकस्य' इतीष्ठवद्भावेन रेफटिलोपौ । परिद्रढय्य गत इति । दृढमाचष्टे इति णिच् । रभावे कृते ण्यन्तस्य परिणा योगः, ततः क्त्वा, प्रादिसमासः, 'समासेऽनञ्-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पारिदृढी कन्येति गुरूपोत्तमलक्षणः ष्यङ् च प्रसज्येत ।

स्थूलबलयोरिति किम् ? दृंहितम्, दृहितम् ॥

**प्रभौ परिवृढः ॥ २१ ॥**

'परिवृढः' इति निपात्यते प्रभुश्चेद्भवति । परिवृढः कुटुम्बी । पूर्वेण तुल्यमेतत् । वृंहेर्निपातनम् ।

वृहिश्च यदि प्रकृत्यन्तरमस्ति, तस्यापि तदेव सर्वम् । हलोपनिपातनस्य च तदेव प्रयोजनम् । परिव्रढयति । परिव्रढय्य गतः । पारिवृढी कन्येति ।

परिवृढमाचष्टे इति विगृह्य वृढशब्दादेव णिजुत्पद्यते । संग्राम-

**पदमञ्जरी**

*प्रभौ परिवृढः* ॥ *पूर्वेण समानमिति* । इडभावादेर्निपात्यस्य तुल्यत्वात् । *वृहेरिति* । 'वृहि वृद्धौ' इति *वार्तिककारस्य* पक्षः । 'वृह वृहि वृद्धौ' इति *भाष्यकारस्य* ।

*वृहिश्च यदि प्रकृत्यन्तरमस्तीति* । ततस्तस्यापि निपातनमित्यर्थः । *तदेव प्रयोजनमिति* । असिद्धत्वाभावः ।

अथ कथं परिवृढय्येत्यत्र ल्यबादेशः, यावता परिवृढमाचष्टे इति विग्रहे तत एव णिच् कर्त्तव्यः, समुदायस्य च धातुत्वात् क्त्वाप्रत्ययोऽपि तत एव कर्त्तव्यः, ततश्च परेरपि क्त्वान्तेऽन्तर्भावान्नायं समासः; इह च परिव्रढयतीति परिशब्दस्य तिङन्तेऽन्तर्भावात् 'तिङ्ङतिङः' इति निघातो न स्यात् ? इत्यत आह-*परिवृढमाचष्ट इति विगृह्येति* । *णिजुत्पद्यत इति* । ण्यन्तं पठितव्यम् । अण्य-

**न्यासः**

पूर्वे क्त्वो ल्यप्' इति ल्यप् । पारिद्रढी कन्येति । परिद्रढशब्दादिञ्, 'इतो मनुष्यजातेः' इति ङीष् । ष्यङ् प्रसज्येतेति । 'अणिञोरनार्षयोर्गुरूपोत्तमयोः' इत्यादिना ।

दृंहितमिति । दृंहेः प्रत्युदाहरणम् । दृहितमिति । दृहेः ॥

प्रभौ परिवृढः ॥ पूर्वेण समानमिति । निपातनस्येडभावादेस्तुल्यत्वात् । यथैव हि पूर्वस्मिन् सूत्रे क्तप्रत्यये कृते हकारनकारयोर्लोप इडभावश्च परस्य ढत्वं निपातितम्, तथेहापि तत्सर्वं निपात्यते । वृंहेर्निपातनमिति । 'वृहि वृद्धौ' इत्यस्य । वृहिश्च यदि प्रकृत्यन्तरमस्ति ततस्तस्यापीति । निपातनमेतदिति प्रकृतेन सम्बन्धः । प्रकृत्यन्तरास्तित्वं तु 'वृह वृद्धौ' इति कैश्चिदुक्तम् । तदेव प्रयोजनमिति । पूर्वत्रासिद्धत्वनिवृत्तिः । परिव्रढयतीति । अत्र ढलोपे सति पूर्ववद्रेफो न स्यात् । परिव्रढय्य गत इति । हलोपनिपातने तु न भवन्त्येते दोषाः ।

परिव्रढमाचष्ट इत्यादि । कथं पुनः परिवृढशब्देन विग्रहे कृते णिचो वृढशब्दा-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



यतेरेव सोपसर्गाण्णिजुत्पत्तिरिष्यते नान्यस्मादिति । तथा सति परिव्रढयतीति 'तिङ्ङतिङः' इति निघातो भवति । परिव्रढय्येत्यत्र परिशब्दस्य क्त्वाप्रत्ययान्तेन समासे सति ल्यबादेशः सिद्धो भवति ।

प्रभाविति किम् ? परिवृंहितम्, परिवृहितम् ॥

## कृच्छ्रगहनयोः कषः ॥ २२ ॥

### पदमञ्जरी

न्तपाठे तु विगृह्येति क्त्वाप्रत्ययो न स्यात्; असमानकर्तृकत्वात् । *संग्रामयतेरेव सोपसर्गादिति* । यदत्र वक्तव्यं तद् 'भृशादिभ्यो भुव्यच्वेः' इत्यत्रैवोक्तम् । *निघातो भवतीति* । अड्द्विर्वचनयोरप्युपलक्षणमेतत्—पर्यव्रढयत्, परिविव्रढयिषति । *परिवृंहितमिति* । वृंहेः प्रत्युदाहरणम् । *परिवृहितमिति* । वृहेः ॥

### न्यासः

देवोत्पत्तिर्लभ्यते ? इत्याह—**संग्रामयतेरित्यादि** । 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' इत्यनेनैव णिचि सिद्धे 'संग्रामे' इत्यस्य सोपसर्गस्य गणे यः पाठः स नियमार्थः—संग्रामयतेरेव सोपसर्गाण्णिजुत्पत्तिर्यथा स्यात्, अन्यत्र मा भूदिति । तदेवं संग्रामयतेरेव यस्मात् सोपसर्गाण्णिजुत्पत्तिरिष्यते, नान्यस्मात् । तस्माद् यद्यपि 'परिवृढमाचष्टे' इति विग्रहः क्रियते, तथापि वृढशब्दाण्णिजुत्पद्यते, न च परिवृढशब्दात् । किमेवं सतीष्टं सिद्धं भवति ? इत्यत आह—**तथा च सतीत्यादि** । वृढशब्दाण्णिजुत्पत्तौ सत्यां लकारो भवन्नयं णिज् यतो विहितस्तदादेरेव भवति प्रत्ययग्रहणपरिभाषया; 'सनाद्यन्ता धातवः' इति तदादेरेव धातुसंज्ञाविधानात् । तेन परेस्तिङन्तग्रहणेनाग्रहणात् ततोऽतिङन्तात् पदात् परस्य तिङन्तस्य पदस्य परिव्रढयतीत्यत्र 'तिङ्ङतिङः' इति निघातस्वरः सिद्धो भवति । यदि पुनः परिवृढशब्दाण्णिजुत्पद्यते तदा लकारोऽपि तत एव णिजन्तात् स्यात् । एवञ्च परिशब्दस्य तिङ एवान्तर्भावादतिङन्तात् पदात् परमत्र तिङन्तं न भवतीति निघातो न स्यात् । किञ्च—यदा वृढशब्दाण्णिजुत्पद्यते न परिवृढशब्दात्, तदा क्त्वाप्रत्ययोऽपि वृढशब्दाण्णिजन्ताद्भवति । तेन परिशब्दस्य क्तान्तेन समर्थेन शब्दान्तरेण 'कुगतिप्रादयः' इति समासे कृते परिव्रढय्येत्यत्र ल्यबादेशः सिद्धो भवति । परिवृढशब्दाण्णिजुत्पत्तौ क्त्वाप्रत्ययोऽपि परिवृढशब्दादेव णिजन्तादुत्पद्यते, ततः समासो न स्यात्; कुगतिप्रादयः समर्थेन शब्दान्तरेण समस्यन्ते, न चात्र परेः परं क्तान्तं शब्दान्तरमस्ति । एकमेव हीदं क्तान्तं परिणा सह शब्दरूपम्; तत्रैव परिशब्दस्यान्तर्भावात् । असति च समासे 'समासेऽनञ्पूर्वे' इत्यादिना ल्यबादेशो न स्यात् । **परिवृंहितमिति** । वृंहेः प्रत्युदाहरणम् । **परिवृहितमिति** । वृहेः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



कृच्छ्र, गहन—इत्येतयोरर्थयोः कषेर्धातोर्निष्ठायामिडागमो न भवति। कष्टोऽग्निः। कष्टं व्याकरणम्। ततोऽपि कष्टतराणि समानि। कृच्छ्रम्=दुखम्, तत्कारणमप्यग्न्यादिकं कृच्छ्रमित्युच्यते।

गहने—कष्टानि वनानि। कष्टाः पर्वताः।

कृच्छ्रगहनयोरिति किम्? कषितं सुवर्णम्॥

घुषिरविशब्दने ॥ २३ ॥

घुषेर्धातोरविशब्दनेऽर्थे निष्ठायामिडागमो न भवति। घुष्टा रज्जुः। घुष्टौ पादौ।

अविशब्दन इति किम्? अवघुषितं वाक्यमाह।

विशब्दनम्=प्रतिज्ञानम्। 'घुषिरशब्दार्थे' इति भूवादिषु पठ्यते, 'घुषिरविशब्दने' इति चुरादिषु; तयोरिह सामान्येन ग्रहणम्।

पदमञ्जरी

कृच्छ्रगहनयोः कषः॥ कषतिर्हिंसार्थः। *कष्टोऽग्निरिति*। चीयमानोऽग्निरत्राग्निशब्देन विवक्षितः, स कष्टो भवति; चयनप्रकारस्य दुर्ज्ञानत्वात्। व्याकरणस्य कष्टत्वमिडागमादिव्यवस्थाया दुर्ज्ञानत्वात्। साम्नां कष्टत्वं पर्वभेदस्य स्वरस्य स्तोमादीनां च दुर्ज्ञानत्वात्। *कारणमपीति*। लक्षणया, कृच्छ्रमिति व्युत्पत्त्या वा॥

घुषिरविशब्दने॥ *घुष्टा*=अविशब्दिता। *अवघुषितम्*=विशब्दितम्, आविष्कृताभिप्रायमित्यर्थः। चौरादिकस्य चायं प्रयोगः, स एव ह्यस्मिन्नर्थे वर्तते। *द्वावपीति*। घुषिरिति सूत्रोपात्तं रूपं द्वयोरपि साधारणमित्यर्थः। कथं सामान्येन

न्यासः

कृच्छ्रगहनयोः कषः॥ कष्ट इति। कषिशिषीत्यादिहिंसार्थधातुवर्गे कषिः पठ्यते। किं पुनः कृच्छ्रं नाम? इत्याह—कृच्छ्रं दुःखमिति। यद्येवम्, दुःखे प्राणिधर्मे प्रतिषेध उच्यमानोऽग्न्यादौ न सिध्यति? इत्याह—तत्कारणमप्यग्न्यादिकं कृच्छ्रमुच्यत इति। कारणे कार्योपचारात्, यथा—नड्वलोदकं पादरोग इति। चिन्त्यं पुनरेतत् किं मुख्ये सति गौणस्य ग्रहणं युक्तम्? उत नेति? यदि तु कृच्छ्रशब्दाण्णिजन्तात् पचाद्यचमुत्पाद्य कृच्छ्रयतीति कृच्छ्र इत्येवं व्युत्पाद्यते, तदा कृच्छ्रशब्दोऽपि मुख्येऽग्न्यादावपीति न किञ्चिच्चिन्त्यम्; न चास्यां व्युत्पत्तौ तत्कारणमप्यग्न्यादिकं कृच्छ्रमित्युच्यत इत्येतद्विरुध्यते। यद्धि कृच्छ्रयति तन्नियोगत एव दुःखस्य कारणं भवति॥

घुषिरविशब्दने॥ विशब्दनं प्रतिज्ञानमिति। स्वाभिप्रायस्य शब्देनाविष्करणमित्यर्थः। सामान्येन ग्रहणमिति। विशेषानुपादानात्। यदि 'घुषिरविशब्दने' इति

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



विशब्दनप्रतिषेधश्च ज्ञापकः—'चुरादिणिज्विशब्दनार्थस्यानित्यः' इति। तेनायमपि प्रयोग उपपन्नो भवति—'महीपालवचः श्रुत्वा जुघुषुः पुष्पमाणवाः' इति। स्वाभिप्रायं शब्देनाविष्कृतवन्त इत्यर्थः ॥

**अर्देः संनिविभ्यः ॥ २४ ॥**

सम्, नि, वि—इत्येतेभ्य उत्तरस्यार्देर्निष्ठायामिडागमो न भवति। समर्णः। न्यर्णः। व्यर्णः।

अर्देरिति किम्? समेधितः। संनिविभ्य इति किम्? अर्दितः ॥

**अभेश्चाविदूर्ये ॥ २५ ॥**

पदमञ्जरी

ग्रहणम्, यावता विशब्दने णिचा भवितव्यम्, केवलश्चेह घुषिरुपात्तः? अत आह—*विशब्दनप्रतिषेधश्चेति*। *विशब्दनार्थस्यानित्य इति*। अन्ये तु 'अनित्यण्यन्ताश्चुरादयः' इति सामान्येन ज्ञापकमाहुः। अपर आह—

"चिति स्मृत्यामितीदित्त्वमत्र ज्ञापकमस्य हि।
फलं चिन्तित इत्यादौ न लोपो मा स्म भूदिति ॥
नित्ये च णिचि सत्यत्र नलोपस्याप्रसङ्गतः।
चिन्त स्मृत्यामित्येव च पठितव्यं भवेदिति" ॥

*अयमपीति*। यद्यपि अवघुषितं वाक्यमाह—इत्येतदपि प्रयोजनम्, तथापि जुघुषुरित्यपि प्रयोग उपपन्न इत्यर्थः ॥

न्यासः

चुरादौ पठ्यते, एवं सति णिचा भवितव्यम्, न च णिजन्तस्येटि सत्यसति वा कश्चिद्विशेषोऽस्ति। तथा हि—इटि सति 'निष्ठायां सेटि' इति णिलोपे कृते घोषितमिति यद्रूपं भवत्यसत्यपीटि णिलोपभावात् तदेव। न च तदन्तादिट्प्रतिषेधस्य प्राप्तिरस्ति; 'एकाचः' इत्यधिकारात्। भौवादिकस्य घुषेर्विशब्दने वृत्तिरेव नास्ति; शब्दशक्तिस्वाभाव्यात्, तत्किं विशब्दनप्रतिषेधेन? इत्यत आह—विशब्दनप्रतिषेध इत्यादि। यदि च नित्यो णिच् स्यात्, तदा यथोक्तया रीत्या प्रतिषेधोऽनर्थकः स्यात्, ततश्च न कर्त्तव्य एव स्यात्, कृतश्च, तस्मादयमेव प्रतिषेधो ज्ञापयति—चुरादिणिज्विशब्दनार्थस्यानित्य इति। जुघुषुरिति। अनित्यप्रतिज्ञाप्रयोजनम्। असति ह्यनित्यत्वे घोषयाञ्चक्रुरिति स्यात् ॥

अर्देः सन्निविभ्यः ॥ अर्देरिति। 'अर्द गतौ याचने च' ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अभिशब्दादुत्तरस्यार्देराविदूर्येऽर्थे निष्ठायामिडागमो न भवति। अभ्यर्णा सेना। अभ्यर्णा शरत्।

आविदूर्यं इति किम्? अभ्यर्दितो वृषलः। शीतेन पीडित इत्यर्थः।

विदूरम्=विप्रकृष्टम्; ततोऽन्यदविदूरम्, तस्य भाव आविदूर्यम्। एतस्मादेव निपातनात् 'न नञ्पूर्वात्तत्पुरुषात्' इत्युत्तरस्य भावप्रत्ययस्य प्रतिषेधो न भवति॥

**णेरध्ययने वृत्तम्॥ २६॥**

ण्यन्तस्य वृत्तेर्निष्ठायामध्ययनार्थे वृत्तमितीडभावो णिलुक्च निपात्यते। वृत्तो गुणो देवदत्तेन। वृत्तं पारायणं देवदत्तेन।

**पदमञ्जरी**

*अभेश्चाविदूर्ये॥ विशेषेण दूरं विदूरं ततोऽन्यदिति।* तत्पुनर्यदासन्नमविप्रकृष्टं वा भवति तद्वेदितव्यम्। *तस्य भाव आविदूर्यमिति।* ब्राह्मणादेराकृतिगणत्वात् ष्यञ्। ननु च 'न नञ्पूर्वात्तत्पुरुषात्' इति प्रतिषेधः प्राप्नोति? तत्राह—*एतस्मादेवेति।* 'न नञ्पूर्वात्' इत्यमयधिकारः, तेन ततः सूत्रादुत्तरस्य भावप्रत्ययस्य प्रतिषेधस्तत्र क्रियत इतिउत्तरस्येत्युक्तम्॥

*णेरध्ययने वृत्तम्॥* अधीयत इत्यध्ययनमिति 'कृत्यल्युटो बहुलम्' इति कर्मणि ल्युट्। निष्ठाविशेषणं चैतत्–अध्ययनाभिधायिन्यां निष्ठायामिति। *णिलुक्चेति।* प्रत्ययलक्षणेन गुणो मा भूदिति णेर्लुग्निपातनम्, लोपनिपातने तु गुणः स्यात्। *वृत्तो गुणो देवदत्तेनेति।* गुणः=पाठः, पदक्रमसंहितारूपोऽध्ययनविशेषः, स वृत्तः=सम्पादित इत्यर्थः।

**न्यासः**

**अभेश्चाविदूर्ये॥** विदूरं विप्रकृष्टमिति। विशेषेणातिशयेन दूरं विदूरमिति कृत्वा, ततोऽन्यदविदूरम्। तत् पुनर्यदासन्नं यच्चादूरं न त्वतिविप्रकृष्टं तदिति वेदितव्यम्। **तस्य भाव आविदूर्यमिति।** ब्राह्मणादित्वात् ष्यञ्। ननु च 'न नञ्पूर्वात् तत्पुरुषात्' इत्युत्तरस्य भावप्रत्ययस्य प्रतिषिद्धत्वात् ष्यञा न भवितव्यम्? इत्यत आह—एतस्मादेवेत्यादि। उत्तरत्वं तु भावप्रत्ययस्य त्वतलातेक्षया वेदितव्यम्॥

**णेरध्ययने वृत्तम्॥** अध्ययनमिति। 'कृत्यल्युटो बहुलम्' इति ल्युट्। अधीयत इत्यध्ययनम्—कर्मसाधनोऽध्ययनशब्दः। भावसाधने हि वृत्तो गुणो देवदत्तेनेति न स्यात्, वृत्तं गुणस्य देवदत्तेनेति स्यात्। निष्ठाविशेषणञ्चैतत्। अध्येतव्याभिधायिन्यां निष्ठायामित्यर्थः। णिलुक् चेति। णिलुग्निपातनं प्रत्ययलक्षणप्रतिषेधार्थम्। लोपे हि

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


अध्ययन इति किम् ? वर्त्तितमन्यत् ।

वृतिरयमकर्मकः, स ण्यर्थे वर्त्तमानः सकर्मको भवति । 'तेन निर्वृत्तम्' इति हि प्रकृतेरेव कर्मणि क्तप्रत्ययो दृश्यते । तद्वदिहापि ण्यर्थवृत्तेरेव च वृतेः वृत्तो गुणो देवदत्तेनेति भविष्यतीति निपातनम-

पदमञ्जरी

वृतिरयमित्यादिना सूत्रस्यानारम्भमाशङ्कते । *अकर्मक इति* । वृत्तं गुणस्य, वृत्तं पारायणस्येति भावे क्तस्य प्रयोगार्थमिदमुक्तम् । अकर्मकत्वे हि भावे निष्ठा भवति; 'तयोरेव' इत्यत्र 'भावे चाकर्मकेभ्यः' इत्यनुवृत्तेः । योऽपि 'नपुंसके भावे क्तः', सोऽपि सकर्मकेभ्यो न भवति; 'तयोरेव' इत्यत्र क्तमात्रस्य ग्रहणात् । अन्यथा सकर्मकाद्भावे क्ते विधीयमाने कर्मणि द्वितीया प्रसज्येत–ग्रामं गतम्, ओदनं भुक्तमिति । यदि तर्ह्यकर्मकः, कथं वृत्तो गुण इति कर्मणि निष्ठा ? इत्याशङ्क्याह–*स ण्यर्थे वर्तमाने इति* । यदि वा–'अयं वृतिरकर्मकः स ण्यर्थे वर्तमानः' इत्येक एव ग्रन्थः, अकर्मका अपि धातवोऽन्तर्भावितण्यर्थाः प्रयोज्येन कर्मणा सकर्मका भवन्ति, यथा–राजयुध्वेति, दृश्यते च वृत्तेरन्तर्भावितण्यर्थस्य प्रयोग इत्याह–*तेन निर्वृत्तमिति हीति* । न चात्रोपसर्गवशात्सकर्मकत्वम्, ण्यर्थगतेः वृत्तेर्णिचि योऽर्थः । 'निवर्त्यते यैर्नियमाभिषेकः' इत्यादौ तदवगतेरित्यर्थः । *तत्तस्मात्* । *वृत्तेरेवेति* । प्रकृत्यन्तादेवेत्यर्थः । *वृत्तो गुण इति* । 'उदितो वा' इति क्त्वायां

न्यासः

प्रत्ययलक्षणेन गुणः स्यात् । लुकि सति 'न लुमताङ्गस्य' इति प्रत्ययलक्षणप्रतिषेधाद् गुणो न स्यात् । वृत्तो गुण इति । गुणः कश्चिदेवाध्ययनविशेष इहोच्यते ।

**वृतिरयमकर्मक इति** । वृत्तं गुणस्य, वृत्तं पारायणस्येति भावे निष्ठादर्शनात् । अकर्मकाणां हि भावे निष्ठा भवति, न सकर्मकाणाम् । स ण्यर्थ इत्यादि । सोऽन्तर्भावितण्यर्थो यदा भवति तदा प्रकृत्यन्तो ण्यर्थे वर्त्तमानः सकर्मको भवति, यथा–वर्द्धन्तु त्वां सुष्टुतय इत्यत्र वृधिः । कथमेतद् विज्ञायते ? इत्याह–तेन निर्वृत्तमित्यादि । न चैतद्वक्तव्यम्–अकर्मका इति । 'धातवः सोपसर्गाः सकर्मका भवन्ति' इति सोपसर्गत्वादिह वृतेः सकर्मकत्वम् । न तु ण्यर्थवृत्तित्वादिति कुतो ण्यर्थावगतिः ? यदि सोपसर्गत्वादिह वृतेः सकर्मकत्वं स्यान्न ण्यर्थवृत्तित्वात्, ततो यथानुभूतः कम्बलो देवदत्तेनेत्यत्र ण्यर्थो न गम्यते, तथा तेन निर्वृत्तः इत्यत्रापि न गम्येत; गम्यते च, तस्माण्ण्यर्थवृत्तित्वादेव वृतेः सकर्मकत्वम् । यदा च ण्यर्थवृत्तिर्भवति तदा प्रयोजकव्यापारापेक्षयास्य कर्त्ता कर्मभावमापद्यत इति । तेन प्रयोज्येन कर्मणा सकर्मको भवति । तद्वदिहापीत्यादि । यस्मादेवाकर्मकोऽपि स न प्रकृत्यन्त एव ण्यर्थे वर्त्तमानः सकर्मको भवति तस्माद् वृत्तो गुणो देवदत्तेनेत्यत्रापि ण्यर्थवृत्तेरेव कर्मणि क्तप्रत्ययो भविष्यति । ततश्च निपातनमनर्थकं

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



-नर्थकम् ? तत्क्रियते—यदापि णिचैव ण्यर्थोऽभिधीयते तदा वर्त्तितमित्यध्ययने मा भूदिति केचित् ।

अपरे तु—वर्त्तितो गुणो देवदत्तेन इत्यपीच्छन्ति ॥

**वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः ॥ २७ ॥**

'णेः' इत्यनुवर्त्तते । दम्[1], शम्, पूरी, दस्, स्पस्, छद्, ज्ञप्—इत्येतेषां ण्यन्तानां धातूनां वा अनिट्त्वं निपात्यते[1] । दान्तः, दमितः । शान्तः, शमितः । पूर्णः, पूरितः । दस्तः, दासितः ।

पदमञ्जरी

विकल्पितेट्कत्वाद् 'यस्य विभाषा' इतीट्प्रतिषेधः सिद्धः, । तदेवं निपातनमनर्थकमित्येव मतं चोद्यम् । परिहरति—*तत्क्रियत इति* । इष्टस्यान्यथासिद्धावप्यनिष्टनिवृत्त्यर्थं निपातनमित्यर्थः । *अपरे त्विति* । तेषां मते नानेनार्थः सूत्रेण ॥

*वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः ॥ दान्तः, शान्त इति* । 'दमिशमी उपशमनार्थे' । णिलुगिट्प्रतिषेधयोः 'अनुनासिकस्य क्विझलोः' इति दीर्घः । निपात्यमानस्य च णिलुकोऽपरनिमित्तकत्वाद्दीर्घविधिं प्रति निषेधाच्च स्थानिवद्भावो नास्ति । *पूर्ण इति* । 'पूरी आप्यायने' दिवादिः, चुरादिश्च । *दस्त इति* ।

न्यासः

स्यात्; विनापि तेन सिद्धत्वात् । कथमिति चेत् ? वृतेः क्त्वाप्रत्यये 'उदितो वा' इतीड्विकल्पे कृते निष्ठायाम्, 'यस्य विभाषा' इति प्रतिषेधात् । यद्येवम्, किमर्थं तदित्याह—तद् क्रियत इत्यादि । कदाचिण्णयर्थोऽन्तर्भावितण्यर्थतया प्रकृत्यैवाभिधीयते, कदाचिण्णिचा । तत्र यदा प्रकृत्यैवाभिधीयते तदा निरर्थकत्वान्निपातनं न कर्त्तव्यमेव । यदा तु णिचा ण्यर्थोऽभिधीयते, तत्र यदि निपातनं न क्रियेत, तदाध्ययनेऽपि वर्त्तितमिति स्यात् । तस्मादेतन्निवृत्त्यर्थं तदित्येके प्रतिपन्नाः । अपरे त्वित्यादि । अन्ये तु वर्त्तितो गुण इत्यपीच्छन्ति । ण्यन्तस्याण्यन्तस्य च—वृत्तो गुण इति । तन्मतेन निपातनं न कर्त्तव्यमेव । क्रियमाणं वैचित्र्यार्थं वेदितव्यम् ॥

वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः ॥ दान्तः, शान्त इति । 'शमु दमु उपशमे' । हेतुमण्णिच्, णिलुगिट्प्रतिषेधयोः कृतयोः 'अनुनासिकस्य क्विझलोः क्ङिति', इति दीर्घः । ननु च णिलोपस्य स्थानिवद्भावाद् व्यवधाने सति न प्राप्नोति ? नैतदस्ति; न हि निपातनेन लोपे सति तस्य परनिमित्तत्वव्यपदेशो विद्यते, तत् कुतः स्थानिवद्भावः ! 'न पदान्त' इत्यादिवा दीर्घविधौ स्थानिवद्भावप्रतिषेधाच्च । दमितः, शमित इति । 'मितां ह्रस्वः' इति ह्रस्वत्वम् । पूर्ण इति । 'पूरी आप्यायने' । दिवा-

१-१. 'दान्त' शान्त, पूर्ण, दस्त, स्पष्ट छन्न, ज्ञप्त—इत्येते ण्यन्ता निष्ठायां निपात्यन्ते । दम्यादीनां धातूनां निष्ठायां वेडागमो निपात्यते'—इति च क्वचित्पाठः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



स्पष्टः, स्पाशितः । छन्नः, छादितः । ज्ञप्तः, ज्ञपितः । इट्प्रतिषेधो णिलुक्च निपात्यते । ज्ञपेस्तु 'भरज्ञपिसनाम्' इति विकल्पविधानाद् 'यस्य विभाषा' इति नित्ये प्रतिषेधे प्राप्ते विकल्पार्थं निपातनम् ॥

रुष्यमत्वरसंघुषास्वनाम् ॥ २८ ॥

'वा' इति वर्तते । रुषि, अम, त्वर, सङ्घुष, आस्वन—इत्येतेषां निष्ठायां वा इडागमो न भवति । रुष्टः, रुषितः । 'तीषसहलुभरुषरिषः' इति विकल्पविधानाद् 'यस्य विभाषा' इति प्रतिषेधे प्राप्ते विकल्पार्थं वचनम् । अम्—अभ्यान्तः, अभ्यमितः । त्वर—तूर्णः, त्वरितः । 'आदितश्च' इति प्रतिषेधे प्राप्ते वचनम् । सङ्घुष—सङ्घुष्टौ

पदमञ्जरी

'तसु उपक्षये' 'दसु च' । अत्र ह्रस्वत्वमपि निपात्यते । *स्पष्टः, छन्न इति* । 'स्पश बाधनस्पर्शनयोः', 'छद अपवारणे' । अत्रापि ह्रस्वत्वमपि निपात्यते । *ज्ञप्त इति* । 'ज्ञप मिच्च', चुरादिः । *इट्प्रतिषेधो णिलुक्च निपात्यत इति* । चकारात्क्वचिदुपधाह्रस्वत्वं च । क्वचित्पठ्यते—*ज्ञपेर्भरज्ञपिसनामिति विकल्पविधानाद्यस्य विभाषेतीट्प्रतिषेधे प्राप्ते विकल्पार्थं निपातनमिति* । एकाज्ग्रहणम् 'यस्य विभाषा' इत्यत्र नानुवर्त्तत इति भावः ।

अत्रादितश्चतुर्णां ग्रहणं शक्यमकर्त्तुम् । कथम् ? अन्तर्भावितण्यर्थानां प्रकृत्यन्तानां दान्त इत्यादीनि रूपाणि, अन्यत्र ण्यन्तानां दमित इत्यादीनि ॥

रुष्यमत्वरसंघुषास्वनाम् ॥ *अभ्यान्त इति* । 'अम गत्यादिषु', पूर्ववद्दीर्घः । *तूर्ण इति* । 'ञित्वरा सम्भ्रमे', 'ज्वरत्वर' इत्यादिनोठ् । *आदितश्चेतीट्प्रतिषेधे प्राप्त इति* । आदित्वे तु प्रयोजनं मृग्यम् । आत्मनेपदार्थं तावत्कश्चिदनुबन्ध

न्यासः

दिश्चुरादिश्च । दस्त इति । 'तसु उत्क्षेपे' 'दसु च' । अत्रोपधाह्रस्वत्वमपि निपात्यते । स्पष्टश्छन्न इति । 'स्पश बाधनस्पर्शनयोः', 'छद अपवारणे' । अत्राप्युपधाह्रस्वत्वमपि निपात्यते । ज्ञप्त इति । 'ज्ञप मारणतोषणनिशामनेषु' इति चुरादिः, 'मारणतोषणनिशामनेषु ज्ञा मिच्च' इति घटादिश्च, ततो णिच् । इट्प्रतिषेधो णिलुक्च इति । चकारात् क्वचिदुपधाह्रस्वत्वमपि निपात्यते ॥

रुष्यमत्वरसंघुषास्वनाम् ॥ 'रुष रोषे', 'अम गत्यादिषु' । 'अम रोगे'—इत्येतस्य चौरादिकस्य ग्रहणं न भविष्यति; एकाच इत्यधिकारात् । 'ञित्वरा सम्भ्रमे' सम्पूर्वः । पूर्वोक्तो घुषिः । आङ्पूर्वः पूर्वोक्त एव स्वनिः । आस्वान्त इति । पूर्ववद् दीर्घः । तूर्ण इति । 'ज्वरत्वरस्रिव्यविमवामुपधायाः' इत्यूठ् । सम्पूर्व इत्यादि । 'घुषिर् अविशब्दने' इत्यस्यावकाशोऽसम्पूर्वत्वे सत्यविशब्दने—घुष्टा रज्जुः, घुष्टौ पादाविति,

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पादौ, सङ्घुषितौ पादौ। सङ्घुष्टं वाक्यमाह, सङ्घुषितं वाक्यमाह। सङ्घुष्टौ दम्यौ, सङ्घुषितौ दम्यौ। सम्पूर्वस्य घुषेरविशब्दनेऽपि परत्वादयमेव विकल्पो भवति। आस्वन्—आस्वान्तो देवदत्तः, आस्वनितो देवदत्तः। आस्वान्तं मनः, आस्वनितं मनः। आङ्पूर्वस्य स्वनेर्मनोभिधानेऽपि परत्वादयं विकल्पः 'क्षुब्धस्वान्त' इति निपातनं बाधते॥

हृषेर्लोमसु॥ २९॥

लोमसु वर्त्तमानस्य हृषेर्निष्ठायां वा इडागमो न भवति। हृष्टानि लोमानि, हृषितानि लोमानि। हृष्टं लोमभिः, हृषितं लोमभिः। हृष्टाः केशाः, हृशिताः केशाः। हृष्टं केशैः, हृषितं केशैः। 'हृषु अलीके' इत्युदित्त्वान्निष्ठायामनिट्, 'हृष तुष्टौ' इत्ययं

पदमञ्जरी

आसञ्जनीयः। कश्चिदाह—आदित्वं यङ्लुगर्थमिति, न हि तत्रायं विकल्पः, 'एकाचः' इत्यनुवृत्तेः। आदित्करणसामर्थ्याच्चानुबन्धनिबन्धनोऽपि 'आदितश्च' इतीट्प्रतिषेधो यङ्लुकि भवति। *सम्पूर्वस्य घुषेरिति*। 'घुषिरविशब्दने' इत्यस्यासम्पूर्वोऽवकाशः—घुष्टा रज्जुः, अस्य विकल्पस्यावकाशः सम्पूर्वत्वे सति विशब्दने-संघुष्टं वाक्यमाह; संपूर्वस्याविशब्दने विप्रतिषेधः। *आङ्पूर्वस्येत्यादि*। 'क्षुब्धस्वान्त' इति निपातनस्यावकाशोऽनाङ्पूर्वत्वे सति मनोऽभिधाने-स्वान्तं मन इति, अस्य विकल्पस्यावकाशः-आङ्पूर्वत्वे सत्यमनोऽभिधाने; आङ्पूर्वत्वे मनोऽभिधाने च सति विप्रतिषेधः॥

*हृषेर्लोमसु*॥ हृष्टानि=उत्स्फुटानि, मूर्द्धजाः=केशाः। 'अङ्गान्तरजानि लोमानि' इति *निघण्टुप्रसिद्धिः*। *कल्पसूत्रकाराणामपि* तदनुगुणाः प्रयोगाः—

न्यासः

अस्य च वचनस्यावकाशः सम्पूर्वत्वे सति विशब्दने—संघुषितं वाक्यमाह, संघुष्टं वाक्यमाहेति; सम्पूर्वत्वे सत्यविशब्दन उभयप्राप्तौ परत्वादनेन विकल्पो भवति—संघुषितौ दन्ताविति। आङ्पूर्वस्येत्यादि। 'क्षुब्धस्वान्त' इति स्वनेरिट्प्रतिषेधस्यावकाशः, अनाङ्पूर्वत्वे सति मनोऽभिधाने स्वान्तं मन इत्यस्यावकाशः; आङ्पूर्वत्वे सत्यमनोऽभिधानम्। आस्वान्तो देवदत्तः, आस्वनितो देवदत्त इति। आङ्पूर्वत्वे सति मनोऽभिधाने परत्वादयमेव विकल्पो भवति—आस्वान्तं मनः, आस्वनितं मनः॥

हृषेर्लोमसु॥ हृष्टानि लोमानीति। गत्यर्थाकर्मकादिनाऽकर्मकत्वात् कर्त्तरि क्तः। हृष्टं लोमभिरिति। 'नपुंसके भावे क्तः' इति क्तः। निष्ठायामनिडिति। 'उदितो वा' इति

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सेट्; तयोरुभयोरिह ग्रहणमित्युभयत्रविभाषेयम् ।

लोमानि मूर्धजानि, अङ्गजानि च सामान्येन गृह्यन्ते; यथा— 'लोमनखं स्पृष्ट्वा शौचं कर्त्तव्यम्' इति । तद्विषये च हृषे वर्त्तमानो लोमसु वर्त्तत इत्युच्यते ।

लोमस्विति किम् ? हृष्टो देवदत्त इत्यलीकार्थस्य, हृषितो देवदत्त इति तुष्ट्यर्थस्य ।

❀ विस्मितप्रतिघातयोश्चेति वक्तव्यम् ❀ । हृष्टो देवदत्तः, हृषितो देवदत्तः । विस्मित इत्यर्थः । हृष्टा दन्ताः, हृषिता दन्ताः । प्रतिहता इत्यर्थः ॥

## अपचितश्च ॥ ३० ॥

### पदमञ्जरी

'केशश्मश्रुलोमनखं वापयन्ति' इति, इह तु केशानामपि ग्रहणम् ? इत्याह–मूर्द्धजान्यङ्गजानि चेति । अत्र विशेष्यं मृग्यम् । सामान्येन गृह्यन्त इति । क्वं यथा ? इत्यत्राह - यथेति । ननु क्रियावचनस्य धातोः कथं द्रव्यात्मकेषु लोमसु वृत्तिः ? इत्यत आह–तद्विषये चेति । प्रतिहताः कठिनद्रव्यखादनेन, शीतपीडया वा हता इत्यर्थः ॥

### न्यासः

क्त्वाप्रत्य इटि विकल्पिते निष्ठायाम् 'यस्य विभाषा' इति प्रतिषेधात् । अयं सेडिति । उदात्तत्वादिट्प्रतिषेधाभावात् । उभयत्रविभाषेयमिति । प्राप्ते चाप्राप्ते च । आलोक्यार्थस्य प्रतिषेधे प्राप्ते विकल्पः, तुष्ट्यर्थस्य चाप्राप्ते; लोमशब्दस्याङ्गजातेष्वेव रूढत्वात् ।

लोमस्वित्युच्यमानेऽङ्गजेष्वेव न केशेषु भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात्, अतस्तां निराकर्त्तमाह–लोमानीत्यादि । कथम् ? इत्याह–यथा लोमनखमित्यादि । अत्र हि सामान्येन ग्रहणं तेषाम् । तथा हि–केशानपि स्पृष्ट्वा शौचं क्रियत इति । कथं पुनः क्रियावचनस्य धातोर्द्रव्येषु लोमसु वृत्तिरुपपद्यते ? इत्याह—तद्विषय इत्यादि । तानि लोमानि विषयो यस्य स तथोक्तः । हृषेयोऽर्थः स लोमसाध्यत्वाल्लोमविषयः । तत्र वर्त्तमानो हृषिरप्यर्थद्वारेण लोमसु वर्त्तते इत्युच्यते । तदेवमर्थद्वारेण लोम्नां हृषिं प्रति विशेषणत्व दर्शितं भवति ।

विस्मितप्रतिघातयोश्चेति । निपातनमिति । विस्मितप्रतिघातयोर्निष्ठायामिण् न भवत्येवमर्थरूपं व्याख्येमित्यर्थः । तत्रेदं व्याख्यानम्—हृषेरिति योगविभागः क्रियते, ततो विस्मितप्रतिघातयोरपि भविष्यतीति । अथ वा—बहुवचननिर्देशोऽत्र क्रियते, आद्यर्थोऽयं विज्ञायते लोमादिषु लोमस्विति । तेन विस्मितप्रतिघातयोरपि भविष्यति ॥



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



'अपचित:' इति वा निपात्यते। अपपूर्वस्य चायतेर्निष्ठाया-मनिट्त्वं चिभावश्च निपात्यते। अपचितोऽनेन गुरुः। अपचायितो-ऽनेन गुरुः।

❀ क्तिनि नित्यमिति वक्तव्यम् ❀। क्तिनि नित्यं चिभावो निपात्यते। अपचितिः॥

## ह्रु ह्वरेश्छन्दसि ॥ ३१ ॥

ह्वरतेर्धातोर्निष्ठायां छन्दसि 'ह्रु' इत्ययमादेशो भवति। ह्रुतस्य चाह्रुतस्य च। अह्रुतमसि हविर्धानम्।

छन्दसीति किम्? ह्वृतम्।

## अपरिह्वृताश्च ॥ ३२ ॥

'अपरिह्वृताः' निपात्यते छन्दसि विषये। 'ह्रु' इत्येतस्यादेश-स्याभावो निपात्यते। अपरिह्वृताः सनुयाम वाजम्॥

### पदमञ्जरी

*अपचितश्च* ॥ *अपचितोऽनेन गुरुरिति*। 'चायृ पूजानिशामनयोः'। निशामने चायं प्रयोगः। पूजायां तु 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमाने क्ते सति 'क्तस्य च वर्त्तमाने' इति षष्ठ्या भवितव्यम्। *क्तिनि नित्यमिति*। 'क्तिन्नाबादिभ्यः' इति क्तिन्। अन्यथा 'गुरोश्च हलः' इत्यकारः स्यात्॥

*ह्रु ह्वरेश्छन्दसि* ॥ *ह्वरेरिति*। 'ह्वृ कौटिल्ये'। आगन्तुकेकारे गुणेन निर्देशः॥

*अपरिह्वृताश्च* ॥ *आदेशस्याभाव इति*। पूर्वसूत्रेण प्राप्तस्य। बहुवचननिर्देश-श्छन्दसि तस्यैव प्रयोगदर्शनात्॥

### न्यासः

**अपचितश्च** ॥ चायतेरिति। 'चायृ पूजानिशामनयोः' इति। अयं योगो यश्चि-नोतेरपूर्वस्य पूजायां वृत्तिं न प्रतिपद्यते तं प्रत्यारभ्यते। यस्तु प्रतिपद्यते तं प्रति नार-ब्धव्य एव। तथा हि—चिनोतेरपचित इति भविष्यतीति, चायतेस्त्वपचायित इति।

**वक्तव्यमिति**। व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—चकारोऽत्र क्रियते। स चानुक्तसमुच्चयार्थः। तेनापचितिरित्येतदपि निपात्यत इति। एतच्च निपातयता चायतेः क्तिनि नित्यं चिभावो वक्तव्यः॥

**ह्रु ह्वरेश्छन्दसि** ॥ 'ह्वृ कौटिल्ये'—इत्येतस्यानुदात्तत्वादिट्प्रतिषेधोऽस्त्येवेत्यादेशार्थं वचनम्॥

**अपरिह्वृताश्च** ॥ 'ह्रु' इत्येतस्यादेशस्याभावो निपात्यत इति। पूर्वसूत्रेण प्राप्तस्य। बहुवचननिर्देशो बहुवचन एव निपातनं यथा स्यात्। तेन वचनान्तरे हि अपरिह्वृतः, अपरिह्वृतावित्येवं भवति॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## सोमे ह्वरितः ॥ ३३ ॥

'ह्वरितः' इति ह्वरतेर्निष्ठायामिडागमो गुणश्च निपात्यते छन्दसि विषये, सोमश्चेद्भवति । मा नः सोमो ह्वरितः, विह्वरितस्त्वम् ॥

## ग्रसितस्कभितस्तभितोत्तभितचत्तविकस्ता विशस्तृशंस्तृशास्तृतरुतृतरूतृवरुतृवरूतृवरूत्रीरुज्ज्वलितिक्षरितिक्षमितिवमित्यमितीति च ॥ ३४ ॥

ग्रसित स्कभित, स्तभित, उत्तभित, चत्त, विकस्त, विशस्तृ, शंस्तृ, शास्तृ, तरुतृ, तरूतृ, वरुतृ, वरूतृ, वरूत्रीः, उज्ज्वलिति, क्षरिति, वमिति, अमिति--इत्येतानि छन्दसि निपात्यन्ते ।

तत्र ग्रसितस्कभितस्तभितोत्तभितेति—ग्रसु, स्कन्भु, स्तन्भु इत्येतेषामुदित्वान्निष्ठायामिट्प्रतिषेधे प्राप्ते इडागमो निपात्यते । ग्रसितं वा एतत्सोमस्य । ग्रस्तमिति भाषायाम् । स्कभित--विष्कभिते अजरे । विष्कब्ध इति भाषायाम् । स्तभित—येन स्वः स्तभितम् । स्तब्धमिति भाषायाम् । उत्तभित—सत्येनोत्तभिता भूमिः । उत्तब्धेति भाषायाम् । उत्तभितेति उत्पूर्वस्य निपातनसामर्थ्यादन्योपसर्गपूर्वः स्तभितशब्दो न भवति ।

### पदमञ्जरी

*सोमे ह्वरितः ॥ इडागमो गुणश्चेति । चकारादादेशाभावश्च ॥*

*ग्रसितस्कभितस्तभितोत्तभितचत्तविकस्ता विशस्तृशस्तृशास्तृतरुतृतरूतृवरुतृवरूतृवरूत्रीरुज्ज्वलितिक्षरितिक्षमितिवमित्यमितीति च ॥*

### न्यासः

सोमे ह्वरितः ॥ इडागमो गुणश्च निपात्यत इति । चकाराद् 'ह्वृ' इत्येतस्यादेशाभावश्च ॥

ग्रसितस्कभितस्तभितोत्तभितचत्तविकस्ता विशस्तृशंस्तृशास्तृतरुतृतरूतृवरुतृवरूतृवरूत्रीरुज्ज्वलितिक्षरितिक्षमितिवमित्यमितीति च ॥ ग्रसु स्कन्भु स्तन्भु इत्येतेषामित्यादि । 'ग्रसु ग्लसु अदने', 'स्कन्भु, 'स्तन्भु'—इत्येतौ सौत्रौ धातू; 'स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च' इति सूत्रे पाठात् । स्कभितम्, स्तभितमिति । 'अनिदितामू' इत्यनुनासिकलोपः । स्कब्धम्, स्तब्धमिति । 'झषस्तथोर्धोऽधः' इति धत्वम्, 'झलां जश् झशि' इति जश्त्वम् । उत्तभितमिति । 'उदः स्थास्तम्भोः पूर्वस्य' इति पूर्वसवर्णः । अन्योपसर्गपूर्वः स्तभितशब्दो न भवतीति । यदि स्यात्, उदुत्पूर्वस्य निपातनमनर्थकं स्यात् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



चत्त विकस्तेति—चतेः, कसेश्च विपूर्वस्य निष्ठायामिडभावो निपात्यते। चत्ता वर्षेण विद्युत्। चतितेति भाषायाम्। विकस्त—उत्तानाया हृदयं यद् विकस्तम्। विकसितमिति भाषायाम्। निपातनं बहुत्वापेक्षम्, 'विकस्ताः' इति बहुवचनं कृतम्। अपरेषु तु निपातनेषु प्रत्येकं विभक्तिनिर्देशः।

विशस्तृ, शंस्तृ, शास्त्रिति—शसेर्विपूर्वस्य, शंसेः, शासेश्च तृचि इडभावो निपात्यते। विशस्तृ—एकस्त्वष्टुरश्वस्या विशस्ता। विशसितेति भाषायाम्। शंस्तृ—उत शंस्ता सुविप्रः। शंसितेति भाषायाम्। शास्तृ—प्रशास्ता। प्रशासितमिति भाषायाम्।

तरुतृतरूतृवरुतृवरूतृवरूत्रीरिति—तरतेः, वृङ्वृञोश्च तृचि उट्, ऊट्—इत्येतावागमौ निपात्येते। तरुतारं रथानाम्, तरूतारम्।

पदमञ्जरी

'ग्रसु अदने', 'स्कम्भु स्तम्भु रोधनार्थौ' सौत्रौ, 'चते याचने', 'कस गतौ', 'शसु हिंसायाम्', 'शंसु स्तुतौ', 'शासु अनुशिष्टौ', 'तॄ प्लवनतरणयोः', 'वृङ् वरणे', 'ज्वल दीप्तौ', क्षर सञ्चलने', 'क्षमूष् सहने', 'टुवमु उद्गिरणे', 'अम गत्यादिषु'। *उत्तभितेति*। 'उदः स्थास्तम्भोः पूर्वस्य' इति पूर्वसवर्णः, सकारस्य तकारः। *अन्योपसर्गपूर्वः स्तभितशब्दो न भवतीति*। यदि स्यात्, उत्तभितग्रहणमनर्थकं स्यात्। *निपातनबहुत्वापेक्षमिति*। तेन छान्दसः प्रयोग एकवचनान्तोऽप्युदाहृत इति भावः।

न्यासः

**चतेः, कसेश्चेति**। 'चते चदे याचने', 'कस गतौ'। ननु सूत्रे विकस्तशब्दाद् बहुवचनं श्रूयते, ततश्च कथमसौ वृत्तावेकवचनान्त उदाहृतः? इत्यत आह—निपातनं बहुत्वापेक्षम्। विकस्ता इति बहुवचनमिति। सूत्रे ग्रसितादीनि निपातनानि कृतद्वन्द्वानि, अतस्तदपेक्षया बहुवचनं कृतम्। वृत्तौ त्वसमस्त एक एवायं विकस्तशब्दः। न चैतदर्थस्य बहुवचनं विवक्षितम्, अत एकवचनान्त एवोदाहृतः। अपरेष्विति। विशस्तृप्रभृतिषु। प्रत्येकं विभक्तिनिर्देश इति। बहुत्वाभावाद् बहुवचनम्, तेन तत्र न कृतमित्यभिप्रायः।

**शसेर्विपूर्वस्य शंसेः शासेश्चेति**। 'शसु हिंसायाम्', 'शन्सु स्तुतौ', 'शासु अनुशिष्टौ'।

**तरीतारम्, वरीतारमिति**। 'वृतो वा' इति दीर्घः। **वरूत्रीरिति**। 'ऋन्नेभ्यो ङीप्' इति ङीप्, तदन्ताज्जस्, 'वा छन्दसि' इति पूर्वसवर्णदीर्घः। जसि पूर्वसवर्णोच्चा-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तरितारम्, तरीतारमिति भाषायाम् । वरूतारं रथानाम्, वरूतारं रथानाम् । वरितारम्, वरीतारमिति भाषायाम् । वरूत्री त्वा देवी-विश्वदेव्यावती । जसि पूर्वसवर्णोच्चारणं प्रयोगदर्शनार्थम् । अतन्त्रं चैतत्, इदमपि हि भवति—अहोरात्राणि वै वरूत्रय इति । छान्दसिकमत्र ह्रस्वत्वम् । प्रपञ्चार्थमेव च ङीबन्तस्य निपातनम्; वरूतृशब्दो हि निपातितः, तत एव ङीपि सति सिद्धो वरूत्रीशब्दः ।

उज्ज्वलिति, क्षरिति, क्षमिति, वमिति, अमितीति च—ज्वलतेरुत्पूर्वस्य, क्षर, क्षम, वम, अम—इत्येतेषां च तिपि शप इकारादेशो निपात्यते, शपो लुग्वा, इडागमः । अग्निरुज्ज्वलिति । उज्ज्वलतीति भाषायाम् । क्षरिति—स्तोकं क्षरिति । क्षरतीति भाषायाम् । क्षमिति—स्तोमं क्षमिति । क्षमतीति भाषायाम् । वमिति—यः सोमं वमिति । वमतीति भाषायाम् । अमिति—अभ्यमिति वरुणः । अभ्यमतीति भाषायाम् ।

इतिकरणं प्रदर्शनार्थम्, तेन क्वचिदीकारो भवति—'रविमभ्यमीति वरुणः' इत्यपि हि वेदे पठ्यते ॥

**पदमञ्जरी**

*इतिकरणः प्रदर्शनार्थ इति* । तस्य प्रकारार्थत्वात ॥

**न्यासः**

रणाद् यदा पूर्वसवर्णस्तत्रैवैतन्निपातनमिति कस्यचिद् भ्रान्तिः स्यात्, अतस्तां निराकर्तुमाह—जसि पूर्वसवर्णोच्चारणमित्यादि । ननु यणादेशे कृते वरूत्र्य इति भवितव्यम्, कथम् 'वरूत्रयः' इति भवति ? इत्याह—छान्दसमित्यादि । छान्दसत्वेन हि ह्रस्वत्वे कृते 'जसि च' इति यणादेशापवादो गुणो विधीयते । प्रपञ्चार्थमिति । विस्तरेणान्वाख्यानमित्यर्थः । तथा हि 'पचिर्विस्तारवचने' इति तस्यैवाजन्तस्य प्रपञ्च इति भवति । प्रपञ्चस्तु विस्पष्टार्थः । विस्तरेण ह्यन्वाख्यानं स्पष्टं भवति । अथ वरूत्रीशब्दस्य सिध्यर्थं निपातनं कस्मान्न भवति ? इत्याह—वरूतृशब्दो हीत्यादि ।

ज्वलतेरिति । 'ज्वल दीप्तौ', 'क्षर सञ्चलने', 'टुवम उद्गिरणे', 'अम गत्यादिषु' । इतिकरणं प्रदर्शनार्थमिति । एवम्प्रकारस्यान्यस्यापि प्रदर्शनार्थमितिकरणम् । तेन किं सिद्धं भवति ? इत्याह—तेन क्वचिदित्यादि । चकारश्छन्दसीत्यनुकर्षणार्थः । तेन चानुकृष्टत्वान्नोत्तरत्राभिसम्बध्यते । तेनोत्तरत्र विधानमस्मिन्नेव भव... ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## आर्धधातुकस्येड्वलादेः ॥ ३५ ॥

'छन्दसि' इति निवृत्तम् । आर्धधातुकस्य वलादेरिडागमो भवति । लविता, लवितुम्, लवितव्यम् । पविता, पवितुम्, पवितव्यम् ।

आर्धधातुकस्येति किम् ? आस्ते । शेते । वस्ते । 'रुदादिभ्यः सार्वधातुके' इत्येतस्मिन्नियमार्थे विज्ञायमाने प्रतिपत्तिगौरवं भवतीति आर्धधातुकग्रहणं क्रियते ।

वलादेरिति किम् ? लव्यम्, पव्यम् । लवनीयम्, पवनीयम् ।

### पदमञ्जरी

*आर्धधातुकस्येड्वलादेः ॥ आस्ते, वस्त इति* । ननु च 'रुदादिभ्यः सार्वधातुके' इत्येतन्नियमार्थं भविष्यति—रुदादिभ्य एव सार्वधातुक इति ? तत्राह—*रुदादिभ्यः सार्वधातुक इत्येतस्मिन्निति* । नियमे त्वेतस्मिन् विज्ञायमाने विपरीतोऽपि नियमः सम्भाव्यते–रुदादिभ्यः सार्वधातुके एवेति । तत्र च वक्तव्यं रुदविदेति क्त्वासनोः कित्त्वविधानान्न भविष्यति । अनिटः सनो झलादेर्हलन्ताच्च इत्येव सिद्धत्वात् । क्त्वोऽप्यनिट औपदेशिककित्त्वसद्भावादिति, ततश्च प्रतिपत्तिगौरवं स्यात् । ननु चासत्यार्धधातुकग्रहणे 'अङ्गस्य' इत्यधिकारात्तस्यैवेट्

### न्यासः

**आर्धधातुकस्येड्वलादेः ॥** आस्ते, शेते, वस्ते इति । 'आस उपवेशने', 'शीङ् स्वप्ने', 'वस आच्छादने' । अदादित्वाच् छपो लुक्, 'शीङः सार्वधातुके गुणः' आर्धधातुकग्रहणादिह सार्वधातुकस्येण् न भवतीति । ननु च 'रुदादिभ्यः सार्वधातुके' इत्येतन्नियमार्थं विज्ञायते—'रुदादिभ्य एव सार्वधातुकस्य नान्येभ्यः' इति । 'रुदादिभ्यः सार्वधातुकस्यैव' इत्येषा तु विपरीतनियमाशङ्का न कर्त्तव्या । यदि ह्येवविधो नियमः स्यात्, तदा रुदादेः परस्य सन इडागमो न स्यात्; नियमेन व्यावर्त्तित्वात् । ततश्च 'रुदविद' इत्यत्र रुदिग्रहणमनर्थकं स्यात्; 'हलन्ताच्च' इति किस्वस्य सिद्धत्वात् । तस्मान्नात्र विपरीतनियमाशङ्का । 'रुदादिभ्य एव सार्वधातुकस्य, नान्येभ्यः' इत्येष एव नियमो भविष्यति, ततो नार्थः सार्वधातुकनिवृत्त्यर्थेनार्द्धधातुकग्रहणेन ? इत्यत आह—रुदादिभ्य इत्यादि । 'रुदादिभ्यः सार्वधातुके' इत्येतस्मिन्नियमार्थे विज्ञायमाने कश्चिन्मन्दबुद्धिः प्रतिपत्ता विपरीतनियमं सम्भावयेत्, तत्रानन्तरोक्तया नीत्याऽभिमतनियमे प्रतिपद्यमाने प्रतिपत्तिगौरवं भवतीति । इतिकरणो हेतौ । यत एव 'रुदादिभ्यः सार्वधातुके' इत्येतस्मिन्नियमार्थे विज्ञायमाने प्रतिपत्तिगौरवं भवति, अतो हेतोरार्धधातुकग्रहणं क्रियते । प्रतिपत्तिगौरवपरीहारार्थमित्यभिप्रायः । अथाङ्गाधिकारादङ्गस्य

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



इडिति वर्त्तमाने पुनरिड्ग्रहणं प्रतिषेधनिवृत्त्यर्थम् ॥

पदमञ्जरी

प्राप्नोति, यथा 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इति ? ज्ञापकात्सिद्धम्, यदयम् 'एकाच उपदेशेऽनुदात्तात्' इति प्रत्ययस्येट्प्रतिषेधं शास्ति, यच्च 'निष्ठायां सेटि' 'न क्त्वा सेट्' इत्याह, तज्ज्ञापयति—प्रत्ययस्यैवायमिडिति। न च वृक्षत्वमित्यादौ प्रातिपदिकप्रत्ययस्य प्रसङ्गः, 'ऋत इद्धातोः' इत्यधिकारात्। एवमपि जुगुप्सते, लूभ्याम्, लूभिरित्यादौ प्रसङ्गः ? 'इदितो नुम् धातोः' इत्यतो द्वितीयमपि धातुग्रहणमनुवर्तिष्यते, तत्रैकं स्वरूपपदार्थकम्, ततश्च 'धातोः' इत्येवं धातुसंशब्दनेन विहितस्य धातोः परस्येड्विधानान्न काप्यनिष्टं रूपम्। तदेवं बहुप्रतिविधेयत्वात् प्रतिपत्तिगौरवपरिहारार्थम् 'आर्धधातुकस्य' इत्युक्तम्।

*प्रतिषेधनिवृत्त्यर्थमिति*। केन पुनः प्राप्तस्य प्रतिषेधः शङ्क्यते ? इदमेव वचनं कल्पकं स्यात्—अस्त्यार्द्धधातुकमात्रस्येट्, यतो वलादेः प्रतिषिध्यत इति। 'नेड्वशि कृति' इत्यादिकस्तु प्रतिषेधो नियमार्थः स्यात्॥

न्यासः

मा भूदित्येवमर्थमार्धधातुकग्रहणं कस्मान्न भवति ? नार्हतीत्येवमर्थं भवितुम्। यदि ह्यङ्गस्य स्याद्, 'एकाच उपदेशेऽनुदात्तात्' इति प्रत्ययस्येट्प्रतिषेधोऽनर्थकः स्यात्; प्राप्त्यभावात्। 'न क्त्वा सेट्' 'निष्ठा शीङ्' इति वचनाच्च। न ह्यस्येडागमे सति क्त्वानिष्ठयोः सेट्त्वमुपपद्यते। इह तर्हि वृक्षत्वम्, वृक्षतेति प्रातिपदिकप्रत्ययस्य मा भूदित्येवमर्थं कस्मान्न भवति ? एवमर्थमपि नार्हति भवितुम्, 'ऋत इद्धातोः' इत्यतः 'धातोः' इत्यनुवर्त्तते। नन्वेवमपि लूभ्याम्, लूभिरित्यत्र प्राप्नोतीत्येव, न ह्यत्र प्रकृतेः प्रातिपदिकत्वेन धातुत्वं विहन्यते 'क्विबन्ता धातुत्वं न जहति' इति कृत्वा, तस्मादिह मा भूदित्येवमर्थमार्धतुकग्रहणं युक्तम् ? नैतदस्ति; 'ऋत इद्धातोः' इत्यत्र हि स्वरूपपदात्मकस्य धातुशब्दस्य ग्रहणम्। अत इहापि 'धातोः' इत्यनुवर्त्तमानं तथाभूतमेवानुवर्त्तते। तेन 'धातोः' इत्येवं यो विहितस्तस्यायमिडागमो विज्ञायते। न च लूभ्याम्, लूभिरित्यत्र धातोरित्येवं प्रत्ययो विहितः, किं तर्हि ? प्रातिपदिकादित्येवम्। कुतः ? 'ङ्याप्प्रातिपदिकात्' इत्यधिकारात्। तथा च 'धातोः' इत्येवंविहितस्येड्विधानात् लूभ्याम्, लूभिरित्यत्रासत्यार्धधातुकग्रहण इटः प्रसङ्गो न भवति। तथा जुगुप्सत इत्येवमादावपि; न ह्यत्र धातोरित्येवं सन् विहितः, किं तर्हि ? गुपादीन् धातून् स्वरूपेणोपादाय। तस्मादेतन्निवृत्त्यर्थमप्यार्धधातुकग्रहणं न भवतीति वेदितव्यम्। 'ऋत इद्धातोः' इत्यत्र स्वरूपपदात्मकस्य धातुशब्दस्य ग्रहणं स्यात्। तदा तस्यापि 'ऋतः' इति विशेषणं न परिकल्प्येत। तस्य धातुशब्देऽसम्भवात् तदर्थस्य विशेषणं विज्ञायत इत्यदोषः।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## स्नुक्रमोरनात्मनेपदनिमित्ते ॥ ३६ ॥

नियमार्थमिदम् । स्नुक्रमोरार्धधातुकस्य वलादेरिडागमो भवति,

पदमञ्जरी

स्नुक्रमोरनात्मनेपदनिमित्ते ॥ स्नुक्रमोरुदात्तत्वादिटि सिद्धे नियमार्थं वचनम्- अनात्मनेपदनिमित्त एव यथा स्यादन्यत्र मा भूदिति । अथ प्रस्नुतः, प्रस्नुतवान्, प्रसुस्नूषति, क्रान्तः, क्रान्तवान्–इत्यत्र 'श्र्युकः किति', 'सनि ग्रहगुहोश्च', 'यस्य विभाषा' इति प्रतिषेधे प्राप्ते विध्यर्थमेतत्कस्मान्न भवति ? पुरस्तात्प्रतिषेध-काण्डकरणात् । तस्य हि प्रयोजनम्-अनाश्रितविधानविशेषस्येण्मात्रस्य प्रतिषेधो यथा स्यादिति । यद्यनात्मनेपदनिमित्त इति प्रसज्यप्रतिषेधः स्नुक्रमोरात्मनेपद-निमित्तत्वे सतीण्न भवतीति, एवं च प्रतिषेधप्रकरण एवैतत्पठितव्यम्, तत्राय-मप्यर्थः—नञुपादानं न कर्त्तव्यं भवति ? तथा तु न कृतमित्येव ।

अत्र यद्यात्मनेपदशब्देन नञः समासं कृत्वा पश्चान्निमित्तशब्देन षष्ठी-समासः क्रियेत-आत्मनेपदादन्यदनात्मनेपदम्, परस्मैपदमिति यावत्, तस्य निमित्तम्, ततश्च यत्र स्नुक्रमौ परस्मैपदनिमित्ते-चक्रमिथ, चक्रमिव, चक्रमिम, प्रास्नावीत्, प्रसुस्नुविवेत्यादौ–तत्रैवेड्भवतीत्यर्थः स्यात्, ततश्च कृति न स्यात्–

न्यासः

अथ वा-तत्र तन्त्रेण द्वे धातुग्रहणे उपात्ते; तत्रैकमर्थपदात्मकम्, अपरं स्वरूप-पदात्मकम् । तत्र यदर्थपदात्मकं तत्र तस्योपयोगः, अपरस्य त्वत्रेति न कश्चिद्दोषः । तस्मात् प्रतिपत्तिगौरवपरीहारार्थमेवार्धधातुकग्रहणम् ।

अथेड्ग्रहणं किमर्थम्, यावता 'नेड्वशि कृति' इत्यत इड्ग्रहणमनुवर्त्तते ? इत्याह—इडिति वर्त्तमान इत्यादि । तद्धीड्ग्रहणं प्रतिषेधेन सम्बद्धम्, अतस्तद-नुवृत्तौ तस्याप्यनुवृत्तिः स्यात् । तन्निवृत्त्यर्थं पुनरिड्ग्रहणं क्रियते । ननु च प्राप्तौ सत्यां प्रतिषेधः स्यात्, न च वलादेरार्धधातुकस्य केनचिदिट् प्राप्नोति, अतः प्राप्त्य-भावादेव विधिरयं विज्ञास्यते, न प्रतिषेधः ? नैतदस्ति; एतस्मादेव प्रतिषेधवचनाद् विधिरप्यनुमीयते । नूनमार्धधातुकस्येड्विधिरस्तीति येन वलादेः प्रतिषेधं शास्ति । पुनरिड्ग्रहणात् तु विधिरेष विज्ञास्यते ॥

स्नुक्रमोरनात्मनेपदनिमित्ते ॥ 'स्नु प्रस्रवणे,' 'क्रमु पादविक्षेपे'—अनयोरुदात्त-त्वादिटि सिद्धे नियमार्थं वचनम्—अनात्मनेपदविषय एवानयोर्यथा स्यात्, अन्यत्र मा भूदिति । ननु च स्नौतेरुगन्तत्वात् किति सनि च प्रतिषेधविधानात् तस्य वचनं विध्यर्थमपि सम्भवति ? नैतदस्ति; 'आर्धधातुकस्येड् वलादेः' इत्यनुवर्त्तते । तेनास्याः प्राप्तेर्विषये योगोऽयमिति विज्ञायते । न चास्याः प्राप्तेः सन्कितौ विषयौ; तयोरपवाद-विषयत्वात् । अनात्मनेपदनिमित्ते इति प्रथमाद्विवचनान्तम् । स्नुक्रमोरेतद् विशेषण-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



न चेत्स्नुक्रमौ आत्मनेपदस्य निमित्तं भवतः। क्व च तावात्मनेपदस्य निमित्तम्? यत्रात्मनेपदं तदाश्रयं भवति—भावकर्म-कर्तृकर्म-कर्मव्यतिहाराः, क्रमेर्वृत्त्यादयश्च। तेनायं सत्यात्मनेपदे प्रतिषेधो भवति, नासतीति।

प्रतिषेधफलं चदं सूत्रम्। स्नुक्रमोरुदित्त्वादिट् सिद्ध एव। प्रस्नविता, प्रस्नवितुम्, प्रस्नवितव्यम्। प्रक्रमिता, प्रक्रमितुम्, प्रक्रमितव्यम्।

पदमञ्जरी

प्रस्नविता, प्रस्नवितुम्, प्रस्नवितव्यम्, प्रक्रमिता, प्रक्रमितुम्, प्रक्रमितव्यमिति; तथा चिक्रमिषतीत्यत्रापि न स्यात्, न हि सनन्तादुत्पद्यमानस्य परस्मैपदस्य क्रमिर्निमित्तम्, परस्मैपदग्रहणमेव च कर्त्तव्यं स्यात्, तस्मादात्मनेपदशब्दस्य निमित्तशब्देन समासं कृत्वा पश्चान्नञा समासः कर्त्तव्यः। प्रसज्यप्रतिषेधे त्वनुन्मेष एवास्य पक्षस्य स्यात्। तत्र यद्यनात्मनेपदनिमित्त इति सप्तम्येकवचनं स्यात्, ततोऽयमर्थः स्यात्—आत्मनेपदस्य यन्निमित्तं वकारादि तस्मिन्सति न भवतीति, ततश्च प्रस्नवित्रीयत इत्यत्रापि प्रतिषेधः स्यात्, विद्यते ह्यत्रात्मनेपदस्य निमित्तम् क्यङो वकार इति। प्रथमाद्विवचनान्तं स्नुक्रमोर्विशेषणमिति दर्शयति—न चेत् स्नुक्रमौ *आत्मनेपदस्य निमित्तमिति*। 'वेदाः प्रमाणम्' इतिवदेकवचनम्। सूत्रे तु

न्यासः

मिति दर्शयितुमाह—न चेदित्यादि। क्व च तावात्मनेपदनिमित्ते इति। किं यत्रात्मनेपदं प्रति योग्यतामात्रमपि तयोरस्ति तत्रापि तावात्मनेपदनिमित्ते? उत यत्र तदाश्रयमात्मनेपदं भवति तत्र?—एवमर्थं पृच्छति—यत्रेत्यादि। अत्रैवं व्याख्यानम्—यत्र तदाश्रयमात्मनेपदं सम्भवति तत्र तावात्मनेपदनिमित्ते। किं पुनस्तद् यत्र तदाश्रयमात्मनेपदं भवति? इत्याह—भावकर्म-कर्तृकर्म-कर्मव्यतीहाराः। क्रमेश्चेति। एषु हि स्नुक्रम्याश्रयमात्मनेपदं भवति। आदिशब्देन सर्गादिपरिग्रहः। निमित्तम् = कारणम्। न चाकुर्वत् कार्यं कारणं भवति। यत्र त्वकुर्वत्यपि कार्यं कुसूलस्थबीजादौ कारणमपि व्यपदेशः, तत्रासौ योग्यतयौपचारिकः। तस्माद् यत्र स्नुक्रमावाश्रित्यात्मनेपदं भवति, तत्रैव भावकर्मादौ तयोरात्मनेपदनिमित्तं मुख्यं विज्ञायते। तेनेत्यादि। यस्मादेवं यत्र तावाश्रित्यात्मनेपदं भवति तत्र तयोरात्मनेपदनिमित्तत्वम्। तेन सत्यात्मनेपदे प्रतिषेधोऽयं भवति, नासति। न ह्यसत्यात्मनेपदे तयोर्मुख्यमात्मनेपदनिमित्तत्वमुपपद्यते। ततश्च प्रस्नविता, प्रस्नवितुम्, प्रस्नवितव्यम्, प्रक्रमिता, प्रक्रमितुम्, प्रक्रमितव्यमित्यत्र यद्यप्यात्मनेपदयोग्यत्वात् स्नुक्रमावात्मनेपदस्य निमित्तव्यपदेशमासादयतः, तथापि प्रतिषेधो न भवति। न ह्यत्र मुख्यमात्मनेपदनिमित्तत्वम्; आत्मनेपदाभावात्।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अनात्मनेपदनिमित्ते इति किम् ? प्रस्नोषीष्ट, प्रक्रंसीष्ट। प्रस्नोष्यते, प्रक्रंस्यते। प्रसुस्नूषिष्यते, प्रचिक्रंसिष्यते। सर्वत्रैवात्र

पदमञ्जरी

प्रत्येकं निमित्तत्वस्य विवक्षितत्वात् द्विवचनम्। निमित्तशब्दोऽयमस्ति योग्यतामात्रे—कुसूलस्थेऽपि बीजेषु वक्तारो भवन्ति-अङ्कुरनिमित्तान्येतानीति; अस्ति च कुर्वद्रूपे। तत्राद्ये पक्षे कृत्यपि प्रतिषेधः स्यात्—प्रस्नविता, प्रस्नवितुम्, प्रस्नवितव्यम्; प्रक्रमिता, प्रक्रमितुम्, प्रक्रमितव्यमिति। अस्ति ह्यत्र यथायोगं भावकर्मकर्तृविषयत्वादात्मनेपदं प्रति योग्यत्वम्, तदिह किं विवक्षितम् ? इति पृच्छति—*क्व च तावात्मनेपदस्य निमित्तमिति*। इतरोऽपि कुर्वद्रूपपक्षाश्रयणेन परिहरति—*यत्रेत्यादि*। अत्रैवं व्याख्येयम्—यत्रात्मनेपदं तदाश्रयं भवति तत्रैवात्मनेपदस्य निमित्तम्। किं पुनस्तद्यत्र तदाश्रयमात्मनेपदं भवति ? इत्यत आह—*भावकर्मेत्यादि*। अत्र हि विषये स्नुक्रम्योः श्रूयमाणमात्मनेपदं भवतीति, कुर्वद्रूप एव निमित्तशब्दो मुख्यः, योग्यतामात्रे त्वौपचारिक इति भावः। ननु च भावकर्मादिषु त एवार्था आत्मनेपदस्य निमित्तम्, न स्नुक्रमी, क्व तर्हि प्रतिषेधः स्याद् ? यत्र हि क्रमिरेव निमित्तम्, अनुपसर्गाद्वा-क्रंस्यते ? नैष दोषः; भावकर्मकर्त्तारः क्रमेश्च वृत्त्यादयः। सर्वमेवैतद्धातोरेव विषयतया विशेषणम्, धातुरेव तु साक्षादात्मनेपदस्य निमित्तम्-भावादिविषयाद्धातोरात्मनेपदं भवतीति। *तेनेत्यादि*। यत एवं कुर्वद्रूपमेवात्र निमित्तम्, तेनायं सत्यात्मनेपदे प्रतिषेध इत्यर्थः।

किमुच्यते प्रतिषेध इति, यावता पर्युदासाश्रयेणोपक्रमे व्याख्यातम् ? तत्राह—*प्रतिषेधफलं चेदं सूत्रमिति*। सत्यं पर्युदासेऽपि नियमार्थत्वान्नियमस्य चेतरव्यावृत्तिफलकत्वादेवमुक्तमित्यर्थः।

*प्रस्नोषीष्टेति*। आशिषि लिङ्, 'भावकर्मणोः' इत्यात्मनेपदम्। *प्रक्रंसीष्टेति*। अत्र तु 'प्रोपाभ्यां समर्थाभ्याम्' इति कर्त्तरि। *सर्वत्रेत्यादिना* सूत्रार्थमुदाहरणे

न्यासः

प्रस्नोषीष्टेति। आशिषि लिङ्, सीयुट्, 'भावकर्मणोः' इत्यात्मनेपदम्, 'सुट् तिथोः' इति सुट्, षत्वम्, ष्टुत्वम्। प्रक्रंसीष्टेति। अत्र 'प्रोपाभ्यां समर्थाभ्याम्' इति कर्त्तर्यात्मनेपदम्। प्रस्नोष्यते इति। 'लृट् शेषे च' इति लृट्। प्रचिक्रंसत इति। सन्, 'पूर्ववत्सनः' इत्यात्मनेपदम्। सर्वत्रैवेत्यादि। युक्तं प्रक्रंसीष्ट, प्रस्नोषीष्टेत्यादौ स्नुक्रमोरात्मनेपदस्य निमित्तत्वम्, तस्मादात्मनेपदस्य विधानात्; प्रचिक्रंसत इत्यत्र तु कथं क्रमिरात्मनेपदस्य निमित्तम्, न ह्यत्र क्रमिमाश्रित्यात्मनेपदं भवति, किं तर्हि ? सनन्तं

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



स्नौतिः, क्रमिश्चात्मनेपदस्य निमित्तम् । सनन्तादपि हि 'पूर्ववत्सनः' इत्यात्मनेपदं विधीयते ।

पदमञ्जरी

दर्शयति । ननु सनन्ताद्विधीयमानस्यात्मनेपदस्य स एव धातुर्निमित्तं न स्नुक्रमी ? तत्राह-*सनन्तादपीति* । पूर्ववदिति वचनात्प्रकृतिगतमेव सनन्तेऽपि निमित्तमिति भावः । यदा तर्हि सनन्ताद्भावकर्मणोरात्मनेपदं तदा प्रतिषेधो न प्राप्नोति, न हि तदा प्रकृतिगतं निमित्तमपेक्षितम्, किं तर्हि ? सनन्तमेव स्वतन्त्रं निमित्तम्, पुत्रीयत इत्यादिवत् ? एवं तर्हि सनन्ताद्भावकर्मणोरपि 'पूर्ववत्सनः' इत्यात्मनेपदं भविष्यति; एतयोरर्थयोः सन्प्रकृतावात्मनेपदस्य दृष्टत्वात् । तत्र यद्यपि सनन्तमपि स्वयमेव निमित्तमुपपद्यते, तथापि 'भावकर्मणोः' इत्यस्यावकाशः—भूयते, पच्यते; 'पूर्ववत्सनः' इत्यस्यावकाशः—शिशयिषते; सनन्ताद्भावकर्मणोरुभयप्रसंगे परत्वात् 'पूर्ववत्सनः' इत्यनेन भविष्यति । यदि परं विशेषो नास्तीत्युच्यते ? तदपि न; अत्रैव विशेषस्य सम्भवात् । एवमपि न सिध्यति, 'पूर्ववत्सनः' इत्यत्र 'कर्त्तरि कर्मव्यतिहारे' इत्यतः कर्तरीत्यनुवृत्तेः । तत्र हि प्रकरणे सर्वत्रैव कर्तरीति सम्बध्यते । अथापि न सम्बध्यते, एवमपि यदा सनन्ताद् णिचि कृते 'णिचश्च' इति, 'भावकर्मणोः' इति वा आत्मनेपदम्, तदा प्रतिषेधो न सिध्यति—चिक्रंस्यते, चिक्रंस्यत इति । किं च—भोस्तदानीमपि प्रतिषेध इष्यते ? बाढमिष्यते । यदाह वार्त्तिककारः—'सिद्धं तु स्नोरात्मनेपदेन समानपदस्थस्येट्प्रतिषेधात्, क्रमेश्च' इति । तदेवमात्मनेपदेन समानपदस्थत्वे प्रतिषेधं कुर्वतो *वार्त्तिककार*स्यैवंविधे विषये प्रतिषेध इष्टो लक्ष्यते । यथा पुन*र्वृत्तिकारेण* व्याख्यातं तथा न प्राप्नोति ? कर्त्तव्योऽत्र यत्नः ।

यदि सत्यात्मनेपदे प्रतिषेधः, मा कारि निमित्तग्रहणम् 'अनात्मनेपदे' इत्येवास्तु, सतिसप्तमी विज्ञास्यते—आत्मनेपदे सति न भवतीति, यद्येतल्लभ्यते कृतं स्यात, तत्तु न लभ्यम्; शास्त्रे याः सप्तम्यस्ताः सर्वा परसप्तम्य इति नियमात् परसप्तम्यां तु यदि स्नुक्रमोर्विशेषणं स्नुक्रमोरात्मनेपदेऽनन्तर इति, सिद्धं प्रस्नोषीष्ट, प्रक्रंसीष्ट; प्रस्नोष्यते, प्रक्रंस्यते—अत्र न प्राप्नोति, स्येन व्यवहितत्वात् । अथार्धधातुकस्य विशेषणम्—स्नुक्रमिभ्यां परस्यार्धधातुकस्यात्मनेपदेऽनन्तर इति सिद्धं प्रस्नोष्यते, प्रक्रंस्यते; प्रस्नोषीष्ट, प्रक्रंसीष्ट—अत्र न प्राप्नोति, सीयुट आत्मनेपदभक्तत्वात् । उभयथापि प्रचिक्रंसिष्यते—अत्र न प्राप्नोति, न ह्यत्र क्रमेस्तत्परस्य

न्यासः

धात्वन्तरम् ? इत्याह—सनन्तादपीत्यादि । सनन्तादपि हि यदात्मनेपदं विधीयते 'पूर्ववत्सनः' इत्यनेन । तेन तत्रापि पूर्ववदिति वचनात् पूर्वं धातुस्वरूपमात्मनेपदस्य निमित्तमाश्रीयत इति । यद्यपि सनन्तादात्मनेपदं विधीयते, तथापि क्रमेस्तत्र निमित्ताभावोऽस्त्येवेत्यभिप्रायः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



निमित्तग्रहणं किम् ? सीयुडादेस्तत्परपरस्य च प्रतिषेधार्थम् । इह तु प्रस्नवितेवाचरतीति प्रस्नवित्रीयत इति क्यङन्तमात्मनेपदस्य निमित्तम्, न स्नौतिः ।

पदमञ्जरी

सार्वधातुकस्यात्मनेपदमनन्तरम् । तस्मान्निमित्तग्रहणं कर्त्तव्यम् । तदाह—*निमित्तग्रहणमित्यादि* । तदात्मनेपदं परं यस्मात्स तत्परः, प्रचिक्रंसिष्यते इत्यादौ स्यप्रत्ययः, स परो यस्मात्स तत्परः सन्प्रत्ययः । *इह त्वित्यादि* । प्रागेव व्याख्यातम् । *प्रस्नवित्रीयत इति* । 'रीङ् ऋतः' । वार्त्तिककारमतेऽप्यत्र प्रतिषेधो न भवति, कथम् ? 'समानपदस्थस्य' इति वचनात् इडागमेन पदावस्थापेक्षणीया । तत्र तृचि विभक्तावुत्पन्नायां लब्धेऽपि पदत्वे आत्मनेपदस्यासन्निधानादिट् प्रवर्त्तते । प्रचिक्रंसिष्यत इत्यत्र तु पदावस्थायामात्मनेपदसन्निधानात् प्रतिषेधप्रवृत्तिः ।

न्यासः

अथ निमित्तग्रहणं किमर्थमुपादीयते, न 'आत्मनेपदे' इत्येवोच्यते ? इत्यत आह—**निमित्तग्रहणमित्यादि** । सीयुट् आदिर्यस्य स सीयुडादिः, तदात्मनेपदं परं यस्मात् स तत्परः स्यप्रत्ययः, स परो यस्मात् स तत्परपरः सन्प्रत्ययः; तयोः प्रतिषेधो यथा स्यादित्येवमर्थं निमित्तग्रहणम् । तत्र सीयुडादेः प्रतिषेधार्थम्—प्रस्नोषीष्ट, प्रक्रंसीष्टेति; तत्परपरस्य च प्रतिषेधार्थम्–प्रचिक्रंसिष्यत इति; अत्र हि स्यप्रत्यय आत्मनेपदपरः तत्परपरः सः । किं पुनः कारणमसति निमित्तग्रहणे न सिध्यति ? तदुच्यते; यदि हि निमित्तग्रहणं न क्रियते, तदा 'आत्मनेपदे' इत्येषा परसप्तमी विज्ञायेत । न च प्रस्नोषीष्ट, प्रक्रंसीष्टेत्यात्मनेपदे परत आर्धधातुकमस्ति, तथा ह्यात्मनेपदस्यागमः सीयुट्, तदेकदेशत्वादात्मनेपदे परत इति न शक्यते वक्तुम् । यथा तदवयवस्तकारस्तथा सीयुट् च, ततश्चात्मनेपदे परत उच्चार्यमाणः प्रतिषेधो न स्यात् । प्रचिक्रंसिष्यत इत्यत्र 'आत्मनेपदे' इत्येतस्यां परसप्तम्यां विज्ञायमानायाम् 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति निर्दिष्टग्रहणस्यानन्तर्यार्थत्वात् स्येन व्यवधाने सति सन इट् प्रतिषेधो न स्यात्, निमित्तग्रहणे तु सति भवति । अस्ति ह्यत्र सर्वत्र स्नुक्रमोर्यथायोगमात्मनेपदं प्रति निमित्तभावः । तस्मान्निमित्तग्रहणं कर्तव्यम् । प्रस्नवित्रीयत इत्यत स्नौतेरात्मनेपदं परं चोपलब्धम्, अतः स्नौतिरात्मनेपदस्य निमित्तमिति प्रतिषेधेन भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात्, अतस्तां निराकर्तुमाह—**इह प्रस्नवितेवाचरतीत्यादि** । क्वचित् प्रस्नवितारमिवाचरतीति पाठः, स तु नोपपद्यते । न हि कर्मणः क्यङ् विधीयते, किं तर्हि ? सुबन्तात् कर्तुः । तस्मात् प्रमादकृतोऽयं पाठः । प्रस्नवितेवाचरतीति तृजन्तात् 'कर्तुः क्यङ् सलोपश्च' इति क्यङ्, 'रीङृतः' इति रीङ् । क्यङन्तादात्मनेपदं विधीयमानं ङित

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



❀ क्रमेस्तु कर्त्तर्यात्मनेपदविषयादसत्यात्मनेपदे कृति प्रतिषेधो वक्तव्यः ❀ । प्रक्रन्ता । उपक्रन्ता । कर्त्तरीति किम् ? प्रक्रमितव्यम् । उपक्रमितव्यम् । आत्मनेपदविषयादिति किम् ? निष्क्रमिता ।

स्नौतेः सनि किति च प्रत्यये 'सनि ग्रहगुहोश्च' 'श्र्युकः किति', इत्येव प्रतिषेधो भवति—प्रसुस्नूषति । प्रस्नुतः । प्रस्नुतवान् ॥

## ग्रहोऽलिटि दीर्घः ॥ ३७ ॥

ग्रह उत्तरस्य इटः अलिटि दीर्घो भवति । ग्रहीता, ग्रहीतुम्, ग्रहीतव्यम् ।

### पदमञ्जरी

~ *आत्मनेपदविषयादिति* । तद्योग्यादित्यर्थः । सत्यात्मनेपदे प्रतिषेध इत्युक्तत्वादिदमारभ्यते । अनुपसर्गात्क्रमेः क्रन्ता, क्रमिता—इत्युभयमपि भवति; 'अनुपसर्गाद्वा' इति विकल्पेनात्मनेपदनिमित्तत्वादित्येके । अन्ये त्वात्मनेपदविषयादिति अनन्यभावे विषयशब्दं वर्णयन्तः क्रमितेत्येव भवितव्यमित्याहुः ।

*स्नौतेः सनि किति चेति* । उपलक्षणमेतत् । क्रमेश्च निष्ठायाम् 'यस्य विभाषा' इति द्रष्टव्यम् । *प्रतिषधो भवतीति* । अत्र हेतुः प्रागेवोक्तः ॥

*ग्रहोऽलिटि दीर्घः* ॥ *ग्रह उत्तरस्येट इति* । कथं पुनरिटो दीर्घत्वं लभ्यते,

### न्यासः

इत्येवं विधीयते । न च स्नौतिर्ङित्, किं तर्हि ? क्यङन्तः । तस्मात् क्यङन्तमेवात्मनेपदनिमित्तं न स्नौतिरिति न भवति प्रतिषेधः ।

**क्रमेस्त्वित्यादि** । निमित्तग्रहणात् सत्येवात्मनेपदे प्रतिषेधेन भवितव्यम्, नासतीति । कर्त्तरि कृति प्रतिषेधो न प्राप्नोतीत्युपसंख्यायते । प्रक्रन्ता, उपक्रन्तेति । 'प्रोपाभ्यां समर्थाभ्याम्' इति प्रोपाभ्यामुपसृष्टात् क्रमेरात्मनेपदविधानादिह क्रमिरात्मनेपदस्य विषयः । आत्मनेपदविषय इति । आत्मनेपदं विषयो यस्य स आत्मनेपदविषयः । प्रक्रमितव्यम्, उपक्रमितव्यमिति । 'तयोरेव कृत्यक्तखलर्थाः' इति भावे कर्मणि कृत्यः । निष्क्रमितेति । 'इदुदुपधस्य' इति विसर्जनीयस्य षत्वम् । निष्पूर्वात् क्रमेरात्मनेपदस्याभावादिहात्मनेपदस्य विषयो न भवति । अथ प्रसुस्नूषति, प्रस्नुतः, प्रस्नुतवानित्यत्र कस्मान्न भवति, न ह्यत्र स्नौतिरात्मनेपदविषयः ? इत्यत आह—स्नौतेरित्यादि । ननु 'श्र्युकः किति' इति 'सनि ग्रहगुहोश्च' इतीट्प्रतिषेधस्य धात्वन्तरमुगन्तमवकाश इति परत्वादिटैवात्र भवितव्यम्, न प्रतिषेधेन ? नेतदस्ति; उक्तं हि पुरस्तात् प्रतिषेधकाण्डस्य बलीयस्त्वात् प्रयोजनमिण्मात्रस्थानाश्रितविशेषविधानस्य प्रतिषेधो यथा स्यादिति ॥

**ग्रहोऽलिटि दीर्घः** ॥ ग्रह उत्तरस्येत्यादिना 'ग्रह' इति पञ्चमीं दर्शयति । यद्येवम्,

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


अलिटीति किम् ? जगृहिव । जगृहिम ।

पदमञ्जरी

इडिति यत्प्रकृतं तद्धै प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः ? एवं तर्हि षष्ठ्यन्तप्रपरं करिष्यामि । एवमपि दोषः, प्रकृतमिटमनपेक्ष्येट इत्युच्यमानेऽविशेषाच्चिण्वदिटोऽपि दीर्घप्रसङ्गः ? अस्तु तर्हि प्रथमान्तमेव । तत्र दीर्घ इट् भवतीति सामानाधिकरण्येनान्वये सामर्थ्यादीडागमे विधिः सम्पद्यते । इट् दीर्घ इति चेद्विप्रतिषिद्धम्, यदीट् न दीर्घः, अथ दीर्घो नेट, इट् दीर्घश्चेति विप्रतिषिद्धम् ? स्यादेतत्–दीर्घ इडङ्भवतीत्युक्ते सामर्थ्याद्व्यक्तिपरित्यागेन इकारजातिराश्रीयते, दीर्घग्रहणाच्च तद्व्यक्तिसमवेता सा विधीयत इति । एवमपि दोषः; विवरीषते इत्यत्र सनीटि प्राप्ते 'वृतो वा' इत्यनेन पक्षे दीर्घ इटि च प्रसक्ते 'सनि ग्रहगुहोश्च' इत्युभयस्मिन्नपि प्रतिषिद्धे इट् सनि षेति पक्षे इड्विधीयते । तत्र पुनरिटो विधानाभावात्पक्षे दीर्घ ईकारो न श्रूयेतेति ? नैष दोषः; 'इट् सनि वा' इत्यत्र 'दीर्घ इट्' इति, 'वृतः' इति चानुवर्तिष्यते । यत्तर्हि विदेशस्थमिटं प्रतिषिध्य पुनर्विधानं तत्र न सिध्यति–'जृव्रश्चोः क्त्वि', जरित्वा, जरीत्वा, अत्रोदात्तत्वादिट् प्राप्तः 'वृतो वा' इत्यनेन च दीर्घ इट्, ततो द्वयोरपि 'श्र्युकः किति' इति प्रतिषेधे पुनरिड्विधीयते, न च तत्र दीर्घग्रहणस्यानुवृत्तिसम्भवः । ननु च 'श्र्युकः किति' इत्यत्र 'नेड्वशि' इत्यधिकाराद्व्यक्तिपक्षाश्रयणाच्च इट एकमात्रस्य निषेधः, न दीर्घस्येटः; ततः किम् ? 'वृतो वा' इत्यनेन विहितो दीर्घ इट् तथैव स्थितः, 'जृव्रश्चोः क्त्वि' इत्यनेन चेट् प्रतिप्रसूयते इति जरित्वा, जरीत्वेति द्वयमपि सिद्धं भवति ? स्यादेवं यद्यागमान्तरमीड्विधीयेत; इह तु 'इड् दीर्घः' इति वचनादिट्कार्यमस्यापि भवत्येव । अन्यथा अग्रहीदित्यत्र 'ह्मयन्तक्षण' इति वृद्धिप्रतिषेधः, 'इट ईटि' इति सिज्लोपश्च; अग्रहीढ्वम्, अग्रहीध्वम्, 'विभाषेटः' इति मूर्द्धन्यविकल्पः; जरीत्वेति, 'न क्त्वा सेट्' इति कित्त्वप्रतिषेधः–इत्येते विधयो न सिध्येयुः । तस्मादिट्कार्यमस्यापीटो भवतीत्यङ्गीकर्त्तव्यम्, ततश्च विदेशस्थं प्रतिषिध्य पुनर्विधाने स्थित एव दोषः स्यात्, तस्माद्दीर्घ इडशक्यो विधातुम् । एवं तर्हि 'आर्धधातुकस्य' इति वर्त्तते, ग्रह उत्तरस्यार्द्धधातुकस्य दीर्घो भवति । इहापि तर्हि प्राप्नोति—ग्रहणीयम् ? 'वलादेः' इति वर्तते । इहापि तर्हि न प्राप्नोति–ग्रहीता, ग्रहीतुमिति ? भूतपूर्वगतिर्विज्ञास्यते । इहापि तर्हि प्राप्नोति—ग्राहक इति ?

न्यासः

तदेड्ग्रहणं कर्तव्यम् ? न कर्तव्यम्; प्रकृतमेव तदनुवर्तते । तद्धि प्रथमान्तनिर्दिष्टम्, षष्ठीनिर्देशेन चेहार्थः ? नैष दोषः; 'ग्रहः' इत्येषा पञ्चमीति प्रथमायाः षष्ठीत्वं प्रकल्पयिष्यति; 'तस्मादित्युत्तरस्य' इति वचनात् । जगृहिव, जगृहिमेति । ग्रह्यादिसूत्रेण सम्प्रसारणम् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रकृतस्येटो दीर्घत्वम्, इदं चिण्वदिटो न भवति—ग्राहिता, ग्राहिष्यते ॥

वृतो वा ॥ ३८ ॥

'वृ' इति वृङ्वृञोः सामान्येन ग्रहणम्। तस्मादुत्तरस्य, ऋकारा-

पदमञ्जरी

अस्तु तर्हि इडित्येव। ननु चोक्तं षष्ठीनिर्दिष्टेन चेहार्थ इति? 'ग्रहः' इति पञ्चमी इडिति प्रथमायाः षष्ठीं प्रकल्पयिष्यति—'तस्मादित्युत्तरस्य' इति।

प्रकृतस्येति। 'आर्धधातुकस्येड्' इत्यनन्तरं विहितस्य। *चिण्वदिटो न भवतीति।* जरीत्वेत्यत्र तु 'आर्धधातुकस्येड्' इत्ययमेवेट् प्रतिषिद्धः प्रतिप्रसूयते इति भवत्येव दीर्घः। इह जरीगृहितेति यङन्तात्तृच्यल्लोपयलोपयोः कृतयोर्ग्रहिप्रयोगो द्विर्वचनमिति स एवायं ग्रहिरिति दीर्घः प्राप्नोति? पूर्वस्मादपि विधौ यः स्थानिवद्भावः सोऽपि दीर्घविधौ प्रतिषिद्धः। तस्माद्विहितविशेषणमिहाश्रयणीयम्—ग्रहेर्यो विहितमार्धधातुकं तस्य य इट् तस्य दीर्घ इति।

वृतो वा ॥ अत्र यदि 'वृ वरणे' इत्येतस्य तसिला निर्देशः स्यात्? 'व्रः' इत्येव निर्दिश्येत, यथा 'ग्रो यङि' इति। अथ तस्य ऋकारान्तानां च ग्रहणम्?

न्यासः

तथा ग्राहिता, ग्राहिष्यत इत्यत्र कथं चिण्वदिटो न भवति? इत्याह—प्रकृतस्यैवेत्यादि। आर्धधातुकस्येति यः प्रकृत इट् तस्येदं दीर्घत्वं भवति, न चिण्वदिटः; तस्याप्रकृतत्वात्। चिण्वदित्यनेन चिण्वद्भाव उपलक्ष्यते। तत्सहचरित इट् चिण्वदित्युच्यते। ग्राहितेति। 'अनद्यतने लुट्', 'स्यतासी लृलुटोः' इति तासिः, 'भावकर्मणोः' इत्यात्मनेपदम्, 'लुटः प्रथमस्य' इत्यादिना डादेशः, टिलोपः, 'स्यसिच्सीयुट्तासिषु' इत्यादिनेट्, चिण्वद्भावाद् वृद्धिः। अथ जरीगृहिता, जरीगृहितुमित्यत्र यङन्तात् तृनि तुमुनि च यलोपाल्लोपयोः कृतयोर्दीर्घः कस्मान्न भवति? उत्तरसूत्रे वाग्रहणस्योभयोरपि योगयोः शेषभूतत्वाद्व्यवस्थितविभाषाविज्ञानात्। अथ वा—विहितविशेषणपक्षोऽत्र व्याख्यायते। ग्रहेर्यो विहित इट् तस्य दीर्घो भवति। न चात्र ग्रहेर्विहित इट्, कुतस्तर्हि? यङन्तात्। तस्मान्नेह दीर्घस्य प्रसङ्गः। अथ 'ग्रह ईडलिटि' इत्येवं कस्मान्नोक्तम्, किं दीर्घग्रहणेन? नैवं शक्यम्; एवं सतीट्कार्यमीटो न स्यात्, ततश्चाग्रहीदित्यत्र 'इट ईटि' इति सिचो लोपो न स्यात्, 'नेटि' इति प्रतिषेधश्च; इह चाग्रहीढ्वम्, अग्रहीध्वमित्यत्रेटः 'विभाषेटः' इति मूर्धन्यश्च; दीर्घे इट आदेशे सति तस्य स्थानिवद्भावादिट्कार्यमुपपद्यत इति दीर्घ एव विधीयते ॥

वृतो वा ॥ १. 'वृ वरणे' इत्यस्येदं ग्रहणं वा स्याद्?, २. अथ वा—अस्यान्येषाञ्च ऋकारान्तानाम्?, ३. उत तस्यान्येषाञ्च ॠकारान्तानाम्?, ४. आहोस्विद् वृङ्वृञो-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


न्तेभ्यश्चेटो वा दीर्घो भवति । वरिता, वरीता । प्रावरिता, प्रावरीता । ॠकारान्तेभ्यः—तरिता, तरीता । आस्तरिता, आस्तरीता ।

वृत इति किम् ? करिष्यति । हरिष्यति ।

अलिटीत्येव—ववरिथ । तेरिथ ॥

न लिङि ॥ ३९ ॥

वृत उत्तरस्य इटो लिङि दीर्घो न भवति । विवरिषीष्ट । प्रावरिषीष्ट । आस्तरिषीष्ट । विस्तरिषीष्ट ॥

सिचि च परस्मैपदेषु ॥ ४० ॥

पदमञ्जरी

एवमपि तस्य पृथग्ग्रहणमनर्थकम्; ॠकारान्तत्वात् । अथ तस्य ॠकारान्तानां च ? तथा च सति 'ॠतश्च संयोगादेः' इत्यत्र 'ॠतः' इति न वक्तव्यम्; अस्यैवानुवृत्तेः । अथ वृङ्वृञोः ॠकारान्तानां च ? तथापि वृग्रहणमनर्थकमृकारान्तत्वात् । तस्माद्वृत्तिकारोपदर्शितानामेव ग्रहणम् ।

*वृत इति किमिति* । 'उः' इति वक्तव्यमिति मन्यते ॥

*न लिङि ॥ विस्तरिषीष्टेति* । कर्मण्यात्मनेपदम् ॥

न्यासः

श्चान्येषाञ्च ॠकारान्तानाम् ?, अथ वा—५. तयोश्च ॠकारान्तानाम् ? तत्र यदि प्रथमः पक्ष आश्रितः स्यात् तदा यणादेशं कृत्वा 'व्रः' इति निर्देशं कुर्याद्, यथा—'ग्रो यङि' इति । अथ यदि द्वितीयः पक्षः, तदा 'वृ' इत्येतस्य ग्रहणं न कुर्यात्; ॠकारान्तग्रहणेनैव तद्ग्रहणस्य सिद्धत्वात् । अथ तृतीयः पक्षः, 'ॠतस्य संयोगादेः' इत्यत्र ॠतशब्देन ह्रस्वस्य ग्रहणं न कुर्यात्, इदमेव हि तत्र ॠकारग्रहणमनुवर्त्तिष्यते । अथ चतुर्थः पक्षः, वृङ्वृञोः पृथग् ग्रहणं न कुर्यात्; ॠकारान्तग्रहणेनैतद्ग्रहणस्य सिद्धत्वात् । तस्मात् पारिशेष्यात् पञ्चमोऽत्र पक्षोऽभिमत इति मत्वाऽऽह—वृङ्वृञोः सामान्येन ग्रहणमित्यादि । सामान्येन ग्रहणमिति विशेषानुपादानात् ।

वृत इति किमिति ? एवं मन्यते—'उर्वा' इत्येवं वक्तव्यम्, एवमप्युच्यमाने वृङ्वृञोर्ॠकारान्तयोः सवर्णग्रहणादृकारान्तानाञ्च ग्रहणं भविष्यति । एवमप्युच्यमाने सत्यतिप्रसङ्गो भवतीति दर्शयन्नाह—करिष्यति, हरिष्यतीति । अत्र 'ॠद्धनोः स्ये' इतीट् ॥

न लिङि ॥ वरिषीष्टेत्यादौ 'लिङ्सिचोरात्मनेपदेषु' इतीट् । विस्तरिषीष्टेति । कर्मण्यात्मनेपदम् ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


परस्मैपदपरे सिचि वृत उत्तरस्य इटो दीर्घो न भवति । प्रावारिष्टाम्, प्रावारिषुः । अतारिष्टाम्, अतारिषुः । आस्तारिष्टाम्, आस्तारिषुः ।

परस्मैपदेष्विति किम् ? प्रावरिष्ट, प्रावरीष्ट ।

## इट् सनि वा ॥ ४१ ॥

वृतः सनो वा इडागमो भवति । वुवूर्षति । विवरिषते, विवरीषते । प्रावुवूर्षति, प्राविवरिषति, प्राविवरीषति । ऋकारान्तेभ्यः—तितीर्षति, तितरिषति, तितरीषति । आतिस्तीर्षति, आतिस्तरिषति, आतिस्तरीषति । 'सनि ग्रहगुहोश्च' इति इट्प्रतिषेधे प्राप्ते पक्षे इडागमो विधीयते । इटश्च 'वृतो वा' इति पक्षे दीर्घः[1]।

चिकीर्षति, जिहीर्षति—इत्यत्रोपदेशाधिकारात्, लाक्षणिकत्वाच्च इडागमो न भवति ॥

## लिङ्सिचोरात्मनेपदेषु ॥ ४२ ॥

वृतो लिङि सिचि च आत्मनेपदपरे वा इडागमो भवति ।

### पदमञ्जरी

*सिचि च परस्मैपदेषु* ॥ *अतारिष्टामिति* । 'तॄ प्लवनतरणयोः' । *अस्तारिष्टामिति* । 'स्तॄञ् आच्छादने', ञिदुभयपदी ॥

इट् *सनि वा* ॥ अत्रातिस्तीर्षतीति परस्मैपदपाठो न युक्तः ॥

*लिङ्सिचोरात्मनेपदेषु* ॥ *आत्मनेपदे परे इति* । सिच एवैतद्विशेषणम्, न लिङः;

### न्यासः

सिचि च परस्मैपदेषु ॥ प्रावारिष्टामिति । 'तस्थस्थमिपां तान्तन्तामः' इति तसस्ताम्, सामान्यविहित इट्, सिचि वृद्धिः । प्रावारिषुरिति । 'सिजभ्यस्तविदिभ्यश्च' इति झेर्जुस् । वृङ उदाहरणं नोपन्यस्तम्; तस्य परस्मैपदासम्भवात् । प्रावरिष्ट, प्रावरीष्टेति । 'लिङ्सिचोरात्मनेपदेषु' इतीट् ॥

इट् सनि वा ॥ वुवूर्षत इति । 'इको झल्' इति सनः कित्त्वम्, 'अज्झनगमां सनि' इति दीर्घः, 'उदोष्ठ्यपूर्वस्य' इत्युत्वम्, रपरत्वम् । अथेह कस्मान्न भवति—चिकीर्षति, जिहीर्षतीति, अस्ति दीर्घत्वे कृते प्राप्तिः ? इत्यत आह—चिकीर्षति, जिहीर्षतीति । गतार्थम् ॥

लिङ्सिचोरात्मनेपदेषु ॥ वृत उदात्तत्वादिटि प्राप्ते विकल्पार्थ आरम्भः ।

---

१. 'इट्पक्षे 'वृतो वा' इति दीर्घः' इति पाठान्तरम् ।


CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


वृषीष्ट, वरिषीष्ट। प्रावृषीष्ट, प्रावरिषीष्ट। आस्तरिषीष्ट, आस्तीर्षीष्ट। सिचि खल्वपि—अवृत, अवरिष्ट, अवरीष्ट। प्रावृत, प्रावरिष्ट, प्रावरीष्ट। आस्तीर्ष्ट, आस्तरिष्ट, आस्तरीष्ट।

आत्मनेपदेष्विति किम्? प्रावारिष्टाम्, प्रावारिषुः। लिङः प्रत्युदाहरणं न दर्शितम्; असम्भवात्, यासुटोऽवलादित्वादिति ॥

**ऋतश्च संयोगादेः ॥ ४३ ॥**

ऋदन्ताद्धातोः संयोगादेरुत्तरयोर्लिङ्सिचोरात्मनेपदेषु वा इडागमो भवति। ध्वृषीष्ट, ध्वरिषीष्ट। स्मृषीष्ट, स्मरिषीष्ट। अध्वृषाताम्, अध्वरिषाताम्। अस्मृषाताम्, अस्मरिषाताम्।

ऋत इति किम्? च्योषीष्ट, प्लोषीष्ट। अच्योष्ट, अप्लोष्ट।
संयोगादेरिति किम्? कृषीष्ट, हृषीष्ट। अकृत, अहृत।
'आत्मनेपदेषु' इत्येव—अध्वार्षीत्, अस्मार्षीत्।

**पदमञ्जरी**

असम्भवात्। न चैवं तस्य परस्मैपदेऽपि प्रसङ्गः; 'वलादेः' इत्यधिकारात्। प्रावृषीष्टेत्यादौ 'उश्च' इति कित्त्वम् ॥

*ऋतश्च संयोगादेर्गुणः* ॥ उदाहरणेषु 'भावकर्मणोः' आत्मनेपदम्।

**न्यासः**

'आत्मनेपदेषु' इति परसप्तमीयम्। सिचश्चैतद् विशेषणम्। यद्येवम्, लिङ् विशेषितो न स्यात्, ततश्च लिङ् परस्मैपदेष्वपि प्रसज्येत? नैतदस्ति; 'वलादेः' इत्यधिकारात्, लिङश्च परस्मैपदेषु यासुडादित्वाभावात्। आत्मनेपदपर इति। आत्मनेपदं परं यस्मात् स तथोक्तः। एतच्च सिजित्यनेनैव सम्बध्यते, न लिङित्यनेन; सिचमेव प्रत्यात्मनेपदग्रहणस्य विशेषणभावात्। वृषीष्टेति। 'उश्च' इति कित्त्वाद् गुणाभावः। आस्तीर्षीष्टेति। पूर्ववत् कित्त्वदीर्घत्वादिः। अवृतेति। 'ह्रस्वादङ्गात्' इति सिचो लोपः।

ऋतश्च संयोगादेः ॥ ऋकारान्तानामनुदात्तत्वात् प्रतिषेधे प्राप्ते विकल्पार्थं वचनम्। ध्वृषीष्टेति। 'ध्वृ हूर्च्छने'। 'भावकर्मणोः' इत्यात्मनेपदम्। एवमन्यत्राप्यात्मनेपदं वेदितव्यम्। पूर्ववत् कित्त्वाद् गुणाभावः। स्मृषीष्टेति। 'स्मृ चिन्तायाम्'।

च्योषीष्टेति। 'च्युङ् छ्युङ् ज्युङित्यादि गतौ'। अत्र ङित्त्वात् कर्त्तर्यात्मनेपदम्। अकृषतेति। 'आत्मनेपदेष्वनतः' इत्यदादेशः।

अथ संस्कृषीष्ट, समस्कृतेत्यत्र कस्मान्न भवति, भवति हि करोतिरत्र 'संपर्युपेभ्यः

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



संस्कृषीष्ट, समस्कृत--इत्यत्रोपदेशाधिकारात्, अभाक्तत्वाच्च सुट इडागमो न भवति ॥

स्वरतिसूतिसूयतिधूञूदितो वा ॥ ४४ ॥

स्वरति, सूति, सूयति, धूञ्–इत्येतेभ्यः, ऊदिद्भ्यश्चोत्तरस्य वलादेरार्धधातुकस्य वा इडागमो भवति । स्वर्त्ता, स्वरिता । सूति–प्रसोता, प्रसविता । सूयति–सोता, सविता । धूञ्–धोता, धविता । ऊदिद्भ्यः खल्वपि–'गाहू', विगाढा, विगाहिता । गुपू–गोप्ता, गोपिता ।

पदमञ्जरी

*संस्कृषीष्टेति* । 'समः सुटि' इत्यत्र 'सम्पुंकानां सो वक्तव्यः' इति वचनात् सत्वम् ॥

*स्वरतिसूतिसूयतिधूञूदितो वा* ॥ अत्र स्वरतेरनुदात्तत्वादप्राप्ते, इतरेषां तु प्राप्ते विभाषा ।

न्यासः

करोतौ भूषणे' इति सुटि कृते संयोगादिः ? इत्याह—संस्कृषीष्टेत्यादि । 'एकाच उपदेशेऽनुदात्तात्' इत्यत उपदेशग्रहणमनुवर्त्तते, तेनोपदेशावस्थायां यः संयोगादिस्तत एवैतेन भवितव्यम्, न च करोतिरुपदेशावस्थायां संयोगादिः, किं तर्हि ? तत उत्तरम्, अतो न भवति । अभक्तत्वाच्चेत्यादि । संस्कृषीष्टेत्यत्रायं परीहारः, न समस्कृतेत्यत्र । अत्र ह्यडागमः 'तद्भक्तस्तद्ग्रहणेन गृह्यते' इति अटोऽप्यङ्गग्रहणेन ग्रहणादिति 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इति सुटोऽप्यङ्गग्रहणेन ग्रहणात् करोतिरपि संयोगादिर्भवत्येव । अङ्गाधिकाराच्चाङ्गावयवोऽत्र संयोगोऽपि गृह्यते; प्रत्यासत्तेः। न च संस्कृषीष्टेत्यत्राङ्गावयवः संयोगादिः, यश्चाङ्गावयवो नासौ संयोगो भवति, तदिह न भवतीट्प्रसङ्गः । अत्र 'सम्पुंकानां सत्वम्' इति वचनात् समो मकारस्य सकारः, पूर्वस्यानुनासिकः । समस्कृतेत्यत्र पूर्ववत् सिचो लोपः । चकार आत्मनेपदानुकर्षणार्थः, तेनोत्तरत्र विधिरविशेषेण भवति; चानुकृष्टस्योत्तरत्राननुवृत्तेः ॥

स्वरतिसूतिसूयतिधूञूदितो वा ॥ 'स्वृ शब्दोपतापयोः', 'षूङ् प्राणिगर्भविमोचने' इत्यादादिकः, 'षूङ् प्राणिप्रसवे' इति दैवादिकः । 'धूञ् कम्पने' इति स्वादिः, क्र्यादिः, चुरादिश्च । तत्र 'एकाचः' इत्यधिकारादाद्ययोर्ग्रहणम्, नेतरस्य । ऊदितः—'गाहू विलोडने', 'गुपू रक्षणे' इत्यादयः । एतेषां स्वरतेश्चानुदात्तत्वात् प्रतिषेधे प्राप्ते, इतरेषामुदात्तत्वान्नित्यमिटि प्राप्ते विकल्पार्थं वचनम् ? विगाढेति । पूर्ववड्ढत्वादि विधेयम् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


'वा' इति वर्त्तमाने पुनर्वाग्रहणं लिङ्सिचोर्निवृत्त्यर्थम् । सूतिसूयत्योर्विकरणनिर्देशः 'षू प्रेरणे' इत्यस्य निवृत्त्यर्थः ।

'धूञ्' इति सानुबन्धकस्य निर्देशः—'धू विधूनने' इत्यस्य निवृत्त्यर्थः । सविता, धुवितेत्येव नित्यमेतयोर्भवति ।

स्वरतेरेतस्माद्विकल्पाद् 'ऋद्धनोः स्ये' इत्येतद्भवति विप्रतिषेधेन—स्वरिष्यति ।

**पदमञ्जरी**

*वेति वर्त्तमान इति* । 'इट् सनि वा' इत्यतः । *लिङ्सिचोर्निवृत्त्यर्थमिति* । अन्यथा वाग्रहणसम्बद्धयोस्तयोरप्यनुवृत्तिः स्यात् । *षू प्रेरण इत्यस्य निवृत्त्यर्थं इति* । अन्यथा निरनुबन्धकत्वात्तस्यैव ग्रहणं स्यात् । एवं तर्हि सूङिति वक्तव्यम् ? एवमपि 'लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणम्' इति सूयतेरेव ग्रहणं स्यात्, न सूतेः । तस्याः परिभाषाया अस्तित्वेऽयमेव विकरणनिर्देशो ज्ञापकः । *धू विधूनन इत्यस्य निवृत्त्यर्थं इति* । अन्यथा पूर्ववत्तस्यैव ग्रहणं स्यात् । *धुवितेति* । कुटादित्वान्ङित्त्वम् ।

*स्वरतेरिति* । अस्य विकल्पस्यावकाशः—स्वर्त्ता, स्वरिता; 'ऋद्धनोः स्ये'

**न्यासः**

अथ वावचनं किमर्थम् ? यावता 'इट् सनि वा' इत्यतो वाग्रहणमनुवर्तते ? इत्याह—वेत्यनुवर्त्तमाने इत्यादि । तद्धि वाग्रहणं लिङ्सिज्भ्यां सम्बद्धमिति तदनुवृत्तौ तयोरप्यनुवृत्तिः स्यात् । तस्मात् पूर्ववाग्रहणसम्बद्धयोर्लिङ्सिचोर्निवृत्त्यर्थमन्यदिदं वाग्रहणमिति । ननु च लिङ्सिचोरनुवृत्तौ स्वरतिग्रहणमनर्थकमापद्यते, पूर्वेणैव विकल्पस्य सिद्धत्वात् ? नैतदस्ति; वचनप्रामाण्यात् स्वरतिग्रहणं नित्यार्थं विज्ञायते । अथ वा—स्वरितग्रहणाद् 'वा' इत्येतन्निवर्त्तते । अथ सूतिसूयत्योर्विकरणनिर्देशः किमर्थः, न 'सू' इत्येवोच्येत ? इत्यत आह—सूतिसूयत्योरित्यादि । 'सू' इत्युच्यमाने 'निरनुबन्धकग्रहणेन सानुबन्धकस्य' इति 'सू प्रेरणे' इत्यस्यैव ग्रहणं स्यात् । अतस्तन्निवृत्त्यर्थो विकरणनिर्देशः करणीयः । यद्येतत् प्रयोजनम्, सूङिति निर्देशः कर्त्तव्यः ? नैवं शक्यम्; एवं हि सति निर्देशे क्रियमाणे 'लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणम्' इति सूयतेरेव ग्रहणं स्यात्, न सूतेः । अतस्तन्निवृत्तये विकरणनिर्देशः । अस्याः परिभाषाया अस्तित्वेऽयमेव निर्देशो ज्ञापकः । अस्यां ह्यसत्याम् 'सूङ्' इति निर्देशं कुर्यात् । अथ 'धूञ्' इति सानुबन्धकस्य ग्रहणं न क्रियेत, ततो निरनुबन्धकपरिभाषया 'धू विधूनने' इत्यस्यैव ग्रहणं स्यात्, एतच्चानिष्टम् । अतो विधूननार्थस्य निवृत्त्यर्थः सानुबन्धकनिर्देशः ।

स्वरतेरित्यादि । अस्य विकल्पस्यावकाशः—स्वरिता, स्वर्त्तेति; 'ऋद्धनोः स्ये'

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



किति तु प्रत्यये 'श्र्युकः किति' इति नित्यः प्रतिषेधो भवति पूर्वविप्रतिषेधेन—स्वृत्वा, सूत्वा, धूत्वा ॥

## रधादिभ्यश्च ॥ ४५ ॥

'रध हिंसासंसिद्धयोः' इत्येवमादिभ्योऽष्टाभ्य उत्तरस्य वलादेरार्धधातुकस्य वा इडागमो भवति । रद्धा, रधिता । नंष्टा, नशिता ।

### पदमञ्जरी

इत्यस्यावकाशः—करिष्यति; स्वरतेः स्ये उभयप्रसङ्गे विप्रतिषेधः। *किति तु प्रत्यय श्र्युक इति।* ननु चायं विकल्पो यथा एकाज्लक्षणं प्रतिषेधं बाधते तृजादौ, तथा किल्लक्षणमपि प्रतिषेधं बाधेत ? न बाधेत; कथम् ? येन नाप्राप्ते तस्य बाधनं भवति। तस्मादपवादता तावदेकाज्लक्षणमेव प्रतिषेधं प्रत्यस्य भवति, कित्युभयप्रसङ्गे पुरस्तात्प्रतिषेधकाण्डकरणात्प्रतिषेध एव भवति। लिङ्गाच्च, यदयम् 'स्वृयूर्णुभरज्ञपिसनाम्' इति विकल्पं शास्ति; अन्यथा अनेनैव सत्यपि विकल्पस्य सिद्धत्वात्पुनस्तं न विदध्यात्। वृत्तौ तु विप्रतिषेधशब्देनापि पुरस्तात्प्रतिषेधकाण्डकरणमेव विवक्षितम्; समानफलत्वात् ॥

*रधादिभ्यश्च ॥*

रधिर्नशिस्तृपिदृपी द्रुहिर्मुहि ष्णुहिष्णिही ।
रधादयोऽमी पठिता दिवादिष्वष्ट कृष्टिभिः ॥

*नंष्टेति ।* 'मस्जिनशोर्झलि' इति नुम्। तृपिदृप्योः-'अनुदात्तस्य चर्दुपधस्य'

### न्यासः

इत्यस्यावकाशः—करिष्यति, हरिष्यतीति; स्वरतेरस्योभयप्रसङ्गे 'ऋद्धनोः स्ये' इत्येतद् भवति विप्रतिषेधेन स्वरिष्यतीति।

किति तु प्रत्यय इत्यादि। 'श्र्युकः किति' इत्यस्यावकाशः—सूतः, सूतवानिति, अस्य विकल्पस्यावकाशः—स्वर्त्ता, स्वरितेति; सोता, सविता; धोता, धवितेति; इहोभयप्रसङ्गे श्र्युकः कितीति नित्यं प्रतिषेधो भवति पूर्वविप्रतिषेधेन स्वृत्वा; सूत्वा, धूत्वा। एतच्च पुरस्तात् प्रतिषेधकाण्डविधानादेव सिद्धम्। उक्तं हि प्राक् पुरस्तात् प्रतिषेधविधानस्य प्रयोजनम्—इण्मात्रस्यानाश्रितविधानविशेषस्य प्रतिषेधो यथा स्यादिति। तदेतत् पुरस्तात् प्रतिषेधविधानं पूर्वविप्रतिषेधेन समानफलकत्वादिह पूर्वविप्रतिषेधशब्देनोक्तम् ॥

रधादिभ्यश्च ॥ 'रध हिंसासंराध्योः', 'णश अदर्शने', 'तृप प्रीणने', 'दृप हर्षणमोहनयोः', 'द्रुह जिघांसायाम्', 'मुह वैचित्त्ये', 'ष्णुह उद्गिरणे', 'ष्णिह प्रीतौ'—इत्येते रधादयः। एषु तृप्यतिदृप्यत्योरनुदात्तत्वादिट्प्रतिषेधे प्राप्ते शेषाणामुदात्तत्वा-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



त्रप्ता, तर्प्ता, तर्पिता । द्रप्ता, दर्प्ता, दर्पिता । द्रोग्धा, द्रोढा, द्रोहिता । मोग्धा, मोढा, मोहिता । स्नोग्धा, स्नोढा, स्नोहिता । स्नेग्धा, स्नेढा, स्नेहिता ।

क्रादिनियमाल्लिटि रधादिभ्यः परत्वाद्विकल्पं केचिदिच्छन्ति । अपरे पुनराहुः—पूर्वविधेरिण्निषेधविधानसामर्थ्याद् बलीयस्त्वं प्रतिषेधनियमस्येति नित्यमिटा भवितव्यम्—ररन्धिव, ररन्धिमेति भवति ॥

**पदमञ्जरी**

इति पक्षे अमागमः । द्रोढेत्यादौ 'वा द्रुहमुहष्णुहष्णिहाम्' इति घत्वढत्वे ।

*क्रादिनियमादिति* । ननु च प्रतिषेधस्यासौ नियमः, न च रधादौ कस्यचित्प्रत्ययाश्रयः प्रकृत्याश्रयो वा प्रतिषेधः प्राप्नोति, ययोरपि प्राप्नोति तृपिदृप्योः, तयोरपि प्रतिषेधे लिट्यनेन व्यावर्तितेऽप्ययं विकल्पः स्यादेव; विकल्पस्यानियतत्वात् ? एवं मन्यते—'यावान्कश्चिदिडभावः प्रतिषेधनिबन्धनो विकल्पनिबन्धनो वा, तस्य सर्वस्य क्रादिसूत्रेण नियमः' इति । एवं चोत्तरग्रन्थे प्रतिषेधनियमस्येति अभावनियमस्येत्येवार्थो द्रष्टव्यः । *अपर इति* । ननु चास्तु प्रतिषेधस्य प्राबल्यम्, किमायातम् ? नियमस्य प्रतिषेधविषयत्वान्नियमस्यापि प्राबल्यमित्यदोषः । *नित्यमिटा भवितव्यमिति* । प्रतिषेधाधिकारेण 'क्रादीनामेव लिटि इण्न भवति' इति नियमे विज्ञायमाने धात्वन्तरेषु यावान् कश्चित्प्रतिषेधः स सर्वो मा भूत्, विकल्पस्तु कस्मान्न स्यादिति ! ॥

**न्यासः**

न्नित्यमिटि प्राप्ते विकल्पार्थं वचनम् । नंष्टेति 'मस्जिनशोर्झलि' इति नुम् । व्रश्चादिसूत्रेण षत्वम्, ष्टुत्वम् । त्रप्तेति । 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' इत्यम्, यणादेशः । तर्पितेति । लघूपधगुणः । द्रोग्धा, मोग्धा, स्नोग्धा, स्नेग्धेतीडभावपक्षे 'वा द्रुहमुहष्णुहष्णिहाम्' इति घत्वम्, 'झषस्तथोर्धोऽधः' इति धत्वम्, 'झलां जश् झशि' इति जश्त्वं गकारः । द्रोढा, मोढा, स्नोढा, स्नेढेति । पूर्ववड् ढत्वादि विधेयम् ।

क्रादिनियमाल्लिटि रधादिभ्यः परत्वाद्विकल्पं केचिदिच्छन्तीति । पक्षे ररध्व, ररध्मेत्याद्यपि यथा स्यात् । अपरे पुनरित्यादि । एतदेव हि पूर्वविधेरिट्प्रतिषेधविधानस्य प्रयोजनम्—प्रतिषेधस्य बलीयस्त्वं यथा स्यादिति । तस्मात् प्रतिषेधनियमस्य बलीयस्त्वाद् नित्यमिटा भवितव्यम् । तत्र पूर्वेषामयमभिप्रायः—पूर्वविधेरिट्प्रतिषेधविधानसामर्थ्यात् प्रतिषेधस्य बलीयस्त्वं भवति, न तु प्रतिषेधनियमस्येति । इतरेषामयमभिप्रायः—प्रतिषेधस्य बलीयस्त्वात् तद्धर्मस्य नियमस्यापि बलीयस्त्वं भवति, न तु प्रतिषेधस्यैवेति तस्य बलीयस्त्वे सति तत्प्राप्तिः, तेन नित्यमिटा भवितुं युक्तमिति । प्रतिषेधनियमस्तु स एव क्रादिनियमः । ररन्धिव, ररन्धिमेति । 'रधिजभोरचि' इति नुम् ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



### निरः कुषः ॥ ४६ ॥

'निर्' इत्येवम्पूर्वात् कुष उत्तरस्य वलादेरार्धधातुकस्य वा इडागमो भवति । निष्कोष्टा, निष्कोषिता । निष्कोष्टुम्, निष्कोषितुम् । निष्कोष्टव्यम्, निष्कोषितव्यम् ।

निर इति किम् ? कोषिता, कोषितुम्, कोषितव्यम् ।

'निसः' इति वक्तव्ये 'निरः' इति निर्देशेन रेफान्तमुपसर्गान्तरमस्तीति ज्ञाप्यते । तस्य हि निलयनमिति 'उपसर्गस्यायतौ' इति लत्वं भवति । निसो हि रुत्वस्यासिद्धत्वाल्लत्वं न स्यात् ॥

### इण्निष्ठायाम् ॥ ४७ ॥

निरः कुषो निष्ठायामिडागमो भवति । निष्कुषितः । निष्कुषितवान् ।

#### पदमञ्जरी

*निरः कुषः* ॥ *निष्कोष्टेति* । 'इदुदुपधस्य चाप्रत्ययस्य' इति षत्वम् । *निस इति वक्तव्य इति* । प्रादिषु हि निसिति पठ्यते, तथा च 'निसस्तपतौ' इति निर्देश इति भावः । किमेतस्य ज्ञापने प्रयोजनम् ? इत्यत आह—*तस्येति* । ननु च नित्य एव रुत्वे कृते लत्वं भविष्यति ? तत्राह—*निसो हीति* ॥

*इण्निष्ठायाम्* ॥ इडिति वर्त्तमाने पुनरिड्ग्रहणं किमर्थम् ? इत्यत आह—*इड्ग्रहणं नित्यार्थमिति* । नन्वारम्भसामर्थ्यादेव नित्यमिड् भविष्यति, विकल्पस्य

#### न्यासः

निरः कुषः ॥ 'कुष निष्कर्षे' । अस्योदात्तत्वान्नित्यमिटि प्राप्ते विकल्पार्थं वचनम् । निष्कोष्टेति । 'शर्परे विसर्जनीयः' इत्यस्यानुवृत्तेः 'इदुदुपधस्य चाप्रत्ययस्य' इति विसर्जनीयस्य षत्वम् ।

ननु च सकारान्तोऽयमुपसर्गः, तथा प्रादिषु निसिति पठ्यते, न तु निरिति, तस्मात् 'निसः' इति वक्तुं युक्तम्, न निर इति; यथा—'निसस्तपतावनासेवने' इति, तत् किमर्थं निर इति निर्देशः ? इत्याह—निस इति । वक्तव्य इत्यादिना रेफान्तस्यास्तित्वज्ञापने प्रयोजनमाह । तेनेत्यादि । स्यादेतत् । निस इति रुत्वे कृते लत्वं भविष्यतीत्याह—निसो हीत्यादि । निलयनमिति । अयतेर्ल्युटि रूपम् ॥

इण्निष्ठायाम् ॥ किमर्थमिडिति वर्त्तमाने पुनरिड्ग्रहणं क्रियते ? इत्याह—इड्ग्रहणं नित्यार्थमिति । असतीड्ग्रहणे हि विकल्पस्य प्रकृतत्वात् पाक्षिक इड्विधिः स्यात् । तस्मान्नित्यार्थमिड्ग्रहणं कर्त्तव्यम् । ननु च सिद्धा विभाषा पूर्वसूत्रेण, आरम्भसाम-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



इड्ग्रहणं नित्यार्थम् । आरम्भो हि 'यस्य विभाषा' इत्यस्य बाधकः; अन्यथा हि विकल्पार्थं एव स्याद् । अत्रैव नित्यमिडागमः, उत्तरत्र विकल्प एवेति ॥

## तीषसहलुभरुषरिषः ॥ ४८ ॥

तकारादावार्धधातुके इषु, सह, लुभ, रुष, रिष—इत्येतेभ्यो वा इडागमो भवति । इषु—एष्टा, एषिता ।

'इषु इच्छायाम्'—इत्यस्यायं विकल्प इष्यते । यस्तु 'इष गतौ' इति दैवादिकः, तस्य—प्रेषिता, प्रेषितुम्, प्रेषितव्यमिति नित्यं भवति । योऽपि 'इष आभीक्ष्ण्ये' इति क्र्यादौ पठ्यते, तस्याप्येवमेव । तदर्थमेव 'तीषसह' इति सूत्रे केचिदुदितमिषं पठन्ति ।

### पदमञ्जरी

पूर्वेणैव सिद्धत्वात् ? इत्यत आह—*आरम्भो हीति* । यदि तर्हि नित्यार्थमिड्ग्रहणं क्रियते, उत्तरत्रापि नित्य एव विधिः स्यात् ? इत्यत आह—*अत्रैवेति* ॥

*तीषसहलुभरुषरिषः* ॥ *इषु इच्छायामित्यस्येति* । तौदादिकस्य । *प्रेषितेति* । 'एङि पररूपम्' । *उदितं पठन्तीति* । धातुपाठे इच्छार्थमुदितं पठित्वा इहाप्युकारोपादानेन तस्यैव ग्रहणं वर्णयन्तीत्यर्थः । इदमेव चोदित्त्वस्य प्रयोजनम्; क्त्वायामिड्विकल्पस्यानेनैव सूत्रेण सिद्धत्वात् । ये तूदितं न पठन्ति, ते सहिना

### न्यासः

भ्यादेव नित्योऽयं विधिर्भविष्यति ? इत्याह—आरम्भो हीत्यादि । पूर्वसूत्रेणेटो विकल्पितत्वान्निष्ठायाम् 'यस्य विभाषा' इति प्रतिषेधे प्राप्ते नित्योऽयमारम्भः । तत्र यदीड्ग्रहणं न क्रियेत, तदा तस्यैव प्रतिषेधस्यायमारम्भो बाधकः स्यात्, ततश्च विकल्प एव स्यात्, न नित्यो विधिः । तस्मान्नित्यार्थमिड्ग्रहणं कर्त्तव्यम् । यदि हि नित्यार्थमिड्ग्रहणं क्रियेत तदा तेन विकल्पस्य निवर्त्तितत्वादुत्तरत्रापि नित्य एव विधिः स्यादित्यत आह—तत्रैवेत्यादि । न चानेनेड्ग्रहणेन विकल्पः शक्यते निवर्त्तयितुम्; तस्य स्वरितत्वादिड्ग्रहणसामर्थ्यात् । अनुवर्त्तमानेऽपि वाग्रहणे नित्योऽयं विधिर्भवति । या तु तस्यैव विकल्पस्यानुवृत्तिः, सोत्तरार्था । तेनोत्तरत्र विकल्प एव ॥

तीषसहलुभरुषरिषः ॥ 'इषु इच्छायाम्', 'षह मर्षणे'; लुभ गार्द्ध्ये', 'लुभ विमोहने'—द्वयोरपि ग्रहणम्; विशेषानुपादानात् । रुष रोषे', 'रुष रिष हिंसायाम्' । 'सर्व एवैत उदात्ताः' इति नित्यमिटि प्राप्ते विकल्पार्थोऽयमारम्भः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सह—सोढा, सहिता। लुभ—लोब्धा, लोभिता। रुष—रोष्टा, रोषिता। रिष—रेष्टा, रेषिता।

तीति किम्? एषिष्यति॥

**सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्॥ ४९॥**

इवन्तानाम् धातूनाम्, ऋधु, भ्रस्ज, दम्भु, श्रि, स्वृ, यू, ऊर्णु, भर, ज्ञपि, सन्—इत्येतेषां च सनि वा इडागमो भवति। इवन्तानाम्—दिदेविषति, दुद्यूषति। सिसेविषति, सुस्यूषति।

ऋध्—अर्दिधिषति, ईर्त्सति।

पदमञ्जरी

साहचर्यादिच्छार्थस्य ग्रहणमाहुः। उभयोरप्यकारमात्रं विकरण इति। यथा तु वार्त्तिकं तथा क्रैयादिकस्याप्यत्र ग्रहणमिष्यते, यदाह—'इषेस्तकारे श्यन्प्रत्ययात् प्रतिषेधः' इति, तन्मते त्रयोऽपि निरनुबन्धकाः॥

*सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्॥* भ्रस्जेरेकाच इति। श्रयतेरुगन्तानां च 'सनि ग्रहगुहोश्च' इति प्रतिषेधः प्राप्तः, इतरेषां तु नित्यमिट् प्राप्तः, तत्रेदमारभ्यते। *अर्दिधिषतीति*। लघूपधलक्षणे गुणे 'अजादेर्द्वितीयस्य' इति धिस्

न्यासः

तदर्थमिति। इच्छार्थस्यैव विकल्पो यथा स्यादितरयोर्मा भूदित्येवमर्थम्। ये तूदितं न पठन्ति, ते 'वा' इति प्रकृतस्य व्यवस्थितविभाषाविज्ञानात् सहिना भौवादिकेन साहचर्याद्वा इच्छार्थस्यैव विकल्पेन भविष्यति, नेतरयोरिति वर्णयन्ति। सोढेति। ढत्वष्टुत्वढलोपेषु कृतेषु 'सहिवहोरोदवर्णस्य' इत्योत्त्वम्॥

**सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्॥** इवन्तानामिति। 'दिवु', 'सिवु' इत्येवमादीनाम्। 'ऋधु वृद्धौ', 'भ्रस्ज पाके', 'दन्भु दम्भे', 'श्रिञ् सेवायाम्', 'स्वृ शब्दोपतापयोः', 'यु मिश्रणे', 'ऊर्णुञ् आच्छादने', 'भृञ् भरणे', मारणतोषणनिशामनेषु ज्ञपिर्ण्यन्तः। 'षणु दाने', 'वन षण सम्भक्तौ'—द्वयोरपि ग्रहणम्; विशेषानुपादानात्। अत्र भ्रस्जेरनुदात्तत्वात्, स्वृयूर्णुभृञां चोगन्तात् 'सनि ग्रहगुहोश्च' इति प्रतिषेधे प्राप्ते, शेषाणामुदात्तत्वान्नित्यमिटि प्राप्ते विकल्पोऽयमारभ्यते। दुद्यूषतीति। दिवेः सन्, 'हलन्ताच्च' इति सनः कित्त्वम्, 'च्छ्वोः शूडनुनासिके' इत्यूठि यणादेशः, द्विर्वचनम्—'द्यूष' इत्येतस्य, 'हलादिः शेषः', ह्रस्वत्वम्।

अर्दिधिषतीति। इटि 'पुगन्तलघूपधस्य' गुणे कृते 'अजादेर्द्वितीयस्य' इति 'धिस' इत्येतस्य द्विर्वचनम्, हलादिः शेषः', रेफस्य 'न न्द्राः संयोगादयः' इति निषेधान्न

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



भ्रस्ज—बिभ्रज्जिषति, बिभ्रक्षति, बिभर्ज्जिषति, बिभर्क्षति ।
दम्भु—दिदम्भिषति, धिप्सति, धीप्सति ।
श्रि—उच्छिश्रयिषति, उच्छिश्रीषति ।
स्वृ—सिस्वरिषति, सुस्वूर्षति ।
यु—यियविषति, युयूषति ।

**पदमञ्जरी**

इत्यस्य द्विर्वचनम्, रेफस्य तु 'न न्द्राः' इति प्रतिषेधः । *ईर्त्सतीति* । 'आप्ज्ञप्यृधामीत्' इति ऋकारस्य रपर ईकारः, धकारेण सशब्दस्य द्विर्वचनम्, 'अत्र लोपोऽभ्यासस्य' ।

*बिभ्रज्जिषतीति* । 'भ्रस्जो रोपधयो रमन्यतरस्याम्' । *बिभ्रक्षतीति* । व्रश्चादिना षत्वम्, 'षढोः कः सि' ।

*धिप्सतीति* । 'दम्भ इच्च' इतीत्वमित्वं च, 'हलन्ताच्च' इति कित्त्वे नलोपः, पूर्ववदभ्यासलोपः ।

*यियविषतीति* । 'ओः पुयण्ज्यपरे' इत्यभ्यासस्येत्वम् ।

**न्यासः**

द्विर्वचनम्, 'अभ्यासे चर्च' इति धकारस्य दकारः । ईर्त्सतीति । 'अजादेर्द्वितीयस्य' इति 'धस' इत्यस्य द्विर्वचनम्, 'हलादिः शेषः', 'अभ्यासे चर्च' इति धकारस्य दकारः, 'सन्यतः' इतीत्वम्, ऋदिधस इति स्थिते 'आप्ज्ञप्यृधामीत्' इतीत्वम्, रपरत्वम्, 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोपः, 'खरि च' इति चर्त्वम्—धकारस्य तकारः ।

बिभ्रज्जिषतीति । 'झलां जश् झशि' इति सकारस्य दकारः, 'स्तोः श्चुना श्चुः' इति श्चुत्वम्—दकारस्य जकारः । बिभर्क्षतीति । 'भ्रस्जो रोपधयो रमन्यतरस्याम्' इत्यकारात् परो रगागमः 'रोपधयोः' इति षष्ठीनिर्देशाद्रेफस्योपधायाश्च सकारस्य निवर्त्तकः, 'चोः कुः' इति कुत्वम्, 'इण्कोः' इति 'आदेशप्रत्यययोः' इति षत्वम् ।

धिप्सति, धीप्सतीति । 'दम्भ इच्च' इतीत्वमीत्वञ्च—'खरि च' इति चर्त्वम्—भकारस्य पकारः, पूर्ववदभ्यासलोपः, 'हलन्ताच्च' इति कित्त्वादनुनासिकलोपः ।

उच्छिश्रीषतीति । 'इको झल्' इति कित्त्वम्, 'अज्झनगमां सनि' इति दीर्घत्वम्, द्विर्वचनमभ्यासकार्यम् । 'आदेशप्रत्यययोः' इति षत्वम्, दकारस्य चुत्वम्—चकारः । 'शश्छोऽटि' इति शकारस्य छकारः ।

सिस्वरिषतीति । द्विर्वचनम् 'स्वृ' इत्येतस्य, 'उरत्' इत्यत्त्वम्, रपरत्वञ्च । सुस्वूर्षतीति । पूर्ववद् दीर्घः, 'उदोष्ठ्यपूर्वस्य' इत्युत्त्वम्, रपरत्वम्, 'हलि च' इति दीर्घः, द्विर्वचनम्—'स्वूर्ष' इत्येतस्य, अभ्यासकार्यम्, 'आदेशप्रत्यययोः' इति षत्वम् ।

यियविषतीति । 'ओः पुयण्ज्यपरे' इत्यभ्यासस्येत्त्वम् । प्रोर्णुनूषतीति । 'अजादे-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



ऊर्णु—प्रोर्णुनविषति, प्रोर्णुनुविषति, प्रोर्णुनूषति ।

'भर' इति भृञित्येतस्य भौवादिकस्य ग्रहणम्; शपा निर्देशात् । बिभरिषति, बुभूर्षति ।

ज्ञपि—जिज्ञपयिषति, ज्ञीप्सति ।

सन्—सिसनिषति, सिषासति ।

केचिदत्र 'भरज्ञपिसनितनिपतिदरिद्राणाम्' इति पठन्ति । तितनिषति, तितंसति, तितांसति । पिपतिषति, पित्सति । दिदरिद्रिषति, दिदरिद्रासति ।

पदमञ्जरी

*भृञ् इत्येतस्येति* । दीर्घान्तोऽयम् । तथा च 'भरः' इत्यब् भवति ।

*सिसनिषतीति* । 'स्तौतिण्योरेव' इति नियमादत्र षत्वाभावः । *सिषासतीति* । षत्वभूते सनि नियमादत्र षत्वम् ।

*केचिदत्रेति* । ये त्वेतन्न पठन्ति ते उपसंख्यानमारभन्ते । *तितांसतीति* । 'तनोतेर्विभाषा' इति पक्षे दीर्घत्वम् । *पित्सतीति* । 'सनि मीमाघु' इत्यादिना अच इस् , 'स्कोः संयोगाद्योः' इति सलोपः, पूर्ववदभ्यासलोपः । *दिदरिद्रा-*

न्यासः

द्वितीयस्य' इति वचनाद् द्वितीयस्यैकाचः 'नुस' इत्येतस्य द्विरुक्तिः, रेफस्य पूर्ववन्न द्विर्वचनम् ।

**प्रोर्णुनविषतीति** । इट्, पक्षे 'विभाषोर्णोः' इति यदा ङित्त्वं तदोवङ्, अन्यदा तु गुणः ।

**भृञित्येतस्य भौवादिकस्य ग्रहणमिति** । अथ डुभृञित्यतस्य जौहोत्यादिकस्य ग्रहणं कस्मान्न भवति ? इत्याह—शपा निर्देशादित्यादि । यदि जौहोत्यादिकस्य भृञो धारणपोषणार्थस्य ग्रहणमभिमतं स्यात्, तदा 'भृ' इत्येवं निर्देशं कुर्यात्, न तु 'भर' इति शपा निर्देशम्, कृतश्च शपा निर्देशः, तस्माद् भौवादिकस्य ग्रहणमिति गम्यते । **बुभूर्षतीति** । पूर्ववदुत्त्वदीर्घत्वे ।

**ज्ञीप्सतीति** । 'ज्ञा' इत्येतस्माण्णिच्, 'अर्त्तिह्री' इत्यादिना पुक्, पूर्ववदीत्वाभ्यासलोपौ । **सिषासतीति** 'जनसनखनां सञ्झलोः' रित्यात्वम् ।

**केचिदत्रेत्यादि** । केचिदिति वचनात् केचिन्न पठन्तीत्युक्तं भवति । ये तु न पठन्ति तेऽत्र तनिपतिदरिद्राणामुपसंख्यानं कुर्वन्ति । तितंसति, तितांसतीति । 'तनोतेर्विभाषा' इति पक्षे दीर्घः । पित्सतीति । 'सनिमीमा' इत्यादिनेसादेशः, अभ्यासलोपः, 'स्कोः' इत्यादिना सलोपः । दिदरिद्रिषति, दिदरिद्रासतीति । 'दरिद्रातेरार्धधातुके' इत्यादिना विकल्पेनाकारलोपः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सनीति किम् ? देविता । भ्रष्टा ॥

## क्लिशः क्त्वानिष्ठयोः ॥ ५० ॥

क्लिशः क्त्वानिष्ठयोर्वा इडागमो भवति । क्लिष्ट्वा, क्लिशित्वा । क्लिष्टः, क्लिष्टवान् । क्लिशितः, क्लिशितवान् ।

'क्लिशू विबाधने'—इत्यस्य क्त्वायां विकल्पः सिद्ध एव, निष्ठायां तु 'यस्य विभाषा' इति प्रतिषेधः प्राप्नोति । 'क्लिश उपतापे'—इत्यस्य तु क्त्वायाम्, निष्ठायां च नित्यमिडागमः प्राप्नोति, तदर्थं क्त्वाग्रहणं क्रियते ॥

## पूङश्च ॥ ५१ ॥

पूङश्च क्त्वानिष्ठयोर्वा इडागमो भवति । पूत्वा, पवित्वा । सोमोऽतिपूतः, सोमोऽतिपवितः । पूतवान्, पवितवान् । 'श्र्युकः किति' इति प्रतिषेधे प्राप्ते विकल्पो विधीयते ॥

## वसतिक्षुधोरिट् ॥ ५२ ॥

वसतेः क्षुधेश्च क्त्वानिष्ठयोरिडागमो भवति । उषित्वा । उषितः ।

### पदमञ्जरी

*सतीत्येके दिदरिद्रिषतीति चेति* । इट्पक्षे दरिद्रातेराकारलोपः ॥

*क्लिशः क्त्वानिष्ठयोः ॥ क्लिशित्वेति* । 'मृडमृद' इत्यादिना कित्त्वम् । *विकल्पः सिद्ध एवेति* । उदित्त्वात्स्वरत्यादिसूत्रेण । किमर्थं तर्हि क्त्वाग्रहणम् ? इत्यत आह—*क्लिश उपताप इत्यस्येति* ॥

*वसतिक्षुधोरिट्* ॥ *उषित्वेति* । पूर्ववत्कित्त्वम्, यजादित्वात्सम्प्रसारणम्,

### न्यासः

क्लिशः क्त्वानिष्ठयोः ॥ क्लिष्ट्वेति । व्रश्चादिसूत्रेण षत्वम् । क्लिशित्वेति । 'रलो व्युपधाद्धलादेः संश्च' इति कित्वम् । क्त्वाप्रत्यये विकल्पः सिद्ध एवेति । ऊदित्वात् 'स्वरति' इत्यादिना यदि क्त्वाप्रत्यये विकल्पः सिद्ध एव, तत् किमर्थं क्त्वाग्रहणम् ? इत्याह—क्लिश उपताप इत्यस्य त्वित्यादि । नित्यमिडागमः प्राप्नोतीति । उपतापार्थस्य क्लिशेरुदात्तत्वात् । तदर्थमिति । उपतापार्थो यः क्लिशिस्तदर्थम् । सोऽर्थः प्रयोजनं यस्य तत् तथोक्तम् । अथ वा—उपतापार्थस्य क्लिशेर्यो नित्यमिडागमः प्राप्नोति तदर्थम्, तन्निवृत्त्यर्थमित्यर्थः; अर्थशब्दस्य निवृत्तिवचनत्वात् ॥

पूङश्च ॥ उगन्तत्वात् 'श्र्युकः किति' इतीट्प्रतिषेधे प्राप्ते क्त्वानिष्ठयोः पक्षे प्राप्त्यर्थं वचनम् । पवित्वा, पवितः, पवितवानिति । 'पूङः क्त्वा च' इति कित्वप्रतिषेधाद् गुणो भवत्येव । 'पूङः' इति सानुबन्धकस्य ग्रहणं पूञो निवृत्त्यर्थम् ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


उषितवान् । क्षुधित्वा । क्षुधितः । क्षुधितवान् ।

'वसति' इति विकरणनिर्देशः धातुनिर्देशार्थं एव । वस्तेस्तू-दात्तत्वादेव भवितव्यमिटा । पुनरिड्ग्रहणं नित्यार्थम् ॥

अञ्चेः पूजायाम् ॥ ५३ ॥

अञ्चेः पूजायामर्थे क्त्वानिष्ठयोरिडागमो भवति । अञ्चित्वा जानु जुहोति । अञ्चिता अस्य गुरवः ।

'उदितो वा' इति क्त्वाप्रत्यये विकल्पः प्राप्तः, निष्ठायाम् 'यस्य विभाषा' इति प्रतिषेधः प्राप्तः, तदर्थमिदं प्रारब्धम् ।

पूजायामिति किम् ? उदक्तमुदकं कूपात् । उद्धृतमित्यर्थः ॥

पदमञ्जरी

'शासिवसि' इत्यादिना षत्वम् । *वस्तेस्त्विति* । 'वस आच्छादने' इत्यस्य यङ्लुग्निवृत्त्यर्थोऽपि शपा निर्देशो न भवति, तत्रापि त्त्वानिष्ठयोः सामान्य-लक्षणेन इड् भवत्येव—वावसितः, वावसितवान, वावसित्वा । गणाश्रयत्वात्सम्प्र-सारणाभावः ॥

*अञ्चेः पूजायाम्* ॥ *अञ्चिता अस्येति* । 'मतिबुद्धि' इत्यादिना वर्त्तमाने क्तः, 'नाञ्चेःपूजायाम्' इत्युपधालोपप्रतिषेधः, 'क्तस्य च वर्त्तमाने' इति कर्त्तरि षष्ठी ॥

न्यासः

वसतिक्षुधोरिट् ॥ 'वस निवासे', 'क्षुध बुभुक्षायाम्'—अनयोरनुदात्तत्वादिट्-प्रतिषेधे प्राप्ते क्त्वानिष्ठयोरिड्विधानार्थं वचनम् । उषित्वेति । क्त्वा, इट्, 'न क्त्वा सेट्' इति कित्त्वप्रतिषेधे प्राप्ते 'मृडमृद' इत्यादिना कित्त्वम्, वच्यादिसूत्रेण यजादित्वात् सम्प्रसारणम्, 'शासिवसिघसीनां च' इति षत्वम् । क्षुधित्वेति । अत्रापि 'रलो व्युपधाद्धलादेः संश्च' इति पक्षे कित्त्वम् ।

वसतीति विकरणनिर्देश इत्यादि । 'विकरणनिर्देशो धातुनिर्देशार्थ एव' इत्युक्तम् । अथ 'वस आच्छादने' इत्यस्य निवृत्त्यर्थः कस्मान्न विज्ञायते ? इति यश्चोदयेत्, तं प्रत्याह—वस्तेरित्यादि । अथ वावस्तः, वावस्तवानित्यत्र यङ्लुङ्निवृत्त्यर्थः कस्मान्न विज्ञायते ? विहितविशेषणपक्षविज्ञानादपि यङ्लुङ्निवृत्तिः शक्यते कर्तुमित्यभिप्रायः । अथेडित्यनु-वर्त्तमाने पुनरिड्ग्रहणं किमर्थम् ? इत्याह—पुनरिड्ग्रहणं नित्यार्थमिति । पूर्वकमिड्ग्रहणं विकल्पेन सम्बद्धम्, अतस्तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यात् । तस्मात् तन्निवृत्त्यर्थं पुनरिड्ग्रहणं कृतम् ॥

अञ्चेः पूजायाम् ॥ अञ्चिता इति । पूजिता इत्यर्थः । 'मतिबुद्धिपूजार्थेभ्यश्च' इति क्तप्रत्ययः । 'अनिदिताम्' इत्यनुनासिकलोपो न भवति; 'नाञ्चेः पूजायाम्' इति प्रतिषेधात् । अस्येति । 'क्तस्य च वर्त्तमाने' इति षष्ठी ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## लुभो विमोहने ॥ ५४ ॥

लुभो विमोहनेऽर्थे वर्तमानात् क्त्वानिष्ठयोरिडागमो भवति। लुभित्वा, लोभित्वा। विलुभिताः केशाः। विलुभितः सीमन्तः। विलुभितानि पदानि। विमोहनम्=आकुलीकरणम्, तत्र क्त्वायां 'तोषसहलुभ' इति विकल्पः, निष्ठायाम् 'यस्य विभाषा' इति प्रतिषेधः प्राप्तः।

विमोहन इति किम्? लुब्धो वृषलः। शीतेन पीडित इत्यर्थः। लुब्धा, लुभित्वा, लोभित्वा। गार्ध्ये यथाप्राप्तमेव भवति ॥

## जॄव्रश्च्योः क्त्वि ॥ ५५ ॥

'जॄ' 'व्रश्चि'—इत्येतयोः क्त्वाप्रत्यये इडागमो भवति। जरित्वा, जरीत्वा। व्रश्चित्वा। 'जॄ' इत्येतस्य 'श्र्युकः किति' इति प्रतिषेधः प्राप्तो व्रश्चेरूदित्त्वाद्विकल्पः।

क्त्वाग्रहणं निष्ठानिवृत्त्यर्थम् ॥

### पदमञ्जरी

*लुभो विमोहने ॥ लुभित्वा, लोभित्वेति।* 'रलो व्युपधात्' इत्यादिना कित्त्वविकल्पः ॥

### न्यासः

लुभो विमोहने ॥ लुभित्वा, लोभित्वेति। 'रलो व्युपधाद्' इत्यादिना पक्षे कित्त्वाद् गुणाभावो भवत्येव।

गार्ध्ये यथाप्राप्तमेवेति। क्त्वाप्रत्यये विकल्पः। निष्ठायाम् 'यस्य विभाषा' इति नित्यः प्रतिषेध इति ॥

जॄव्रश्च्योः क्त्वि ॥ जरीत्वा, जरित्वेति। 'जॄ वयोहानौ' क्रैयादिकः। 'वॄतो वा' इति पक्षे दीर्घः। यस्तु 'जॄष वयोहानौ' इति दिवादौ पठ्यते, तस्य सानुबन्धकत्वादिह ग्रहणं नास्तीति तस्य जीर्त्वेत्येवं भवति। व्रश्चित्वेति। 'ओव्रश्चू छेदने'। 'न क्त्वा सेट्' इति प्रतिषेधाद् ग्रहिज्येत्यादिसूत्रेण सम्प्रसारणं न भवति; किति तस्य विधानात्।

अथ क्त्वाग्रहणं किमर्थम्, यावता 'क्लिशः क्त्वानिष्ठयोः' इत्यत एव क्त्वाग्रहणमनुवर्त्तत एव? इत्याह—क्त्वाग्रहणमित्यादि। तद्धि क्त्वाग्रहणं निष्ठया सह सम्बद्धम्, अतस्तदनुवृत्तौ तस्या अप्यनुवृत्तिः स्यात्। एवं च सति निष्ठायामपि स्यात्। तस्मात् निष्ठानिवृत्त्यर्थमन्यदिह क्त्वाग्रहणं क्रियते ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## उदितो वा ॥ ५६ ॥

उदितो धातोः क्त्वाप्रत्यये परतो वा इडागमो भवति । शमु—शमित्वा, शान्त्वा । तमु–तमित्वा, तान्त्वा । दमु–दमित्वा, दान्त्वा ॥

## सेऽसिचि कृतचृतच्छृदतृदनृतः ॥ ५७ ॥

सकारादावसिच्यार्धधातुके कृत, चृत, छृद, तृत, नृद–इत्येतेभ्यो धातुभ्यो वा इडागमो भवति ।

कृत्—कर्त्स्यति । अकर्त्स्यत् । चिकृत्सति । कर्तिष्यति । अकर्तिष्यत् । चिकर्त्तिषति ।

चृत—चर्त्स्यति । अचर्त्स्यत् । चिचृत्सति । चर्तिष्यति । अचर्तिष्यत् । चिचर्तिषति ।

छृद—छर्त्स्यति । अच्छर्त्स्यत् । चिच्छृत्सति । छर्दिष्यति । अच्छर्दिष्यत् । चिच्छर्दिषति ।

### पदमञ्जरी

*सेऽसिचि कृतचृतच्छृदतृदनृतः* ॥ 'से' इत्यकार उच्चारणार्थः; असिचीति प्रतिषेधात् । तेन स्येऽप्ययं विकल्पो भवति । 'कृती छेदने' मुचादिः, 'कृती छेदने'

### न्यासः

उदितो वा ॥ शान्त्वेति । 'शमु उपशमे', 'तमु काङ्क्षायाम्', 'दमु उपशमे', भ्रमु चलने', 'क्रमु पादविक्षेपे' । अनिट्पक्षे 'अनुनासिकस्य क्विझलोः क्ङिति' इति दीर्घः ।

वाग्रहणं विस्पष्टार्थम् । उदितां ह्युदात्तत्वादिट् सिद्ध एव, तत्रारम्भसामर्थ्यादेव विकल्पेन विधिर्विज्ञास्यते । उत्तरार्थं चावश्यं वाग्रहणं कर्त्तव्यम्, तद्विस्पष्टार्थमिहैव क्रियते ॥

सेऽसिचि कृतचृतच्छृदतृदनृतः ॥ 'कृती छेदने' इति तौदादिकः, 'कृती वेष्टने' इति रौधादिकः— विशेषानुपादानाद् द्वयोरपि ग्रहणम् । 'चृती हिंसासंग्रन्थयोः', 'उछृ-दिर् दीप्तिदेवनयोः', 'उतृदिर् हिंसादानयोः' । उकारौ 'उदितो वा' इति विशेषणार्थौ । इकाररेफावपि 'इरितो वा' इति विशेषणार्थावेव । 'नृती गात्रप्रक्षेपे' । सर्वेषामेषामुदात्तत्वान्नित्यमिटि प्राप्ते सिचोऽन्यत्र सकारादौ विकल्पार्थं वचनम् । 'से' इत्येतस्याकारोच्चारणमतन्त्रम्; अविवक्षितत्वात् । तेन स्येऽपि विकल्पो भवति । अतन्त्रत्वं तु पुनरस्य 'असिचि' इति सिचः प्रतिषेधाद्विज्ञेयम् । यदि ह्यतन्त्रमकारोच्चारणम्,एवं सति 'स्यसिचि'

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


तृद्—तर्त्स्यति । अतर्त्स्यत् । तितृत्सति । तर्दिष्यति । अतर्दिष्यत् । तितर्दिषति ।

नृत्—नर्त्स्यति । अनर्त्स्यत् । निनृत्सति । नर्तिस्यति । अनर्तिष्यत् । निनर्तिषति ।

से इति किम् ? कर्तिता । असिचीति किम् ? अकर्तीत् ॥

**गमेरिट् परस्मैपदेषु ॥ ५८ ॥**

गमेर्धातोः सकारादेरार्धधातुकस्य परस्मैपदेष्विडागमो भवति । गमिष्यति । अगमिष्यत् । जिगमिषति ।

गमेरिति किम् ? चेष्यति ।

इड्ग्रहणं नित्यार्थम् । परस्मैपदेष्विति किम् ? संगंसीष्ट । संगं-

**पदमञ्जरी**

रुधादिः—द्वयोरपि ग्रहणम् । इदित्त्वस्य प्रयोजनमुक्तम् । 'चृती हिंसाग्रन्थनयोः', 'ऊच्छृदिर्दीप्तिदेवनयोः', 'ऊतृंदिर् हिंसानादरयोः', 'नृती गात्रविक्षेपे' । ईदित्त्वं पूर्ववत् ॥

*गमेरिट् परस्मैपदेषु ॥ संगंस्यत इति* । 'समो गम्यृच्छि' इत्यात्मनेपदम् । *गमेरिङादेशस्येति* । तेन *सञ्जिगंसते* इत्यत्र न भवतीति भावः ।

**न्यासः**

इत्येवं कस्मान्नोक्तम् ? सन्देहभयात् । एवं ह्युच्यमाने 'स्ये सिचि च' इत्येषोऽप्यर्थ आशङ्क्येत । 'सेऽसिचि' इत्युच्यमाने तु सप्तमीद्वयोरुपादानात् सिज्वर्जिते सकारादावित्यभिमतोऽर्थो विज्ञायते । नन्वत्रापि सन्देहः स्यात्—एवमुच्यमाने किमयं सिचि न वेति ? यदि हि सिच्यपि स्यात् तदुपादानमनर्थकं स्यात्, सीत्येवं ब्रूयात् । कर्त्स्यतीति । लृट् । अकर्त्स्यदिति । लृङ् । चिकृत्सतीति । सन्, 'हलन्ताच्च' इति कित्वाद् गुणाभावः ॥

गमेरिट् परस्मैपदेषु ॥ 'गम्लृ गतौ' । गमिरयमनुदात्तत्वादनिट् । योऽपि 'सनि च' इति 'इण् गतौ' इत्यस्य गमिरादेशः, यश्च 'इणवदिक इति वक्तव्यम्' इति 'इक् स्मरणे' इत्येतस्य, यश्च 'इङश्च' इत 'इङ् अध्ययने' इत्यस्य सोऽपि स्थानिवद्भावादनिडेव स्यात् । तेभ्यः परस्य सकारादेरार्धधातुकस्य सिज्वर्जितस्येडागमो यथा स्यादित्येवमर्थं वचनम् । गमिष्यति, अगमिष्यदिति । अनादेशस्य गमेरुदाहरणम् । जिगमिषतीति । एतत् तस्येणादेशस्य, इगादेशस्य वा ।

अथेडिति वर्त्तमाने पुनरिड्ग्रहणं किमर्थम् ? इत्याह—**इड्ग्रहणं नित्यार्थमिति** । तद्धि पूर्वकमिड्ग्रहणम् । 'उदितो वा' इति वाग्रहणेन प्रकृतमिड्ग्रहणं सम्बद्धम्, अत-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



स्यते । संजिगंसते, संजिगंसिष्यते । अधिजिगांसते, अधिजिगांसिष्यते । गमेरिङादेशस्य 'अज्झनगमां सनि' इति दीर्घत्वम् ।

'से' इत्येव—गन्तास्मि, गन्तास्वः, गन्तास्मः ।

आत्मनेपदेन समानपदस्थस्य गमेरयमिडागमो नेष्यते । अन्यत्र सर्वत्रैवेष्यते । कृत्यपि हि भवति, परस्मैपदलुकि च—सञ्जिगमिषिता, अधिजिगमिषिता व्याकरणस्य; जिगमिष त्वमिति ।

पदमञ्जरी

*आत्मनेपदेन समानपदस्थस्येति* । इह तु जिगमिषितेवाचरति जिगमिषित्रीयत इति बहिरङ्गत्वादात्मनेपदस्य प्रतिषेधाभावः । एतच्च प्रस्नवित्रीयत इत्यत्र *वार्त्तिककारमते* व्याख्यातम् । *अन्यत्र सर्वत्रैवेष्यत इति* । कथं पुनरिष्यमाणोऽपि लभ्यते ? योगविभागात् । गमः सकारादाविड् भवतीत्येको योगः, ततः 'परस्मैपदेषु' इति द्वितीयो नियमार्थः । तुल्यजातीयापेक्षत्वान्नियमस्यात्मनेपदविषय इण्निवर्त्तत इति केचिदाहुः । अन्ये मन्यन्ते—परस्मैपदेष्विति सप्तमीनिर्देशादानन्तर्याश्रयणादयमर्थो भवति—गमेरुत्तरस्य सकारादेरार्धधातुकस्य तिङ्क्ष्वनन्तरेषु

न्यासः

स्तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यात्, तथा च विकल्पेनेट् प्रसज्येत । तस्मात् तन्निवृत्त्यर्थं पुनरिड्ग्रहणं क्रियते । संगंसीष्टेति । सम्पूर्वाद् गमेराशिषि लिङ्, सीयुट्, 'समो गम्यृच्छि' इत्यादिनात्मनेपदम्, 'सुट् तिथोः', इति सुट्, षत्वम्, ष्टुत्वम् । सञ्जिगंसत इति । 'पूर्ववत् सनः' इत्यात्मनेपदम् । अधिजिगांसत इति । गमेरिङादेशस्य प्रत्युदाहरणम् । अथ सञ्जिगंसत इत्यत्र 'अज्झनगमां सनि' इति दीर्घत्वं कस्मान्न भवति ? इत्याह—गमेरिङादेशस्येत्यादि । तद्धि दीर्घत्वमिङादेशस्य गमेरिष्यते, नान्यस्य । तथा हि तत्रोक्तम्—गमेरिङादेशस्येति वक्तव्यमिति ।

यदि परस्मैपदेष्वित्युच्यते, तदा कृति परस्मैपदलुकि च न प्राप्नोति ? इत्याह—आत्मनेपदेनेत्यादि । समानपदस्थस्येति । एकपदस्थस्येत्यर्थः । अन्यत्र सर्वत्रैवेष्यत इति । एतच्च कृत्यपि हीत्यादिना विस्पष्टीकरोति । सञ्जिगमिषिता, अधिजिगमिषितेति । कृत्युदाहरणे द्वे । जिगमिष त्वमितीति । एतत् परस्मैपदलुकि । सन्नन्तत्वाद् गमेर्लोट्, सिप्, 'सेर्ह्यपिच्च' इति सेर्हिरादेशः, 'अतो हेः' इति लुक् । कथं पुनः परस्मैपदेष्वित्युच्यमाने कृति परस्मैपदलुकि च लभ्यते ? एवं मन्यते—योगविभागः कर्त्तव्यः; 'गमेरिट्' इत्येको योगः, तत्र 'से' इत्यनुवर्त्तते—सकारादावार्धधातुके गमेरिडागमो भवति । ततः 'परस्मैपदेषु' इति द्वितीयो योगो नियमार्थः । स चायं नियमो यद्यविशेषेण स्यात् तदा पूर्वयोगोऽनर्थकः स्यात् । तस्मात् तुल्यजातीयापेक्षया नियमः, तुल्यजातीयश्च तिङ्—तिङ्विषये यदि भवति तदा परस्मैपदेष्वेव, नात्मनेपदेष्विति । तेन कृति परस्मैपदलुकि च पूर्वयोगे न भवत्येव; नियमेनाव्यावर्तितत्वादिति ।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पदशेषकारस्य पुनरिदं दर्शनम्—गम्युपलक्षणार्थं परस्मैपदग्रहणम्, परस्मैपदेषु यो गमिरुपलक्षितस्तस्मात्सकारादेरार्धधातुकस्येड् भवति । तन्मतेन संजिगंसिता, अधिजिगंसिता व्याकरणस्य—इत्येव भवितव्यम् ॥

न वृद्भ्यश्चतुर्भ्यः ॥ ५९ ॥

वृतादिभ्यश्चतुर्भ्यं उत्तरस्य सकारादेरार्धधातुकस्य परस्मैपदेषु इडागमो न भवति । वृत्—वर्त्स्यति । अवर्त्स्यत् । विवृत्सति ।

वृधू—वर्त्स्यति । अवर्त्स्यत् । विवृत्सति ।

पदमञ्जरी

यदीड्भवति परस्मैपदेष्वेवेति, ततश्च सञ्जंस्यते इत्यत्रैव व्यावृत्तिः स्यात्, न सञ्जंसीष्टेत्यत्र । नापि संजिगंसत इत्यादौ; शपा व्यवधानात् । एकादेशे नास्ति व्यवधानम् ? 'एकादेशः पूर्वविधौ स्थानिवद्भवति' इति स्थानिवद्भावाद्व्यवधानमेव । संजिगंसिष्यत इत्यादौ च नैव स्यात्, तस्मादिष्टिरेवेयम् । अत एव इष्यत इत्युक्तम् । *पदशेषो* नाम ग्रन्थविशेषः । *तन्मतेनेत्यादि* । अनन्तरोक्तस्य दूषणम्; न पुनरयं पक्षः स्थापितः; वार्त्तिकविरोधात् । यदाह—'सिद्धं गमेरात्मनेपदेन समानपदस्थस्येट्प्रतिषेधात्' इति ॥

*न वृद्भ्यश्चतुर्भ्यः ॥* बहुवचननिर्देशाच्चतुर्ग्रहणाच्चाद्यर्थो गम्यते ।
वृत्तिर्वृधिः शृधिः स्यन्दिश्चत्वारोऽमी वृतादयः ।

न्यासः

**पदशेषकारस्य पुनरित्यादि** । पदशेषकारः पुनरेवं मन्यते—परस्मैपदेष्विति नेयं परसप्तमी, किं तर्हि ? विषयसप्तमी, परस्मैपदविषये यो गमिरुपलक्षितः=उपलब्धस्तस्य सकारादावार्धधातुक इड् भवतीति । एवं च सति योगविभागमन्तरेणापि तन्मतेन परस्मैपदेषु यो गमिरुपलक्षितः, तस्मादसत्यपि परस्मैपदे सर्वत्र कृति परस्मैपदलुकि चेड् भवत्येव; परस्मैपदपरत्वेन सकारादेरार्धधातुकस्याविशेषितत्वात् । तन्मतेन सञ्जिगंसिता, अधिजिगंसिता व्याकरणस्येति भवितव्यमिति; सम्पूर्वस्य, अधिपूर्वस्य च गमेः परस्मैपदेष्वनुपलक्षितत्वात् । तथा हि—सम्पूर्वाद् गमेः 'समो गम्यृच्छि' इत्यादिनात्मनेपदं विहितम् । अधिपूर्वादपि स्थानिवद्भावाद् 'अनुदात्तङितः' इत्यात्मनेपदमिति ॥

**न वृद्भ्यश्चतुर्भ्यः** ॥ 'वृद्भ्यः' इति बहुवचननिर्देशादाद्यर्थो गम्यते । अत एवाह—वृतादिभ्य इति । 'वृतु वर्त्तने', 'वृधु वृद्धौ', 'शृधु शब्दकुत्सायाम्', 'स्यन्दू स्रवणे'—इत्येते वृतादयश्चत्वार उदात्ताः । तत्राद्यानां त्रयाणां नित्यमिटि प्राप्ते, स्यन्देस्तूदित्त्वात् पाक्षिके प्राप्ते प्रतिषेधोऽयमुच्यते । वर्त्स्यतीति । 'लृट् शेषे च' इति लृट्, 'वृद्भ्यः स्यसनोः' इति विकल्पेन परस्मैपदम् । विवृत्सतीति । 'हलन्ताच्च' इति सनः कित्त्वाद् गुणाभावः । वृधिशृध्योर्धकारस्य 'खरि च' इति चर्त्वम्—तकारः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



शृधु—शर्त्स्यति । अशर्त्स्यत् । शिशृत्सति ।

स्यन्दू—स्यन्त्स्यति । अस्यन्त्स्यत् । सिस्यन्त्सति ।

'चतुर्भ्यः' इति न वक्तव्यम् । वृद्ग्रहणं हि तत्र द्युतादिपरिसमाप्त्यर्थं क्रियते—कृपू सामर्थ्ये वृदिति, तदेव यदि वृतादिसमाप्त्यर्थमपि विज्ञायते, न किञ्चिदनिष्टं प्राप्नोति ? तत्क्रियते स्यन्देरूदिल्लक्षणमन्तरङ्गमपि विकल्पं प्रतिषेधो यथा बाधेतेति । चतुर्ग्रहणे हि सति

पदमञ्जरी

'शृधु शब्दकुत्सायाम्' । अन्ये प्रसिद्धाः । उदाहरणेषु 'वृद्भ्यः स्यसनोः' इति परस्मैपदम् ।

*चतुर्भ्य इति न वक्तव्यमिति* । किं कारणम् ? इत्यत आह—*वृद्ग्रहणं हीति* । यदि द्युतादिपरिसमाप्त्यर्थं तत्किमायातं वृतादिपरिसमाप्तेः ? इत्यत आह—*तदेवेति* । अगृह्यमाणविशेषत्वादिति भावः । *अन्तरङ्गमपीति* । अन्तरङ्गत्वं विकल्पस्यार्धधातुकमात्रापेक्षत्वात् । अयं तु प्रतिषेधो बहिरङ्गः; सकारादिविशेषापेक्षत्वात्, बहिर्भूतपरस्मैपदापेक्षत्वाच्च । ननु चान्येष्वपि वृतादिषु आर्धधातुकलक्षणोऽपीडन्तरङ्ग एव, अथ तस्य वचनसामर्थ्यात्प्रतिषेधः, तर्हि विकल्पस्यापि भविष्यति ? नैतदस्ति; येन नाप्राप्ते तस्य बाधनं भवति, नाप्राप्तिश्चार्धधातुकस्येडित्यस्य, न तूदिल्लक्षणस्य । यदि परम्, परत्वादुदिल्लक्षणमपीटं प्रतिषेधो बाधेत ? तदपि न; अन्तरङ्गबहिरङ्गयोर्विप्रतिषेधानुपपत्तेः । कथं तर्हि सत्यपि चतुर्ग्रहणे तस्य प्रतिषेधः ? इत्यत आह—*चतुर्ग्रहणे हीति* । सति च तस्मिन् चतुर्भ्यो प्रतिषेधेन भाव्यमिति प्रतीतिः, इतरथा संख्याशब्दाभावादेकस्य प्रतिषेधाभावेऽपि न कश्चिद्बाधः ।

न्यासः

चतुर्भ्य इति न वक्तव्यमिति । अत्र कारणमाह—वृत्करणं हीत्यादि । तदेव यदि वृदादिपरिसमाप्त्यर्थमपि विज्ञायत इति तन्त्रेणानेकशक्तितो वा शब्दानां न किञ्चिदनिष्टं प्राप्नोति । एवमपि विज्ञायमान इष्टस्यैव सिद्धेरित्यभिप्रायः । एवं प्रत्याख्याते चतुर्ग्रहणे, प्रयोजनमाह—तत् क्रियत इत्यादि । यदि चतुर्ग्रहण न क्रियेत, तदा स्यन्देरूदिल्लक्षणोऽन्तरङ्गत्वाद्विकल्पः स्यात् । अन्तरङ्गत्वं तु तस्य वलाद्यार्धधातुकमात्राश्रयत्वात् । अस्य तु प्रतिषेधस्यार्धधातुकविशेषाश्रयत्वाद् बहिरङ्गत्वम् । तस्मादन्तरङ्गमपि स्यन्देरूदिल्लक्षणं विकल्पमयं प्रतिषेधो यथा बाधेतेत्येवमर्थञ्च चतुर्ग्रहणं क्रियते । कथं पुनः क्रियमाणेऽपि चतुर्ग्रहणे, अयमर्थो लभ्यते ? इत्यत आह—चतुर्ग्रहण इत्यादि । स स्यन्दिः परः प्रधानो यस्य तत् तत्परम्, तद्भावस्तात्पर्यम्, तेन तात्पर्येण तत्प-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तात्पर्येण स्यन्दिः सन्निधापितो भवति ।

'परस्मैपदेषु' इत्येव । वर्तिष्यते । वर्तिषीष्ट । अवर्तिष्यत । विवर्तिषते ।

अत्राप्यात्मनेपदेन समानपदस्थेभ्यो वृतादिभ्य इडागम इष्यते । अन्यत्र सर्वत्र प्रतिषेधः । कृत्यपि हि परस्मैपदलुकि च प्रतिषेधो भवति–विवृत्सिता, विवृत्स त्वमिति[1] ॥

**तासि च क्लृपः ॥ ६० ॥**

क्रृप उत्तरस्य तासेः सकारादेश्चार्धधातुकस्य परस्मैपदेषु इडागमो न भवति । श्वः कल्प्ता । कल्प्स्यति । अकल्प्स्यत् । चिक्लृप्सति ।

'परस्मैपदेषु' इत्येव । कल्पितासे । कल्पिष्यते । कल्पिषीष्ट । अकल्पिष्यत । चिकल्पिषते ।

**पदमञ्जरी**

*परस्मैपदेष्वित्येवेति* । यद्येवम्, यत्र वृतादिभ्यः परस्यार्धधातुकस्य परस्मैपदमनन्तरं तत्रैव स्यात्—वर्त्स्यतीत्यादौ, विवृत्सतीत्यादौ न स्यात्; शपा व्यवधानात् । एकादेशेऽपि कृते स्थानिवद्भावाद्व्यवधानमेव, विवृत्सिष्यति, विवृत्सयतीत्यादौ प्रत्यक्षमेव व्यवधानम्, कृति परस्मैपदलुकि च परस्मैपदगन्धोऽपि नास्तीति तत्रापि न स्यादेव ? तत्राह–*अत्रापीति* । इष्टिरेवेयम् । विवृत्सित्रीयत इत्यादौ चोक्त एव परिहारः ॥

*तासि च क्लृपः* ॥ उदाहरणेषु 'लुटि च क्लृपः' इति परस्मैपदम् । *क्लृपेरपीत्यादि* । अन्यथा कल्प्स्यतीत्यादावेव स्यात, न तु चिक्लृप्सिता, चिक्लृप्स त्वमित्यादाविति भावः ।

**न्यासः**

धानतयेत्यर्थः । सन्निधापित इति । उपस्थापित इत्यर्थः । तस्य चैवं सन्निधापितस्य विकल्पोऽनेन प्रतिषेधेन कथं नाम बाध्येतेत्येतदेव प्रयोजनम् । ततश्चतुर्ग्रहणादन्तरङ्गमपि विकल्पं प्रतिषेधो बाधते । अत्रापीत्यादि । कथं पुनः 'परस्मैपदेषु' इत्यनुवर्त्तमानेऽन्यत्र सर्वत्र प्रतिषेधो लभ्यते ? एवं मन्यते–गमेरित्यनुवर्त्तते, तत्रैवमभिसम्बन्धः करिष्यते—गमेः सकारादौ येन प्रकारेण इट् तेनैव प्रकारेण वृदादिभ्यो नेडिति । तेन यथा गमेरात्मनेपदवर्जनमन्यत्र सर्वत्रैवेड् भवति, तथा वृदादिभ्योऽपि प्रतिषेध इति ॥

तासि च क्लृपः ॥ 'कृपू सामर्थ्ये' । तस्मादूदित्त्वाद्विकल्पेनेटि प्राप्ते प्रतिषेधोऽयमारभ्यते । कल्प्तेति । लुट्, 'लुटि च क्लृपः' इति परस्मैपदं विकल्पेन, 'कृपो रो लः' इति लत्वम् । चिक्लृप्सतीति । पूर्ववत् कित्त्वम् ।

---

१. विवृत्सितुम्, विवृत्सितव्यम्' इत्यधिकं क्वचित् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



क्लृपेरप्यात्मनेपदेन समानपदस्थस्य इडागम इष्यते। अन्यत्र प्रतिषेधः। कृत्यपि हि परस्मैपदलुकि च प्रतिषेधो भवति—चिक्लृप्सिता, चिक्लृप्स त्वमिति ॥

**अचस्तास्वत्थल्यनिटो नित्यम् ॥ ६१ ॥**

तासौ ये नित्यानिटो धातवोऽजन्ताः, तेभ्यस्तासाविव थलीडागमो न भवति। याता—ययाथ। चेता—चिचेथ। नेता—निनेथ। होता—जुहोथ।

अच इति किम्? भेत्ता—बिभेदिथ। तास्वदिति किम्? लूत्वा—

**पदमञ्जरी**

इह तु 'न वृद्भ्यः पञ्चभ्यस्तासि च' इति वक्तव्यम्, क्लृपिग्रहणं तु शक्यमकर्त्तुम्। न च वृतादिभ्योऽपि तासौ प्रसङ्गः; परस्मैपदाभावात्, आत्मनेपदेन समानपदस्थत्वाच्च ॥

*अचस्तास्वत्थल्यनिटो नित्यम्* ॥

यस्थलि क्रादिनियमादिट् प्राप्तः स निषिध्यते।
पञ्चसूत्र्येत आरभ्य तास्वदित्येष ङेर्वतिः ॥
उपदेशग्रहोऽप्यत्र वक्ष्यमाणोऽपकृष्यते।
गुणे नित्ये कृतेऽप्येष ऋदन्ते प्राप्नुयात्कथम् ॥

क्व नित्यमनिट्?—इत्यपेक्षायां तासेः सन्निधानात्तत्रैवेति विज्ञायते, यद्वा—पूर्वसूत्रात् 'तासि' इति वर्त्तते। *यातेति*। तासावनिट्प्रदर्शनार्थमुपन्यस्तम्। *लूत्वेति*। 'तास्वत्' इत्यनुच्यमाने यत्र क्वापि नित्यानिटस्थलि प्रतिषेधः

**न्यासः**

क्लृपेरपीत्यादि। अयमर्थो वृदादीनामनुवृत्तेर्लभ्यते, तदनुवृत्तौ सत्यामेवमभिसम्बन्धः करिष्यते—यथा वृदादीनां प्रतिषेधो भवति, तथायमपि क्लृपेरिति। यदि तर्हि वृदादीनां ग्रहणमिहानुवर्त्तते, तदा वृदादीनामपि तासौ प्रतिषेधः प्राप्नोति? योगविभागकरणसामर्थ्यान्न भविष्यति। यदि वृदादीनामपि तासौ प्रतिषेधः स्यात्, तदा 'न वृद्भ्यः पञ्चभ्यस्तासि च' इत्येकयोगं कुर्यात्।

अचस्तास्वत्थल्यनिटो नित्यम् ॥ क्रादिनियमादिटि प्राप्तेऽजन्तानां तासौ नित्यानिटां थलि प्रतिषेधो विधीयते। यातेत्यादि। लुङुपन्यासस्तासौ नित्यानिट्त्वप्रदर्शनार्थः; अनिट्प्रतिषेधात्।

लूत्वा, लुलुविथेति। तास्वदिति वचनादिह न भवति प्रतिषेधः। तस्मिंस्त्वनु-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



लुलविथ । थलिति किम् ? याता—ययिव । ययिम । अनिड्ग्रहणं नित्यमित्यनेन विशेषणार्थम् । नित्यग्रहणं किम् ? विधोता, विधविता—विदुधविथ । तासि विभाषितेट्, थलि नित्यमिडागमो भवति ।

**पदमञ्जरी**

स्यात् । लुनातिश्चायम् 'श्र्युकः किति' इति प्रतिषेधात्किति नित्यानिट्कः । *ययिव, ययिमेति* । 'आतो लोप इटि च' । *अनिड्ग्रहणं नित्यमित्यनेन विशेषणार्थमिति* । असत्यनिड्ग्रहणे नित्यमित्यनेन प्रतिषेध एव विशेष्येत—नित्यमिण्न भवतीति । यद्यप्यत्र विकल्पो न प्रकृतः, तथापीदमेव नित्यग्रहणं पूर्वस्य विधेरनित्यत्वं ज्ञापयेत् । सेड्निवृत्त्यर्थं त्वनिड्ग्रहणं न भवति, कथम् ? तास्वदित्युच्यते, यथा तासौ न भवति एवं थल्यपीति । न च यस्तासौ सेट् तस्य थलि प्रतिषेधो भवन् तास्वत्कृतो भवति । *विधोता, विधवितेति* । स्वरत्यादिसूत्रेण तासाविड्विकल्पितः । क्रमेरपि चक्रमिथेति भाव्यम्, न हि तासौ नित्यानिट् क्रमिः, आत्मनेपदे इडभावात्परस्मैपदे सेट्त्वात् । *तासौ विभाषेटस्थलि नित्यमिडागमो भवतीति* । 'यावान्कश्चिदिडभावः प्रतिषेधनिबन्धनो विकल्पनिबन्धनो वा स सर्वः क्रादिसूत्रेण नियम्यते' इत्यस्मिन्पक्षे इति भावः । यदा तु 'प्रतिषेधाधिकारेण क्रादीनामेवेण्न भवति' इति नियमात्प्रतिषेध एव सर्वो निवर्तते, स्वरत्यादि-

**न्यासः**

च्यमान इहापि प्रतिषेधः स्यात्—भवति, लुनाति । किति नित्यमनिटः श्र्युकः किति' इति प्रतिषेधात् । पपिव, पपिमेति । 'आतो लोप इटि च' इत्याकारलोपः । अनिड्ग्रहणं नित्यमित्यनेनेत्यादि । नित्यमित्यनेनानिट्त्वं धातोः कथं नाम विशिष्येतेत्येवमर्थमनिड्ग्रहणमित्यर्थः । अथ लविता, लुलविथेति तासौ सेटस्थलीट्प्रतिषेधो मा भूदित्येवमर्थमनिड्ग्रहणं कस्मान्न भवति ? नार्हत्येवमर्थं भवितुम् । तथा हि—तास्वत् थलीण्न भवतीत्युच्यते, न च यस्तासौ सेट् तस्य प्रतिषेधो भवंस्तास्वदिति व्यपदेष्टुं शक्यते, यो ह्ययमिडभावस्थलि विधीयते तस्य तासाविडभावेनैव सादृश्यं वतिराचष्टे । एवं तु वतिग्रहणादेव तासौ सेटस्थलि प्रतिषेधो न भविष्यति; अन्यथा वतिना यत् सादृश्यं समाख्यायते तन्न स्यात् । तस्माद् युक्तमुक्तमेवानिड्ग्रहणस्य प्रयोजनम् । अथाक्रियमाणेऽनिड्ग्रहणे नित्यमिति कस्य विशेषणं विज्ञायते ? प्रतिषेधस्य । ननु च नित्य एव प्रतिषेधः प्रकृतः, तत्र यदि नित्यग्रहणेन प्रतिषेधो विशिष्येत, तदा नित्यग्रहणमनर्थकं स्यात् ? नैतदस्ति; पूर्वसूत्रे प्रतिषेधस्यानित्यत्वं यथा स्यादित्येवमर्थं स्यात् । एवं च पूर्वसूत्रेण पक्ष इडागमः स्यादेव । तस्मात् पूर्वोक्तमेवानिड्ग्रहणस्य प्रयोजनम् । तासौ विभाषितेडिति । स्वरत्यादिसूत्रेण धूञ इड् विकल्पितः । तस्य नित्यग्रहणाद् विभाषितेटस्थलि नित्यमिडागमो भवति । असति च नित्यग्रहणे प्रतिषेधः स्यादेव ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तास्वदिति वतिनिर्देशः किमर्थः ? तासौ सतस्थलि प्रतिषेधार्थः । यो हि तासावसन्, असत्त्वाच्च नित्यानिट्, तस्य थलि प्रतिषेधो न भवति—जघसिथ । उवयिथ ।

पदमञ्जरी

लक्षणस्तु विकल्पो भवत्येव इति पक्षः; तदा विदुधोथ, विदुधविथेत्युभयं भवति । यद्येवम्, नित्यमनिट इति न वक्तव्यम् ? अस्तु; यस्तासौ विकल्पितेट् तस्याप्ययं प्रतिषेधः 'ऋतो भारद्वाजस्य' इति नियमाद्विकल्प एवावस्थास्यते ? नैवं शक्यम्; स्वरतौ हि दोषः स्यात् । भारद्वाजपक्षेऽपि तस्य प्रतिषेधात् सस्वर्थेत्येव स्यात् । यदा तु विकल्पितेटस्थलि प्रतिषेधोऽयं न भवति, तदा सस्वर्थ, सस्वरिथेत्युभयं भवति ।

*तास्वदिति वतिनिर्देश इति* । तास्वदित्यस्य निर्देश इत्यर्थः । तास्वदित्यनुच्यमाने प्रकृतस्य तासीत्यस्यानुवृत्तावप्येतावदेव लभ्येत—तासौ नित्यमनिटस्थलीण् न भवतीति; ततश्च यस्तासावसन्; असत्त्वादेव नित्यानिट्, तस्यापि प्रसज्येत ।

तास्वदित्युच्यमाने तु वतेः सादृश्यगोचरात् ।
यथाभूतस्य तासौ नेट् तथाभूतस्य थल्यपि ॥
इटा न भाव्यमित्येष दोषो नैव प्रसज्यते ।
इटस्तास्यसतो धातोर्निषेधे विहिते थलि ।
अभावः सदृशो न स्यात् थलि तास्यसतो भवेत् ॥

न्यासः

पाक्षिकेणापीडभावेनानिड्व्यपदेशो भवत्येव । तथा हि—गुहेर्विभाषितेटोऽपि 'शल इगुपधादनिटः क्सः' इति क्सो भवत्येव—अघुक्षदिति ।

अथ वतिना निर्देशः किमर्थः, न तासावित्येवोच्येत ? इत्यत आह—तास्वदित्यादि । असति वतिना निर्देशे योऽपि तासावसन्, असत्त्वाच्च नित्यमनिट्, तस्यापि थलि प्रतिषेधः स्यात् । वतिना निर्देशे तु सति, वतेः सर्वसादृश्यार्थत्वाद् यथाभूतस्य तासाविड् न भवति तथाभूतस्यैव थल्यपीटा न भवितव्यमिति न भवत्येष दोषप्रसङ्गः । यदि हि यस्तासावसत्, असत्त्वाच्च नित्यमनिट्, तस्यापि थलि प्रतिषेधः स्यात् । एवं च सति तासावसत इडभावः, इतरत्र तु सत इति यथाभूतस्य तासाविडभावस्तथाभूतस्यापि थलि न स्यात् ।

यो हि तासावसन्नसत्त्वाच्च नित्यमनिट्, तस्य थलि प्रतिषेधो न भवति—जघसिथेति—उत्तरसूत्रेणेत्यभिप्राय इत्यत आह—उत्तरसूत्रेऽपीत्यादि । तदेवमुत्तरार्थो वतिना निर्देशोऽयं भवति । इह तु नार्थो वतिनिर्देशेन, अनजन्तत्वादेव घसेर्वयेश्च प्रतिषेधो न भवतीति । जघसिथेति । 'लिट्यन्यतरस्याम्' इत्यदेर्घस्लादेशः । उवयिथेति । 'वेञो

Digitized by Arya Samaj Foundation Chennai and eGangotri



उत्तरसूत्रेऽपि 'तास्वत्' इति वर्त्तते। अदादेशो हि घसिः, वेञा-देशश्च वयिस्तासौ नास्ति ॥

उपदेशेऽत्वतः ॥ ६२ ॥

उपदेशे यो धातुरकारवान् तासौ नित्यानिट् तस्मात्तासाविवं थलीडागमो न भवति। पक्ता—पपक्थ । यष्टा—इयष्ट । शक्ता—शशक्थ ।

उपदेशे इति किम् ? कर्ष्टा—चकर्षिथ । अत्वत इति किम् ? भेत्ता—बिभेदिथ । तपरकरणं किम् ? राद्धा—रराधिथ ।

पदमञ्जरी

*जघसिथेति* । स्थानिवद्भावात् 'इडत्त्यर्तिव्ययतीनाम्' इत्येवैष सिद्ध इत्याहुः। *उत्तरसूत्रेऽपीति* । एतेनोत्तरार्थं तास्वदित्युच्यत इति दर्शयति । *अदादेशो हीति* । ननु चास्य स्थानी तासावस्ति, अस्ति चानिडिति तदादेशस्यापि स्थानिवद्भावात् सत्त्वानिट्त्वे स्याताम् ? नैतदस्ति; स्थानिवद्भावः शास्त्रीयेषु प्रवर्त्तते, न च तासौ सत्त्वं नाम शास्त्रीयं कार्यम् ॥

*उपदेशेऽत्वतः* ॥ अनजन्तार्थ आरम्भः । *इयष्टेति* । 'लिट्यभ्यासस्योभये-षाम्' इति अभ्यासस्य सम्प्रसारणम्, व्रश्चादिषत्वम् । *चकर्षिथेति* । 'कृष विले-खने' । भवत्ययं गुणे कृते सम्प्रत्यकारवान्, न तूपदेशे । *जिग्रहिथेति* । 'सनि ग्रहगुहोश्च' इतीट्प्रतिषेधाद्भवत्ययं सनि नित्यानिट्, न तासौ ।

न्यासः

वयिः' इति वयिरादेशः, 'लिट्यभ्यासस्योभयेषाम्' इति सम्प्रसारणम् । कस्मात् पुनर्घसेः, वयेश्च तासावसत्त्वान्नित्यानिट्त्वम् ? इत्याह—अदादेशो हीत्यादि । नास्तित्वं तयोः पुन-स्तासावविधानाद्वेदितव्यम् ॥

उपदेशेऽत्वतः ॥ अनजन्तार्थोऽयमारम्भः । इयष्ठेति । पूर्ववदभ्यासस्य सम्प्रसार-णम्, व्रश्चादिसूत्रेण षत्वम्, ष्टुत्वम् । चकर्षिथेति । 'कृष विलेखने' । भवत्ययमकार-वान्, न तूपदेशे, किं तर्हि ? पश्चाद् गुणे कृते ।

उपदेशग्रहणमिह शक्यमकर्त्तुम्, शक्यत एव हि 'एकाच उपदेशे' इत्यत उपदेश-ग्रहणमनुवर्त्तयितुम् ? तत् क्रियते विस्पष्टार्थम् । असति तस्मिन्, पूर्वसूत्रे तस्यानुपयोगा-न्निवृत्तिं मन्यमानः 'तासांवत्वतः' इत्येवमपि कश्चित् प्रतिपद्येत । रराधिथेति । 'राध साध संसिद्धौ' । जिघृक्षतीति । 'सनि ग्रहगुहोश्च' इतीट्प्रतिषेधाद् भवति नित्यानिट्, न तु तासौ, किं तर्हि ? सनि ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तास्वदित्येव—जिघृक्षति । जग्रहिथ ।

नित्यमनिट इत्येव—अङ्क्ता, अञ्जिता—आनञ्जिथ ॥

## ऋतो भारद्वाजस्य ॥ ६३ ॥

[1]ऋकारान्ताद्धातोर्भारद्वाजस्याचार्यस्य मतेन तासाविव नित्यानिटस्थलि इडागमो न भवति । स्मर्त्ता—सस्मर्थ । ध्वर्त्ता—दध्वर्थ ।

सिद्धे सत्यारम्भो नियमार्थः—ऋत एव भारद्वाजस्य, नान्येषां

### पदमञ्जरी

*आनञ्जिथेति* । 'अत आदेः' 'तस्मान्नुड्द्विहलः', स्वरत्यादिसूत्रेण तासौ विकल्पितेड्यम् ॥

*ऋतो भारद्वाजस्य* ॥ *सस्मर्थेति* । 'स्मृ चिन्तायाम्' । *दध्वर्थेति* । 'ध्वृ हूर्छने' ।

*सिद्धे सतीत्यादि* । अदन्तानां वृङ्वृञावुदात्तौ । तत्रापि वृङस्थल् न सम्भवति; आत्मनेपदित्वात् । वृञस्तु ववर्थेति निपातनाद्भाषायामिटा भाव्यम् । तस्मात्तयोरिट्प्रतिषेधार्थं तावदेतन्नोपपद्यते । 'अन्येऽदन्तास्तासौ नित्यानिटः' इति 'अचस्तास्वत्' इत्यनेनैव सिद्धः प्रतिषेधः । ननु च परत्वाद् गुणे कृते रपरत्वे चानजन्तत्वान्न सिद्ध्यति, पूर्वसूत्रेणाप्यसिद्धिरेव, न ह्यकारान्ता उपदेशेऽत्वन्तः, तस्मान्नियमानुपपत्तिः ? अस्तु तर्हि दध्वर्थेत्यादौ विध्यर्थमेव । यद्ये-

### न्यासः

आनञ्जिथेति । 'अञ्जू व्यक्तिम्रक्षणादिषु' । 'अत आदेः' इत्यभ्यासस्य दीर्घः, 'तस्मान्नुड् द्विहलः' इति नुट् । भवत्ययं धातुरुपदेशेऽकारवान्, न तु तासौ नित्यानिट्; स्वरत्यादिसूत्रेण विकल्पितेट्त्वात् ॥

ऋतो भारद्वाजस्य ॥ सस्मर्थेति । 'स्मृ चिन्तायाम्' । दध्वर्थेति । 'ध्वृ हूर्छने' ।

ननु यद्यप्यकारान्तानां मध्ये वृङ्वृञावुदात्तौ तत्रापि वृङस्थलन्न सम्भवत्येव, आत्मनेपदित्वात्; वृञस्तु ववर्थेति निगमे निपातनाद् भाषायामिटा भवितव्यमेव, तस्मात् तयोरिट्प्रतिषेधार्थमेतन्नोपपद्यते; ये त्वन्ये ऋकारान्ताः, तेषामनुदात्तत्वात् तासौ नित्यमनिट्त्वमिति 'अचस्तास्वत् थल्यनिटो नित्यम्' इतीट्प्रतिषेधः सिद्ध एव, परत्वाद् गुणे कृते रपरत्वे चानजन्तत्वान्न सिध्यतीत्येवमेतन्नाशङ्कनीयम्; उपदेशग्रहणस्य पुरस्तादनुकृष्टस्य 'अचः' इत्यनेनाभिसम्बन्धात्; अथ वा—'अचः' इति विहितविशेषणा पञ्चमी, तत्रैवं विज्ञास्यामः—अजन्ताद् यो विहितस्थलिति, तस्मादचस्तास्वदित्यनेनैव ऋकारान्तेभ्यः प्रतिषेधः सिद्धः, तत् किमर्थोऽयमारम्भः ? इत्याह—सिद्धे सत्यारम्भो नियमार्थ इति । नान्येभ्य इति । के पुनस्ते ? य ऋकारान्तादन्येऽजन्ताः, अनजन्ता-

---

१. 'तास्वत्थलि इति वर्त्तते' इत्यधिकं क्वचित ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



धातूनाम् । ययिथ । वविथ । पेचिथ । शेकिथ । तदयमर्थात्पूर्वयो-र्योगयोर्विकल्पः ।

तपरकरणमृकारान्तस्य निवृत्त्यर्थम् । तथा हि सति विध्यर्थ-मेतत्स्यात् ॥

पदमञ्जरी

वम्, स्थायापचिप्रभृतिषु पूर्वयोगाभ्यां नित्यं थलि प्रतिषेधप्रसङ्गः, जहर्थेत्यादौ भारद्वाजस्येति वचनाद्विकल्पप्रसङ्गः ? एवं तर्हि 'अचस्तास्वत्' इत्यत्रैव भारद्वाज-ग्रहणं करिष्यते, तदेवानन्तरयोगेऽप्यनुवर्तिष्यते, इह तु निवर्तिष्यते ? सत्यम्; अयं तु *भारद्वाजः* स्वस्मान्मतात्प्रच्यावितो भवति । तस्य मतम्—ऋकारान्ता-दन्यत्र ययिथ, पेचिथेतीड्भवति, अकारान्ते नेति । त्वदुक्ते तु न्यासे मतविपर्ययः कृतो भवति । एवं तर्ह्युपदेशग्रहणस्य 'अचस्तास्वत्' इत्यत्रापकर्षादुपदेशेऽजन्त-त्वात्सिद्धः प्रतिषेध इति मन्यते । *ऋत एव भारद्वाजस्येति* । विपरीतस्तु नियमो न भवति–ऋतो भारद्वाजस्यैवेति । यदि स्यान्नियमाश्रयणमनर्थकं स्यात्, पूर्वो-क्तेन प्रकारेण विध्यर्थत्वमेवाश्रयणीयं स्यात् । *पूर्वयोर्योगयोरिति* । ऋकारान्तेषु 'अनन्तरस्य विधिर्वा भवति' इति न्यायस्य तावदसम्भवः । यस्य तर्हि प्रसङ्गः 'अचस्तास्वत्' इति, तस्यैव नियमो युक्तः, तत्कथं पूर्वयोर्योगयोर्द्वयोरपि विक-ल्पः ? एवं मन्यते–'द्वयोरनन्तरमस्यारम्भात्तासौ नित्यमनिटां मध्ये ऋत एव भारद्वाजस्य नान्येषाम्'–इत्येवं सामान्याकारेण नियम आश्रयणीय इति । *तथा*

न्यासः

श्चोपदेशेऽत्वन्तः । अथैवं कस्मान्नियमो न विज्ञायते—ऋतो भारद्वाजस्यैव, नान्ये-षामाचार्याणामिति ? एवं मन्यते—पूर्वसूत्रादचोऽत्वत इति चानुवर्तते, तदनुवृत्तेरेत-देव प्रयोजनम्—अनेन नियमेन सन्निधानात् तस्यैवाजन्तस्यानुवृत्तस्यात्वतश्च प्रकृतस्य धातोर्निवृत्तिर्यथा स्यादिति । यदि विपरीतोऽत्र नियमः स्याद्, आचार्यान्तराणां निवृत्तिः स्यात्, न प्रकृतस्य धातोः । तथा च तदनुवृत्तिरपार्थिका स्यात् । तस्मादृत एव भार-द्वाजस्येत्ययमेव नियमो विज्ञायत इत्याह–तदित्यादि । तदिति हेतौ । यस्मादेवंविधोऽत्र नियमः–तस्मादृत एव भारद्वाजस्य प्रतिषेधो भवति, नान्येभ्यो धातुभ्य इति । तेन यद्यपि पूर्वयोगाभ्यां नित्यमिट्प्रतिषेधः कृतः, तथा च सामर्थ्यात् पूर्वयोगयोरयं विकल्पो भवति । यद्यपि तत्र वाग्रहणम्, आचार्यग्रहणं च न क्रियते, तथाप्यर्थाल्लभ्यते ।

अथ तपरकरणं किमर्थम्, न 'उर्भारद्वाजस्य' इत्येवोच्येत ? इत्याह–तपरकरणमि-त्यादि । यदि ह्युरित्येवोच्येत, ततोऽण् सवर्णान् गृह्णातीति ऋकारान्तानामपि ग्रहणं स्यात् । ततस्तन्निवृत्त्यर्थं तपरकरणम् । किं पुनः स्याद् यद्यृकारान्तानां ग्रहणं स्यात् ? इत्यत आह–तथा हीत्यादि । तथेत्येवमर्थे । हि शब्दो यस्मादर्थे । एवं यस्मात् तपर-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## बभूथाततन्थजगृभ्मववर्थेति निगमे ॥ ६४ ॥

बभूथ, आततन्थ, जगृभ्म, ववर्थ—इत्येतानि निपात्यन्ते निगमविषये। निगमः=वेदः। बभूथ—त्वं हि होता प्रथमो बभूथ। बभूविथेति भाषायाम्। आततन्थ—येनान्तरिक्षमुर्वाततन्थ। आतेनिथेति भाषायाम्। जगृभ्म—जगृभ्मा ते दक्षिणमिन्द्र हस्तम्। जगृह्मिमेति भाषायाम्। ववर्थ—ववर्थ त्वं हि ज्योतिषा। ववरिथेति भाषायाम्।

क्रादिसूत्रादेवास्य प्रतिषेधे सिद्धे नियमार्थं वचनम्—निगम एव, न भाषायामिति ॥

## विभाषा सृजिदृशोः ॥ ६५ ॥

सृजि, दृशि—इत्येतयोस्थलि विभाषा इडागमो न भवति। सस्रष्ठ, ससर्जिथ। दद्रष्ठ, ददर्शिथ ॥

### पदमञ्जरी

*हि सतीति*। असति तपरकरणे ऋकारान्तानामप्यत्र ग्रहणं स्यात्, तेषां च तासौ सिद्धत्वाद् 'अचस्तास्वत्' इत्यस्यांप्रसङ्गे विध्यर्थमेवेदं स्यात, न ह्रस्वग्रहणेन नियमार्थम्; विधिनियमसम्भवे विधेरेव ज्यायस्त्वादित्यर्थः ॥

*विभाषा सृजिदृशोः ॥ सस्रष्ठ, दद्रष्ठेति*। 'सृजिदृशोर्झल्यमकिति', पूर्ववत् षत्वम् ॥

### न्यासः

करणमन्तरेणापि ऋकारान्तानां ग्रहणे सति विध्यर्थमेतत् सम्भाव्येत। असति हि विधेये नियमो भवति। ऋकारान्तानां ग्रहणे सति तेषामेव प्रतिषेधो विधेयः स्यात्, न हि तेषां पूर्वेण प्रतिषेधः सिद्धः। सर्वेषामृकारान्तानां तासौ नित्यम्; सेट्त्वात्। तपरकरणे तु सति तकारेण दीर्घनिवृत्तौ कृतायां विधेयताभावान्नियमोऽयं सम्पद्यते ॥

बभूथाततन्थजगृभ्मववर्थेति निगमे ॥ ब्रभूथेत्यादौ सर्वत्र क्रादिनियमादिटः प्राप्तस्याभावो निपात्यते। बभूथेति। 'भवतेरः' इत्यभ्यासस्याकारस्यात्वम्। बभूविथेति। 'भुवो वुग्लुङ्लिटोः' इति वुक्। आततन्थेति। 'तनु विस्तारे', आङ्पूर्वः। आतेनिथेति। 'थलि च सेटि' इत्येत्त्वाभ्यासलोपौ। जगृभ्मेति। ग्रहेर्लिट्, 'परस्मैपदानाम्' इत्यादिना मसो मादेशः, 'ग्रहिज्या' इति सूत्रेण सम्प्रसारणम्। ववर्थेति। 'वृञ् वरणे' ॥

विभाषा सृजिदृशोः ॥ 'सृज विसर्गे', 'दृशिर् प्रेक्षणे'—अनयोः क्रादिनियमादिटिं नित्यं प्राप्ते विकल्पार्थं वचनम्। सस्रष्ठ, दद्रष्ठेति। व्रश्चादिना षत्वम्, 'सृजिदृशोर्झल्यमकिति' इत्वम् ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## इडत्त्यर्तिव्ययतीनाम् ॥ ६६ ॥

अत्ति, अर्ति, व्ययति–इत्येतेषां थलीडागमो भवति । आदिथ । आरिथ । संविव्ययिथ । व्येञः 'न व्यो लिटि' इत्यात्वप्रतिषेधः । अत्तिव्ययत्योः 'ऋतो भारद्वाजस्य' इति नियमाद्विकल्पः । अर्त्तेरपि नित्यं प्रतिषेधः ।

अत्रेड्ग्रहणं विस्पष्टार्थम् । विकल्पविधाने हि सति अत्तिव्ययतिग्रहणमनर्थकम्; प्रतिषेधविधाने चार्त्तिग्रहणमिति नित्योऽयं विधिरिड्ग्रहणमन्तरेणापि शक्यते विज्ञातुम् ॥

## वस्वेकाजाद्घसाम् ॥ ६७ ॥

कृतद्विर्वचनानां धातूनामेकाचाम् आकारान्तानाम्, घसेश्च वसा-

पदमञ्जरी

*इडत्त्यर्त्तिव्ययतीनाम् ॥ अत्र इड्ग्रहणं विस्पष्टार्थमिति ।* अथ विकल्पे प्राप्ते नित्यार्थं कस्मान्न भवति ? तत्राह–*विकल्पविधाने हीति ।* एवमपि प्रतिषेधः प्रकृतः, तन्निवृत्त्यर्थमिड्ग्रहणं स्यात् ? इत आह—*प्रतिषेधविधाने इति ।*

*वस्वेकाजाद्घसाम् ॥* 'वसु' इत्यविभक्तिको निर्देशः । वसोरित्यर्थः । *कृतद्विर्वचनानामिति ।*

न्यासः

**इडत्त्यर्त्तिव्ययतीनाम् ॥** आदिथ, आरिथेति । 'अद भक्षणे', 'ॠ गतौ' । 'अत आदेः' इत्यभ्यासस्य दीर्घः । विव्ययिथेति । 'व्येञ् संवरणे', 'लिट्यभ्यासस्योभयेषाम्' इति सम्प्रसारणम् । कस्मात् पुनरत्र व्येञः 'आदेच उपदेशे' इत्यात्त्वं न भवति ? इत्याह–व्येञो न व्यो लिटीत्यादि । अर्त्तेरपि नित्यं प्रतिषेध इति । 'ऋतो भारद्वाजस्य' इत्यनेन ।

**अत्रेड्ग्रहणं विस्पष्टार्थमिति ।** ननु च नित्यमिडागमो यथा स्यादित्येवमर्थमिड्ग्रहणं स्यात्, न हीड्ग्रहणमन्तरेणायं शक्यत इड्विधिर्नित्यो विज्ञातुम् ? इत्याह–विकल्पविधाने हीत्यादि । अनेन हि विकल्पस्यानन्तरस्य वा विधानं क्रियते, पूर्वप्रकृतस्य वा नित्यप्रतिषेधस्य ? शक्यते ह्यसावपि मण्डूकप्लुतिन्यायेनानुवर्त्तयितुम् । तत्र यदि पूर्वको विकल्पस्तदार्त्तिव्ययतिग्रहणमनर्थकं स्यात्; 'उपदेशेऽत्वतः' इत्यनेनैव विकल्पस्य सिद्धत्वात् । अथेतरः, एवं सत्यर्त्तिग्रहणमनर्थकं स्यात्; 'ऋतो भारद्वाजस्यैव' इत्यनेनैव प्रतिषेधस्य सिद्धत्वात् । यत एवं न विकल्पस्य विधानमुपपद्यते तेन नापि प्रतिषेधस्य । तस्मादन्तरेणापीड्ग्रहणं नित्योऽयमिड्विधिरिति शक्यते विज्ञातुम् । प्रतिपत्तिगौरवं पुनरेवं विज्ञायमाने स्यादिति विस्पष्टार्थमिड्ग्रहणं क्रियते ॥

**वस्वेकाजाद्घसाम् ॥ कृतद्विर्वचनां धातूनामेकाचामिति ।** कुत एतदवसितम् ? एका-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



विडागमो भवति । आदिवान् । आशिवान् । पेचिवान् । शेकिवान् । धात्वभ्यासयोरेकादेशे कृते एत्वाभ्यासलोपयोश्च कृतयोः कृतद्विर्वचना एते एकाचो भवन्ति । आत्–ययिवान् । तस्थिवान् । घस्–जक्षिवान् ।

पदमञ्जरी

कथं पुनरविशेषोक्तावेष विशेषो लभ्यते ? एकाज्ग्रहणसामर्थ्यात् । न हि कश्चिदकृते द्विर्वचनेनैकाजस्ति यन्निवृत्त्यर्थमेकाज्ग्रहणं स्यात् । 'चिरिजिरिचकाशिभ्यः कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थम्' इत्यामा भवितव्यमिति वसोरसम्भवः । ऊर्णोतेस्तु णुवद्भावादेकाज्ग्रहणेनानिवृत्तिः । ननु च जागर्त्तिरस्ति ? 'उषविद्जागृभ्योऽन्यतरस्याम्' इत्यामो विकल्पितत्वात्; वेदेऽपि—जागृवांसो अनुग्मन्निति 'द्विर्वचनप्रकरणे छन्दसि वेति वक्तव्यम्' इति द्विर्वचनाभावः, नैकमुदाहरणमेकाज्ग्रहणं प्रयोजयति । यद्येतावत्प्रयोजनं स्यात् 'जागर्तेर्न' इत्येव ब्रूयात्, लघीयसी हि साक्षात्प्रतिषेधप्रतिपत्तिः । यदि वा न्यायसिद्धोऽयमर्थः ।

न्यासः

णज्ग्रह सामर्थ्यात् । न हि कश्चिदकृते द्विर्वचनेऽनेकाजस्ति, यन्निवृत्त्यर्थमेकाज्ग्रहणं क्रियते । ननु च जागर्त्तिरस्ति, अतस्तन्निवृत्त्यर्थं तत् स्यात् ? नैतदस्ति; न ह्येकमुदाहरणं प्रतियोगारम्भं प्रयोजयति । यद्येतत् प्रयोजनं स्यात्, 'जाग्रो न' इत्येवं ब्रूयात् । तदाप्ययमर्थः—प्रतिपत्तिगौरवं परिहृतं भवति । ननु चोर्णोतेर्निवृत्त्यर्थमपि स्यात् ? नैतत्; उक्तं हि प्राग्–'वाच्य ऊर्णोर्णुवद्भावः' इति । तस्माद् युक्तमुक्तम्–कृतद्विर्वचनानां धातूनामेकाचामिति । आदिवान्, आशिवानिति । 'अद भक्षणे', 'अश भोजने' । 'लिटः क्वसुश्च' इति क्वसुः, द्विर्वचनम्, अभ्यासकार्यञ्च, 'अत आदेः' इति दीर्घत्वम् । सवर्णदीर्घत्वम्, इट्, 'उगिदचाम्' इति नुम्, 'सान्तमहतः' इत्यादिना दीर्घः, हल्ङ्यादिसंयोगान्तलोपौ । पेचिवान्, शेकिवानिति । 'अत एकहल्मध्ये' इत्यादिनैत्वाभ्यासलोपौ । धात्वभ्यासयोरेकादेशे कृत इत्यादि । ननु च षाष्ठिके द्विर्वचनविधौ 'द्विष्प्रयोगो द्विर्वचनम्' इत्येष पक्षो वृत्तिकारेणाश्रितः, एवं चाकृते धात्वभ्यासयोरेकादेशेऽकृतयोरपि चैत्वाभ्यासलोपयोः कृतद्विर्वचना अप्येत एकाचो भवन्ति । स्थाने द्विर्वचने हि शब्दान्तरमनेकाजतिदिश्यत इति स्यादेषां कृतद्विर्वचनानामनेकाच्त्वम्, न तु द्विष्प्रयोगे द्विर्वचने; तत्र हि स एव धातुर्द्विरुच्यते, न चासौ शतकृत्वोऽप्युच्चार्यमाण एकाच्त्वं जहाति, किं पुनर्द्विरुच्यमानः, तत् किमुच्यते—धात्वभ्यासयोरेकादेश एत्वाभ्यासलोपयोश्च कृतयोः कृतद्विर्वचना एत एकाचो भवन्तीति ? आवृत्तिव्यवहारः ? तथा हि, वक्तारो वदन्ति—पटुर् भवान् पटुरासीत्, पटुतरश्चैषमः, पटुतमः कृतमेकाचो भेदमाश्रित्यैवमुक्तमित्यदोषः । भवति हि धर्मभेदादपि धर्मिणो भेदव्य-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सिद्धे सत्यारम्भो नियमार्थः—एकाजाद्घसामेव वसाविडागमो भवति, नान्येषाम् । बिभिद्वान् । चिच्छिद्वान् । बभूवान् । शिश्रिवान् । क्रादिनियमात्, प्रतिषेधाभावाच्च य इट् प्रसक्तः स नियम्यते ।

आद्ग्रहणमनेकाज्ग्रहणार्थम् । द्विर्वचने हि कृते इटि हि सति आतो लोपेन भवितव्यम् ।

पदमञ्जरी

तथा हि द्विर्वचनस्यावकाशः—पपाच, इटोऽवकाशः यत्र कृते द्विर्वचन एकाच्—पेचिवान्, आदिवान्; बिभिद्वानित्यादौ तूभयप्रसङ्गे नित्यत्वाद् द्विर्वचनम् ।

*क्रादिनियमात्प्राप्त इति* । 'नेड्वशि कृति' इति प्रत्ययाश्रयस्य प्रतिषेधस्य सर्वत्र भावात्क्रादिनियमादेव सर्वत्र वसोरिटः प्राप्तिः ।

*आद्ग्रहणमनेकाजर्थमिति* । ननु द्विर्वचने आकारलोपे सति तेषामप्येकाच्त्वादेव सिद्धम् ? अत आह—*द्विर्वचने हीति* । इण्निमित्त आकारलोपो नासति तस्मिन्भवति, ततश्चानेकाच्त्वमित्यर्थः ।

न्यासः

परारि, सोऽन्य एवास्मि संवृत्त इति । अथ वा—स्थाने द्विर्वचनपक्षोऽपि तत्राश्रितः, द्विष्प्रयोगश्च द्विर्वचनमिति कृत्वा । चकारात् स्थाने द्विर्वचनमपीति स्थाने द्विर्वचनपक्षस्यापि तत्र सूचनात् । ये तु तत्पक्षभाविनो दोषास्ते तत्र प्रतिविहिता एव । तस्थिवानिति । 'शर्पूर्वाः खयः' इति खयः शेषः, 'आतो लोप इटि च' इत्याकारलोपः । जक्षिवानिति । पूर्ववददेर्घस्लादेशः, इट्, 'गमहन' इत्यादिनोपधालोपः, 'कुहोश्चुः' इति चुत्वम्—घकारस्य झकारः, 'अभ्यासे चर्च्च' इति झकारस्य जकारः । परस्य घकारस्य 'खरि च' इति चर्त्वम्—ककारः, 'शासिवसि' इत्यादिना षत्वम् ।

ननु चात्र क्रादिनियमादिडागमः सिद्ध एव, तत् किमर्थोऽयमारम्भः ? इत्याह—सिद्ध इत्यादि । क्रादिनियमात् प्रसक्त इत्यादिना 'सिद्धे सत्यारम्भो नियमार्थः' इत्येतदेव विस्पष्टीकरोति । प्रसक्त इति । प्राप्त इत्यर्थः । नियम्यत इति । धात्वन्तरेभ्यो व्यावर्त्यैकाजादिष्वेव व्यवस्थाप्यत इत्यर्थः ।

अथाद्ग्रहणं किमर्थम्, यावताऽकारान्ता अप्यातो लोपे कृते कृतद्विर्वचना एकाचो भवन्त्येव, तत्रैकाज्ग्रहणेनैव सिद्धम् ? इत्याह—आद्ग्रहणमनेकाज्ग्रहणार्थमिति । कथं पुनस्तेषामनेकाच्त्वम् ? इत्यत आह—द्विर्वचने इत्यादि । इण्निमित्तत्वादाकारलोपस्येटि सति तेषामाकारलोपेन भवितव्यम्, नासति, अतो यावदिण्न क्रियते तावदाकारलोपाभावात् कृतद्विर्वचना एतेऽनेकाच इत्यसत्यादिग्रहणे तेषां ग्रहणं न स्यात् । तस्मादनेकाजर्थमाद्ग्रहणं कर्त्तव्यम् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



दरिद्रातेस्तु कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थमित्यामा भवितव्यम् । दरिद्राञ्चकार[१]। अथाप्याम्न क्रियते, तथापि च दरिद्रातेरार्धधातुके 'लोपः सिद्धश्च प्रत्ययविधौ' इति प्रागेव प्रत्ययोत्पत्तेराकारे लुप्ते इडागमस्य निमित्तं विहतमिति न इडागमो भवति, ददरिद्वानिति भवितव्यम् ।

घसेरपि यदि ग्रहणमिह न क्रियते, तदा द्विर्वचनात् परत्वाद् 'घसिभसोर्हलि च' इति उपधालोपे कृते द्विर्वचनमेव न स्यात्; अनच्कत्वाद् । इह तु घसिग्रहणात् उपधालोपमपि परत्वादिडागमो बाधते । तत्र कृते 'गमहनजनखनघसाम्' इत्युपधालोपः । स च 'द्विर्वचनेऽचि' इति द्विर्वचने कर्तव्ये स्थानिवद्भवति । तेन जक्षिवान् इति सिद्धयति ॥

पदमञ्जरी

*अथाप्याम्न क्रियत इति* । 'आत औ णलः' इत्योकारे विधातव्ये औकारविधानेन ज्ञापितमेतत्—दरिद्रातेरनित्य आमिति । तेनायमभ्युपगमः ददरिद्रवानिति, 'नेड्वशि कृति' इति प्रतिषेध एव तत्र भवति ।

अथ घसिग्रहणं किमर्थम्, यावता द्विर्वचने कृते 'घसिभसोर्हलि च' इत्युपधालोपे सत्येकाच्त्वादेव सिद्धम् ? अत आह—*घसेरपीति* । *परत्वादिति* । *नित्यत्वाच्चेत्यापि* द्रष्टव्यम्; तस्य हल्यपि विधानात् । *अनच्कत्वादिति* । स्थानि-

न्यासः

यद्येवम्, दरिद्रातेरपीट् प्रसज्येत ? इत्यत आह—दरिद्रातेस्त्वित्यादि । दरिद्रातेः कसोः सम्भव एव नास्ति, यतः 'कास्यनेकाज्ग्रहणम्' इति वचनाद्दरिद्रातेरामा भवितव्यम्, तस्मिंश्च सति 'आमः' इति लेर्लुका भवितव्यम्, तत्कुतोऽयमिट्प्रसङ्गः ! दरिद्राञ्चकारेति । 'कृञ्चानुप्रयुज्यते' इति लिट्परस्य कृञोऽनुप्रयोगः । अभ्युपगम्यापि दरिद्रातेरामोऽभावं परीहारान्तरमाह—अथाप्याम्न क्रियत इत्यादि । आकारान्तानां धातूनामिहेड्विधीयते । दरिद्रातेरार्धधातुके 'लोपः सिद्धश्च प्रत्ययविधौ' इति वचनात् प्रागेव प्रत्ययोत्पत्तेराकारो लुप्त इतीडागमोऽस्मान्निमित्ताभावान्न भवति ।

क्रियतां नामाद्ग्रहणम्, घसिग्रहणं न कर्त्तव्यमिति, अस्य द्विर्वचने कृते 'घसिभसोर्हलि च' इत्युपधालोपे कृते चैकाच इत्येवं सिद्ध इडागमः ? इत्याह—घसेरपीत्यादि ।

---

१. 'इति प्राप्नोति' इत्यधिकं क्वचित् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## विभाषा गमहनविदविशाम् ॥ ६८ ॥

गम, हन, विद, विश—इत्येतेषां धातूनां वसौ विभाषा इडागमो भवति । गम—जग्मिवान्, जगन्वान् । 'मो नो धातोः' इति नकारः । हन—जघ्निवान्, जघन्वान् । विद—विविदिवान्, विविद्वान् । विश—विविशिवान्, विविश्वान् ।

विशिना साहचर्यादिह विदेस्तौदादिकस्य लाभार्थस्य ग्रहणम् । ज्ञानार्थस्य तु नित्यं विविद्वानित्येव भवति ।

❀ दृशेश्चेति वक्तव्यम् ❀ । ददृशिवान्, ददृश्वान् ॥

### पदमञ्जरी

वद्भावोऽपि नास्ति; हल्निमित्तत्वादुपधालोपस्य । क्रियमाणे तु घसिग्रहणे नायं दोष इत्याह—*क्रियमाणे त्विति* ॥

*विभाषा गमहनविदविशाम्* ॥ *जघ्निवान्, जघन्वानिति* । 'हो हन्तेर्ञ्णिन्नेषु' । 'अभ्यासाच्च' इति कुत्वम् ।

*विशिना तौदादिकेनेति* । यद्यप्यादादिकेन हन्तिना साहचर्यमस्ति, तथापि शब्दपरविप्रतिषेधाद्विशिसाहचर्यमेव व्यवस्थापकमिति भावः । *ज्ञानार्थस्य त्विति* । सत्ताविचारणार्थयोस्त्वात्मनेपदित्वात् क्वसावसम्भव एवेति भावः । *विविद्वानिति* । पूर्ववदिट्प्रतिषेधः ॥

### न्यासः

अनच्कत्वादिति । द्विर्वचनाभावहेतुः । एकाचो द्विर्वचनमुच्यते; 'एकाचः' इत्यधिकारात् । तस्मादुपधालोपे कृतेऽनच्कत्वान्न द्विर्वचनं स्यात्, ततश्च जक्षिवानिति न सिध्यतीत्यभिप्रायः । अथ क्रियमाणेऽपि घसिग्रहणे कस्मादेव दोषो न भवति ? इत्याह—क्रियमाण इत्यादि । सुबोधम् ॥

विभाषा गमहनविदविशाम् ॥ पूर्वस्मान्नियमाद् गमादीनामिड् न भवतीति विभाषेयमारभ्यते । जग्मिवानिति । परत्वादिट्, ततः 'गमहन' इत्यादिनोपधालोपः, ततो द्विर्वचनम् । जघन्वानिति, जघ्निवानिति । 'अभ्यासाच्च' इति कुत्वम्—हकारस्य घकारः । लाभार्थस्येति । 'विद्लृ लाभे' इत्यस्य । न ज्ञानार्थस्येति । 'विद ज्ञाने' इत्यस्य । 'विद सत्तायाम्', 'विद विचारणे'—इत्येतयोश्चात्मनेपदित्वादात्मनेपदेषु क्वसुर्न भवतीत्यनुपन्यासः ।

दृशेश्चेत्यादि । 'दृशिर् प्रेक्षणे' इत्यस्माच्च परे क्वसोरिडागमो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—'विभाषा' इति योगविभागः क्रियते, तेन दृशेरपि भविष्यतीति । न चैवं सति 'गमहनविदविशाम्' इत्यस्यानर्थक्यम्; पूर्वयोगस्यासर्वविषयत्वसूचनात् । एवं ह्यतिप्रसङ्गः परिहृतो भवति ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## सनिंससनिवांसम् ॥ ६९ ॥

सनोतेः[1], सनतेर्वा धातोः 'सनिंससनिवांसम्' इति निपात्यते[1]। अग्निंत्वाग्ने सनिंससनिवांसम्। इडागम एत्वाभ्यासलोपाभावश्च निपात्यते।

सनिङ्पूर्वादन्यत्र सेनिवांसमित्येव भवति। छन्दसीदं[2] निपातनं विज्ञायते[2]। भाषायां सेनिवांसमिति भवति॥

## ऋद्धनोः स्ये ॥ ७० ॥

ऋकारान्तानां धातूनां हन्तेश्च स्ये इडागमो भवति। करिष्यति। हनिष्यति। हरिष्यति। स्वरतेर्वेट्त्वाद्, 'ऋद्धनोः स्ये' इत्येतद्भवति विप्रतिषेधेन—स्वरिष्यति।

तपरकरणं विस्पष्टार्थम्॥

### पदमञ्जरी

*सनिंससनिवांसम्* ॥ क्वसोश्छान्दसत्वात्, आनुपूर्व्याश्च विवक्षितत्वाच्छन्दस्येवैतन्निपातनम्॥

*ऋद्धनोः स्ये* ॥ स्वरत्यादिसूत्रे यदुक्तम्—स्वरतेरेतस्माद्विकल्पादित्यादि, तदेव स्मारयति—*स्वरतेर्वेट्त्वादिति*। वा विकल्पित इड्यस्य स वेट्, तस्य भावो वेट्त्वम्, स पुनर्विकल्पितेट्सम्बन्धः॥

### न्यासः

सनिंससनिवांसम्॥ सनोतेरिति 'षणु दाने' इत्यस्य सनिंपूर्वस्य द्वितीयान्तस्योच्चारणेन नियतामानुपूर्वीमुपलक्षयति। यत्रैषानुपूर्वी नियता तत्रैव यथा स्यात्। इयं चानुपूर्वी छन्दस्येव नियतेति तद्विषयमेवैतन्निपातनं विज्ञायते। अत एव वृत्तिकृता छान्दसः प्रयोगो दर्शितः। सेनिवांसमिति। पूर्ववदेत्त्वाभ्यासलोपौ। वस्वेकाजाद्घसाम्' इतीट्॥

ऋद्धनोः स्ये॥ विभाषेति निवृत्तम्। ऋकारान्तानां हन्तेश्चानुदात्तत्वात् 'एकाचः' इत्यादिना प्रतिषिद्धस्येटः स्ये विधानार्थमेतत्। अथ स्वरतेः स्वरत्यादिसूत्रेण पक्ष इट्, अथानेन नित्यमित्याह—स्वरतेरित्यादि। स्वरतेर्धातोर्यत् स्वरत्यादिसूत्रेण वेट्त्वं विहितं तस्मादनेन स्ये ऋकारान्तेभ्यो विधीयमानं नित्येट्त्वं भवति विप्रतिषेधेन। अयञ्चार्थः स्वरत्यादिसूत्र उक्तोऽपि विस्मरणशीलानामनुग्रहाय पुनरिहोच्यते।

---

१—१. 'सनिंपूर्वस्य सनोतेः सनतेर्वा सनिंससनिवांसमिति निपात्यते'—इत्येकस्मिन्पुस्तके पाठः।

२—२. 'इयं चानुपूर्वी छन्दस्येव नियतेति छन्दस्येव निपातनं विज्ञायते'—इति पाठ०। वस्तुतस्तु तदिदं न्यासव्याख्यानमेव मूले केनचित्प्रक्षिप्तम्। ( प्र० सं०



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## अञ्जेः सिचि ॥ ७१ ॥

अञ्जेः सिचि इडागमो भवति । आञ्जीत्, आञ्जिष्टाम्, आञ्जिषुः ।

सिचीति किम्? अङ्क्ता, अञ्जिता । ऊदित्वाद् विभाषा भवति ॥

## स्तुसुधूञ्भ्यः परस्मैपदेषु ॥ ७२ ॥

स्तु, सु, धूञ्—इत्येतेभ्यः सिचि परस्मैपदे परत इडागमो भवति । अस्तावीत् । असावीत् । अधावीत् ।

परस्मैपदेष्विति किम् ? अस्तोष्ट । असोष्ट । अधोष्ट, अधविष्ट ॥

## यमरमनमातां सक्च ॥ ७३ ॥

यम, रम, नम—इत्येतेषामङ्गानाम्, आकारान्तानां च सगागमो भवति परस्मैपदे सिचि, इडागमश्च । यम्—अयंसीत्, अयंसिष्टाम्, अयंसिषुः । रम—व्यरंसीत्, व्यरंसिष्टाम्, व्यरंसिषुः । नम—

### पदमञ्जरी

*यमरमनमातां सक्च ॥ व्यरंसीदिति । 'व्याङ्परिभ्यो रमः' इति परस्मैपदम् ।*

### न्यासः

अथ तपरकरणं किमर्थम्? दीर्घाणां मा भूदिति चेत्? नैतदस्ति; उदात्तत्वाद्धि तेषां भवितव्यमेवेटा । एवं तर्ह्यसति तपरकरणे यथा 'स्मिपूङ्रञ्ज्वशां सनि' इत्यत्र स्वरत्यादिसाहचर्याद् 'ऋ' इत्येतस्य धातोर्ग्रहणम्, तथेहापि हन्तिना साहचर्याद् 'ऋ' इत्येतस्य धातोर्ग्रहणं स्यात् । तपरत्वे तु सति वर्णग्रहणमेतद्विज्ञायते । वर्णनिर्देशे हि तपरत्वं प्रसिद्धम् । वर्णग्रहणे च वर्णग्रहणानि सर्वत्र तदन्तविधिं प्रयोजयन्तीतिऋकारान्तानामिट् सिद्धो भवति ॥

अञ्जेः सिचि ॥ 'अन्जू व्यक्तिम्रक्षणकान्तिगतिषु' । ऊदित्त्वादत्र स्वरत्यादिसूत्रेण विकल्पे प्राप्ते नित्यार्थं वचनम् । आञ्जीदिति । 'इतश्च' इतीकारलोपः, 'अस्तिसिचोऽपृक्ते' इतीट्, 'इट ईटि' इति सिचो लोपः, 'आडजादीनाम्' इत्याट्, 'आटश्च' इति वृद्धिः । आञ्जिष्टामिति । 'तस्थस्थमिपाम्' इत्यादिना तसस्थाने तामादेशः । आञ्जिषुरिति । 'सिजभ्यस्तविदिभ्यश्च' इति झेर्जुस् ॥

स्तुसुधूञ्भ्यः परस्मैपदेषु ॥ 'ष्टुञ् स्तुतौ', 'षुञ् अभिषवे'—अनयोरनुदात्तत्वात् प्रतिषेधे प्राप्ते, धूञस्तु स्वरत्यादिसूत्रेण विकल्पे प्राप्ते सतीदमारभ्यते ॥

यमरमनमातां सक् च ॥ 'यम उपरमे', 'रमु क्रीडायाम्', 'णम प्रह्वत्वे शब्दे च' । आकारान्ताः 'या प्रापणे' इत्येवमादयः । सर्वेषामनुदात्तत्वादिट्प्रतिषेधे प्राप्ते-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


अनंसीत्, अनंसिष्टाम्, अनंसिषुः । आकारान्तानाम्—अयासीत्, अयासिष्टाम्, अयासिषुः ।

यमादीनां हलन्तलक्षणा वृद्धिः प्राप्ता सा 'नेटि' इति प्रतिषिध्यते । परस्मैपदेष्वित्येव—अयंस्त, अरंस्त, अनंस्त ॥

स्मिपूङ्रञ्ज्वशां सनि ॥ ७४ ॥

स्मिङ्,पूङ्,ऋ,अञ्जू, अशू—इत्येतेषां धातूनां सनीडागमो भवति ।

पदमञ्जरी

युक्तमत्र द्विवचनबहुवचनयोरुदाहरणम्, तत्र हि सगिटोः सतोरस्ति विशेषः; एकवचने त्वयुक्तम्, विशेषाभावात् ? तत्राह—*यमादीनामिति* । 'ह्मयन्तक्षण' इत्यत्रापीटीति वर्त्तते, अपासीदित्येतत्तु प्रक्रमाभेदायोदाहृतम्, नत्वत्र विशेषोऽस्ति । ननु चात्रापि स्वरे विशेषोऽस्ति—मा हि मासीदिति, इट्यसत्याद्युदात्तं पदं स्यात्, सति तु तस्य सिज्भक्तत्वाच्चित्स्वरेणोदात्तत्वे 'एकादेश उदात्तेनोदात्तः' इत्यन्तोदात्तं पदं भवति, तत्र 'आदिः सिचोऽन्यतरस्याम्' इति पक्षे आद्युदात्तत्वम्, पक्षेऽन्तोदात्तत्वम् ? नैषोऽस्ति विशेषः; 'अनिटः सिचः पक्षे उपसंख्यानम्' इति वचनान्म हि कार्षमित्यत्र यथा पक्षे आद्युदात्तत्वं पक्षे चान्तोदात्तत्वं च भवति, एवमत्रापि भविष्यति । *आयंस्तेति* । 'समुदाङ्भ्यो यमोऽग्रन्थे' इत्यात्मनेपदम् । *अनंस्तेत्यत्र* कर्मकर्त्तरि 'न दुहस्नुनमां यक्चिणौ' इति चिणः प्रतिषेधः ॥

*स्मिपूङ्रञ्ज्वशां सनि* ॥ 'ऋ' इति धातोर्ग्रहणम्, न ऋकारान्तानाम्; उत्तरत्र

न्यासः

ऽयमारम्भः । अत्र षष्ठीनिर्देशाद् यमादीनां सग् भवति, इट् पुनरार्धधातुकाधिकारात् सिच एव । व्यरंसीदिति । 'व्याङ्परिभ्यो रमः' इति परस्मैपदम् ।

द्विवचनबहुवचनयोर्युक्तमुदाहरणम्, अस्ति हि तत्र सगिटोः श्रुतौ विशेषः; एकवचनस्य त्वयुक्तम्, विशेषाभावात्—इति यो देशयेत्, तं प्रति तत्रापि वृद्धिप्रतिषेधो विशेषोऽस्तीति दर्शयितुमाह—यमादीनामित्यादि । आयंस्तेति । 'आङो यमहनः' इत्यात्मनेपदम् । अरंस्तेति । अत्रापि 'अनुदात्त' इत्यादिना ।

स्मिपूङ्रञ्ज्वशां सनि ॥ 'ष्मिङ् ईषद्धसने', 'पूङ् पवने' । अनुबन्धोच्चारणं पूञ्निवृत्त्यर्थम् । 'ऋ गतिप्रापणयोः' इति भ्वादिः, 'ऋ गतौ' इति जुहोत्यादिः—उभयोरपि ग्रहणम्; विशेषानुपादानात् । ऋकारान्तानां त्वेतद् ग्रहणं न भवति; उत्तरत्र किरत्यादीनामिटो विधानात् । 'अञ्जू म्रक्षणे', 'अशू व्याप्तौ' । 'अश भोजने' इत्यस्य ग्रहणं न भवति; उदात्तत्वादेवेट् सिद्ध इति । तत्राञ्जेरशेश्चोदित्त्वाद् विकल्पे प्राप्ते, शेषाणां तुगन्तत्वात् 'सनि ग्रहगुहोश्च' इति प्रतिषेधे प्राप्त इदमारभ्यते । सिस्मयिषते

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सिस्मयिषते। पिपविषते। अरिरिषति। अञ्जिजिषति। अशिशिषते।

ङकारग्रहणं पूञो मा भूत्। पुपूषति इत्येव तस्य भवति।

अशेरूदितो ग्रहणादश्नोतेर्नित्यमिडागमोऽस्त्येव ॥

**किरश्च पञ्चभ्यः ॥ ७५ ॥**

किरादिभ्यःपञ्चभ्यस्सनि इडागमो भवति। कॄ—चिकरिषति। गॄ—जिगरिषति। दृङ्—दिदरिषते। धृङ्—दिधरिषते। प्रच्छ—पिप्रच्छिषति।

पञ्चभ्य इति किम्? सिसृक्षति।

किरतिगिरत्योः 'इट् सनि वा' इति विकल्पः प्राप्तः, 'वृतो वा' इति च। अस्येटो दीर्घत्वं नेच्छन्ति ॥

**पदमञ्जरी**

किरादीनामिड्विधानात्। *पिपविषत इति*। 'ओः पुयण्ज्यपरे' इत्यभ्यासस्येत्वम्। *अञ्जिजिषतीति*। 'अजादेर्द्वितीयस्य' इति जिशब्दस्य द्विर्वचनम्, नकारस्तु न द्विरुच्यते; 'न न्द्राः' इति प्रतिषेधात् ॥

*किरश्च पञ्चभ्यः* ॥ 'किरः' इति व्यत्ययेनैकवचनम्। 'पञ्चभ्यः' इति बहुवचनादाद्यर्थावगतिः। कॄगॄदृङ्धृङ्प्रच्छतयः तुदादिषु किरादयः। *पिपृच्छिषतीति*। 'रुदविद' इत्यादिना सनः कित्त्वम्। ग्रहिज्यादिसूत्रेण सम्प्रसारणम्।

*किरतिगिरत्योरिति*। शेषाणां त्वनुदात्तत्वात्प्रतिषेधः। *दीर्घत्वं नेच्छन्तीति*। इष्टिरेवेयम् ॥

**न्यासः**

इति। 'पूर्ववत्सनः' इत्यात्मनेपदम्। पिपविषत इति। 'ओः पुयण्ज्यपरे' इत्यभ्यासस्येत्त्वम्। अरिरिषतीति। इटि सति गुणे कृतेऽजादेर्द्वितीयस्यैकाचो द्विर्वचनम्। अञ्जिजिषतीति। अञ्जेर्नकारो न द्विरुच्यते; 'न न्द्राः संयोगादयः' इति निषेधात् ॥

किरश्च पञ्चभ्यः ॥ 'कॄ विक्षेपे', 'गॄ निगरणे', 'दृङ् अनादरे', 'धृङ् अनवस्थाने', 'प्रच्छ ज्ञीप्सायाम्'। अत्रान्त्यस्यानुदात्तत्वादिट्प्रतिषेधे प्राप्ते दृङ्धृङोरुगन्तत्वात् 'सनि ग्रहगुहोश्च' इति निषेधे प्राप्ते, इतरयोस्तु वृत्तिकारप्रदर्शितविकल्पे प्राप्ते सतीदमारभ्यते। पिपृच्छिषतीति। 'रुदविद' इत्यादिना सनः कित्त्वम्, 'ग्रहिज्या' इत्यादिना सम्प्रसारणम्, 'छे च' इति तुक्, 'उरत्' इत्यभ्यासस्यात्त्वम्, पूर्ववदित्त्वम्। सिसृक्षतीति। 'सृज विसर्गे'। पञ्चग्रहणादस्येण्न भवति। सामान्यलक्षणोऽपीण्न भवत्येव; 'एकाचः' इति प्रतिषेधात्। 'हलन्ताच्च' इति कित्त्वम्, 'चोः कुः' इति कुत्वम्, व्रश्चादिसूत्रेण षत्वम्, 'षढोः कः सि' इति कत्वम्। 'वृतो वे'त्यस्य दीर्घत्वं नेच्छन्तीति। कथं पुनरिष्यमाणमपि न भवति? व्यवस्थितविभाषाविज्ञानात्। अस्येति। एतत्सूत्रविहितस्येटः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## रुदादिभ्यः सार्वधातुके ॥ ७६ ॥

रुदादिभ्य उत्तरस्य वलादेः सार्वधातुकस्य इडागमो भवति । रुद्—रोदिति । स्वप्—स्वपिति । श्वस्—श्वसिति । अन्—प्राणिति । जक्ष्—जक्षिति ।

'पञ्चभ्यः' इत्येव—जागर्त्ति ।

सार्वधातुक इति किम् ? स्वप्ता ।

'वलादेः' इत्येव—रुदन्ति ॥

## ईशः से ॥ ७७ ॥

ईश उत्तरस्य 'से' इत्येतस्य सार्वधातुकस्य इडागमो भवति । ईशिषे । इशिष्व ॥

### पदमञ्जरी

*रुदादिभ्यः सार्वधातुके* ॥ रुदिस्वप्श्वसनिजक्षिरदादिषु रुदादयः । 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' इति 'रुदादिभ्यः' इति पञ्चम्या 'सार्वधातुके' इति सप्तम्याः षष्ठी प्रकल्प्यते । सप्तमीनिर्देशस्तूत्तरत्रोपयोगं यास्यति । *प्राणितीति* । 'अनितेः' इति णत्वम् ।

*स्वप्तेति* । अन्येभ्यस्तु परस्यार्धधातुकस्येटा भवितव्यम् ॥

*ईशः से* ॥ 'ईश ऐश्वर्ये' आदादिकः । 'से' इत्यविभक्तिको निर्देशः । *इशिष्वेति* । 'सवाभ्यां वामौ' । एकदेशविकृतस्यानन्यत्वात् सेशब्द एवायम् ॥

### न्यासः

रुदादिभ्यः सार्वधातुके ॥ 'रुदिर् अश्रुविमोचने', 'ञिष्वप् शये', 'श्वस प्राणने', 'अन च', 'जक्ष अदने' । रुदादयोऽदादिषु पठ्यन्ते । 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' इति 'रुदादिभ्यः' इत्येषा पञ्चमी 'सार्वधातुके' इत्यस्याः सप्तम्याः षष्ठीत्वं प्रकल्पयति । सप्तमीनिर्देशस्तूत्तरार्थः । तेन सार्वधातुकस्य वलादेरिड् विज्ञायत इत्यत आह—रुदादिभ्यः पञ्चभ्य इत्यादि । प्राणितीति । 'अनितेः' इति णत्वम् । स्वप्तेति । सार्वधातुकग्रहणादार्धधातुकस्येण्न भवति । सामान्यलक्षण इण्न भवत्येव; 'एकाचः' इति प्रतिषेधात् । अन्येभ्यस्तु रुदादिभ्य उदात्तत्वादार्धधातुकस्यापीटा भवितव्यमेवेति स्वपेरेव प्रत्युदाहरणम् ॥

ईशः से ॥ से इति 'सुपां सुलुक्' इति षष्ठ्या लुकं कृत्वाऽविभक्तिकोऽयं निर्देशः । ईशिषे इति । 'ईश ऐश्वर्ये', लट्, अनुदात्तेत्त्वादात्मनेपदम्, 'थासः से', अदादित्वाच्छपो लुक् । ईशिष्वेति । लोट्, से, 'सवाभ्यां वामौ' इति वादेशे कृत एकदेशविकृतमन्यवद्भवतीतीहापि भवति ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## ईडजनोर्ध्वे च ॥ ७८ ॥

ईड, जन—इत्येताभ्यामुत्तरस्य 'ध्वे' इत्येतस्य, 'से' इत्येतस्य च सार्वधातुकस्य इडागमो भवति। ईडिध्वे। ईडिध्वम्। ईडिषे। ईडिष्व। जनिध्वे। जनिध्वम्। जनिषे। जनिष्व। 'जनी प्रादुर्भावे'—इत्यस्य छान्दसत्वात् श्यनो लुक्, उपधालोपाभावश्च।

'जन जनने'—इत्यस्यापि श्लुविकरणस्य ग्रहणमत्रेष्यते। तस्य कर्मव्यतिहारे—व्यतिजज्ञिषे, व्यतिजज्ञिष्व, व्यतिजज्ञिध्वे, व्यतिजज्ञिध्वम्—इति च भवति।

ध्वेशब्दे ईशेरपि इडागम इष्यते। ईषिध्वे, ईषिध्वमिति। तदर्थं केचित्—'ईडिजनोः स्ध्वे च' इति सूत्रं पठन्ति। तत्र सकारादेः सेशब्दस्य सूत्र एवोपादानाच्चशब्दो भिन्नक्रम ईशेरनुकर्षणार्थो विज्ञायते।

### पदमञ्जरी

*ईडजनोर्ध्वे च* ॥ 'ईड स्तुतौ' अदादिः। *छान्दसत्वाच्छ्यनो लुगिति*। भाषायां तु जायसे—इत्यत्र नित्यत्वात् श्यनि कृते तेन व्यवधानादिड्भावः।

*जन जनने इत्यस्यापीति*। नन्वसौ परस्मैपदी? तत्राह—*तस्य कर्मव्यतिहार इति*। यदि तर्हि तस्याप्यात्मनेपदं सम्भवति, तस्यैव ग्रहणं प्राप्नोति; निरनुबन्धकत्वात्? ईडिना साहचर्यादात्मनेपदिनोऽपि ग्रहणं भविष्यति।

*तदर्थं केचिदिति*। ये त्वेवं न पठन्ति, ते चकारेण कृत्स्नमेव पूर्वसूत्रमनुवर्त्तयन्ति। *सकारादेरिति*। स् इति सप्तम्या लुका निर्देशात्तदादिविधिः।

### न्यासः

**ईडजनोर्ध्वे च** ॥ ध्वे इति पूर्ववदेवाविभक्तिकोऽयं निर्देशः। ईडिध्वे इति। 'ईड स्तुतौ', पूर्ववदात्मनेपदम्, पूर्ववच्छपो लुक्। ईडिध्वमिति। लोट्, 'सवाभ्यां वामौ' इत्यमादेशः। जनिध्वमिति। पूर्ववदात्मनेपदम्। छान्दसत्वाच्छ्यनो लुग् 'बहुलं छन्दसि' इत्यनेन। उपधालोपाभावश्चेति। 'गमहन' इत्यादिनोपधालोपः प्राप्नोति, तदभावश्छान्दसत्वादेव, 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति।

**जन जनन इत्यस्येत्यादि**। ननु चानुबन्धकत्वादस्यैव ग्रहणेन भवितव्यम्, न पूर्वस्य, उच्चारणार्थोऽकारः, नानुबन्धः? नैष दोषः; इह हि लघ्वक्षरत्वाज्जनशब्दस्य पूर्वनिपाते प्राप्ते परनिपातो लक्षणव्यभिचाराय। तेन निरनुबन्धकपरिभाषाया इहानुपस्थानादुभयोरपि ग्रहणं भवति। व्यतिजज्ञिध्वमिति। 'कर्त्तरि कर्मव्यतीहारे' इति आत्मनेपदम्।

**तत्रेत्यादि**। नत्रैवं सूत्रपाठे 'यस्मिन् विधिस्तदादावल्ग्रहणे' इति सकारग्रहणे

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



'ईशीडिजनां सेध्वयोः' इत्येकमेव सूत्रं न पठितम् ? विचित्रा हि सूत्रस्य कृतिः पाणिनेरिति ।

'ध्वे' इति कृतटेरेत्वस्य ग्रहणात् लङि ध्वमि न भवितव्यमिटा । लोटि पुनरेकदेशविकृतस्यानन्यत्वाद् भवितव्यमिटा ॥

## लिङः सलोपोऽनन्त्यस्य ॥ ७६ ॥

'सार्वधातुके'' इति वर्तते[1] । सार्वधातुके यो लिङ् तस्य अनन्त्यस्य सकारस्य लोपो भवति । कः पुनरनन्त्यो लिङः सकारः ? यो

### पदमञ्जरी

यदि तर्हि ईशेरपि ध्वे शब्दे इडागतो भवति, योगविभागो न कर्त्तव्यः, 'ईडीशजनां सेध्वयोः' इति वक्तव्यम्, एवं हि पृथग्विभक्तिर्नोच्चारयितव्या भवति, चकारश्च न कर्त्तव्यः ? अत आह–*ईशीड्जनां सेध्वयोरिति* । *लङि ध्वमित्यस्य न भवतीति* । लोट्यपि तर्हि ध्वमित्यस्य न प्राप्नोति ? तत्राह—*लोटि पुनरिति* ॥

*लिङः सलोपोऽनन्त्यस्य* ॥ *सार्वधातुके यो लिङिति* । नैषा परसप्तमी; सार्वधातुकपरस्य लिङोऽसम्भवात् । तस्मान्निर्धारणे सप्तमी । जातावेकवचनम्,

### न्यासः

सकारादेः सेशब्दस्य ग्रहणम् । स च सकारादिशब्दः सार्वधातुकसंज्ञकः सेशब्द एव सम्भवति; अन्यस्याऽसम्भावत् । ननु च स्वशब्दोऽपि सम्भवति ? नैतदेवम्; एकदेशविकृतस्यानन्यत्वात् सोऽपि सेशब्द एव, अतस्तद्ग्रहणेनापि भवितव्यम् ।

ये तु 'ईडजनोर्ध्वे च' इति सूत्रं पठन्ति, ते 'ईशः से' इत्यस्यैव योगस्यानुकर्षणार्थं चकारं कुर्वन्ति । तेनेशेरपि ध्वेशब्द इडागमो भवति । यदि तर्हीशेरपि ध्व इडागम इष्यते, तदा 'इशीडजनां सेध्वयोः' इत्येकमेव सूत्रं कस्मान्न पठन्ति, एवं पृथग्विभक्तिर्नोच्चारयितव्या, चकारश्च न कर्त्तव्यो भवति ? इत्याह—विचित्रा सूत्रस्येत्यादि ।

ध्व इति कृतटेरेत्वस्येत्यादि । कृतटेरेत्वस्यैतदेव प्रयोजनम्–यत्र टेरेत्वं कृतं तत्रैव यथा स्यात् । न च लङि टेरेत्वमस्ति, अतस्तत्रेटा न भवितव्यम् । यद्येवम्, लोट्यपि न भवितव्यम्, अमादेशे कृते टेरेत्वस्याभावात् ? इत्याह—लोटि पुनरित्यादि ॥

लिङः सलोपोऽनन्त्यस्य ॥ सार्वधातुके यो लिङिति । 'सार्वधातुके' इत्येषात्र निर्धारणे सप्तमी, जातावेकवचनम्, यथा–'कारके' इति । अथ वा—सुब्व्यत्ययेन परसप्तमीत्येषा न भवति–सार्वधातुके परतः; पूर्वस्य बहुवचनस्य प्रसङ्ग एकवचनम् ।

---

1. क्वचिदयमंशो न लभ्यते ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


यासुट्-सुट्-सीयुटाम् । कुर्यात्, कुर्याताम्, कुर्युः । कुर्वीत, कुर्वीयाताम्, कुर्वीरन् ।

अनन्त्यस्येति किम् ? कुर्युः, कुर्याः ।

'सार्वधातुके' इत्येव—क्रियास्ताम्, क्रियासुः । कृषीष्ट, कृषीयास्ताम्, कृषीरन् ॥

## अतो येयः ॥ ८० ॥

अकारान्तादङ्गादुत्तरस्य 'या' इत्येतस्य सार्वधातुकस्य 'इय्' इत्ययमादेशो भवति । पचेत्, पचेताम्, पचेयुरिति । अत्र 'उस्यपदान्तात्' इति पररूपं बाधितम् ।

### पदमञ्जरी

सार्वधातुकेषु मध्ये यो लिङ् सार्वधातुकसंज्ञकस्तस्येत्यर्थः । *कुर्यादिति* । 'अत उत्सार्वधातुके' इत्युत्त्वम्, 'ये च' इत्युकारस्य लोपः । अत्र यासुट्सुटोः सकारस्य लोपः । *कुर्युरिति* । 'झेर्जुस्', यासुट्सकारलोपः, 'उस्यपदान्तात्' इति पररूपत्वम् । *कुर्वीतेति* । सीयुट्सुटोः सलोपः । *कुर्वीरन्निति* । 'झस्य रन्', अत्र सीयुट एव लोपः ॥

*अतो येयः* ॥ 'सार्वधातुके' इति प्रकृतमर्थात् षष्ठ्यन्तं सम्पद्यते, तदाह—*अकारान्तादङ्गादुत्तरस्य सार्वधातुकस्येति* । अवयवसम्बन्धे चैषा षष्ठी, सार्वधातुकस्यावयवस्य याशब्दस्येत्यर्थः । *इय् इत्ययमिति* । सूत्रे त्वकार उच्चारणार्थः । *पचेदिति* । इयादेशे कृते शबकारेण सहाद्गुणः, वलादिषु वलि लोपः ।

### न्यासः

लिङोऽसम्भवात् । कुर्यादिति । विध्यादिसूत्रेण लिङ्, यासुट, 'इतश्च' इतीकारलोपः, धातोर्गुणः, रपरत्वे 'अत उत् सार्वधातुके' इत्युत्त्वम्, 'ये च' इत्युकारलोपः । कुर्यातामिति । तसस्ताम् । कुर्युरिति । 'झेर्जुस्', 'उस्यपदान्तात्' इति पररूपत्वम् । कुर्वीतेति । उकारस्य यणादेशः । कुर्वीरन्निति । 'झस्य रन्' ।

कुर्युः, कुर्या इति । अत्रानन्त्यग्रहणाज्जुसः सिपश्च न भवति ।

क्रियास्ताम्, क्रियासुरिति । आशिषि लिङ्, 'रिङ्शयग्लिङ्क्षु' इति रिङादेशः । सार्वधातुकग्रहणादार्धधातुके न भवति । आर्धधातुकत्वं च 'लिङाशिषि' इत्यार्धधातुकसंज्ञाविधानात् । कृषीष्ट, कृषीष्ट इति । 'उश्च' इति कित्त्वम्, गुणाभावः ॥

अतो येयः ॥ सार्वधातुकं यत् प्रकृतं तदर्थादिह विभक्तिविपरिणामेन षष्ठ्यन्तं प्रतिपद्यते । अत एवाह—अकारान्तादङ्गादुत्तरस्य सार्वधातुकस्येति । पचेदिति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अत इति किम् ? चिनुयात् । सुनुयात् । तपरकरणं किम् ? यायात् ।

सार्वधातुक इत्येव—चिकीर्ष्यात् ।

ननु चातो लोपेनात्र भवितव्यम्, पचेदित्यत्रापि हि तर्हि 'अतो दीर्घो यञि' इति दीर्घत्वेन भवितव्यम्; तदनेनावश्यं विध्यन्तरं बाधितव्यम्, स यथैव दीर्घस्य बाधकः, एवमतो लोपस्यापि बाधकः स्यात् ? स्यादेतदेवम्, यदि दीर्घः सार्वधातुके विधीयते । अथ तु तिङि विधीयते, तदा येन नाप्राप्तिन्यायेन दीर्घस्यैव बाधकः स्यात्, न पुनरतो लोपस्य ।

पदमञ्जरी

यकारस्य च श्रवणम्—पचेयुः, पचेयमित्यादौ । *पचेयुरित्यत्रेत्यादि* । पररूपस्यावकाशः—चिनुयुः, सुनुयुः; इयादेशस्य तु पचेदित्यादि; पचेयुरित्यत्रोभयप्रसङ्गे परत्वादियादेशः । यदि पूर्वमेव पररूपं स्यात्, याशब्दाभावादियादेशो न स्यात् । *एवमतो लोपस्यापि बाधकः स्यादिति* । एतच्च 'मध्येऽपवादाः' इति न्यायमनाश्रित्योक्तम् । तदाश्रयणे त्वतो लोपस्यैव बाधकः स्यात् । दीर्घस्तु परत्वात्स्यादेव । *स्यादेतदेवमित्यादि* । दीर्घविधौ 'तुरुस्तुशम्यमः सार्वधातुके' इति प्रकृतम्, 'भूसुवोस्तिङि' इति च ।

न्यासः

इयादेशे कृतेऽकारेण सह 'आद् गुणः', 'लोपो व्योर्वलि' इति यकारलोपः । चिनुयादिति । 'स्वादिभ्यः श्नुः' । यायादिति । अदादित्वाच्छपो लुक् । चिकीर्ष्यादिति । सनन्तादाशिषि लिङ् ।

ननु चातो लोपेनात्र भवितव्यमिति । नार्थोऽनुवृत्तेन सार्वधातुकग्रहणेनेत्यभिप्रायः । पचेदित्यत्रापीत्यादि । यद्यपि पचेदितीदमस्योदाहरणमभिमतम्, तत्रापि 'अतो दीर्घो यञि' इति दीर्घत्वेन भवितव्यमिति, ततश्च सर्वविषयस्य विध्यन्तरेणावष्टब्धत्वादनवकाशोऽयमियादेशः । तस्मादवश्यमनेन विध्यन्तरं बाधितव्यम् । एवञ्च यथा दीर्घस्यायं बाधकः, तथातो लोपस्यापि स्यात् । तस्मात् सार्वधातुकग्रहणमनुवर्त्तयितव्यमिति भावः । स्यादेतदेवमित्यादि । यदि च दीर्घत्वम् 'तुरुस्तुशम्यमः सार्वधातुके' इत्यतः सार्वधातुकग्रहणमनुवर्त्त्य विधीयते, ततश्च स्यादेतदेवं यदुक्तवानसि; इयादेशस्यानवकाशत्वात् । अथ 'भूसुवोस्तिङि' इति तिङ्ग्रहणमनुवर्त्त्य विधीयते, तदा तिङ्मात्रभावि दीर्घत्वमिति लिङ् विधीयमान इयादेशे नाप्राप्ते तस्मिन्नयमारभ्यते, ततश्च येन नाप्राप्तिन्यायेन तस्यैव बाधको भवति, न त्वातो लोपस्य । इयोऽतो लोपे प्राप्ते चाप्राप्तेऽयमारभ्यते । आर्धधातुके हि प्राप्ते, सार्वधातुके त्वप्राप्ते ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



'येयः' इत्यविभक्तिको निर्देशः। 'यः' इति वा षष्ठीनिर्देशे यलोपस्यासिद्धत्वमनाश्रित्याद्गुणः कृतः; सौत्रत्वान्निर्देशस्येति।

केचिद् अत्र—अतो यासियः—इति सूत्रं पठन्ति। तेषां सकारान्तः स्थानी, षष्ठीसमासश्च॥

## आतो ङितः॥ ८१॥

आकारस्य ङिदवयवस्य आकारान्तादङ्गादुत्तरस्य सार्वधातुकस्य

### पदमञ्जरी

*येय इत्यविभक्तिको निर्देश इति*। 'येयः' इत्यस्मिन्समुदाये 'या' इत्यविभक्तिको निर्देश इत्यर्थः। *य इति वेति*। याशब्दात्षष्ठी, 'आतो धातोः' इत्याकारलोपः।

केचित्तु—'अतो यास्' इति सकारान्तानुकरणं पठन्ति॥

*आतो ङितः*॥ आकारमात्रस्य ङितोऽसम्भवाद् 'आतः', 'ङितः' इति व्यधिकरणे षष्ठ्यौ। ङितोऽवयवस्यात इत्यर्थः। उदाहरणेषु स्वरितत्वादात्मनेपदम्। ननु गाङ्कुटादिसूत्रे परत्र परशब्दप्रयोगादध्याह्रियमाणो वतिः सप्तमीसमर्थादध्याहर्तव्यः—ङितीव ङिद्वदिति, अन्यथा चुकुटिषतीत्यत्र सनो ङित्वादात्मनेपदप्रसङ्गादित्युक्तम्। 'सार्वधातुकमपित्' इत्यत्रापि तदेवानुवर्त्तते,

### न्यासः

अथ येय इति कोऽयं निर्देशः, अत्र हि 'या' इत्येष यः स्थानी तत्र षष्ठ्यां कृतायामतो या अस् इय इति स्थिते 'आतो लोपः' इति 'आतः', 'धातोः' इति योगविभागाद्वा आकारलोपे कृते 'ससजुषोः' इति षष्ठीसकारस्य रुत्वे कृते तस्य 'भोभगोअघोअपूर्वस्य योऽशि' इति यकारः। तस्यापि 'लोपः शाकल्यस्य' इति लोपे च 'य इयः' इति निर्देशेन भवितव्यमिति, न तु येय इति। न ह्यत्राद् गुणो भवितुमुत्सहते; 'पूर्वत्रासिद्धम्' इति यलोपस्यासिद्धत्वात्? इत्यत आह—येय इत्यविभक्तिकोऽयं निर्देश इति। येय इत्यस्मिन् स्थान्यादेशसमुदायेन 'या' इति योऽयं निर्देशः सोऽविभक्तिकः; 'सुपां सुलुक्' इति विभक्तेर्लुप्तत्वात्। अङ्गीकृत्य च सविभक्तिकत्वं निर्देशस्य परीहारान्तरमाह—य इति। वेत्यादि। कथं पुनर्यलोपस्यासिद्धत्वं शक्यमनाश्रयितुम्? इत्यत्राह—सौत्रोऽयं निर्देश इति। इतिकरणो हेतौ। यस्मात् 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति 'छन्दोवत् सूत्राणि भवन्ति' इति, तस्मात् सौत्रत्वादस्य निर्देशस्यासिद्धत्वमनाश्रित्य 'आद् गुणः' कृतः। इयादेशेऽकार उच्चारणार्थः॥

आतो ङितः॥ 'आतः', 'ङितः' इति व्यधिकरणे षष्ठ्यौ। आत इयादेशापेक्षया स्थाने षष्ठीति। ङित इति आकारापेक्षयावयवषष्ठी; ङितो ह्यकारमात्रस्यासम्भवात्। ङित इत्येषोऽवयवयोगे षष्ठी विज्ञायते—ङिदवयवस्येति। ङकार इद् यस्य स ङित्,

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



'इय्' इत्यमादेशो भवति । पचेते, पचेथे । पचेताम्, पचेथाम् । यजेते, यजेथे । यजेताम्, यजेथाम् ।

'सार्वधातुकमपित्' इत्यत्र न ङितीव ङिद्वदित्येवमङ्गीक्रियते, अपि तु ङित इव ङिद्वदिति । पूर्वसूत्रे एव उच्चुकुटिषतीति प्रसिद्धये तथाङ्गीकरणम् । यदि गाङ्कुटादिसूत्रे ङित इव ङिद्वद्भवतीत्येवमङ्गीक्रियते, तदा 'अनुदात्तङित आत्मनेपदम्' इति आत्मनेपदं प्राप्नोतीति ।

आत इति किम् ? पचन्ति, यजन्ति । पचन्ते, यजन्ते । ङित इति किम् ? पचावहै, पचामहै ।

अत इत्येव—चिन्वाते, सुन्वाते ।

पदमञ्जरी

ततश्च पूर्वस्य कार्यं प्रत्येव सार्वधातुकस्य ङित्त्वम्, न स्वकार्यं प्रतीत्ययुक्तान्युदाहरणानि; लङ्लृङोस्तु युक्तमुदाहर्तुम्—अपचेताम्, अकरिष्येतामिति; अस्ति ह्यत्रापि स्थानिवद्भावेन ङित्त्वम् ? अत आह—*सार्वधातुकमपिदित्यत्रेत्यादि* ।

न्यासः

तस्यावयवो ङिदवयवः । **पचेते, पचेथे** इति । लट्, स्वरितेत्त्वादात्मनेपदम्, आतामाथाम्, 'सार्वधातुकमपित्' इति ङित्त्वम् । **पचेताम्, पचेथामिति** । लोट्, टेरेत्त्वे कृते 'आमेतः' इत्याम् ।

ननु च ङिदवयवोऽत्राकारो न भवति, यस्माद् गाङ्कुटादिसूत्रे ङितीव ङिद्वदित्येवमर्थोऽङ्गीक्रियते, तथा 'सार्वधातुकमपित्' इत्यत्राप्ययमर्थः; तथा ह्यस्मिन्नपि योगे तदेव ङिद्ग्रहणमनुवर्त्तते, तस्मिंश्चार्थेऽङ्गीक्रियमाणे ङिति यत् कार्यं तदपि हि सार्वधातुके परतः पूर्वस्य लभ्यते, न तु तस्यैवापित्सार्वधातुकस्य ङित्त्वम् ? इत्याह—सार्वधातुकमपिदित्यत्रेत्यादि । पूर्वसूत्र एवेति । गाङ्कुटादिसूत्रे यद्येवमङ्गीक्रियते—गाङ्कुटादिभ्यः परो योऽञ्णित्प्रत्ययोऽसौ ङिद्वद्भवतीति, तदा कुटादिभ्यः परस्य सनो ङित्त्वं भवति, ङित्त्वे सति 'अनुदात्तङितः' इत्यादिनात्मनेपदं स्यात्, ततश्चोच्चुकुटिषतीति न सिध्येत् । तस्मादेतत्सिध्यर्थं ङितीव ङिद्वदित्यङ्गीक्रियते । 'सार्वधातुकमपित्' इत्यत्र तु तत् सार्वधातुकं ङिद् भवतीत्येषोऽर्थोऽङ्गीक्रियते । तस्माद् युक्तमेवाकारस्य ङिदवयवत्वम् । **पचन्ते, यजन्त** इति । भवत्यङिदवयवोऽन्तादेशस्याकारः, तथाप्यात इति वचनान्न भवति । **पचावहै, पचामहै** इति । लोट्, वहिमहिङौ । 'आडुत्तमस्य पिच्च' इत्याट्, उत्तमश्च पिद्भवतीति । अत्र पित्त्वान् ङित्त्वं न भवतीति आतो ङिदवयवाकारो न भवति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तपरकरणं किम् ? मिमाते । मिमाथे ॥

आने मुक् ॥ ८२ ॥

आने परतोऽङ्गस्यातो मुगागमो भवति । पचमानः, यजमानः । अकारमात्रभक्तोऽयं मुक् अदुपदेशग्रहणेन गृह्यते इति 'अदुपदे-

पदमञ्जरी

*मिमाते, मिमाथे इति* । असति तपरकरणे 'श्नाभ्यस्तयोरातः' इति लोपात्पर-त्वादयमेव विधिः स्यात् ॥

*आने मुक्* ॥ अत्र 'आने' इति सप्तम्यचरितार्था पूर्वत्र कृतार्थायाः 'अतः' इति पञ्चम्याः षष्ठीं प्रकल्पयति 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति, तत्र विशेषण-विशेष्यभावे कामचारादङ्गेनाद्विशेष्यते, न त्वताऽङ्गमित्यभिप्रायेणाह—*अकारमात्र-भक्तोऽयमिति* । अङ्गस्यावयवो योऽकारस्तस्य मुगित्यर्थः । किमेवं सति भवति ? इत्याह—*अदुपदेशग्रहणेनेति* । उपदेशे अत् अदुपदेशः, यदि त्वकारान्ताङ्गभक्तः

न्यासः

मिमाते, मिमाथे इति । 'माङ् माने', जुहोत्यादित्वाच्छपः श्लुः । 'श्लौ' इति द्विर्वचनम्, 'भृञामित्' इत्यभ्यासस्येत्वम्, 'श्नाभ्यस्तयोरातः' इत्याकारलोपः ॥

आने मुक् ॥ अङ्गस्यात इति व्यधिकरणे षष्ठ्यौ—अङ्गस्य योऽत् तस्य मुगागमो भवतीति । तदिहाद्ग्रहणं तर्हि क्रियताम् ? न कर्त्तव्यम्; 'अतो येयः' इत्यतोऽत इत्यनुवर्त्तिष्यते । ननु च पञ्चमीनिर्द्दिष्टं तत्र, षष्ठीनिर्द्दिष्टेन चेहार्थः ? नैतदस्ति; अत इत्येषा तु पञ्चमी तत्रेयादेशे चरितार्था, 'आने इत्येषा तु सप्तम्यकृतार्था । तस्मा-दान इत्येषा सप्तम्यत इत्यस्याः पञ्चम्याः षष्ठीत्वं परिकल्पयिष्यति, 'तस्मिन्निर्द्दिष्टे पूर्व-स्य' इति नियमात् । ननु चाकारो वर्णो मकारोऽपि वर्ण एव, मुगयं त्वन्तलिङ्गः, अन्तश्चावयवः, न च वर्णो वर्णस्यावयवी युज्यते, तेनानारब्धत्वात्, तस्मादयुक्तमुक्तम्—अतो मुगागमो भवतीति ? नैष दोषः; सर्वत्रैव हि यस्यागमो विधीयते, यश्चागमो विधीयते तत्समुदायापेक्षयाऽऽदित्वमन्तत्वं वा विधीयते । तस्मादतो मुगागमो भवती-त्यस्यार्थोऽयं विवक्षितः—अकारादिरयं समुदायो मकारान्तश्च भवतीति । पचमान इति । लट्, तस्य शानच् ।

आने परतोऽङ्गस्याऽतो मुगागमो भवतीत्युक्ते समानाधिकरणे एते षष्ठ्याविति मन्यमानोऽकारान्तस्य आने परतो मुगागमो भवतीतीदं सूत्रार्थं गृहीत्वा य एवं देशयेद्—यद्यकारान्तमङ्गमागमि, पचमान इत्यत्र 'अदुपदेशाल्लसार्वधातुकमनुदात्तम्' इत्यनुदा-त्तत्वं न स्यात्; अकारस्य मुका व्यवहितत्वात् । अकारो य उपदेश इत्येवं हि तत्र व्यवस्थितम्, न त्वकारान्तोऽयमुपदेश इति । नच शक्यते वक्तुम्—अङ्गभक्तोऽयं मुक्, अतो नास्ति व्यवधानमिति; अङ्गभक्तो ह्ययमङ्गमेव न व्यवदध्यात्, अकारं तु व्यवदधात्येव । अवयवो हि समुदायस्य व्यवधायको न भवति । अवयवान्तरस्य

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



शात्' इति लसार्वधातुकानुदात्तत्वं भवति। यद्येवम्, 'आतो ङितः' इत्ययमपि विधिः प्राप्नोति ? तपरनिर्देशान्न भविष्यति। मुकि सत्यध्यर्धमात्रो भवति। लसार्वधातुकानुदात्तत्वमपि तर्हि न प्राप्नोति ? नैष दोषः; उपदेशग्रहणं तत्र क्रियते। तेन उपदेशादूर्ध्वं सत्यपि

**पदमञ्जरी**

स्यात्, ततस्तदेवाङ्गं न व्यवदध्यात्, तदवयवं त्वकारं व्यवदधात्येवेति स्वरो न स्यात्। न च स्वरविधौ व्यञ्जनमविद्यमानवत्; किं कारणम्? हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवदिति परिभाषाया *भाष्यकारेण* शिक्षितत्वात्। अन्यथाऽग्निचिद्वानित्यादौ 'ह्रस्वनुड्भ्यां मतुप्' इति स्वरप्रसङ्गात्। यदि पुनरयमभक्तो मकारो विकरणवन्मध्ये क्रियेत, अभक्ते मुकि स्वरो न स्यादित्येव। यदि पुनरयं परादिः क्रियेत–आनस्य मुडिति, परादित्वे दीर्घत्वप्रसङ्गः–पचमान इति 'अतो दीर्घो यञि' इति दीर्घत्वं प्राप्नोति? पाक्षिक एष दोषः। कतरस्मिन्पक्षे? यदि सार्वधातुक इत्येव तत्। अथ ञीत्येव तत्तदा न दोषः। तदयं भक्तस्तत्रापि पूर्वान्तः, तत्राप्यकारस्य मुगिति स्थितम्। *यद्येवमिति*। यद्यकारमात्रभक्तत्वात्तद्ग्रहणेन गृह्यत इत्यर्थः। *अध्यर्द्धमात्र इति*। अर्धमधिकं यस्याः सा अध्यर्धा, अध्यर्धा मात्रा यस्यासावध्यर्धमात्रः। *लसार्वधातुकानुदात्तत्वमपि तर्हि न प्राप्नोतीति*। यद्विधावपि तपरनिर्देशात्। तत्राह–*उपदेशग्रहणमिह क्रियत इति*। *तथा चेति*। यदा द्विमात्रत्वेऽपि भवति, तदा का शङ्काऽध्यर्धमात्रत्वे इति भावः॥

**न्यासः**

तु व्यवधायको भवत्येवेत्यत आह–**अकारमात्रभक्तो ह्ययमित्यादि**। मात्रशब्दोऽयमङ्गभक्तत्वव्यवच्छेदाय। अङ्गस्यात्राकारविशेषणम्। अकार एवागमी, नाङ्गम्। तस्मात् तद्भक्तत्वात् तद्ग्रहणेनैव मुग् गृह्यत इति व्यवधानाभावात् लसार्वधातुकमनुदात्तं भवति। ननु चाकारान्तभक्तेऽपि मुकि भवितव्यमेव 'लसार्वधातुकमनुदात्तमह्न्विङोः' इत्यनुदात्तत्वेन, 'स्वरविधौ व्यञ्जनमविद्यमानवत्' इति मुकोऽविद्यमानवत्त्वाद् व्यवधानाभावात्? एवं मन्यते–नैषा परिभाषा भाष्यकारस्य सम्मता। तथा हि—तेनेमां परिभाषां प्रत्याख्यायेयमन्या परिभाषा गृहीता–'हलः स्वरप्राप्तौ व्यञ्जनमविद्यमानवत्' इति। न चात्र हलः स्वरप्राप्तिरस्ति, किं तर्हि? अचः। **यद्येवमित्यादि**। यद्यकारभक्तोऽयं मुक् तद्ग्रहणेन गृह्यत इत्येवं सत्यव्यवधायकत्वादेव तस्य पचमान इत्यत्राकारादनन्तरस्यान इति, तस्य 'आतो ङितः' इतीयादेशः प्राप्नोतीत्यत आह—**तपरकरणनिर्देशान्न भवतीति**। अकारो ह्यत्र मात्राकालस्तपरो निर्दिष्टो मुकि सत्यध्यर्द्धमात्रो भवति। अतः कालभेदान्न भविष्यति। अधिकमर्द्धं यस्याः साध्यर्द्धा, अध्यर्द्धा मात्रा यस्य सोऽध्यर्द्धमात्रः। लसार्वधातुकमनुदात्तमपि

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



कालभेदे भवितव्यम् । तथा च—पचावः, पचाम इत्यत्रापि भवति ॥

ईदासः ॥ ८३ ॥

आस उत्तरस्यानशब्दस्य ईकारादेशो भवति । आसीनो यजते । अत्र पञ्चम्याः परस्य षष्ठी कल्प्यते ॥

अष्टन आ विभक्तौ ॥ ८४ ॥

अष्टनो विभक्तौ परत आकारादेशो भवति । अष्टाभिः । अष्टाभ्यः । अष्टानाम् । अष्टासु ।

विभक्ताविति किम् ? अष्टत्वम् । अष्टता ।

'आ' इति व्यक्तिनिर्देशोऽयम्, आकृतिनिर्देशे तु नकारस्थानेऽनुनासिकाकारः स्यात् । विकल्पेनायमाकारो भवति, एतज्ज्ञापितम्—

पदमञ्जरी

ईदासः ॥ 'आसः' इति पञ्चम्यचरितार्था पूर्वत्र कृतार्थायाः 'आने' इति सप्तम्याः षष्ठीं प्रकल्पयति ॥

*अष्टन आ विभक्तौ* ॥ सौत्रत्वान्निर्देशस्य अल्लोपो न कृतः ।

*व्यक्तिनिर्देशोऽयमिति* । यथाश्रुतनिरनुनासिकाकारव्यक्तिर्निर्दिश्यत इत्यर्थः । जातिनिर्देशस्तु दुष्ट इत्याह—*आकृतिनिर्देशे त्विति* । आकृतिर्जातिः, न संस्था-

न्यासः

तर्हि न प्राप्नोतीति तद्द्विधावपि तपरनिर्देशात् । उपदेशग्रहणमित्यादि । उपदेशग्रहणं तत्र क्रियते प्रागवस्थोपलक्षणार्थम् । तेन य उपदेशावस्थायां मात्राकालस्तस्य यद्यप्युत्तरकालं मुकि कृते कालभेदोऽस्ति, तथाप्युपदेशावस्थायां मात्राकालत्वाद् भवत्येवात्रानुदात्तत्वम् । तथा चेत्यादि । यतस्तत्रोपदेशादूर्ध्वं सत्यपि कालभेदेऽनुदात्तत्वेन भवितव्यम्, एवञ्च कृत्वा यत्रापि 'अतो दीर्घो यञि' इति दीर्घत्वे कृते कालभेदोऽस्ति—पचाव इत्यादौ, तत्रापि भवति ॥

ईदासः ॥ आस इति पञ्चम्यकृतार्था 'आने' इति पूर्वत्र कृतार्थायाः सप्तम्याः षष्ठीत्वं प्रकल्पयिष्यति; 'तस्मादित्युत्तरस्य' इति वचनात् । तेनानस्यैवायमादेशो विधीयते, इत्याह—आस उत्तरस्यानशब्दस्येति । आसीन इति । 'आस उपवेशने' । अनुदात्तत्वादात्मनेपदम्, 'आदेः परस्य' इत्याकारस्येकारः, अदादित्वाच्छपो लुक् । तपरकरणं मुखसुखार्थम् ॥

अष्टन आ विभक्तौ ॥ आ इति व्यक्तिनिर्देशोऽयमिति । शुद्धाया निरनुनासिकाया आकारस्य व्यक्तेरेव निर्देश इत्यर्थः । अथाकृतिनिर्देशे को दोषः स्यात्, यतस्तत्परीहारार्थो व्यक्तिनिर्देशोऽयमाश्रितः ? इत्यत आह—आकृतिनिर्देशे हीत्यादि ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



'अष्टनो दीर्घात्' इति दीर्घग्रहणात्, 'अष्टाभ्य औश्' इति च कृतात्वस्य निर्देशात्। तेनाष्टभिः, अष्टभ्य इत्यपि भवति।

तदन्तविधिश्चात्रेष्यते—प्रिया अष्टौ येषां ते प्रियाष्टानः। प्रियाष्टौ॥

## रायो हलि॥ ८५॥

### पदमञ्जरी

नम्। जातिनिर्देशे हि शुद्धाया जातेरादेष्टुमशक्यत्वात्तदाधारभूतानां व्यक्तीनां विधानम्। तत्र यद्यपि दीर्घोच्चारणसामर्थ्यान्न ह्रस्वप्लुतव्यक्तीनां प्रसङ्गः, दीर्घव्यक्तयस्तु सर्वाः प्रसक्ताः, तत्रान्तर्यतोऽनुनासिकव्यक्तिरेव स्यात्, तस्याः पूर्वेण सह सवर्णदीर्घोऽप्यनुनासिक एव स्यात्। *विकल्पेन चायमित्यादि*। यथा च दीर्घग्रहणं कृतात्वनिर्देशश्चास्मिन्नर्थे लिङ्गं तथा तत्रैव व्याख्यातम्। *तदन्तविधिश्चात्रेष्यत इति*। 'अङ्गाधिकारे तस्य तदुत्तरपदस्य च' इति वचनात्। एकवचननिर्देशात्स्वरूपस्य ग्रहणं नार्थस्य, तेनोपसर्जनेऽप्यष्टनि भवति, तत्रापि विकल्पितत्वात्प्रियाष्टा, प्रियाष्टानौ, प्रियाष्टान इत्यपि भवति। तत्रापि भसंज्ञाविषये आत्वपक्षे 'आतो धातोः' इत्यकारलोपमिच्छन्ति—प्रियाष्टः पश्येत्यादि, आत्वाभावपक्षे स्वल्लोपे ष्टुत्वम्—प्रियाष्ट्न इत्यादि भवति॥

### न्यासः

जातिरिहाकृतिर्विवक्षिता, न तु संस्थानम्। जातिनिर्देशे सति शुद्धाया जातेर्निर्देष्टुमशक्यत्वात् तदाधारभूतासु व्यक्तिषु कार्यं विज्ञायते। तत्र यदीह जातिनिर्देश आश्रीयेत, तदा सर्वास्वाकारव्यक्तिषु जात्याधारत्वमुपगतासु 'अलोऽन्त्यस्य' इति नकारस्य विधीयमान आकार आन्तरतम्यादनुनासिकस्य स्थानेऽनुनासिक एव स्यात्। व्यक्तिनिर्देशे त्वेष दोषो न भवति; शुद्धाया आकारव्यक्तेरुच्चारणात्, अनण्त्वादतपरत्वाच्च। यद्यष्टन आकारो विधीयते, तदाष्टभिः, अष्टभ्य इत्यादि न सिध्यति, न ह्यत्र विकल्पाभिधायि वचनमस्ति, नापि प्रकृतम्? इत्यत आह—विकल्पेनेत्यादि। 'अष्टनो दीर्घात्' इत्यनेनाष्टनो दीर्घादसर्वनामस्थानविभक्तेरुदात्तत्वं विधीयते। यदि च नित्यमात्त्वं स्याद्, दीर्घादिति विशेषणं निरर्थकं स्यात्। 'अष्टाभ्य औश्' इत्यत्र च कृतात्त्वस्य निर्देशोऽनर्थकः स्यात्। व्यवच्छेद्याभावादष्टन इत्येवं ब्रूयात्। तस्माद् दीर्घग्रहणेन कृतात्त्वनिर्देशेन विकल्पेनेदमात्त्वं भवतीति ज्ञापितम्। तेनाष्टभिरित्याद्यपि पक्षे भवतीति। तदन्तविधिश्चात्रेष्यत इति। कथं स लभ्यते? इहाङ्गस्येति प्रकृतम्, अष्टञ्शब्दश्चेह स्वरूपप्रधान उपात्तः, एकवचननिर्देशात्। अन्यथा हि बह्वर्थत्वादष्टानामित्येवं ब्रूयात्। तस्मात् स्वरूपप्रधानोऽयम्। तत्राङ्गे प्रकृतेऽनेन विशेष्यमाणे तदन्तविधिर्लभ्यते। विशेषणेन हि तदन्तविधिर्भवतीत्युक्तम्। प्रियाष्टेति। 'सर्वनामस्थाने' इत्यादिना दीर्घः॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



'रै' इत्येतस्य हलादौ विभक्तौ परत आकारादेशो भवति । राभ्याम् । राभिः ।

हलीति किम् ? रायौ, रायः । विभक्ताविति किम् ? रैत्वम्, रैता ।

'मृजेर्वृद्धिः' इत्यतः प्राग्विभक्त्यधिकारः ॥

**युस्मदस्मदोरनादेशे ॥ ८६ ॥**

युष्यदस्मदित्येतयोरनादेशो विभक्तौ परत आकारादेशो भवति । युष्माभिः । अस्माभिः । युष्मासु । अस्मासु ।

अनादेश इति किम् ? युष्मत् । अस्मत् ।

'हलि' इत्यधिकारादप्यत्र न स्यात्, उत्तरत्र त्वनादेशग्रहणेन प्रयोजनम्—'योऽचि' इति, तदिहैव क्रियते ॥

**द्वितीयायां च ॥ ८७ ॥**

द्वितीयायां च परतो युष्मदस्मदोराकारादेशो भवति । त्वाम्, माम् । युवाम्, आवाम् । युष्मान्, अस्मान् । आदेशार्थं वचनम् ॥

**पदमञ्जरी**

*रायो हलि ॥ मृजेर्वृद्धिरित्यतः प्राग्विभक्त्यधिकार इति* । पूर्वसूत्रान्ते ग्रन्थोऽयं पठितव्यः ।

*युष्मदस्मदोरनादेशे ॥ युष्मदस्मदिति* । 'पञ्चम्यां अत्' इति भ्यसोऽद्भावः । *हलीत्यधिकारादप्यत्र न स्यादिति* । न चादेशो हलादिरस्ति, 'भ्यसोभ्यम्' इत्ययं तु अभ्यमादेशः । *उत्तरत्रेति* । 'योऽचि' इति यत्वमादेशे मा भूत् त्वमहमित्यादौ 'शेषे लोपः' इति शेषव्यवस्थार्थं च । *तदिहैव क्रियत इति* । लाघवे विशेषाभावात् ॥

*द्वितीयायां च* ॥ उदाहरणेषु 'ङे प्रथमयोरम्' इति विभक्तेरम्भावः ॥

**न्यासः**

रायो हलि ॥ युष्मदस्मदोरनादेशे ॥ युष्मत्, अस्मदिति । 'पञ्चम्या अत्' इति पञ्चमीभ्यसोऽदादेशः, 'शेषे लोपः' इत्यन्तलोपे कृते 'अतो गुणे' पररूपत्वम् ।

यदि च हलीत्यधिकारादत्राप्यात्वं न स्यात्, तत् किमर्थमनादेशग्रहणम् ? इत्याह—उत्तरत्र स्वित्यादि । उत्तरत्र 'योऽचि' इति सूत्रेऽनादेशस्य प्रयोजनमिति । यद्येवं तत्रैव कर्त्तव्यम्, इह किमर्थं क्रियते ? विस्पष्टार्थमित्यभिप्रायः ॥

द्वितीयायां च ॥ त्वाम्, मामिति । 'त्वमावेकवचने' इति त्वमादेशौ । युवाम्, आवामिति । 'युवावौ द्विवचने' इति युवावादेशौ । सर्वत्र 'ङे प्रथमयोरम्' इत्यम्भावे विभक्तेः कृतेऽमि पूर्वत्वम् ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## प्रथमायाश्च द्विवचने भाषायाम् ॥ ८८ ॥

प्रथमायाश्च द्विवचने परतो भाषायां विषये युष्मदस्मदोराकारादेशो भवति । युवाम्, आवाम् ।

प्रथमाया इति किम् ? युवयोः, आवयोः । द्विवचन इति किम् ? त्वम्, अहम् । यूयम्, वयम् ।

भाषायामिति किम् ? युवं वस्त्राणि पीवसा वसाथे ॥

## योऽचि ॥ ८९ ॥

अजादौ विभक्तावनादेशे युष्मदस्मदोर्यकारादेशो भवति । त्वया, मया । त्वयि, मयि । युवयोः, आवयोः ।

अचीति किम् ? युवाभ्याम्, आवाभ्याम् ।

'युष्मदस्मदोरनादेशे' इत्यत्र यदि 'हलि' इत्यनुवर्त्तते, शक्यमकर्तुम् 'अचि' इत्येतत् ? तत्क्रियते विस्पष्टार्थम् ।

### पदमञ्जरी

*प्रथमायाश्च द्विवचने भाषायाम् ॥ युवयोरिति* । ननु च 'योऽचि' इति यत्वमत्र बाधकं भविष्यति ? प्रथमाद्विवचनेऽपि तर्हि शेषेलोपो बाधकः स्यात । अथ तस्य वचनाद्बाधः ? यत्वस्यापि बाधः स्यात् । पुरस्तादपवादन्यायेन वा यत्वस्यैव बाधः स्यात् ॥

*योऽचि ॥ शक्यमकर्तुमचीत्येतदिति* । कथम् ? अनादिष्टायां विभक्तौ विधी-

### न्यासः

प्रथमायाश्च द्विवचने भाषायाम् ॥ इदमप्यादेशार्थं वचनम् । युवयोः, आवयोरिति । ननु च 'योऽचि' इति यत्वमत्र बाधकं भविष्यति ? प्रथमाद्विवचनेऽपि तर्हि शेषेलोपो बाधकः स्यात् । तत्र यथा वचनसामर्थ्याच्छेषेलोपोऽनेन बाध्यते, तथा यत्वमपि बाध्येत । 'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्' इति यत्वमपि बाध्येत । तस्मात् 'प्रथमायाः' इति वक्तव्यम् । त्वम्, अहमिति । 'त्वाहौ सौ' इति त्वाहावादेशौ । 'औ' इति वक्तव्ये प्रथमाया द्विवचनं वैचित्र्यार्थम् ॥

योऽचि ॥ युष्मदस्मदोरनादेश इत्यत्रेत्यादि । 'युष्मदस्मदोरनादेशे' इत्यत्र यदि पूर्वसूत्राद् हल्ग्रहणमनुवर्त्तते, तदाऽविशेषेण विधीयमानं यत्वमुत्सर्गो ज्ञाप्यते । आत्वं तु विभक्तिविशेषे हलादौ विधीयमानमस्याप्यपवादः । एवं चाप्यन्तरेणाप्यज्ग्रहणम्, यकारोऽजादावेवावतिष्ठते, तस्मादचीत्येतच्छक्यमकर्तुम् ? तत् क्रियते विस्पष्टार्थम् ।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


अनादेश इत्येव—त्वद् गच्छति । मद् गच्छति ॥

**शेषे लोपः ॥ ९० ॥**

शेषे विभक्तौ युष्मदस्मदोर्लोपो भवति । कश्च शेषः ? यत्राकारो यकारश्च न विहितः ।

पञ्चम्याश्च चतुर्थ्याश्च षष्ठीप्रथमयोरपि ।
यान्यद्विवचनान्यत्र तेषु[1] लोपो विधीयते ॥

त्वम्, अहम् । यूयम्, वयम् । तुभ्यम्, मह्यम् । युष्मभ्यम्, अस्मभ्यम् । त्वत्, मत् । युष्मत्, अस्मत् । तव, मम । युष्माकम्, अस्माकम् ।

शेषग्रहणं विस्पष्टार्थम् । शेषे लोपे कृते स्त्रियां टाप् कस्मान्न

**पदमञ्जरी**

यमानं यत्वमुत्सर्गः, तत्रैव हलादावात्वमपवादः । *त्वत्, मदिति* । 'एकवचनस्य च' इति ङसेरदादेशः ॥

*शेषे लोपः* ॥ उपयुक्तादन्यः शेषः । तस्यैव संग्रहश्लोकः—*पञ्चम्याश्चेत्यादि* । पञ्चम्यादीनां सम्बन्धीनि यान्यद्विवचनानि—अयं तावच्छेषः, तत्र शेषे लोपो विधीयत इति । 'अद्विवचनानि' इत्येतद्भाषापेक्षं द्रष्टव्यम् । छन्दसि तु—युवं वस्त्राणीति द्विवचनमपि शेष एव ।

*शेषग्रहणं विस्पष्टार्थमिति* । कथम् ? विभक्तिमात्रे लोपः, तस्यानादिष्टायां विभक्तौ यत्वमपवादः । अस्यापि हलादावात्वमपवाद इत्यसङ्करेणात्त्व-य-लोपाः सिध्यन्ति । अनादेशग्रहणं तु क्रियमाणेऽजग्रहणे यत्वलोपयोर्विषयविभागार्थं

**न्यासः**

त्वद् गच्छति, मद् गच्छतीति । 'एकवचनस्य च' इति ङसेरदादेशः ॥

शेषे लोपः ॥ यान्यद्विवचनानीति । एकवचनबहुवचनानीत्यर्थः । अत्रेति । पञ्चम्यादिषु विभक्तिषु । तेषु लोपो विधीयत इति । तेषामेव शेषत्वात् । तुभ्यम्, मह्यमिति । 'तुभ्यमह्यौ ङयि' इति तुभ्यमह्यावादेशौ भवतः । युष्मभ्यम्, अस्मभ्यमिति । 'भ्यसो भ्यम्' इति भ्यमादेशः । तव, ममेति । 'तवममौ ङसि' इति तवममादेशौ । युष्माकम्, अस्माकमिति । 'साम आकम्' इति ।

अथ शेषग्रहणं किमर्थम्, न 'लोपः' इत्येवोच्येत, एवमुच्यमाने सत्यविशेषेण लोपः स्यादित्येतच्च नाशङ्कनीयम्, अविशेषेण हि लोपो विधीयमान उत्सर्गो भविष्यति, तस्यानादेशे विभक्तिविशेषे यकाराकारापवादौ, एवञ्चान्तरेणापि शेषग्रहणं शेष एव लोपोऽवस्थास्येत ? इत्यत आह—शेषग्रहणं विस्पष्टार्थमिति । शेषे लोपे कृते स्त्रियां

1. 'शेषे'—इति बहुषु पुस्तकेषु पाठः ।( प्र० सं० स० )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



भवति—त्वं ब्राह्मणी, अहं ब्राह्मणी ? 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' । 'अलिङ्गे वा युष्मदस्मदी' इति ।

केचित्तु शेषेलोपं टिलोपमिच्छन्ति । कथम् ? वक्ष्यमाणादेशापेक्षः शेषः, ते चादेशा मपर्यन्तस्य विधीयन्ते, तेन मपर्यन्ताद् योऽन्यः स शेष इति, तत्रायं लोप इति टिलोपो भवति ॥

पदमञ्जरी

कर्त्तव्यमेव । *सन्निपातलक्षण इति* । विभक्तिसन्निपातकृतं युष्मदस्मदोरकारान्तत्वम् । तद्यदि टापो निमित्तं स्यात्, तत्सन्निपातं विहन्यात् । एतच्च त्यदादिशब्दवत्स्त्रीलिङ्गत्वमभ्युपेत्योक्तम्, इदानीं च लिङ्गमेव नास्ति ? इत्याह—*अलिङ्गे वेति* ।

*केचित्त्विति* । टाब्निवृत्त्यर्थमेव त एवमिच्छन्ति । *कथमिति* । यत्राकारो यकारश्च न विहितः स शेषः, तत्र विधीयमानो लोपः 'अलोऽन्त्यस्य' इत्यन्तस्यैव युक्त इति प्रश्नः । अनन्तरोक्तं शेषग्रहणस्य वैयर्थ्यं हृदि कृत्वाऽऽह—*वक्ष्यमाणेति* । आदेशा वक्ष्यमाणा यस्य स वक्ष्यमाणादेशः । कः पुनरसौ ? इत्याह—*ते चेति* ।

*मपर्यन्ताद्योऽन्यः स शेष इति* । स च टिरेव । *तत्रायं लोप इति* स्थानिनोऽधिकरणत्वविवक्षया सप्तमी । किमर्थं पुनर्लोप इत्युच्यते, न त्यदाद्य-

न्यासः

टाप् कस्मान्न भवतीति । अन्त्यलोपे कृते सत्यदन्तत्वाद् 'अजाद्यतष्टाप्' इति टापा भवितव्यमिति भावः । सन्निपात इत्यादि । विभक्त्यानन्तर्यं हि सति युष्मदस्मदी अकारान्ते समुपजाते । तत्र यदि टापमुत्पादयेयाताम्, तदा विभक्तेरानन्तर्यं ताभ्यां विहतं स्यात् । न च यो यत्सन्निपातलक्षणः स तद्विघातस्य निमित्तं भवतीति न भवति टाप् । यद्येवम्, त्यदादिभ्योऽपि न स्यात् ? नैष दोषः; यदयम् 'न यासयोः' इति निर्देशं करोति, तज्ज्ञापयति—भवति त्यदादिभ्यष्टाबिति । अयञ्च स्त्रीलिङ्गत्वं युष्मदस्मदोरभ्युपेत्य परीहार उक्तः । इदानीं स्त्रीलिङ्गाभावादेव टाब्न भवतीति दर्शयितुमाह—अलिङ्गे इत्यादि ।

केचित्तु शेषेलोपं टिलोपमिच्छन्तीति । त्वं ब्राह्मणी, अहं ब्राह्मणी—इत्यत्र टाब्मा भूदित्येवमर्थम् । युष्मभ्यम्, अस्मभ्यमित्यत्र भ्यमादेशे कृते 'बहुवचने झल्येत्' इत्येत्वं मा भूदित्येवमर्थञ्च । कथमिति ? एवं मन्यते—यत्र विभक्तावाकारो यकारश्च न विहितः स शेषः, तत्र शेषेलोप उच्यमानष्टिलोपो न लभ्यते । 'अलोऽन्त्यस्य' इति परिभाषयाऽन्त्यस्यैव प्राप्नोतीति वक्ष्यमाणादेशापेक्षया शेष इत्यस्यार्थं ते चेत्यादिना स्पष्टीकरोति । मपर्यन्ताद् योऽन्यः स शेष इति । स पुनष्टिरेव । अत्रायं शेषेलोपष्टिलोपो भवतीति लोपं प्रति शेषस्याधिकरणविवक्षायां सप्तमी । किमर्थं पुनर्लोप इत्युच्यते, यावता त्यदाद्यत्वेनैव सिद्धम् ? न सिध्यति; अत्यदादित्वात् । त्यदादित्वं हि

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


## मपर्यन्तस्य ॥ ९१ ॥

'मपर्यन्तस्य' इत्ययमधिकारः । यदित ऊर्ध्वमनुक्रमिष्यामः 'मपर्यन्तस्य' इत्येवं तद्वेदितव्यम् । वक्ष्यति—"'युवावौ द्विवचने' । युवाम्, आवाम् । मपर्यन्तस्येति किम् ? युवकामावकामिति साकच्कस्य मा भूत्" । "'त्वमावेकवचने' । त्वया । मया । मपर्यन्तस्येति किम् ? साकच्कस्य सर्वस्य मा भूत् । तथा च सति त्वमयोरकारस्य 'योऽचि' इति यकारे कृतेऽनिष्टं रूपं स्यात्" ।

**पदमञ्जरी**

त्वेनैव सिद्धम् ? न सिध्यति; 'द्विपर्यन्तास्त्यदादयः' इति वचनात् । यदा चोपसर्जने युष्मदस्मदी, तदा त्यदाद्यत्वं न सिध्यति । टिलोपपक्षे तु सुतरामारम्भणीयम् ॥

*मपर्यन्तस्य* ॥ 'मपर्यन्तस्य' इत्यवयवस्य स्थानित्वेन निर्देशाद्युष्मदस्मदोरित्यवयवषष्ठी विज्ञायते—मः पर्यन्तोऽवधिर्यस्य स मपर्यन्तः । यद्यपि द्वयोर्द्वौ मपर्यन्तौ, तथाप्यभेदविवक्षयैकवचनम् ।

*मपर्यन्तस्येति किमिति* । समुदाययोरप्यादेशे आदेशानामप्यदन्तत्वाद्दोषाभाव इति प्रश्नः । *साकच्कस्य मा भूदिति* । तन्मध्यपतितस्य तद्ग्रहणेन ग्रहणात्प्रसङ्गः । *सर्वस्य मा भूदिति* । साकच्कस्य मा भूदिति तु नोक्तम्; यस्मादकज्विधावुक्तम्—'त्वया, मया, त्वयि, मयि इत्यत्र सुबन्तस्य प्राक्टेरकच्' इति । *अनिष्टं रूपं स्यादिति* । त्व्या, म्येत्यनिष्टं रूपम् ।

अथ परिग्रहणं किमर्थम्, मान्तस्येत्येवोच्येत, युष्मदस्मदोर्यो मान्तो भाग-

**न्यासः**

'द्विपर्यन्तास्त्यदादयः' इति । तत्र चैतदेव शेषेलोपवचनं ज्ञापकम् । तेन भवच्छब्दस्य त्यदाद्यत्वं न भवति—भवानिति ॥

मपर्यन्तस्य ॥ युवकाम्, आवकामिति । 'अव्ययसर्वनाम्नामकच्प्राक्टेः' इत्यकच् । अत्र यदि मपर्यन्तस्येति नोच्येत, ततोऽवधेरनुपादानात् साकच्कस्यापि स्यादित्यत आह—साकच्कस्य सर्वस्य मा भूदिति । असति मपर्यन्तग्रहणे, अवधेरनुपादानादनेकाल्त्वाच्चादेशस्य सर्वस्यैव स्यात् । कः पुनः सर्वादेशे दोषः स्यात् ? इत्यत आह—तथा चेत्यादि । अनिष्टं रूपं स्यादिति । अकारस्य 'योऽचि' इति यकारे कृते त्व्या, म्या इति स्यात् । मपर्यन्तग्रहणे तु सति युष्मदस्मदोर्मपर्यन्तस्य स्थानित्वेनाधिकृतत्वादस्यैव वक्ष्यमाणा आदेशा भवन्तीति न कश्चिद् दोष इति ।

अथ परि-ग्रहणं किमर्थम्, न मान्तस्येत्येवोच्येत, एवमपि ह्युच्यमानेऽन्तशब्दस्य समीपवचनत्वात् तद्गुणसंविज्ञानस्य बहुव्रीहेराश्रयणात् सिद्धमिष्टम् ? इत्यत आह—

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



मान्तस्येत्येव सिद्धे, अस्मिन् यत्परिग्रहणं कृतम्, अवधिद्योतनार्थं तत्, मान्ते मा भूत्। कदा ? यदा ण्यन्तयोः क्विपि मान्तत्वं विद्यते

पदमञ्जरी

स्तस्येत्यर्थः ? तत्राह—*मान्तस्येत्येव सिद्धेऽस्मिन्निति*। अस्मिन् साकच्कस्यादेशाभावे, युवकाम्, अत्रकामिति रूपे वा। *अवधिद्योतनार्थमिति*। पर्यन्तशब्देनावधिं द्योतयामीत्यर्थः। अन्यथा मान्तस्येत्युच्यमाने युष्मदष्मदोः समानाधिकारणं विशेषणं सम्भाव्येत, प्रत्येकसम्बन्धाच्चैकवचनम्, ततश्च यत्र मान्ते युष्मदस्मदी तत्रैवादेशाः स्युः। अथापि वैयधिकरण्यमाश्रीयते, तथापि यत्र मान्ते तत्र भेदाभावादादेशा न स्युः। व्यपदेशिवद्भावोऽपि प्रातिपदिकेन प्रतिषिद्धः। पर्यन्तशब्देन त्ववधिद्योतने तदुपादानसामर्थ्याद्युष्मदस्मदवयवेऽपि युष्मदस्मच्छब्दौ वर्तेते इति सर्वत्रादेशसिद्धिः। वैयधिकरण्येन वा सम्बन्धे परिग्रहणसामर्थ्याद् 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति प्रतिषेधाप्रवृत्तौ मान्तयोरप्यादेशसिद्धिः।

अपर आह—सति शेषे पर्यन्तशब्दः, तेन सामानाधिकरण्यासम्भवाद्वैयधिकरण्येनैवान्वयः। यदा तु मान्ते युष्मदस्मदी तदा नैवादेशा भवन्ति, तदिदमुक्तम् *मान्ते मा भूद्यदा तदेति*। यदा युष्मदस्मदी मान्ते तदैव मा भूत्, तदापि वा मा भूदित्यर्थः। क्व पुनर्मान्ते युष्मदस्मदी ? इत्याह—*ण्यन्तयोरिति*। युष्मानाचष्टे युष्मयति, अस्मानाचष्टे अस्मयति; णिचीष्ठवद्भावे टिलोपः, 'प्रत्ययोत्तरपदयोश्च' इत्यत्रैकवचनाधिकारात्त्वमादेशाभावः। क्विपि णिलोपः। ननु च विभक्तावादेशै-

न्यासः

मान्तस्येत्यादि। एतस्मिन् साकच्कस्यादेशाभावे, अथवैतस्मिन् युवकामावकामित्यादिके शब्दरूपे मान्तस्येत्येवं सिद्धे यत् परि-ग्रहणं कृतं तदवधिद्योतनार्थम्। युष्मदस्मदोरवयवस्य स्थानिनोऽवधिद्योतनार्थम्। तस्मान् मान्ते युष्मच्छब्दे, अस्मच्छब्दे च वक्ष्यमाणं कार्यं मा भूदित्येवमर्थम्। कदा ? इत्याह—यदा ण्यन्तयोरित्यादि। तदाचष्ट इति युष्मदस्मद्भ्यां णिचि कृते 'णाविष्ठवत् कार्यं प्रातिपदिकस्य' इतीष्ठवद्भावाट्टिलोपः, ततः क्विप्, तत्र 'णेरनिटि' इति णिचो लोपे कृते यदा मान्तत्वं विद्यते युष्मदस्मदोस्तदा मा भूदिति। असत्यपि परिग्रहणे मान्तस्येत्यनेन युष्मदस्मदोरित्यवयवावस्थानं लभ्यते, ततश्च यत्र मान्ते युष्मदस्मदी, तत्रैव वक्ष्यमाणा आदेशा भवेयुः। परि-ग्रहणे त्ववधिद्योतनार्थे सति नियोगतो वर्ज्यमानेन भवितव्यम्, न हि तेन विनावधिः सम्भवति। तत्र समुदायावयवस्थानो निर्दिश्यते। यत्राच्छब्दो वर्जनीयोऽस्ति तत्रैव भविष्यति, न तु मान्तयोर्युष्मदस्मदोरेव। ननु च विभक्तिपरयोर्युष्मदस्मदोरादेशा विधास्यन्ते, न च मान्तावस्थायां विभक्तिपरतास्ति; णिलोपस्य

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


युष्मदस्मदोः । स्थानिवत्त्वं च णेरत्र क्वौ लुप्तत्वान्न विद्यते ।।

युवावौ द्विवचने ।। ९२ ।।

पदमञ्जरी

भाव्यम्, अत्र च णिलोपस्य स्थानिवद्भावाद्व्यवधानम् ? अत आह—*स्थानिवत्त्वं चेति* । णेः क्वौ लुप्तत्वान्न तल्लोपस्यात्र स्थानिवत्त्वमस्तीत्यर्थः । 'क्वौ लुप्तं न स्थानिवत्' इति वचनम्, न तु 'क्वौ विधिं प्रति न स्थानिवत्' इत्येवमिति *भाष्यकारः* ।

तत्र यो मन्यते—मान्तयोरप्यादेशा भवन्तीति, तन्मतेनोदाहरणानि । कृदन्तत्वाद्विभक्तयः, एकदेशविकृतस्यानन्यत्वाद्युष्मदस्मदाश्रयविभक्त्यादेशाः प्रकृत्यादेशाश्च त्वादयः; तत्र 'त्वाहौ सौ' इत्यादिविषये ते भवन्ति । अन्यत्रादेशविभक्तौ लोपः, अजादौ यत्वम्, हलादावात्त्वम्—त्वम्, युषाम्, युयम्; युषाम्, युषाम्, युषान्; युष्या, युषाभ्याम्, युषाभिः; तुभ्यं युषाभ्यां युषभ्यम्; युषत्, युषाभ्याम्, युषत्; तव, युष्योः, युषाकम्; युष्यि, युष्योः, युषासु । एवमस्मदोऽपि द्रष्टव्यम् । मपर्यन्तापेक्षया तु शेष आश्रीयमाणे, मात्परस्याभावाल्लोपाभावात् युष्मभ्यम्, युष्मदित्यादि भवति ।

यदा तु त्वामाचष्टे, मामाचष्ट इति विगृह्य क्विप् क्रियते, तदा 'प्रत्ययोत्तरपदयोश्च' इति त्वमयोः कृतयोः 'प्रकृत्यैकाच्' इति प्रकृतिभावादसति टिलोपे 'अत उपधायाः' इति वृद्धिः । यदि निष्ठितमङ्गं ततो वृद्ध्यभावः । त्वदूस् त्वादूस्, मदूस् मादस् इति स्थिते मपर्यन्ताभावात् 'त्वाहौ सौ' इत्यादेरप्रवृत्तौ वृद्धिपक्षे त्वामिति भवति । पक्षान्तरे तु त्वमिति । द्विवचने तु त्वाम्, जसि त्वम् । द्वितीयादिषु तु त्वाम, त्वाम्, त्वान्; त्वया, त्वाभ्याम्, त्वाभिः; त्वम्, त्वाभ्याम्, त्वभ्यम्; त्वत्, त्वाभ्याम्, त्वत्; त्व, त्वयोः, त्वाकम्; त्वयि, त्वयोः, त्वासु । एवमस्मदोऽपि ।

यदा तु द्विवचनान्ताण्णिच् क्रियते, तदापि युष्मयत्यस्मयतीति णिचि भवति, विभक्त्यभावाद्युवावयोरभावः । एकार्थत्वाभावात् 'प्रत्ययोत्तरपदयोश्च' इत्यस्याप्यभावः । विभक्तौ तु युवावादेशौ । 'त्वाहौ सौ' इत्यादिविषये तु त एव भवन्ति । ये तु मान्तयोरादेशौ नेच्छन्ति तेषां सौ, शेषेलोपपक्षे—युषम्, असमिति भवति । पक्षान्तरे तु युष्मम्, अस्ममिति । एवमन्यत्रापि द्रष्टव्यम् । गहनोऽयं प्रक्रियातर्क इत्युपरम्यते ।।

न्यासः

स्थानिवद्भावात्, तत् किं मान्तस्य निवृत्त्यर्थेन परि-ग्रहणेन ? इत्यत आह—स्थानिवत्त्वं चेत्यादि । 'क्वौ लुप्ते न स्थानिवत्' इति वचनात् स्थानिवद्भावोऽत्र नास्ति । तस्माद् विद्यत एव विभक्तिपरत्वमित्यभिप्रायः ।।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



'द्विवचने' इत्यर्थग्रहणम् । द्विवचने ये युष्मदस्मदी द्व्यर्थाभिधानविषये तयोर्मपर्यन्तस्य स्थाने युव, आव—इत्येतावादेशौ भवतः । युवाम्, आवाम् । युवाभ्याम्, आवाभ्याम् । युवयोः, आवयोः ।

यदा समासे द्व्यर्थे युष्मदस्मदी भवतः, समासार्थस्यान्यसंख्यत्वादेकवचनं बहुवचनं वा भवति, तदापि द्व्यर्थयोर्युष्मदस्मदोर्युवावौ भवतः, यदि 'त्वाहौ सौ'—इत्येवमादिना आदेशान्तरेण न बाध्येते ।

पदमञ्जरी

*युवावौ द्विवचने* ॥ *द्विवचन इत्यर्थग्रहणमिति* । वक्तीति वचनम्, 'कृत्यल्युटो बहुलम्' इति कर्त्तरि ल्युट्, द्वयोरर्थयोर्वचने द्विवचने । प्रथमाद्विवचनान्तं चैतत्, तदाह—*द्विवचने युष्मदस्मदी इति* । के पुनस्ते ? इत्याह—*द्व्यर्थाभिधानविषये इति* । एतच्च वचनग्रहणाल्लभ्यते । कथम् ? 'द्वित्व इति वक्तव्यम्', विभक्तावित्येव, द्वित्वे या विभक्तिस्तस्यामित्यर्थः ।

अर्थग्रहणे सति यदिष्टं सम्पद्यते, तद् दर्शयति—*यदेति* । पारिभाषिकस्य द्विवचनस्य ग्रहणे तस्यास्मिन्विषयेऽभावाद्युवावादेशौ न स्यातामित्यव्याप्तिः स्यादिति भावः । *आदेशान्तरेण न बाध्येते इति* । बाधस्तु परत्वादित्यत्रैव वक्ष्यते । अतिक्रान्तं युवामिति सौ जसि चादेशान्तरेण बाधः । द्विवचनस्य तु पारिभाषिकस्य ग्रहणेऽपि सिद्धिरिति प्रथमाया अतिक्रमः । उत्तरत्रापि द्विवचनस्यातिक्रमेऽयमेव हेतुः । तत्र चानादेशे विभक्तौ हलादौ 'द्वितीयायां च' आत्वम्, अजादौ यत्वम्, शेषे लोपः, 'ङेप्रथमयोरम्' इत्यादयो विभक्त्यादेशाश्च यथायथं द्रष्टव्याः ।

न्यासः

युवावौ द्विवचने ॥ द्विवचन इति । यदीदं पारिभाषिकस्य द्विवचनस्य ग्रहणं स्यात्, तदा तस्मिन् परत एव तावादेशौ भवेताम् । तथा च यदा समासे द्व्यर्थे युष्मदस्मदी भवतः, समासार्थस्य त्वन्यसंख्यत्वादेकवचनं बहुवचनं वा समासाद् भवति, तदा न स्यातामिति; यदा युष्मदस्मदी एकत्वे वा बहुत्वे वा वर्तेते समासार्थस्य द्वित्वे सति समासाद् द्विवचनं भवति, तदा युवावौ स्यातामेव, एतच्चानिष्टम्; अर्थग्रहणे सतीष्टं सिध्यति, न चानिष्टं किञ्चिदापद्यते ? इत्यालोच्याह—द्विवचन इत्यर्थग्रहणमिति । द्वयोरर्थयोर्वचनम्=उक्तिः, द्विवचनम् । द्विवचने ये युष्मदस्मदी इति । 'द्विवचने' इति विषयसप्तमीयम् । तदेव विषयसप्तमीत्वमस्या व्यक्तीकर्तुमाह—द्व्यर्थाभिधानविषय इति । द्वयोरर्थयोरभिधानं द्व्यर्थाभिधानम्, तद्विषये युष्मदस्मदी ते तथोक्ते । तयोरित्यादि । तयोर्युष्मदस्मदोर्मपर्यन्तावयवः स्थानी, तस्य युवावौ भवतः ।

यदेत्यादिनार्थग्रहणे सति यदिष्टं सिध्यति तद् दर्शयति । यदि तर्हि समासादेकवचनबहुवचनयोरुपजातयोर्द्व्यर्थाभिधानविषयत्वाद्युष्मदस्मदोर्युवावौ भवतः, एवं सति

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अतिक्रान्तं युवाम् अतियुवाम्, अत्यावाम् । अतिक्रान्तान् युवाम् अतियुवान्, अत्यावान् । अतिक्रान्तेन युवाम् अतियुवया, अत्यावया । अतिक्रान्तैर्युवाम् अतियुवाभिः, अत्यावाभिः । अतिक्रान्तेभ्यो युवाम् अतियुवभ्यम्, अत्यावभ्यम् । अतिक्रान्ताद् युवाम् अतियुवत्, अत्यावत् । अतिक्रान्तेभ्यो युवाम् अतियुवत्, अत्यावत् । अतिक्रान्तानां युवाम् अतियुवाकम्, अत्यावाकम् । अतिक्रान्ते युवाम् अतियुवयि, अत्यावयि । अतिक्रान्तेषु युवाम् अतियुवासु, अत्यावासु ।

त्वाहादीनां तु विषये परत्वात्त एव भवन्ति—अतिक्रान्तो युवाम् अतित्वम्, अत्यहम् । अतिक्रान्ता युवाम् अतियूयम्, अतिवयम् । अतिक्रान्ताय युवाम् अतितुभ्यम्, अतिमह्यम् । अतिक्रान्तस्य युवाम् अतितव, अतिमम ।

पदमञ्जरी

*परत्वादिति* । त्वाहादीनामवकाशः यदा बह्वर्थे युष्मदस्मदी—अतिक्रान्तो युष्मानतित्वम्, अत्यहम्, युवावयोरकाशः—युवाम्, आवाम् व्यर्थत्वे सति; सावुभयप्रसङ्गे विप्रतिषेधः ।

न्यासः

'त्वाहौ सौ', यूयवयौ जसि', 'तुभ्यमह्यौ ङयि', 'तवममौ ङसि'—इत्येषामपि विषये स्याताम् ? इत्यत आह—यदि त्वाहौ सावित्यादि । अतियुवामत्यावामिति । 'अत्यादयः क्रान्ताद्यर्थे' इति प्रादिसमासः । तत्र योऽसौ युष्मदस्मदर्थश्चातिक्रान्तः स एकसंख्यावच्छिन्नोऽर्थ इति तत्र यद्यप्येकवचनं भवति, तथापि द्व्यर्थाभिधानविषयत्वाद् युष्मदस्मदोर्युवावौ भवत एव । अत्र हि 'द्वितीयायाञ्च' इत्यात्त्वम् । अतियुवान्, अत्यावानिति । 'शसो नः' इति नत्वम् । अतियुवया, अत्यावयेति । 'योऽचि' इति यत्वम् । अतियुवाभिरत्यावाभिरिति । 'युष्मदस्मदोरनादेशे' इत्यात्त्वम् । अतियुवभ्यमत्यावभ्यमिति । 'भ्यसोभ्यम्' । अतियुवदत्यावदिति । 'एकवचनस्य च' इति ङसेरदादेशः । बहुवचनस्य तु 'पञ्चम्या अत्' इत्यनेन । अतियुवाकम्, अत्यावाकमिति । 'साम आकम्' । अतियुवयि, अत्यावयीति । पूर्ववत्यवम् । अतियुवासु, अत्यावास्विति । पूर्ववदात्त्वम् ।

त्वाहादीनां विषय इत्यादिना यदुक्तम्—'यदि त्वाहौ सावित्यादिना देशान्तरेण न बाध्येते' इति, तद् विस्पष्टीकरोति ।

यदा त्विस्यादिना अर्थग्रहणे सति यदिष्टमुपपद्यते तद्दर्शयति । अतित्वामतिमामिति । अत्र यौ युष्मदस्मदर्थावतिक्रान्तौ तौ द्विसंख्यौ समासार्थाविति समासाद् यद्यपि द्विवचनं भवति, तथापि युष्मदस्मदोर्द्व्यर्थता नास्तीति युवावौ न भवतः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



यदा तु युष्मदस्मदी एकत्वबहुत्वयोर्वर्तेते, समासार्थस्तु द्वित्वे, तदा युवावौ न भवतः। अतिक्रान्तौ त्वाम् अतित्वाम्, अतिमाम्। अतिक्रान्तौ युष्मान् अतियुष्मान्, अत्यस्मान्। एवमुन्नेयम्॥

## यूयवयौ जसि॥ ९३॥

युष्मदस्मदोर्मपर्यन्तस्य जसि परतो यूय, वय–इत्येतावादेशौ भवतः। यूयम्, वयम्।

परमयूयम्, परमवयम्। अतियूयम्, अतिवयम्। तदन्तविधिरत्र

### पदमञ्जरी

*यदा त्वित्यादि*। पारिभाषिकस्य ग्रहणे तत्रापि प्रसङ्ग इत्यतिव्याप्तिः स्यादिति भावः। *अतिक्रान्तौ त्वाम्, अतित्वामिति*। 'प्रथमायाश्च द्विवचने भाषायाम्' इत्यात्वम्। यदात्र पारिभाषिकस्य ग्रहणम्, तदा 'त्वमावेकवचने' इत्यत्रापि पारिभाषिकस्यैकवचनस्य ग्रहणमिति मत्वेदमुदाहृतम्। अथापि तत्राप्यर्थग्रहणम्, तथापि बह्वर्थेऽतिप्रसङ्ग इत्याह– *अतिक्रान्तौ युष्मानिति*। पूर्ववदात्वम्। *एवं ज्ञेयमिति*। अतियुष्माम्, अतियुष्माभ्याम्, अतियुष्मयोः। एवमस्मदः॥

*यूयवयौ जसि॥ परमयूयमिति*। अत्र पारम्ययोगो यथासम्भवं द्रष्टव्यः। *तदन्तविधिरत्र भवतीति*। 'अङ्गाधिकारे तस्य च तदुत्तरपदस्य च' इति वचनात्। यदापि तदन्तस्य, तदापि न सर्वस्य; युष्मदस्मदोर्मपर्यन्तस्येत्यधिकारात्॥

### न्यासः

त्वमावेव भवतः। 'प्रथमायाश्च द्विवचने भाषायाम्' इत्यात्त्वम्। अथ वा–द्वितीयाद्विवचनमेतत्, ततः 'द्वितीयायाञ्च' इति। एवमुन्नेयमिति। वचनान्तरेष्वप्यादेशाभावं दर्शयति। युष्मानतिक्रान्तौ पश्य अतियुष्माम्, अत्यस्माम्। अतिक्रान्ताभ्यां त्वां कृतमतित्वाभ्याम्, अतिमाभ्याम्। अतिक्रान्ताभ्यां युष्मान् कृतमतियुष्माभ्यां कृतम्, अत्यस्माभ्यां कृतम्। त्वामतिक्रान्ताभ्यां देहि अतित्वाभ्यां देहि, अतिमाभ्यां देहि। अतिक्रान्ताभ्यां युष्मान् देहि अतियुष्माभ्यामत्यस्माभ्यां देहि। अतिक्रान्ताभ्यां त्वामागतोऽतित्वाभ्यामागतः, अतिमाभ्यामागतः। अतिक्रान्ताभ्यां युष्मानागतोऽतियुष्माभ्यामागतः, अत्यस्माभ्यामागतः। अतिक्रान्तयोस्त्वां स्वमतित्वयोः स्वम्, अतिमयोः स्वम्। युष्मानतिक्रान्तयोः स्वमतियुष्मयोः स्वम्, अत्यस्मयोः स्वम्। अतिक्रान्तयोस्त्वां निधेहि अतित्वयोर्निधेहि, अतिमयोर्निधेहि। अतिक्रान्तयोर्युष्मान्निधेहि अतियुष्मयोर्निधेहि, अत्यष्मयोर्निधेहि॥

यूयवयौ जसि॥ परमयूयमिति। 'अङ्गाधिकारे तस्य च तदुत्तरपदस्य च' इति वचनादुत्तरपदयोरपि भवतः। अथ वा—'जसि' इति परसप्तमीयम्, तेन समस्तयोरपि जसि परत इति भवतः। परमयूयमित्यादावपि युष्मदस्मद्भ्यां जसः परत्वमस्त्येव॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



भवति; 'अङ्गाधिकारे तस्य च तदुत्तरपदस्य च' इति ।

त्वाहौ सौ ॥ ९४ ॥

युष्मदस्मदोर्मपर्यन्तयोः[1] स्थाने सौ परे त्व, अह–इत्येतावादेशौ भवतः । त्वम्, अहम् । परमत्वम्, परमाहम् । अतित्वम्, अत्यहम् ॥

तुभ्यमह्यौ ङयि ॥ ९५ ॥

युष्मदस्मदोर्मपर्यन्तस्य तुभ्य, मह्य–इत्येतावादेशौ भवतो ङयि परतः । तुभ्यम्, मह्यम् । परमतुभ्यम्, परममह्यम् । अतितुभ्यम्, अतिमह्यम् ॥

तवममौ ङसि ॥ ९६ ॥

युष्मदस्मदोर्मपर्यन्तस्य तव, मम–इत्येतावादेशौ भवतो ङसि परतः । तव, मम । परमतव, परमयम । अतितव, अतिमम ॥

त्वमावेकवचने ॥ ९७ ॥

'एकवचने' इत्यर्थनिर्देशः । एकवचने ये युष्मदस्मदी एकार्था-

पदमञ्जरी

*त्वाहौ सौ ॥ त्वमिति ।* यद्यप्यत्र 'त्वमावेकवचने' इति त्वादेशः सिद्धः, तथाप्यहादेशस्तावद्विधेयः ? तत्र च 'अहः सौ' इत्युच्यमाने युष्मदोऽपि प्रसङ्गः, 'अस्मदोऽहः सौ' इत्युच्यमाने गौरवं स्यात्, तस्मादत्रापि त्वादेश एव विधेयः । किञ्च-अतिक्रान्तो युवां युष्मान्वाऽतित्वमित्यत्र त्वादेशस्य शङ्कापि नास्ति ॥

*त्वमावेकवचने ॥ एकवचन इत्यर्थनिर्देश इत्यादि ।* एतच्च 'द्विवचन इत्यर्थनिर्देशः' इत्येतदनुसारेण योज्यम् ।

न्यासः

त्वाहौ सौ ॥ 'त्वमावेकवचने' इति वक्ष्यति, तस्यायमपवादः । अथ त्वग्रहणं किमर्थम्, न 'अहः सौ' इत्येवोच्येत, त्वादेशो हि 'त्वमावेकवचने' इत्येवं भविष्यति ? अशक्यमेवं वक्तुम्; असति त्वग्रहणे युष्मदोऽप्यहादेशः स्यात् । अथवा–अत्र 'अस्मदोऽहः सौ' इत्येवोच्येत ? एवमपि गौरवं स्यात् । तस्माद् यथान्यासमेवास्तु ॥

तुभ्यमह्यौ ङयि ॥ तवममौ ङसि ॥ अनन्तरं वक्ष्यमाणयोस्त्वमयोः प्राप्तयोरिदं वचनम् ॥

त्वमावेकवचने ॥ एकवचन इत्यर्थनिर्देश इति । एतेनार्थस्येदं ग्रहणम्, न तु

---

१. 'मपर्यन्तस्य' इति क्वचित् । एवमग्रेऽपि पाठभेदोऽत्र ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



भिधानविषये तयोर्मपर्यन्तस्य स्थाने त्व, म—इत्येतावादेशौ भवतः । त्वाम्, माम् । त्वया, मया । त्वत्, मत् । त्वयि, मयि ।

यदा समासे एकार्थे युष्मदस्मदी भवतः, समासार्थस्य त्वन्य-संख्यत्वाद् द्विवचनं बहुवचनं वा भवति, तदापि त्वमावादेशौ भवतः । आदेशान्तराणां तु 'त्वाहौ सौ'—इत्येवमादीनां विषये पूर्वविप्रतिषेधेन ते एवेष्यन्ते । अतिक्रान्तस्त्वामतित्वम्, अत्यहम् । अतिक्रान्तौ त्वाम् अतित्वाम्, अतिमाम् । अतिक्रान्तान् त्वाम् अतित्वान्,

पदमञ्जरी

अर्थग्रहणे यदिष्टं सम्पद्यते तद्दर्शयति—*तदेति* । पारिभाषिकस्य त्वेकवचनस्य ग्रहणेऽत्र न स्यादित्यव्याप्तिः । *अतिक्रान्तौ त्वामिति* । *तदापि त्वमौ भवत* इत्यस्योदाहरणम् । *अतित्वामिति* । पूर्ववदात्वम् । *एवमन्यदुदाहर्त्तव्यमिति* । एतद् अतित्वम्, अत्यहमित्यनेनापि सम्बध्यते । अतियूयम्, अतितुभ्यम्, अतितव ।

न्यासः

पारिभाषिकस्यैकवचनस्येति दर्शयति । पारिभाषिकस्य तु ग्रहणे यो दोषः स 'युवावौ द्विवचने' इत्यत्र उक्त इत्यभिप्रायः । अर्थग्रहणं त्विह वचनग्रहणाल्लभ्यते । यदीह प्रत्ययग्रहणमभिमतं स्याद् 'एकत्वे' इत्येवं ब्रूयात् । विभक्ताविति वर्त्तते, तत्रैवमभिसम्बन्धः करिष्यते—एकत्वे या विभक्तिरिति । अथ वा—एतदिति न ब्रूयात्; एकवचने हि 'प्रत्ययोत्तरपदयोश्च' इत्यनेनैवादेशयोः सिद्धत्वात् । त्वाम्, मामिति । 'द्वितीयायाञ्च' इत्यात्वम् ।

यदा समास एकार्थं इत्यादिनार्थग्रहणे सति यदिष्टं सिध्यति तद्दर्शयति । यदापि समासात् संख्यान्तरयुक्ताद् द्विवचनं बहुवचनं वा भवति, तदाप्येकार्थयोर्युष्मदस्मदोरेतावादेशौ भवतः । एवं सति 'त्वाहौ सौ', 'यूयवयौ जसि', 'तुभ्यमह्यौ ङयि', 'तवममौ ङसि'—इत्येषामप्यादेशान्तराणां विषये स्यातामित्यत आह—आदेशान्तराणां त्वित्यादि । पूर्वविप्रतिषेधस्येति वचनं परस्य विप्रतिषेधस्यासम्भवात् । असम्भवस्त्वनयोरेव परत्वात् । पूर्वविप्रतिषेधस्तु परशब्दस्येष्टवाचित्वाल्लभ्यते । तत्र 'त्वाहौ सौ' इत्यस्यावकाशो यत्रैकार्थे युष्मदस्मदी न भवतः—अतिक्रान्तो युष्मानित्यतित्वमत्यहमिति, त्वमावेकवचनस्यावकाशो यत्रैकार्थाभ्यां विभक्त्यन्तरं भवति—त्वाम्, मामिति; अतिक्रान्तस्त्वामतित्वमतिक्रान्तो मामत्यहमित्यत्रोभयप्रसङ्गे प्राप्ते त्वाहौ सौ भवतः पूर्वविप्रतिषेधेन । अनया दिशाऽऽदेशान्तरेषु प्राप्तेषु पूर्वं विप्रतिषेधो वक्तव्यः । अतिक्रान्तौ त्वामतित्वाम्, अतिमामिति । अत्र यद्यपि समासाद् द्विवचनं भवति, तथा-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अतिमान् । अतिक्रान्ताभ्यां त्वाम् अतित्वाभ्याम्, अतिमाभ्याम् । अति क्रान्तैस्त्वाम् अतित्वाभिः, अतिमाभिरिति । एवमाद्युदाहर्तव्यम् ॥

## प्रत्ययोत्तरपदयोश्च ॥ ९८ ॥

'एकवचने' इत्यनुवर्तते । प्रत्यये उत्तरपदे च परत एकवचने वर्तमानयोर्युष्मदस्मदोर्मपर्यन्तस्य त्व, म—इत्येतावादेशौ भवतः । तदःयं त्वदीयः, मदीयः । अतिशयेन त्वं त्वत्तरः, मत्तरः । त्वा-

### पदमञ्जरी

एवमस्मदः । *अतित्वामतिमामित्यनेन* तु सम्बन्धः स्पष्ट एव । अतित्वां पश्य अतित्वान्, अतित्वाभ्याम्, अतित्वाभिः; अतित्वभ्यम् । अतित्वत् । अति-त्वयोः, अतित्वाकम् । अतित्वयि, अतित्वयोः, अतित्वासु । एवमस्मदः ।

अत्रानन्तरं यदा युष्मदस्मदी द्वित्वबहुत्वयोर्वर्त्तेते समासार्थस्यैकत्वं तदा त्वमौ न भवतः; अतिक्रान्तं युवामतियुवाम्, अत्यावाम् । अतिक्रान्तं युष्मान् अतियुष्मान्, अत्यस्मान् । एवं *नेयमिति* पठितव्यम्; पूर्वानुसारेण गम्यमान-त्वान्न पठितम् ॥

*प्रत्ययोत्तरपदयोश्च* ॥ *एकवचने वर्त्तमानयोरिति* । एकार्थाभिधानविषययोरि-त्यर्थः । वस्तुकथनं चैतत्, न तु शब्दार्थकथनम् । 'एकवचने' इत्यस्य प्रथमाद्वि-वचनान्तत्वात् । *त्वदीय इति* । 'त्यदादीनि च' इति च वृद्धसंज्ञा, 'वृद्धाच्छः' । *त्वत्तर इति* । पारम्यवत्प्रकर्षयोगः ।

### न्यासः

प्येकार्थे युष्मदस्मदी इति भवत एव त्वमादेशौ । पारिभाषिकस्य त्वेकवचनस्य ग्रहणे न स्याताम्; तस्येहाविद्यमानत्वात् । एवमाद्युदाहर्त्तव्यमिति । अतिक्रान्तौ त्वां पश्याति-त्वाम्, अतिमां पश्य । अतिक्रान्तांस्त्वां पश्यातित्वानतिमान् पश्य । अतिक्रान्ताभ्यां त्वाम् अतित्वाभ्यामतिमाभ्याम् । अतिक्रान्तैस्त्वामतित्वाभिरतिमाभिः कृतम् । अतिक्रान्ताभ्यां त्वां देह्यतित्वाभ्यामतिमाभ्यां देहि । अतिक्रान्तेभ्यस्त्वां देह्यतित्वभ्यमतिमभ्यं देहि । अतिक्रान्ताभ्यां त्वामागतोऽतित्वाभ्यामतिमाभ्यामागतः । अतिक्रान्तेभ्यस्त्वामागतोऽति-त्वदागतोऽतिमदागतः । अतिक्रान्तयोस्त्वां स्वमतित्वयोः स्वम्, अतिमयोः स्वम् । अति-क्रान्तानां त्वां स्वमतित्वाकं स्वम्, अतिमाकं स्वम् । अतिक्रान्तयोस्त्वां निधेह्यतित्वयोर्नि-धेहि, अतिमयोर्निधेहि । अतिक्रान्तेषु त्वां निधेह्यतित्वासु निधेहि, अतिमासु निधेहि ॥

प्रत्ययोत्तरपदयोश्च ॥ एकवचने वर्त्तमानयोरिति । एकार्थाभिधानविषययोरित्यर्थः । त्वदीयः, मदीय इति । 'त्यदादीनि च' इति वृद्धसंज्ञकत्वाद् 'वृद्धाच्छः' इति च्छप्र-त्ययः । त्वत्तरः, मत्तर इति । 'द्विवचनविभज्योपपदे तरबीयसुनौ' इति तरप् । त्वद्यति,

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



मिच्छति त्वद्यति, मद्यति । त्वमिवाचरति त्वद्यते, मद्यते ।

उत्तरपदे—तव पुत्रः त्वत्पुत्रः, मम पुत्रो मत्पुत्रः । त्वं नाथोऽस्य त्वन्नाथः, अहं नाथोऽस्य मन्नाथः ।

एकवचन इत्येव—युष्माकमिदं युष्मदीयम्, अस्मदीयम् । युष्माकं पुत्रोऽस्माकं पुत्रो युष्मत्पुत्रः, अस्मत्पुत्रः ।

'विभक्तौ' इत्यधिकारात् पूर्वयोगो विभक्तावेव । ततोऽन्यत्रापि प्रत्यये उत्तरपदे च यथा स्यादित्ययमारम्भः ।

ननु चात्राप्यन्तर्वर्तिनी विभक्तिरस्ति, तस्यामेवादेशौ भविष्यतः ? नैवं शक्यम्; लुका तस्या भवितव्यम् । बहिरङ्गो लुक्,

पदमञ्जरी

*विभक्तावित्यधिकारादिति* । ननु च पूर्वसूत्रे 'विभक्तौ' इति न सम्भन्त्स्यते, कथम् ? आवृद्धेरनुवर्त्तमानं न सम्बध्येत ? एवमपि योगविभागो न कर्त्तव्यः, 'त्वमावेकवचने प्रत्ययोत्तरपदयोः' इत्येकयोग एव कर्त्तव्यः, एवं हि चकारो न कर्त्तव्यो भवति ? नैवं शक्यम्; एवं ह्युच्यमाने यथासङ्ख्यं प्राप्नोति—युष्मदः प्रत्यये, अस्मद उत्तरपद इति । अथ क्रियमाणेऽपि योगविभागे, यावता निमित्तयोः साम्यं कस्मादेव यथासङ्ख्यं न स्यात् ? नैष दोषः; चकारोऽत्र क्रियते, स द्वयोरपि द्वे निमित्ते समुच्चेष्यति ।

ननु चेति । चोदकः । प्रकृतिप्रत्यययोः पूर्वोत्तरपदयोश्च मध्ये या वर्तते सान्तर्वर्त्तिनी विभक्तिः । परिहरति—*नैवं शक्यमिति* । लब्धुमिति शेषः । किं कारणम् ? इत्याह—*तस्या लुका भवितव्यमिति* । लुक्तु 'सुपो धातुप्रातिपदिकयोः' इत्यनेन ।

न्यासः

मद्यतीति । 'सुप आत्मनः क्यच्' । त्वद्यते, मद्यत इति । 'कर्तुः क्यङ् सलोपश्च' इति क्यङ् ।

ननु च पूर्वेणैवादेशौ सिद्धौ, तत् किमर्थोऽयमारम्भः ? इत्यत आह—विभक्तावित्यधिकारादित्यादि ।

ननु चेत्यादि देशकः । प्रकृतिप्रत्यययोः पूर्वोत्तरपदयोश्च या मध्ये वर्त्तते सान्तर्वर्त्तिनी विभक्तिः । नैवं शक्यमिति । इतरः । लुका तस्या भवितव्यमिति अशक्यतायां हेतुः । 'सुपो धातुप्रातिपदिकयोः' इति प्रागेवादेशाभ्यां लुका भवितव्यमिति, ततश्च तन्निमित्तावादेशौ न स्यातामित्यभिप्रायः । बहिरङ्गो लुगित्यादि । देशकः । विभक्तिमात्रं ह्यादेशयोराश्रयः, लुकस्तु धातुत्वं प्रातिपदिकत्वञ्चापरम् । तदेवं धातुप्रातिपदिकत्वे यथायोगं बाह्यप्रत्ययापेक्षत्वात् समासापेक्षत्वाच्च बहिरङ्गे किं पुनस्तदपेक्षया लुको बहिरङ्गता ? 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्यादेशावेव प्रथमं भविष्यतः । एतदेवेत्यादीत-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अन्तरङ्गावादेशौ, प्रथमं तौ भविष्यतः ? एतदेव तर्ह्यादेशवचनं ज्ञापकम्—'अन्तरङ्गानपि विधीन्बहिरङ्गोऽपि लुग्बाधते' इति। तेन गोमान्प्रियोऽस्य गोमत्प्रिय इत्येवमादौ नुमादि लुका बाध्यते।

एवं च सति 'त्वाहौ सौ' इत्येवमादयोऽपि प्रत्ययोत्तरपदयोरादेशा न भवन्ति। त्वं प्रधानमेषां त्वत्प्रधानाः, मत्प्रधानाः। यूयं पुत्रा अस्य युष्मत्पुत्रः, अस्मत्पुत्रः। तुभ्यं हितं त्वद्धितम्, मद्धितम्। तव पुत्रस्त्वत्पुत्रः, मत्पुत्रः।

### पदमञ्जरी

*अन्तरङ्गावित्यादि*। चोदकः। विभक्तिमात्रापेक्षत्वादन्तरङ्गत्वम्, लुक्तु पश्चादुत्पन्नः प्रत्ययमुत्तरपदं चापेक्ष्य धातुत्वप्रातिपदिकत्वयोरुपजातयोः प्राप्नुवन् बहिरङ्गः। यद्यप्ययं नित्यः, तथापि नित्यान्तरङ्गयोरन्तरङ्गमेव बलीयः। यथोक्तम्—परनित्यान्तरङ्गप्रतिपदविधयो विरोधिनः सन्निपाते तेषां मिथः प्रसङ्गे परबलीयस्त्वमिति। *एतदेवेत्यादि*। परिहारः। किमेतस्य ज्ञापने प्रयोजनम् ? इत्याह—*तेनेति*। प्रथमेनादिशब्देन गोमत्यतीत्यादेर्ग्रहणम्, द्वितीयेन दीर्घहल्ङ्यादिलोपयोः, हल्ङ्यादिलोपे हि प्रत्ययलक्षणेन नुमादि स्यादेव। लुकि तु 'न लुमताङ्गस्य' इति प्रत्ययलक्षणप्रतिषेधान्न भवति। ज्ञापनस्य प्रयोजनान्तरमाह—*एवं चेति*।

### न्यासः

रोऽपि। 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्न बाधते' इति पूर्वेणैव सिद्धत्वादादेशवचनं न कुर्यात्, कृतञ्च, तदेव ज्ञापयति—'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग बाधते' इति। किमेतस्य ज्ञापकस्य प्रयोजनम् ? इत्यत आह—तेनेत्यादि। यद्ययमर्थो न ज्ञाप्यते, तदा गोमान् प्रियोऽस्येति गोमत्प्रिय इत्यन्तरङ्गत्वाल्लुकः प्राग् 'उगिदचाम्' इति नुम् स्यात्, 'अत्वसन्तस्य चाधातोः' इति दीर्घत्वम्, ततश्च संयोगान्तलोपे कृते गोमान्प्रिय इत्यनिष्टं रूपं प्रसज्येत। अस्मिन् ह्यर्थे ज्ञापिते, अन्तरङ्गमपि नुमादिकं बहिरङ्गेण लुका बाध्यत इति न भवत्येष दोषप्रसङ्गः। एकेनादिशब्देन गोमन्तमिच्छति गोमत्यति, गोमानिवाचरति गोमत्यते—इत्यादेर्ग्रहणम्। द्वितीयेन दीर्घत्वस्य हल्ङ्यादिलोपस्य। यद्यन्तरङ्गत्वाद् हल्ङ्यादिलोपः स्यात्, प्रत्ययलक्षणेन नुमादिकं स्यात्, ततश्च तदेवानिष्टं रूपं स्यात्। लुकि च सति 'न लुमताङ्गस्य' इति प्रत्ययलक्षणप्रतिषेधान्न भवति।

**एवं चेत्यादि**। यत एवं बहिरङ्गोऽपि लुगन्तरङ्गानपि विधीन् बाधते, एवञ्च कृत्वा 'त्वाहौ सौ', 'यूयवयौ जसि', 'तुभ्यमह्यौ ङयि', 'तवममौ ङसि'—इत्येत आदेशाः प्रत्यय उत्तरपदे च परतो न भवन्तीति।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अथ किमर्थमेषां त्वाहादीनां बाधनार्थमेतन्न विज्ञायते ? लक्ष्यस्थित्यप्यपेक्षया । ज्ञापकार्थे ह्येतस्मिन् बहुतरमिष्टं संगृह्यते ॥

पदमञ्जरी

पुनश्चोदयति–*अथेति* । असति हि प्रयोजने ज्ञापकं भवति, अस्ति चात्र प्रयोजनम्, किम् ? एषामेव त्वाहादीनामादेशान्तराणां बाधनम् । सत्येतस्मिन् प्रयोजने न ज्ञापनमुपपद्यत इति । परिहरति–*लक्ष्यस्थित्यपेक्षयेति* । गोमत्प्रिय इत्यादिकं लक्ष्यं लोके साधुभावे स्थितम्, तदादेशान्तरबाधनार्थेऽस्मिन्विज्ञायमाने न संगृहीतं स्यात्, तच्चापेक्ष्यं प्रयोगमूलत्वाद्व्याकरणस्य । तस्मात्तदपेक्षया नैतदादेशान्तराणां बाधनार्थं युक्तं विज्ञातुमिति ।

अपर आह–यद्येतदादेशान्तराणां बाधनार्थं स्यात् 'मपर्यन्तस्य' इत्यनुवृत्तिरपार्थिका स्यात् । कथम् ? उत्सर्गसमानदेशत्वादपवादानां श्यनादिषु तथा दृष्टत्वादिति । नायं नियमः—'उत्सर्गसमानदेशा अपवादा' इति; श्नमादिषु व्यभिचारात् । न हि श्नम्बहुजकचः शबादिभिः समानदेशाः । तस्माद्यद्यवश्यमुपपत्तिर्वक्तव्या, एवं वक्तव्यम्–इह त्वाहादयोऽप्यनुवर्त्तन्ते, मपर्यन्तस्येति च; तत्र त्वाहाद्यनुवृत्त्यैव तद्बाधे सिद्धे मपर्यन्तानुवृत्तिरप्राप्तप्रापणार्था सती ज्ञापकमुक्तस्यार्थस्येति ।

वयं तु ब्रूमः–'मपर्यन्तस्य' इत्येवानुवर्त्य तस्यादेशौ विधेयौ । यदि चान्तरङ्गा आदेशाः स्युः, प्रत्ययोत्तरपदयोर्मपर्यन्तस्य न क्वापि सम्भव इति तस्यादेशविधानमनुपपन्नं स्यादिति ज्ञापकमुक्तस्यार्थस्येति ॥

न्यासः

अथेत्यादि । असति प्रयोजने ज्ञापकं भवति, अस्ति चान्यत् प्रयोजनम्–एषां त्वाहादीनामादेशान्तराणां बाधनम् । सत्येतस्मिन् प्रयोजने, एतदर्थमेवेदं युक्तं विज्ञातुम्, न तु ज्ञापनार्थमिति भावः । लक्ष्यस्थित्यपेक्षयेति । लक्ष्यस्य व्युत्पाद्यस्य स्थितिः=स्थानं लक्ष्यस्थितिः, तद्विषयेऽपेक्षा=लक्ष्यस्थित्यपेक्षा, तया हेतुभूतया । नेदमादेशान्तराणां बाधनार्थं विज्ञायते । गोमत्प्रियो गोमत्यतीत्येवमादिकं लक्ष्यं लोके साधुभावेनावस्थितम् । आदेशान्तरबाधनार्थे ह्येतस्मिन् विज्ञायमाने न संगृहीतं स्यात् । ज्ञापनार्थे त्वेतदपि संगृहीतं भवतीत्येतद् दर्शयति—ज्ञापनार्थे ह्येतस्मिन्नित्यादि । कथं पुनः सत्येवं प्रयोजने सत्यामपि लक्ष्यस्थित्यपेक्षायां ज्ञापकार्थमेतत् शक्यं विज्ञातुम् ? एवं मन्यते—प्रयोजनमेवैतन्न भवति; मपर्यन्तग्रहणस्य चकारेणानुकर्षणार्थत्वात् । तदनुकर्षणस्यैतदेव प्रयोजनम्–मपर्यन्तयोरादेशौ यथा स्यातामिति । यदि चादेशान्तराणां बाधनार्थमेतत् स्यात्, अनुकर्षणं तस्यापार्थकं स्यात् । यद्बाधनार्थमेतत् सूत्रं प्रकल्प्यते तान्यादेशान्तराणि मपर्यन्तस्यैव प्रयुक्तानि, नान्यस्य । ततश्चान्तरेणापि मपर्यन्तग्रहणानुवृत्तिमुत्सर्गसमानदेशत्वादपवा-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


## त्रिचतुरोः स्त्रियां तिसृचतसृ ॥ ९९ ॥

त्रि, चतुर्—इत्येतयोः स्त्रियां वर्तमानयोस्तिसृ, चतसृ—इत्येतावादेशौ भवतो विभक्तौ परतः । तिस्रः । चतस्रः । तिसृभिः । चतसृभिः ।

स्त्रियामिति किम् ? त्रयः । चत्वारः । त्रीणि । चत्वारि ।

स्त्रियामिति चैतत् त्रिचतुरोरेव विशेषणम्, नाङ्गस्य । तेन यदा त्रिचतुःशब्दौ स्त्रियाम्, अङ्गं तु लिङ्गान्तरे, तदाप्यादेशौ भवत एव—प्रियास्तिस्रो ब्राह्मण्योऽस्य ब्राह्मणस्य प्रियतिसा ब्राह्मण इति । प्रियतिस्रौ, प्रियतिस्रः । प्रियतिसृ ब्राह्मणकुलम्, प्रियतिसृणी, प्रियतिसृणि । प्रियचतसा, प्रियचतस्रौ, प्रियचतस्रः । प्रियचतसृ,

### पदमञ्जरी

*त्रिचतुरोः स्त्रियां तिसृचतसृ* ॥ *त्रिचतुरोरेव विशेषणमिति* । श्रुतत्वात् । *नाङ्गस्येति* । विपर्ययात् । तेन किं सिद्धं भवति ? इत्याह—*तेनेति* । *प्रियतिसेति* । 'अनङ् सौ', 'ऋदुशनस्पुरुदंसोऽनेहसाञ्च' इत्यनङ् । *प्रियतिस्राविति* । 'ऋतो ङिसर्वनामस्थानयोः' इति गुणं परमपि बाधित्वोत्तरसूत्रेण रादेशः । *प्रियतिसृ इति* ।

### न्यासः

दानां मपर्यन्तस्यैव भविष्यत इति किं मपर्यन्तस्येत्यनुवर्त्तनेन ! आदेशान्तराणामबाधनार्थं ह्येतस्मिन् सर्वादेशनिवृत्त्यर्थं मपर्यन्तग्रहणमनुवर्त्तयितुं युक्तम् । तस्मादेतस्मान्मपर्यन्तग्रहणानुवर्त्तनान्नादेशान्तरबाधनमस्य प्रयोजनम् । अतो ज्ञापकं विज्ञायते । ननु च किमर्थमेषां त्वाहादीनां बाधनार्थमेतन्न विज्ञायत इति परेण देशितम् । तस्यायमभिप्रायः—मपर्यन्तस्येत्येतन्निवर्त्यादेशान्तरबाधनार्थमेतत् कस्मान्न भवतीति ? तत्रायमर्थः—मपर्यन्तग्रहणस्यानुकर्षणार्थश्चकारो न कर्त्तव्यो भवति । मपर्यन्तग्रहणानुवृत्तावेतदादेशान्तरबाधनार्थं नोपपद्यते, तस्मिन्निवृत्तौ तूपपद्यत एव ॥

**त्रिचतुरोः स्त्रियां तिसृचतसृ** ॥ त्रय इति । 'जसि च' इति गुणः । चत्वार इति । 'चतुरनडुहोरामुदात्तः' इत्याम् ।

**त्रीणीति** । 'जश्शसोः शिः' इति शिभावः, 'नपुंसकस्य झलचः' इति नुम्, 'नोपधायाः', 'सर्वनामस्थाने चासम्बुद्धौ' इति ।

**स्त्रियामिति चैतत् त्रिचतुरोर्विशेषणमिति** । तयोरेव श्रुतत्वात् । **नाङ्गस्येति** । एवकारस्य व्यवच्छेद्यं दर्शयति । तेनेति । विशेषणविशेष्यभावेन । यदि हि स्त्रियामित्यनेनाङ्गमेव विशेष्येत, ततो यदा त्रिचतुःशब्दौ पुंसि नपुंसके वा वर्त्तेते, अङ्गे तु स्त्रियाम्, तदाप्येतावादेशौ स्याताम् । 'त्रिचतुरोः स्त्रियाम्' इत्यनेन विशेष्यमाणयोर्न भवतः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रियचतसृणी, प्रियचतसृणि।[१] 'नद्यृतश्च' इति समासान्तो न भवति; विभक्त्याश्रयत्वेन तिसृभावस्य बहिरङ्गलक्षणत्वात्[१]।

यदा च त्रिचतुःशब्दौ लिङ्गान्तरे, स्त्रियामङ्गम्, तदा आदेशौ न भवतः—प्रियास्त्रयोऽस्याः, प्रियाणि त्रीणि वा अस्या ब्राह्मण्याः सा प्रियत्रिः, प्रियत्री, प्रियत्रयः। प्रियचत्वाः, प्रियचत्वारौ, प्रियचत्वारः।

❀ तिसृभावे संज्ञायां कन्युपसंख्यानं कर्त्तव्यम् ❀। तिसृका नाम ग्रामः।

**पदमञ्जरी**

'इकोऽचि विभक्तौ' इत्यज्ग्रहणेन ज्ञापितम्—लुमता लुप्तेऽपि क्वचित्प्रत्ययलक्षणं भवतीति। तेन 'स्वमोर्नपुंसकात्' इति नित्ये लुकि कृतेपि तिसृभावः। *प्रियतिसृणी इति*। *रादेशात्पूर्वविप्रतिषेधेन नुमिति* क्वचित्पठ्यते। *नद्यृतश्चेति कप्न भवतीति*। समस्यमानदशायामृकारान्तस्य तत्र ग्रहणमिति भावः। कबभावे हेतुः—*विभक्त्याश्रयत्वादित्यादि*। एवं तावत् 'स्त्रियाम्' इत्यनेन त्रिचतुरोर्विशेषणादव्याप्तिपरिहारो दर्शितः।

अतिव्याप्तिरपि परिहृतेत्याह—*यदा चेति*। *तिसृकेति*। स्वार्थे कन्प्रत्ययः, अल्पत्वे, कुत्सितत्वे, संज्ञायां वा। तत्र विभक्तेर्लुकि कृते तत्र विधीयमानस्तिसृभावो न स्यादिति वचनम्। तत्र स्वार्थिकप्रत्ययान्तत्वाद्बहुवचनान्तस्तिसृकाशब्दः संज्ञेत्येके। ग्रामस्य कस्यचिदेषा संज्ञा रूढिरिति नास्ति बहुवचनप्रसङ्ग इत्यन्ये।

**न्यासः**

प्रियत्रिरित्यादि। स्त्रिया अन्यपदार्थत्वादङ्गं स्त्रियां वर्तते, त्रिचतुःशब्दौ लिङ्गान्तरे। यदा त्वङ्गं पुंसि नपुंसके वा वर्तते, त्रिचतुःशब्दौ तु स्त्रियाम्, तदा भवत एव। प्रियास्तिस्रो ब्राह्मण्योऽस्येति प्रियतिसा, प्रियतिस्रौ, प्रियतिस्रः। प्रियाश्चतस्रो ब्राह्मण्योऽस्येति प्रियचतसा, प्रियचतस्रौ, प्रियचतस्रः। प्रियतिसृ ब्राह्मणकुलम्, प्रियतिसृणी, प्रियतिसृणि। प्रियचतसृ ब्राह्मणकुलम्, प्रियचसृणी, प्रियचतसृणि।

तिसृभाव इत्यादि। त्रिशब्दात् 'संज्ञायां कन्' इति कनि कृते विभक्त्यभावान्न प्राप्नोतीतीदमारभ्यते। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। तत्रेदं प्रतिपादनम्—पूर्वसूत्रादिह चकारोऽनुवर्त्तते, स चानुक्तसमुच्चयार्थः। तेन संज्ञायां कन्यपि भविष्यति। तिसृकेति। ग्रामस्यैषा संज्ञा।

---

१-१. अयमंशः क्वचिन्न लभ्यते।


CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



॥ चतसर्याद्युदात्तनिपातनं कर्त्तव्यम् ॥ । चतस्रः पश्येत्यत्र 'चतुरः शसि' इत्येष स्वरो मा भूत् । चतसृणामित्यत्र तु 'षट्त्रिचतुर्भ्यो हलादिः' इत्येव स्वरो भवति । हलादिग्रहणसामर्थ्यान्निपातनस्वरो बाध्यते ॥

पदमञ्जरी

*चतसरीति* । यथा प्रियतिस्रावित्यत्र सर्वनामस्थानलक्षणं गुणं बाधित्वा रादेशो भवति, तथा ङावपि प्राप्नोति; तथा चोत्तरसूत्रे प्रियतिस्रीति ङावपि रादेशमुदाहरिष्यति, पूर्वविप्रतिषेधं च वक्ष्यति । अत्राहुः—अस्मादेव निर्देशादर्थप्रधानयोरेवादेशः । इह तु स्वरूपप्रधानत्वात्तदभावे गुण इति । *चतस्र इति* । अत्र स्थानिवद्भावात् 'चतुरः शसि' इत्यन्तोदात्तत्वे सति 'उदात्तयणो हल्पूर्वात्' इति शस उदात्तत्वप्रसङ्गः, स निपातनस्वरेण बाध्यते । यथैव तर्हि निपातनस्वरः शसिस्वरं बाधते, तथा 'षट्त्रिचतुर्भ्यो हलादिः' इत्येतं विभक्तिस्वरमपि बाधेत? तत्राह—*चतसृणामित्यत्र त्विति* । तत्र कारणमाह—*हलादिग्रहणसामर्थ्यादिति* । तत्र हलादिग्रहणस्य चतस्रः पश्येत्येतदेव व्यावर्त्त्यम्, नान्यत्किञ्चित् । एतच्च तत्रैवोपपादितम् । यदि च निपातनस्वरो विभक्तिस्वरस्यापि बाधकः स्यात्, तदान्तरेणापि हल्ग्रहणं विभक्तेः स्वरो न भविष्यति, किं हलादिग्रहणेन ? तत्क्रियमाणं ज्ञापयति—'निपातनस्वरं विभक्तिस्वरो बाधते' इति । अन्ये त्वाहुः—हलादिग्रहणादेव चतस्रः पश्येत्यत्र 'चतुरः शसि' इत्यस्याप्रवृत्तिरवसीयते । यदि स्यात्, ततः 'उदात्तयणो हल्पूर्वात्' इति स्यादेव विभक्तेरुदात्तत्वमिति तद्व्यावृत्तये हलादिग्रहणमनर्थकं स्यात् । तस्मादाद्युदात्तनिपातनमेव न कर्तव्यमिति । तत्राद्युदात्तस्य चतुश्शब्दस्यानन्तर्यत आद्युदात्त एव चतस्रादेशे सति चतसृणामित्यत्र 'षट्त्रिचतुर्भ्यो हलादिः' इति विभक्तेरुदात्तत्वं भवति ॥

न्यासः

चतसर्याद्युदात्तत्वनिपातनमिति । चतस्रः पश्येत्यत्र 'चतुरः शसि' इत्यन्तोदात्तत्वं प्राप्नोति, आद्युदात्तश्चेष्यते, तदर्थमाद्युदात्तत्वनिपातनं कर्त्तव्यम् । निपातनस्वरेण बाधितत्वादन्तोदात्तत्वं मा भूदित्येवमर्थम् । यथैवं तर्हि निपातनस्वरः शसिस्वरं बाधते, तथा 'षट्त्रिचतुर्भ्यो हलादिः' इत्यनेन यद्विभक्तेराद्युदात्तत्वं विधीयते तदपि बाधेत, ततश्चतसृणामित्यत्राम उदात्तत्वं न स्यात् ? इत्यत आह—चतसृणामित्यत्र त्वित्यादि । हलादिग्रहणसामर्थ्यादिति । तत्रैवायं हेतुः । हलादिग्रहणं हि तत्राजादिनिवृत्त्यर्थं क्रियते । चतुःशब्दश्चायं बहुवचनविषयः । सर्वाणि बहुवचनानि प्रथमाद्वितीयाषष्ठीबहुवचनेभ्योऽन्यानि हलादीनि । तत्रामो नुमचिरतृज्वद्भावेभ्यो पूर्वविप्रतिषेधेन नुटि कृते भवितव्यमाद्युदात्तत्वेन; हलादित्वात् । जसस्तु 'अञ्चेश्छन्दस्यसर्वनामस्थानम्' इत्यतोऽसर्वनामस्थानग्रहणानुवर्त्तमानत्वादाद्युदात्तत्वं न भवति । तस्माच्छसो मा भूदित्येवमर्थं तत्र हलादिग्रहणं कृतम् । यदि च निपातनस्वरो विभक्तिस्वरं बाधेत, तदा

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## अचि र ऋतः ॥ १०० ॥

तिसृ, चतसृ—इत्येतयोर्ऋतः स्थाने रेफादेशो भवति अजादौ विभक्तौ परतः। तिस्रस्तिष्ठन्ति, तिस्रः पश्य। चतस्रस्तिष्ठन्ति, चतस्रः पश्य। प्रियतिस्र आनय, प्रियचतस्र आनय। प्रियतिस्रः स्वम्, प्रियचतस्रः स्वम्। प्रियतिस्रि निधेहि, प्रियचतस्रि निधेहि। पूर्वसवर्णोत्त्वङिसर्वनामस्थानगुणानामपवादः। परमपि हि ङिसर्वनामस्थानगुणं पूर्वविप्रतिषेधेन बाधते।

अचीति किम्? तिसृभिः। चतसृभिः। 'ऋतः' इति किम्?

पदमञ्जरी

*अचि र ऋतः*॥ *पूर्वसवर्णोत्त्वेत्यादि*। तिस्रः पश्येत्यत्र 'प्रथमयोः पूर्वसवर्णः' इत्यस्यापवादः। प्रियतिस्रः स्वमित्यत्र 'ऋत उत्' इत्युत्त्वस्य। प्रियतिस्रि, प्रियतिस्रौ, प्रियतिस्रस्तिष्ठन्तीत्यत्र 'ऋतो ङिसर्वनामस्थानयोः' इति गुणस्य। ननु यत्र विध्यन्तरस्याप्राप्तिः—प्रियतिस्रा, प्रियतिस्रे, प्रियतिस्रोरिति, तत्र 'इको यणचि' इत्येव सिद्धमिति विध्यन्तरस्य विषये इदमारभ्यते; तत्र 'मध्येऽपवादाः पूर्वान्विधीन् बाधन्ते' इति उत्त्वपूर्वसवर्णौ बाधत इति युक्तम्, गुणविषये तु परत्वात् स एव स्यात्? इत्यत आह—*परमपि हीति*।

*ऋत इति किमिति*। तिसृचतस्रोरनुवृत्तेः 'अलोऽन्त्यस्य' इत्येव सिद्धमिति

न्यासः

हलादिग्रहणमनर्थकं स्यात्; निपातनस्वरेणैव बाधितत्वाद्विभक्तिस्वरो न भविष्यति। तस्मान्मा भूद् हलादिग्रहणस्य वैयर्थ्यम्। इह हलादिग्रहणसामर्थ्याद्विभक्तिस्वरेण निपातनस्वरो बाध्यत इति, तेन चतसृणामित्यत्रान्तोदात्तत्वं भवति॥

अचि र ऋतः॥ किमर्थं पुनरचि रादेश उच्यते, न यणादेशेन सिद्धत्वात्? इत्यत आह—पूर्वसवर्ण इत्यादि। असति ह्येतस्मिन् सूत्रे शसि 'प्रथमयोः पूर्वसवर्णः' इति पूर्वसवर्णः स्यात्, 'ङसिङसोश्च', 'ऋत उत्' इत्युत्त्वञ्च, सर्वनामस्थाने ङौ च 'ऋतो ङिसर्वनामस्थानयोः' गुणः। तस्मादेतेषामपवादोऽयं रेफादेश आरभ्यते। ननु युक्तः पूर्वसवर्णस्योत्त्वस्य चेहायमपवादो रेफादेशः, गुणस्य त्वयुक्तः; यस्मात् 'मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्' इति? अत आह—परमपीत्यादि। गुणस्यावकाशः—कर्तारौ, हर्तारौ, कर्तरीति; रेफस्यावकाशः—तिस्रः पश्येति, तिस्रस्तिष्ठन्तीति; प्रियतिस्रि निधेहीति—अत्रोभयप्रसङ्गे पूर्वविप्रतिषेधेन रेफो भवन् परमपि ङिसर्वनामस्थानगुणं बाधते।

ऋत इति किमिति। एवं मन्यते—तिसृचतसृशब्दाविहानुवर्तिष्यते, तौ च

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


तिसृचतस्रोः प्रतिपत्त्यर्थम्; अन्यथा हि तदपवादस्त्रिचतुरोरेवायमादेशो विज्ञायेत ॥

जराया जरसन्यतरस्याम् ॥ १०१ ॥

'जरा'–इत्येतस्य 'जरस्'–इत्ययमादेशो भवति अन्यतरस्यामजादौ विभक्तौ परतः। जरसा दन्ताः शीर्यन्ते, जरया दन्ताः शीर्यन्ते। जरसे त्वा परिदद्युः, जरायै त्वा परिदद्युः।

'अचि'इत्येव–जराभ्याम्, जराभिः। नुमो विधानात् जरसादेशो विप्रतिषेधेन। अतिजरांसि ब्राह्मणकुलानि।

पदमञ्जरी

प्रश्नः। *तिसृचतस्रोः प्रतिपत्त्यर्थमिति*। तिसृचतस्रोरादेशयोरजादावपि विभक्तौ प्रतिपत्तिर्यथा स्यादित्यर्थः। *अन्यथा हीति*। 'ऋतः' इत्यनुच्यमाने षष्ठीनिर्दिष्टत्वात् त्रिचतुरोरेवायमादेशः स्यात्, स च नाप्राप्तयोस्तिसृचतस्रोर्विधीयत इति तयारपवादः स्यादित्यर्थः॥

*जराया जरसन्यतरस्याम्* ॥ *अतिजरांसीति*। अतिजर+इ इति स्थिते यदि पूर्वं नुमागमः स्यात्, सोऽङ्गभक्तोऽङ्गमेव न व्यवदध्यात्। तदवयवं तु जराशब्दं व्यवदधात्येवेति सत्यपि तदन्तविधौ 'निर्दिश्यमानस्यादेशा भवन्ति' इति जरशब्दान्तस्याङ्गस्यावयवो यो जराशब्दः तस्य विभक्त्यानन्तर्ये विधीयमानो जरसादेशो न प्राप्नोति। अथापि स्यात्, तथापि सकारात्परस्य नुमः श्रवणं स्यात्। तस्मात्परत्वात्पूर्वं जरसादेश एष्टव्यः। तत्र कृते झलन्तलक्षणो नुम्। अतिजरसं पश्येत्यत्र अतिजर+अम् इति स्थिते एकदेशविकृतस्यानन्यत्वाज्जरशब्दस्य जरसादेशे कृते 'स्वमोर्नपुंसकात्' इति लुक् प्राप्नोति। न च तदानीमम्भावस्य प्रसङ्गः; अनदन्तत्वात्। ननु चातिजरशब्दस्यादन्तत्वात्तस्यामवस्थायामम्भावेन

न्यासः

ऋकारान्तावेवेत्यलोऽन्त्यपरिभाषया ऋत एव भविष्यति। तिसृचतस्रोः प्रतिपत्त्यर्थमिति। तिसृचतसृ–इत्येतयोरच्यपि परतस्त्रिचतुरोः स्थाने प्रतिपत्तिः=प्राप्तिर्यथा स्यादित्येवमर्थम् 'ऋतः' इत्युक्तम्। अन्यथा हीत्यादि। यदि 'ऋतः' इति नोच्येत, तदा तयोरेव तिसृचतस्रोरयमपवादो विज्ञायेत, ततश्चाजादौ तौ न स्याताम्॥

जराया जरसन्यतरस्याम् ॥ नुमो विधानाज्जरसादेशो भवति विप्रतिषेधेनेति। नुमोऽवकाशः–त्रपूणि, जतूनि, जरसादेशस्यावकाशः—जरसौ; अतिजरांसि ब्राह्मणकुलानीत्यत्रोभयप्रसङ्गे विप्रतिषेधेन परो जरसादेशो भवति। यदि हि पूर्वं नुम् स्यात्, नुमा व्यवहितत्वाज्जरसादेशो न लभ्यते, तथापि विहितविशेषणपक्षाश्रयणेन लभ्यते।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



इहातिजरसं ब्राह्मणकुलं पश्येति लुग्न भवति; आनुपूर्व्या सिद्धत्वात्। अतिजर+अमिति स्थिते लुक्, अम्भावः, जरस्भावः—इति त्रीणि कार्याणि युगपत्प्राप्नुवन्ति; तत्र लुक् तावदपवादत्वाद् अम्भावेन बाध्यते, अम्भावोऽपि परत्वाज्जरसादेशेन। न च पुनर्लुक्शास्त्रं प्रवर्त्तते; भ्रष्टावसरत्वादिति एवमेव भवति—अतिजरसं ब्राह्मणकुलं पश्येति। प्रथमैकवचने तृतीयाबहुवचने च अतिजरं ब्राह्मणकुलं तिष्ठति,

**पदमञ्जरी**

बाधितस्य लुकः पुनः प्रसङ्गो न युक्तः, भ्रष्टावसरत्वात्? नैतदस्ति; नात्राम्भावः प्रवृत्तः परत्वान्नित्यत्वाच्च जरसादेशेन बाध्यते, तत्र कृते लुक्प्रसङ्गः। एवं तर्हि सन्निपातपरिभाषया लुग्न भविष्यति। अजादिसन्निपातेन जरसादेशो निष्पन्नो नोत्सहते तस्य लुको निमित्ततां प्रतिपत्तुम्। यद्येवम्, अतिजरसं ब्राह्मणकुलं तिष्ठति अतिजरसैरिति न सिद्ध्यति; कथम्? सोर्भिसश्चाकारान्तसन्निपातेनाजादिरादेशः कृतोऽकारान्तत्वविघातिनो जरसादेशस्य निमित्तं न स्यात्। इष्टमेवैतत्सङ्गृहीतम्। अतिजरमतिजरैरिति भवितव्यम्, एष *गोनर्दीयस्य* पक्षः, तदिदमुच्यते—*इहेत्यादि*। इहेति वाक्योपन्यासे। अतिजरसं ब्राह्मणकुलमित्यादि भवितव्यमित्यन्तं *गोनर्दीयस्य* मतम्। *न पुनर्लुक्शास्त्रं प्रवर्त्तत इति* यदुक्तम्, यच्चोक्तम्—*अतिजरं ब्राह्मणकुलमित्यादि*, तत्रोभयत्रापि हेतुः—*सन्निपातलक्षण*

**न्यासः**

एवमपि 'निर्दिश्यमानस्यादेशा भवन्ति' इति जराशब्दस्यादेशे कृते सकारात् परो नुम् श्रूयते। अथापि सनुम्कस्यादेशः स्यात्? एवमपि कृतकार्यत्वान्नुम्शास्त्रस्य पुनरप्रवृत्तेरादेशे कृते पुनर्नुम्न स्यात्, तथानिष्टं रूपं प्रसज्येत।

अथेहातिजरसं ब्राह्मणकुलं पश्येति जरसादेशे कृते 'स्वमोर्नपुंसकात्' इति लुक्कस्मान्न भवति? इत्यत आह—इहेत्यादि। जरामतिक्रान्तमिति प्रादिसमासः, 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वः, द्वितीयैकवचनमम् इति स्थित एकदेशविकृतस्यानन्यत्वात् कृतेऽपि ह्रस्वत्वे लुक्, अम्भावः, जरस्भावः—इत्येतानि त्रीणि कार्याणि युगपत् प्राप्नुवन्ति, तत्र लुगपवादत्वाद् 'अतोऽम्' इत्यम्भावेन बाध्यते, अम्भावोऽपि परत्वाज्जरसादेशेन। अथ कृते जरसादेशे लुक् पुनः कस्मान्न भवति? इत्यत आह—पुनर्लुक्शास्त्रमित्यादि। न च लुक्शास्त्रं पुनः प्रवर्तते; भ्रष्टावसरत्वात्, अन्यत्र कृतकार्यत्वाच्च। तेन लुगभावादतिजरसमित्येवं भवति। अथ प्रथमैकवचने किमतिजरं ब्राह्मणकुलम्, तृतीयाबहुवचने किमतिजरैर्ब्राह्मणकुलैरित्येवं भवितव्यम्; आहोस्विदतिजरसम्, अतिजरसैरित्येवम्? इत्यत आह—अतिजरमित्यादि। गोनर्दीयमतेनेति। तथा हि भाष्ये उक्तम्—

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अतिजरैरिति च भवितव्यमिति गोनर्दीयमतेन । किं कारणम् ? 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति ।

अन्ये तु—अनित्यत्वादस्याः परिभाषाया अतिजरसं ब्राह्मणकुलं तिष्ठति, अतिजरसैरित्येवं भवितव्यमिति मन्यन्ते ॥

## त्यदादीनामः ॥ १०२ ॥

'त्यत्' इत्येवमादिनामकारादेशो भवति विभक्तौ परतः । त्यद्—स्यः, त्यौ, त्ये । तद्—सः, तौ, ते । यद्—यः, यौ, ये । एतद्—एषः, एतौ, एते । इदम्—अयम्, इमौ, इमे । अदस्—असौ, अमू, अमी । द्वि—द्वौ, द्वाभ्याम् ।

द्विपर्यन्तानां त्यदादीनामत्वमिष्यते । इह न भवति—भवत्—भवान् ।

### पदमञ्जरी

*इति* । 'न पुनर्लुक्शास्त्रम्' इत्यत्र पुनःशब्दस्यायमर्थः—पूर्वं या लुक्प्राप्तिः, साम्भावेन बाधिता; या तु जरसादेशे कृते पुनः प्राप्तिः, सापि सन्निपातपरिभाषया न भवतीति ।

*अन्ये त्वित्यादि* । एतच्च 'टाङसिङसामिनात्स्याः', 'अतो भिस ऐस्' इत्यत्र व्याख्यातम् ॥

*त्यदादीनामः* ॥ *द्विपर्यन्ता इत्यादि* । इष्टिरेवेयम् । यत्तूच्यते—शेषेलोपवचनं

### न्यासः

'गोनर्दीय आह—'इष्टमेवैतत् संगृहीतं भवतीति—अतिजरमतिजरैरिति भवितव्यम्'—इति । का पुनरस्य युक्तिः ? इत्यत आह—सन्निपातलक्षणेत्यादि । यद्यम्भावः, ऐस्भावश्च जरसादेशस्य निमित्तमात्रं स्यात्, अकारान्तताऽङ्गस्य ताभ्यां विहता स्यात् । एतच्चायुक्तम्; तत्सन्निपातेन हि तावभिनिर्वृत्तौ नोत्सहेते तां विहन्तुम् ।

अन्य इति । सूत्रकारमतानुसारिणः । कस्मात् पुनस्त एवं मन्यन्ते ? इत्यत आह—अनित्यत्वादस्या इत्यादि । अनित्यत्वं पुनरस्याः—'अतो भिस ऐस्' इत्यत्र प्रतिपादितम् ॥

त्यदादीनामः ॥ स्य इति । 'तदोः सः सावनन्त्ययोः' इति तकारस्य सकारः । त्ये इति । 'जसः शी' इति शीभावः, 'आद् गुणः' । इमाविति । 'दश्च' इति मत्वम् । असाविति । 'अदस औ सुलोपश्च' । अमू इति । 'अदसोऽसेर्दादु दो मः' इति मत्वोत्वे, 'प्रथमयोः पूर्वसवर्णः' इति दीर्घः । अमी इति । 'एत ईद् बहुवचने' इतीत्वम् ।

अथेह कस्मान्न भवति—भवानिति ? अत आह—द्विपर्यन्तानामित्यादि ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



संज्ञोपसर्जनीभूतास्त्यदादयः पाठादेव पर्युदस्ता इतीह न भवति—त्यद्, त्यदौ, त्यदः । अतित्यद्, अतित्यदौ, अतित्यदः ।

त्यदादिप्रधाने तु शब्दे भवत्येव—परमसः, परमतौ, परमते ॥

किमः कः ॥ १०३ ॥

'किम्'—इत्येतस्य 'क'—इत्ययमादेशो भवति विभक्तौ परतः । कः, कौ, के ।

पदमञ्जरी

ज्ञापकमिति, तदयुक्तम्; उपसर्जनार्थत्वादतियूयमतिवयमिति । यदा तु शेषेलोपष्टिलोपस्तदा तु सुतरामज्ञापकम् ।

*पाठादेव पर्युदस्ता इति* । तथा च सर्वादिसूत्रे वार्त्तिकम् 'संज्ञोपसर्जनानां प्रतिषेधः पाठात्पर्युदासः' इति । तेन पाठोपजीवनेन प्रवर्तमानमिदमपि संज्ञोपसर्जनीभूतानां न भवति । *त्यदादीति* । त्यदादीनामर्थः प्रधानं यत्र समासे तत्रेत्यर्थः । न हि ते पाठात्पर्युदस्ताः ॥

*किमः कः* ॥ *तेनाकार एव किमो न विधीयत इति* । कथं पुनरकारविधाने 'कः' इत्यादिरूपसिद्धिः, यावतान्त्यस्य प्राप्नोति, न चान्त्यस्य पूर्वेण सिद्धः, 'द्विपर्यन्तास्त्यदादयः' इत्युक्तत्वात् ? अपरे पुनरेतच्चोद्यभयादेवं पठन्ति—*तेनाकार एव इमो न विधीयत इति* । अयमर्थः—'इमः' इत्येतावत्सूत्रमस्तु, 'त्यदादी-

न्यासः

एतच्च 'शेषे लोपः' इत्यत्र प्रागेव ज्ञापितम् । भवानिति । 'उगिदचाम्' इति नुम्, 'अत्वसन्तस्य चाधातोः' इति दीर्घः ।

अथेह संज्ञोपसर्जनीभूतानामपि कस्मान्न भवति त्यदादौ—त्यद्, अतित्यद्, अतित्यदः ? इत्यत आह—संज्ञोपसर्जनीभूता इत्यादि । सर्वाद्यन्तःपातिनस्त्यदादयः । सर्वादयश्चासंज्ञीभूता अनुपसर्जनीभूताश्च पठ्यन्ते । तथा हि—तेषां 'सर्वनामानि' इति महत्याः संज्ञायाः करणस्यैतत् प्रयोजनम्—सर्वेषां नामभूतानां संज्ञा यथा स्यात् । ये तु कस्यचिदेव संज्ञाभूता उपसर्जनीभूताश्च, तेषां मा भूदिति । तस्मात् संज्ञोपसर्जनीभूतास्त्यदादयः पाठादेव पर्युदस्ताः, त्यदादिभ्यो बहिष्कृता इत्यर्थः । तस्मादत्यदादित्वात् तेषां न भवति त्यदादिकार्यम् । त्यदादिप्रधाने शब्दे तु भवत्येवेति । त्यदादयः प्रधाना यस्मिन् शब्दे स त्यदादिप्रधानः, तत्र भवत्येवात्वम्; तस्य पाठादपर्युदस्तत्वात् । अपर्युदस्तत्वं तु सर्वनामसंज्ञायास्तदन्तविधेः सर्वादेरभ्युपगमात् ॥

किमः कः ॥ अथाकार एव किमः कस्मान्न विधीयते, एवं हि लघु सूत्रम्भवति, अकारो हि प्रकृतोऽनुवर्तत इति, तत्रैवं सूत्रं कर्त्तव्यम्—'किमोऽत्' इति ? अत आह—साकचकस्यादेशो भवतीति । तेनाकारः किमो न विधीयत इति । अयं ह्यादेशस्तन्मध्यपतित-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


साकच्कस्याप्ययमादेशो भवति, तेनाकार एव किमो न विधीयते 'किमोऽत्' इति ॥

## कु तिहोः ॥ १०४ ॥

तकारादौ हकारादौ च विभक्तौ परतः किमित्येतस्य 'कु' इत्ययमादेशो भवति । कुतः । कुत्र । कुह ।

'तिहोः' इतीकार उच्चारणार्थः ॥

### पदमञ्जरी

नामः' इत्येव त्यदादीनां सम्बन्धिन इमोऽकारो भवति, तत्र 'नानर्थकेऽलोन्त्यविधिः' इति सर्वस्यैवेमोऽकारो भवति। तेषामेवं पठतामुत्तरत्र किमो ग्रहणं कर्त्तव्यम् ? न कर्त्तव्यम्; 'उति होः' इति वक्ष्यामि 'इमः' इत्येव, ततो 'वाति', 'इमः' इत्येव, इमो वकारादेशो भवति। तस्मात्साकच्कार्थमेव कादेशो विहितः ॥

कु *तिहोः* ॥ तिशब्दस्य विभक्तिसंज्ञकस्याभावात्तकारे इकार उच्चारणार्थः । *कुहेति* । 'वा ह च छन्दसि' इति हप्रत्ययः ॥

### न्यासः

स्तद्ग्रहणेन गृह्यते, अकचश्च किम्ग्रहणेन ग्रहणात् साकच्कस्यापि भवति, तेनाकार एव किमः स्थाने न विधीयते। यदि हि विधीयेत, तदाऽनकच्कस्यादेशे कृते पश्चादकचि कक इत्यनिष्टं रूपं स्यादित्यभिप्रायः। कथं पुनः किमोऽत्त्वे कृते क इति भवति, यावता मकारस्यात्त्वे कृते सतीकारस्य यणादेशे कृते क्य इति स्यात् ? नैष दोषः; इकारस्यापि ह्यत्त्वं विधीयते, यदिह पूर्वसूत्रात् 'अतः' इत्यनुवर्त्तते । नालोऽन्त्यस्यात्वं भवति यत् पुनरिहाकारग्रहणं क्रियते। तेन 'अनन्त्यविकारेऽन्त्यसदेशस्य' इतीकारस्य तत्र द्वयोरकारयोः परपूर्वत्वे क इति सिद्धम्।

क्वचित् पाठ इम इति। तत्रायं पूर्वपक्षः—अथाकार एवेमः कस्मान्न विधीयते ? लघु ह्येवं सूत्रं भवति; प्रकृतस्याकारस्येहानुवृत्तेः, तत्रैवं तावत् सूत्रं कर्त्तव्यम्—'इमः' इति। न चैवं सति 'तिम ष्टिम आर्द्रीभावे' इत्यस्य क्विबन्तस्य तीन्, तिमौ, तिम इत्यत्रापि प्रसज्येत, त्यदादिभिरिमो विशेषणात्—त्यदादीनां य इमिति ? न; 'दश्च' इति मत्वे कृत इदम इमौ, इम इत्यत्रापि प्रसज्येत। लक्षणप्रतिपदोक्तपरिभाषया नापीम इत्युच्यमाने 'अलोऽन्त्यस्य' इति प्रसज्येतेत्याशङ्कनीयम्, यस्मान्नानर्थकेऽलोऽन्त्यविधिः ? इत्यत आह—साकच्कस्यापीत्यादि। पूर्व एव पाठः साधुतरः। इतरत्र तु पाठ उत्तरसूत्रेण क्वादेश इमः कृते द्वयोः ककारयोश्च संयुक्तयोः श्रवणं प्रसज्येत, तच्चानिष्टम्।

कु तिहोः ॥ पूर्वस्यायमपवादः। तिशब्दस्य विभक्तेरभावादिकार उच्चारणार्थः। तकारस्यैव प्रयोजनम्। तत्र 'यस्मिन् विधिस्तदादावल्ग्रहणे' तकारादेशो विभक्तौ कार्यं विधीयते। अत आह—तकारादावित्यादि। कुत इति। 'पञ्चम्यास्तसिल्'। कुत्रेति।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## क्वाति ॥ १०५ ॥

'अति' इत्येतस्यां विभक्तौ परतः किमित्येतस्य 'क्व'-इत्ययमादेशो भवति। क्व गमिष्यसि। क्व भोक्ष्यते।

आदेशान्तरवचनमोर्गुणनिवृत्त्यर्थम्। 'किमो ड्वत्' इति प्रत्ययान्तरं न विधीयते, साकच्कार्थम्॥

पदमञ्जरी

*क्वाति* ॥ *क्वेति*। 'किमोऽत्' इत्यत्प्रत्ययः॥

अथादेशान्तरकरणं किमर्थम्, न प्रकृतः कुशब्द एव विधीयते, एवं च कृत्वा योगविभागोऽपि न कर्तव्यः, 'कुतिहास्तु' इत्येवास्तु; का रूपसिद्धिः ? यणादेशे कृते क्वेति सिद्धम्, ओर्गुणस्तु 'अङ्गवृत्ते पुनर्वृत्तौ' इति वचनान्न भविष्यति, यणादेशस्त्वनाङ्गत्वाद्भवत्येव ? तत्राह—*आदेशान्तरकरणमोर्गुणनिवृत्त्यर्थमिति*। निष्ठिततत्त्वं दुर्ज्ञानमिति भावः। एवं तर्हि 'किमोऽत्' इत्येतत् 'किमोड्वत्' इति वक्तव्यम्, टिलोपे कृते क्वेति सिद्धम् ? अत आह—*किमोड्वदिति चेति*। कथं पुनः प्रत्ययान्तरे रूपसिद्धिः, यावता ककारस्य जश्त्वं प्राप्नोति ? टिलोपस्यासिद्धत्वान्न भविष्यति। कथमसिद्धत्वम् ? 'असिद्धं बहिरङ्गमन्तरङ्गे'। टिलोपो हि डित्प्रत्ययापेक्षत्वाद्बहिरङ्गः, जश्त्वं तु तदनपेक्षत्वादन्तरङ्गम्। *साकच्कार्थमिति*। साकच्के

न्यासः

'किमोऽत्' इत्यत्र परसूत्राद्वाग्रहणं पुरस्तादपकृष्यते। तेन पक्षे 'सप्तम्यास्त्रल्' इति त्रल्यपि भवति। कुह इति। 'वा ह च च्छन्दसि' इति हः। एषाञ्च तसिलादीनां 'प्राग्दिशो विभक्तिः' इति विभक्तिसंज्ञा।

क्वाति ॥ कादेशस्यायमपवादः। क्वेति। 'किमोऽत्' इत्यत्।

अथ किमर्थमादेशान्तरं विधीयते, न प्रकृतः कु एव विधीयताम्, तत्रापि यणादेशे क्वेति सिद्धयत्येव; योगविभागश्च न कर्त्तव्यो भवति, 'कुतिहात्सु' इत्येको योगः करिष्यते ? इत्यत आह—आदेशान्तरवचनमित्यादि। कुशब्दे ह्यादेशे सति यणादेशं बाधित्वा 'ओर्गुणः' इति गुणः स्यात्। तस्मात् तन्निवृत्त्यर्थं क्वादेश इत्युच्यते।

एवमपि प्रत्ययविधावेव 'किमो ड्वत्' इति ड्वत्प्रत्ययो विधेयः, तत्रापि टिलोपे कृते क्वेति रूपं सिध्यत्येव। पदसंज्ञायां सत्याम् 'झलां जशोऽन्ते' इति ककारस्य गकारः प्राप्नोतीत्यतो न सिध्यतीति चेत् ? नैतदस्ति; 'असिद्धं बहिरङ्गमन्तरङ्गे' इति टिलोपस्यासिद्धत्वाज्जश्त्वं न भवति। टिलोपो हि डिति विधीयते, तेन डितमपेक्षमाणो बहिरङ्गो भवति। जश्त्वं तु पदान्ते विधीयमानं नापरनिमित्तमपेक्षत इत्यन्तरङ्गमित्यत आह—किमो ड्वदिति प्रत्ययान्तरमित्यादि। यदि ड्वदिति प्रत्ययान्तरं विधीयेत,

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


## तदोः सः सावनन्त्ययोः ॥ १०६ ॥

त्यदादीनां तकारदकारयोरनन्त्ययोः सकारादेशो भवति सौ परतः। त्यद्—स्यः। तद्—सः। एतद्—एषः। अदस्—असौ।

अनन्त्ययोरिति किम्? हे स। सा॥

पदमञ्जरी

हि प्रत्ययान्तरे विहिते कक्वेति स्यात्। यथान्यासे तु तत्रापि क्वेत्येव भवति॥

*तदोः सः सावनन्त्ययोः* ॥ 'सौ' इति प्रथमैकवचनस्य ग्रहणम्, न सप्तमीबहुवचनस्य, 'स्यश्छन्दसि', 'सोऽचि लोपे चेत्' इत्यादिनिर्देशात्। नाप्युभयोः, तथाहि सति 'सि' इत्येव ब्रूयात्, सकारादौ विभक्ताविति।

*अनन्त्ययोरिति किमिति*। विशेषणविशेष्यभावे कामचारात्त्यदादिषु तकारान्तस्यासम्भवाच्च त्यदादिभिस्तदोर्विशेषणादनन्त्ययोस्तावत्सिद्धम्, अन्त्यस्य तु त्यदाद्यत्वं भविष्यतीति प्रश्नः। अत्वस्य सोरन्यत्र सावकाशत्वात्सौ परत्वादिदमेव स्यादित्युत्तरम्। तत्र केवले सौ पुंलिङ्गे विशेषाभावात् सम्बुद्धौ, स्त्रियां च प्रत्युदाहृतम्। किमर्थं पुनः 'तदोः' इत्युच्यते, तवर्गग्रहणमेव क्रियेत—'तोः सः सावनन्त्यस्य' इति? नकारस्यापि तर्हि प्राप्नोति 'तस्मान्नुडचि'—अनेषः, अनयम्, अनसाविति। नुडयं परादिस्तद्ग्रहणेन गृह्यते॥

न्यासः

साकच्कस्य क्वेति रूपं न सिध्यति। अकचि हि कृते ककिमिति स्थिते ड्वत्प्रत्यये परतष्टिलोपे सति कक्वेत्यनिष्टं रूपं स्यात्। अत्प्रत्यये तु क्वादेशो विधीयमानोऽनेकाल्त्वात् साकच्कस्य सर्वादेश एव भवतीति न भवत्यनिष्टरूपप्रसङ्गः। तस्मात् साकच्कार्थं ड्वदिति न प्रत्ययान्तरं विधीयते। साकच्कोऽर्थः प्रयोजनं यस्य तत् साकच्कार्थम्॥

तदोः सः सावनन्त्ययोः॥ साविति। किमिदं प्रथमैकवचनस्य ग्रहणम्? उत सप्तमीबहुवचनस्य? आहोस्विदुभयोरपि? तत्र प्रथमैकवचनस्य ग्रहणम्। तथा हि—द्वयोरपि सामान्येन ग्रहणं न भवति। यदि स्यात्, सीत्येवं ब्रूयात्। एवं हि सकारादौ कार्यं विधीयमानं तयोर्द्वयोरपि भविष्यति। तस्मादन्यतरस्य ग्रहणम्। तथा हि—'स्यश्छन्दसि बहुलम्' सोऽचि लोपे चेत्' इत्येवमादेर्निर्देशात् प्रथमैकवचनस्यैव ग्रहणं युक्तम्।

हे स, सेति। हेशब्दो निपातसमुदायोऽवधारणार्थे वर्तते। ननु च त्यदाद्यत्वमत्र बाधकं भविष्यति? नैतदस्ति; अनवकाशा हि विधयो बाधका भवन्ति। सावकाशं चात्वम्। कोऽवकाशः? द्विशब्दः—द्वाविति। सत्यपि तस्मिन्नवकाशे यद्यपि सकारस्याप्यनन्त्योऽवकाशः, तथाप्यन्तस्य परत्वात् सत्वं स्यात्। ततश्च हे स इत्यत्र 'एङ्ह्रस्वात् सम्बुद्धेः' इति सोर्लोपो न स्यात्। तत्र हल्ङ्यादिलोपे कृते रुत्वविसर्जनीययोः कृत-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## अदस औ सुलोपश्च ॥ १०७ ॥

अदसः सौ परतः सकारस्य औकारादेशो भवति सोश्च लोपो भवति । असौ ।

❀ औत्वप्रतिषेधः साकच्काद्वा वक्तव्यः सादुत्वं च ❀ । यदा चौत्वप्रतिषेधः, तदा सकारादुत्तरस्य उत्वं भवति । असुकः, असुकौ ।

❀ उत्तरपदभूतानां त्यदादीनामकृतसन्धीनामादेशा वक्तव्याः ❀ । परमाहम् । परमायम् । परमानेन ।

### पदमञ्जरी

*अदस औ सुलोपश्च* ॥ *असुक इति* । अदकस् सु इति स्थिते औत्वप्रतिषेधात्यदाद्यत्वं दकारस्य सत्वं सकारादुत्तरस्य चाकचोऽकारस्य उत्वम् ।

*उत्तरपदभूतानामित्यादि* । समासाद्या विभक्तिरुत्पद्यते, तदपेक्षत्वादादेशो बहिरङ्गः, ततश्चान्तरङ्गत्वादेकादेशे कृते तस्यादिवद्भावादादेशेषु क्रियमाणेषु परमयम्, परमहमित्याद्यनिष्टप्रसङ्गः । तस्मादकृतसन्धिकार्याणामेवामी आदेशा वक्तव्याः । एतच्च 'नेन्द्रस्य परस्य' इत्यत्र ज्ञापयिष्यते ।

### न्यासः

कृतयोरनिष्टं रूपं स्यात् । सेत्यत्र तु 'अजाद्यतष्टाप्' इत्यत्र स्त्रियां टाब्न स्यात् । तस्मात् 'अनन्त्ययोः' इति वक्तव्यम् ॥

अदस औ सुलोपश्च ॥ सावित्येव । त्यदाद्यत्वापवादोऽदस औत्वं विधीयते । असाविति । पूर्वसूत्रेण दकारस्य सकारः, 'वृद्धिरेचि' इति वृद्धिः ।

यदा चेत्यादि । सादुत्वञ्चेति । चकारः सन्नियोगार्थः । तेन यस्मिन् पक्ष औत्वप्रतिषेधः, तस्मिन्नेव पक्षे सादुत्तरस्याकारस्योत्त्वं विधीयते ।

उत्तरपदभूतानामित्यादि । इह परमाहम्, परमायम्, परमानेनेति 'त्वाहौ सौ' 'इदोऽय् पुंसि', 'अनाप्यकः' इति समासाद् या विभक्तिः, तस्यामेत आदेशा भवन्तो बहिरङ्गा भवन्ति; प्रागेव तु विभक्त्युत्पत्तेः । अकः सवर्णे दीर्घत्वं प्राप्नुवदन्तरङ्गम्, तस्मात् पूर्वं तदेव स्यात्, पश्चादादेशाः स्युः; ततश्च परमहम्, परमयम्, परमनेनेत्यनिष्टानि रूपाणि स्युः । तस्मादुत्तरपदभूतानामकृतस्वरसन्धीनां त्यदादीनामादेशा वक्तव्याः= व्याख्येया इत्यर्थः । आचार्यप्रवृत्तिर्ज्ञापयति—पूर्वोत्तरयोः पदयोस्तावत् कार्यं प्रथमं भवति, पश्चादेकादेश इति । यदयम् 'नेन्द्रस्य परस्य' इति प्रतिषेधं शास्ति । कथं कृत्वा ज्ञापकम्? इन्द्रे द्वावचौ, तत्रैकः—'यस्येति च' इति लोपेनापह्रियते, अपरः—एकादेशेनेत्यनच्क इन्द्रशब्दः सम्पन्नः, तत्र को वृद्धिप्रसङ्गः? पश्यति त्वाचार्यः—पूर्वोत्तरयोः पदयोस्तावत् कार्यं भवति, पश्चादेकादेश इति; यतः 'नेन्द्रस्य परस्य' इति वृद्धिप्रतिषेधं शास्ति । तदेतस्माज्ज्ञापकाद् अकृतस्वरसन्धीनामुत्तरपदभूतानां त्यदादीनामादेशा भवन्तीति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अदसः सोर्भवेदौत्वं किं सुलोपो विधीयते ?
ह्रस्वाल्लुप्येत सम्बुद्धिर्न हलः प्रकृतं हि तत् ॥
आप एत्वं भवेत्तस्मिन्न झलीत्यनुवर्तनात् ।

पदमञ्जरी

*अदसः सोर्भवेदित्यादि* । 'अदस औ' इत्येतावदेव सूत्रमस्तु, 'सौ' इत्येव, 'अदसः' इति पञ्चमी, तया पूर्वसूत्रे कृतार्थायाः सप्तम्याः षष्ठ्यां प्रकल्पितायाम् अदस उत्तरस्य सोरौकारो भवतीत्यर्थः, तत्र त्यदाद्यत्वे कृते असाविति सिद्धे किं सुलोपो विधीयते । *ह्रस्वाल्लुप्येत सम्बुद्धिः* । यदि सोरौकारो विधीयते, तदा हि असावित्यत्र त्यदाद्यत्वे ह्रस्वात्परस्याः सम्बुद्धेरौकारस्य लोपः स्यात्, न हलः ? नैष दोषः; हलः सलोपे विधीयते । यद्येवम्, तत्र हल्ग्रहणं कर्त्तव्यम् ? नेत्याह—*प्रकृतं हि तत्* । 'हल्ङ्याब्भ्यो दीर्घात्' इत्यत्र । ननु चेदं प्रथमानिर्दिष्टम्, षष्ठीनिर्दिष्टेन चेहार्थः ? एवं तर्हि एङ्ह्रस्वादिति पञ्चमी हलिति प्रथमायाः षष्ठीं प्रकल्पयिष्यति 'तस्मादित्युत्तरस्य' इति । पूर्वसूत्रवद्वा प्रथमाया एव यथाकथञ्चिन्निर्वाहो भविष्यति । *आप एत्वं भवेत्तस्मिन्* । इह तर्हि स्त्रियां सम्बुद्धौ असा+औ स्थिते 'आङि चापः' 'सम्बुद्धौ च' इत्येवं प्राप्नोति, प्रकृते

न्यासः

अदसः सोर्भवेदौत्वमित्यादि । अवधारणमत्र द्रष्टव्यम् । अदःशब्दात् परस्य सोरेवौत्वं भवेत् । भवतु, मा वा भूत् । अदस्शब्दस्य त्यदाद्यत्वे कृते 'वृद्धिरेचि' इति वृद्धौ कृतायामसाविति सिध्यत्येव, तत् किमर्थं सुलोपो विधीयते ? निरर्थकत्वान्नैवं सोर्लोपो विधेयः, औत्वमेव विधेयम् । अत्र दोषमाह—ह्रस्वाल्लुप्येत सम्बुद्धिरिति । हेऽसावित्यत्र 'एङ् ह्रस्वात् सम्बुद्धेः' इति सोर्लोपः प्रसज्येत, ततश्च सम्बुद्धौ हेऽसाविति न सिध्येत् ? न हलः प्रकृतं हि तदिति । नायं दोषः; हलः सम्बुद्धेर्लोप औत्वे कृतेऽज् भवति, न हलिति, तत् कुतो लोपप्रसङ्गस्तत्र ! तर्हि हल्ग्रहणं कर्त्तव्यम् ? न कर्त्तव्यम्; यस्मात् प्रकृतं तद् । 'हल्ङ्याब्भ्यः सुतिस्यपृक्तं हल्' इत्यतो हल्ग्रहणं प्रकृतमेव । यद्यपि तत्र प्रथमानिर्दिष्टम्, षष्ठीनिर्देशेन चेहार्थः, तथापि 'एङ् ह्रस्वात्' इति पञ्चमी हलित्यस्याः प्रथमायाः षष्ठीत्वं प्रकल्पयिष्यति; 'तस्मादित्युत्तरस्य' इति वचनात् ।

अयं तर्हि दोषः—आप एत्वं भवेत् तस्मिन्नित्यादि । तस्मिन्नौकारे परतस्त्यदाद्यत्वे कृते स्त्रियां टापि—हे असौ ब्राह्मणीत्यत्र 'सम्बुद्धौ च' इत्येत्वं स्याद्, यथा हि हे खट्वे इत्यत्र ! न झलीत्यनुवर्त्तनादिति । नायं दोषः; 'सम्बुद्धौ च' इत्यत्र 'बहुवचने झल्येत्' इत्यनुवर्त्तते, तेन झलादौ सम्बुद्धावेत्वेन भवितव्यम् । न चौकारे कृते झलादिः सम्बुद्धिर्भवति, किं तर्हि ? अजादिः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रत्ययस्थाच्च कादित्वं शीभावश्च प्रसज्यते ॥

इदमो मः ॥ १०८ ॥

[1]इदमः सौ परतो मकारोऽन्तादेशो[2] भवति । इयम् । अयम् ।

इदमो मकारस्य मकारवचनं त्यदाद्यत्वबाधनार्थम् ॥

दश्च ॥ १०९ ॥

इदमो दकारस्य स्थाने मकारादेशो भवति विभक्तौ परतः । इमौ, इमे । इमम्, इमौ, इमान् ॥

पदमञ्जरी

रेव त्वौत्वे टापोऽभावादेत्वाभावः, न, झलीत्यनुवर्त्तनात् ? नैष दोषः; 'बहुवचने झल्येत्' इत्यतो झलीति तत्रानुवर्त्तते–झलादौ सम्बुद्धाविति, औत्वे कृते अझलादित्वान्न भविष्यति । *प्रत्ययस्थाच्च कादित्वमिति* । इह तर्हि स्त्रियामकचि असका+औ इति स्थिते 'प्रत्ययस्थात्कात्पूर्वस्य' इतीत्वं प्राप्नोति, प्रकृतेरेव त्वौकारे टापोऽभावादित्वाभावः । *शीभावश्च प्रसज्यते* । इह च स्त्रियाम् असा+औ इति स्थिते 'औङ आपः' इति शीभावः प्राप्नोति, औत्वविधानं तु पुंसि चरितार्थम् ? पाक्षिक एष दोषः; यदा 'औङ आपः' इति पूर्वाचार्यनिर्देशस्तदा नास्ति, इतरयोरस्तु पक्षयोरस्ति ॥

न्यासः

प्रत्ययस्थाच्च कादित्वं शीभावश्च प्रसज्यतेति । पूर्वकश्चकारः तदर्थे, इतरः समुच्चये । अयं तर्हि दोषः—असकौ ब्राह्मणीत्यत्राज्ञाताद्यर्थविवक्षायामकचि कृते टापि च 'प्रत्ययस्थात् कात्' इत्यादिना कात् पूर्वस्येत्वं प्राप्नोति ? असौ ब्राह्मणी इत्यत्र 'औङ आपः' इत्यनेन शीभावोऽदसस्त्ववयव औकारे कृते टाबेव नास्तीति नैतद्दोषद्वयं सम्भवति । शीभावदोषश्च पाक्षिको वेदितव्यः, यस्मिन् पक्षे सामान्यग्रहणार्थो ङकारः प्रत्ययस्यासज्यते । यदा तु पूर्वसूत्रनिर्देशस्तदा द्विवचनयोरेव शीभावः; तयोरेव पूर्वाचार्यैर्ङित्त्वस्य कृतत्वात् । अन्यस्य प्राप्तिरेव नास्ति; अङित्त्वात् ॥

इदमो मः ॥ अलोऽन्त्यपरिभाषया मकारस्यैवानेन मकारेण भवितव्यम्, न च मकारस्य मकारादेशे कृते विशेषोऽस्ति, तत् किमर्थं मकारस्य मकारः इत्युच्यते ?—इत्येतच्चोद्यं निराकर्तुमाह–मकारस्येत्यादि । गतार्थम् ॥

दश्च ॥ 'इदमः' इति वर्त्तते, 'सौ' इति निवृत्तम्; उत्तरसूत्रे पुनः 'सौ' इति वचनात् । तेनायं विभक्तिमात्रे दकारस्य मकारो भवति ॥

---

१. 'सौ इति वर्त्तते' इत्यधिकं क्वचित् ।
२. 'मकारादेशो' इति पाठान्तरम् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## यः सौ ॥ ११० ॥

इदमो मकारस्य यकारादेशो भवति सौ परतः । इयम् ।

उत्तरसूत्रे 'पुंसि' इति वचनात्स्त्रियामयं यकारः ॥

## इदोऽय् पुंसि ॥ १११ ॥

इदम इद्रूपस्य पुंसि सौ परतः 'अय्' इत्ययमादेशो भवति । अयं ब्राह्मणः ।

पुंसीति किम् ? इयं ब्राह्मणी ॥

## अनाप्यकः ॥ ११२ ॥

इदमोऽकारस्य इद्रूपस्य स्थाने 'अन' इत्ययमादेशो भवति आपि विभक्तौ परतः । अनेन । अनयोः ।

अक इति किम् ? इमकेन । इमकयोः ।

'आपि' इति प्रत्याहारः तृतीयैकवचनात्प्रभृति सुपः पकारेण ॥

## हलि लोपः ॥ ११३ ॥

### पदमञ्जरी

*यः सौ ॥ स्त्रियामयं यकार इति ।* नपुंसके तु 'स्वमसोर्नपुंसकात्' इति लुमता लुप्तत्वात् सोरभावः ॥

### न्यासः

यः सौ ॥ उत्तरसूत्रे पुंसीति वचनात् स्त्रियामयं यकारः । अथ नपुंसके कस्मान्न विज्ञायते ? अशक्यमेवं विज्ञातुम्; नपुंसके हि 'स्वमोर्नपुंसकात्' इति सोर्लुका भवितव्यम् । अत्र सावुच्यमानः कथं तस्मिंल्लुप्ते यकारः स्यात्, प्रत्ययलक्षणेनेति चेत् ? न; 'न लुमताङ्गस्य' इति प्रत्ययलक्षणप्रतिषेधात् । तस्माद् युक्तमुक्तम्—स्त्रियामयं यकार इति ॥

इदोऽय् पुंसि ॥ अनाप्यकः ॥ अनेनेति । त्यदाद्यत्वे पररूपत्वे च कृत इद्रूपस्यानादेशः, 'टाङसिङसामिनात्स्याः' इतीनादेशः, 'आद् गुणः' । अनयोरिति । 'ओसि च' इत्येत्वम्, अनादेशः, सुलोपः ।

पकारेणेति । अथ कपः पकारेण कस्मान्न भवति ? प्रयोजनाभावात् । ननु चेहेत्यत्र प्राग्दिशीयायां विभक्तौ 'हलि लोपः' यथा स्यादितीदमस्ति प्रयोजनम् ? 'इदम इश्' इतीशात्र बाधकेन भवितव्यम् । अत्र च 'अमेहक्वतसित्रेभ्यः' इत्यत्र इहेत्यकृतेद्रूपलोपस्य हकारान्तस्येदमो निर्देशो लिङ्गम् ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



हलादौ विभक्तौ परत इदमोऽककारस्य इद्रूपस्य लोपो भवति। आभ्याम्, एभिः। एभ्यः। एषाम्। एषु।

'नानर्थकेऽलोन्त्यविधिः' इति सर्वस्यायमिद्रूपस्य लोपः।

अथ वा—नायमिल्लोपः[1]। 'अनाप्यकः' इति अन्ग्रहणमनुवर्त्तते॥

**मृजेर्वृद्धिः॥ ११४॥**

'विभक्तौ' इति निवृत्तम्। मृजेरङ्गस्य इको वृद्धिर्भवति। मार्ष्टा, मार्ष्टुम्, मार्ष्टव्यम्।

मृजेरिति धातुग्रहणमिदम्, धातोश्च कार्यमुच्यमानं धातुप्रत्यय एव

**पदमञ्जरी**

*हलि लोपः॥ अन्ग्रहणमनुवर्त्तत इति।* यद्यपि तत्प्रथमान्तम्, तथापि हलीति सप्तम्या तस्य षष्ठी प्रकल्प्यते॥

*मृजेर्वृद्धिः॥ धातोश्च कार्यमुच्यमानमिति।* वस्तुतो धातोर्यत्कार्यमुच्यते, तदिह धातोरुच्यमानमिति विवक्षितम्। स धातुः स्वरूपेणैव गृह्यतां मा वा, प्राहितेन 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' इत्ययमप्यमागमो धातुप्रत्यय एव भवति,

**न्यासः**

**हलि लोपः॥** पूर्वेणानादेशे प्राप्ते हलादाविद्रूपस्य लोपो विधीयते। आभ्यामिति। त्यदाद्यत्वम्, अतो गुणे पररूपत्वम्, 'सुपि च' इति दीर्घत्वञ्च।

अथालोऽन्त्यपरिभाषयान्त्यस्यायं लोपः कस्मान्न भवति? इत्याह—नानर्थक इत्यादि। अभ्युपेत्यानर्थकेऽलोऽन्त्यविधिं परिहारान्तरमाह—अथ वेत्यादि। न चान्ग्रहणं कर्त्तव्यम्, यतस्तदनुवर्त्तते? इत्यत आह—अनाप्यक इत्यादि। यद्यपि तत्र प्रथमानिर्दिष्टम्, षष्ठीनिर्दिष्टेन चेहार्थः, तथापि हलीति सप्तमी अन्निति षष्ठीत्वं प्रकल्पयिष्यति; 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति वचनात्। एष परिहारो भाष्यकारमतेन बोद्धव्यः; अस्याः परिभाषाया अनङ्गीकरणात्। अत्र दर्शने तु त्रयाणामकाराणां पररूपमेकादेशं कृत्वा दीर्घत्वादि विधेयम्॥

**मृजेर्वृद्धिः॥** मार्ष्टेति। 'मृजू शुद्धौ', व्रश्चादिसूत्रेण षत्वम्, ष्टुत्वम्।

मृजेः क्विबन्ताद् विभक्तावुत्पन्नायां कंसपरिमृड्भ्याम्, कंसपरिमृड्भिरित्यत्र वृद्धिः प्राप्नोति, न च क्विबाश्रयः 'क्ङिति च' इति वृद्धिप्रतिषेधो भवितुमुत्सहते; यस्मात् क्ङितीति निमित्तसप्तमी। न चात्र क्विन्निमित्ता वृद्धिः प्राप्नोति, किं तर्हि? विभक्तिनिमित्ता। तस्मात् तस्याः प्रतिषेधो वक्तव्य इत्यत आह—मृजेरिति धातुग्रहणमित्यादि। भ्रौणहत्यमिति निपातनेन ज्ञापितोऽयमर्थः—धातोः कार्यमुच्यमानं धातु-

1. 'अक इत्येव—इमकाभ्याम्, इमकेभिः' इत्यधिकं क्वचित्।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



वेदितव्यम्। तेन कंसपरिमृड्भ्याम्, कंसपरिमृड्भिरित्यत्र न भवति ॥

**अचो ञ्णिति ॥ ११५ ॥**

अजन्तस्याङ्गस्य ञिति णिति च वृद्धिर्भवति। ञिति—एकस्तण्डुलनिश्चायः। द्वौ शूर्पनिष्पावौ। कारः। हारः।

णिति—गौः, गावौ, गावः। सखायौ, सखायः। जैत्रम्। यौत्रम्। च्यौत्नः। जयतेः, यौतेश्च 'उणादयो बहुलम्' इति ष्ट्रन् प्रत्ययः। च्यवतेरपि त्नण् ॥

**पदमञ्जरी**

न प्रमृड्भ्यामित्यादौ। *तत्प्रत्यय इति*। धातोरित्येवं विहिते। *कंसपरिमृड्भ्यामिति*। अत्र तदन्तविधिना प्रसङ्गः ॥

*अचो ञ्णिति* ॥ *तण्डुलनिश्चाय* इत्यादौ 'परिमाणाख्ययां सर्वेभ्यः' इति घञ्।

*गौः,गावौ, गाव इति*। अत्र गौरित्येतत्साक्षादुदाहरणम्, इतरत्रावादेशे कृते 'अत उपधायाः' इत्येव सिद्धम्। *सखायौ, सखाय इति*। अत्रापि सखायावित्येतदुदाहरणम्, जसि तु 'जसि च' इति गुणे अयादेशे च कृते पूर्ववत्सिद्धम्। *च्यौत्नमिति* बलनाम, छान्दसम्—'तमिच्च्यौत्नैरार्यन्ति'। किमर्थं पुनरिदमु-

**न्यासः**

प्रत्यय एव भवतीति, तेन कंसमृड्भ्यामित्यत्र न भवति। यो हि धातोरित्येवं विहितः स धातुप्रत्ययः। न च भ्यामादिकं धातोरित्येवं विहितम्, किं तर्हि ? प्रातिपदिकादित्येवम्। तस्मान्नासौ धातुप्रत्ययः। कंसपरिमृड्भ्यामित्यादि। पूर्ववत् षत्वे कृते षकारस्य जश्त्वं डकारः।

अचो ञ्णिति ॥ निश्चायनिष्पावाविति निष्पूर्वाच्चिनोतेः, पुनातेश्च 'परिमाणाख्यायां सर्वेभ्यः' इति घञ्। 'इदुदुपधस्य चाप्रत्ययस्य' इति विसर्जनीयषत्वम्। कारः, हार इति। कृञः, हृञश्च भावे घञ्।

गौः, गावौ, गाव इति। 'गोतो णित्' इति सर्वनामस्थानस्य णित्त्वम्। सखायौ, सखाय इति। अत्रापि 'सख्युरसम्बुद्धौ' इति। जयतेः, यौतेश्चेति। 'जि जये', 'यु मिश्रणे'। च्यवतेरिति। 'च्युङ् छ्युङ् ज्युङ् प्रुङ् प्लुङ् गतौ'। अज्ग्रहणमनिकोऽपि यथा स्याद्—गौरिति। ननु णित्कारणसामर्थ्यादेव तत्र भविष्यति ? नैतदस्ति; अस्ति ह्यन्यत् णित्करणस्य प्रयोजनम्, किं तत् ? गावौ, गाव इत्यवादेशे कृते 'अत उपधायाः' इति वृद्धिर्यथा स्यात्। यद्येवम्, गौरित्यत्रागुणविषये वृद्धिरियं कृतार्थेति कारयतीत्यादिषु परत्वाद् गुणेन बाध्येत ? णित्करणसामर्थ्यान्न भविष्यतीति। एतच्चानुत्तरम्; 'णेरनिटि' इत्येवमादौ णित्करणस्य चरितार्थत्वात् ? नैष दोषः; आचार्यप्रवृत्तिर्ज्ञाप-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## अत उपधायाः ॥ ११६ ॥

अङ्गोपधाया अकारस्य स्थाने ञिति णिति च प्रत्यये वृद्धिर्भवति। पाकः, त्यागः, यागः। पाचयति, पाचकः। पाठयति, पाठकः।

अत इति किम्? भेदयति, भेदकः। उपधाया इति किम्? चकासयति, तक्षकः॥

## तद्धितेष्वचामादेः ॥ ११७ ॥

तद्धिते ञिति णिति च प्रत्यये परतोऽङ्गस्याचामादेरचः स्थाने

**पदमञ्जरी**

च्यते, यावता जेतृयोतृशब्दाभ्यां प्रज्ञाद्यणि जैत्रम्, यौत्रमिति सिद्धम्। च्यौत्नमिति 'उणादयोऽव्युत्पन्नानि प्रातिपदिकानि'। तण्डुलनिश्चायः, श्चावकः, लावक इत्यादौ तु गुणे अयवोश्च कृतयोः 'अत उपधायाः' इत्येव सिद्धम्। एवं कारक इत्यादौ 'गोतो णित्' इत्येतद् 'गोत औत' इति वक्तव्यम्–गोत औकारादेशो भवति सर्वनामस्थाने परतः। कथं सखायौ, सखायः? 'सख्युरसम्बुद्धौ' इत्येतत् 'सख्युरैत्' इति वक्ष्यामि, अत्रोच्यते; 'ञ्णिति' इति तावदुत्तरार्थं वक्तव्यम्। किञ्च–प्रियमाचष्टे प्रापयतीत्यादौ प्राद्यादेशेषु वृद्धिर्न स्यात्। अथ ते दीर्घान्ता विधीयेरन्? तदतिगुरु स्यादिति यथान्यासमेवास्तु॥

*तद्धितेष्वचामादेः॥ अचामादेरचो वृद्धिरिति*। ननु च इक्परिभाषोपस्थाना-

**न्यासः**

यति–गुणविषयेऽपि वृद्धिर्भवतीति, यदयं जागर्त्तेर्वृद्धिविषये प्रतिषेधविषये च 'जाग्रोऽविचिण्णल्ङित्सु' इति पुनर्गुण आरभ्यते। यदि हि गुणविषये वृद्धिर्न स्यात्, तदा जागरयतीत्यादिषु गुणोऽस्त्येवेति तद्विषये गुणारम्भोऽनर्थकः स्यात्। वृद्धिविषयता चारम्भस्य चिण्णलोः प्रतिषेधाद् विज्ञायते। अथ योगविभागः किमर्थः, न 'ञ्णित्यत उपधायाः' इत्येवोच्येत? अशक्यमेवं वक्तुम्; एवं ह्युच्यमाने यद्यपि गावौ, गाव इत्यत्रावादेशे कृते चायकः, लावक इत्यत्र गुणे कृतेऽयवादेशयोः कृतयोः सिध्यति—गौः, सखायौ; जैत्रमित्यादौ तु न सिध्यति; अयवादेशयोर्गुणस्य च यथायोगमसम्भवात्। तस्माद् यथायोगं योगविभागः कर्त्तव्यः॥

**अत उपधायाः**॥ पाक इत्यादौ भावे घञ्, 'चजोः कु घिण्ण्यतोः' इति कुत्वम्। राग इति। 'घञि च भावकरणयोः' इत्यनुनासिकलोपः। पाचयतीति। 'हेतुमति च' इति णिच्। चकासयतीति। उपधाग्रहणादिह चकारादकारस्य न भवति।

तपरकरणं लाघवार्थम्। असति हि तस्मिन्नस्योपधाया इत्युच्यमाने गौरवं स्यात्। दीर्घनिवृत्त्यर्थं तु तपरकरणं न भवति, न दीर्घस्य कृतायां वृद्धौ कश्चिद् विशेषोऽस्ति॥

**तद्धितेष्वचामादेः**॥ 'अचाम्' इति निर्धारणे षष्ठी। अचामादेरचः स्थान इति।


CC-0. Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



वृद्धिर्भवति । गार्ग्यः । वात्स्यः । दाक्षिः । प्लाक्षिः । णिति—औपगवः । कापटवः ।

त्वाष्ट्रः, जागत इत्यत्राचामादेर्वृद्धिरन्त्योपधालक्षणां वृद्धिं बाधते ॥

पदमञ्जरी

दिक एव स्थानित्वेन भवितव्यम्, यद्यपि तुल्यजातीयस्य निर्धारणं भवति, यथा—गवां कृष्णा सम्पन्नक्षीरतमेत्युक्ते गौरेव प्रतीयते, तथात्राप्यचामादिरजेव; तथापि साक्षाद् 'अचः' इति निर्देशाभावादिक्परिभाषोपतिष्ठेतैत्र—इगात्मकस्याच इति, तस्मात्स्थानिनिर्देशार्थमच इति वक्तव्यम् ? तन्न वक्तव्यम्; प्रकृतमनुवर्त्तते—'अचो ञ्णिति' इति, तत्र निर्दिष्टस्थानिकत्वादिक्परिभाषाया अव्यापारः ।

अथ त्वाष्ट्रः, जागत इत्यत्र त्वष्ट्रजगच्छब्दाभ्याम् 'तस्येदम्' इत्यणि कृते यथाक्रमम् 'अचो ञ्णिति', 'अत उपधायाः' इति वृद्धिः कस्मान्न भवति ? तत्राह-*त्वाष्ट्रः, जागत इत्यत्रेति* । *अन्त्योपधालक्षणां वृद्धिं बाधत इति* । परत्वादिति भावः । अन्त्योपधालक्षणाया वृद्धेरवकाशः—गौः, याचकः, अस्या अवकाशः—सुश्रुत् सौश्रुतः; त्वाष्ट्रः, जागत इत्यत्रोभयप्रसङ्गे परत्वादादिवृद्धिर्भवति । सकृद्गतिन्यायश्चाश्रीयते, न पुनःप्रसङ्गविज्ञानम् । एवं च कृत्वा पुष्करसच्छब्दस्यानुशतिकादिषु पाठोऽर्थवान्न भवति । यदि त्वादिवृद्धिविषयेऽन्त्योपधावृद्धिः स्यात्, तदोपधालक्षणयैव वृद्धया पौष्करसादेः सिद्धत्वादनुशतिकादिषु तन्न पठेत्, ठगर्थं तत्र पाठः स्यात्—पौष्करसादिकः । न ह्यत्रोपधालक्षणा वृद्धिः प्राप्नोति,

न्यासः

ननु चेक्परिभाषोपस्थानादिक एव स्थाने वृद्धया भवितव्यम्, तस्मादिकः स्थान इत्येवं वक्तव्यम्, न त्वचः स्थान इति ? एवं मन्यते—'अचो ञ्णिति' इत्यतः स्थानिनिर्देशार्थं द्वितीयमज्ग्रहणमनुवर्त्तते, तेन यथा 'अचो ञ्णिति' इत्यत्र स्थानिनिर्देशादिक्परिभाषा नोपतिष्ठते, तथेहापीत्यदोषः । गार्ग्यः, वात्स्य इति । 'गर्गादिभ्यो यञ्' । दाक्षिः, प्लाक्षिरिति । 'अत इञ्' । औपगवः, कापटव इति । प्राग्दीव्यतीयोऽण् ।

अथ त्वाष्ट्रः, जागत इत्यत्र त्वष्टृजगद्भ्यां तस्येदमित्यणि कृते यथाक्रमम् 'अचो ञ्णिति' इत्यज्लक्षणा वृद्धिः प्राप्नोति, 'अत उपधायाः' इत्युपधालक्षणा वृद्धिः कस्मान्न भवति ? इत्याह—अचामादेर्वृद्धिरन्त्योपधावृद्धिं बाधत इति । कथं पुनरन्यस्योच्यमानाऽन्यस्य बाधिका स्यात् ? ज्ञापकात् । यदयमनुशतिकादिषु पुष्करसच्छब्दं पठति, तज्ज्ञापयति—यत्रादिवृद्धिस्तत्रान्या वृद्धिर्न भवतीति । तस्यानुशतिकादिषु पाठस्यैतत् प्रयोजनम्—उभयपदवृद्धिर्यथा स्यात्, पुष्करसदोऽपत्यं पौष्करसादिरिति । 'बाह्वादिभ्यश्च' इतीञ् । यदि चादिवृद्धिरन्यस्या वृद्धेर्बाधिका न स्यात्, उपधालक्षणेनैव

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



## क्ङिति च ॥ ११८ ॥

क्ङिति च तद्धिते परतोऽङ्गस्याचामादेरचः स्थाने वृद्धिर्भवति । 'नडादिभ्यः फक्'—नाडायनः, चारायणः । 'प्राग्वहतेष्ठक्'—आक्षिकः, शालाकिकः ॥

इत्युपाध्यायश्रीवामनकृतायां काशिकावृत्तौ
सप्तमाध्यायस्य द्वितीयः पादः ॥

### पदमञ्जरी

अञ्णित्वात् ? नैतदस्ति; न ह्यस्माच्चरत्यर्थे ठगुत्पद्यते, अनभिधानात् । यद्वा-प्रतिपदविहिते बाह्वादिलक्षण इञ्येवोभयपदवृद्धिः, नान्यत्रेति ठगर्थः पाठो न भवति । यत्र त्वादिवृद्धिः प्रतिषिध्यते, तत्रान्त्योपधालक्षणा वृद्धिः कस्मान्न भवति—व्यसोर्भावो वैयसवम्, 'इगन्ताच्च लघुपूर्वात्' इत्यण्, व्यापदि भवं वैयापदमिति ? तत्राप्यैचौ परत्वात् बाधकाविति सिद्धम् ॥

*क्ङिति च* ॥ *नाडायनः, चारायण इति* । 'नडादिभ्यः फक्' । *आक्षिकः, शालाकिक इति* । दीव्यत्यर्थे ठक ॥

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां सप्तमस्याध्यायस्य द्वितीयः पादः ॥

### न्यासः

वृद्धेः सिद्धत्वात् पौष्करसादिशब्दस्य पुष्करसच्छब्दोऽनुशतिकादिषु न पठ्येत । पश्य-त्याचार्यः—यत्रादिपदवृद्धिस्तत्रान्या वृद्धिर्न भवतीति; यतोऽनुशतिकादिषु पुष्करस-च्छब्दं पठति । ननु ठगर्थस्तत्र पाठः, तत्र ह्युपधालक्षणा वृद्धिर्न प्राप्नोतीति ठकोऽ-ञ्णित्त्वात्—पुष्करसदा चरतीति पौष्करसादिक इति ? नैतदस्ति; यदि पुष्करसच्छ-ब्दाच्चरत्यर्थे ठगुत्पद्यते । कस्मात् पुनर्नोत्पद्यते ? अनभिधानात् । अभिधानलक्षणा हि कृत्तद्धितसमासा भवन्तीति । तस्माज्ज्ञापक एवानुशतिकादिषु पाठः पुष्कर-सच्छब्दस्य ॥

क्ङिति च ॥ यद्यपि 'तद्धितेषु' इति बहुवचनान्त प्रकृतम्, तथापीहैकवचननिर्देशा-देकवचनविषयो बहुवचनस्य विपरिणामेन विज्ञायते, इत्यत आह—क्ङिति च तद्धिते परत इति । नाडायनः, चारायण इति । 'नडादिभ्यः फक्' इति फक् । आक्षिकः, शाला-किक इति । अक्षशलाकाशब्दाभ्याम् 'तेन दीव्यति खनति जयति जितम्' इति ठक्, 'ठस्येकः' ॥

इति बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरण-पञ्जिकायां सप्तमाध्यायस्य द्वितीयः पादः ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

